ಶ್ರೀ ವಿಷ್ಣು ನಾರಾಯಣ ಸಭಾಹಿತ.
ತಾ:- ೪-೭-೧೯೭೨. (ಮಂಗಳವಾರ). ಗೋಕರ್ಣ.

॥१८७॥

विष्णु नारायण सभाहित. गोकर्ण
परिधावी सं ज्येष्ठ कृष्ण अष्टमी कुजवासरः॥

॥ ॐ ॥

# ॥ अथ बोधायनीयब्रह्मकर्मसमुच्चयः ॥



( भारतशासनस्य शिक्षामंत्रालयाल्लब्धेनानुदानेन प्रकाशितः )

ಗಣಪತಿ ನಾರಾಯಣ ಸಭಾಹಿತ,
ಗೋಕರ್ಣ. (ಉ.ಕ)

V. N. Sabhahit. Gokarn.
Date:- 4-7-1972 (Tuesday.)

संपादकमंडलम् — (१) वे. शा. सं. गणपति सुब्रह्मण्य दीक्षित चित्रिगे मठ गोकर्ण

(२) ,, वैदिक चूडामणि रामचन्द्र गणेशभट्ट कोड्लेकेरे ,,

(३) ,, परमेश्वर रामकृष्णशर्मा बैलकेरी ,,

(४) ,, श्रौती सुब्राय गणेशभट्ट कोड्लेकेरे ,,

(५) ,, राम वेंकटरमण पंडित ,,

प्रकाशकः — अध्यक्षः, श्री-मेधा-दक्षिणामूर्ति-संस्कृत-विद्यापीठः, गोकर्ण

मुद्रकः — श्री. द. वा. आंबेकर, आर्यभूषणमुद्रणालयः, पुणे ४; तथा च
संचालकः, सहकारीमुद्रणालयः, सिरसी (उ. कानडा)

मूल्यम् —सप्तदशपरिमितं रूप्यकम् (रु. १७/-) ग्रन्थसंख्या — सहस्रमिता (१०००)

डॉलर – २·२६; पौंड – ·९४

प्राप्तिस्थानम् — ग्रन्थप्रकाशनविभागः,
श्री-मेधा-दक्षिणामूर्ति-संस्कृत-विद्यापीठः,
गोकर्ण (उ. कानडा) मैसूरराज्यम्,



# ॥ उपोद्घातः ॥

इह खलु संसारे सर्वेषां प्राणिनां सुखसम्पादने दुःखनिवारणे च स्वाभाविकी प्रवृत्तिः। यन्नाम सुखं तद्द्विविधम्, नित्यमनित्यञ्च। लौकिकं सुखं सर्वथा अनित्यमेव। सदसद्विवेकबुद्धिशालिनो मानवस्याऽयं विशेषो यदलौकिकस्य शाश्वतस्य सुखस्य भावना तेन कृता तत्सम्पादनार्थमुपायश्चाऽपि अन्वेषितः। "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति लक्षणाऽन्वितस्य धर्मस्य यथार्थमनुष्ठानेन उभयोरपि अभ्युदयनिःश्रेयसयोः सिद्धिर्भवेदिति सिद्धान्तो भारतवर्षे सुप्रतिष्ठितः।

नित्य-नैमित्तिक-काम्यरूपाणि कर्माणि वेदे विहितानि यथावदनुष्ठितानि ऐहिकाऽऽमुष्मिकफलप्रदानि भवन्तीत्यस्मिन् सिद्धान्ते स्वयं वेद एव प्रमाणम्। "प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुध्यते। एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता" इति वेदस्याऽलौकिकोपायबोधकत्वं सर्वप्रसिद्धम्। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" इति स्मृत्युक्तवचनानुसारेण च स्वयम्भुवो ब्रह्मणो वाच आविष्कारो नाम वेदः, स चाऽनादिर्नित्यश्च। पुरुषविशेषाऽकृतत्वात् सोऽपौरुषेय इत्यप्युच्यते। पुरा एक एव वेद आसीत् स कालेन चतुर्धाऽभवदिति पुराणप्रसिद्धिः। वेदो नाम ज्ञानं तच्चैकरूपमिति विचार्यमाणे वेदस्यैकत्वमप्युपपादयितुं शक्यम्। वस्तुतस्तु वेदस्त्रिधा चतुर्धा वा भिद्यते ऋग्यजुःसामरूपेण ऋग्यजुःसामाऽथर्वरूपेण वा तत्र ऋचो नाम देवतानां छन्दोबद्धा स्तुतिः। न केवलं स्तवनेन देवताः प्रीता भवन्ति, अपि तु हविष्प्रदानमपि ताभ्य आवश्यकम्। तेन सन्तुष्टा देवता यजमानायाऽभीष्टं लौकिकं पारलौकिकञ्च फलं प्रयच्छन्ति। तदेतद्धविष्प्रदानमग्निमुखेन भवति तेन च हविःसम्पादनाऽग्निधारणमण्डपनिर्माणादि कार्यजातं विस्तारबहुलं समपद्यत। सकलोऽप्येष विषयो

मन्त्रब्राह्मणात्मके यजुर्वेदेऽन्तर्भूतः। गानेन भूतान्यपि तुष्यन्ति किमुत देवताः? यागादिषु सामगानेन देवताः प्रीणनीयाः इति विधिर्भवति। गानानां तदाधारभूतानामृचाञ्च संग्रहार्थं सामवेदस्याऽऽविर्भावः। अधीताथर्ववेदस्य ब्रह्मत्वे अधिकारः। सगणस्य ब्रह्मणो यागे प्रयोगसाहाय्यार्थमुपयोज्यानां मन्त्राणां समावेशोऽथर्ववेदे कृतः।

एतेषां वेदानां प्रचलिताऽध्ययनपरम्पराणां विविधाः शाखाः समजायन्त। आहत्य कियत्यो वा शाखा अभवन्निति विषये विप्रतिपत्तिर्दृश्यते। तत्र "एकशतमध्वर्युशाखा, एकविंशतिधा बाह्वृच्यं, सहस्रवर्त्मा सामवेदो, नवधाऽथर्वण" इति महाभाष्ये पतञ्जलिः। चरणव्यूहमतेन ऋग्वेदस्य पञ्च शाखा अभवन् शाकला-बाष्कला-आश्वलायना-शाङ्खायना-माण्डूकायना इति। यजुर्वेदे कृष्णः शुक्लश्चेति भेदौ वर्तेते, तत्र एकशतशाखासु, षडशीतिः कृष्णयजुर्वेदस्य पञ्चदश च शुक्लयजुर्वेदस्य। कृष्णयजुर्वेदस्य कठाः कपिष्ठलकठा मैत्रायणीयास्तैत्तिरीया इत्यादयो भेदा भवन्ति, तत्र तैत्तिरीयशाखायाः पुनः औखेयाः खाण्डिकेयाश्चेति भेदौ भवतः। खाण्डिकेयानामपि पञ्च भेदाः इति चरणव्यूहकारेणोक्ताः। तेषु बोधायनशाखा न निर्दिष्टा। तद्भाष्यकारेण महीदासेन तु वेदशाखा-विभागे सा निर्दिष्टा। सूत्रसम्बन्धिन एते भेदा न शाखासम्बन्धिनः। तैत्तिरीयशाखासूत्रकारेषु बोधायनाचार्यः प्राथम्यमर्हतीत्यत्र तैत्तिरीयशाखाभाष्यकारः भट्टभास्करमिश्रः प्रमाणम्। स्वकीयतैत्तिरीयसंहिताभाष्यस्यादौ सः— "प्रणम्य शिरसाचार्यान् बोधायनपुरस्सरान्। व्याख्यैषाऽध्वर्युवेदस्य यथाबुद्धि विधीयते" इति बोधायनपुरस्सरान् सूत्रकृत आचार्यान्नमस्कुरुते। तत्रैव— "वाक्यार्थैकपराण्यधीत्य च भवस्वाम्यादिभाष्याण्यतो भाष्यं सर्वपथीनमेतदधुना सर्वीयमारभ्यते" इति बोधायनश्रौतसूत्रभाष्ये-ष्वादिमत्वेन ख्यातं भवस्वामिभाष्यमपि तेन सादरं निर्दिष्टम्। सत्याषाढसूत्रस्य वैजयन्तीव्याख्याकारो महादेवो व्याख्याया उपक्रमे तैत्तिरीयशाखासूत्रकारान् प्रणमति—"यत्राऽकरोत्सूत्रमतीव गौरवाद्बोधायनाचार्यवरोऽर्थगुप्तये। तथा भरद्वाजमुनीश्वरस्तथा-

ऽऽपस्तम्ब आचार्य इदं परं स्फुटम् ॥ अतीव गूढार्थमनन्यदर्शितं न्यायैश्च युक्तं रचयन्नसौ पुनः। हिरण्यकेशीति यथार्थनामभागभूद्वरा-नुष्टमुनीन्द्रसम्मतात् ॥ वाधूल आचार्यवरोऽकरोत् परं सूत्रन्तु यत्केरलदेशसंस्थितम् । वैखानसाचार्यकृतं त्वथापरं पूर्तेन युक्तान्त्विति सूत्रषड्विधाः " ॥ एवं महादेवेन व्याख्याकारेण बोधायानो भरद्वाज आपस्तम्बः सत्याषाढो वाधूलो विखनाश्चेति तैत्तिरीयशाखासूत्रकाराः परिगणिताः, तत्र च बोधायनाचार्यस्य प्राथम्यं स्पष्टं निर्दिष्टम् । आधुनिका ऐतिह्यविदो भाषाशास्त्रविदश्च बोधायनसूत्रस्य प्राचीनतमत्वमैकमत्येनोद्घोषयन्ति । अत्रेदमवधारणीयं यद्बोधायनः प्रवचनकार इति ख्यातः । तथा चोत्सर्जनप्रतिपादके बोधानगृह्यसूत्रे (३.९.९) " कण्वाय ( काण्वाय ? ) बोधायनाय प्रवचनकाराय " इति सूत्रितम् । बोधायनसूत्रग्रन्थस्य शैल्यपि प्रवचनरूपा दृश्यते । अन्ये भरद्वाजादीनां सूत्रग्रन्थाः सूत्रशैलीमनुसरन्ति, सर्वेषु सूत्रेषु च ते आचार्याः सूत्रकृत्त्वेनोपवर्णिताः । ऐतिह्यविदां मते बोधायनानन्तरं भरद्वाजः, तत आपस्तम्बः, ततः सत्याषाढो हिरण्यकेशः ततश्च विखना ( वैखानससूत्रकर्ता ) इति कालानुक्रमः । यद्यपि महादेवो व्याख्याकारः सत्याषाढोत्तरं वाधूलं निर्दिष्टवान् तथापि वाधूलो न तावताऽर्वाचीनः । तत्सूत्रस्थभाषा रचनाशैली च तं प्राचीनतमसूत्रकारेष्वन्यतमं गणयितुं प्रभवतः । एतत्सूत्रानुसारिणः केचन केरलेषूपलभ्यन्ते । अग्निवेश्यो नाम कश्चनाचार्य आसीत् । तेन विरचितमाग्निवेश्यगृह्यसूत्रं मुद्रितं वर्तते । बोधायनगृह्यसूत्रेणाऽस्य दृढः सम्बन्धः प्रतीयते। वाधूलानामपि कश्चन सम्बन्धो बोधायनसूत्रे दृश्यते। वाधूला आग्निवेश्याश्च साम्प्रतमपि केरलेषु तत्समीपवर्तिदेशेषु च निवसन्ति। तेन केरलेषु द्रविडेषु च पुरातने काले बोधायनीयशाखाप्रचार आसीदिति दृश्यते। ऐतिह्यमपि तत्प्रमाणयति। आग्निवेश्यसूत्रे वाधूलसूत्रे च औखेयस्य निर्देश उपलभ्यते । तेन काचित्सूत्रद्वयमिति तच्छाखावलम्बि वा न वेति आशङ्का भवति। आन्ध्रेषु केषुचन स्थलेषु बोधायनीया न्यवसन् । कर्णाटदेशे प्राचीनकालादारभ्य बोधायनीयशाखायाः प्रचार

आसीत्। विख्याता वेदभाष्यकाराः सायणाचार्याः स्वयं बोधायनीया आसन् यतस्तैः स्वकीयतैत्तिरीयसंहिताभाष्यारम्भे बोधायनाचार्याणां वन्दनं कृतं दृश्यते। अपि च 'बोधायनादिसूत्रोदाहरणपूर्वकं ब्राह्मणानुसारेण मन्त्रार्थं योजयामः' इति तैरुपोद्घातस्यान्ते उक्तम्। बोधायनीयदर्शपूर्णमासेष्टिप्रयोगो भाष्यश्च तैर्विरचितम्।

यद्यपि साम्प्रतमस्य कल्पस्यानुचरा विशिष्य द्रविडदेशस्य कर्नाटदेशस्य च नियते प्रदेश उपलभ्यन्ते, तथाऽपि पुरातने काले बहुलेषु देशेषु निवसन्तो जनास्तमनुसरन्त आसन्निति न तिरोहितमैतिह्यविदाम्। देशशाखाविभागबोधकः कश्चित्पटः पञ्चवटीक्षेत्रे उपलब्धस्तत्र तैत्तिरीयशाखाविषय एवमुक्तम्—"तैत्तिरीया गोदादक्षिणदेशे, औख्या आन्ध्रदेशे, काण्डिकेया दक्षिण-देशे प्रसिद्धाः, आपस्तम्बीया आन्ध्रदेशे, बोधायनीयाः शेषदेशे"। एतावता तत्पटकारस्याभिप्राय एवं यद्बोधायनीया गोदादक्षिण-देशस्य बहुतरप्रदेशे न्यवसन्निति। ताम्रपटादिलेखेभ्यो ज्ञायते यत् सहस्राधिकवर्षेभ्य आरभ्य बोधायनशाखायाः प्रचारः केरलदेशे, द्रविडदेशे, आन्ध्रदेशे, कर्णाटदेशे, महाराष्ट्रदेशे, गुर्जरदेशे चासीदिति।

बोधायनीयकल्पस्य व्यवहारो न केवलं बोधायनानुयायिकर्मानुष्ठानपरिच्छिन्न आसीत्, अपि तु अन्यशाखीयानां कर्माण्यपि स स्पृशति स्म। तथा च बह्वृचादीनां श्रौतकर्मानुष्ठानावसर आध्वर्यवार्थं, यजुर्वेदस्य विविधासु शाखासु का शाखा आदर्तव्या इत्याकाङ्क्षायां बोधायनशाखाऽङ्गीकर्तव्येति प्राचीनपरम्परया निर्णीतम्। तथा चोक्तम्—"यजुषां बहुशाखत्वात् सन्देहे समुपस्थिते। कां शाखामवलम्बेरन्तादृशीं बह्वृचादयः॥ आध्वर्यवं याजमानं ग्राह्यं बोधायनीयकम्। अन्यथा पतितो ज्ञेय इति बोधायनोऽब्रवीत्॥ आध्वर्यवं याजमानमाग्नीध्रं यच्च नोदितम्। तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात्॥ श्रौतं स्मार्तञ्च यत्कर्म स्वशाखायां न विद्यते। बोधायनोक्तं तद्ग्राह्यं बह्वृचादिभिरादरात्" इति। अनया रीत्या बह्वृचादिभिः श्रौते कर्मणि

याजमानार्थमाध्वर्यवार्थञ्च बोधायनकल्पोऽनुसर्तव्य इति प्राचीना परिपाटी। प्रपञ्चहृदयसंज्ञको ग्रन्थः केनचित्केरलदेशीयेन रचितो मुद्रित उपलभ्यते। तत्र तेनाऽऽश्वलायनशाखया सह बोधायनशाखा निर्दिष्टा। तेन तत्राऽपि आश्वलायनीया आध्वर्यवार्थं बोधायनशाखामङ्गीकुर्वन्ति स्मेति दृश्यते। आपस्तम्बशाखाऽपि विकल्पेनाऽङ्गीकर्तव्येत्येतदर्थं वचनानि सन्ति। " नर्मदादक्षिणे भागे आपस्तम्बाश्वलायनी। राणायनी पिप्पला च यज्ञकन्याविभागितः " इति चरणव्यूहभाष्यकारेण महीदासेनोक्तम्। पुनरपि तेनोक्तम्—" अध्वर्यूद्गातृहोतॄणां सन्ति सूत्राण्यनेकशः। यत्राऽस्ति योनिसम्बन्धः सूत्रज्ञानफलान्वितः " इति।

बोधायनकल्पस्य सर्वेषु तैत्तिरीयकल्पेषु प्राचीनतमत्वात्तैत्तिरीयशाखाया अर्थज्ञानार्थं तच्छाखीयविधीनां मूलज्ञानार्थञ्चा-ऽयं कल्प एवाऽऽदिमं साधनमिति युक्तियुक्तम्। इतिहासविद्भिः कश्चित्प्रश्न उपस्थापितो यत्प्राचीनकाले आर्यावर्ते यजुर्वेदस्य कठशाखा बहुभिरनुस्रियमाणा आसीत्, परं ततोऽनन्तरं कुतः सा स्मृतिशेषं गतेति। अस्य समाधानमेवं दृश्यते यद्गच्छता कालेनाऽऽर्यावर्ते वैदिकाचरणस्य प्रधानं केन्द्रं स्थानात् स्थानान्तरं प्रस्थितम्। एवं क्रमेणाऽऽर्यावर्तस्य पूर्वस्यां दक्षिणस्याञ्च दिशि तत्सङ्क्रान्तम्। पूर्वस्यां दिशि शुक्लयजुर्वेदस्य प्रचारो दृढोऽभवत्। कृष्णयजुर्वेदस्य तैत्तिरीयशाखायाः प्रचारः कुरुपाञ्चा-लादिदेशेष्वासीत्। तत उत्तरं स दक्षिणदेशेऽपि जातः। कठादयो य आर्यावर्त एव स्वस्थाने स्थिरीभूतास्तेषामध्ययनाऽनुष्ठानपर-म्परा क्रमशो जीर्णाऽभवत्, शाखान्तरीयैः सम्बन्धश्च शिथिलीभूतः। अस्तु तावत्।

बोधायनश्रौतसूत्रं त्रिंशत्प्रश्नपरिमितम्। कृष्णयजुर्वेदतैत्तिरीयशाखामवलम्ब्य श्रौतकर्मानुष्ठानप्रवचनानि बोधायन-महर्षिभिः कृतानि, तानि तच्छिष्यैरधीत्य स्वशिष्यान् पाठितानि। एवं परम्पराक्रमेणाऽऽगतानि तानि लिखितरूपं धारयित्वा काले मुद्रितावतारं प्राप्तानि। तत्रादित आरभ्य एकोनविंशप्रश्नं यावन्मूलसूत्रभागः, ततो विंशादित्रयोविंशान्ताश्चत्वारः प्रश्ना

द्वैधसूत्रं यत्र बोधायनीयशाखीयानामाचार्याणां बोधायनसहितानां तेषु तेषु विषयेषु वर्तमानानि मतान्तराणि क्रमशः सङ्गृहीतानि। चतुर्विंशादिषड्विंशान्तास्त्रयः प्रश्नाः कर्मान्तसूत्रं मूलसूत्रपरिशिष्टरूपं, सप्तविंशाद्येकोनत्रिंशान्तास्त्रयः प्रश्नाः प्रायश्चित्तसूत्रं, त्रिंशः प्रश्नः शुल्बसूत्रञ्च। तत उत्तरं प्रवरसूत्रं पृथग्रूपेण वर्तते। बोधायनगृह्यसूत्रं चतुःप्रश्नात्मकम्। तत्र महर्षिणा "यथो एतद्धुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्तपाकयज्ञसंस्था इति" इत्युपक्रम्य, हुतादयः पाकयज्ञसंस्थाः क्रमेण प्रोक्ताः, तदनुकृतयोऽप्युपवर्णिताः, अन्ते च चतुर्थाध्याये प्रायश्चित्तान्युक्तानि। विवाहसंस्कारो गर्भाधानं पुंसवनं सीमन्तोन्नयनमिति हुतानि। जातकर्मनामकरणमुपनिष्क्रमणमन्नप्राशनं चूडाकर्मेति प्रहुतानि। उपनयनं समावर्तनमित्याहुते। वैश्वदेवहोमः पञ्चमहायज्ञाश्चेति बलिहरणानि। शूलगवः प्रत्यवरोहणमष्टकाहोम इति प्रत्येकमेकमेव कर्म। हुतादीनामनुकृतिरूपाणि कानिचित्कर्माणि भवन्ति। बोधायनगृह्यपरिभाषासूत्रं प्रश्नद्वयात्मकं वर्तते। तत्तु प्रायो गृह्यसूत्रोक्तविषयपरिपूर्तिरूपम्। बोधायनगृह्यशेषसूत्रे, अनुक्तानां शान्त्यादिकर्मप्रतिपादकविषयाणां विनिवेशः कृतोऽस्ति। मुद्रितगृहशेषसूत्रं पञ्चप्रश्नात्मकं वर्तते। परं केषुचन लिखितपुस्तकेषु अधिकांश उपलभ्यते। बोधायनपितृमेधसूत्रं प्रश्नत्रयात्मकम्। प्रश्नद्वये मृताहिताग्निसंस्कारं सर्वं प्रतिपाद्य पुनरपि तृतीये प्रश्ने आहिताग्न्यनाहिताग्न्युभयसाधारणो दहनकल्पः सप्रायश्चित्त उक्तः। खण्डत्रयात्मकं पितृमेधशेषसूत्रमपि पृथग्विद्यते। बोधायनधर्मसूत्रे चतुःप्रश्नात्मके वर्णाश्रमधर्मा आचारो व्यवहारः प्रायश्चित्तमिति विषयाः प्रपञ्चिताः। एत एव विषया बोधायनस्मृतौ चतुःप्रश्नात्मिकायां प्रतिपादिताः। एतावान् बोधायनीयश्रौतस्मार्तग्रन्थानां विस्तर उपलब्धः।

श्रौतं कर्म तदनुषङ्गिमन्त्रैस्तत्सम्बन्धिब्राह्मणोक्तविधिना विधेयम्। गार्ह्यस्य स्मार्तस्य वा कर्मणोऽनुषङ्गिणो मन्त्रा वेदे वा सूत्रे वा ग्रथिता भवन्ति। तद्विधिबोधकानां सूत्राणां मूलभूतानि ब्राह्मणवाक्यानि विलुप्ताऽध्ययनपरम्पराणीत्यनुमीयते। श्रौतकर्मणां

क्रमेण सुलभतया च बोधनार्थं श्रौतसूत्राण्यवतीर्णानि। एवं सत्स्वपि श्रौतसूत्रेषु गृह्यसूत्रेषु च ऋत्विग्यजमानानां कर्माचरण-सौलभ्यार्थं तत्तत्कर्मणोऽनुष्ठानप्रकाशकाः प्रयोगा विरचिता उपलभ्यन्ते। इयं प्रयोगरचनापरिपाटी नेदानींतना किन्त्वतीव प्राचीना भवेद्यतः कर्मसौलभ्याऽऽपादनप्रवृत्तिर्मानवस्य स्वाभाविक्येव। ये प्रयोगा इदानीमुपलभ्यन्ते त एव प्राचीना इति यद्यपि न वक्तुं शक्यं तथाऽपि ब्राह्मणकाले सूत्ररचनाकाले च कैश्चन प्रयोगैरवश्यंभाव्यम्। केचनार्था ब्राह्मणेष्वस्पष्टा वर्तन्ते ते सूत्रेषु स्पष्टा भवन्ति। केचित्पुनः सूत्रेष्वस्पष्टाः प्रयोगेषु स्पष्टा भवन्ति। ब्राह्मणमात्रमनुरुध्य कर्मणोऽनुष्ठानं दुष्करम्। सूत्रेष्वपि तत्र तत्र पूर्वोक्तकर्मगतमन्त्राणां रहस्याऽनुषङ्गादिकस्य च विधानानि दृश्यन्ते। एतेषामर्थानां सौकर्यापादनार्थं सूत्रकालेऽपि प्रयोगेषु व्यवस्थाऽवश्यं कृता भवेत्।

समानशाखानुसारिणो बहवः प्रयोगा एकैकस्य कर्मणो रचिताः कुतो दृश्यन्त इति विचार्यमाणे बहूनि कारणानि सम्भवन्ति। एकस्मिन्प्रयोगे विकल्पबहुलस्य विधेः कोऽप्येको विकल्पः स्वीकृतश्चेदन्यस्मिन्नपरो विकल्पोऽङ्गीक्रियते। कश्चन प्रयोगकारः शाखान्तरात्सूत्रान्तराद्वा कञ्चन विशेषं विचिनोति। कोऽपि प्रयोगे सौकर्यमापादयति। एवं भिन्नैर्निमित्तैर्विविधा प्रयोगरचना विविधेषु कालेष्वनुष्ठिता दृश्यते। विविधेषु देशेषु विभिन्नाः प्रयोगग्रन्था उपयुज्यमाना भवेयुः, उत वा कोऽप्येको ग्रन्थः प्रतिष्ठितत्वादुपयुज्येत। नाऽत्र विषये सर्वदेशेषु सर्वशाखासु वा समाना स्थितिः स्यात्। अत्रेदमप्यवधारणीयं यत् सत्यपि प्रयोगग्रन्थे प्रत्यक्षानुष्ठानार्थं किमप्यधिकं ज्ञानमावश्यकं भवत्यूहाऽऽदिकस्याऽनुवृत्त्यादिकस्य चेति। तथा च 'देशकालौ सङ्कीर्त्य' इति प्रयोग उक्तं भवति, पुरोहितेन तु द्वीपप्रदेशनदीनिर्देशपूर्वको देशविशेषः कल्पमन्वन्तराद्यारभ्य ग्रहस्थितिनिर्देश-पूर्वकः कालविशेषश्चोच्चारणीयौ भवतः।

" वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्रोक्तं साक्षाद्धर्मस्य लक्षणम् " इति धर्मलक्षणं मनुना ( २. १२ ) प्रकीर्तितम् । तत्र सर्वोऽप्ययं वेदः प्रत्यक्षाऽनुमानाभ्यामनवगतेष्टाऽनिष्टप्राप्तिपरिहारोपायप्रकाशनपरः । तत्र स्वर्गादीष्ट-प्राप्तिः कथं भवतीत्याकाङ्क्षायां विहितकर्मजन्याऽपूर्वद्वारा इष्टप्राप्तिर्भवतीति समाधानम् । विहितश्रौतकर्मानुष्ठाने विनियुज्य-माना मन्त्रा वेदे सङ्गृहीता वर्तन्ते । विधिबोधकानि वाक्यानि ब्राह्मणभागेषूपलभ्यन्ते । मन्त्रब्राह्मणयोरधिष्ठितं कर्म कृतं चेत् तद्यथाविधि कृतमिति वक्तुं सर्वथोचितम् । अनुष्ठानसौकर्यार्थं तत्स्वरूपनिर्धारणार्थञ्च श्रौतसूत्राणि विरचितान्यभूवन् । परमेकस्यां शाखायां सूत्रबाहुल्ये सति सूत्रेष्वंशतो विधिवैलक्षण्यात् कतमं सूत्रं ब्राह्मणानुसारित्वात् प्रमाणमिति वक्तुं दुष्करम् । कानिचन सूत्राणि शाखान्तरेभ्योऽपि मन्त्रानुद्धृत्य विनियोजयन्ति, तथा च शाखान्तरगतविधीनपि स्वीकुर्वन्तीत्यपि न तिरोहितम् ।

स्मार्तकर्मणां त्वन्यादृश्येव स्थितिः । तदनुषङ्गिणो मन्त्राः कल्पसूत्रेष्वन्तर्भूताः । तदर्थं ब्राह्मणवाक्यानि प्रायो नैवो-पलभ्यन्ते । तेषामस्तित्वं तर्क्यते । कल्पसूत्राण्येव तेषां मूलाधरः । सूत्राधारेण प्रयोगा विरचितास्ताननुसृत्य च कर्माण्यनुष्ठीयन्ते । सौत्रा विधयो निपुणमवलोकिताश्चेत् तेषां रचनासु सूत्रकारैराचार्यैर्या चातुरी प्रकटीकृता, यश्चात्मसंस्कारः संरोपितः, व्यक्तेः कुलस्य समाजस्य च प्रमोदाय योऽवसरः प्रदत्तः, तत्सर्वं स्पष्टं भवेत् । स्मार्तकर्मसु स्वल्पान्येव कर्माणि औपासनहोम-पार्वण-स्थालीपाकादीनि नित्यान्यकरणे प्रत्यवायजनकानि । तेष्वपि स्वर्गकामना विद्यत एव । ' न चेहाऽस्त्यकामता ' इति मनुनोक्तं किल । शिष्टानि सर्वाणि काम्यान्येव ।

"वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्। कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च" इति निषेकादिभिर्वैदिकैः कर्मभिर्द्विजन्मनां शरीरसंस्कारः कर्तव्य इति मनुवचनम् (२. २६)। एभिः कर्मभिः संस्कृतस्य कारीरीज्योतिष्टोमादिषु दृष्टादृष्ट-फलेषु कर्मस्वधिकारो भवति, तेन चोभयलोकप्राप्तिर्भवति। एतानि कर्माणि पुण्यानि भवन्ति नाम सौभाग्यमावहन्ति तैः कृतः शरीरसंस्कारश्च पावनो नाम दुर्भाग्यापनोदको भवतीति पुण्यपावनशब्दयोरर्थभेदो मेधातिथेरभिप्रायेण। गर्भाधानादिहोमैर्बैजिकं गार्भिकं चैनोऽपमृज्यते, स्वाध्यायव्रतमहायज्ञादिभिश्च तनुर्ब्राह्मी क्रियत, इत्यपि मनुना स्पष्टीकृतम्। एवं संस्कारकर्मणां परलोक-प्राप्तिरूपं फलं यथाकालं लभ्यते, लौकिकफलञ्च सपदि वा कालेन वा लभ्यते। तत्कथं लभ्यत इत्याकाङ्क्षायां प्राधान्येन सूत्रोक्त-रीत्या कर्मकरणात्कर्ता तत्प्राप्नोतीत्यवगन्तव्यम्। स्मृतिप्रामाण्यप्रकरणे जैमिनिना 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्' (१. ३. १) इति पूर्वपक्षमुपस्थाप्य 'अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्' (१. ३. २) इति सिद्धान्तितम्। येषां वेदाः प्रमाणं तेषामेव परम्परागताः सदाचारा अपि प्रमाणम्। स्मृतिनिबद्धास्ते शिष्टाचारा अपि अनुमितश्रुतिमूलका इति बोध्यम्। आश्वलायनबोधायनाऽऽपस्तम्बादिसूत्रोपदिष्टा आचाराः परम्परया तत्तच्छाखानुयायिभिरनुष्ठेयाः। तथा च पुराणस्मृतीतिहासा-दिषु ये सर्वजनसाधारणा आचारा ग्रथितास्तेऽपि सर्वैरनुष्ठेया भवन्ति। अत्र कैश्चिदेवमुच्यते, यत्सूत्रमात्रोक्ता विधय एवाऽनुष्ठेयाः, स्मृतिपुराणादिवाक्यविहितानामङ्गानामुपसंहारस्तत्र न कार्य इति। अत्राऽसम्भवः, स्मृत्यादीनां सूत्रेण विरोधः, स्मृत्यादीनामन्यत्र विनियोगः, स्मृतिषु प्रयोगशास्त्राभाव इति हेतुचतुष्टयमपि तदर्थं प्रतिपाद्यते। अत्रेदमवधेयं यत्स्मृतिप्रामाण्यबोधकं पूर्वोक्तं जैमिनिसूत्रं न केनाऽपि पराभावयितुं शक्यम्। यथा सूत्राणि तथा स्मृत्यादयोऽपि प्रमाणपदवीमारोढुमर्हन्ति।

सदाचारो नाम तृतीयं धर्मलक्षणम्। कर्मसु सदाचाररूपधर्मस्याऽन्तर्भावो यथावसरं भवति। किम्बहुना विधेः सम्पूर्णतावाप्त्यर्थं तादृशान्युपाङ्गान्यवश्यमुपादेयानीति सूत्रकाराणामभिप्रायः। तथा च विवाहप्रकरण आश्वलायनेन सूत्रितम्—"अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्। यत्तु समानं तद्वक्ष्यामः" (आश्व. गृ. सू. १.७.१–२) इति। पुनरपि तस्मिन्नेव प्रकरणे—'ब्राह्मण्यश्च जीवपत्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः' इति च सूत्रितम् (१.१४.८)। स एव सूत्रकारश्चौलकर्मणि 'यथाकुलधर्मं केशवेशान्कारयेत्' इत्यादिशति (१. १७. १७)। बोधायनोऽपि पितृमेधसूत्रे 'यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति' इति बहुत्र सूत्रितवान्। तेन सूत्रोक्तविधीनां ग्रामजनपदादिधर्माणां चाचरणेन स्मार्तं कर्म सम्पूर्णं सफलञ्च भवतीति प्राप्तं भवति। ग्रामजनपदधर्माः प्रतिग्रामं प्रतिजनपदञ्च भिन्ना भवेयुः। तत्राऽपि पुनर्गच्छता कालेन तेषु परिवर्तनमवश्यंभावि। तत्तेषां धर्माणां स्मार्तकर्मसु समावेशो न केवलं सम्मतः उचितोऽपि। तेषु तेषु देशेषु परम्परयाऽऽगता आचाराः सर्वदेशनिवासिभिः पालनीया न वा इति विषये जैमिनिना मीमांसासूत्रे होलाकाधिकरणे (१. ३. १५-२३) प्रपञ्चितम्। तथा च 'होलाकोत्सवः प्राच्यदेशे प्रचलति, उद्वृषभ उदीच्यदेशे, आह्नीनैबुकश्च दक्षिणदेशे। एवमेते विधयः तत्तद्देशमात्रवासिभिराचरणीया' इति। 'अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्' (१. ३. १५) इति पूर्वपक्षसूत्रेणोपस्थापितम्। एते उत्सवाः सार्वदेशीया भवितुमर्हन्तीति,। अपि वा सर्वधर्मः स्यात् 'तन्न्यायत्वाद्विधानस्य' (१.३.१६) इत्यादिभिरुत्तरपक्षसूत्रैश्च सिद्धान्तितम्।

सदाचारो नाम यत्तृतीयं धर्मलक्षणं सान्तरालानां वर्णानां पारम्पर्यक्रमागताऽऽचारस्वरूपं तन्मनुवचनानुसारेण

ब्रह्मावर्तदेशमवलम्बते। ततश्च क्रमेण ब्रह्मर्षिदेशो मध्यदेश आर्यावर्त इति देशा द्विजातीनां निवासाय योग्या इति मनुना निर्दिष्टाः। तथाऽपि बहोः कालादारभ्य सर्वस्मिन्भरतवर्षे वैदिकधर्मीया वसन्ति। तदनुलक्ष्य सम्पूर्णभरतवर्षे निवसतां सान्तरालानां वर्णानां तत्तद्देशविशिष्टोऽपि सङ्कलितस्वरूपो य आचारः स साम्प्रतं सदाचारपदवीं शिष्टाचारपदवीं वाऽऽरोढुमर्हति।

एवं विचारिते सूत्रोक्ततत्तद्विधौ स्मृतिपुराणादिवाक्यविहिताङ्गानां तथा च ग्रामजनपदधर्माणां प्राच्यादिदेशगतानां शिष्टाचाराणां चाऽन्तर्भावो भवितुमर्हति। इदन्तु परमावश्यकं यदेतादृशेन गुणोपसंहारेण सूत्राऽविरोधिना भाव्यम्। सर्वमिदमाधिक्यमपरिहार्यमिति वक्तुमयुक्तम्। अनुष्ठाने कालविलम्बापादको गुणोपसंहारो मास्त्विति केनाप्यभिलषितं चेन्न तत्सर्वथानुचितम् 'स्वस्य च प्रियमात्मनः' इति मनुनोक्तं चतुर्थं धर्मलक्षणमौचित्यमावहति।

यद्यपि सर्वाणि संस्कारकर्माणि काम्यानि, तथाऽपि तेषामयं विशेषो यदनुष्ठानादौ सङ्कल्पोच्चारणावसरे 'श्रीपरमेश्वरप्रीत्यर्थं' इति भावना प्रकटीक्रियते, अन्ते च 'तत्सद्ब्रह्मार्पणमस्तु' इति ब्रह्मार्पणं क्रियते। एवं सकामं कर्माऽपि निष्कामं भवितुमर्हति, तत्कृतवान्यजमानो निष्कामकर्मफलभाग्भवतीति तात्पर्यम्। सकामं कर्माऽपि चित्तशुद्धिकरं भवतीति भगवद्गीतासूक्तम्। श्रीमच्छङ्करभगवत्पादैरपि बृहदारण्यकोपनिषद्भाष्ये संस्कारफलमेवमुक्तम् — "कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वं ततो मन-आदिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम्। तद्द्विविधम् — ज्ञानपूर्वकं केवलञ्च। तत्र केवलं पितृलोकादिप्राप्तिफलम्। ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम्। एवं सकामं कर्माऽपि ज्ञानपूर्वकं कृतञ्चेद्देवलोकादिप्राप्तये भवति। किंवा साक्षात्कृतेन कर्मणा? अकृतस्य कर्मणः केवलं ज्ञानमपि तत्कर्मफलप्राप्तयेऽलं भवति।" उक्तञ्च पुनरपि श्रीमच्छङ्कराचार्यपादैः —

'अस्य त्वश्वमेधकर्मसम्बन्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधे नाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः' इति । अश्वमेध इत्युपलक्षणमवगन्तव्यम् ।

श्रौतसूत्रेषु गृह्यसूत्रेषु च तत्तच्छाखीयानां यानि कर्माण्युपदिष्टानि तेषु परस्परं किञ्चिद्वैलक्षण्यं दृश्यत इति स्वाभाविकमेव। तथा च यजुर्वेदसूत्रेषूपवर्णिते दर्शपूर्णमासेष्टिविधौ तत्र तत्र मन्त्रभेदो विधिभेदश्च दृश्येते । सर्वासां वेदशाखानां गृह्यसूत्रेषु विवाह-संस्कार उपवर्णितः। परं प्रतिसूत्रं तत्र कियांश्चन भेदो वर्तते । यस्यां परिस्थितौ यस्मिन्देशे यस्मिन्काले चैताः शाखाः प्रावर्तन्त तेन तासां कर्मवैलक्षण्यमुपपादयितुं युक्तम् । परं धर्माचरणेऽनुभूयमानमिदं भेदबाहुल्यं भारतीयानामैक्यभावनाऽऽपादनविषये प्रतिकूल-माचरतीति केषाञ्चन सात्त्विकान्तःकरणानां सामाजिकानां हृदये शल्यमिव भवति । सर्वे समानसूत्राः समानाचारा भवेयुश्चे-द्भारतीयानां सौमनस्य निर्माणाय तत्कल्पेतेति तेषामाकाङ्क्षा । किन्तु सर्वथेदमसम्भवम् । क्रमेण स्थिरीभूतानां परम्परयाऽऽगता-नाञ्च सूत्रशाखानां भिन्नान् प्रवाहानेकीकर्तुं कः समर्थः ? भेदेऽप्यभेददृष्टिरङ्गीकृता चेदिष्टसिद्धिर्नाम भिन्नशाखीयानामैकमत्यं नाऽ-सम्भवमित्येवाऽत्र समाधानम् ।

अस्मिन् ब्रह्मकर्मसमुच्चये ये विधयः समावेशितास्तेषु बहवोऽस्य ग्रन्थस्य सम्पादकैर्नूतनतया समावेशिताः। संस्कारकाण्डगतानां विवाहान्तानां विधीनां केवलाः प्रयोगा गोकर्णमण्डले बोधायनीयपरम्परायां प्रचलिता आसन्। तान्सम्पाद्य सूत्रपाठेन ग्रन्थान्तरीयवचनैश्च संयोज्य सम्पूर्णं संस्कारकाण्डमत्र प्रकाशितम् । आह्निककाण्डं सङ्कीर्णकाण्डं पितृमेधकाण्डं चेति काण्डत्रयं सम्पूर्णमेव नूतनं निर्मितम् । सर्वस्मिन्विधावादौ तद्विधिप्रतिपादको बोधायनगृह्यसूत्रांशो

बोधायनपरिभाषासूत्रांशो बोधायनगृह्यशेषसूत्रांशश्च सम्पूर्ण ससन्दर्भमुध्दृताः । स्मृतिनिबन्धादिग्रन्थेभ्योऽनुरूपवचनान्यपि तत्र तत्रोध्दृतानि। ततश्च सूत्रानुसारी प्रयोगो दत्तः। बोधायनसूत्रस्याऽर्थज्ञानार्थं सम्पादकैः सूत्रान्तराणि कारिकाग्रन्थाः प्रयोगा इत्यादिविविधसाहित्यमवलोकितमभ्यस्तञ्च । बोधायनसूत्रपाठनिर्धारणार्थं लिखितग्रन्था अप्यवलोकिताः। समाने प्रयोगांशे पूर्वं गते सत्युत्तरत्र तत्संक्षेपः कृतः। स च चिन्हेन प्रदर्शितः। मन्त्राः सस्वरं मुद्रिताः। आवश्यकतायां प्रयोगांशस्य स्पष्टीकरणं टिप्पणीषु कृतम्। संस्कारकाण्डस्यादौ संस्काराणां स्वरूपं ग्रन्थाऽन्तरेभ्यो वचनान्युध्दृत्य वर्णितम्। अस्य ग्रन्थस्याऽयं विशेषो यदत्राऽन्तर्भाविताः सर्वे प्रयोगाः केवलं सूत्रानुसारिणस्तथा च प्रायः स्मृतिपुराणादिवाक्यविहिताङ्गानामुपसंहारेण विरचिताश्च भवन्ति । अत्र संस्कारकाण्डे चतुर्थे पृष्ठे मुद्रितस्य गणेशादिस्वेष्टदेवतापूजनविधेरवलोकनेनेदं स्पष्टं भवेत्। अत्रोक्तरीत्या कर्मण्यनुष्ठिते यथाविधि कर्मानुष्ठानजन्यं फलं पुण्यञ्च लभ्येत, कर्मानुष्ठाने वृथाकालविलम्बदोषोऽपि परिहार्येत। ग्रन्थोऽयं बोधायनशाखापुरोहितान्यजमानांश्चाऽतीवोपकुर्यादिति मे दृढीयान् विश्वासः। बोधायनीयाः सर्वे स्मार्तविधयोऽस्मिन् ब्रह्मकर्म-समुच्चये प्रथममेव मुद्राप्यन्ते। महर्षिर्बोधायनः प्रवचनकारः, तेन विरचितं बौधायनं बोधायनीयं वेति वक्तव्यमिति प्राचीना परम्परा। एवं सति केषुचन मुद्रितेषु ग्रन्थेषु 'बौधायन' इति नाम्ना महर्षेर्व्यवहारः कृतो दृश्यते, स सर्वथा प्रामादिकः। अस्मिन्ग्रन्थे सर्वत्र 'बोधायन' इत्येवाऽऽचार्यवाची शब्दप्रयोगः कृत इति सर्वथा समुचितमेव। इत उत्तरं सर्वत्र बोधायन इति यथार्थपदेनैव आचार्यस्य निर्देशो भवेदित्याशास्महे।

बोधायनीयगृह्यसूत्रे गृह्यशेषे च यानि कर्माणि प्रोक्तानि तेषां सर्वेषां विधयो नात्र प्रपञ्चिताः। यावन्तोऽत्र समावे-

शितास्तावद्भिरेव ग्रन्थो विस्तृतो जातस्तेनाऽवशिष्टेभ्योऽवकाशो न लब्धः। तथाऽपि अवशिष्टानपि विधीन्त्सप्रयोगान्विरच्य सम्पादका अपरस्मिन्भागे तान् प्रकाशयेयुरित्याशास्महे। अस्य ब्रह्मकर्मसमुच्चयस्य सम्पादनेन प्रकाशनेन च मन्ये, सर्वे बोधायन-सूत्राऽनुसारिणो जाता जनिष्यमाणाश्च प्रभूतमुपकृताः। श्रीगोकर्णक्षेत्रस्थ-मेधादक्षिणामूर्तिसंस्कृतविद्यापीठस्य सदस्यैर्बोधाय-नीयशाखापरम्परारक्षणसंवर्धनबुध्याऽविरतान् परिश्रमान् कृतवद्भिः स्वकीयमुद्दिष्टं सुसम्पन्नं पारितम्। वैदिकधर्मस्य, विशिष्य बोधायनीयशाखानुष्ठानधर्मस्य च महती सेवा विद्यापीठसञ्चालकैरनुष्ठिता, सा वेदपुरुषस्य यज्ञपुरुषस्य च चरणकमलयो-रर्पिताऽस्तु। महतोऽस्य कार्यस्य परिसमाप्त्यवसरे श्रीमेधादक्षिणामूर्तिसंस्कृतविद्यापीठसञ्चालकान् हृदाऽभिनन्दामि। बोधायन-सूत्रोक्ता विधयोऽत्र सप्रयोगमुपवर्णिताः, तेन बोधायनीयस्य गृह्यसूत्रस्य गृह्यपरिभाषासूत्रस्य गृह्यशेषसूत्रस्य पितृमेधसूत्रस्य चार्थज्ञानायाऽयं ग्रन्थो नितरां सहायको भवेत्। तेषु तेषु सूत्रांशेषु प्रोक्ता विधयोऽत्र प्रकरणशः सङ्गृहीता विस्तारिताश्चेति स्वाभाविकमेव। एतेषां विधीनां कालक्रमदृष्ट्या तुलनात्मकदृष्ट्या चावबोधनाय प्रयतमानेभ्योऽत्र विपुलं साहित्यं सङ्कलितमुपलभ्येत।

सोऽयं बोधायनीय ब्रह्मकर्मसमुच्चयो बोधायनशाखीयानां महते लाभाय वैदिकधर्मश्रद्धावतां चोपयोगाय भवतु तेन चोपासनापथिकानां सौकर्यमापाद्यतामिति भगवन्तं वेदपुरुषं प्रार्थये।

पुणें, विजयादशम्यां
शाके १८९२

काशीकरोपाह्वो गणेशसूनुः चिन्तामणिशर्मा।




## ॥ शुभाशिषः ॥

ओम्

### श्री श्री शृङ्गेरी जगद्गुरु महासंस्थानं, शृङ्गेरीमठ शारदापीठम्



श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्य गुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानीविद्यानगरमहाराजधानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराज गुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासिश्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीचन्द्रशेखरभारतीस्वामिगुरुकरकमलसञ्जात

## श्रीजगद्गुरु

### शृङ्गेरी श्रीमदभिनवविद्यातीर्थस्वामिभिः ॥

श्री-मेधादक्षिणामूर्ति-संस्कृतपीठाध्यक्ष-श्रीसाम्बशर्मसु नारायणस्मरणपूर्वकविरचिता आशिषस्समुल्लसन्तु ।

संस्कृतविद्यापीठद्वारा प्रकाशितं ब्रह्मकर्मसमुच्चयाभिधानं बोधायनसूत्रानुसारिकर्मप्रयोगावगमकं प्रबन्धं तत्र तत्र अवालोकयाम। सूत्राणि सन्ति। केवलं तान्यवलम्ब्य सर्वेऽपि लोकाः कर्मस्वरूपं तत्प्रयोगं वा निर्णेतुं न पारयन्ति। आचाराश्च सम्प्रदायाश्च क्वचिद्विलक्षणाः। तेन अनुष्ठातॄणां पुरोहितानां इतिकर्तव्यतानिर्णयः प्रतिरुद्धो भवति। सर्वमेतदाकलय्य लोकोपकाराय बहूनि गृह्यधर्मसूत्राणि समालोक्य पण्डितमण्डलमुखेन निर्णयं विधाय संस्काराऽऽह्निकलङ्कीर्णपितृमेधकाण्डैः अवयवैः उपचितं सकलमपि स्मार्तमनुष्ठानं प्रकाशितवतां प्रयत्नं नितरां अभिनन्दामः।

ग्रन्थस्याऽस्य प्रकाशनेन पुरोहिताः निर्विशङ्कं अनुष्ठानानि प्रवर्तयेयुरिति विश्वासिमः। विद्यापीठमुखेन नैकानि वेदधर्म-प्रकाशकानि ग्रन्थरत्नानि प्रकाशन्ताम् इति आशास्महे। इति

शृङ्गगिरिः

साधारण पौष शुक्ल चतुर्दशी भानुवासरः

१०-१-१९७१

नारायणस्मरणम्

---

## पण्डितराज-पद्मभूषण-राजेश्वरशास्त्रि-द्राविडमहाभागानाम् अभिप्रायः

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्तस्य प्रमा च वचनैः कृतकेतरैश्चेत्।

तेषां प्रकाशनदशा च महीसुरैश्चेत्तानन्तरेण निपतेत् क्व नु मत्प्रणामः॥

लोकस्य योगक्षेमस्थितिहेतुषु चतसृषु विद्यासु अन्यतमा विद्या त्रयीनाम्ना विख्याता अनेन भारतेनोपलब्धा इति देशस्य महद्भाग्यम् । अनयैव विद्यया एतद्देशे प्रसूतेषु जनेषु सम्भाव्यमानः एकार्थाभिनिवेशित्वप्रयुक्तः कलहः अपसारितः। समस्तेषु मैत्रीभावः प्रापितश्च । मर्यादायां स्थितत्वात् समेषां जीवनं निर्बाधं यथा भवेत् तथा अनया संस्थापितमित्येतत् एतस्या विद्याया अनितरसाधारणं स्थितिहेतुत्वमस्ति । सा च विद्या वेदेनैकेनैव प्रकाशितापि तत्तात्पर्यं कुत्रास्तीति सर्वैर्ज्ञातुमशक्यमिति मत्वा ऋषिभिः विद्यापारदृश्वभिः वेदतात्पर्यमालोड्य स्मृतिगृह्यादिरूपेणैकत्र प्रकाशितमित्येतेषामप्ययं परिश्रमः त्रयीमध्ये अन्तर्भाव्यः शिष्टैः समादृतो वर्तते। तथापि तदभिप्रेतः सर्वोऽपि प्रयोगः पुनरज्ञातप्राय एवाभूदिति सर्वस्यास्य सङ्कलनमपेक्षितमपि न सर्वस्य सुकरमभूत् । अतस्तैस्तैर्विद्वद्भिः सम्प्रदायागतकर्मकुशलैः सम्पूर्णं प्रयोगजातं एकत्रीकृत्य तेषां तेषां शाखिनां सुखावबोधाय ब्रह्मकर्मसमुच्चयः प्रकाशितः प्रागबभूव। यथा ऋग्वेदिनां हिरण्यकेशीयानां ब्रह्मकर्मसमुच्चयादि ।

पर तेषां सर्वपारिषद्यं नासीदिति काचन न्यूनता भासमानाऽभूत् । मैसूर-राज्यान्तर्गत-गोकर्णक्षेत्रस्थ-श्री-मेधा-दक्षिणामूर्ति-संस्कृतविद्यापीठीयसंशोधनविभागद्वारा सम्पाद्य प्रकाशितादस्माद्दुर्लभात् बोधायनीय-ब्रह्मकर्म-समुच्चय-ग्रन्थात् सा दूरमपसृता। बोधायनस्य सर्वपारिषद्यात् तथा सर्वेषां ब्रह्मसंस्काराणां प्रकाशकत्वादस्योपादेयत्वं तु सर्ववादि सम्प्रतिपन्नमेव ।

एवं रीत्या अस्योपयोगित्वं ब्रह्मवृन्दस्य कृते अस्तीति सर्वैरपि विद्वद्भिः अवश्यमनुं सङ्गृह्य उक्तविद्यापीठीय-संशोधन-विभागस्य अप्रकाशिततरग्रन्थप्रकाशने उत्साहः संवर्धनीयः । इति

श्रीवल्लभराम शालिग्राम सांगवेद
विद्यालय, वाराणसी
२६-१-१९७१

श्री पूज्य गुरुचरणानां, पण्डितराज,
पद्मभूषण, राजेश्वरशास्त्रि, द्राविडमहाभागानां
आज्ञया—रा. शा. होसमने

## श्रीडोंगरेशास्त्रिणाम् अभिप्रायः

श्री-मेधादक्षिणामूर्ति-संस्कृत-विद्यापीठीय-संशोधन-विभागद्वारा प्रकाशितोऽयं ग्रन्थः सूत्रानुगुणः, रमणीयैरायसाक्षरैः समीचीनैः पत्रैस्तथा वास्तुमण्डल, सर्वतोभद्रमण्डल, नवग्रहमण्डलादि तत्तन्मण्डलैः परिशोभितः, आह्निक-गृह्य-सङ्कीर्ण-पितृमेधाख्यकाण्डचतुष्टयविराजितः, अपेक्षितया अनुक्रमण्या उपोद्घातेन च युक्तः स्मार्तकर्मानुष्ठानपराणां आस्तिकमहाशयानां तथा याजकवर्गस्य च विशेषतः उपयोगावहः अत्यन्तावश्यकश्च वर्तते। अद्यत्वे बोधायनसूत्रानुयायिनः एतादृशस्य प्रयोगग्रन्थस्य मुद्रितस्य अत्यन्तदुर्लभतया अनुष्ठानविषये क्लेशमनुभवतां आस्तिकजनानां एतन्मुद्रणेन महानुपकारः समजनि।

एतादृशसत्कर्मप्रवर्तनेन उपकृतवद्भ्यः श्रीमेधादक्षिणामूर्तिविद्यापीठसञ्चालकेभ्यः हार्दा धन्यवादाः मया समर्प्यन्ते। बोधायनीय-दर्शपूर्णमासभाष्यादि-प्रकाशनसङ्कल्पोऽपि भगवतो महाबलेश्वरस्य प्रसादेन सफलो भवत्विति च आशासे। इति

कौता स्वाराज्य विहार
नं. १० पद्मारावु नगर
सिकन्दराबाद २५
१५-१-१९७१



वी. कृ. डोंगरेशास्त्री
उभयमीमांसाविशारदः

परम-पूज्याचार्यवर्याणां शुभाशिषः

# करवीरपीठाधिष्ठित श्रीमज्जगद्गुरु श्रीशंकराचार्याणाम्

श्री मेधा-दक्षिणामूर्ति-संस्कृतविद्यापीठेन प्रकाशितं बोधायनीय-ब्रह्मकर्म-समुच्चयमवलोक्य महान् प्रमोदः समजनि।

सूत्रकर्ता भगवान् बोधायनः सूत्रकर्तृष्वादिमत्वेन गण्यते। यद्यपि कृष्णयजुर्वेदस्य तैत्तिरीयशाखायां भगवता सूत्राणि निबद्धानि तथाप्येतेषां सूत्राणां निरपवादं महत्त्वं वृद्धमनुना प्रतिपादितं यदन्यशाखानुयायिभिरपि बोधायनमतं प्रमाणत्वेनादरणीयं तदनुरोधेन च स्वीयकर्माण्यनुष्ठेयानीति। एतेनैव भगवतः सूत्रकृतां मध्येऽधिकारः श्रेष्ठत्वं च गम्यते।

यद्यपि सूत्रग्रन्थाः प्रमाणभूतत्वात् श्रेष्ठतमाः तथापि कर्मनिष्ठानां गृहिणां कृते ते नोपयुक्ताः। यतः संध्या-ब्रह्मकर्मादीनि नित्यकर्माणि, व्रतादीनि नैमित्तिकानि उपनयनादयः संस्काराश्च ब्रह्मकर्मसमुच्चयसदृशग्रन्थसाहाय्येनैव कर्तुं सुशकाः। अस्य ग्रन्थरत्नस्येदमपरं वैशिष्ट्यं यदस्य सम्पादनं महत्कौशलपूर्णं विलसति। तत्र तत्र बोधायनसूत्राणां कृतो निर्देशः, नानास्मृतिभ्य उद्धृत्य प्रदत्तानि वचनानि, परम्पराप्राप्ततन्त्राणां कृतं विवरणं च ग्रन्थस्य माहात्म्यं प्रकटयन्ति। अत एवायं ग्रन्थो न केवलं कर्मिणां कृते, अपि तु विमर्शकानां जिज्ञासूनां पुरोहितानां च कृते भृशमुपकारी स्यादिति नात्र संदेहः।

एवं च सम्यक्प्रयोगान्वितस्य ब्रह्मकर्मसमुच्चयस्य मुद्रणेन बोधायनसूत्रानुयायिषु मेधादक्षिणामूर्तिसंस्कृत-विद्यापीठेन महदुपकृतमिति मन्यामहे।

एवमेवान्येषामपि बोधायनग्रन्थानां मुद्रणेन विद्यापीठं श्रुति-स्मृतिसेवापरं भूयादिति श्रीशारदाम्बा-श्रीचन्द्र-मौलीश्वरचरणारविन्दयोः संप्रार्थयाम इति शम्॥

## श्री काञ्ची कामकोटि पीठाधिप जगद्गुरु श्रीशंकराचार्याणाम् (काञ्चीपुरम्)

श्रीमेधादक्षिणामूर्तिसंस्कृतविद्यापीठस्थ-संशोधनविभागद्वारा प्रकाशितः "बोधायनीयब्रह्मकर्मसमुच्चया—"ख्योऽयं ग्रन्थः श्रीचरणैरवलोकितः। अयं ग्रन्थः सर्वेषां वैदिकमार्गानुयायिनां महोपकाराय भूयात्। एवमेव ईश्वरानुग्रहेण दर्शपूर्णमास-भाष्याद्यनेकोपयुक्तग्रन्थानां प्रकाशनमपि शीघ्रमेव भूयादिति च श्रीचरणानां शुभाशिषः॥

## श्रीस्वर्नवल्ली महासंस्थानम्, शिरसि

बोधायनीयब्रह्मकर्मसमुच्चयग्रन्थमवलोक्य महान् परितोषः। वैदिकविद्याध्ययनकर्मानुष्ठानविरले अस्मिन् काले तत्र तत्र वैदिककर्ममार्गानुयायिनां एतद्ग्रन्थप्रचारेण वैदिकधर्मकर्मणः पुनरुज्जीवनं भवेदित्याशयः। श्री देवीप्रसादः पञ्चरूप्यकं कुंकुमप्रसादश्च प्रेषितः स्वीक्रियताम्॥

## श्री संस्थान गोकर्ण–पर्तगाली–जीवोत्तम–मठ

श्रीमद्द्वारकानाथतीर्थ—श्रीवडेरस्वामिभिरनुगृहीतः संदेशः। श्रीमेधादक्षिणामूर्तिसंस्कृतविद्यापीठस्थ-संशोधनविभाग-द्वारा प्रकाशितः बोधायनीयब्रह्मकर्मसमुच्चयाख्योऽयं ग्रन्थः सम्यगवलोकितः। एतावत्कालपर्यंतं बोधायनसूत्रानुसारिणां कर्मानुष्ठानमार्गदर्शको विधिवाक्योपेतः ईदृशः ग्रंथो नैवासीत्। अनेकान् ग्रन्थान् सपरामर्शं विलोक्य महापरिश्रमेण प्रकटितोऽयं ग्रन्थः बोधायनीयशाखानुयायिनां महदुपकाराय भूयादित्याशास्महे॥

इति नारायणस्मरणपूर्विका आशिषः

## ॥ प्रकाशकानां निवेदनम् ॥

श्रौतोदधिः पल्वलवद्विगाह्यः क्रीडावनी द्यौः खगसङ्कुलाढ्या।
इत्थं मतिर्यस्य विदांवरस्य बोधायनं तं मुनिमानताः स्मः ॥

'मनुष्यः स्वीयप्राकृतिकाऽभिरुचिप्रचोदितः कर्म करोति' इति केवलबहिर्दर्शनेन दृश्यते। तथाऽपि 'तादृग्वासनारोपाः प्राकृतिकाऽभिरुचयः तस्य तस्य प्राक्तनैरेव कर्मभिर्निष्पन्ना' इति शास्त्राऽभिज्ञानां मतम्। एताः प्राकृतिकाऽभिरुचयः खलु 'जीवनपरिसरपरिस्थितिसापेक्षा' इत्याधुनिकमनश्शास्त्रज्ञानामभिप्रायः। किन्त्वेकस्मादेव पितृमातृमूलाज्जातयोः समानपरिसरपरिस्थितिजीविनोः प्राकृतिकाऽभिरुचयोऽसमानाः परस्परविरुद्धाश्च दृश्यन्ते। तस्मादियमुपपत्तिरतिव्याप्त्यव्याप्तिदूषिता, न समीचीना इति निर्विवादोऽयं विषयः। नालमीदृशेषु तर्कातीतविषयेष्वपूर्णाः सदोषा मानवबौद्धिकविचारा निर्दुष्टनिर्णयं कर्तुम्। तपसाधिगततत्वज्ञानां महर्षीणां वचनानुसरणेनैव श्रेयोऽधिगच्छन्ति, इति शास्त्राध्ययनपरिपक्वमतीनां विदुषामसन्दिग्धोऽयं निश्चयः। सकलशुभाऽशुभानां प्राकृतिकाभिरुचीनां मूलं तस्य तस्य प्राक्तनकर्माण्येवेति समधिगताऽसन्दिग्धनिर्णयाः सूत्रकाराः प्राचीनमहर्षयो यादृशां कर्मणामनुष्ठानैर्मनुजः परिशुद्धशुभवासनानुरूपप्राकृतिकाऽभिरुचिः अशुभाद्दुःखाच्च मुक्तो निरतिशयानन्दाभिमुखो गन्तुं प्रवर्तते, तादृशानि कर्माणि प्रविधाय तेषामनुष्ठानाय मार्गदर्शनमकार्षुः।

कर्माणि तु नित्यानि नैमित्तिकानि काम्यानीति त्रिविधानि। 'फलनिरपेक्षं कर्तव्यतया विहितानि यान्यकृत्वा दोषभाग्भवति तानि नित्यानि, यस्मात् कस्मादपि निमित्तात् प्राप्तानि कर्माणि तानि नैमित्तिकानि, उद्दिष्टफलसाधनाय क्रियमाणानि

कर्माणि तानि काम्यानि ' इति । एतानि तत्तद्वेदशाखाध्यायिनां बोधायनाऽऽश्वलायनाऽऽपस्तम्बसत्याषाढादिसूत्रकारैस्तत्तदनुसारं विहितानि ।

सर्वेषां सूत्रकाराणां मध्ये आदिमो भगवान् बोधायन एव इति प्राचीनाचार्यैरेव प्रतिपादितम् । सूत्रगणनाप्रसङ्गे आग्निवेश्यसूत्रे—' अथातः सूत्रगणान् व्याख्यास्यामः । बोधायनमापस्तम्बं सत्याषाढं द्राह्यायणमागस्त्यं शाण्डिल्यमाश्वलायनं शाम्भवं कात्यायनमिति नवानि पूर्वसूत्राणि ' इत्यत्र प्रथमं तस्य नामग्रहणमुररीकृतम् । प्रायश्चित्तविचिन्तनाख्ये निबन्धे— ' बोधायनं जैमिनिञ्च कौषीतक्याश्वलायनौ । वाधूलमापस्तम्बादीन्नौमि शाखाप्रवर्तकान् ' इत्यत्राऽपि शाखाप्रवर्तकेषु भगवतोऽस्य प्राथम्यमङ्गीकृतम् । एवमेवाऽस्य प्राथम्ये प्राधान्ये च निर्विवादप्रसिद्धिकारणात्–" स्वसूत्रेऽविद्यमाने तु परसूत्रेण वर्तते । बोधायनमतं कृत्वा स्वसूत्रफलभाग्भवेत् " इति वृद्धमनुरब्रवीत् । भगवान् बोधायन एकाधिकशतयजुःपारगाऽऽपस्तम्बादिषष्टिसहस्रशिष्यैः परिवृतः । अत एव बोधायनकल्पव्याख्यात्रा यज्ञेश्वरेण एवमभिवर्णितम्—" मेधां बोधायनो नो वितरतु सहितः षष्टिसाहस्रशिष्यैर्यस्यापस्तम्ब एकाधिकशतयजुषां पारगो मुख्यशिष्यः । सूत्रं प्रायुङ्क्त नैकक्रमविधिनिपुणाऽध्वर्युनानाप्रयोगव्यक्तिज्ञानोपयुक्तस्फुटमृदुगहनप्रौढसन्दर्भगर्भम् ॥ कल्पामृतं क्षितिसुरप्रकराय योऽदाद्वेदाम्बुराशिमधिमथ्य निजप्रभावात् । बोधायनाय मुनिवन्दितपादपद्मद्वन्द्वाय कण्वतनयाय नमोऽस्तु तस्मै " इति । अन्यदपि वैशिष्ट्यमस्य महर्षेणः । तत्तु खगोलशास्त्रविषयकम् । अयमाचार्यः सूर्यस्य दक्षिणोत्तरपरिचलने वास्तविकीं प्रक्रियां स्फुटमभिहितवान् ।

इदानीमादर्शभूतस्य कण्वऋषेः पुत्रस्याऽस्य कालगणनां प्रति किञ्चित्प्रपञ्च्यते । महाभाष्यकारेण पतञ्जलिना ' सूत्राणि ऋषिवाक्यानि ' इत्युक्तम् । कल्यब्दादिपञ्चमशतमानपर्यन्तः ' ऋषिकालः ' इत्यभिज्ञानां मतम् । तत्समये ' आपस्तम्बेनाऽभावि '

इति भगवद्दत्तो वदति। तस्याचार्यो बोधायनः, आपस्तम्बादपि प्राचीनः इति स्पष्टम्। केचन कल्यब्दादिद्वितीयशतके बोधायन आविर्भूत इति मन्यन्ते। अन्ये त्वस्य वेददर्शनसमकालीनत्वमपि चिन्तयन्ति। बोधायनश्रौतसूत्रे (२६·२९.) 'षाण्मास्य एव पशुबन्ध-काल उक्तो भवति। अथाप्युदाहरन्ति—षट्सु षट्सु मासेष्वाहिताऽग्निना पशुना यष्टव्यं भवति। उभे काष्ठे अभियजेत। माघमासे धनिष्ठाभिरुत्तरेणैति भानुमानर्धाऽऽश्लेषस्य श्रावणस्य दक्षिणेनोपनिवर्तते। इत्येते काष्ठे भवतः' इत्युक्तत्वात्तदानीं धनिष्ठायां माघे उदगयनस्य, अर्धाऽऽश्लेषायां श्रावणे दक्षिणायनस्य चारम्भो भवति स्मेत्यवगम्यते। एतेनाऽस्य महानुभावस्य कालो न वेददर्शन-कालादसन्निकृष्ट इति निश्चप्रचम्।

केवलं श्रीपरमेश्वरप्रीत्यर्थं क्रियमाणं विधिविहितं कर्म 'यज्ञः' इत्यभिधीयते। 'यज्ञो हि श्रेष्ठतमं कर्म' इति श्रुतिनिश्चयः। भगवता योगेश्वरेण कृष्णेनाऽपि गीतायां—'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' इति स्पष्टमुपदिष्टम्। भगवान् बोधायनः सर्वाण्यपि कर्माणि यज्ञशब्देनैव सम्बोधितवान्। स्वकृतगृह्यसूत्रे—"सर्वेण वै यज्ञेन देवाः सुवर्गंलोकमायन्" "यज्ञं व्याख्यास्यामः" इत्युपक्रम्य प्रथमं तावत् "एकविंशतिसंस्थो यज्ञ ऋग्यजुःसामात्मकश्छन्दोभिश्श्रितो ग्राम्यारण्यपश्वोषधी-भिर्हविष्मान् दक्षिणाभिरायुष्मान्। स चतुर्धा ज्ञेय उपास्यश्च स्वाध्याययज्ञो जपयज्ञः कर्मयज्ञो मानसश्चेति। तेषां परस्पराद्दश-गुणोत्तरो वीर्येण" (बो. गृ. प. सू. १. १. १८–२१) इति विवाहप्रभृतिसंस्काररूपहुतादिसप्तपाकयज्ञानग्न्याधेयादि सप्त-हविर्यज्ञानग्निष्टोमादि सप्तसोमयज्ञानेवमेकविंशतियज्ञान् प्राधान्यतयोपदिश्य, अग्रे "स एष हुतादिरासहस्रसंवत्सरान्तः सर्वो यज्ञो यो हि तद्वेद स्वाध्यायजपकर्ममानसेषु तेनैवास्य तद्गुणेनेष्टं भवति" (बो. गृ. प. सू. १·२·१) इति सर्वान् यज्ञान् समादिशत्। यज्ञ एव

अस्माकं सर्वस्वम्। "यज्ञो वा एष पञ्चमो यदतिथिः" इत्यतिथिमपि यज्ञरूपेण दृष्टवान् आचार्यः। "यज्ञवित्सर्वविद्भवति। यज्ञः सर्वम्" इति तस्य सिद्धान्तः। "तस्माद्याज्ञीषु चिन्तासु रमन्ते तत्वदर्शिनः" यज्ञस्याधिकारे —नाऽक्रियो ब्राह्मणो नाऽसंस्कारो द्विजो नाऽविद्वान्विप्रो नैतैर्हीनः श्रोत्रियो नाऽश्रोत्रियस्य यज्ञः' इति यथाश्रोत्रियस्याऽनुष्ठानाऽर्हत्वमुक्तं, तथैव—'तस्माद्यः कश्चन क्रियावान्त्सतामनुमताचारः स श्रोत्रिय एव विज्ञेयः' (बो. गृ. प. सू. १·१·२५) इति श्रोत्रियत्वादिगुणरहितस्याऽपि सदाचारसम्पन्नस्याऽधिकारित्वमुक्तम्। अतः सदाचारस्य श्रोत्रियत्वाद्यपेक्षया सर्वस्मिन्नपि काले महत्त्वं इति सिद्धं भवति।

श्रौत-गृह्यसूत्राणि गण्डभेरुण्डवच्छीर्षद्वयोपलक्षितान्यपि देहेनाऽभिन्नानि विद्यन्ते। यतो "दर्शपूर्णमासप्रकृतयः सर्वाः पाकयज्ञसंस्थाः" इति गृह्यकर्मणो दर्शपूर्णमास एव प्रकृतिः इति स्पष्टमुक्तम्। 'प्रसिद्धः पिण्डपितृयज्ञः' (स्रुक्सम्मार्जने) 'दर्शपूर्णमासवत्तूष्णीम्' इत्यादिभिः गृह्ये श्रौतसूत्रं प्रति अङ्गुलिनिर्देशो दृश्यते। प्राक्तनाचार्यैः कर्माचारव्यवस्था निष्ठुरनियमैर्निबद्धा। यथा—'उपदिष्टो धर्मः प्रतिवेदम्। स्मार्तो द्वितीयः। तृतीयः शिष्टागमः। श्रुतेरर्थानुगामिनी स्मृतिः। शिष्टागमस्तु वैकल्पिकः न तु स्वेच्छाचारपरः। तथा च मनुः—"धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः। श्रुतिस्तु वेदविख्यातो धर्मशास्त्रन्तु वै स्मृतिः॥ ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ। योऽवमन्येत ते चोभे हेतु (तर्क) शास्त्राश्रयाद् द्विजः॥ स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः" इति। तस्माच्छास्त्रसिद्धेऽर्थे हेतुशास्त्रबलान्न विचिकित्सा कर्तव्या। 'अस्वर्ग्यं लोकविद्विष्टं पण्डिता वर्जयन्ति' इत्यादिषु लोकशब्दः श्रुतिस्मृत्यर्थदर्शिशिष्टजनपरः। अतो वचनसिद्धेषु वैकल्पिकेषु धर्मेषु शिष्टाचारः प्रमाणम्। द्वैविध्ये शिष्टाचारस्यैवाऽवलम्बनत्वात्, सहायत्वेन गणना। 'विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः। हृदयेनाऽभ्यनुज्ञातो

यो धर्मस्तं व्यवस्यत ' इत्याद्युक्तिभिर्मनुनाऽपि स्वेच्छाचारो निर्बन्धितः। अत एव कर्मणो वास्तविकं रूपं परम्पराभिरक्षितमद्याप्युपलभ्यते।

महर्षेर्बोधायनस्य श्रौतसूत्रं गृह्यसूत्रं धर्मसूत्रञ्चेतरेषां सूत्रग्रन्थानामपेक्षया सुसमृद्धं विद्यते । १९२३ तमे क्रिस्ताब्दे श्रीमता 'डब्ल्यू. केलण्ड' महाशयेन विंशतिवर्षपरिश्रमेण समृद्धं बोधायनश्रौतसूत्रं सम्पाद्य ' बङ्गाल एशियाटिक् सोसायटी ' द्वारा यथा प्रकाशितं न तथा केनाऽपि बोधायनगृह्यधर्मसूत्राणां प्रकाशनं कृतम्। अस्मिन्विषये १९०७ तमे क्रिस्ताब्दे मैसूरमुद्रितधर्मसूत्रप्रस्तावनायां ' विदेशीयश्च पुस्तकं नाऽद्यावधि समासादितम् । तथाऽपि समुपलब्धस्याऽप्यप्रकाशने आत्यन्तिकं विलोपं सम्भाव्य स्थितस्य प्रकाशः श्रेयानिति निश्चित्य प्रकटितामिदम् ' इत्युल्लेखनादेव स्पष्टं भवति। अपि च आश्वलायनीयाऽऽपस्तम्बीयहिरण्यकेशीयादिषु यथासम्यगसंशयामितिकर्तव्यताप्रकाशका वृत्तिभाष्याद्युपेताः सूत्रग्रन्थाः प्रयोगग्रन्थाश्च सर्वत्र सम्मुद्रिता ह्युपलभ्यन्ते न तथा आदिमसूत्रकारस्याऽस्य बोधायनस्य । अतः सर्वेषु ग्रन्थालयेषु विद्यमानानां पुस्तकानां सङ्कलनेन वृत्तिभाष्याद्युपेतस्य बोधायनीयस्य समृद्धवाङ्मयस्य प्रकाशनाय प्रयत्न आवश्यकः, यस्मिन्कृते प्राचीनसंस्कृतेर्मूलस्वरूपं स्पष्टीकृतं भवति, अपि च विमर्शकानां कर्मनिष्ठानां जिज्ञासूनाञ्च स्वमार्गप्रवर्तनाय साहाय्यं भवेत्।

बोधायनविहितगृह्यकर्मणां कर्मानुष्ठानप्रकाराणाञ्चाऽवबोधाय 'बोधायनीयब्रह्मकर्मसमुच्चयः' इति नामधेयस्याऽस्य ग्रन्थस्य प्रकाशनमत्यावश्यकं, इति मत्वा 'श्रीमेधादक्षिणामूर्तिसंस्कृतविद्यापीठेन' प्रयत्नः कृतः। एतदर्थं सप्तवर्षात्पूर्वं शोभकृत्संवत्सरे विदुषां (१) गणपति सुब्रह्मण्य दीक्षित चित्रिगे मठ (२) रामचन्द्र गणेशभट्ट कोड्लेकेरे, (३) परमेश्वर

रामकृष्ण शर्मा बैलकेरी (४) श्रौती सुब्राय गणेशभट्ट कोडलेकेरे (५) राम वेंकटरमण पंडित इति पञ्चानां सदस्यानां सम्पादकमण्डलमेकमायोजितम्। अनेन सम्पादकमण्डलेनाऽस्मिन्ब्रह्मकर्मसमुच्चये विध्युपेतनिर्णयक्रमः प्रयोगक्रमश्चेति विभागद्वयं समाश्रित्य, कृष्णयजुःसंहिता-ब्राह्मणाऽऽरण्यकादिवेदग्रन्थानां बोधायनाऽऽपस्तम्बसत्याषाढादिसूत्रग्रन्थानां मनुयाज्ञवल्क्यादि-स्मृतीनां धर्मसिन्धुवैद्यनाथीयादिधर्मशास्त्रग्रन्थानां विष्णुपद्मादिपुराणानां कृत्यकल्पतरुवाचस्पत्यादिकोशग्रन्थानां प्राचीन-कारिकाप्रयोगग्रन्थानां मुद्रिताऽमुद्रितानां वेदभाष्यस्य महाभारतस्य च साहाय्येन, आह्निककाण्डं संस्कारकाण्डं सङ्कीर्णकाण्डं पितृमेधकाण्डमिति काण्डचतुष्टयात्मकोऽयं ग्रन्थो विराचितः।

अस्य ग्रन्थस्य विशिष्टं स्वरूपं परिकल्पयितुं इतः पूर्वं स्थानीयैर्विद्वत्प्रकाण्डैः कीर्तिशेषैः श्रीमद्भिः— श्रौती सुब्रायभट्ट, गणेशसभाहित, वेङ्कटरमणपण्डित, गायत्री तिर्मुलेश्वरशर्मा, भडती शिवभट्ट महोदयैर्महान्परिश्रमः कृतः। तैः सङ्गृहीता उपयुक्ताश्च विषया महते उपकारायाऽकल्पयन् ॥

" अनाकुलां पद्धतिमास्तिकानां मुनिप्रणीतैः परिकल्प्य सूत्रैः।
असंशयार्थप्रतिपत्तये च व्यतानिषुः श्रोत्रियवृन्दमान्याः॥
निजशुभपदचिन्हं गाढमत्राङ्कयित्वा दिवमनु ननु याता हन्त ते ते महान्तः।
उपकृतिमसकृत्तां शर्मदां कार्मिलोके मुकुलितकरयुग्माः केवलं भावयामः " ॥

पूर्वं पुण्यपत्तनस्थ–वैदिकसंशोधनमण्डले ऋग्वेदभाष्य-भारद्वाजश्रौतसूत्र-श्रौतकोशाद्यनेकबृहद्ग्रन्थसम्पादने दिवानिशं

प्रयतितवन्तोऽद्य पुणेविद्यापीठस्थ–प्रागतिक-संस्कृताध्ययनकेन्द्रे प्रपाठक ( रीडर ) पदे नियुक्ताः डी. लिट्, पदवीविभूषिताः श्रीमन्तः 'डॉ. चिन्तामणि गणेश काशीकर' महोदयाः विद्यापीठस्याऽस्य प्रार्थनामङ्गीकृत्य सुसमृद्धोपोद्घातलेखनेनोपकृतवन्तः। तेभ्यः शतशो धन्यवादाः। तथा च पुण्यपत्तनस्थ–वैदिकसंशोधनमण्डले सेवां समर्प्य इदानीं 'वाडिया कॉलेज' इत्यत्र संस्कृतप्राध्यापकाः पीएच्. डी. पदवीविभूषिताः याज्ञिकचूडामणिः 'डॉ. विद्याधर विश्वनाथ भिडे' महोदयाः संस्कारादिकाण्डत्रयस्य मुद्रणसंशोधनेन तत्र तत्र सूचनाप्रदानेन च साहाय्यं दत्तवन्तः तदर्थं ते धन्यवादार्हाः। विद्यापीठस्य सदस्येष्वन्यतमाः 'वे. कृष्ण रामचन्द्रभट्ट हिरे' महाभागाः अहोरात्रमविरतपरिश्रममनुभूय मुद्रणप्रतिलेखनेनोपकृतवन्तः। तेषां कृतज्ञतां प्रदर्शयामः। एतदर्थे अन्येऽपि बहवो दृढाभिनिवेशवन्तः कृतज्ञताभाजो भवन्ति॥

विद्यापीठस्य लक्ष्यानुसारं संशोधनात्मकोऽयं ग्रन्थः सम्पादकमण्डलेन महता प्रयासेन विरचित इति विद्यापीठस्य सञ्चालकानामस्माकं भृशं मोदावहोऽयं विषयः॥

सिरसी 'सहकारि'मुद्रणालयस्य व्यवस्थापकैराह्निककाण्डस्य (१३२ पृष्ठात्मकस्य) तथा पुण्यपत्तनस्थ 'आर्यभूषण' मुद्रणालयाधिकृतैः संस्कारकाण्ड–सङ्कीर्णकाण्ड-पितृमेधकाण्डाद्यवशिष्टानां सर्वेषाञ्च मुद्रणं समीचीनतया कारितमिति ससन्तोषं निवेदयामः। अस्य ब्रह्मकर्मसमुच्चयस्य मुद्रणे भारतशासनेन द्रव्यसाहाय्यं कृतं तदर्थं भारतसर्वकारं हृत्पूर्वकमभिनन्दामः।

अस्मिन्प्रमोदावसरे भागचतुष्टयात्मको बोधायनीयब्रह्मकर्मसमुच्चयाख्योऽयं ग्रन्थो गृहमेधिभिरितिकर्तव्यतानुष्ठेयाऽभ्युदयनिःश्रेयससाधननिरूपणपरिपूर्णो विदुषां पुरतः समुपस्थाप्यतेऽस्माभिः।

यस्तर्कैरनुमीयते न कुहकैः शुष्कैर्वचोजृंभणैः ।
सत्कर्माचरणैस्तु भावविवशैर्योऽन्विष्यतेऽन्तर्बुधैः ॥
योऽस्मांश्चोदितवान्प्रयोगकलने गोकर्णधामा विभुः ।
सांनिध्ये विनिवेद्यते कृतिरियं तस्यैव सम्प्रीतये ॥
समस्तशुभसंक्रमः स्मरजयेऽप्यजातः श्रमः ।
मुहुः प्रकटसंयमस्त्रिपुरदाहदीर्घोद्यमः ॥
पुलस्त्यसुतबाहुविक्रममदापहारक्षमः ।
सदाऽवतु महाबलो गलविलीनहालाहलः ॥

कार्तिकशुक्ले प्रतिपदि
शाके १८९२

गायत्रीत्युपाह्वो नारायणात्मजः सांबशर्मा
अध्यक्षः
श्री मेधा-दक्षिणामूर्ति-संस्कृत-विद्यापीठः, गोकर्ण.

* * *

## ॥ बोधायनीयब्रह्मकर्मसमुच्चयस्थविषयानुक्रमणिका ॥

### अथ आह्निककाण्डम्


| | | विषयः | पत्रम् |
|---|---|---|---|
| १ | अथ | मङ्गलाचरणम् ... | १ |
| २ | ,, | प्रातःस्मरणम् ... | १ |
| ३ | ,, | शौचविधिः दन्तधावनविधिश्च ... | २ |
| | | अथ प्रयोगः ( ३ ) | |
| ४ | ,, | स्नानविधिः ... | ३ |
| | | अथ प्रयोगः ( ३ ) | |
| ५ | ,, | आचमनविधिः ... | ५ |
| | | अथ प्रयोगः ( ६ ) | |
| ६ | ,, | आसनकल्पनम् ... | ७ |
| ७ | ,, | भस्मधारणविधिः ... | ७ |
| | | अथ प्रयोगः ( ७ ) | |
| ८ | ,, | कुशग्रहणम् ... | ७ |
| ९ | अथ | सन्ध्योपासनविधिः ... | ८ |
| | | अथ सन्ध्याकालनिरूपणम् ( ८ ) | |
| | | ,, कालातिक्रमणे प्रायश्चित्तम् ( ९ ) | |
| | | ,, सन्ध्यायामुपास्यदेवता तदुपासनञ्च ( ९ ) | |
| | | ,, जपलक्षणम् ( १० ) | |
| | | ,, जपसम्पत्तिसाधनानि ( ११ ) | |
| | | ,, प्राणायामलक्षणम् ( ११ ) | |
| | | ,, प्रातःसन्ध्याप्रयोगः ( ११ ) | |
| | | ,, आशौचादौ ( १४ ) | |
| १० | ,, | ब्रह्मचारिणामग्निकार्यविधिः ... | १४ |
| | | अथ प्रयोगः ( १४ ) | |

| | विषयः | पत्रम् |
|---|---|---|


११ अथ औपासनविधिः ... १५

अथ प्रातरौपासनप्रयोगः ( १५ )

१२ „ द्वादशनमस्काराः ... १६

१३ „ तृचाकल्पनमस्काराः ... १७

१४ „ देवपूजाविधिः ... १८

अथ महापुरुष (विष्णु) परिचर्याप्रयोगः ( १८ )

„ महादेवपरिचर्याप्रयोगः ( २० )

१५ „ सर्वदेवसामान्यपूजा ... २१

अथ अन्तर्मातृकान्यासः ( २४ )

„ बहिर्मातृकान्यासः ( २५ )

„ पुरुषसूक्तन्यासः ( २५ )

„ कलशार्चनम् ( २६ )

„ शङ्खार्चनम् ( २६ )

„ आत्मार्चनम् ( २७ )

„ पञ्चामृतविधिः ( २७ )


विषयः पत्रम्


अथ मण्डपार्चनम् ( २७ )

„ द्वारपालपूजा ( २७ )

„ पीठपूजा ( २८ )

„ पञ्चमूर्तिपूजा ( २८ )

„ सूर्यपूजा ( २८ )

„ गणपतिपूजा ( २८ )

„ दुर्गापूजा ( ३० )

„ शिवपूजा ( ३० )

„ विष्णुपूजा ( ३१ )

„ षोडशोपचारपूजा ( ३१ )

„ पञ्चामृताभिषेकः ( ३१ )

„ पञ्चोदकस्नानम् ( ३२ )

„ महाभिषेकः ( ३३ )

„ सूर्यसूक्तम् ( ३३ )

„ वैनायकं सूक्तम् ( ३४ )

| | विषयः | पत्रम् |
|---|---|---|
| | अथ ब्रह्मणस्पतिसूक्तम् ( ३४ ) | |
| | ,, गणेशाथर्वशीर्षम् ( ३४ ) | |
| | ,, गणसूक्तम् ( ३५ ) | |
| | ,, दुर्गासूक्तम् ( ३६ ) | |
| | ,, देवीसूक्तम् ( ३६ ) | |
| | ,, श्रीसूक्तम् ( ३६ ) | |
| | ,, रुद्रसूक्तम् ( ३७ ) | |
| | ,, लघुन्यासेन सहितो रुद्रस्नानार्चनविधिः ( ३७ ) | |
| | ,, रुद्राध्यायश्चमकादिसहितः ( ३९ ) | |
| | ,, नमकचमकयोर्मन्त्रविभागः ( ४५ ) | |
| | ,, सुवर्णधर्मानुवाकः ( ४६ ) | |
| | ,, पुरुषसूक्तम् ( ४७ ) | |
| | ,, राजोपचारपूजा ( ५२ ) | |
| १६ | अथ मध्याह्नसन्ध्योपासनविधिः ... | ५४ |

| | विषयः | पत्रम् |
|---|---|---|
| १७ | अथ वैश्वदेवविधिः ... | ५५ |
| | अथ वैश्वदेवहोमः ( ५५ ) | |
| १८ | ,, पञ्चमहायज्ञविधिः ... | ५६ |
| | अथ पञ्चमहायज्ञप्रयोगः ( ५८ ) | |
| | ,, देवयज्ञः ( ६० ) | |
| | ,, पितृयज्ञः ( ६० ) | |
| | ,, भूतयज्ञः ( ६० ) | |
| | ,, मनुष्ययज्ञः ( ६० ) | |
| | ,, ब्रह्मयज्ञः ( ६० ) | |
| | ,, देवर्षिपितृतर्पणम् ( ६१ ) | |
| १९ | ,, गोग्रासप्रयोगः ... | ६२ |
| २० | ,, त्रिसुपर्णविधिः ... | ६३ |
| | अथ त्रिसुपर्णमन्त्राः ( ६३ ) | |
| २१ | ,, भोजनविधिः ... | ६३ |
| | अथ भोजनप्रयोगः ( ६४ ) | |

| | विषयः | पत्रम् |
|---|---|---|
| २२ | अथ सायंसन्ध्याप्रयोगः ... | ६५ |
| | अथ रात्रौ ब्रह्मचारिणामग्निकार्यम् ( ६५ ) | |
| | ,, सायमौपासनप्रयोगः ( ६५ ) | |
| | अथ वैश्वदेवबलिहरणे ( ६६ ) | |
| २३ | अथ शय्याविधिः ... | ६७ |

* * *

## अथ संस्कारकाण्डम्

| | विषयः | पत्रम् |
|---|---|---|
| २४ | अथ मङ्गलाचरणम् ... | १ |
| २५ | ,, संस्काराणां स्वरूपनिरूपणम् ... | १ |
| २६ | ,, स्नानादिचतुष्टयविधिः ... | ३ |
| | अथ स्नानादिचतुष्टयप्रयोगः ( ३ ) | |
| २७ | ,, प्रधानसङ्कल्पः ... | ४ |
| २८ | ,, गणेशादिस्वेष्टदेवतापूजनविधिः ... | ४ |
| | अथ प्रयोगः ( ४ ) | |
| २९ | ,, मातृकापूजननान्दीश्राद्धयोर्विधिः ... | ५ |
| | अथ मातृकापूजननान्दीश्राद्धयोः प्रयोगः ( ७ ) | |
| | ,, गौणः कल्पः ( ९ ) | |
| | ,, कुलदेवतास्थापनम् ( ९ ) | |
| ३० | अथ अङ्कुरार्पणविधिः ... | ९ |
| | अथ अङ्कुरार्पणप्रयोगः ( १० ) | |
| ३१ | ,, उदकशान्तिविधिः ... | ११ |
| | अथ उदकशान्तिप्रयोगः ( १२ ) | |
| ३२ | ,, प्रतिसरबन्धविधिः ... | २६ |
| | अथ प्रतिसरबन्धप्रयोगः ( २७ ) | |
| ३३ | ,, पुण्याहवाचनम् ... | २९ |
| | अथ पुण्याहवाचनप्रयोगः ( ३० ) | |

| | | विषयः | पत्रम् |
|---|---|---|---|
| ३४ | अथ | अग्निमुखविधानम् ... | ३३ |
| ३५ | ,, | अग्निमुखम् ... | ३८ |
| | | अथ अग्निमुखप्रयोगः ( ४० ) | |
| ३६ | ,, | आग्निहोत्रिकविधिः ... | ५१ |
| | | अथ प्रयोगः ( ५१ ) | |
| | | ,, अपूर्वविधिः ( ५१ ) | |
| | | ,, आपूर्विकविधिः ( ५२ ) | |
| | | ,, प्रयोगः ( ५२ ) | |
| ३७ | ,, | प्रायश्चित्तानि ... | ५२ |
| ३८ | ,, | ग्रहशान्तिविधिः ... | ५६ |
| | | अथ नवग्रहशान्तिप्रयोगः ( ५८ ) | |
| ३९ | ,, | गर्भाधानम् ... | ६५ |
| | | अथ गर्भाधानप्रयोगः ( ७० ) | |
| | | ,, ऋतुशान्तिहोमप्रयोगः ( ७४ ) | |
| | | ,, प्रथमर्तुसंवेशनविच्छेदप्रायश्चित्तम् ( ७५ ) | |

| | | विषयः | पत्रम् |
|---|---|---|---|
| | | अथ गर्भाधानहोमः ( ७५ ) | |
| | | ,, ऋतुसंवेशनम् ( ७६ ) | |
| ४० | अथ | पुंसवनम् ... | ७७ |
| | | अथ पुंसवनप्रयोगः ( ७७ ) | |
| ४१ | ,, | सीमन्तोन्नयनम् ... | ७८ |
| | | अथ सीमन्तोन्नयनप्रयोगः ( ७८ ) | |
| ४२ | ,, | विष्णुबलिः ... | ७९ |
| | | अथ विष्णुबलिप्रयोगः ( ७९ ) | |
| ४३ | ,, | गर्भिणीपतिधर्माः ... | ८० |
| ४४ | ,, | सुखप्रसवोपायाः ... | ८१ |
| ४५ | ,, | जातकर्म ... | ८१ |
| | | अथ जातकर्मप्रयोगः ( ८३ ) | |
| ४६ | ,, | षष्ठीपूजा ... | ८४ |
| ४७ | ,, | यमलसंस्कारः ... | ८५ |
| | | अथ यमलजननप्रायश्चित्तम् ( ८५ ) | |

| | विषयः | पत्रम् |
|---|---|---|
| ४८ | अथ नामकरणम् ... | ८५ |
| | अथ औपासनैकदेशग्रहणविधिः ( ८७ ) | |
| | ,, नामकरणप्रयोगः ( ८७ ) | |
| | ,, आन्दोलारोहणम् ( ८८ ) | |
| ४९ | ,, उपनिष्क्रमणम् ... | ८८ |
| | अथ उपनिष्क्रमणप्रयोगः ( ८९ ) | |
| ५० | ,, अन्नप्राशनम् ... | ८९ |
| | अथ अन्नप्राशनप्रयोगः ( ९० ) | |
| ५१ | ,, कर्णवेधनम् ... | ९० |
| | अथ कर्णवेधनप्रयोगः ( ९१ ) | |
| ५२ | ,, चूडाकर्म ... | ९१ |
| | अथ चूडाकर्मप्रयोगः ( ९३ ) | |
| ५३ | ,, गर्भाधानादिचौलान्तसंस्काराणां समानतन्त्रविधिः ... | ९४ |
| | अथ गर्भाधानादिचौलान्तसंस्काराणां समानतन्त्रप्रयोगः ( ९४ ) | |

| | विषयः | पत्रम् |
|---|---|---|
| ५४ | अथ अक्षरारम्भविधिः ... | १०२ |
| | अथ प्रयोगः ( १०२ ) | |
| | ,, अनुपनीतधर्माः ( १०३ ) | |
| ५५ | अथ उपनयनम् ... | १०३ |
| | अथ उपनयनोपयोगिपदार्थाः ( १०५ ) | |
| | ,, उपवीतम् ( १०५ ) | |
| | ,, यज्ञोपवीतविधिः ( १०६ ) | |
| | ,, राजन्यवैश्ययोरुपनयनम् ( १०७ ) | |
| | ,, उपनयनप्रयोगः ( १०७ ) | |
| | ,, चतुर्थेऽहनि कृत्यम् ( १११ ) | |
| | ,, उपनयनाऽग्निनाशे प्रायश्चित्तम् ( ११२ ) | |
| | ,, जडबधिरमूकादीनामुपनयनप्रयोगः ( ११३ ) | |
| | ,, पुनरुपनयनम् ( ११३ ) | |
| | ,, प्रयोगः ( ११३ ) | |
| | ,, उपवीतनाशे प्रायश्चित्तम् ( ११४ ) | |

| | विषयः | पत्रम् |
|---|---|---|
| ५६ | अथ ब्रह्मचारिधर्माः ... | ११४ |
| | अथ अवकीर्णिलक्षणम् ( ११५ ) | |
| ५७ | „ उपाकर्मोत्सर्जने ... | ११६ |
| | अथ ब्रह्मकूर्चविधिः ( ११८ ) | |
| | „ प्रयोगः ( ११९ ) | |
| | „ मृत्तिकास्नानविधिः ( १२० ) | |
| | „ प्रयोगः ( १२० ) | |
| | „ महातर्पणविधिः ( १२१ ) | |
| | „ महातर्पणम् ( १२२ ) | |
| | „ उत्सर्जनोपाकर्मणोः समानतन्त्रप्रयोगः ( १२३ ) | |
| | „ उत्सर्जनम् ( १२३ ) | |
| | „ उपाकर्म ( १२५ ) | |
| | „ अनध्यायाः ( १२६ ) | |
| | „ वेदारम्भः ( १२७ ) | |
| | „ प्रयोगः ( १२८ ) | |

| | विषयः | पत्रम् |
|---|---|---|
| ५८ | अथ काण्डानुक्रमणिका ... | १३० |
| ५९ | „ वेदव्रतानि ... | १३२ |
| | अथ होत्रादिव्रतप्रयोगः ( १३३ ) | |
| | „ होतृव्रतविसर्जनम् ( १३४ ) | |
| | „ शुक्रियव्रतम् ( १३४ ) | |
| | „ अवान्तरदीक्षा ( १३४ ) | |
| | „ शुक्रियव्रतविसर्गः ( १३५ ) | |
| | „ अवान्तरदीक्षाविसर्गः ( १३५ ) | |
| | „ उपनिषद्व्रतम् ( १३६ ) | |
| | „ गोदानव्रतम् ( १३६ ) | |
| | „ साम्मितव्रतम् ( १३७ ) | |
| | „ समानतन्त्रेण होत्रादिव्रतानामुपाकर्मोत्सर्जनप्रयोगः ( १३८ ) | |
| | „ ब्रह्मचारिव्रतलोपप्रायश्चित्तम् ( १३९ ) | |
| ६० | „ समावर्तनम् ... | १४० |
| | अथ प्रयोगः ( १४० ) | |

| | विषयः | पत्रम् |
|---|---|---|

अथ जडबाधिरादीनां समावर्तनम् ( १४३ )
,, प्रयोगः ( १४३ )
,, स्नातकधर्माः ( १४४ )
६१ अथ कन्यासंस्कारः ... १४५
६२ ,, विवाहविधिः ... १४७
अथ सापिण्ड्यनिर्णयः ( १४८ )
,, संक्षेपतो गोत्रप्रवरनिर्णयः ( १५० )
,, दत्तकस्य विवाहाद्युपयोगि-गोत्रादिनिर्णयः ( १५२ )
,, स्त्रीपुंसोर्विवाहकालः ( १५२ )
,, कन्यालक्षणम् ( १५२ )
,, वरलक्षणम् ( १५३ )
,, परिवेत्रादिनिर्णयः ( १५३ )
,, एकनक्षत्रादौ विशेषनिर्णयः ( १५३ )
,, मासादिनिर्णयः ( १५४ )

| | विषयः | पत्रम् |
|---|---|---|

अथ एकोदरादीनां समानक्रियादि-निर्णयः ( १५६ )
,, प्रतिकूलनिर्णयः ( १५७ )
,, कन्यादातृनिर्णयः ( १५८ )
,, विवाहभेदाः ( १५८ )
,, मण्डपवेदिकयोर्निर्माणविधिः ( १५९ )
,, लग्नघटीस्थापनविधिः ( १५९ )
,, विवाहे कर्तव्यविषयाः ( १५९ )
,, वरस्य वधूगृहगमनम् ( १६० )
,, विवाहप्रयोगः ( १६० )
,, सभापूजा ( १६१ )
,, तद्विधानक्रमः ( १६१ )
६३ अथ वाग्दानम् ... १६१
अथ प्रयोगः ( १६२ )
,, यक्षितमीबलिः ( १६३ )
,, प्रयोगः ( १६३ )

न विरलाङ्गुलिभिः न बुद्बुदाभिः न तिष्ठन्न हसन्न जल्पन्न विलोकयन्न प्रह्वो न प्रणतो न रोचयन् (आचामेदिति शेषः)। माषमग्नं तु तन्मात्रं प्रतिगृह्य त्रिः पिबेदपो गोकर्णवद्धहस्तेन त्रिराचामेत्। प्रथमं यत्पिबति तेन ऋग्वेदं प्रीणाति, यद्द्वितीयं तेन यजुर्वेदं प्रीणाति, यत्तृतीयं तेन सामवेदं प्रीणाति*। प्रथमं यत्परिमृजति तेनाथर्ववेदं प्रीणाति, यद्द्वितीयं तेनेतिहासपुराणानि, यन्मुखं तेनाग्निम्। यत्सव्यं पाणिमभ्युक्षति तेन नक्षत्राणि, यत्पादमभ्युक्षति तेन विष्णुं, यच्चक्षुषी तेन चन्द्रादित्यौ, यन्नासिके प्राणापानौ, यच्छ्रोत्रं तेन दिशो, यद्बाहू तेनेन्द्रं, यद्धृदयं तेन रुद्रं, यन्नाभिं तेन पृथिवीं, यदङ्गुष्ठयोः स्रवन्त्यापः कुबेरादयः सर्वा देवताः प्रीणन्त्यग्निर्वायुः प्रजापतिरर्कश्चन्द्रौ मघवानिति वैदिकाः। अनामिकाङ्गुष्ठाभ्यां चक्षुषी समुपस्पृशेत्। प्रादेशिन्यङ्गुष्ठाभ्यां तु नासिके, अङ्गुष्ठकनिष्ठिकाभ्यां तु श्रोत्रे, अङ्गुष्ठ मध्यमाभ्यां तु बाहू, चतुरङ्गुलिभिर्हृदयमङ्गुष्ठेन नाभिं, सर्वैर्मूर्धानं समुपस्पृशेदेतेन विधिना युक्ता न लिप्यन्ते कदाचन इति। प्रकारान्तरम् (बो० प० सू० २-४-२)– अब्लिङ्गाभिस्त्रिः पिबेद्व्याहृतिभिस्त्रिः परिमृजेदपि वा व्याहृतिभिस्त्रिः पिबेदब्लिङ्गाभिस्त्रिः परिमृजेत्। यज्ञस्य देवा देवानां यज्ञ इति यज्ञस्य देवानां च संयोगं करोतीति। बोधायनीयधर्मसूत्रे (१-५)– प्राङ्मुख उदङ्मुखो वाऽऽसीनः शौचमारभेत (शौचमिह आचमनमभिप्रेतम्)। शुचौ देशे दक्षिणं बाहुं जान्वन्तरा कृत्वा प्रक्षाल्य पादौ पाणी चामणिबन्धात्। पादप्रक्षालनोच्छेषणेन नाचामेत्। यद्याचामेद्भूमौ स्रावयित्वाऽऽचामेदिति। ब्राह्मेण तीर्थेनाचामेत्। अङ्गुष्ठमूलं ब्राह्मं तीर्थम्। अङ्गुष्ठाग्रं पित्र्यम्। अङ्गुल्यग्रं दैवम्। अङ्गुलिमूलमार्षम्। नाङ्गुलिभिः,

---

* एवमेव आश्वलायनः 'ऋगादिवेदानुच्चार्य स्वाहान्तान्प्रणवादिकान् पृथक् त्रिः पिबेद्विप्रश्चतुर्थ्याऽम्बु शनैर्द्विजः' इति

न सबुद्बुदाभिः, न सफेनाभिः, नोष्णाभिः, न क्षाराभिः, न लवणाभिः, न कटुकाभिः, न कलुषाभिः, न विवर्णाभिः, न दुर्गन्धरसाभिः । न हसन्न जल्पन्न तिष्ठन्न विलोकयन्न प्रह्वो न प्रणतो न मुक्तशिखो न प्रावृतकण्ठो न वेष्टितशिरा न त्वरमाणो नायज्ञोपवीती न प्रसारितपादो नाबद्धकक्ष्यो न बहिर्जानुः शब्दमकुर्वन् त्रिरपो हृदयङ्गमाः पिबेत् । त्रिः परिमृजेद्भिरित्येके । सकृदुभयं स्त्रिया शूद्रस्य च । 'गताभिर्हृदयं विप्राः कण्ठ्याभिः क्षत्रियः शुचिः । वैश्योऽद्भिः प्राशिताभिः स्यात्स्त्रीशूद्रौ स्पृश्य चान्ततः' इति । 'दन्तवद्दन्तसक्तेषु दन्तवत्तेषु धारणा । स्रस्तेषु तेषु नाचामेत्तेषां संस्राव (लाला) वच्छुचिः, इति । अथाप्युदाहरन्ति— 'दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् । आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः' इति ॥ खान्यद्भिः संस्पृश्य पादौ नाभिं शिरः सव्यं पाणिमन्तत इति ।

अथ प्रयोगः ॥ प्राङ्मुख उदङ्मुखो वा बद्धशिखो यज्ञोपवीती गोकर्णाकृतिहस्तेन माषमग्नमात्रं पवित्रं शुद्धजलं दक्षिणहस्तेन प्रतिगृह्य वामेनान्वारब्धस्त्रिः पिबेत् । ॐऋग्वेदाय स्वाहा, ॐयजुर्वेदाय स्वाहा, ॐसामवेदाय स्वाहा, इति । तत आस्यं त्रिः परिमृजति— ॐ अथर्ववेदाय नमः, ॐ इतिहासपुराणेभ्यो नमः, ॐ अग्नये नमः । इति । सार्द्रेण करेण स्पृशति, ॐ नक्षत्रेभ्यो नमः इति सव्यं पाणिम् । ॐ विष्णवे नमः इति पादम् । ॐ चन्द्राय नमः, ॐ आदित्याय नमः इत्यङ्गुष्ठानामिकाभ्यां चक्षुषी । ॐ प्राणाय नमः । ॐ अपानाय नमः इति प्रादेशिन्यङ्गुष्ठाभ्यां नासिके । ॐ दिग्भ्यो नमः । ॐ दिग्भ्यो नमः इति कनिष्ठिकाङ्गुष्ठाभ्यां श्रोत्रे । ॐ इन्द्राय नमः । ॐ इन्द्राय नम इति मध्यमाङ्गुष्ठाभ्यां बाहू । ॐ रुद्राय नमः इति चतुरङ्गुलिभिर्हृदयम् । ॐ पृथिव्यै नम इत्यङ्गुष्ठेन नाभिम् । सर्वैर्मूर्धानं समुपस्पृशेत् । ततोऽवशिष्टाः स्रावयति

ॐ कुबेरादिभ्यः सर्वाभ्यो देवताभ्यो नमः, ॐअग्निवायुप्रजापत्यर्कचन्द्रमघवद्भ्यो नम इति वा ॥ प्रकारान्तरम्– ॐ आपो हिष्ठा... चक्षसे स्वाहा । ॐ यो वः शिवतमो...मातरः स्वाहा । ॐ तस्मा अरं...चनः स्वाहा । इति त्रिरपः पीत्वाऽऽस्यं त्रिः परिमृजति— ॐ भूः, ॐ भुवः, ओ३ंस्सुव इति ॥ अपि वा— ॐ भूः स्वाहा, ॐ भुवः स्वाहा, ओ३ंस्सुवः स्वाहा इति त्रिरपः पीत्वाऽऽस्यं त्रिः परिमृजति, आपोहिष्ठादितिसृभिः ॥ इत्याचमनविधिः ॥

## अथासनकल्पनम्

आसनान्याह व्यासः– 'कौशेयं कम्बलं चैव अजिनं पट्टमेव च । दारुजं ताडपत्रं वा आसनं परिकल्पयेत् ॥ कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि । कुशासने व्याधिनाशः सर्वेष्टश्चित्रकम्बलः ॥' निषिद्धान्याह– वंशासने तु दारिद्र्यं पाषाणे व्याधिरेव च । धरण्यां तु भवेद्दुःखं दौर्भाग्यं छिद्रदारुजे ॥ तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः' इति ॥ प्रचेताः– 'गोशकृन्मृण्मयं भिन्नं तथा पालाशपिप्पलम् । लोहबद्धं सदैवार्कं वर्जयेदासनं बुधः' इति ॥ स्मृत्यन्तरे– 'मृगचर्म प्रयत्नेन वर्जयेत्पुत्रवान् गृही' इति ॥ इत्यासनकल्पनम् ॥

## अथ भस्मधारणविधिः

अथातो भस्मधारणविधिं व्याख्यास्यामः । 'भूत्यै न प्रमदितव्यम्' इति विज्ञायते । अथाप्युदाहरन्ति— 'मध्यमानामिकाङ्गुष्ठैस्त्रिपुण्ड्रं भस्मना कृतम् । तत्त्रिपुण्ड्रं भवेच्छ्रेष्ठं महापातकनाशनम्' इति । 'त्र्यम्बक'मिति सर्वाङ्गं सम्मृजेत्

'पूतो भवति दशपूर्वान्दशापरानात्मानं चैकविंशतिपङ्क्तिं पुनाति ब्रह्मणः सायुज्यं सलोकतामाप्नोति' इत्याह भगवान् बोधायनः । अथाप्युदाहरन्ति– ललाटे हृदि दोर्द्वन्द्वे गले कुक्षौ शिरस्यथ । धारयेच्च सितं भस्म द्विजो नित्यमतन्द्रितः ॥ इति ॥

॥ अथ प्रयोगः ॥ श्रौताग्निजं गृह्याग्निजं वा सितं भस्म गृहीत्वाऽभिमन्त्रयेत् । ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवेनातिभवे भवस्व माम् । भवोद्भवाय नमः ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपति ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इति ॥ 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ इति मन्त्रेण ललाटे हृदि बाहुद्वये गले कुक्षौ शिरसि च क्रमेण भस्मधारणं कृत्वा जपेत्– 'अग्निरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वꣳ ह वा इदं भस्म । मन एतानि चक्षूꣳषि भस्मानि' इति ॥ मध्यमानामिकाङ्गुष्ठैस्त्रिपुण्ड्रं कुर्यात् ॥ इति भस्मधारणविधिः ॥

## अथ कुशग्रहणम्

शातातपः– 'समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः' इति ॥ तत्र

दशविधा दर्भा उक्ता हारीतेन– 'कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दकाः । गोधूमा व्रीहयो मुञ्जा दश दर्भाः सबल्वजाः ॥ कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः । कुशाभावे गृहीतव्या अन्ये दर्भा यथोचिताः' इति ॥ कुशग्रहणकालमाह विष्णुः– 'दर्शे श्रावणमासस्य समन्त्रोत्पाटिताः कुशाः । अयातयामास्ते दर्भाः नियोज्याः स्युः पुनः पुनः' इति ॥ कुशच्छेदनविधिमाह कौशिकः– 'शुचिर्भूत्वा शुचौ देशे स्थित्वा पूर्वोत्तरामुखः । ॐकारेणैव तु मन्त्रेण कुशान् स्पृष्ट्वा द्विजोत्तमः ॥ मन्त्रस्तु– 'विरिञ्चिना सहोत्पन्न परमेष्ठीनिसर्गज । नुद सर्वाणि पापानि कुश स्वस्तिकरो भव ॥ इमं मन्त्रं समुच्चार्य स्थित्वा पूर्वोत्तरामुखः । हुँफट्कारेण दर्भास्तु सकृच्छित्वा समुद्धरेत्' इति ॥ पवित्रलक्षणमाह कात्यायनः– 'अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् । सवर्षां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा ॥ अन्यान्यपि पवित्राणि कुशदूर्वामयानि च । हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम् ॥ हैमेन सर्वदा सर्वं कुर्यादेवाविचारयन्' इति ॥ इति कुशग्रहणविधिः ॥

## अथ सन्ध्योपासनविधिः

अत्रेयं श्रुतिः– (तै-आ-२-२) तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्रियाऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमव धून्वन्त्युद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्त्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं

वेद' इति ॥ 'बोधायनधर्मसूत्रे'– अथातः सन्ध्योपासनविधिं व्याख्यास्यामः । तीर्थं गत्वाऽप्रयतोऽभिषिक्तः प्रयतो वाऽनभिषिक्तः प्रक्षालितपादपाणिरप आचम्य 'अग्निश्च मामन्युश्च' इति सायमपः पीत्वा, 'सूर्यश्च मामन्युश्च' इति प्रातः ॥ सपवित्रेण पाणिना सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः, पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति । अथाप्युदाहरन्ति– 'अपोवगाहनं स्नानं विहितं सार्ववर्णिकम् । मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यते' इति ॥ किञ्च, सर्वकर्मणां चैवारम्भकालेषु प्राक्सन्ध्योपासनकालाच्चैतेनैव पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति । अथाप्युदाहरन्ति– दर्भेष्वासीनो दर्भान्धारयमाणः सोदकेन पाणिना प्रत्यङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेत् , प्राणायामशः शतकृत्वो वा । उभयतः प्रणवां ससप्तव्याहृतिकां मनसा वा दशकृत्वः । त्रिभिश्च प्राणायामैः श्रान्तो ब्रह्महृदयेन । वारुणीभ्यां रात्रिमुपतिष्ठते– 'इमं मे वरुण,' 'तत्त्वायामि' इति द्वाभ्याम् । एवमेव प्रातः प्राङ्मुखस्तिष्ठन् मैत्रीभ्यामहरुपतिष्ठते– 'मित्रस्य चर्षणीधृतो, मित्रो जनान्यातयति' इति द्वाभ्याम् । स एवमेवाहरहरहोरात्रयोः सन्धिषूपतिष्ठमानो ब्रह्मपूतो ब्रह्मभूतो ब्राह्मणः शास्त्रमनुवर्तमानो ब्रह्मलोकमभिजयतीति विज्ञायते ब्रह्मलोकमभिजयतीति विज्ञायते' ॥

सन्ध्याकालनिरूपणम्— बोधायनधर्मसूत्रे (२-४-१२)– 'सुपूर्वामपि पूर्वामुपक्रम्योदित आदित्ये समाप्नुयात् । अनस्तमित उपक्रम्य सुपश्चादपि पश्चिमाम्' इति । अस्य स्पष्टीकरणं दक्षस्मृतौ– 'रात्र्यन्त्यामनाडी द्वे सन्ध्यादिः काल उच्यते । दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः' इति ॥ प्रातःसन्ध्योपासनसौकर्याय गौणकालो विहितो भगवता व्यासेन– 'उत्तमा तु सनक्षत्रा मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातःसन्ध्या त्रिधा मता' ॥ एवमेव सायंसन्ध्या

विषयेऽपि विहितो गौतमेन— 'उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा । अधमा तारकोपेता सायंसन्ध्या त्रिधा मता' इति ॥ 'आसायं कर्मणः प्रातः आप्रातः सायं कर्मणः' इति भगवान् बोधायनः ॥ 'सन्ध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा' इति भगवानत्रिः ॥ मध्याह्नसन्ध्याकाल उक्तो धर्मसारे— 'अध्यर्धयामादासायं सन्ध्या माध्याह्निकी स्मृता' इति ॥ स्मृतिसङ्ग्रहे तु— 'मध्याह्नस्नानादूर्ध्वं यः कालस्त्वव्यवधानतः । तत्र मध्याह्नसन्ध्या स्यादूर्ध्वं गौणः स्मृतो बुधैः' इति ॥

सन्ध्याधिकारिणमाह भगवान् जैमिनिः— 'यावद्ब्रह्मोपदेशस्तु तावत्सन्ध्यादिकं च न । जाते ब्रह्मोपदेशे तु कर्म सन्ध्यादिकं चरेत्' इति ॥

कालातिक्रमणे प्रायश्चित्तम्— बोधायनधर्मसूत्रे (२-४-१६)— 'तत्र सायमतिक्रमे रात्र्युपवासः, प्रातरतिक्रमेऽह रुपवासः (अतीतां सन्ध्यां कृत्वा इति शेषः) । अल्पकालातिपाते— वसिष्ठस्मृतौ— कालातिक्रमणे चैव त्रिसन्ध्यामपि सर्वदा । चतुर्थार्घ्यं प्रकुर्वीत भानोर्व्याहृतिसम्पुटम्' इति ॥ एकाहाद्व्यतिक्रमे जमदग्निः— 'एकाहं समतिक्रम्य सन्ध्या वन्दनकर्मसु । अहोरात्रोषितो भूत्वा गायत्र्या अयुतं जपेत् ॥ द्विरात्रे द्विगुणं प्रोक्तं त्रिरात्रे त्रिगुणं स्मृतम्' इति ॥

अनुपासितुर्दोषमाह— बोधायनः— 'सायं प्रातः सदा सन्ध्यां ये विप्रा नो उपासते । कामं तान्धार्मिको राजा शूद्र कर्मसु योजयेत्' इति ॥ सन्ध्याहीनो द्विजो नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्' इति ॥ सन्ध्योपासनहीनस्य सर्वकर्मानर्हत्वमप्यन्यत्रोक्तम् ॥ आपद्धर्ममाह भगवान् व्यासः— 'देशक्षोभे महापत्तौ मार्जनार्घ्याद्यसम्भवे ।

सन्ध्यागतं सहस्रांशुं मन्त्रैः कुर्यादुपस्थितिम्' ॥ अथाप्युदाहरन्ति महाभारते– 'ते तथैव महाराज दंशिता रणमूर्धनि । सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे' इति ॥ ॥जलाद्यभावेऽभिस्मृतौ– 'जलाभावे महामार्गे बन्धने त्वशुचावपि । उभयोः सन्ध्ययोः काले रजसा चार्घ्यमुत्सृजेत्' इति ॥

सन्ध्यायामुपास्यदेवता तदुपासनं च— सन्ध्याशब्दः कालवाची । कथं तर्हि? 'अहरहः सन्ध्यामुपासीत' इत्यादि वचनेषु सन्ध्याया एवोपासनमुक्तमिति, 'तदभिन्नदेवताकः कालोऽयम्' इत्यतः सन्ध्याकालाभिन्नदेवतोपलक्षिता, सा तु शक्तिमय्यर्कमण्डलाधिष्ठात्र्यादित्याख्या ब्रह्मात्मिकेति विज्ञायते ॥ शक्तिमयीत्यत्राह भगवान्बोधायनः– 'या सन्ध्या सा जगत्सूतिर्मायातीता सुनिष्कला । ऐश्वरी केवला शक्तिर्मूर्तित्रयसमुद्भवा ॥ तस्मात्सर्वप्रयत्नेन सन्ध्योपासनमाचरेत् । उपासितो भवेत्तेन देवो योगतनुः परः ॥ मूर्तित्रयस्य समुद्भवो यस्याः सा तथोक्तेति पञ्चमीबहुव्रीहिः । परो नाम परमात्मेत्यर्थः ॥ मूर्तित्रयमपि सवितुरेव कालभेदतो रूपभेदः इत्याह भगवान्व्यासः– 'उदये ब्रह्मरूपं तु मध्याह्ने तु महेश्वरम् । सायाह्ने विष्णुरूपं तु त्रिरूपं वै दिवाकरम् ॥ अनुसन्ध्यामुपासीत सन्ध्यारूपं रविं द्विजः' ॥ एतेन सन्ध्यास्वरूपस्यादित्यस्य कालभेदेन ब्रह्म-महेश्वर-विष्णुस्वरूपत्वमुक्तं भवति । अतो मूर्तित्रयमूलभूतो ब्रह्मात्मक आदित्य एव सन्ध्यायामुपास्यदेवतेत्यवगम्यते । तदुपासनं तु परब्रह्मणः स्वस्य चैक्यानुसन्धानरूपम् ॥ अत्र तैत्तरीयब्राह्मणम्— उद्यन्तमस्तंयन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्त्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद ॥ अस्यायमर्थः– असौ पूर्वोक्तविशिष्टो ब्रह्मादिस्वरूपात्मक आदित्यो ब्रह्म इति सन्ध्याऽभिन्नमादित्यं परब्रह्मत्वेनाभिध्यायन्ध्यानाङ्गभूतं कर्म च कुर्वन्

ब्राह्मणो ब्रह्मोपासकत्वात्स ब्राह्मणाभिख्यां लभत इत्यर्थः । विद्वान्सकलविद्यासारभूताध्यात्मविद्यासम्पन्नत्वात्स विद्वच्छब्दवाच्यता मेतीत्यर्थः । सकलमैहिकामुष्मिकं च भद्रमश्नुते । एवमुक्तध्यानेन विशुद्धान्तःकरण आदित्यस्याध्यात्मभूतं परं ब्रह्म स्थूल सूक्ष्म-कारणाख्यशरीरत्रयव्यतिरिक्तप्रत्यगात्मत्वेन वेद साक्षात्करोति, स पूर्वमपि ब्रह्मैव सन्स्वस्वरूपापरिज्ञानाज्जीवभाव मापन्न इव स्थितो यथोक्तब्रह्मात्मैकत्वविज्ञानेन तदज्ञानापगमे सति ब्रह्मैवाप्येति प्राप्नोति । वृत्तविद्यो भवतीति यावत् । एतेनासावादित्यो ब्रह्म, ब्रह्मैवाहमस्मीति वाक्यद्वयस्याप्यर्थ उक्तो भवति । एवं सति 'सन्धौ सन्ध्यामुपासीत' इति याज्ञवल्क्यस्मृत्या सन्ध्यां नामार्कमण्डलान्तर्गतामादित्याख्यां परब्रह्मात्मिकां देवतां हृदि साऽहमस्मीत्युपासीत । आत्मत्वेन तां जानीयादित्युक्तं भवति । अत एवाह भगवान्व्यासः– 'अभिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । साऽहमस्मीत्युपासीत विधिना येन केन चित्' । गायत्रीं नाम सन्ध्यादेवताभित्यर्थः ॥ सारांशः– सन्ध्यां गायत्र्यादिशब्दोक्तामादित्यं 'असा वादित्यो ब्रह्म' इति वाक्यात्परब्रह्मत्वेन ध्यात्वा तस्याध्यात्मभूतं सत्यज्ञानानन्दात्मक-सजातीय-विजातीय-स्वगतरूपभेदरहितं निर्विशेषं तद्ब्रह्मैवाहमस्मीति प्रत्यग्ब्रह्मणोरैक्यानुसन्धानमेव सन्ध्योपासनमिति स्थितिः । ननु तथा सन्ध्योपासनं प्रत्यक् ब्रह्मणोरैक्यानुसन्धानानुरूपं ध्यानयोगसाधितब्रह्मात्मैकत्वदर्शनैर्महात्मभिरेव कर्तुं शक्यते तदन्यैरकृतात्मभिरनधिगतमनो विजयैर्द्विजैः कथं सन्ध्योपासनमनुष्ठेयम्'? इति चेदुच्यते– तादृशानां निरुपाधिकध्यानासमर्थानां द्विजानां ध्यानसौलभ्यार्थं सन्ध्यादेवताया नाम-वर्ण-रूपाद्युपकल्पनव्यवस्थाऽपि कृता प्राचीनैर्व्यासादिमहर्षिभिः । अत्र कालभेदेन नामभेदं वर्णभेदं रूपभेदं चाह भगवान्व्यासः– 'गायत्रीनाम पूर्वाह्णे सावित्री मध्यमे दिने । सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ॥

गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका । सरस्वती तथा कृष्णा चोपास्या वर्णभेदतः ॥ गायत्री ब्रह्मरूपा तु सावित्री रुद्र रूपिणी । सरस्वती विष्णुरूपा चोपास्या रूपभेदतः' इति ॥ एवं प्रकारेण प्रातःसन्ध्याकाले गायत्रीनाम रक्तवर्णब्रह्मरूपोपेत सन्ध्यास्वरूप आदित्यः' । मध्याह्ने 'सावित्रीनाम शुक्लवर्णरुद्ररूपोपेतसन्ध्यास्वरूप आदित्यः' । सायाह्ने सरस्वतीनामकृष्ण वर्णविष्णुरूपोपेतसन्ध्यास्वरूप आदित्यः' । इति च विचिन्त्य 'तद्ब्रह्मैवाहमस्मि' इति चिन्तनरूपमहद्ब्रह्मोपासनं तैः कर्तव्यम्' इति ॥

जपलक्षणमाह हारीतः— 'मन्त्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः । स उपांशुजपोऽशब्दश्चलज्जिह्वादशच्छदः ॥ मानसस्त्वचलज्जिह्वा दशनच्छद ईरितः । मुक्तिदो मानसो ज्ञेय उपांशुः सर्वसिद्धिदः ॥ त्रिविधो जपयज्ञः स्याद्वाचिकः क्षुद्र कर्मणि' इति । गायत्रीजपस्तु मानस एव श्रेष्ठः इत्याह व्यासः 'मनसैव जपं कुर्यात्सावित्र्यास्तु विशेषतः' इति । जपस्य वाचिकादिभेदेन फलतारतम्यमुक्तं माधवीये— 'वाचिकाख्य उपांशुश्च मानसश्च त्रिधा स्मृतः । त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः' इति । अत्राह विश्वामित्रः 'वाचिकं चैकमेकं स्यादुपांशुः शतमुच्यते । सहस्रं मानसं प्रोक्तं मन्वत्रि भृगुनारदैः' इति ॥ अथाश्रमभेदाज्जपसङ्ख्यामाह याज्ञवल्क्यः— 'ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् । वानप्रस्थो यति श्चैव जपेदष्टसहस्रकम् ॥ अष्टोत्तरसहस्रमित्यर्थः' इति ॥ अत्राशक्तस्य सङ्ख्यामाह नारदः— 'अष्टोत्तरशतं नित्यमष्टा विंशतिमेव वा । विधिना दशकं वाऽपि त्रिकालं प्रजपेद्बुधः' इति ॥

जपसम्पत्तिसाधनान्याह शौनकः 'मनःसन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसम्पत्ति हेतवः' इति ॥ ॥ अथ गायत्रीजपगणनाप्रकार उक्तो रत्नावल्याम् 'पर्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः । गायत्र्या वेदमूलत्वाद्वेदः पर्वसु गीयते' । तत्रैव उक्तः 'सर्वैश्चापि जपः कार्यो नाङ्गुलीनां निपातनैः । तन्निपातैस्तु यज्जप्तं सर्वं विद्यात्तदासुरम्' इति ॥ पर्वभिर्जपकरणप्रकारानाह शङ्खः 'अथाङ्गुलीनां रेखाभिर्जपमन्वहमाचरेत् ॥ प्रारभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात् । तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥ मध्यमाङ्गुलिमूले तु यत्पर्वद्वितयं भवेत् । तं वै मेरुं विजानीयाज्जपे तन्नातिलङ्घयेत् ॥ अनामिकामूलपर्व प्रारभ्यापि क्रमेण तु । मध्यमामूलपर्यन्तं जपेद्दशसु पर्वसु ॥ मध्याङ्गुले र्मध्यरेखां समारभ्य प्रदक्षिणम् । मध्यमामूलपर्यन्तमङ्गुष्ठेन यथाक्रमम् ॥ स्पृष्ट्वा द्वादशसङ्ख्या स्यादेकवारेण तत्रव । वाम हस्तेन सङ्ख्यातं शतमष्टोत्तरं स्मृतम्' इति ॥ ॥ जपकाले निषिद्धकर्माण्याह भगवान्व्यासः 'अपवित्रकरोऽशुद्धः प्रलपन्न जपेत्क्वचित् । अप्रावृतकरो वाऽपि शिरसि प्रावृतोऽपि वा ॥ न प्रकाशं न च हसन्न पार्श्वमवलोकयन् । नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥ न पदाऽऽसनमाक्रम्य न पदेन पदं तथा । उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः ॥ चिन्ताव्याकुलचित्तो वा श्रान्तः क्रुद्धो बुभुक्षितः । अनासनः शयानो वा गच्छन्नुद्धत एव वा ॥ रथ्यायामशिवस्थाने न जपे त्तिमिरावृते । उपानद्गूढपादो वा यानशय्यागतस्तथा ॥ प्रसार्य न जपेत्पादावुत्कटासन एव वा । जपेन्न प्रौढपादश्च नावष्टब्धोऽलसोऽशुचिः ॥ नासङ्ख्यानो ह्यदर्भश्च नाशिखोऽकच्छबन्धनः' इति ॥ अत्राह भरद्वाजः 'निष्ठीवजृम्भणे क्रोध निद्राऽऽलस्यक्षुधो मदः । पतितश्चान्त्यजा लोका दर्शते जपवैरिणः' इति ॥ शाण्डिल्यः 'आचार्यं भगवद्भक्तं भगवन्मन्दिरं

जलम् । अश्वत्थमग्निमर्कं च पृष्ठीकृत्य जपेन्न तु' । इति ॥

प्राणायामलक्षणम्— बोधायनधर्मसूत्रे (४-१-२८)– सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते' (प्रणवयुतसप्तव्याहृतीरित्यर्थः) ॥ स्मृतिरत्नाकरे– 'पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः । नासिका कृष्ट उच्छ्वासो ध्यातः पूरक उच्यते' इति ॥ ॥ प्राणायामे अङ्गुलिनियमः कर्मप्रदीपे– 'अङ्गुष्ठानामिकाभ्यां तु तथैव च कनिष्ठया । प्राणायामस्तु कर्तव्यो मध्यमां तर्जनीं विना ॥ तर्जनी-मध्ययोर्योगं प्राणायामे तु वर्जयेत् । तर्जनीं मध्यमां स्पृष्ट्वा कुर्वञ्छूद्रसमो भवेत् ॥ वामहस्तेन गणयन् प्राणायामे जपेद्द्विजः' इति ॥ अयं तर्जनीमध्ययोगनिषेधस्तु यतिब्रह्मचारिणो रेव इत्याह व्यासः– 'पञ्चाङ्गुलिभिर्नासाग्रपीडनं प्रणवाभिधा । मुद्रेयं सर्वपापघ्नी वानप्रस्थ-गृहस्थयोः ॥ कनिष्ठानामिका ङ्गुष्ठैर्नासाग्रस्य प्रपीडनम् । ॐकारमुद्रा सा प्रोक्ता यतेश्च ब्रह्मचारिणः ॥ पूरकादीनां व्यवस्थां स एवाह– 'दक्षिणे रेचकं कुर्याद्वामेनापूर्य चोदरम् । कुम्भकेन जपं कुर्यात्प्राणायामः स उच्यते' इति ॥ ॥ प्राणायामप्रयोजनम् (बो. ध. सू. ४-१-२५)– 'निरोधाज्जायते वायुर्वायोरग्निश्च जायते । तापेनापोऽधिजायन्ते ततोऽन्तः शुद्ध्यते त्रिभिः' इति ॥

प्रातःसन्ध्याप्रयोगः— अथ शुद्धवस्त्रधरो बद्धशिखो बद्धकच्छो यज्ञोपवीती प्राङ्मुख उदङ्मुखो वा दर्भेष्वासीनो दर्भान्धारयमाणः द्विराचम्य त्रिपुण्ड्रं भस्म धारयित्वा पुनराचम्य प्राणायामं कुर्यात् । प्रणवस्य परब्रह्म ऋषिः । गायत्री छन्दः । परमात्मा देवता । प्राणायामे विनियोगः । वामनासिकया प्राणं प्रपूर्य– ॐ भूः ॐ भुवः ॐ सुवः ॐ महः ॐ जनः ॐ तपः ॐ स॒त्यम् ॐ तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ ओमापो॒ज्योती॒

रसोऽमृतं ब्रह्मभूर्भुवःसुवरोम् ॥ इति कुम्भके त्रिवारं सञ्जप्य दक्षिणनासिकया रेचयेत् ॥ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसन्ध्यामुपासिष्ये ॥ ॐ आपो हिष्ठा मयोभुवः । ॐ तान ऊर्जे दधातन । ॐ महे रणाय चक्षसे । ॐ यो वः शिवतमो रसः । ॐ तस्य भाजयतेह नः । ॐ उशतीरिव मातरः । ॐ तस्मा अरं गमाम वः । ॐ यस्य क्षयाय जिन्वथ । ॐ आपो जनयथा च नः ॥ इति प्रतिपादान्ते स्वशिरसि मार्जयेत् ॥ हस्ते जलं गृहीत्वा– ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रिस्तदवलुम्पतु । यत्किं च दुरितं मयि । इदमहं माममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ इति पीत्वा द्विराचामेत् । ततः प्रतिमन्त्रान्तं मार्जयेत्– ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत्प्रण आयूंषितारिषत् ॥ ॐ आपोहिष्ठा० चक्षसे । ॐ योवः० मातरः । ॐ तस्मा० च नः ॥ ॐ यच्चिद्धि ते विशो यथा प्रदेव वरुण व्रतम् ॥ मिनीमसि द्यविद्यवि ॥ ॐ यत्किंचेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ ॐ कितवासो यद्रिरिपुर्न दीवि यद्वाघा सत्यमुत यन्न विद्म । सर्वा ता विष्य शिथिरेव देवाथाते स्याम वरुण प्रियासः ॥ 'हिरण्यवर्णाः शुचयः' इति चतसृभिः, 'पवमानः सुवर्जनः' इत्यनुवाकेन च मार्जयित्वा (*) ॐ भूर्भुवः सुवः इत्यात्मानं प्रदक्षिणं परिषिच्य— ॐ ऋतं च

---

* वैद्यनाथीये— 'आत्मानं प्रोक्षयेत्पश्चाद्दधिक्राव्ण इत्यृचा । आपोहिष्ठादितिसृभिः ऋग्भिश्च सकुशैर्जलैः ॥ व्याहृत्या तत आत्मानं परिषिञ्चेत्समाप्तये' इति यदुक्तं तदभिषिक्तस्येति बोद्धव्यम् ॥

सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्रिरजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो सुवः' इति त्रिभिर्हस्तेऽभिमन्त्रितजलमाघ्राय क्षितौ क्षिपेत् ॥ सूर्याभिमुख उत्थाय प्रह्वो मुक्ताङ्गुष्ठाभ्यां हस्ताभ्यां जलमादाय— ॐ 'भूर्भुवः सुवः तत्सवितुः० यात्' श्रीभास्कराय नमः इदमर्घ्यम् इति त्रिवारमुत्क्षिपेत् ॥ ॥ कालातिक्रमे— कालातिक्रमणदोषपरिहारार्थं प्रायश्चित्तार्घ्यं करिष्ये इति सङ्कल्प्य, 'ॐ भूर्भुवः सुवः तत्सवितुः० यात्' श्रीभास्कराय नमः इदमर्घ्यम्, इति पूर्ववदेकमर्घ्यं दद्यात् ॥ 'ॐ असावादित्यो ब्रह्म' इति जलहस्तः प्रदक्षिणं प्रक्रम्योपविश्य आचम्य । ॐ गायत्रीं तर्पयामि । ॐ सावित्रीं त० । ॐ सरस्वतीं त० । ॐ ऋग्वेदं त० । ॐ यजुर्वेदं त० । ॐ सामवेदं त०। ॐअथर्ववेदं त० । ॐ ॐ त० । ॐ श्रीस्त० । ॐ भूस्त० । ॐ भुवस्त० । ओंऽसुवस्त० । ॐ भूर्भुवःसुवस्त० । इति तर्पयित्वा समाहितो गायत्रीं हृदि भावयेत् ॥ ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभक्षिणि । तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन जपकर्म समारभे ॥ ॥ ॐ तत्सवितु ब्रह्मात्मने अङ्गुष्ठाभ्यां नमः हृदयाय नमः ॥ ॐ वरेण्यं विष्ण्वात्मने तर्जनीभ्यां नमः शिरसे स्वाहा ॥ ॐ भर्गो देवस्य रुद्रात्मने मध्यमाभ्यां नमः शिखायै वषट् ॥ ॐ धीमहि परमात्मने अनामिकाभ्यां नमः कवचाय हुम् ॥ ॐ धियो यो नः ज्ञानात्मने कनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट् ॥ ॐ प्रचोदयात् सत्यात्मने करतल-करपृष्ठाभ्यां नमः अस्त्राय फट् ॥ ध्यानम्—

"मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥" एतन्न्यासादिकं एके नेच्छन्ति ॥ ॥ "ओमित्येकाक्षरं ब्रह्म । अग्निर्देवता ब्रह्म इत्यार्षम् । गायत्रं छन्दं परमात्मं सरूपम् । सायुज्यं विनियोगम् । आयातु वरदा देवी अक्षरं ब्रह्म सम्मितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे ॥ यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते । यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते ॥ सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति । ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरोम् । गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दर्षीनावाहयामि श्रियमावाहयामि" इत्यावाह्य सूर्याभिमुख उत्थाय– गायत्रिया गायत्री छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳरुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा साङ्ख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः" इति छन्दोऋष्यादीन्विभाव्य– "ॐ भूः । ॐ भुवः । ओꣳ सुवः । ॐ महः । ॐ जनः । ॐ तपः । ओꣳसत्यम् । ॐ तत्सवितुः ० प्रचोदयात् ॥ ओमापोज्योतीरसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ॥" "ॐ भूर्भुवः सुवः तत्सवितुः ० प्रचोदयात्" इति सवितारं ध्यायन्सहस्रकृत्वः शतकृत्वो दशवारं वा जप्त्वा सूर्यमुपतिष्ठते– "ॐ मित्रस्य चर्षणी धृतः श्रवो देवस्य सानसिम् । सत्यं चित्रश्रवस्तमम् ॥ ॐ मित्रो जनान्यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवद्विधेम" इति ॥ अथ तत्तदभिमुखो दिगादीनुपतिष्ठते– "ॐ नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो दक्षिणायै दिशे याश्च

देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽवान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो गङ्गायमुनयोर्मध्ये यें वसन्ति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्धयन्ति नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः ॥ ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ सन्ध्यायै नमः । ॐ गायत्र्यै नमः । ॐ सावित्र्यै नमः । ॐ सरस्वत्यै नमः । नम ईशानाय नमः पितृदेवेभ्यः ॥ " ततः स्वस्तिकाकृतिहस्ताभ्यां भूमिं स्पृष्ट्वा स्वगोत्रनामोच्चारणं कुर्वन् दक्षिणहस्तेन दक्षिणं कर्णं सव्येन सव्यं च द्विवारं स्पृशेत् ॥ अथ दक्षिणाभिमुखो यममुपतिष्ठते– " ॐ यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमो नमः ॥ प्रत्यङ्मुखो विष्णुमुपतिष्ठते– " ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाँसुरे " ॥ उदङ्मुखो रुद्रमुपतिष्ठते– " ॐ ऋतꣳसत्यं परं ब्रह्मपुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः" ॥ प्रदक्षिणं कृत्वा– "यां सदा सर्वभूतानि स्थावराणि चराणि च । सायं प्रातर्नमस्यन्ति सा मां सन्ध्याऽभिरक्षतु ॥ उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथा सुखम् ॥ स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता । आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातुं

ब्रह्मलोकम् ॥ चतुःसागरपर्यन्तं गोब्राह्मणेभ्यः शुभं भवतु" इत्याशिषः प्रार्थयित्वा गोमातृपित्राचार्यब्राह्मणानभिवाद्योपविश्य "अनेन प्रातःसन्ध्योपासनकर्मणा श्रीपरमेश्वरः प्रीयताम्" इति परमेश्वराय समर्प्य "ॐ तद्विष्णोः पर॒मं प॒दं सदा॑ पश्यन्ति सूरयः । दि॒वीव॒ चक्षु॒रात॑तम् ॥" इति विष्णुं स्मृत्वा द्विराचामेत् ॥ इति प्रातःसन्ध्या

आशौचादौ— "राष्ट्रक्षोभे नृपाक्षिते रोगार्ते शवसूतके । सन्ध्यावन्दनविच्छित्तिर्न दोषाय कदाचन" ॥ एतद्वचनं केवलवाचिकसन्ध्याविषयम् । अत्राह पुलस्त्यः– "सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत् । मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः" इति ॥ विशेषमाह व्यासः– "प्रक्षिपेत्सूतके त्वर्घ्यं गायत्रीं तु समुच्चरन् । ततः प्रदक्षिणं कुर्यात् सूर्यं ध्यायेत्ततो द्विजः" इति ॥

## अथ ब्रह्मचारिणामग्निकार्यविधिः

बो० गृ० सू० (२-५-२६) "एतस्मिन्नेवाग्नौ (उपनयनाग्नौ) व्याहृतीभिः सायम्प्रातः समिधोऽभ्यादध्यात्" इति ॥ बो० प० सू० (१-१६-५) "स एष उपनयनप्रभृति व्याहृतीभिः समिद्भिर्हूयत आसमावर्तनात् । समावर्तनप्रभृति आज्येन व्याहृति भिरेव हूयत आपाणिग्रहणात्" इति ॥ बो० शे० सू० (२-११-७)– अथैनमग्निमुपसमाधाय प्रोक्षणीः संस्कृत्य परिसमूह्य परिषिच्य व्याहृतीभिः समिध आधापयति । षोढा विहितेनोपस्थापयति । तदाऽऽग्नेयं भस्म सङ्गृह्य वामपाणितले निक्षिप्य 'मानस्तोके' इत्यद्भिः संसृज्य 'शन्नो देवीरभिष्टय' इति सम्मेल्य तिर्यक्त्रिपुण्ड्रमेकपुण्ड्रं वा ब्राह्मणस्य, वर्तुलाकारं राजन्यस्य,

अर्धचन्द्राकृतिं वैश्यस्याङ्गानि सन्धापयति । 'सरस्वती' इति शिरसि, 'मेधावी' इति ललाटे, 'तेजस्वी' इति वक्षसि, 'वर्चस्वी' इति दक्षिणेंऽसे, 'ब्रह्मवर्चसी' इति उत्तरेंऽसे, 'आयुष्मान्' इति ग्रीवायाम्, 'अन्नाद' इति पिठरे, 'स्वस्ति भूयासम्' इति शिरसि । अन्येषां स्त्रीणां वा ऊर्ध्वपुण्ड्रम् । प्रोक्षणीषु करं प्रक्षाल्य नमस्कृत्य प्रोक्षणीशेषं गेहस्योपरिष्टात् निनयेदित्याह भगवान्बोधायनः ॥

अथ प्रयोगः दर्भेषु प्राङ्मुख उपविश्य हस्ते पुष्पाक्षतादि गृहीत्वा लौकिकाग्नौ 'ॐ उपावरोह जातवेदः पुन स्त्वम् । देवेभ्यो हव्यं वहनः प्रजानन् ॥ आयुः प्रजा᳚रयिमस्मासु धेहि । अजस्रो दीदिहि नो दुरोणे" ॥ इति स्वात्म समारोपितमग्निमागतं भावयन् "ॐ भूर्भुवःसुवरोम्" अग्निं प्रतिष्ठापयामि इति प्रक्षिपेत् ॥ आचम्य प्राणानायम्य मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातरग्निकार्यं करिष्ये इति सङ्कल्प्य, अग्निं प्रदक्षिणं परिसमूहति– "ॐ जुषस्व नः समिधमग्ने अद्यशोचा बृहद्यजतं धूममृण्वन् । उपस्पृश दिव्य᳚सानुस्तूपैः स᳚रश्मिभिस्ततनः सूर्यस्य" इति ॥ अथ परि षिञ्चति– 'ॐ अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम् । 'ॐ अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम् । 'ॐ सरस्वतेऽ नुमन्यस्व' इत्युत्तरतः प्राचीनम् । ॐ 'देव सवितः प्रसुव' इति समन्तं प्रदक्षिणम् । अथाग्निमैन्द्राद्यष्टदिक्षु पुष्पाक्षतै रलङ्करोति– 'ॐ अग्नये नमः । ॐ जातवेदसे० । ॐ सहोजसे० । ॐ अजिराप्रभवे० । ॐ वैश्वानराय० । ॐ नर्या पसे० । ॐ पङ्क्तिराधसे० । ॐ विसर्पिणे०' ॥ इत्यक्षतैरभ्यर्च्य, अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्ण मनलं समिद्धं विश्वतोमुखम्, ॥ इति प्रणम्य, प्रोक्षणीः संस्कृत्य, तज्जलेन चतस्रः समिधः प्रोक्ष्य अभ्यादधाति– ॐ भूः

स्वाहा अग्नय इदं न मम । ॐ भुवः स्वाहा वायव इदं० । ओ३सुवः स्वाहा सूर्याय इदं० । ॐ भूर्भुवःसुवः स्वाहा प्रजापतय इदं० इति ॥ पुनः पूर्ववत्— 'जुषस्व नः' इति परिसमूह्य 'अदितेऽन्वमꣳस्थाः । अनुमतेऽन्वमꣳस्थाः । सरस्वतेऽन्वमꣳस्थाः । देवसवितः प्रासावीः ।' इति तथैव परिषिच्याथैनꣳसमिधमाधायोपतिष्ठते— 'यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् । यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् । यत्ते अग्ने हरस्तेनाहꣳहरस्वी भूयासम् । मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ।' इति ॥ अथोपविश्याग्नेयं भस्म— 'मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते ।' इति वामपाणितले गृहीत्वा— 'शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शं यो रभिस्रवन्तु नः ।' इत्यद्भिः सम्मिश्रयाङ्गुष्ठानामिकाभ्यामालोड्य— 'सरस्वती' इति शिरसि, 'मेधावी' इति ललाटे, 'तेजस्वी' इति वक्षसि, 'वर्चस्वी' इति दक्षिणेंऽसे, 'ब्रह्मवर्चसी' इत्युत्तरेंऽसे, 'आयुष्मान्' इति ग्रीवायां, 'अन्नादः' इति पिठरे, 'स्वस्ति भूयासं' इति शिरसि च त्रिपुण्ड्रमेकपुण्ड्रं वा धृत्वा करं प्रक्षाल्य— 'श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥' इत्याशिषः प्रार्थयित्वा, अमुकप्रवरान्वितेत्यादिनाऽभिवाद्य— 'अनेन प्रातरग्निकार्यकर्मणा श्रीपरमेश्वरः प्रीयताम्' इति कर्मेश्वराय समर्प्य— 'ॐ या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम् । अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिम् । जातवेदो भुव आ जायमानः सक्षय एहि' इत्यग्निमात्मनि समारोप्य, प्रोक्षणीशेषं गेहस्योपरिष्टान्निनयेत् । 'तद्विष्णोः परमं पदं ... चक्षुराततम्' इति विष्णुं स्मृत्वा द्विराचामेत् ॥ इत्यग्निकार्यप्रयोगः ॥

# अथौपासनविधिः

'तस्मादग्नये सायꣳहूयते । सूर्याय प्रातः' इति श्रुतिः ॥ बो० प० सू० (१-१६-७)— "पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा । हस्तेनैते आहुती जुहोति— 'ॐ अग्नये स्वाहा, प्रजापतये स्वाहा' इति सायम् । 'ॐ सूर्याय स्वाहा, प्रजापतये स्वाहा' इति प्रातरपि । अग्निहोत्रहविषामन्यतमेन हूयते" ॥ बो० गृ० शे० सू० (४-८-४)— "अथास्तमित आदित्ये व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोति— 'अग्नये स्वाहा, प्रजापतये स्वाहा' इति सायम् । 'सूर्याय स्वाहा, प्रजापतये स्वाहा' इति प्रातरपि । अग्निहोत्रहविषामन्यतमेन जुहुयात् । पर्वणि पर्वणि चाग्नेयस्थालीपाकेन यजेत । उपवास एव कालान्तरे भोजनमतृप्तिश्चान्नस्य च । एवमेव सायं होमेन प्रतिपद्यते सन्तिष्ठत औपासनतन्त्रम्" ॥ औपासनस्य कालो निरूपितः— बोधायनसूत्रे— 'आसायं कर्मणः प्रातः, आप्रातः सायं कर्मण आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरम्' । 'प्रदोषान्तो होमकालः सङ्गवान्तः प्रातः' इत्याश्वलायनः । प्रदोषान्तो नाम रात्रौ नवनाड्यात्मकः कालः । सङ्गवान्तो नाम प्रातर्दशनाड्यात्मकः कालः ॥

प्रातरौपासनप्रयोगः— अथाग्नेः पश्चात्सपत्नीकः प्राङ्मुख उपविश्य [समित्समारोपिताग्निश्चेदारोपितं समिधं 'ॐ आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमासीद साध्या । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ ॐ उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च । पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसी त्वयि तन्तुमेतम् ॥

ॐ भूर्भुवःसुवरों अग्निं प्रतिष्ठापयामि' इति लौकिकाग्नौ प्रतिष्ठाप्य वेणुधमन्या प्रबोध्य] आचम्य प्राणानायम्य आवयोरुपात्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातरौपासनहोमं व्रीहिभिर्होष्यामीति सङ्कल्प्य, 'ॐ जुष्टो दमूना अतिथिर्दुरोणे । इमं नो यज्ञमुपयाहि विद्वान् ॥ विश्वा अग्नेऽभियुजो विहत्य । शत्रूयता माभरा भोजनानि' इत्युपस्थायाग्निं प्रागादिपरिसमूह्य पर्युक्ष्य परिस्तीर्य, हवनीयद्रव्यमुत्तरतो निधाय, ज्वलता दर्भद्वयेनाभिद्योत्य प्रोक्ष्य तेनैव दर्भद्वयेन पुनरभिद्योत्य, अन्येन ज्वलता दर्भ द्वयेन त्रिः पर्यग्निकृत्वाऽप उपस्पृश्य हवनीयद्रव्यमग्नेः पश्चाद्दर्भेषु सादयित्वा 'जुषस्वनः ... सूर्यस्य' इति प्रार्थ्याग्निं परिषिञ्चति— 'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम्, 'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम्' 'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनम्, देवसवितः प्रसुव' इति समन्तं प्रदक्षिणम् ॥ अथ 'अग्नये नमः इत्यादि विसर्पिणे नमः । मध्ये यज्ञपुरुषाय नमः' इत्यग्निमभ्यर्च्य 'अग्निं प्रज्वलितं ... विश्वतो मुखम्' इति प्रणम्य तूष्णीमेकां समिधमभ्याधायादीप्तायास्तस्याः पश्चिमार्धे होमद्रव्यं हस्तेन गृहीत्वा कायतीर्थेन प्राङ्मुखं जुहोति— 'ॐ सूर्याय स्वाहा । सूर्यायेदं न मम' । एवमेव द्वितीयां भूयसीं आहुतिं समित्पूर्वार्धे प्रत्यङ्मुखं जुहोति— 'ॐ प्रजापतये स्वाहा । प्रजापतय इदं न मम' ॥ पुनः 'जुषस्वनः०' इत्यादि, 'अदितेऽन्वमꣳस्थाः, अनुमतेऽन्वमꣳस्थाः, सरस्वतेऽन्वमꣳस्थाः, देवसवितः प्रासावीः' इति पूर्ववत्परिषिच्य समिधमाधाय उपतिष्ठते— 'यत्ते अग्ने ... भ्राजो दधातु' इति षड्भिरुपस्थायोपविश्य 'मानस्तोके ... विधेम ते' इत्युदक्स्थितं प्राक्स्थितं वा भस्म गृहीत्वा 'ॐ ओजोऽसि' इति ललाटे, 'सहोऽसि' इति कण्ठे, 'बलमसि' इति दक्षिणबाहुमूले, 'भ्राजोऽसि' इति कण्ठपृष्ठे, 'देवानां धाम नामासि' इति नाभौ, 'विश्वमसि विश्वायुः' इति हृदये, 'सर्वमसि सर्वायुरभिभूः' इति शिरसि च

धारयेत् । 'श्रद्धां मेधां ... हव्यवाहन' इत्याशिषः सम्प्रार्थ्य गोत्राभिवादनं कृत्वा 'अनेन प्रातरौपासनहोमकर्मणा श्री परमेश्वरः प्रीयताम्' इति कर्मेश्वराय समर्प्य [समारोपपक्षे- 'ॐ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथानो वर्धया रयिम्' इत्यग्निं समिधि समारोप्य] 'तद्विष्णोः परमं पदं ... चक्षुराततम्' इति विष्णुं स्मृत्वाऽऽचामेत् । इति प्रातरौपासनहोमः ॥ इत्यौपासनविधिः ॥

## अथ द्वादशनमस्काराः

'मम श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीसूर्यनारायणप्रीत्यर्थं द्वादशनमस्काराख्यं कर्म करिष्ये' इति सङ्कल्प्य शुद्ध ताम्रपात्रे जलमापूर्य गन्धपुष्पाक्षतान् प्रक्षिप्य पुरतो निधाय- 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासन सन्निविष्टः । केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ एकचक्रो रथो यस्य दिव्यः कनकभूषणः । स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥' इति ध्यात्वा- ॐ मित्राय नमः, ॐ रवये नमः, ॐ सूर्याय०, ॐ भानवे०, ॐ खगाय०, ॐ पूष्णे०, ॐ हिरण्यगर्भाय०, ॐ मरीचये०, ॐ आदित्याय०, ॐ सवित्रे०, ॐ अर्काय०, ॐ भास्कराय नमः, ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्यो नमः ॥ विनतातनयो देवः कर्मसाक्षी सुरेश्वरः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ॥ ॐ अरुणाय नमः ॥ आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तर सहस्रेषु दारिद्र्यं नोपजायते ॥ श्रीसूर्यनारायणाय नमः ॥ इति प्रतिमन्त्रं प्रणम्य 'अनेन द्वादशनमस्काराख्येन कर्मणा भगवान्

श्रीसूर्यनारायणः प्रीयताम्' ॥ 'अकालमृत्युहरणं सर्वव्याधिनिवारणम् । सूर्यपादोदकं तीर्थं जठरे धारयाम्यहम् ॥' इति पात्रस्थजलं पिबेत् ॥ इति द्वादशनमस्काराः ॥

## अथ तृचाकल्पनमस्काराः

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीसवितृसूर्यनारायणप्रीत्यर्थं च तृचाकल्प विधिना सूर्यनमस्कारं करिष्ये' ॥ ताम्रपात्रे जलगन्धाक्षतपुष्पाणि क्षिप्त्वा, 'ध्येयः सदा सवितृ ... शङ्खचक्रः' इति ध्यात्वा— ॐ ह्रां उद्यन्नद्य मित्रमहः ह्रां ॐ मित्राय नमः ॥१॥ ॐ ह्रीं आरोहन्नुत्तरां दिवम् ह्रीं ॐ रवये नमः ॥२॥ ॐ ह्रूं हृद्रोगं मर्म सूर्य ह्रूं ॐ सूर्याय नमः ॥३॥ ॐ ह्रैं हरिमाणं च नाशय ह्रैं ॐ भानवे नमः ॥४॥ ॐ ह्रौं शुकेषु मे हरिमाणम् ह्रौं ॐ खगाय नमः ॥५॥ ॐ ह्रः रोपणाकासु दध्मसि ह्रः ॐ पूष्णे नमः ॥६॥ ॐ ह्रां अथो हारिद्रवेषु मे ह्रां ॐ हिरण्यगर्भाय नमः ॥७॥ ॐ ह्रीं हरिमाणं निर्दध्मसि ह्रीं ॐ मरीचये नमः ॥८॥ ॐ ह्रूं उदगादयमादित्यः ह्रूं ॐ आदित्याय नमः ॥९॥ ॐ ह्रैं विश्वेन सहसा सह ह्रैं ॐ सवित्रे नमः ॥१०॥ ॐ ह्रौं द्विषन्तं मम रन्धयन् ह्रौं ॐ अर्काय नमः ॥११॥ ॐ ह्रः मो अहं द्विषतो रधम् ह्रः ॐ भास्कराय नमः ॥१२॥ ॐ ह्रां ह्रीं उद्यन्नद्य मित्रमहः । आरोहन्नुत्तरां दिवम् ह्रां ह्रीं ॐ मित्ररविभ्यां नमः ॥१३॥ ॐ ह्रूं ह्रैं हृद्रोगं मर्म सूर्य । हरिमाणं च नाशय ह्रूं ह्रैं ॐ सूर्यभानुभ्यां नमः

॥१४॥ ॐ ह्रौं ह्रः शुकेषु मे हरिमाणम् । रोपणाकासु दध्मसि ह्रौं ह्रः ॐ खगपूषभ्यां नमः ॥१५॥ ॐ ह्रां ह्रीं अथो हारिद्रवेषु मे । हरिमाणं निदध्मसि ह्रां ह्रीं ॐ हिरण्यगर्भमरीचिभ्यां नमः ॥१६॥ ॐ ह्रूं ह्रैं उदगादयमादित्यः । विश्वेन सहसा सह ह्रूं ह्रैं ॐ आदित्यसवितृभ्यां नमः ॥१७॥ ॐ ह्रौं ह्रः द्विषन्तं मम रन्धयन् । मो अहं द्विषतो रधम् ह्रौं ह्रः ॐ अर्कभास्कराभ्यां नमः ॥१८॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं उद्यन्नद्य ... दिवम् । हृद्रोगं मम ... च नाशय ह्रां ह्रीं ह्रूं ह्रैं ॐ मित्ररविसूर्यभानुभ्यो नमः ॥१९॥ ॐ ह्रौं ह्रः ह्रां ह्रीं शुकेषु मे ... सुदध्मसि । अथो हारि ... निदध्मसि ह्रौं ह्रः ह्रां ह्रीं ॐ खगपूषहिरण्यगर्भमरीचिभ्यो नमः ॥२०॥ ॐ ह्रूं ह्रैं ह्रौं ह्रः उदगादय ... सह । द्विषन्तं मम ... रधम् ह्रूं ह्रैं ह्रौं ह्रः ॐ आदित्यसवित्रर्कभास्करेभ्यो नमः ॥२१॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्य ... दिवम् । हृद्रोगं ... नाशय ॥ शुकेषु मे ... सुदध्मसि । अथो हारि ... निदध्मसि ॥ उदगादय ... सह । द्विषन्तं मम ... रधम् ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्यो नमः ॥२२-२३-२४॥ एवमेव त्रिवारम् ॥ इति चतुर्विंशतिवारं नमस्कारं कृत्वा– 'विनतातनयो देवः कर्मसाक्षी सुरेश्वरः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ॥ ॐ अरुणाय नमः' इति प्रार्थयेत् ॥ आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥ अनेन तृचाकल्पनमस्कारकर्मणा भगवान् श्रीसूर्यनारायणः प्रीयताम् ॥ 'अकालमृत्युहरणं सर्वव्याधिनिवारणम् । सूर्यपादोदकं तीर्थं जठरे धारयाम्यहम्' इति पात्रस्थजलं पिबेत् ॥ इति तृचाकल्पनमस्काराः ॥

# अथ देवपूजाविधिः

बो० गृ० शे० (२-१४-१)– अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः ॥ बो० गृ० शे० (२-१७-१)– अथातो महादेवस्याहरहः परिचर्याविधिं व्याख्यास्यामः । बो० गृ० शे० (२-२२-२)– एतयोस्त्रैवर्णिक धर्मत्वात् सर्वत्र वचनाल्लोकप्रसिद्धप्राप्तप्रतिषेधाभावात् क्रियत इति ह स्माह बोधायनः । एवं प्रतिष्ठाप्य वा कुर्यात्तयोरेव सायुज्यं सलोकतामाप्नोति । यदि त्रिंशद्वत्सरादूर्ध्वं क्रियेत ततो देवयोः परमं पदं ब्रह्मसञ्ज्ञितं तदेव सगण आप्नोति । यदि तत्प्रणवः स्याद्य उ चैनदेवं विदुर्यस्मै प्रब्रूते यस्मै वा करोति तस्मै शतं दद्यान्माषाणां ब्राह्मणो राजन्यः सहस्रं दद्याद्वैश्यो यथाश्रद्धं दद्यात् । न स्त्रीशूद्रौ कुर्यातां यदि कुर्यातां स्वतन्त्रोपदेशे आचार्य आश्रय इति । स्वतन्त्रयोस्तयोश्चेद्वृत्तिक्षीणोऽपि ब्राह्मणः पतत्येवेति शालिकिः । अथ देवयोर्यथाकामी स्याद्यस्यां कस्याञ्चिदवस्थायां जले वा स्थण्डिले वा प्रतिमासु वा सर्वं कृत्वाऽभ्यर्चयेन्न तु प्रमाद्येत् । देशाभावे द्रव्याभावे साधारणे कुर्यान्मनसा वाऽर्चयेदिति ॥ तदाह भगवान्– 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः' इति ॥ भक्ति-नम्र एतान्मन्त्रानधीयीत न त्वेवा नर्चकः स्यादन्यतरस्योभयोर्वा ततस्तयोरेव सायुज्यं सलोकतामाप्नोति । य एतयोरर्चनां कुरुतेऽन्यत्र पुत्रशिष्येभ्यः स्त्रियाश्च तस्मै सौवर्णं शङ्खं सुवर्णोपधानं वा दद्यादृषभं रुद्रस्य दक्षिणेत्याह बोधायनः । प्रतिष्ठाकरणे स्नापनकरणे वाऽऽचार्याय तदुपकरणं सर्वं दत्वा ऋषभैकादश गा दद्यादित्याह भगवान्बोधायनः ॥

अथ महापुरुष(विष्णु)परिचर्याप्रयोगः — अथ स्नात्वा शुचिः परिहितधौतवासा गोमयादिलिप्ते देशे, प्राङ्मुख उदङ्मुखो वा दर्भेष्वासीनो, दर्भान्धारयमाण आचम्य प्राणानायम्य, 'सुमुखश्चेत्यादि' देशकालौ सङ्कीर्त्य, 'मम सकुटुम्बस्य सपरिवारस्य सकलपापापकरणद्वारा विष्णुसायुज्य-विष्णुसालोक्यक्रमेण निरतिशयानन्दब्रह्मपदप्राप्त्यर्थं महाविष्णुपूजां करिष्ये' इति सङ्कल्प्य, महागणपतिं सम्पूज्य, भूशुद्ध्यादिमण्डपार्चनान्तं कृत्वा, पुष्पाक्षतोदकान्यञ्जलौ गृहीत्वा महापुरुषमावाहयति— 'ॐ भूः पुरुषमावाहयामि । ॐ भुवः पुरुषमावाहयामि । ओꣳसुवः पुरुषमावाहयामि । ॐ भूर्भुवः सुवः पुरुषमावाहयामि' इत्यावाह्य, 'आयातु भगवान्महापुरुषः' इति ॥ अथ कुशैरासनं ददाति— 'ॐ त्रीणि पदा विचक्रमे । विष्णुर्गोपा अदाभ्यः । ततो धर्माणि धारयन् ॥ भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णस्तं जुषस्व' महाविष्णवे नमः, आसनं समर्पयामि ॥ अथ गायत्र्याऽद्भिः प्रक्षालितपात्रे तिरः पवित्रमप आनीय गन्धादिभिरभ्यर्च्य गायत्र्या अभिमन्त्र्य, ओमित्यातमितोरादित्यं दर्शयित्वा, तासामेकदेशं पात्रान्तरेणादाय, 'ॐ त्रीणि पदा ... धारयन् ॥ इमा आपः शान्ताः शिवाः शिवतमाः पूताः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्यास्ता जुषतां प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महाविष्णुर्विष्णवे नमः' पाद्यं समर्पयामि ॥ 'ॐ भूर्भुवः सुवः' इति निर्माल्यं व्यपोह्य 'ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे ॥ इमा आपः ... अमृतरसा अर्घ्यास्ता जुषतां ... नमः' अर्घ्यं समर्पयामि ॥ 'ॐ दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वान्तऽरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैरा प्रयच्छ दक्षिणादोत सव्यात् ॥ इमा आपः ... अमृतरसा आचमनीयास्ता जुषतां ... नमः' आचमनीयं समर्पयामि ॥ अथैनं स्नापयति— 'ॐ आपोहिष्ठा' इति त्रिभिः, 'ॐ हिरण्यवर्णाः शुचयः' इति चतसृभिः,

'ॐ पवमानः सुवर्जनः' इत्येतेनानुवाकेन, 'ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ कयानश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता ॥ आपो वा इद२ंसर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दा२ंस्यापो ज्योती२ंष्यापो यजू२ंष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ॐ' विष्णवे नमः स्नानं समर्पयामि ॥ ततः पवित्रं पादमूले निधाय तर्पयति— 'ॐ केशवं तर्पयामि, नारायणं०, माधवं०, गोविन्दं०, विष्णुं०, मधुसूदनं०, त्रिविक्रमं०, वामनं०, श्रीधरं०, हृषीकेशं०, पद्मनाभं०, दामोदरं तर्पयामि' इति ॥ 'ॐ भूर्भुवः सुवः' इति प्रतिमामद्भिः परिषिच्य, 'ॐ' विष्णवे नमः वस्त्रं स० ॥ आचमनं स० ॥ 'गायत्र्या' विष्णवे नमः यज्ञोपवीतं स० ॥ 'ॐ इदं विष्णु ... सुरे' विष्णवे नमः आचमनीयं स० । 'ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरी२ंसर्वभूतानां तामिहोपह्वये श्रियम् ॥ इमे गन्धाः शुभा दिव्याः सर्वगन्धैरलङ्कृताः । पूता ब्रह्मपवित्रेण पूताः सूर्यस्य रश्मिभिः' विष्णवे नमः गन्धं स० ॥ 'ॐ इरावती धेनुमती हि भूत२ंसूयवसिनी मनवे यशस्ये । व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः' विष्णवे नमः अक्षतान् स० ॥ 'ॐ तद्विष्णोः परमं पद२ंसदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ इमे पुष्पाः शुभा दिव्याः सर्वपुष्पैरलङ्कृताः । पूता ब्रह्मपवित्रेण पूताः सूर्यस्य रश्मिभिः' विष्णवे नमः पुष्पाणि स० ॥ 'ॐ तत्सवितुः० ॥ वनस्पतिरसो धूपो धूपेभ्यो धूप उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्' विष्णवे नमः धूपं स० ॥ 'ॐ उद्दीप्यस्व जातवेदोऽपघ्नं निर्ऋतिं मम । पशू२ंश्च मह्यमावह जीवनं च दिशो दिश ॥ ज्योतिः शुक्रश्च तेजश्च देवानां सततं प्रियः । भास्वरः सर्वभूतानां

दीपोऽयं प्रतिगृह्यताम्' विष्णवे नमः दीपं स० ॥ देवस्य पुरतश्चतुरश्रमण्डले महाहविः सर्वं स्वादुवस्तु-कन्दमूलफलानि च संस्थाप्याभिघार्य, 'गायत्र्या' प्रोक्ष्य धेनुमुद्रां प्रदर्श्य अर्घ्योदकेनान्वितं पुष्पाञ्जलिं 'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ विष्णवे नमः नैवेद्यार्थे इदं हविः क्षीरदधिफलमूलादिनैवेद्यं निवेदयामि स्वाहा' इति परिषिच्य समर्प्य, अङ्गुष्ठानामिकायोगेन नैवेद्यमुद्रां प्रदर्श्य, 'अमृतोपस्तरणमसि स्वाहा' इत्यर्घ्यं दत्वा, अङ्गुष्ठकनिष्ठानामिकाभिः 'ॐ प्राणाय स्वाहा', अङ्गुष्ठतर्जनीमध्यमाभिः 'ॐ अपानाय स्वाहा', मध्यमानामाङ्गुष्ठैः 'ॐ व्यानाय स्वाहा', अङ्गुष्ठतर्जनीमध्यमानाभिः 'ॐ उदानाय स्वाहा', सर्वाङ्गुलीभिः 'ॐ समानाय स्वाहा', इति पञ्च मुद्राः प्रदर्श्य, पटान्तरितो भुञ्जानं देवं मनसा ध्यायन् 'ॐ विष्णवे नमः' मध्ये पानीयं समर्पयामि । 'अङ्गुष्ठमात्रः पुरुषोङ्गुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' समर्पितनैवेद्यं विसर्जयामि, 'अमृता पिधानमसि स्वाहा' इत्यर्घ्योदकं विसृज्य, नैवेद्यमुद्धृत्य, ॐ विष्णवे नमः आचमनीयं स० ॥ पुष्पैराराधयेत्— 'ॐ केशवाय नमः । नारायणाय० । माधवाय० । गोविन्दाय० । विष्णवे० । मधुसूदनाय० । त्रिविक्रमाय० । वामनाय० । श्रीधराय० । हृषीकेशाय० । पद्मनाभाय० । दामोदराय नमः' इति ॥ 'पूगीफलसमायुक्तं नागवल्या दलैर्युतम् । कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम्' विष्णवे नमः ताम्बूलं स० ॥ ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकं आसीत् । सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम' विष्णवे नमः सुवर्णपुष्पदक्षिणां स० ॥ 'ॐ त्रीणि पदा ... धारयन्' विष्णवे नमः मङ्गळनीराजनं स० ॥ 'ॐ तदस्य प्रियमभिपाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः' विष्णवे नमः मन्त्रपुष्पं

स० ॥ 'ॐ क्रत्वा दा अस्तु श्रेष्ठः । अद्य त्वा वन्वन्त्सुरेक्णाः । मर्त आनाश सुवृक्तिम्' विष्णवे नमः प्रदक्षिणं स० ॥ 'ॐ इमा ब्रह्म ब्रह्मवाह । प्रिया त आ बर्हिः सीद । वीहि सूर पुरोडाशम्' विष्णवे नमः नमस्कारं स० ॥ 'ॐ उप नः सूनवो गिरः । शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः' विष्णवे नमः प्रार्थनां समर्पयामि ॥ अथैनं वैष्णवीभिः ऋग्यजुस्सामाथर्वभिः स्तुतिभिः स्तुन्वन्ति— 'आवाहनं न जानामि न जानामि तवार्चनम् । पूजां चैव न जानामि क्षम्यतां पुरुषोत्तम ॥ यस्य स्मृत्या च नामोक्त्या तपः पूजा क्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥' अनेन मया कृतपूजनेन श्रीमहाविष्णुः प्रीयताम् ॥ 'श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् । आयुष्यं तेज आरोग्यं देहि मे पुरुषोत्तम' प्रसादं गृह्णीयात् ॥ ततः पुरुषमुद्वासयति— 'ॐ भूः पुरुषमुद्वासयामि । ॐ भुवः पुरुषमुद्वासयामि । ओ३ंसुवः पुरुषमुद्वासयामि । ॐ भूर्भुवः सुवः पुरुषमुद्वासयामि ॥ प्रयातु भगवान् महापुरुषः क्षेमाय विजयाय पुनः सन्दर्शनाय च' इति ॥ प्रतिमास्थानेष्वावाहनोद्वासनवर्जम् ॥ इति महापुरुषपरिचर्याप्रयोगः ॥

अथ महादेवपरिचर्याप्रयोगः — अथ स्नात्वा शुचिः मण्डपार्चनान्तं विष्णुपरिचर्यावत्कृत्वा 'श्रीमहादेवपूजां करिष्ये' इति सङ्कल्पं कुर्यात् ॥ अथ पुष्पाक्षतोदकान्यञ्जलौ गृहीत्वा महादेवमावाहयति— 'ॐ भूः पुरुषमावाहयामि । ॐ भुवः पुरुषमावाहयामि । ओ३ंसुवः पुरुषमावाहयामि । ॐ भूर्भुवः सुवः पुरुषमावाहयामि । [इत्यावाह्य] आयातु भगवान्महादेवः' इति ॥ अथ कुशैरासनं ददाति— 'ॐ त्र्यम्बकं ... तात् । भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णस्तं जुषस्व'

महादेवाय नमः आसनं समर्पयामि ॥ अथ गायत्र्याऽद्भिः प्रक्षालिते 'ॐ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु' इत्यभिमन्त्रिते पात्रे तिरः पवित्रमप आनीय गन्धादिभिरभ्यर्च्य पुनस्तेनैव मन्त्रेण अभिमन्त्र्य 'ॐ' इत्यातमितोरादित्यं दर्शयित्वा तासामेकदेशं पात्रान्तरेणादाय पाद्यं ददाति— इमा आपः शान्ताः शिवाः शिवतमाः पूताः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्यास्ता जुषतां प्रतिगृह्यतां प्रतिगृह्णातु भवान् महादेवो महादेवाय नमः पाद्यं समर्पयामि ॥ 'ॐ भूर्भुवः सुवरों' इति निर्माल्यमपोह्य 'इमा आपः ... अमृतरसा अर्घ्यास्ता जुषतां ... नमः' अर्घ्यं समर्पयामि ॥ 'इमा आपः ... अमृतरसा आचमनीयास्ता जुषतां ... नमः' आचमनीयं समर्पयामि ॥ अथैनं स्नापयति— 'ॐ आपोहिष्ठा' इति तिसृभिः, 'ॐ हिरण्यवर्णाः शुचयः' इति चतसृभिः, 'ॐ पवमानः सुवर्जनः' इति एतेनानुवाकेन, 'ॐ ब्रह्मजज्ञानं' इति मन्त्रेण, 'ॐ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमꣳ हृदे' इति मन्त्रेण, 'ॐ यो रुद्रो अग्नौ' इति मन्त्रेण, 'ॐ कयानश्चित्र आ' इति मन्त्रेण, 'ॐ आपो वा इदꣳ' इति मन्त्रेण च ॥ व्याहृतीभिः प्रदक्षिणमुदकं परिषिच्य, ततः पवित्रं पादमूले निधायाद्भिस्तर्पयति— 'ॐ भवं देवं तर्पयामि । शर्वं देवं० । ईशानं देवं० । पशुपतिं देवं० । रुद्रं देवं० । उग्रं देवं० । भीमं देवं० । महान्तं देवं तर्पयामि' इति ॥ 'ॐ नमो भगवते रुद्राय' महादेवाय नमः वस्त्रं समर्पयामि । आचमनीयं स० ॥ 'ॐ नमो भगवते त्र्यम्बकाय' महादेवाय नमः उपवीतं स० । आचमनीयं स० ॥ 'ॐ यो रुद्रो अग्नौ० । इमे गन्धाः ... रश्मिभिः' महादेवाय नमः गन्धं स० ॥ 'ॐ यो रुद्रो अग्नौ०' महादेवाय नमः अक्षतान् स ०॥ 'ॐ यो रुद्रो अग्नौ० । इमे पुष्पाः ... रश्मिभिः' महादेवाय नमः पुष्पाणि स० ॥

'ॐ भवाय देवाय नमः । शर्वाय देवाय० । ईशानाय देवाय० । पशुपतये देवाय० । रुद्राय देवाय० । उग्राय देवाय० । भीमाय देवाय० । महते देवाय नमः' इति पुष्पैराराध्य, 'ॐ यो रुद्रो० । वनस्पतिरसो धूपो ... धूपोऽयं प्रतिगृह्यताम्' महादेवाय नमः धूपं स० ॥ 'ॐ यो रुद्रो० । ज्योतिः शुक्रश्च ... दीपोऽयं प्रतिगृह्यताम्' महादेवाय नमः दीपं स० ॥ देवस्य पुरतश्चतुरस्रमण्डले महाहविः संस्थाप्य 'ॐ देवस्य त्वा० । महादेवाय नमः नैवेद्यार्थे ... निवेदयामि स्वाहा' इति नैवेद्यमुद्रां प्रदर्श्य, 'अमृतोपस्तरणमसि स्वाहा' इत्यपो दत्वा 'ॐ प्राणाय स्वाहा' इत्यादिभिः पञ्च मुद्राः प्रदर्श्य, पटान्तरितो देवं मनसा ध्यायन् 'ॐ त्र्यम्बकं यजामहे०' महादेवाय नमः पानीयं स० ॥ 'अङ्गुष्ठमात्रः' नैवेद्यं विसर्जयामि ॥ 'अमृतापिधानमसि स्वाहा' इत्यपो दत्वा, 'ॐ त्र्यम्बकं०' महादेवाय नमः आचमनीयं स० ॥ 'पूगीफल ... गृह्यताम्' महादेवाय नमः ताम्बूलं स० ॥ 'ॐ हिरण्यगर्भः०' महादेवाय नमः दक्षिणां स० ॥ 'ॐ सद्योजातं०' महादेवाय नमः मङ्गलनीराजनं स० ॥ 'ॐ वामदेवाय०' महादेवाय नमः मन्त्रपुष्पं स० ॥ 'ॐ अघोरेभ्यः०' महादेवाय नमः प्रदक्षिणं स० ॥ 'ॐ तत्पुरुषाय०' महादेवाय नमः नमस्कारं स० ॥ 'ॐ ईशानः सर्व०' महादेवाय नमः प्रार्थनां समर्पयामि ॥ पुनः भवाद्यष्टभिः सम्पूज्य, रौद्रीभिः ऋग्यजुःसामाथर्वभिः स्तुत्वा समर्पयेत् ॥ प्रसादं सङ्गृह्य 'प्रयातु भगवान्महादेवः' इति विसर्जयेत् ॥ स्थावरलिङ्गस्थानेष्वावाहनोद्वासनवर्जम् ॥ इति महादेवपरिचर्याप्रयोगः ॥

# अथ सर्वदेवसामान्यपूजा

तत्र विधिः— 'शिवं विष्णुं गणपतिं दुर्गां रविमतः परम् । पञ्चैतान्पूजयेन्नित्यं नात्र कार्या विचारणा' इति गार्ग्यः ॥ 'सम्पुटे पञ्चमूर्तीनां पूजा नित्यं शुभावहा । व्यतिरेकं प्रकुरुते दौर्भाग्यं लभते नरः' इति कश्यपः ॥

अथ कर्ता पूजास्थानं गत्वा देवं नमस्कृत्य, *स्वस्तिकासनः *पद्मासनो वा, प्राङ्मुख उदङ्मुखो वोपविश्य, स्वपुरतः कुसुमानि, दक्षिणतो गन्धाक्षतादिपूजोपकरणपात्राणि, वामतो सुशुद्धपुण्यजलपूरितपात्रं च विन्यस्य, पवित्रपाणिर्द्विराचम्य प्राणानायम्य ॥ 'श्रीमन्महागणपतये नमः ॥ ॐ देवीं वाचमजनयन्त देवाः । तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्जन्दुहाना । धेनुर्वागस्मानुपसुष्टुतैतु ॥ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम देवान्यदि शक्रवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥' इत्यादि पठित्वा ॥ ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं

---

* स्वस्तिकासन-पद्मासनयोर्लक्षणम्–बालबोधे– "जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे । ऋजुकायः समासीनः 'स्वस्तिकं' तदुदीरितम् ॥ वामपादमुपादाय दक्षिणोरौ प्रविन्यसेत् । तथैव दक्षिणं पादं सव्यस्योपरि विन्यसेत् ॥ 'पद्मासनं' भवेदेतत्सर्वेषामपि पूजितम्" इति ॥

चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणम्यादौ सर्व-
कार्यार्थसिद्धये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ सर्वेषु कालेषु
समस्तदेशेष्वशेषकार्येषु तथेश्वरेश्वरः । सर्वस्वरूपी भगवाननादिर्ममास्तु माङ्गल्याभिवृद्धये हरिः ॥ यत्र योगेश्वरः कृष्णो यत्र
पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवानीतिर्मतिर्मम ॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभि-
युक्तानां योगक्षेमं वहाम्यहम् ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥
स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥
सर्वमङ्गलदातारौ पार्वतीपरमेश्वरौ । गणेशस्कन्दसंयुक्तौ वन्दे वाञ्छितसिद्धये ॥ यः शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।
तयोः संस्मरणात्पुंसां सर्वतो जयमङ्गलम् ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु
ते ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥
लक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः । सीतारामाभ्यां नमः । शचीपुरन्दराभ्यां
नमः । अरुन्धतीवसिष्ठाभ्यां नमः । मातृभ्यो नमः । पितृभ्यो नमः । गुरुभ्यो नमः । आचार्येभ्यो नमः । इष्टदेवताभ्यो
नमः । कुलदेवताभ्यो नमः । ग्रामाधिदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । श्रीमद्भग-
वद्बोधायनाचार्येभ्यो नमः ॥ प्रारम्भकालः सुमुहूर्तोऽस्त्विति भवन्तो ब्रुवन्तु । सुमुहूर्तोऽस्तु ॥ ॥ अथ देशकालौ

सङ्कीर्त्य 'अस्माकं सकुटुम्बानां [मम सकुटुम्बस्य] क्षेमस्थैर्यविजयशुभाभयानन्दायुरारोग्यैश्वर्याभिवृद्ध्यर्थं धर्मार्थकाममोक्षाख्य-चतुर्विधपुरुषार्थसिद्ध्यर्थं अमुकदेवताप्रीत्यर्थं यथाशक्तियथाज्ञानेन कल्पोक्तपूजाराधनं करिष्ये' इति सङ्कल्प्य 'ॐ गणानां त्वा गणपतिꣳहवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥' इति गणपतिं, 'नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः । आचार्यसिद्धेश्वरपादुकाभ्यो नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः ॥' इति सद्गुरुं च स्मृत्वा, 'मम देवपूजा-योग्यतासिद्ध्यर्थं भूशुद्ध्यादिकं करिष्ये' इति सङ्कल्प्य, यागभूमिं गन्धादिभिरभ्यर्च्य– 'वराह ऋषिः । गायत्री छन्दः । भूमिर्देवता । लां बीजम् । लीं शक्तिः । लूं कीलकम् । मम देवतार्चनाधिकारसिद्ध्यर्थं जपे विनियोगः ॥ लां हृदयाय नमः । लीं शिरसे स्वाहा । लूं शिखायै वषट् । लैं कवचाय हुं । लौं नेत्रत्रयाय वौषट् । लः अस्त्राय फट् ॥ ॐ विष्णुशक्तिसमुत्पन्ने शङ्खवर्णे महीतले । अनेकरत्नसम्पन्ने भूमिदेवि नमोऽस्तु ते ॥' इति जपित्वा 'ॐ लं पृथिव्यै नमः' इति भूमिं नमेत् ॥ इति भूशुद्धिः ॥ ॥ ॐ फडित्यस्त्रमन्त्रेण घण्टां सम्पूज्य वादयेत्– 'ॐ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । कुर्वे घण्टारवं नित्यं देवताह्वानलक्षणम् ॥' इति ॥ ॥ अपसर्पन्त्वित्यस्य वामदेव ऋषिः । अनुष्टुप्छन्दः । भूतानि देवताः । भूतोत्सादने विनियोगः ॥ 'अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन पूजाकर्म समारभे ॥ वामपार्ष्णिघातत्रयेण भौमान्विघ्नानुत्सारयामि । ऊर्ध्वोर्ध्वतालत्रयेणान्तरिक्षान् विघ्नानुत्सारयामि ।

*नाराचमुद्रादर्शनेन दिव्यान्विघ्नानुत्सारयामि' इति भूतोत्सादनम् ॥ ॥ पृथ्वीत्यस्य मेरुपृष्ठ ऋषिः । सुतलं छन्दः । आदिकूर्मो देवता । आसने विनियोगः ॥ 'ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ ॐ आधारशक्तिकमलासनाय नमः' इत्यासनमभिमन्त्र्य तत्रोपविश्य 'ॐ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभक्षिणि । तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते' इति शिखां बद्ध्वा करौ प्रक्षालयेत् ॥ ॥ अथ बद्धाञ्जलिः स्ववामे 'ॐ गुरुभ्यो नमः', दक्षिणे 'ॐ गं गणपतये नमः', पुरतः 'ॐ इष्टदेवतायै नमः' इति गुर्वादीन्नत्वा ॥ अहिर्बुध्न्य ऋषिः । अनुष्टुप्छन्दः । श्रीसुदर्शनचक्रस्वरूपीविष्णुर्देवता । दिग्बन्धे विनियोगः ॥ 'ॐ नमो भगवते चक्राय चक्रमूर्तिधराय सेनाधिपतये सहस्रार हुं फट् स्वाहा' इति जपन् नाराचमुद्रया दशदिक्षु विन्यस्य 'ॐ फट्' इति ऊर्ध्वोर्ध्व-तालत्रयं कुर्यात् ॥ 'ॐ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि' इति भैरवाज्ञां गृहीत्वा 'यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु' इति गौरसर्षपान्विकीर्य, 'देवा आयान्तु । यातुधाना अपयान्तु । विष्णो देवयजनं रक्षस्व' इति भूमौ प्रादेशं कुर्यात् ॥ 'ॐ शुची वो हव्या मरुतः शुचीनाम् । शुचिंᳪहिनोम्यध्वरᳪशुचिभ्यः ॥ ऋतेन सत्यमृतसाप आयन् । शुचि जन्मानः शुचयः पावकाः ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः' इत्यद्भिः सर्वत्र प्रोक्षयेत् ॥ अथ भूतशुद्धिः ॥ 'ॐ हुं' इति मूलाधारोत्थितकुण्डलिन्या सह हृदिस्थं जीवात्मानं 'हंसः' इति मन्त्रेण

* नाराचमुद्रालक्षणम्—शारदातिलके— 'अङ्गुष्ठतर्जन्यग्राभ्यां स्फोटो नाराचमुद्रिका' इति ॥

सुषुम्ना* वर्त्मना ब्रह्मरन्ध्रस्थपरमात्मनि संयोज्य, तत्र 'लं वं रं यं हं' इति पञ्चभूतबीजप्राणायामेन पृथिव्यप्तेजोवाय्वाकाश-तत्त्वानि क्रमात् लीनानि विचिन्त्य, 'यं' इति वायुबीजोत्थवायुना वामकुक्षिस्थपापपुरुषेण सह देहं संशोष्य, 'रं' इत्यग्निबीजोत्थवह्निना तनुं सन्दह्य, 'वं' इत्यमृतबीजोत्थामृताम्भसा तद्देहभस्म सम्प्लाव्य, 'लं' इति भूबीजेन घनीकृत्य, 'शुद्धचिन्मयोऽहं, ब्रह्माहमस्मि' इति चिरं भावयेत् ॥ तस्मात्परमात्मनः सकाशात्सृष्टिक्रमेण 'हं' इत्याकाशबीजेन शुद्ध-देहोत्पत्तिं विभावयेत्— 'तस्मात्सर्वज्ञात्सर्वशक्तेः परब्रह्मणः सकाशात्प्रकृतिः । प्रकृतेर्महान् । महतोऽहङ्कारः । अहङ्कारादाकाशः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नाद्रेतः । रेतसः पुरुषः । स वा एष पुरुषोऽन्नरसमयः ॥' इति विभाव्य पुनर्जीवात्मानं 'सोऽहं' इति मन्त्रेण सुषुम्ना-नाडीमार्गेण ब्रह्मरन्ध्रादानीय हृत्कमले प्रतिष्ठाप्य कुण्डलिनीं मूलाधारगतां स्मरेत् ॥ इति भूतशुद्धिः ॥ ॥ येभ्यो माता इत्यस्य गयःप्लातो विश्वेदेवा जगती । एवा पित्र इत्यस्य वामदेवो बृहस्पतिर्विश्वेदेवास्त्रिष्टुप् । मनुष्यगन्धनिवारणे विनियोगः ॥ 'ॐ येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः । उक्थ शुष्मान्वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनुमदा स्वस्तये ॥ एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः । बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम् ॥' इति मनुष्यगन्धनिवारणम् ॥ ॥ अथ प्राणप्रतिष्ठा ॥ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा

---

* 'इडा वामे स्थिता नाडी पिङ्गला दक्षिणे स्थिता । तयोर्मध्यगता नाडी सुषुम्ना वंशमाश्रिता ॥'
वंशम्=पृष्ठवंशम् । आश्रिता=अन्तर्गता । —इति शारदातिलके ॥

ऋषयः । ऋग्यजुःसामाथर्वाणि छन्दांसि । सकलसुखकरी प्राणशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । मम अन्तःशरीरशुद्ध्यर्थे जपे विनियोगः ॥ अं कं खं गं घं ङं आकाशवायुतेजोजलपृथिव्यात्मने आं अङ्गुष्ठाभ्यां नमः हृदयाय नमः । इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः शिरसे स्वाहा । उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षु-र्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां नमः शिखायै वषट् । एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः कवचाय हुं । ओं पं फं बं भं मं प्राणापानव्यानोदानसमानात्मने औं कनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट् । अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तविज्ञानात्मने अः करतलकरपृष्ठाभ्यां नमः अस्त्राय फट् ॥ रक्ताम्भोधिस्थपोतोल्लसद-रुणसरोजाधिरूढा कराब्जैः पाशं कोदण्डमिक्षुं त्वभयवरगुणानङ्कुशं पञ्च बाणान् । बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ 'ॐ आं ह्रीं क्रों यरलवशषसहों सं हं सः । मम प्राणा इह प्राणा मम जीव इह स्थितः । मम सर्वेन्द्रियाणि वाङ्मनश्चक्षुश्श्रोत्र [जिह्वा] घ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा' इति हृदयं स्पृष्ट्वा त्रिः सकृद्वा जपेत् ॥ ॐ असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् । ज्योक्प-श्येम सूर्यमुच्चरन्तमनुमते मृडया नः स्वस्ति ॥ 'गर्भाधानादिपञ्चदशसंस्कारसिद्ध्यर्थे पञ्चदश प्रणवावृत्तीः करिष्ये' इत्युक्त्वा 'ॐ'कारं पञ्चदशवारं जपेत् ॥ इति प्राणप्रतिष्ठा* ॥

---

* अथ सङ्क्षेपप्राणप्रतिष्ठा — अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य प्राणस्थापने विनियोगः ॥ 'ॐ आं ह्रीं क्रों यरलवशषसहों सं हं सः मम प्राणाः । स्वाहा ॥' इति हृदयं स्पृष्ट्वा त्रिः सकृद्वा जपेत् ॥ इति प्राणप्रतिष्ठा ॥

अथान्तर्मातृकान्यासः ॥ अस्य श्री अन्तर्मातृकासरस्वतीमन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । अन्तर्मातृका सरस्वती देवता । हलो बीजानि । स्वराः शक्तयः । बिन्दवः कीलकम् । अन्तर्मातृकान्यासे विनियोगः ॥ ब्रह्मर्षये नमः शिरसि । गायत्रीछन्दसे नमः मुखे । अन्तर्मातृकासरस्वतीदेवतायै नमः हृदये । हल् बीजेभ्यो नमः गुह्ये । स्वरशक्तिभ्यो नमः पादयोः । बिन्दुकीलकाय नमः सर्वाङ्गे ॥ ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः । ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः । ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः । ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः । ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः । ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि न्यासः ॥ ॐ अं नमः । ॐ आं नमः । एवमेव— इं ईं उं ऊं ऋं ॠं एं ऐं ओं औं अं अः नमः षोडशवर्णान् प्रत्येकं नमोऽन्तान् 'कण्ठस्थाने' षोडशदलपद्मे न्यसामि ॥ ॐ कं खं गं घं ङं चं छं जं झं ञं टं ठं एतान् द्वादशवर्णान् प्रत्येकं नमोऽन्तान् 'हृदयस्थाने' द्वादशदलपद्मे न्यसामि ॥ ॐ डं ढं णं तं थं दं धं नं पं फं एतान् दशवर्णान् प्रत्येकं नमोऽन्तान् 'नाभिस्थाने' दशदलपद्मे न्यसामि ॥ ॐ बं भं मं यं रं लं एतान् षड्वर्णान् प्रत्येकं नमोऽन्तान् 'लिङ्गस्थाने' षड्दलपद्मे न्यसामि ॥ ॐ वं शं षं सं एतान् चतुर्वर्णान् प्रत्येकं नमोऽन्तान् 'आधारस्थाने' चतुर्दलपद्मे न्यसामि ॥ ॐ हं क्षं एतौ वर्णौ प्रत्येकं नमोऽन्तौ 'भ्रूमध्यगते' द्विदलपद्मे न्यसामि ॥ आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के । वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ बन्धूकाभां त्रिनेत्रां पृथुजघनलसत्कुक्षिमारक्तवस्त्रां पीनोत्तुङ्गप्रवृद्धस्तनजघनभरां यौवनारम्भ-

रूढाम् । सर्वालङ्कारयुक्तां सरसिजवदनामिन्दुसङ्क्रान्तमौलिमम्बां पाशाङ्कुशेष्टाभयवरदकरामम्बिकां तां नमामि ॥
इति अन्तर्मातृकान्यासः ॥

अथ बहिर्मातृकान्यासः ॥ अस्य श्री बहिर्मातृकासरस्वतीमन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । बहिर्मातृका सरस्वती देवता । हलो बीजानि । स्वराः शक्तयः । विन्दवः कीलकम् । बहिर्मातृकान्यासे विनियोगः ॥ ब्रह्मर्षये नमः शिरसि । गायत्रीछन्दसे नमः मुखे । बहिर्मातृकासरस्वतीदेवतायै नमः हृदये । हल् बीजेभ्यो नमः गुह्ये । स्वरशक्तिभ्यो नमः पादयोः । बिन्दुकीलकाय नमः सर्वाङ्गे ॥ ॐ अं नमः ललाटे न्यसामि । ॐ आं नमः मुखवृत्ते० । ॐ इं नमः दक्षनेत्रे० । ॐ ईं नमः वामनेत्रे० । ॐ उं नमः दक्षिणकर्णे० । ॐ ऊं नमः वामकर्णे० । ॐ ऋं नमः दक्षिणनासापुटे० । ॐ ॠं नमः वामनासापुटे० । ॐ ऌं नमः दक्षिणगण्डे० । ॐ ॡं नमः वामगण्डे० । ॐ एं नमः ऊर्ध्वोष्ठे० । ॐ ऐं नमः अधरोष्ठे० । ॐ ओं नमः ऊर्ध्वदन्तपङ्क्तौ० । ॐ औं नमः अधरदन्तपङ्क्तौ० । ॐ अं नमः शिरसि० । ॐ अः नमः मुखे० । ॐ कं नमः दक्षबाहुमूले० । ॐ खं नमः दक्षकूर्परे० । ॐ गं नमः दक्षमणिबन्धे० । ॐ घं नमः दक्षाङ्गुलि मूले० । ॐ ङं नमः दक्षाङ्गुल्यग्रे० । ॐ चं नमः वामबाहुमूले० । ॐ छं नमः वामकूर्परे० । ॐ जं नमः वाममणि बन्धे० । ॐ झं नमः वमाङ्गुलिमूले० । ॐ ञं नमः वामाङ्गुल्यग्रे० । ॐ टं नमः दक्षपादमूले० । ॐ ठं नमः दक्ष जानुनि० । ॐ डं नमः दक्षगुल्फे० । ॐ ढं नमः दक्षपादाङ्गुलिमूले० । ॐ णं नमः दक्षपादाङ्गुल्यग्रे० । ॐ तं नमः वामपादमूले० । ॐ थं नमः वामजानुनि० । ॐ दं नमः वामगुल्फे० । ॐ धं नमः वामपादाङ्गुलिमूले० । ॐ नं नमः

वामपादाङ्गुल्यग्रे० । ॐ पं नमः दक्षपार्श्वे० । ॐ फं नमः वामपार्श्वे० । ॐ बं नमः पृष्ठे० । ॐ भं नमः नाभौ० । ॐ मं नमः जठरे० । ॐ यं नमः हृदये० । ॐ रं नमः दक्षांसे० । ॐ लं नमः ककुदि० । ॐ वं नमः वामांसे० । ॐ शं नमः हृदादिदक्षहस्तान्ते० । ॐ षं नमः हृदादिवामहस्तान्ते० । ॐ सं नमः हृदादिदक्षपादान्ते० । ॐ हं नमः हृदादिवामपादान्ते० । ॐ ळं नमः जठरे० । ॐ क्षं नमः मुखे न्यसामि ॥ अथ ध्यानम्— 'पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षोदेशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् । अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ ॐ चत्वारि वाक्परिमिता पदानि । तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति ॥' इति बहिर्मातृकान्यसः ॥

अथ पुरुषसूक्तन्यासः ॥ ॐ सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ॥ वामकराय नमः ॥ ॐ पुरुष एवेदꣳसर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति ॥ दक्षिणकराय० ॥ ॐ एतावानस्य महिमा । अतो ज्यायाꣳश्च पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ॥ वामपादाय० ॥ ॐ त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुनः । ततो विष्वङ्व्यक्रामत् । साशनानशने अभि ॥ दक्षिणपादाय० ॥ ॐ तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥ वामजङ्घाय० ॥ ॐ यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्धविः ॥ दक्षिणजङ्घाय० ॥ ॐ सप्तास्यासन्परिधयः । त्रिःसप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन्पुरुषं पशुम् ॥

वामकट्यै० ॥ ॐ तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः । तेन देवा अयजन्त । साध्या ऋषयश्च ये ॥ दक्षिण-कट्यै० ॥ ॐ तस्माद्यज्ञात्सर्वहुतः । सम्भृतं पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये । नाभ्यै० ॥ ॐ तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे । छन्दाँसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ हृदयाय० ॥ ॐ तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥ कण्ठाय० ॥ ॐ यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरूपादावुच्येते ॥ वामबाहवे० ॥ ॐ ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः । पद्भ्याँ शूद्रो अजायत । दक्षिणबाहवे० ॥ ॐ चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥ वामनेत्राय० ॥ ॐ नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाँ अकल्पयन् ॥ दक्षिणनेत्राय० ॥ ॐ वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन्यदास्ते ॥ वामकर्णाय० ॥ ॐ धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥ दक्षिणकर्णाय० ॥ ॐ यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥ शिरसे नमः ॥ इति पुरुषसूक्तन्यासः ॥

अथ कलशार्चनम् ॥ स्ववामे जलकुम्भं निधाय 'ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो

ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः । अत्र गायत्री सावित्री शान्तिःपुष्टिकरी तथा ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ ॐ कलशदेवताभ्यो नमः जलगन्धाद्युपचारान्समर्पयामि' इति सम्पूज्य *धेनुमुद्रां प्रदर्श्य 'सितमकरनिषण्णां शुभ्रवर्णां त्रिणेत्रां करधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम् । विधिहरिहररूपां सेन्दुकोटीरचूडां भसितसितदुकूलां जाह्नवीं तां नमामि' इति प्रणमेत् ॥ ॥ अथ ×शङ्खार्चनम् ॥ 'ॐ अस्त्राय फट्' इति साधारं शङ्खं प्रक्षाल्य देवस्य पुरतः स्ववामे चतुरस्रं त्रिकोणं वा मण्डलं कृत्वा 'ॐ व्यापकमण्डलाय नमः' इति सम्पूज्य तत्राधारं निधाय 'मं वह्निमण्डलाय धर्मप्रददशकलात्मने नमः' इति सम्पूज्य तदुपरि शङ्खं निधाय 'अं अर्कमण्डलायार्थप्रदद्वादश-कलात्मने नमः' इति सम्पूज्य 'ॐ' इति जलमापूर्य 'उं सोममण्डलाय कामप्रदषोडशकलात्मने नमः' इति गन्धपुष्पादिभिः अभ्यर्च्य, +शङ्खमुद्रां प्रदर्श्य 'शङ्खादौ चन्द्रदैवत्यं मध्ये वरुणदेवता । पृष्ठे प्रजापतिस्तत्र अग्रे गङ्गासरस्वती' इति स्मृत्वा, 'ॐ पाञ्चजन्याय विद्महे पद्मगर्भाय धीमहि । तन्नः शङ्खः प्रचोदयात्' इति त्रिवारमभिमन्त्र्य 'ॐ त्वं पुरा सागरोत्पन्नो

---

* 'अन्योन्याभिमुखाऽऽश्लिष्टा कनिष्ठानामिका पुनः । तथैव तर्जनीमध्या धेनुमुद्रा प्रकीर्तिता ॥' —इति पूजापङ्कजभास्करे ॥

× 'त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया । शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत् ॥' —इतिशङ्खपूजाकर्तव्यपरम् ॥

+ 'वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना । कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥ वामाङ्गुल्यस्तथाऽऽश्लिष्टाः संयुक्ताः सम्प्रसारिताः । दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रैषा शङ्खसञ्ज्ञिता ॥' —इति बालबोधे ॥

विष्णुना विधृतः करे । रक्षार्थं सर्वदेवानां पाञ्चजन्य नमोऽस्तु ते ॥ गर्भा देवारिनारीणां व्यशीर्यन्ते सहस्रधा । तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥ विलयं यान्ति पापानि हिमवद्भास्करोदये । दर्शनादेव शङ्खस्य किं पुनः *स्पर्शनेन तु' इति स्तुत्वा, किञ्चिच्छङ्खोदकं कलशे निक्षिप्य, पुष्पपाणिर्देवं यागभूमिं पूजाद्रव्याण्यात्मानं च प्रोक्ष्य, पुनः शङ्खं जलेन पूरयित्वा देवस्य दक्षिणभागे स्थापयेत्× ॥ ॥ अथात्मार्चनम् ॥ गन्धपुष्पादीन्स्वमूर्ध्नि निक्षिप्य 'अच्युतोऽहमनन्तोऽहं ब्रह्मा' इत्यात्मानं ध्यायेत्— 'ॐ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' इति ध्यात्वा, 'ॐ आत्मने नमः । ॐ अन्तरात्मने० । ॐ परमात्मने० । ॐ ज्ञानात्मने नमः' इति सम्पूज्य, शिरस्थपुष्पमाघ्राय स्वदक्षिणे विसृजेत् ॥ ॥ अथ पञ्चामृतविधिः ॥ आदौ+ पात्रासादनम् ॥ देवाग्रे= स्वदक्षिणे चतुर्दिक्षु मध्ये च चतुरस्रं विलिख्य, तत्पञ्चकोष्ठेषु प्रस्थमितशालीतण्डुलान्निक्षिप्य, तन्मध्ये क्षीरं, पूर्वे दधि, दक्षिणे घृतं, पश्चिमे मधु, उत्तरे

---

* 'नत्वा शङ्खं करे धृत्वा मन्त्रैरेव तु वैष्णवैः । यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम् ॥' —इदं महाभिषेकफलपरम् ॥

× 'शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि । अङ्गलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ॥' —इदं पूजान्ते शङ्खजलसेचनपरम् ॥

+ अर्चारत्नावल्यादिषु आत्मार्चनान्ते पात्रासादनादिकमुक्तम् ॥

= 'देवाग्रे स्थण्डिलं कुर्यात्' इत्यादि पञ्चामृतविधानं वातुलागमेऽभिहितम् ॥



पञ्चामृतमण्डलम्

शर्करामिति पञ्च द्रव्याणि संस्थाप्य, तेषु क्रमेण सोमादिपञ्च देवता आवाह्य पूजयेत्— अस्य श्रीपञ्चद्रव्यदेवतामन्त्रस्य । गौतमवामदेवपरमेष्ठीप्रजापतिविश्वामित्रा ऋषयः । गायत्र्यनुष्टुब्बृहतीगायत्रीगायत्र्यश्छन्दांसि । सोमवायुरविविश्वेदेवसवितारो देवताः । पञ्चद्रव्यदेवतापूजने विनियोगः ॥ 'ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम् । भवा वाजस्य सङ्गथे ॥ ॐ भूर्भुवःसुवः सोमाय नमः सोममावाहयामि ॥ ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखा-करत्प्रण आयुꣳषितारिषत् ॥ ॐ भूर्भुवःसुवः वायवे नमः वायुमावाहयामि ॥ ॐ शुक्रमसि ज्योतिरसि तेजोऽसि देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ॥ ॐ भूर्भुवःसुवः रवये नमः रविमावाहयामि ॥ ॐ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवꣳरजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐ भूर्भुवःसुवः विश्वेभ्यो देवेभ्यो नमः विश्वान्देवान् आवाहयामि ॥ ॐ तत्सवितुर्वरेण्यं ... प्रचोदयात् ॥ ॐ भूर्भुवःसुवः सवित्रे नमः सवितारमावाहयामि' इत्यावाह्य, 'पञ्चद्रव्यदेवताभ्यो नमः आसनं समर्पयामि' इत्यादिषोडशोपचारैः सम्पूज्य समर्पयेत् ॥ ॥ अथ मण्डपार्चनम् ॥ 'उद्यत्पत्रफलातिनम्रविलसद्रम्भाभिरालिङ्गितस्तम्भं चारुदलै रसालविटपैः सर्वत्र संवेष्टितम् । राजच्चामरसम्प्रबद्धमुकुरोदञ्च-द्वितानान्वितं युक्तं पुष्पफलैरलङ्कृतमिदं ध्यायेन्महामण्डपम्' इति ध्यात्वा 'ॐ मण्डपदेवताभ्यो नमः' इति मण्डपं, 'ॐ *द्वारदेवताभ्यो नमः' इति द्वारं च समर्चयेत् ॥ ॥ अथ द्वारपालपूजा ॥ ॐ धात्रे नमः विधात्रे नमः । पूर्वद्वार-

* पूजापङ्कजभास्करे ॥

लक्ष्म्यै नमः ॥ ॐ चण्डाय० प्रचण्डाय० । दक्षिणद्वारलक्ष्म्यै नमः ॥ ॐ बलाय० प्रबलाय० । पश्चिमद्वारलक्ष्म्यै नमः ॥ ॐ शङ्खनिधये० पद्मनिधये० । उत्तरद्वारलक्ष्म्यै नमः ॥ ॥ अथ पीठपूजा ॥ पीठस्योत्तरे— ॐ गुं गुरुभ्यो नमः ॥ पीठस्य दक्षिणे— ॐ गं गणपतये नमः ॥ ततः पीठं पूजयेत्— ॐ आधारशक्त्यै नमः । मूलप्रकृत्यै० । आदिकूर्माय० । अनन्ताय० । वराहाय० । पृथिव्यै० । क्षीरसमुद्राय० । श्वेतद्वीपाय० । मणिमण्डपाय० । कल्पवृक्षाय० । हेमवेदिकायै० । रत्नसिंहासनाय० । धर्माय० । ज्ञानाय० । वैराग्याय० । ऐश्वर्याय० । अधर्माय० । अज्ञानाय० । अवैराग्याय० । अनैश्वर्याय० । सर्वतत्त्वपद्माय० । आनन्दकन्दाय० । संविन्नालाय० । विकारमयकेसरेभ्यो० । प्रकृतिमयपत्रेभ्यो० । पञ्चाशद्वर्णकर्णिकायै० । अं अर्कमण्डलाय द्वादशकलात्मने० । उं सोममण्डलाय षोडशकलात्मने० । मं वह्निमण्डलाय दशकलात्मने० । सं सत्त्वाय० । रं रजसे० । तं तमसे० । आं आत्मने० । अं अन्तरात्मने० । पं परमात्मने० । ह्रीं ज्ञानात्मने नमः' इति पीठदेवताः पूजयेत् ॥ [*'ॐ आधारशक्त्यादिपीठदेवताभ्यो नमः' इति वा पूजयेत्] ॥ ॥ अथ ×पञ्चमूर्तिपूजा ॥ +रविर्विनायकश्चण्डी ईशो विष्णुस्तु पञ्चमः । अनुक्रमेण पूज्यन्ते व्युत्क्रमे तु महद्भयम् ॥

---

* पूजापङ्कजभास्करे ॥

× 'शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करेभास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापयेत् । देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरेनार्याः शङ्करभागतोऽतिसुखदा व्यस्तास्तु हानिप्रदाः' इति भोपदेवोक्तेः पञ्चमूर्तीनां कल्पितप्राधान्येन पञ्चधा विन्यासो

**अथ सूर्यपूजा ॥ पीठस्याष्टदिक्षु मध्ये च नवशक्तीः पूजयेत् ॥ आदौ नवशक्तिपूजा— ॐ दीप्तायै नमः । सूक्ष्मायै० । जयायै० । भद्रायै० । विभूत्यै० । विमलायै० । अमोघायै० । विद्युतायै० । सर्वतोमुख्यै नमः । इति नवशक्तिपूजा ॥ 'ॐ ब्रह्मविष्णुशिवात्मकाय सौराय योगपीठाय नमः सुवर्णपीठं कल्पयामि' इति पीठं प्रकल्प्य तत्र देवं**

---

ज्ञेयः । तत्र स्वाभीष्टदेवताप्रधानं विन्यासं कृत्वा तत्क्रमेणैव पूजयेत् । पूर्वदिशा—

| १ शिवः | २ विष्णुः | ३ रविः | ४ देवी | ५ गणेशः |
|---|---|---|---|---|
| २ विष्णुः ३ रविः | २ शिवः ३ गणेशः | २ शिवः ३ गणेशः | २ विष्णुः ३ शिवः | २ विष्णुः ३ शिवः |
| १ शिवः | १ विष्णुः | १ रविः | १ देवी | १ गणेशः |
| ५ देवी ४ गणेशः | ५ देवी ४ रविः | ५ देवी ४ विष्णुः | ५ रविः ४ गणेशः | ५ देवी ४ रविः |

+ 'गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा । द्वे चक्रे द्वारकायास्तु नार्चेत्सूर्यद्वयं तथा ॥ शक्तित्रयं त्रिविघ्नेशं द्वौ शङ्खौ नार्चयेत् सुधीः । नार्चयेच्च तथा मत्स्यकूर्मादिदशकं गृहे ॥ भग्ना वा स्फुटिता वाऽपि शालग्रामशिला शुभा । शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि ॥ विषमा नैव पूज्यन्ते विषमे त्वेक एव हि' इत्यनेकदेवतासङ्ग्रहे नियम उक्तो धर्मसिन्धौ ॥ 'शालग्रामं तु गण्डक्यां नर्मदायां शिवं तथा । गणेशं शोणभद्रायां भानुमत्यां रविं तथा ॥ कुमुद्वत्यामम्बिकां च गृह्णीयाद्द्विजपुङ्गवः' इति देवताशिलासङ्ग्रहे विशेषः प्रोक्तः स्मृतिसारसमुच्चये ॥

ध्यात्वाऽऽवाहयेत्– 'स्वात्मसंस्थमजं शुद्धं त्वामद्य सुदिवाकर । अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥ ॐ भूर्भुवः सुवरों सशक्तिसाङ्गसायुधसवाहनसपरिवारश्रीसूर्यभगवन्नागच्छागच्छों आवाहयामि' इत्यावाह्य *'आवाहितो भव । संस्थापितो भव । सन्निहितो भव । सन्निरुद्धो भव । सम्मुखीकरणो भव । सुप्रसन्नो भव' इति षण्मुद्राः प्रदर्शयेत्× ॥ 'ॐ भास्कराय विद्महे महद्द्युतिकराय धीमहि । तन्नो आदित्यः प्रचोदयात्' इति सूर्यगायत्रीं जपेत् ॥ अस्य श्रीसूर्याष्टाक्षरमन्त्रस्य देवभाग ऋषिः । गायत्री छन्दः । सूर्यो देवता । ॐ बीजं । ह्रीं शक्तिः । न्यासे विनियोगः ॥ ॐ सत्यतेजोज्वालामणे हुं फट् स्वाहा हृदयाय नमः । ॐ ब्रह्मतेजोज्वालामणे हुं फट् स्वाहा शिरसे स्वाहा । ॐ विष्णुतेजोज्वालामणे हुं फट् स्वाहा शिखायै वषट् । ॐ रुद्रतेजोज्वालामणे हुं फट् स्वाहा कवचाय हुम् । ॐ अग्नितेजोज्वालामणे हुं फट् स्वाहा नेत्रत्रयाय वौषट् । ॐ सर्वतेजोज्वालामणे हुं फट् स्वाहा अस्त्राय फट् ॥ इत्यङ्गन्यासः ॥ 'अरुणोऽरुणपङ्कजे निषण्णः

---

* 'हस्ताभ्यामञ्जलिं बध्वाऽऽनामिकामूलपर्वणोः । अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता ॥ अधोमुखी त्वियं चेत्स्यात्स्थापनी मुद्रिका स्मृता । उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात्सन्निधापिनी ॥ अन्तः प्रवेशिताङ्गुष्ठा सैव संरोधिनी मता । उत्तानमुष्टियुगळा सम्मुखीकरणी मता' इति पूजापङ्कजभास्करे ॥ 'हृद्यञ्जलिबन्धनं प्रार्थनामुद्रा' इति मन्त्रमहोदधौ ॥ अत्र केचित् तु 'अवकुण्ठितो भव । अमृतीकरणो भव । व्याप्तो भव । वरदो भव । क्षमस्व सान्निध्यं कुरु' इत्यधिकं पठन्ति ॥

× यन्त्रादिषु प्राणप्रतिष्ठां कुर्यात् ॥

कमलेऽभीतिवरौ करैर्दधानः । स्वरुचाहितमण्डलस्त्रिनेत्रो रविराकल्पशताकुलोऽवतान्नः ॥' इति ध्यानम् ॥ 'ॐ घृणिः सूर्य आदित्यः ॥' इति जपम् ॥ ॥ अथ *पञ्चोपचारपूजा— लं पृथिव्यात्मने नमः गन्धं समर्पयामि । हं आकाशात्मने नमः पुष्पं० । यं वाय्वात्मने नमः धूपं० । रं तेजोमयात्मने नमः दीपं० । वं अमृतात्मने नमः नैवेद्यं समर्पयामि ॥ इति पञ्चोपचारपूजा ॥ ॥ अथ द्वादशनामपूजा— ॐ सहस्रकिरणाय नमः । सूर्याय० । तपनाय० । सवित्रे० । रवये० । विकर्तनाय० । जगच्चक्षुषे० । द्युमणये० । तिग्मदीधितये० । द्वादशात्मने० । त्रयीमूर्तये० । ब्रह्मविष्णु-शिवात्मकाय नमः ॥ इति द्वादशनामपूजां कृत्वा धूपदीपादिसमर्पणान्तं कुर्यात् ॥ इति सूर्यपूजा ॥

अथ गणपतिपूजा ॥ पीठस्याष्टदिक्षु मध्ये च नवशक्तीः पूजयेत् ॥ अथ नवशक्तिपूजा— ॐ तीव्रायै नमः । ज्वालिन्यै० । नन्दायै० । भोगदायै० । कामरूपिण्यै० । उग्रायै० । तेजोवत्यै० । सत्यायै० । विघ्ननाशिन्यै नमः । इति नवशक्तिपूजा ॥ 'ॐ गं सर्वशक्तिकमलासनाय नमः सुवर्णपीठं कल्पयामि' इति पीठं प्रकल्प्य तत्र देवं ध्यात्वा आवाहयेत्— 'ॐ स्वात्मसंस्थमजं शुद्धं त्वामद्य गणनायक । अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥ ॐ भूर्भुवःसुवरों सशक्तिसाङ्गसायुधसवाहनसपरिवारश्रीगणेशभगवन्नागच्छागच्छों आवाहयामि' इत्यावाह्य 'आवाहितो भव' इत्यादिषण्मुद्राः प्रदर्शयेत् ॥ 'ॐ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात्' इति गणेशगायत्रीं जपेत् ॥ अस्य

* तत्तद्देवतागायत्र्या वा मूलमन्त्रेण वा पञ्चोपचारैर्वा षोडशोपचारैर्वा पूजयेत् ॥

श्रीगणपत्येकाक्षरमन्त्रस्य गणक ऋषिः । निचृद्गायत्री छन्दः । श्रीगणपतिर्देवता । गकारो बीजम् । बिन्दुः शक्तिः । न्यासे विनियोगः ॥ ॐ गां हृदयाय नमः । ॐ गीं शिरसे स्वाहा । ॐ गूं शिखायै वषट् । ॐ गैं कवचाय हुम् । ॐ गौं नेत्रत्रयाय वौषट् । ॐ गः अस्त्राय फट् ॥ 'रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्त-नासः । हस्ताग्राक्लृप्तपाशाङ्कुशरदवरदो नागवक्त्रोऽहिभूषो देवः पद्मासनो नो भवतु सुरनुतो भूतये विघ्नराजः' इति ध्यानम् ॥ 'ॐ गं नमः' इति जपम् ॥ ततः पूर्वोक्तप्रकारेण 'लं पृथिव्यात्मने नमः' इत्यादिपञ्चोपचारपूजां कुर्यात् ॥ अथ द्वादशनामपूजा— ॐ सुमुखाय नमः । एकदन्ताय० । कपिलाय० । गजकर्णकाय० । लम्बोदराय० । विकटाय० । विघ्नराजाय० । गणाधिपाय० । धूम्रकेतवे० । गणाध्यक्षाय० । भालचन्द्राय० । गजाननाय नमः ॥ इति द्वादशनाम-पूजा ॥ ॥ ततो धूपदीपादिसमर्पणान्तं कुर्यात् ॥ इति गणपतिपूजा ॥

अथ दुर्गापूजा ॥ आदौ पीठस्याष्टदिक्षु मध्ये च नवशक्तीः पूजयेत् ॥ ॐ प्रभायै नमः । मायायै० । जयायै० । सूक्ष्मायै० । विशुद्धायै० । नन्दिन्यै० । सुप्रभायै० । विजयायै० । सर्वसिद्धिदायै नमः ॥ इति नवशक्तिपूजा ॥ ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुं नमः सुवर्णपीठं कल्पयामि ॥ ॐ स्वात्मसंस्थामजां शुद्धां त्वामद्य परमेश्वरि । अरण्यामिव हव्याशं मूर्तावावाहयाम्यम् ॥ ॐ भूर्भुवःसुवरों सशक्तिसासाङ्गायुधसवाहनसपरिवारश्रीदुर्गे भगवत्यागच्छागच्छ आवाहयामि' ॥ इत्यावाह्य ॥ 'आवाहिता भव' इत्यादिषण्मुद्राः प्रदर्शयेत् ॥ ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥ इति दुर्गागायत्रीं जपेत् ॥ अस्य श्रीदुर्गाष्टाक्षरमन्त्रस्य । नारद ऋषिः । गायत्री

छन्दः । श्रीदुर्गा देवता । दुं बीजम् । ह्रीं शक्तिः । ॐ कीलकम् । न्यासे विनियोगः ॥ ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट् । ॐ ह्रैं कवचाय हुम् । ॐ ह्रौं नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्रायफट् । इत्यङ्गन्यासः ॥ शङ्खारिचापशरभिन्नकरां त्रिणेत्रां तिग्मेतरांशुकलया विलसत्किरीटाम् । सिंहस्थितां ससुरसिद्धनतां च दुर्गां दूर्वानिभां दुरितदुर्गहरां नमामि ॥ इति ध्यानम् ॥ ॐ ह्रीं दुं दुर्गायै नमः ॥ इति जपम् ॥ लं पृथिव्यात्मिकायै नमः गन्धं समर्पयामि । हं आकाशात्मिकायै० पुष्पं० । यं वाय्वात्मिकायै० धूपं । रं तेजोमयात्मिकायै० दीपं । वं अमृतात्मिकायै० नैवेद्यं० । इति पञ्चोपचारपूजां कुर्यात् ॥ अथ द्वादशनामपूजा— ॐ दुर्गायै नमः । शान्त्यै० । चण्डिकायै० । शाकम्भर्यै० भूतिदायिन्यै० । शङ्करप्रियायै० । नारायण्यै० । भद्रकाल्यै० । शिवदूत्यै० । महालक्ष्म्यै० । महामायायै० । योगनिद्रायै नमः । इति द्वादशनामपूजां कृत्वा धूपदीपादिसमर्पणान्तं कुर्यात् ॥ इति दुर्गापूजा ॥

अथ शिवपूजा ॥ पीठस्याष्टदिक्षु मध्ये च नवशक्तीः पूजयेत् ॥ अथ नवशक्तिपूजा– ॐ वामायै नमः । ज्येष्ठायै० । रौद्र्यै० । काल्यै० । कलविकलिन्यै० । बलविकलिन्यै० । बलप्रमथिन्यै० । सर्वभूतदमन्यै० । मनोन्मन्यै नमः । इति नवशक्तिपूजा ॥ ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः सुवर्णपीठं कल्पयामि । इति पीठं प्रकल्प्य, तत्र देवं ध्यात्वाऽऽवाहयेत्– ॐ 'स्वात्मसंस्थमजं शुद्धं त्वामद्य परमेश्वर । अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥ ॐ भूर्भुवःसुवरों सशक्तिसाङ्गसायुधसवाहनसपरिवार श्रीसदाशिव भगवन्नागच्छागच्छौं आवाहयामि' । इत्यावाह्य, 'आवाहितो भव' इत्यादिषण्मुद्राः प्रदर्शयेत् ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः

प्रचोदयात् ॥ इति रुद्रगायत्रीं जपेत् ॥ अस्य श्री शिवपञ्चाक्षरमन्त्रस्य । वामदेव ऋषिः । पङ्क्तिश्छन्दः । श्रीसदाशिवो देवता । यं बीजम् । नं शक्तिः । मं कीलकम् । न्यासे विनियोगः । ॐ ॐ हृदयाय नमः । ॐ नं शिरसे स्वाहा । ॐ मं शिखायै वषट् । ॐ शिं कवचाय हुम् । ॐ वां नेत्रत्रयाय वौषट् । ॐ यं अस्त्राय फट् ॥ इत्यङ्गन्यासः ॥ वन्दे हरं वरदशूलकपालहस्तं साभीतिमद्रिसुतयोज्ज्वलदेहकान्त्या । वामोरुपीठगतया निजवामहस्तन्यस्तारुणोत्पलयुजा परिरब्धदेहम् ॥ 'ॐ नमः शिवाय' इति जपम् ॥ 'लं पृथिव्यात्मने नमः' इत्यादिपञ्चोपचारपूजां कुर्यात् ॥ अथ द्वादशनामपूजा– ॐ महादेवाय नमः । महेश्वराय नमः । शङ्कराय० । वृषभध्वजाय० । कृत्तिवाससे० । कामाङ्गनाशनाय० । देवदेवेशाय० । श्रीकण्ठाय० । हराय० । पार्वतीपतये० । रुद्राय० । शिवाय नमः ॥ इति द्वादशनामपूजा ॥ ततो धूपदीपादिसमर्पणान्तं कुर्यात् ॥ इति शिवपूजा ॥

अथ विष्णुपूजा ॥ पीठस्याष्टदिक्षु मध्ये च नवशक्तीः पूजयेत् ॥ ॐ विमलायै नमः । उत्कर्षिण्यै० । ज्ञानायै० । क्रियायै० । योगायै० । प्रह्व्यै० । सत्यायै० । ईशानायै० । अनुग्रहायै नमः ॥ इति नवशक्तिपूजा ॥ ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपीठात्मने नमः । सुवर्णपीठं कल्पयामि ॥ इति पीठं प्रकल्प्य, तत्र देवं ध्यात्वाऽऽवाहयेत्– 'ॐ स्वात्मसंस्थमजं शुद्धं त्वामद्य पुरुषोत्तम । अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम्' ॥ ॐ भूर्भुवःसुवरोंसशक्तिसाङ्गसायुधसवाहनसपरिवार श्रीविष्णो भगवन्नागच्छागच्छों आवाहयामि, ॥ इत्यावाह्य 'आवाहितो भव' इत्यादिषण्मुद्राः प्रदर्शयेत् ॥ ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ इति गायत्रीं जपेत् ॥

अस्य श्री नारायणाष्टाक्षरमन्त्रस्य साध्यानारायण ऋषिः । देवीगायत्रीछन्दः । श्रीपरमात्मा देवता । हं बीजम् । ह्रीं शक्तिः । क्लीं कीलकम् । न्यासे विनियोगः ॥ ॐ क्रुद्धोल्काय स्वाहा हृदयाय नमः । ॐ महोल्काय स्वाहा शिरसे स्वाहा । ॐ वीरोल्काय स्वाहा शिखायै वषट् । द्युल्काय स्वाहा कवचाय हुम् । ज्ञानोल्काय स्वाहा नेत्रद्वयाय* वौषट् । ॐ सहस्रोल्काय स्वाहा अस्त्राय फट् ॥ इत्यङ्गन्यासः ॥ अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराजत्केयूरं कौस्तुभाभं शबलरुचिरहारं सपीताम्बरं च । नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराऽऽश्लिष्टपार्श्वं वन्दे दोःसक्तचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥ इति ध्यानम् ॥ 'ॐ नमो नारायणाय' इति जपम् ॥ 'लं पृथिव्यात्मने नमः' इत्यादिपञ्चोपचारपूजां कुर्यात् ॥ अथ द्वादशनामपूजा— ॐ केशवाय नमः । नारायणाय० । माधवाय० । गोविन्दाय० । विष्णवे० । मधुसूदनाय० । त्रिविक्रमाय० । वामनाय० । श्रीधराय० । हृषीकेशाय० । पद्मनाभाय० । दामोदराय नमः ॥ इति द्वादशनामपूजा ॥ ततो धूपदीपादिसमर्पणान्तं कुर्यात् ॥ इति विष्णुपूजा ॥

अथ षोडशोपचारपूजा ॥ आदौ भूशुद्धयादिषण्मुद्रादर्शनान्तं कृत्वा आसनाद्युपचारैः पूजयेत् ॥ सुवर्णरत्नसंयुक्तं शतसूर्यसमप्रभम् । रचितं मौक्तिकैर्दिव्यैर्गृह्यतामुत्तमासनम् ॥ ॐ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ इत्यासनं समर्पयामि ॥ गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम् । तोय

* 'बालबोधे— षडङ्गवैष्णवं यत्र तत्र नेत्रद्वयं भवेत्' इत्युक्तेः, अत्र विष्णुषडङ्गन्यासे नेत्रद्वयाय वौषडित्येव ज्ञेयम् ॥

मेतत्सुखस्पर्शं पाद्यार्थं* प्रतिगृह्यताम् ॥ ॐ हिरण्यवर्णाः शुचयः ... भवन्तु ॥ पाद्यं० ॥ गन्धपुष्पाक्षतोपेतं फलेन च समन्वितम् । हेमपात्रे स्थितं तोयं गृहाणार्घ्यं नमोऽस्तु ते ॥ ॐ यासाᳫराजा ... भवन्तु ॥ अर्घ्यं० ॥ कर्पूरोशीरसुरभि शीतलं त्वतिनिर्मलम् । गङ्गायास्तु समानीतं गृहाणाचमनीयकम् ॥ ॐ यासां देवा ... भवन्तु ॥ आचमनीयम्०× ॥ (ततो देवं पृथगभिषेकपात्रेऽवतारयित्वाऽभिषेकं कुर्यात्)

अथ पञ्चामृताभिषेकः+ ॥ आदौ मलापकर्षणस्नानं करिष्ये ॥ जाह्नवीजलमत्यन्तं पवित्रकरणं परम् । दत्तं मलापकर्षार्थं स्नानं कुरु जगत्पते ॥ ॐ आपोहिष्ठा ... इति तिसृभिः । मलापकर्षणस्नानं समर्पयामि ॥ क्षीरेण स्नापयिष्ये— कामधेनु-समुद्भूतं सर्वेषां जीवनं पयः पावनं यज्ञहेतुश्च स्नानार्थं प्रतिगृह्यताम् ॥ ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम् ः

---

* शारदायाम्— "पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्तिभिरीरितम् । गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ॥ सदूर्व्यैः सर्वदेवानामेतदर्घ्य दीरितम् ॥ जातीलवङ्गकङ्कोलैरिदमाचमनीयकम्" इत्युक्तम् ॥ पाद्यं देवस्य पादयोः, अर्घ्यं हस्तयोः, आचमनं च मुखे दद्यात् ॥

× आचमनम्— 'स्नाने वस्त्रोपवीते च नैवेद्यान्तेऽपि तत्स्मृतम्' ॥

\+ आगमसङ्ग्रहे— क्षीरेण क्षीयते पापं दध्ना धनविवर्धनम् । घृतेनायुष्करं प्रोक्तं मधुना हन्ति किल्बिषम् ॥ शर्करा सर्वसिद्धिः स्यात् पंचामृतफलं स्मृतम्' ॥ इति ॥

भवा वाजस्य सङ्गथे ॥ क्षीरस्नानं समर्पयामि ॥ शुद्धोदकेन स्नापयिष्ये— ॐ यदापो अघ्न्या वरुणेति शपामहे । ततो वरुण नो मुञ्च ॥ शुद्धोदकस्नानं स० ॥ दध्ना स्ना०— पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥ ॐ दधिक्राव्णो ... आयूंषि तारिषत् । दधिस्नानं स० ॥ शुद्धोदकेन०— ॐनिषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ शुद्धोदकस्नानं स० ॥ घृतेन स्ना०— नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं० ॥ ॐ शुक्रमसि ज्योतिरसि ... सूर्यस्य रश्मिभिः ॥ घृतस्नानं स० ॥ शुद्धोदकेन० । ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ शुद्धोदकस्नानं स० ॥ मधुना स्ना०— तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु । तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ मधु वाता ... भवन्तु नः (इति त्रिभिः) मधुस्नानं स० ॥ शुद्धोदकेन स्ना०— यच्चिद्धि ते विशो यथा प्रदेव वरुण व्रतम् । मिनीमसि द्यविद्यवि ॥ शुद्धोदकस्नानं स० ॥ शर्करया स्ना०— इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं० ॥ ॐ तत्सवितुर्वरेण्यं ... यात् ॥ शर्करास्नानं स० ॥ शुद्धोदकेन स्ना० ॐ उदुत्तमं मुमुग्धि नो विपाशं मध्यमं चृत । अवाधमानि जीवसे ॥ शुद्धोदकस्नानं स० ॥ क्षीरं दधि घृतं चैव मधु शर्करयाऽन्वितम् । पञ्चामृतं गृहाणेदं जगन्नाथ नमोऽस्तु ते ॥ पञ्चामृत स्नानं समर्पयामि ॥ अथ पञ्चोदकस्नानम् ॥ गन्धोदकेन स्नापयिष्ये— कर्पूरैलासमायुक्तं सुगन्धद्रव्यसंयुतम् । गन्धोदकं मया दत्तं स्नानार्थं० ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीᳵ सर्वभूतानां तामिहोपह्वये श्रियम् ॥ गन्धोदकस्नानं० ॥ कुशोदकेन स्ना०— सुगन्धद्रव्यसम्मिश्रं कुशाग्रेण समन्वितम् । कुशोदकं मया दत्तं

स्नानार्थं० ॥ ॐ पवित्रमर्को रजसो विमानः । पुनाति देवानां भुवनानि विश्वा । सुवर्ज्योतिर्यशो महत् । अशीमहि गाधमुत प्रतिष्ठाम् ॥ कुशोदकस्नानं० ॥ पुष्पोदकेन स्ना०— नानापरिमळद्रव्यैः सुपुष्पैश्च समन्वितम् । पुष्पोदकं मया दत्तं स्नानार्थं० ॥ ॐ पुष्पावतीः प्रसूवतीः फलिनीरफला उत । अश्वा इव सजित्वरीः वीरुधः पारयिष्णवः ॥ पुष्पोदकस्नानं० ॥ फलोदकेन स्ना०— सुफलैश्च फलोदैश्च फलानां च रसैर्युतम् । फलोदकं मया दत्तं स्नानार्थं० ॥ ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥ फलोदकस्नानं स० ॥ रत्नोदकेन स्ना०— स्वर्णैर्मुक्ताफलैर्नानारत्नैश्चैव समन्वितम् । रत्नोदकं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ बृहस्पते जुषस्व नो हव्यानि विश्वदेव्या । रास्व रत्नानि दाशुषे ॥ रत्नोदकस्नानं० ॥ इति पञ्चोदकस्नानम् ॥ ततः पञ्चोपचारपूजां कुर्यात् ॥ इति पञ्चामृताभिषेकः ॥

अथ महाभिषेकः—* गङ्गा गोदावरी रेवा पयोष्णी यमुना तथा । सरस्वत्यादितीर्थानि स्नानार्थं० ॥ ॐ शिवेन मा ... बलमोजो निधत्त ॥ स्नानं+ समर्पयामि ॥ ततस्तत्तद्देवतासूक्तादिभिरभिषिञ्चेत् ॥

---

* 'महाभिषेकं सर्वत्र शङ्खेनैव प्रकल्पयेत् । सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना [अब्जः = शङ्खः] ॥ गणेशार्कौ यजेत्तास्रैर्विष्णुं शङ्खेन पूजयेत् । शिवं गवयशृङ्गेण शक्तिमर्चेच्च धातुना ॥ प्रतिमापट्टयन्त्राणां नित्यं स्नानं न कारयेत् । कारयेत्पर्वदिवसे यथा मलनिवारणम् ॥ वादित्राणामभावे तु पूजाकाले च सर्वदा । घण्टाशब्दो नरैः कार्यः सर्ववाद्यमयी यतः ॥ देवमूर्ध्नि जलं सिञ्चेद्

अथ सूर्यसूक्तम्– सूर्यो देवीमुषस२ रोचमानामर्यः । न योषामभ्येति पश्चात् ॥ यत्रा नरो देवयन्तो युगानि । वितन्वते प्रतिभद्राय भद्रम् ॥ भद्रा अश्वा हरितः सूर्यस्य । चित्रा एदग्वा अनुमाद्यासः ॥ नमस्यन्तो दिव आपृष्ठमस्थुः । परिद्यावापृथिवी यन्ति सद्यः ॥ तत्सूर्यस्य देवत्वं तन्महित्वम् । मध्याकर्तोर्विततं२ सञ्जभार । यदेदयुक्तहरितः सध स्थात् । आद्रात्री वासस्तनुते सिमस्मै ॥ तन्मित्रस्य वरुणस्याभिचक्षे । सूर्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः । कृष्णमन्यद्धरितः सम्भरन्ति ॥ अद्या देवा उदिता सूर्यस्य । निरꣳहसः पिपृता निरवद्यात् । तन्नो मित्रो वरुणो माम हन्ताम् । अदितिः सिन्धुः पृथिवी उत द्यौः ॥ दिवो रुक्म उरुचक्षा उदेति । दूरे अर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण प्रसूताः । आयन्नर्थानि कृणवन्नपाꣳसि ॥ शं नो भव चक्षसा शं नो अह्ना । शं भानुना शꣳहिमा शं घृणेन । यथाशमस्मै शमसद्दुरोणे । तत्सूर्य द्रविणं धेहि चित्रम् ॥ चित्रं देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुण स्याग्नेः । आप्राद्यावापृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्तस्थुषश्च ॥ इति सूर्यसूक्तम् ॥

---

द्वादशाङ्गुलमुन्नतम् । गोशृङ्गवत्प्रमाणेन अभिषेकस्य लक्षणम् ॥ उदकं चन्दनं चक्रं शङ्खं च तुलसीदलम् । घण्टा पुरुषसूक्तं च ताम्रपात्रमथाष्टमम् ॥ शालग्रामशिला चैव नवभिस्तीर्थमुच्यते ॥' इत्यादि आगमसङ्ग्रहेऽभिषेके नियमविशेष उक्तः ॥

+ परिमळोदकेन देवस्य सर्वाङ्गे स्नानं दद्यात् ॥

अथ वैनायकं सूक्तम्*– सोमान२ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम् ॥ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनम् ॥ स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः । देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ इन्द्र एणमदीधरत् । ध्रुवं ध्रुवेण हविषा । तस्मै देवा अधिब्रुवन् । अयं च ब्रह्मणस्पतिः ॥ प्रातरग्निं प्रातरिन्द्र२... रुद्र२ंहुवेम ॥ पवित्रं ते विततं ब्रह्मणस्पते । प्रभुर्गात्राणि पर्येषि विश्वतः ॥ अतप्ततनूर्न तदामो अश्नुते । शृतास इद्वहन्त स्तत्समाशत ॥ इति वैनायकं सूक्तम् ॥

अथ ब्रह्मणस्पतिसूक्तम्– ब्रह्मणस्पते त्वमस्य यन्ता । सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवन्ति देवाः । बृहद्वदेम विदथे सुवीराः ॥ सई२ सत्येभिः सखिभिः शुचद्भिः । गोधायसं विधनसैरदर्दः । ब्रह्मणस्पतिर्वृषभिर्वराहैः । घर्मस्वेदेभिर्द्रविणं व्यानट् ॥ ब्रह्मणस्पतेरभवद्यथावशम् । सत्यो मन्युर्महि कर्मा करिष्यतः । यो गा उदाजत्स दिवे वि चाभजत् । महीव रीतिः शवसासरत्पृथक् ॥ इन्धानो अग्निं वनवद्वनुष्यतः । कृतब्रह्मा शूशुवद्रातहव्य इत् । जातेन जातमति स प्रसर्स२ंसते । यं यं युजं कृणुते ब्रह्मणस्पतिः ॥ ब्रह्मणस्पते सुयमस्य विश्वहा । रायस्याम रथ्यो विवस्वतः । वीरेषु वीरा२ंउपपृङ्ग्धि नस्त्वम् । यदीशानो ब्रह्मणा वेषि मे हवम् ॥ स इज्जनेन...ब्रह्मणस्पतिम् ॥ इति ब्रह्मणस्पतिसूक्तम् ॥

* इदं "अथ वैनायकं सूक्तं" इति बोधायनेन निर्दिष्टम् ॥

अथ गणेशाथर्वशीर्षम्– श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳪसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ नमस्ते गणपतये त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्ताऽसि । त्वमेव केवलं धर्ताऽसि । त्वमेव केवलं हर्ताऽसि । त्वमेव सर्वं खल्विदं ब्रह्माऽसि । त्वं साक्षादात्माऽसि नित्यम् ॥ ऋतं वच्मि । सत्यं वच्मि ॥ अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् ॥ त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्माऽसि त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः : त्वं चत्वारि वाक्पदानि ॥ त्वं गुणत्रयातीतः त्वमवस्थात्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं

ब्रह्म भूर्भुवःसुवरोम् ॥ गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् नादः सन्धानम् । संहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्री छन्दः । गणपतिर्देवता ॥ ॐ गँ गणपतये नमः ॥ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ॐ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय वरदमूर्तये नमः ॥

एतदथर्वशीर्षं योऽधीते स ब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्न बाध्यते । स सर्वतः सुखमेधते । स पञ्चमहापापात्प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानोऽपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति । धर्मार्थकाममोक्षं च विन्दति । इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद्दास्यति स पापीयान्भवति । सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत् । अनेन गणपतिमभिषिञ्चति स वाग्मी भवति । चतुर्थ्यामनश्नञ्जपति स विद्यावान्भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति । यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान्भवति स मेधावान्भवति । यो मोदकसहस्रेण यजति स वाञ्छितमवाप्नोति । यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान्सम्यक्

प्राहयित्वा सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति । महाविघ्नात्प्रमुच्यते । महादोषात्प्रमुच्यते । महापापात्प्रमुच्यते । महाप्रत्यवायात्प्रमुच्यते । स सर्वविद्भवति । स सर्वविद्भवति । य एवं वेद । इत्युपनिषत् ॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु । मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति गणेशाथर्वशीर्षम् ॥

अथ गणसूक्तम्— श्री गणेशाय नमः ॥ ॐ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किंचनारे महामर्कं मघवं चित्रमर्च ॥ अभिख्यानो मघवन्नाधमानान्त्सखे बोधि वसुपते सखीनाम् । रणं कृधि रणकृत्सत्यशुष्माभक्ते चिदाभजा राये अस्मान् ॥ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सङ्गृभाय । महाहस्ती दक्षिणेन ॥ विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् । तुविमात्रमवोभिः ॥ नहित्वा शूर देवा न मर्तासो दित्सन्तम् । भीमन्नगां वारयन्ते ॥ एतोन्विन्द्रं स्तवामेशानं वस्वः स्वराजम् । नराधसा महिष्ठनः ॥ प्रस्तोषदुप गासिषच्छ्रवत्साम गीयमानम् । अभिराधसा जुगुरत् ॥ आनो भर दक्षिणेनाभिसव्येन प्रमृश । इन्द्रमानो वसोर्निर्भाक् ॥ उपक्रमस्वाभर धृषता धृष्णो जनानाम् । अदाशूष्टरस्य वेदः ॥ इन्द्र य उनु ते अस्ति वाजो विप्रेभिः सनित्वः । अस्माभिः सुतं सनुहि ॥ सद्यो जुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः । वशैश्च मक्षू जरन्ते ॥ इति गणसूक्तम् ॥

अथ दुर्गासूक्तम्– श्रीगणेशाय नमः ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥ अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ पृतनाजितꣳसहमानमुग्रमग्निꣳहुवेम परमात्सधस्थात् । स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरितात्यग्निः ॥ प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वां चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व ॥ गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनु सञ्चरेम । नाकस्य पृष्ठमभिसंवसानो वैष्णवीं लोक इह मादयन्ताम् ॥ इति दुर्गासूक्तम् ॥

अथ देवीसूक्तम्– श्रीगणेशाय नमः ॥ देवीं वाचमजनयन्त देवाः । तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्जं दुहाना । धेनुर्वागस्मानुपसुष्टुतैतु ॥ यद्वाग्वदन्त्यविचेतनानि । राष्ट्री देवानां निषसाद मन्द्रा ॥ चतस्र ऊर्जं दुदुहे पयांꣳसि । क्वस्विदस्याः परमं जगाम ॥ अनन्तामन्तादधिनिर्मितां महीम् । यस्यां देवा अदधुर्भोजनानि ॥ एकाक्षरां द्विपदाꣳ षट्पदां च । वाचं देवा उपजीवन्ति विश्वे ॥ वाचं देवा उपजीवन्ति विश्वे । वाचं गन्धर्वाः पशवो मनुष्याः ॥ वाचीमा विश्वा भुवनान्यर्पिता । सा नो हवं जुषतामिन्द्रपत्नी ॥ वागक्षरं प्रथमजा ऋतस्य । वेदानां माताऽमृतस्य नाभिः ॥ सा नो जुषाणोपयज्ञमागात् । अवन्ती देवी सुहवा मे अस्तु ॥ यामृषयो मन्त्रकृतो मनीषिणः । अन्वैच्छन्देवाः

तपसा श्रमेण ॥ तां देवीं वाचꣳ हविषा यजामहे । सा नो दधातु सुकृतस्य लोके ॥ चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति ॥ इति देवीसूक्तम् ॥

अथ श्रीसूक्तम्- श्रीगणेशाय नमः ॥ हरिः ॐ ॥ हिरण्यवर्णांꣳहरिणीꣳसुवर्णरजतस्रजाम् । चन्द्राꣳ हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्याꣳ हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ अश्वपूर्वांꣳरथमध्याꣳ हस्तिनादप्रबोधिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ काꣳसोस्मिताꣳ हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीꣳ श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीꣳ शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथबिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीꣳ सर्वभूतानां तामिहोपह्वये श्रियम् ॥ मनसः काम माकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ कर्दमेन प्रजा भूता मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ आपः सृजन्तु स्निग्धानि चिक्लीतवस मे गृहे । नि च देवीं मातरꣳ श्रियं वासय मे कुले ॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्राꣳ हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ आर्द्रां यः करिणीं यष्टिं सुवर्णांꣳ हेममालिनीम् । सूर्याꣳ हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमनप-

गामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥ ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्य मन्वहम् । सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ पद्मानने पद्मऊरू पद्माक्षी पद्मसम्भवे । तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम् ॥ अश्वदायै गोदायै धनदायै महाधने । धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥ पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवेरथम् । प्रजानां भवसी माता आयुष्मन्तं करोतु मे ॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तु ते ॥ वैनतेय सोमं पिब सोमं पिबतु वृत्रहा । सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः । न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥ सरसिज निलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् । लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति श्रीसूक्तम् ॥

अथ रुद्रसूक्तम् ॥ श्रीगणेशाय नमः ॥ ॥ परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतिरघायोः । अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडाजरित्रे रुद्र स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥ मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥ अर्हन्बिभर्षि सायकानि धन्व । अर्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे

विश्वमभ्भुवम् । न वा ओजीयो रुद्र त्वदस्ति ॥ त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳशर्धो मारुतं पृक्ष ईशिषे । त्वं वातै रुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नुत्मना ॥ आवो राजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः । अग्निं पुरातनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ इति रुद्रसूक्तम् ॥

अथ लघुन्यासेन सहितो रुद्रस्नानार्चनविधिः ॥ (बो० गृ० शे० सू० १-१८) ॥ अथातो रुद्रस्नानार्चनविधिं व्याख्यास्यामः ॥ आदितः एव तीर्थे स्नात्वोदेत्याहतं वासः परिधाय शुचिः प्रयतो ब्रह्मचारी शुक्लवासा ईशानस्य प्रतिकृतिं कृत्वा तस्य दक्षिणाप्रत्यग्देशे तन्मुखः स्थित्वाऽऽत्मनि देवताः स्थापयेत्– प्रजनने ब्रह्मा तिष्ठतु । पादयोर्विष्णुस्तिष्ठतु । हस्तयोर्हरस्तिष्ठतु । बाह्वोरिन्द्रस्तिष्ठतु । जठरेऽग्निस्तिष्ठतु । हृदये शिवस्तिष्ठतु । कण्ठे वसवस्तिष्ठन्तु । वक्त्रे सरस्वती तिष्ठतु । नासिकयोर्वायुस्तिष्ठतु । नयनयोश्चन्द्रादित्यौ तिष्ठेताम् । कर्णयोरश्विनौ तिष्ठेताम् । ललाटे रुद्रास्तिष्ठन्तु । मूर्ध्न्यादित्यास्तिष्ठन्तु । शिरसि महादेवस्तिष्ठतु । शिखायां वासुदेवस्तिष्ठतु । पृष्ठे पिनाकी तिष्ठतु । पुरतः शूली तिष्ठतु । पार्श्वयोः शिवाशङ्करौ तिष्ठेताम् । सर्वतो वायुस्तिष्ठतु । ततो बहिः सर्वतोऽग्निर्ज्वालामालापरिवृतस्तिष्ठतु । सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु । माꣳरक्षन्तु । [मम यजमानꣳरक्षन्तु] ॥ [अग्निर्वायुः सूर्यश्चन्द्रमादिशा आपः पृथिव्यौ षधिवनस्पतय इन्द्रः पर्जन्य ईशान आत्मा पुनर्मे त्रयोदश] ॥ ॐ अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ वायुर्मे प्राणे श्रितः । प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ चन्द्रमा मे मनसि श्रितः । मनो

हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ दिशो मे श्रोत्रे श्रिताः । श्रोत्रꣳहृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ आपो मे रेतसि श्रिताः । रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ पृथिवी मे शरीरे श्रिता । शरीरꣳहृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ ओषधिवनस्पतयो मे लोमसु श्रिताः । लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ इन्द्रो मे बले श्रितः । बलꣳहृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ पर्जन्यो मे मूर्ध्नि श्रितः । मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ आत्मा म आत्मनि श्रितः । आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि ॥ पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानः । अन्तस्तिष्ठत्वमृतस्य गोपाः ॥ इति यथालिङ्गमङ्गानि सम्मृज्य ॥ अथैनं गन्धाक्षतपत्रपुष्पधूपदीपैराराधयेत् ॥ अथैनं प्रसादयति— 'आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि *भक्त्या +त्वानुगृहाण महेश्वर ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्' इति ॥ अथैनमावाहयति— 'आत्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सहकेतुमद्भिः । वाताजवैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् ॥ ईशानमावाहयामि' इत्यावाह्य× ॥ स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् । तावत्त्वं प्रीतिभावेन बिम्बेऽस्मिन्सन्निधिं कुरु ॥ आवाहितो भव । संस्थापितो भव । सन्निरुद्धो भव । अवकुण्ठितो भव । सुप्रसन्नो भव ।

---

* शक्त्या, + त्वां मां गृहाण इति पाठान्तरम् ॥ × 'स्थापिते (लिङ्गादौ) आवाहनं न' इत्युक्तं शेषसूत्रे ॥

वरदो भव । क्षमस्व । सान्निध्यं कुरु ॥ अथास्मा आसनं ददाति— सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः' इति । 'भवेभवे नातिभवे भवस्व माम्' इति पाद्यम् । 'भवोद्भवाय नमः' इत्यर्घ्यम् । 'रुद्राय नमः' इत्याचमनीयम् ॥ अथैनं स्नापयति— 'आपोहिष्ठा' इति तिसृभिः ॥ 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः ॥ 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन ॥ 'ब्रह्मजज्ञानं ... विवः ॥ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमꣳहृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रः सन्महो नमो नमः ॥ कयानश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता ॥ आपो वा इदꣳसर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवस्सुव राप ओम्' इति च* ॥ 'वामदेवाय नमः' इति वस्त्रं ददाति । 'ज्येष्ठाय नमः' इत्युत्तरीयम् । 'श्रेष्ठाय नमः' इत्युपवीतम् । 'रुद्राय नमः' इत्याचमनीयम् । 'कालाय नमः' इति गन्धम् । कलविकरणाय नमः' इत्यक्षतम् । 'बलविकरणाय नमः' इति पुष्पम् । 'बलाय नमः' इति धूपम् । 'बलप्रमथनाय नमः' इति दीपम् । 'सर्वभूतदमनाय नमः' इति नैवेद्यम् । 'रुद्राय नमः' इत्याचमनीयम् । 'मनोन्मनाय नमः' इति ताम्बूलम् ॥ अथाष्टभिर्मन्त्रैरष्टौ ×पुष्पाणि ददाति— 'भवाय देवाय नमः अर्कपुष्पम् । शर्वाय देवाय नमः चम्पकपुष्पम् । ईशानाय देवाय नमः पुन्नागपुष्पम् । पशुपतये देवाय नमः नन्द्यावर्त

* अतःपरं 'व्याहृतीभिः प्रदक्षिणमुदकं परिषिच्य पवित्रं पादमूले निधायाद्भिस्तर्पयति— भवं देवं तर्पयामीत्यष्टभिः' इति म० पुस्तके ।
× अर्कचम्पकपुन्नागनन्द्यावर्तं च पाटली । बृहतीकरवीराणि द्रोणपुष्पाणि च क्रमात् ॥

पुष्पम् । रुद्राय देवाय नमः पाटलपुष्पम् । उग्राय देवाय नमः बृहतीपुष्पम् । भीमाय देवाय नमः करवीरपुष्पम् । महते देवाय नमः द्रोणपुष्पम्' इति ॥ अथाद्भिस्तर्पयति— भवं देवं तर्पयामि । शर्वं देवं तर्पयामि । ईशानं देवं तर्पयामि । पशुपतिं देवं तर्पयामि । रुद्रं देवं तर्पयामि । उग्रं देवं तर्पयामि । भीमं देवं तर्पयामि । महान्तं देवं तर्पयामि' इति ॥ अथास्याघोरतनूरुपतिष्ठते— 'अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः' इति ॥ अथ रुद्रगायत्रीं जपेत्— तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्' इति सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम् ॥ अथैनमाशिषमाशास्ते— ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' ॥ अथास्य मूर्ध्नि *कलशधारया सन्ततमभिषिञ्चन् जपेत्– 'नमस्ते रुद्र मन्यव' इत्येकादशानुवाकान् । सर्वो वै रुद्रः' इति त्रीननुवाकान् । 'सद्योजातम्' इति पञ्चानुवाकान् । 'इमा रुद्राय' इति द्वादशर्चानन्यांश्च यथाशक्ति रौद्रमन्त्रान्' ॥ एवमेकादशकृत्वो जपेत् । जपान्ते जपान्ते 'अग्नाविष्णू' सजोषसा' इत्येकादशानुवाकानामेकैकमनुवाकं जपेत् ॥ सर्वेषामन्ते 'अथास्मा आसनं ददाति– सद्योजातम्' इत्यादिना पुनराराधयेत् ॥ पायसादिमहाहविर्निवेदयेद्रौद्रीभिस्तुतिभिस्तुन्वन्ति ॥ ॥ तदेतद्रुद्रस्नानार्चनं पापक्षयार्थी व्याधिविमोचनार्थी श्रीकामः शान्तिकामः पुष्टिकामस्तुष्टिकाम आयुष्यकाम आरोग्यकामो मोक्षकामश्च कुर्यात् ॥ अथ यथाशक्ति दक्षिणां ददाति– दश गावः सुवर्णभूषिता ऋषभैकादशास्तदभाव एकां गां दद्यादित्याह भगवान्बोधायनः ॥

* 'दध्ना मधुना सर्पिषा पयसा चेक्षुरसेन वा नाळिकेरोदकेन वा तदलाभे शुद्धोदकेन वाऽभिषिञ्चेत्' इति कर्मविपाकमहार्णवे ॥

अथ रुद्राध्यायश्चमकादिसहितः ॥ सकलस्य रुद्राध्यायस्य । अग्निः काण्ड ऋषिः । अनुष्टुबादिछन्दांसि । श्रीरुद्रो देवता । अघोराघोराश्च बीजशक्तयः । चकाराः कीलकम् । श्रीरुद्रप्रीत्यर्थे जपे (अभिषेकादौ वा) विनियोगः ॥ ॐ नमः शम्भवे च अङ्गुष्ठिकाभ्यां नमः । मयोभवे च तर्जनीभ्यां नमः । नमः शङ्कराय च मध्यमाभ्यां नमः । मयस्कराय च अनामिकाभ्यां नमः । नमः शिवाय च कनिष्ठिकाभ्यां नमः । शिवतराय च करतलकरपृष्ठाभ्यां नमः । नमः शम्भवे च हृदयाय नमः । मयोभवे च शिरसे स्वाहा । नमः शङ्कराय च शिखायै वषट् । मयस्कराय च कवचाय हुम् । नमः शिवाय च नेत्रत्रयाय वौषट् । शिवतराय च अस्त्राय फट् ॥ शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं शूलं वज्रं च खड्गं परशुमभयमप्येकभागे वहन्तम् । नागं पाशं च घण्टामथ वरदकरं साङ्कुशं वामभागे नानालङ्कार दीप्तं स्फटिकमणिनिभं नौमि सादाशिवाख्यम् ॥ ब्रह्माण्डव्याप्तदेहा भसितसितरुचो भासयन्तो भुजङ्गैः कण्ठे कालाः कपर्दाकलितशशिकलाश्चण्डकोदण्डहस्ताः । त्र्यक्षा रुद्राक्षभूषाः प्रणतभयहराः शाम्भवा मूर्तिभेदा रुद्राः श्रीरुद्रसूक्तप्रकटित विभवा नः प्रयच्छन्तु सौख्यम् ॥

अथ रुद्राध्यायस्य चमकस्य च महार्णवोक्तानि ऋषिदेवताछन्दांसि निरूप्यन्ते— नमस्ते कश्यपो रुद्रोऽनुष्टुप् । या त इषुरात्रेयः शम्भुरनुष्टुप् । या ते रुद्र कश्यपः स्कन्दात्मा रुद्रः स्वराडनुष्टुप् । यामिषुं गौतमो रुद्रो निचृदनुष्टुप् । शिवेन गौतमो रुद्रोऽनुष्टुप् । अध्यवोचत्कण्वः शम्भुरनुष्टुप् । असौ यस्ताम्रो मरुत्वानादित्यात्मा रुद्रः प्रस्तारपङ्क्तिः । असौ योऽवसर्पति मरुत्वानादित्यात्मा रुद्रः षट्पदा जगती । नमो अस्तु भगवाञ्छम्भुरनुष्टुप् । प्रमुञ्चेति तिसृणां

नारदो रुद्रोऽनुष्टुप् । या ते हेतिरिति तिसृणां भगवान् भगवाननुष्टुप् । नमो हिरण्यबाहवे इत्यनुवाकस्य मण्डूको रुद्रो महागायत्री (यजुर्वा) । नमः सहमानायेत्यनुवाकस्य भगवान्रुद्रो बृहती (यजुर्वा) । नम आव्याधिनीभ्य इत्यनुवाकस्य दुर्वासाः शम्भुरुष्णिक् (यजुर्वा) । नमो भवायेत्यनुवाकद्वयस्य भगवाञ्छम्भुर्महाविराट् (यजुर्वा) । नमो दुन्दुभ्यायेत्यनुवाकस्य हेमकोशो रुद्रो महापङ्क्तिः (यजुर्वा) । नमः सोमायेत्यनुवाकस्य नम इरिण्यायेत्यनुवाके प्रक्लिदते चेत्यन्तस्य च भगवान्भगवान्महानुष्टुप् (यजुर्वा) । नमो व इत्याद्यनुवाकशेषस्य अग्नी रुद्रो महानुष्टुप् (यजुर्वा) । द्रापे पुलहो रुद्रः प्रस्तारपङ्क्तिः । या ते रुद्र स्कन्दो रुद्रोऽनुष्टुप् । इमामिति द्वयोर्माण्डव्यो रुद्रो जगती । मा नो महान्तं देवराट् नन्दीश्वरात्मा रुद्रो जगती । मा नस्तोके भगवान्भगवाञ्जगती । आरात्तेऽत्रिः शम्भुस्त्रिष्टुप् । स्तुहि श्रुतं वैय्याघ्रो रुद्रस्त्रिष्टुप् । परिणो भगवान्भगवांस्त्रिष्टुप् । मीढुष्टम वैराजः शम्भुः पञ्चपदा त्रिष्टुप् । विकिरिद पुलहः शम्भुरनुष्टुप् । सहस्राणि नारदो रुद्रोऽनुष्टुप् । सहस्राणीति चतसृणां दुर्वासा रुद्रोऽनुष्टुप् । ये वृक्षेष्विति सप्तानां देवलो रुद्रोऽनुष्टुप् । नमो रुद्रेभ्यो देवलो रुद्रो यजुः ॥ ॥ चमकानामग्निः काण्ड ऋषिः । आद्या आग्ना वैष्णवी गायत्री । शिष्टानां वाजादयोऽन्नादिविशेषा देवता यजुश्छन्दः ॥

ॐ इडादेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वेदेवाः सूक्तवाचः पृथिविमातर्मा मा हिꣳसीर्मधुमनिष्ये मधुजनिष्ये मधुवक्ष्यामि मधुवदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳशुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ नमो भगवते रुद्राय ॥

हरिः ओम् ॥ नमस्ते रुद्र मन्यव उतो त इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ॥ यात इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो रुद्र मृडय ॥ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमां रुद्रा अभितो दिक्षु श्रिताः सहस्रशो वैषां हेड ईमहे ॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः । उतैनं विश्वाभूतानि स दृष्टो मृडयाति नः ॥ नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥ अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥ विज्यं धनुः कपर्दिनो विशल्यो बाणवां उत । अनेशन्नस्येषव आभुरस्य निषङ्गधिः ॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ नमस्ते अस्त्वायुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥१॥ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो

नमः सूतायाहन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये
नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते
सत्वनां पतये नमः ॥२॥ नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये
नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरा
यारण्यानां पतये नमो नमः सृकाविभ्यो जिघांꣳसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये
नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधाने
भ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यः शयानेभ्यश्च वो
नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो
अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥३॥ नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृꣳहतीभ्यश्च वो नमो
नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो
विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो रथ
पतिभ्यश्च वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च
वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो
नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥४॥ नमो भवाय च रुद्राय च नमः शर्वाय च

पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चाव स्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ॥५॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥६॥ नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥७॥ नमः सोमाय च रुद्राय च नमः स्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रे वधाय च दूरे वधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च

नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥८॥ नम इरिण्याय च प्रपथ्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च नमः पाꣳसव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोपगुरमाणाय चाभिघ्नते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाꣳहृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ॥९॥ द्रापे अन्धसस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां माभेर्मारो मो एषां किञ्चनाममत् ॥ या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ॥ इमाꣳरुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ मृडानो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ ॥ मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः । मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥ आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्रस्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥ परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतिरघायोः । अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय

तनयाय मृडय ॥ मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥ विकिरिद विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रंहेतयोऽन्यमस्मन्निवपन्तु ताः ॥ सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ॥१०॥ सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम् । तेषांसहस्रयोजनेऽवधन्वानि तन्मसि । अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ॥ नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । नीलग्रीवाः शितिकण्ठा दिवंरुद्रा उपश्रिताः ॥ ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः । ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥ ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । ये पथां पथिरक्षय ऐलबृदा यव्युधः ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे ॥ तेषांसहस्रयोजनेऽवधन्वानि तन्मसि ॥ नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दशप्राचीर्दशदक्षिणा दशप्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्तेनो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥११॥ ॥ ॐ सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रः सन्महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमंहृदे । सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ एष ते रुद्र भागस्तं जुषस्व तेना वसेन परोमूजवतोतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासाः । ऋतंसत्यं परं ब्रह्मपुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥ नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय

उमापतये पशुपतये नमो नमः ॥ सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः । भवे भवेनातिभवे भवस्व माम् । भवोद्भवाय नमः ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ ॥ इमा रुद्राय स्थिरधन्वने गिरः । क्षिप्रेषवे देवाय स्वधाम्ने । अषाढाय सहमानाय मीढुषे । तिग्मायुधाय भरता शृणोतन ॥ त्वादत्तेभी रुद्र शन्तमेभिः । शतꣳहि मा अशीय भेषजेभिः । व्यस्मद्द्वेषो वितरं व्यꣳहः । व्यमीवाꣳश्चातयस्वा विषूचीः ॥ अर्हन्बिभर्षि सायकानि धन्व । अर्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्भुवम् । न वा ओजीयो रुद्र त्वदस्ति ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥ आते पितर्मरुताꣳसुम्नमेतु । मा नः सूर्यस्य सन्दृशो युयोथाः । अभिनो वीरो अर्वति क्षमेत । प्रजायेमहि रुद्र प्रजाभिः ॥ एवाबभ्रो वृषभ चेकितान । यथा देव नहृणीषे न हꣳसि । हावनश्रूर्णो रुद्रेह बोधि । बृहद्वदेम विदथे सुवीराः ॥ परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतिरघायोः । अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडाजरित्रे रुद्रस्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥ मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥ अर्हन्बिभर्षि सायकानि धन्व ।

अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमब्भुवम् । न वा ओजीयो रुद्र त्वदस्ति ॥ त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳशर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नुत्मना ॥ आवो राजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु । यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ तमुष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य । यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य । ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानवयजामहे ॥ मृत्यवे स्वाहा मृत्यवे स्वाहा ॥ ॐ नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि ॥ ॥ ॐ अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥ वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मेबलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे ॥१॥ ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म

ऋक्षिश्च मे कृतं च मे कृतिश्च मे मतिश्च मे सुमतिश्च मे ॥२॥ शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ॥३॥ ऊर्क् मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥४॥ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ॥५॥ अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च

मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥६॥ अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥७॥ इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रं च मे हविर्धानं च मे ग्रहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥८॥ अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम् ॥९॥ गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वां च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳश्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥१०॥ एका च मे तिस्रश्च

मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविंशतिश्च मे त्रयोविंशतिश्च मे पञ्चविंशतिश्च मे सप्तविंशतिश्च मे नवविंशतिश्च म एकत्रिंशच्च मे त्रयस्त्रिंशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विंशतिश्च मे चतुर्विंशतिश्च मेऽष्टाविंशतिश्च मे द्वात्रिंशच्च मे षट्त्रिंशच्च मे चत्वारिंशच्च मे चतुश्चत्वारिंशच्च मेऽष्टाचत्वारिंशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥११॥

इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शंसिषद्विश्वेदेवाः सूक्तवाचः पृथिविमातर्मा माहिंसीर्मधुमनिष्ये मधुजनिष्ये मधुवक्ष्यामि मधुवदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासंशुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोनुमदन्तु ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

नमकचमकयोर्मन्त्रविभागः ॥ नमके तावत्– एकधा, त्रेधा, षोढा, षोडशधा, अष्टाचत्वारिंशद्धा, एकोनसप्तत्युत्तर शतधा चेति षड्भिः प्रकारैर्मन्त्रविभागः प्रोक्तः ॥ तत्रैकधा पक्षे– आदित अध्यायान्तमेको मन्त्रः ॥ त्रेधाविभागपक्षे– नमस्ते रुद्र मन्यव इत्यारभ्य नमः क्षत्तृभ्यः इत्यन्तं प्रथमो मन्त्रः । सङ्ग्रहीतृभ्यश्चेत्यादि नमो वर्ष्यायचेत्यन्तं द्वितीयः । अवर्ष्यायचेत्याद्यध्यायान्तं तृतीयः ॥ षोढा विभागे– नमस्ते रुद्रेत्यादि नमः क्षत्तृभ्य इत्यन्तं प्रथमो मन्त्रः । सङ्ग्रहीतृभ्य

श्चेत्यादि नमो वर्ष्यायचेत्यन्तं द्वितीयः। अवर्ष्यायचेत्यादि य एतावन्तश्च...तन्मसीत्यन्तं तृतीयः। नमो रुद्रेभ्यो ये पृथिव्यां येषा मन्नमिषवस्तेभ्यो दश...दधामि, इति चतुर्थः । नमो रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो...दधामि, इति पञ्चमः । नमो रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो...दधामि, इति षष्ठः। एवं षण्मन्त्राः ॥ षोडशधा विभागे— नमस्ते रुद्रेत्यारभ्य नमः क्षत्तृभ्य इत्यन्तं प्रथमो मन्त्रः । सङ्ग्रहीतृभ्यश्चेत्यादि नमो वर्ष्यायचेत्यन्तं द्वितीयः । अवर्ष्यायचेत्यादि पराचीना मुखा कृधीत्यन्तं तृतीयः । सहस्राणि...तेषाꣳसहस्र...तन्मसि इति चतुर्थः । अस्मिन्महत्यर्णवे...तेषाꣳ...तन्मसि इति पञ्चमः । नीलग्रीवाः शितिकण्ठाः शर्वा...तन्मसि इति षष्ठः । नीलग्रीवाः शितिकण्ठा दिवꣳ...तन्मसि इति सप्तमः । ये वृक्षेषु... तन्मसि इति अष्टमः । ये भूतानामधि...तन्मसि इति नवमः । ये अन्नेषु...तन्मसि इति दशमः । ये पथां...तन्मसि इति एकादश । ये तीर्थानि...तन्मसि इति द्वादश । य एतावन्तश्च...तन्मसि इति त्रयोदश । नमो रुद्रेभ्यो...दधामि इति चतुर्दश । नमो...दधामि इति पञ्चदश । नमो...दधामि इति षोडश । इति षोडशमन्त्राः ॥ अष्टाचत्वारिंशद्धा विभागे— नमस्ते रुद्र...बाहुभ्यामुत ते नमः १ । यात इषुः...मृडय २ । या ते रुद्र...चाकशीहि ३ । यामिषुं... जगत् ४ । शिवेन...असत् ५ । अध्यवोचदधि...धान्यः ६ । असौ यस्ताम्रो...ईमहे ७ । असौ यो...मृडयाति नः ८ । नमो अस्तु...नमः ९ । प्रमुञ्च...वप १० । अवतत्य...भव ११ । विज्यं...निषङ्गथिः १२ । या ते हेतिः...परिभुज १३ । नमस्ते अस्त्वा...धन्वने १४ । परिते...हितम् १५ । नमो हिरण्यबाहवे...सत्वनां पतये नमः १६ । नमः सहमानाय...अश्वपतिभ्यश्च वो नमः १७ । नम आव्याधिनीभ्यः...श्वपतिभ्यश्च वो नमः १८ ।

नमो भवाय च ···ह्रीप्याय च १९ । नमो ज्येष्ठाय च ···श्रुतसेनाय च २० । नमो दुन्दुभ्याय ···वास्तुपाय च २१ । नमः सोमाय ···प्रवाह्याय च २२ । नम इरिण्याय ···आमीवत्केभ्यः २३ । द्रापे ···नाममत् २४ । या ते रुद्र ··· जीवसे २५ । इमा१ ···अनातुरम् २६ । मृडानो ···प्रणीतौ २७ । मा नो ···रीरिषः २८ । मा नस्तोके ···विधेम ते २९ । आरात्ते ···द्विबर्हाः ३० । स्तुहि ···सेनाः ३१ । परिणो ···मृडय ३२ । मीढुष्टम ···बिभ्रदागहि ३३ । विकिरिद ···निवपन्तु ताः ३४ । सहस्राणि ···मुखा कृधि ३५ । सहस्राणि सहस्रशो ये, इत्यादि त्रयोदश । एवं मिलित्वा अष्टाचत्वारिंशन्मन्त्राः ॥ एकोनसप्तत्युत्तरशतधा विभागे— प्रथमेऽनुवाके पञ्चदश मन्त्राः । द्वितीये 'नमो हिरण्य बाहवे सेनान्ये दिशां च पतये नमः' इत्याद्युभयतो नमस्कारयुक्तास्त्रयोदश । एवं तृतीये सप्तदश । चतुर्थेऽपि सप्तदश । पञ्चमेऽनुवाके 'नमो भवाय च रुद्राय च' इत्यादि पूर्वत्र नमस्कारयुक्ताः पञ्चदश । एवं षष्ठे पञ्चदश । सप्तमे षोडश । अष्टमे सप्तदश । नवमेऽनुवाकेपि 'प्रक्खिदते च' इत्यन्तं चतुर्दश, (१) नमो वः किरिकेभ्यो देवानाꣳहृदयेभ्यः, (२) नमो विक्षीणकेभ्यो देवानाꣳहृदयेभ्यः, (३) नमो विचिन्वत्केभ्यो देवानाꣳहृदयेभ्यः, (४) नम आनिर्हतेभ्यो देवानाꣳहृदयेभ्यः, (५) नम आमीवत्केभ्यो देवानाꣳहृदयेभ्यः, पञ्च, एवं एकोनविंशति मन्त्राः । दशमेऽनुवाके द्वादश मन्त्राः । एकादशे त्रयोदश मन्त्राः । एवं मिलित्वा एकोनसप्तत्युत्तरशतमन्त्राः (१६९) ॥ ॥ चमके— 'अग्नाविष्णू ···रागतम्' इत्येकः । वाजश्चम इत्यादि भुवनश्चाधिपतिश्चेत्यन्तमेकः । एवं द्वौ मन्त्रौ ॥ अथवा प्रत्यनुवाकमेकैक इत्येकादशमन्त्राः ॥

इति रुद्राध्यायश्चमकादिसहितः ॥

अथ सुवर्णघर्मानुवाकः ॥ सुवर्णं घर्मं परिवेद वेनम् । इन्द्रस्याऽऽत्मानं दशधा चरन्तम् । अन्तः समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे । अन्तः प्रविष्टः शास्ता जनानाम् । एकः सन्बहुधा विचारः । शतꣳशुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । सर्वे होतारो यत्रैकं भवन्ति । समानसीन आत्मा जनानाम् ॥१॥ अन्तः प्रविष्टः शास्ता जनानाꣳसर्वात्मा । सर्वाः प्रजा यत्रैकं भवन्ति । चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः । समानसीन आत्मा जनानाम् । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानꣳसवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तम् । वाचो वीर्यं तपसान्वविन्दत् । अन्तः प्रविष्टं कर्तारमेतम् । त्वष्टारꣳरूपाणि विकुर्वन्तं विपश्चिम् ॥२॥ अमृतस्य प्राणं यज्ञमेतम् । चतुर्होतृणामात्मानं कवयो निचिक्युः । अन्तः प्रविष्टं कर्तारमेतम् । देवानां बन्धु निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् । चतुर्होतृणामात्मानं कवयो निचिक्युः । शतं नियुतः परिवेद विश्वा विश्ववारः । विश्वमिदं वृणाति । इन्द्रस्याऽऽत्मा निहितः पञ्चहोता । अमृतं देवानामायुः प्रजानाम् ॥३॥ इन्द्रꣳराजानꣳसवितारमेतम् । वायोरात्मानं कवयो निचिक्युः । रश्मिꣳरश्मीनां मध्ये तपन्तम् । ऋतस्य पदे कवयो निपान्ति । य आण्डकोशे भुवनं बिभर्ति । अनिर्भिण्णः सन्नथ लोका न्विचष्टे । यस्याण्डकोशꣳशुष्ममाहुः प्राणमुल्बम् । तेन क्लृप्तोऽमृतेनाहमस्मि । सुवर्णं कोशꣳरजसा परीवृतम् । देवानां वसुधानीं विराजम् ॥४॥ अमृतस्य पूर्णां तामु कलां विचक्षते । पादꣳषड्ढोतुर्न किलाऽऽविवित्से । येनर्तवः पञ्चधोत क्लृप्ताः । उत वा षड्धा मनसोत क्लृप्ताः । तꣳषड्ढोतारमृतुभिः कल्पमानम् । ऋतस्य पदे कवयो निपान्ति । अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्याऽऽत्मानꣳशतधा चरन्तम् ॥५॥

इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः । परेण तन्तुं परिषिच्यमानम् । अन्तरादित्ये मनसा चरन्तम् । देवानाꣳहृदयं ब्रह्मान्वविन्दत् । ब्रह्मैतद्ब्रह्मण उज्जभार । अर्कꣳश्चोतन्तꣳसरिरस्य मध्ये । आयस्मिन्सप्तपेरवः । मेहन्ति बहुलाꣳ श्रियम् । बह्वश्वामिन्द्र गोमतीम् ॥६॥ अच्युतां बहुलाꣳश्रियम् । स हरिर्वसुवित्तमः । पेरुरिन्द्राय पिन्वते । बह्वश्वामिन्द्र गोमतीम् । अच्युतां बहुलाꣳश्रियम् । मह्यमिन्द्रो नियच्छतु । शतꣳशता अस्य युक्ता हरीणाम् । अर्वाङायातु वसुमी रश्मिरिन्द्रः । प्रमꣳहमाणो बहुलाꣳश्रियम् । रश्मिरिन्द्रः सविता मे नियच्छतु ॥७॥ घृतं तेजो मधुमदिन्द्रियम् । मय्ययमग्निर्दधातु । हरिः पतङ्गः पटरी सुपर्णः । दिविक्षयो नभसा य एति । स न इन्द्रः कामवरं ददातु । पञ्चारं चक्रं परिवर्तते पृथुः । हिरण्यज्योतिः सरिरस्य मध्ये । अजस्रं ज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु । सप्त युञ्जन्ति रथमेकचक्रम् ॥८॥ एको अश्वो वहति सप्तनामा । त्रिनाभिचक्रमजरमनर्वम् । येनेमा विश्वा भुवनानि तस्थुः । भद्रं पश्यन्त उपसेदुरग्रे । तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभि सन्नमन्तु । श्वेतꣳरश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन् ॥९॥ रोहिणीः पिङ्गला एकरूपाः । क्षरन्तीः पिङ्गला एकरूपाः । शतꣳसहस्राणि प्रयुतानि नाव्यानाम् । अयं यः श्वेतो रश्मिः । परिसर्वमिदं जगत् । प्रजां पशून्धनानि । अस्माकं ददातु । श्वेतो रश्मिः परिसर्वं बभूव । सुवन्मह्यं पशून्विश्वरूपान् । पतङ्गमक्तम सुरस्य मायया ॥१०॥ हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः । पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वोऽवदद्गर्भे अन्तः । तां द्योतमानाꣳस्वर्यं मनीषाम् । ऋतस्य पदे कवयो

निपान्ति । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । अग्निस्ताꣳअग्रे प्रमुमोक्तु देवः ॥११॥ प्रजापतिः प्रजया संविदानः । वीतꣳस्तुके स्तुके । युवमस्मासु नियच्छतम् । प्र प्र यज्ञपतिं तिर । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषाꣳसप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । वायुस्ताꣳअग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन्गुहाहितम् । य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषाꣳसप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥१२॥ इति सुवर्णघर्मानुवाकः ॥

अथ पुरुषसूक्तम् ॥ हरिः ॐ ॥ सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ॥१॥ पुरुष एवेदꣳसर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति ॥२॥ एतावानस्य महिमा । अतो ज्यायाꣳश्च पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ॥३॥ त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुनः । ततो विष्वङ् व्यक्रामत् । साशनानशने अभि ॥४॥ तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥५॥ यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्धविः ॥६॥ सप्तास्यासन्परिधयः । त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन्पुरुषं पशुम् ॥७॥ तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः । तेन देवा अयजन्त । साध्या ऋषयश्च ये ॥८॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् । पशूꣳस्ताꣳश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये ॥९॥ तस्माद्यज्ञात्सर्वहुतः ।

ऋचः सामानि जज्ञिरे । छन्दांꣳसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥१०॥ तस्मादश्वा अजायन्त । ये के चोभया दतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥११॥ यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ॥१२॥ ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः । पद्भ्याꣳ शूद्रो अजायत ॥१३॥ चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥१४॥ नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाꣳअकल्पयन् ॥१५॥ वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन्यदास्ते ॥१६॥ धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥१७॥ यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । तेह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥१८॥ इति पुरुषसूक्तम् ॥ ॥ इति महाभिषेकः ॥

उत्तप्तोज्ज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलं शुद्धस्फाटिकभित्तिकाविलसितैः स्तम्भैश्च हैमैः शुभैः । द्वारैश्चामररत्नराजिखचितैः शोभावहैर्मण्डपैश्छत्राकैरभिचित्रशङ्खधवलैः प्रभ्राजितं स्वस्तिकैः ॥ मुक्तादामविलम्बिमण्डपयुतैर्वज्रैश्च सोपानकैर्नानारत्नविमिश्रितैश्च फलकैरत्यन्तशोभावहैः । माणिक्योज्ज्वलदीपदीपितदिशं लक्ष्मीविलासास्पदं ध्यायेन्मण्डपमर्चनेषु सकलेष्वेवं विधं साधकः* इति मण्डपं ध्यात्वा ॥ स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् । तावत्त्वं प्रीतिभावेन पीठेऽस्मिन्सन्निधो

* ततः स्नातं देवं वस्त्रेणोद्धृत्य पूर्वमर्चितं यागमण्डपं पुनर्ध्यायेत् —इति आकरे ॥

भव ॥ (स्त्रीदेवतायां तु— भो स्वामिनि जगन्नाथे यावत्पूजावसानकम् । तावत्त्वं प्रीतिभावेन बिम्बेऽस्मिन्सन्निधा भव ॥ इति) पवित्रमर्को रजसो विमानः । पुनाति देवानां भुवनानि विश्वा ॥ सुवर्ज्योतिर्यशो महत् । अशीमहि गाधमुत प्रतिष्ठाम् ॥ इति देवं पीठे प्रतिष्ठाप्य वस्त्राद्युपचारैः* पूजयेत् — वस्त्रं गृहाण देवेश पद्मपत्रायतेक्षण । नानावर्णविचित्राढ्यं सर्वसौख्यप्रदो भव ॥ ॐ युवं वस्त्राणि पीवसा वसाथे । युवोरच्छिद्रा मन्तवो ह सर्गाः ॥ अवातिरतमनृतानि विश्वा । ऋतेन मित्रावरुणा सचेथे ॥ वस्त्रयुग्मं स० ॥ आचमनीयं स० ॥ सौवर्णं राजतं ताम्रं कार्पासस्य तथैव च । उपवीतं मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम् ॥ ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ उपवीतं स० ॥ आचमनीयं स० ॥ माणिक्यमुक्ताफलविद्रुमाद्यैर्गोमेदवैडूर्यकपुष्परागैः । कृतानि गारुत्मकवज्रनीलैर्गृहाण रत्नाभरणानि देव ॥ हिरण्यगर्भः...विधेम ॥ आभरणं स० ॥ चन्दनागरुकस्तूरीरोचनं कुङ्कुमान्वितम् । श्रीगन्धं चारुकर्पूरलेपनं प्रतिगृह्यताम् ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वे

---

* आचाररत्ने— दुकूलपट्टकौशेयराङ्ककार्पासकादिभिः । वासोभिः पूजयेद्देवं सुशुभैरात्मनः प्रियैः ॥ यज्ञोपवीतदानेन सुरेभ्यो ब्राह्मणाय वा । भवेद्विप्रश्चतुर्वेदी शुद्धधीर्नात्र संशयः ॥ आह्निकचन्द्रिकायाम्— यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः । निर्माल्यं न भवेत्ताव त्स्वर्णरत्नविभूषणम् ॥ वस्त्रमभ्युक्षणाच्छायेदपरन्तु दिने दिने ॥ इत्युक्तेः वस्त्रालङ्कारादि न प्रत्यहमपूर्वम् । उपवीतमपि प्रत्यहं नापूर्वम् । वस्त्रसमत्वात् ॥

भूतानां तामिहोपह्वये श्रियम् ॥ *गन्धं स० ॥ अखण्डतण्डुलाशुभ्रा हरिद्राकुङ्कुमान्विताः । अक्षताश्च मया दत्ताः प्रीत्यर्थं प्रतिगृह्यताम् ॥ ॐ अर्चत प्रार्चत प्रियमेधासो अर्चत । अर्चन्तु पुत्रका उत पुरन्न धृष्ण्वर्चत ॥ अक्षतान्समर्पयामि ॥ सुगन्धीनि सुपुष्पाणि माल्यानि विविधानि च । सम्पादितानि रम्याणि पुष्पाणि प्रतिगृह्यताम् ॥ सेवन्तिकाबकुलचम्पक पाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः । बिल्वप्रवालतुलसीदलमल्लिकाभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥ आराम पुष्पाणि मयाऽऽहृतानि जलाशयस्थानि सुपल्लवानि । सुवर्णपुष्पाणि मया कृतानि प्रसीद देवेश जगन्निवास ॥ ॐ आयनेते परायणे दूर्वा रोहन्तु पुष्पिणीः । ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे ॥ पुष्पाणि× समर्पयामि ॥

---

* भविष्ये — चन्दनागरुकर्पूरकुङ्कुमोशीरपद्मकैः । अनुलिप्तो नरैर्भक्त्या ददाति मनसेप्सितम् ॥ इति गन्धलक्षणमुक्तम् ॥ साङ्गुष्ठकनिष्ठया गन्धमुद्रया 'ॐ लं पृथिव्यात्मने नमः गन्धं समर्पयामि' इति देवस्य ललाटे तिलकरूपं गन्धमर्पयेत् ॥

× अथ पुष्पादिविचारः ॥ तर्जन्यङ्गुष्ठयोगेन पुष्पमुद्रया 'ॐ हं आकाशात्मने नमः पुष्पं समर्पयामि' इति देवस्य शिरस्यर्पयेत् ॥ 'मध्यमानामिकाभ्यां तु पुष्पं सङ्गृह्य पूजयेत् । अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत्' ॥ बालबोधे — 'नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम् । न दूर्वया यजेद्दुर्गां बिल्वपत्रैर्दिवाकरम् ॥ उन्मत्तमर्कपुष्पं च विष्णौ वर्ज्यं सदा बुधैः' ॥ अक्षत निषेधस्तु शालग्रामपरः — 'शालग्रामशिलामेव नाक्षतैरर्चयेद्द्विजः' इति विष्णूक्तेः ॥ स्कान्दे — देवीनामर्कमन्दारावादित्ये तगरं तथा (निषिद्धमित्यर्थः) । गणेशाय च सूर्याय रक्तपुष्पमतिप्रियम् ॥ आचाररत्ने — मुनिपुष्पैस्तु सूर्यं च लक्ष्मीकामो न चार्च

येत् । मन्त्रमहोदधौ — बन्धूकं केतकीं कुन्दं केसरं कुटजं जयाम् । शङ्करे नार्पयेद्विद्वान्मालतीं यूथिकामपि ॥ आचार मयूखे — पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः । आत्मारामोद्भवैर्मुख्यैर्भक्त्या सम्पूजयेत्सुरान् ॥ अलाभे सर्वपुष्पाणां पत्राण्यपि निवेदयेत् । पत्राणामप्यलाभे तु फलैर्वापि प्रपूजयेत् ॥ फलानामप्यलाभे तु तृणगुल्मौषधीरपि । ओषधीनामलाभे तु धान्यैर्वाऽपि प्रपूजयेत् ('भक्त्या भवति पूजितः' इति वा पाठः) ॥ समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः (लक्षपुष्पार्चनादौ तु क्रयक्रीतमपि देयम्) ॥ समित्पुष्पकुशादीनां वहन्तं नाभिवादयेत् । तद्धारी चैव नान्याहि निर्माल्यं तद्भवेत्तयोः । देवोपरि धृतं यच्च वामहस्ते धृतं च यत् ॥ अधोवस्त्रधृतं यच्च जलेन्तः क्षालितं च यत् । देवतास्तं न गृह्णन्ति पुष्पं निर्माल्यतां गतम् ॥ मस्तकोपरि धृतं च ॥ नित्यपूजार्थं परोपवनादेरपि ग्राह्यम् ॥ न तच्चौर्यम् ॥ पारक्यारामसञ्जातैः कुसुमैरर्चयेत्सुरान् । देवतार्थं च कुसुममस्तेयं मनुरब्रवीत् ॥ तुलस्यां बिल्वपत्रे च जलजेषु च सर्वशः । न पर्युषितदोषोऽस्ति मालाकारगृहेषु च ॥ आचारार्के — नाङ्गुष्ठैर्मर्दयेद्देवं नाधःपुष्पैः समर्चयेत् । न शुष्कैः पूजयेद्देवं कुसुमैर्न महीगतैः ॥ न विशीर्णदलैः शिष्टैर्नाशुभैर्नाविकाशितैः । पूतिगन्धोग्रगन्धीनि आम्लगन्धीनि वर्जयेत् ॥ पूजापङ्कजभास्करे — मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् । अङ्गस्पृष्टं समाघ्रातं त्यजेत्पर्युषितं बुधः ॥ भूमिस्पृष्टं न गृह्णीयाच्छेफालीबकुलं विना ॥ बालबोधे — सर्वपुष्पैः सदा पूजा विहिताऽविहितैरपि । कर्तव्या सर्वदेवानां भक्तिरेवात्र कारणम ॥ पत्रपुष्पादिकं स्वाभिमुखमुत्तानमर्पयेत् । पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ॥ दुःखदं तत्समाख्यातं यथोत्पन्नं तथार्पयेत् ॥ अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधिं विना ॥ ॥ धर्मसिन्धौ बिल्वादेरपर्युषितत्वदिनसङ्ख्या — बिल्वः ३०, अपामार्गः ३, जाती १, तुलसी ६, शमी ७,

शतावरी ११, केतकी ४, भृङ्गराजः ९, दूर्वा ८, मन्दारः १, पद्मम् १, नागकेसरः २, दर्भाः ३०, अगस्त्यः ३, तिलः १, तगरः ६, पलाशः ६, कल्हारम् ११, मल्लिका ४, चम्पकः ९, करवीरम् ८, कुम्भी १, दमनः १, मरुबकः २ । एतेषामेतत् दिनोत्तरं पर्युषितत्वम् ॥ ॥ तुलसीग्रहणकालः— श्रवणे च व्यतीपाते भौमभार्गवभानुषु । पर्वद्वये च सङ्क्रान्तौ द्वादश्यां सूतकद्वये ॥ तुलसीं ये विचिन्वन्ति ते छिन्दन्ति हरेः शिरः ॥ नैव छिन्द्याद्रवौ दूर्वां तुलसीं निशि सन्ध्ययोः । धात्रीपत्रं कार्त्तिके च पुण्यार्थी मतिमान्नरः ॥ देवार्थे तुलसीछेदो होमार्थे समिधं तथा । इन्दुक्षये न दुष्येत गवार्थं तु तृणस्य च ॥ ॥ तुलसीप्रार्थना— 'देवैरत्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः । नमो नमस्ते तुलसि पापं हर हरिप्रिये' इति सम्प्रार्थ्य 'तुलस्यमृतजन्मासि सदा त्वं केशव प्रिये । केशवार्थं विचिन्वामि वरदा भव शोभने' इति मन्त्रेण गृह्णीयात् ॥ ॥ पूजासमुच्चये दूर्वाप्रार्थनामन्त्रः— 'त्वं दूर्वेऽमृत जन्मासि वन्दिताऽसि सुरासुरैः । सौभाग्यं सन्ततिं देहि सर्वकार्यकरी भव' इति सम्प्रार्थ्य 'दूर्वे त्वं ब्रह्मरूपे च शतमूले शताङ्कुरे । गणेशप्रीणनार्थाय चिनोमि त्वां क्षमस्व भो' इति गृह्णीयात् ॥ ॥ पुरुषार्थचिन्तामणौ शमीप्रार्थना— 'अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च । दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम्' इति सम्प्रार्थ्य 'शमी शमयते पापं शमी शत्रुविनाशिनी । अर्जुनस्य धनुर्धारी रामस्य प्रियवादिनी' इति गृह्णीयात् ॥ ॥ बिल्वपत्रे विशेषः— दर्शनाद्बिल्ववृक्षस्य स्पर्शनाद्वन्दनादपि । अहोरात्रकृतं पापं नश्यत्येव हि नारद ॥ शुष्कैः पर्युषितैरार्द्रैः खण्डितैर्बिल्वपत्रकैः । पूजयेद्गिरिजानाथं मुच्यते सर्वपातकैः ॥ अर्पितान्यपि बिल्वानि प्रक्षाल्य च पुनः पुनः । शङ्करायार्पणीयानि न नवानि यदि क्वचित् ॥ सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम् । बिल्वपत्रात्परं नास्ति येन तुष्यति शङ्करः ॥ वामपत्रे वसेद्ब्रह्मा पद्मनाभस्तु दक्षिणे । मध्यपत्रे स्थितः साक्षात्साम्बः सर्वार्थदायकः ॥

चतुर्णां पुष्पजातीनां गन्धमाघ्राति शङ्करः । अर्कस्य करवीरस्य बिल्वस्य बकुलस्य च ॥ शिवरहस्ये— 'नमस्ते बिल्वतरवे भानुसोदर ते नमः । शिवपूजोद्यताभीष्टसाधनाय नमो नमः' इति नत्वा, पुरुषार्थचिन्तामणौ— 'अमृतोद्भव श्रीवृक्ष महादेवप्रियः सदा । गृह्णामि तव पत्राणि शिवपूजार्थमादरात्'' इति मन्त्रेण पत्रं विचिनुयात् ॥ इति पुष्पादिविचारः ॥

* पत्रैः पुष्पैः रत्नेन द्र०्रेण वा पूजयेत् ॥

× अथ धूपविचारः ॥ मन्त्रमहोदधौ— धूपपात्रस्थिताङ्गारे धूपं प्रक्षिप्य, ॐ फडिति सम्प्रोक्ष्य, नम इति तत्र पुष्पं प्रक्षिप्य, धूपपात्रं वामतर्जन्या संस्पृश्य 'ॐ जयध्वनिमन्त्रमातः स्वाहा' इति घण्टामभ्यर्च्य वामहस्तेन वादयन् दक्षिणहस्तेन धूपपात्रमुत्थाप्य देवस्य नाभितो नासापर्यन्तं प्रदक्षिणाकारेण त्रिरुत्तोल्य धूपमन्त्रेण धूपयित्वा देवस्याग्रे वामे वा निक्षिप्य 'यं वाय्वात्मने नमः धूपं समर्पयामि' इति जलमुत्सृज्य अङ्गुष्ठतर्जनीयोगेन धूपमुद्रां प्रदर्शयेत् ॥ बालबोधे— उशीरागरुमिश्रन्तु गुग्गुलं घृतसंयुतम् । मधुचन्दनकुष्ठाढ्यं सामान्यं तु प्रचक्षते ॥ दीक्षाप्रकाशे— सिताज्यमधुसम्मिश्रं गुग्गुल्वगरुचन्दनम् । षडङ्गो धूप एषोऽस्ति सर्वदेवप्रियः सदा ॥ मधु मुस्ता घृतं गन्धो गुग्गुल्वगरुशैलजम् । सरलं सिंहसिद्धार्थौ दशाङ्गो धूप इष्यते ॥ ॥ अथ दीपविचारः ॥ मन्त्रमहोदधौ— दीपपात्रं धूपवत्संस्कृत्य वाममध्यमया स्पृशन्पूर्ववद्घण्टामभ्यर्च्य वादयन्नेत्रादिपादपर्यन्तं धूपवत्त्रिवारं दीपमन्त्रेण दीपयित्वा तत्स्थाने संस्थाप्य 'रं तेजोमयात्मने नमः

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ सकलाराधनैः स्वर्चितमस्तु ॥ वनस्पतिरसोत्पन्नो गन्धाढ्यो धूप उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ॐ धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः । धूपमाघ्रापयामि ॥ ज्योतिः शुक्रश्च तेजश्च देवानां सततं प्रियः । प्रभाकरो महातेजा दीपोऽयं प्रतिगृह्यताम् ॥ ॐ उद्दीप्यस्व जातवेदोऽपघ्नं निर्ऋतिं मम । पशूꣳश्च मह्यमावह जीवनं च दिशो दिश । दीपं समर्पयामि ॥ देवस्य पुरतश्चतुरश्रमण्डलं कृत्वा तस्मिन्महानैवेद्यं संस्थाप्य, ॐ भूर्भुवः सुवः । ॐ शुची वो हव्या मरुतः शुचीनाम् । शुचिꣳहिनोम्यध्वरꣳशुचिभ्यः । ऋतेन सत्यमृत साप आयन् । शुचिजन्मानः शुचयः पावकाः ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इति प्रोक्ष्य धेनुमुद्रां प्रदर्श्य, अन्नाय नमः । अन्नब्रह्मणे नमः । अमृतस्वरूपिणे नमः । दिव्यान्नाय नमः । शाल्यन्नाय नमः । पूर्णकुम्भाय नमः ॥ आदाय दक्षिणकरेण सुवर्णदर्वीं दुग्धान्नपूर्णमितरेण च रत्नपात्रम् । भिक्षाप्रदाननिरतां नवहेमवर्णां

---

दीपं समर्पयामि' इति जलमुत्सृज्य साङ्गुष्ठमध्यमां दीपमुद्रां प्रदर्शयेत् ॥ घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः । सितवर्तियुतो दक्षे वामाङ्गे रक्तवर्तिकः ॥ आचाररत्नात्रयाम— तद्दीपं च नेत्रादिपादपर्यन्तयोगतः । नैव निर्वापयेद्दीपं साधकस्तु कदाचन ॥ यस्तु निर्वापयेद्दीपं तस्य लक्ष्मीर्विनश्यति ॥ अथ घण्टानादविचारः ॥ बालबोधे— स्नाने धूपे प्रदीपे च नैवेद्योपप्रबोधयोः । घण्टापश्च महाशब्दान्प्रयुञ्जीतोत्सवेषु च ॥ पूजाकालं विनाऽन्यत्र हितं नास्याः प्रचालनम् । नानया च विना पूजां कारयेत्सिद्धिलालसः ॥

मम्बां भजे कनकभूषणमाल्यशोभाम् ॥ अन्नमेव यतो लक्ष्मीरन्नमेव जनार्दनः । अन्नं पर्वतरूपेण त्राहि मां परमेश्वरि ॥ श्रीअन्नपूर्णा मूर्तये नमः जलगन्धाद्युपचारान्समर्पयामि ॥ इति सम्पूज्य घृतेनाभिघार्य अर्घ्योदकेनान्वितं पुष्पाञ्जलिमादाय, ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् सशक्तिसाङ्गसायुधसवाहनसपरिवारगणपत्यादिपञ्चमूर्तिदेवताभ्यो नमः । नैवेद्यार्थे इदं हविःक्षीरदध्यादिनैवेद्यं निवेदयामि । (इति नित्ये । विशेषे तु – इदं हविःशाकपाकभक्ष्यभोज्यलेह्यपेयचोष्य खाद्यचतुर्विधान्ननैवेद्यं निवेदयामि, भवते सानुगाय जुषाण ते) इति परिषिच्य पुष्पाञ्जलिं समर्प्य अनामिकाऽङ्गुष्ठयोगेन 'वं अमृतात्मने नमः नैवेद्यं समर्पयामि' इति नैवेद्यमुद्रां प्रदर्श्य [सुधारसं सुविपुलमापोशनमिदं तव । गृहाण कलशानीतं यथेष्टमुपभुज्यताम् ॥ ] 'अमृतोपस्तरणमसि स्वाहा' इत्यर्घ्योदकधारां निषिच्य, अङ्गुष्ठकनिष्ठानामिकाभिः 'ॐ प्राणाय स्वाहा' अङ्गुष्ठतर्जनीमध्यमाभिः 'ॐअपानाय स्वाहा' अनामामध्यमाङ्गुष्ठैः 'ॐव्यानाय स्वाहा' अङ्गुष्ठतर्जनीमध्यमानामाभिः' ॐ उदानाय स्वाहा' सर्वाङ्गुलिभिः 'ॐ समानाय स्वाहा' इति पञ्चमुद्राः प्रदर्श्य, भुञ्जानं देवं पटान्तरितो ध्यायेत् ॥ नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च परां गतिम् ॥ (नानाभक्ष्यसमायुक्तं सुस्वादु रसमिश्रितम् । चतुर्विधान्नसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥) इति ध्यात्वा मूलमन्त्रं जप्त्वा पानीयादि दद्यात् ॥ नैवेद्यमध्ये पानीयं मया दत्तं हि भक्तितः । सुवासितं गृहाणेदं प्रसन्नो भव सर्वदा ॥ नैवेद्यमध्ये पानीयं समर्पयामि ॥ अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥ समर्पितनैवेद्यं विसर्जयामि ॥ इति पुष्पाञ्जलिं समर्प्य ॥ उत्तरापोशनार्थं ते दद्मि तोयं सुवासितम् गृहाण सुमुखो भूत्वा जगदीश नमोऽस्तु ते ॥ 'अमृतापिधानमसि स्वाहा'

इत्यर्घ्योदकं विसृज्य । 'ॐ *नैवेद्यभोजिने नमः' इतीशान्यां किञ्चिन्नैवेद्यशेषं विसृज्य 'अस्त्राय नमः' इति प्रोक्ष्य स्थलशुद्धिं कुर्यात् ॥ पानीयं पावनं श्रेष्ठं गङ्गादिसरिदुद्भवम् । हस्तप्रक्षालनं देव गृहाण मुखशोधनम् ॥ हस्तप्रक्षालनं स० ॥ मुख प्रक्षालनं स० ॥ गण्डूषं कल्पयामि ॥ एलालवङ्गकर्पूरसुगन्धद्रव्यसंयुतम् । जलं गृहीत्वा देवेश शुद्धाचमनमाचर ॥ शुद्धा चमनं स० ॥ चन्दनं च सकर्पूरं कस्तूर्यादिसमन्वितम् । करोद्वर्तनकं देव प्रीत्यर्थं प्रतिगृह्यताम् ॥ करोद्वर्तनार्थे चन्दनं स० ॥ नालिकेरफलं दिव्यं सुस्वादूदकसंयुतम् । कदलीपक्वसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ फलनैवेद्यं स० ॥ पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् । कर्पूरचूर्णं संयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ मुखवासनार्थं ताम्बूलं समर्पयामि ॥ इदं फलं मया देव

---

* मेरुतन्त्रे— देवोच्छिष्टं गृहीत्वा तु निर्माल्यभोजिने नमः । ईशान्यां तु विनिक्षिप्य हस्तं प्रक्षालयेत्ततः ॥ आह्निकचन्द्रिकायाम्— विष्वक्सेनोद्भवाक्रूराः सनकाद्या महर्षयः । लक्ष्मीकान्तप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥ ॐ विष्वक्सेनाय नमः तृप्तिरस्तु ॥ माठरः पिङ्गलो दण्डो वालखिल्यास्तलोत्तमाः । दिवाकरप्रसादोऽयं सर्वे गृह्णन्तु भास्कराः ॥ ॥ वीरभद्रो महासेनो घण्टाकर्णो महाबलः । विनायकप्रसादोऽयं गृह्णन्तु गणनायकाः ॥ ॥ श्रद्धा पुष्टिस्तथा तुष्टिर्लक्ष्मीर्विद्या श्रुतिर्धृतिः । दुर्गादेवीप्रसादोऽयं सर्वे गृह्णन्तु शाक्तयः ॥ ॥ बाणरावणचण्डेश नन्दी भृङ्गी नटादयः । सदाशिवप्रसादोयं सर्वे गृह्णन्तु शाम्भवाः ॥ ॥ रमा ब्रह्मादयो देवाः सनकाद्याः सुरर्षयः । नारायणप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥ इति तत्तद्देवतागणेभ्यः ईशान्यप्रदेशात्किञ्चिन्नैवेद्यशेषं पात्रान्तरे विसृज्य हस्तं प्रक्षालयेत् ॥

स्थापितं पुरतस्तव । तेन मे सुफलवाप्तिर्भवेज्जन्मनि जन्मनि ॥ फलं समर्पयामि ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ पूजासम्पूर्णार्थे सुवर्णपुष्पदक्षिणां समर्पयामि ॥

अथ राजोपचारपूजा ॥ दर्पणं दर्शयामि । पादुके समर्पयामि । छत्रं समर्पयामि । चामरे समर्पयामि । व्यजनं स० । आन्दोलिकां स० । शङ्खनादं स० । इति राजोपचारान् समर्पयामि ॥ सुरासुरशिरोरत्नविराजितपदाम्बुज । नीराजनं मया दत्तं गृह्यतां ज्योतिरुत्तमम् ॥ ॐ श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो ददाति । श्रियं वसाना अमृतत्वमायन्भवन्ति सत्यासमिथा मितद्रौ ॥ श्रिय एवैनं तच्छ्रियामादधाति सन्ततमृचावषट्कृत्यं सन्तत्यै सन्धीयते प्रजया पशुभिर्य एवं वेद ॥ ध्रुवाद्यौर्ध्रुवा पृथिवी । ध्रुवं विश्वमिदं जगत् । ध्रुवा ह पर्वता इमे । ध्रुवो राजा विशामयम् । ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ मङ्गलनीराजनं समर्पयामि ॥ मन्त्रपुष्पाञ्जलिं पूजान्यूनत्वाधिक्यपूरणम् । ददामि देवदेवेश मन्त्रोच्चारणपूर्वकम् ॥ ॐ गणानां त्वा गणपतिं...... सीद सादनम् ॥ तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् ॥ विश्वतः परमान्नित्यं विश्वं नारायणꣳहरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥ पतिं विश्वस्यात्मेश्वरꣳशाश्वतꣳशिव मच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥ नारायणपरो ज्योतिरात्मा नारायणः परः । नारायणपरं ब्रह्मतत्त्वं नारायणः परः ॥ नारायणपरो ध्याता ध्यानं नारायणः परः । यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ॥ अन्तर्बहिश्च

तत्सर्वं व्याप्य नारायणः स्थितः । अनन्तमव्ययं कविꣳसमुद्रेऽन्तं विश्वशम्भुवम् ॥ पद्मकोशप्रतीकाशꣳहृदयं चाप्यधोमुखम् । अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ॥ ज्वालमालाकुलं भाती विश्वस्यायतनं महत् । सन्ततꣳशिलाभिस्तु लम्बत्याकोशसन्निभम् ॥ तस्यान्ते सुषिरꣳसूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतो मुखः ॥ सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः । तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तता ॥ सन्तापयति स्वं देहमापादतलमस्तकः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा ॥ नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥ स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥ ॐ त्र्यम्बकं यजामहे...मामृतात् ॥ ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः । यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः ॥ ॐ निधनपतये नमः । निधनपतान्तिकाय नमः । ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय नमः । हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः । दिव्याय नमः । दिव्यलिङ्गाय नमः । भवाय नमः । भवलिङ्गाय नमः । शर्वाय नमः । शर्वलिङ्गाय नमः । शिवाय नमः । शिवलिङ्गाय नमः । ज्वलाय नमः । ज्वललिङ्गाय नमः । आत्माय नमः । आत्मलिङ्गाय नमः । परमाय नमः । परमलिङ्गाय नमः । एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्रम् ॥ ॐ जातवेदसे...दुरितात्यग्निः ॥ गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ ॐ सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ ॐ प्रणो देवी सरस्वती वाजेभि

वाजिनीवती । श्रीनार्मविर्ष्यवतु ॥

बहुग्वे बहुश्वायै बहुजाविकायै । बहुव्रीहियवायै बहुमाषतिलायै । बहुहिरण्यायै बहुहस्तिकायै । बहुदासपुरुषायै रयिमत्यै पुष्टिमत्यै । बहुरायस्पोषायै राजास्तु ॥

राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय कुर्महे स मे कामान्कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय । महाराजाय नमः ॥ ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुष आन्तादापरार्धात्पृथिव्यै समुद्रपर्यन्ताया एकराळिति तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ पर्याप्त्या अनन्तरायाय सर्वस्तोमोऽतिरात्र उत्तम महर्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति ॥ मन्त्रपुष्पं स० ॥ यानि कानि च पापानि जन्मान्तरकृतानि च । तानि तानि विनश्यन्ति प्रदक्षिणपदे पदे ॥ प्रदक्षिणां स० ॥ नमः सर्वहितार्थाय जगदाधारहेतवे । साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥ नमस्कारं स० ॥ पापोऽहं पापकर्माऽहं पापात्मा पापसम्भवः । त्राहि मां कृपया देव शरणागतवत्सल ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम । तस्मात्कारुण्यभावेन रक्ष मां जगदीश्वर ॥ मत्समो नास्ति पापिष्ठः त्वत्समो नास्ति पापहा । इति सञ्चिन्त्य देवेश यथेच्छसि तथा कुरु ॥ अनायासेन मरणं विना दैन्येन जीवनम् । देहि मे कृपया देव त्वयि भक्तिं च निश्चलाम् ॥ अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यून

मधिकं कृतम् । तत्सर्वं क्षम्यतां देव प्रसीद जगदीश्वर ॥ आवाहनं न जानामि न जानामि विसर्जनम् । पूजां चैव न जानामि क्षम्यतां जगदीश्वर ॥ प्रार्थनां समर्पयामि ॥ यस्य स्मृत्या च नामोक्त्या तपः पूजाक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ अस्मिन् वर्तमानकाल...अनेन मया कृतपूजाराधनेन गणपत्यादिपञ्चमूर्तिदेवताः प्रीयन्ताम् ॥ पूजामध्ये स्वरवर्णमन्त्रतन्त्रलोपप्राय श्चित्तार्थं नामत्रयजपमहं करिष्ये ॥ ॐ अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः । विष्णवे नमः ॥ एवं त्रिः ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ॥ आयुष्यं तेज आरोग्यं देहि मे जगदीश्वर ॥ प्रसीद प्रसादं देहि ॥ इति प्रसादं गृह्णीयात् ॥ इति पञ्चमूर्तिपूजा ॥

## अथ मध्याह्नसन्ध्योपासनविधिः

मध्याह्ने नद्यादौ विधिवत्स्नात्वा ब्रह्मचारी चेत्केवलं प्रक्षालितपाणिपादः शुचिस्त्रिपुण्ड्रं भस्म धारयित्वाऽऽचम्य प्राणा नायम्य 'ममोपात्त ... मध्याह्नसन्ध्यामुपासिष्ये' इति सङ्कल्प्य 'ॐ आपो हिष्ठा ... चनः ॥' इति नवधा मार्जयित्वा हस्ते जलं गृहीत्वा 'ॐ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥ यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहः स्वाहा ॥' इति पीत्वा द्विराचम्य 'ॐ दधिक्राव्णो ... रिषत् ॥' इत्यादिभिर्मार्जयित्वा 'ॐ भूर्भुवःसुवः' इत्यात्मानं प्रदक्षिणं परिषिच्योत्थाय प्राङ्मुखो मुक्ताङ्गुष्ठाभ्यां हस्ताभ्यां जलमादाय

हृ॒ꣳसः शु॑चि॒षद्व॒सुर॑न्तरिक्ष॒सद्धोता॑ वे॒दि॒षदति॑थिर्दुरोण॒सत् । नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तं बृ॒हत् ॥' ॐ भास्कराय नमः । इदमर्घ्यम् ॥ 'ॐ आ स॒त्येन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ च । हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ॥' ॐ भास्कराय नमः इदमर्घ्यम् ॥ 'ॐ भूर्भुव॒: सुव॑: ॐ तत्स॑वि॒तुः...यात् ॥' ॐ भास्कराय नमः । इदमर्घ्यम् ॥' इति सूर्याय त्रिरर्घ्यं दत्वा 'ॐ अ॒सावा॑दि॒त्यो ब्रह्म ।' इति जलहस्तः प्रदक्षिणं कृत्वोपविश्याचम्य । ॐ धातारं तर्पयामि । ॐ अर्यमणं त० । ॐ मित्रं त० । ॐ वरुणं त० । ॐ अंशुं त० । ॐ भगं त० । ॐ इन्द्रं त० । ॐ विवस्वतं त० । ॐ पूषणं त० । ॐ पर्जन्यं त० । ॐ त्वष्टारं त० । ॐ विष्णुं त० । ॐ भूस्त० । ॐ भुवस्त० । ओꣳसुवस्त० । ॐ भूर्भुवः सुवस्तर्पयामि ॥ प्रातःकालवद्गायत्रीजपान्तं कृत्वा सूर्यमुपतिष्ठते 'ॐ उद्व॒यन्तम॑स॒स्परि॒ पश्य॑न्तो॒ ज्योति॒रुत्त॑रम् । दे॒वं दे॑व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑रुत्त॒मम् ॥ ॐ उदु॒त्यं जा॒तवे॑दसं दे॒वं व॑हन्ति के॒तव॑: । दृ॒शे विश्वा॑य॒ सूर्य॑म् ॥ ॐ चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कं॒ चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः । आ प्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्ष॒ꣳसूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च ॥ ॐ तच्चक्षु॑र्दे॒वहि॑तं पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त् । पश्ये॑म श॒रद॑श्श॒तं जीवे॑म श॒रद॑श्श॒तं नन्दा॑म श॒रद॑श्श॒तं मोदा॑म श॒रद॑श्श॒तं भवा॑म श॒रद॑श्श॒तꣳशृ॒णवा॑म श॒रद॑श्श॒तं प्रब्र॑वाम श॒रद॑श्श॒तमजी॑ताः स्याम श॒रद॑श्श॒तं ज्योक्च॒ सूर्यं॑ दृ॒शे ॥ ॐ य उद॑गान्मह॒तोऽर्ण॑वाद्वि॒भ्राज॑मानः सरि॒रस्य॒ मध्या॒त्समा॑ वृष॒भो लो॑हिता॒क्षः सूर्यो॑ विप॒श्चिन्मन॑सा पुनातु' इति पञ्चभिः ॥ 'ॐ नम॒: प्राच्यै॒ दिशे॒०' इत्यादिदिगुपस्थानादिसर्वं प्रातःकालवत्कृत्वा, 'अनेन मध्याह्नसन्ध्योपासनकर्मणा श्रीपरमेश्वरः प्रीयताम्' इति कर्मेश्वराय समर्प्य, 'तद्विष्णोः परम'मिति विष्णुं स्मृत्वाऽऽचामेत् ॥ इति मध्याह्नसन्ध्योपासनविधिः ॥

# अथ वैश्वदेवविधिः

अथ बलिहरणम् (बो० गृ० सूत्रे २-८-१) ॥ सायंप्रातर्यदशनीयस्य क्रियेतौपासने पचने वा होमः । एतावदेव नाना । क्षारलवणावरान्नसंसृष्टस्य तु होमं परिचक्षते । काममितरेष्वायतनेषु । अथ यद्येतदेव स्यादुत्तरतो भस्ममिश्रानङ्गारा निरूह्य तेषु जुहुयात् । सर्वेष्वायतनेषु पाणिना परिसमूह्योभयतः परिषेकं निदध्यात् । देशाभ्यासे मन्त्राभ्यासः कामं समान स्थानेषु ॥

अथ वैश्वदेवहोमः ॥ औपासनैकदेशाग्निं लौकिकाग्निं वा 'ॐ भूर्भुवःसुवरोम् । आवसथ्यनामानमग्निं प्रतिष्ठापयामि' इत्यग्निं प्रतिष्ठाप्य प्रबोध्य, आचम्य प्राणानायम्य 'मम *पञ्चसूनादोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवहोमं करिष्ये' इति

---

*पञ्चसूनाः — मनुराह — 'पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः । कण्डनी चोदकुम्भश्च वध्यन्ते यास्तु वाहनम् ॥ आसां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः । पञ्चक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्' इति ॥ पञ्चसूना व्याख्याता हारीतेन — 'अथ सूना व्याख्यास्यामः । जङ्गमस्थावरादीन्प्राणिनः सूदयन्तीति सूदाः । एताः पञ्चविधा भवन्ति — द्रुतावतरणावगाहनविक्षोभणविक्षेपणापूतग्रहण यानादिभिराद्याङ्कुर्वन्ति । अवेलाविसृष्टद्रुतगमनाक्रमणादिभिर्द्वितीयाम् । आहननग्रहणबन्धनच्छेदनभेदनकुट्टनोत्पाटनादिभिस्तृतीयाम् ॥ आक्रमणघर्षणप्रेषणादिभिश्चतुर्थीम् । आदीपनतापनस्वेदनभर्जनपचनादिभिः पञ्चमीम् । तदेताः पञ्चसूना निरययोनीरहरहः प्रजाः कुर्वन्ति । अग्निगुरुशुश्रूषास्वाध्यायैरादितः सूनात्रयं ब्रह्मचारिणः पावयन्ति' इति ॥

सङ्कल्य 'जुष्टोदमूना...भोजनानि' इत्युपस्थाय, परिसमूह्य पर्युक्ष्य परिस्तीर्य, 'जुषस्वनः' इत्याद्यग्न्यभ्यर्चनान्तं कृत्वा हस्तेनाव ग्राहशो हविरादाय जुहोति – 'ॐ अग्नये स्वाहा (अग्नय इदं नममेत्यादि यथालिङ्गमुद्देशत्यागः) ॐसोमाय०। ॐ ध्रुवाय० । ॐ ध्रुवाय भूमाय० । ॐ ध्रुवक्षितये० । ॐ अच्युतक्षितये० । ॐ ईशानाय० । ॐ जयन्ताय० । ॐ धर्माय० । ॐ धर्म रुचये० । ॐ धन्वन्तरये० । ॐ विद्यायै० । ॐ अम्बिकायै० । ॐ हरये० । ॐ गणेभ्यः० । ॐ गणपतिभ्यः० । ॐ परिषद्भ्यः० । ॐ विश्वेभ्यो देवेभ्यः० । ॐ साध्येभ्यो देवेभ्यः । ॐ सर्वेभ्यो देवेभ्यः० । ॐ सर्वाभ्यो देवताभ्यः० । ॐ भूः स्वाहा अग्नय इदम्० । ॐ भुवः स्वाहा वायव इदम्० । ओꣳसुवः स्वाहा सूर्याय इदम्० । ॐ भूर्भुवः सुवः स्वाहा प्रजापतय इदम्० ॥ ॐ अग्नये स्विष्टकृते स्वाहा, इत्युत्तरार्धपूर्वार्धे अग्नये स्विष्टकृत इदम्० ॥ इति ॥ अथाग्नेः पश्चा द्भूमौ चतुरश्रमण्डलं विलिख्य प्रागादिचतुर्दिक्षु क्रमेण चतुरो बलीन्दद्यात् — ॐ धर्माय स्वाहा । ॐ अधर्माय० । ॐ कद्रुवै नागमात्रे० । ॐ सर्पेभ्यः० । इति ॥ अथ तत्रैवेशानमारभ्य प्रदक्षिणाकारेणैकविंशति — 'ॐ अचलायै देव्यै स्वाहा । ॐ वास्तुपाल्यै सगणायै० । ॐ अद्भ्यः० । ॐ वरुणाय० । ॐ प्रजापतये० । ॐ परमेष्ठिने० । ॐ ऋषभाय० । ॐ रुद्राय० । ॐ रुद्राण्यै० । ॐ ओषधिवनस्पतिभ्यः० । ॐ रक्षोदेवजनेभ्यः० । ॐ कामाय० । ॐ भगाय० । ॐ श्रियै० । ॐ विष्णवे० । ॐ गृहाय० । ॐ गृहराजाय० । ॐ धनधान्याभ्याꣳस्वा० । ॐ वैश्रवणाय० । ॐ श्रियै० । ॐ पुष्ट्यै०' इति ॥ पुनरीशानादिपूर्ववत्पञ्चदश — 'ॐ उलूखलमुसलाभ्याꣳस्वा० । ॐ दृषदुपलाभ्याꣳ० । ॐ समूहन्यै देव्यै० । ॐ गृह्याभ्यः० । ॐ अवसानेभ्यः० । ॐ अवसानपतिभ्यः० । ॐ सर्पदेवजनेभ्यः० । ॐ सर्वभूतेभ्यः० ।

ॐअन्तरिक्षाय० । ॐ अवान्तरिक्षाय० । ॐ धात्रे० । ॐ विधात्रे० । ॐ भूत्यै० । ॐ प्रभूत्यै० । ॐ यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने०' इति ॥ अथ मण्डलमध्ये प्रागपवर्गाश्चतुस्त्रिंशत् — 'ॐ ज्येष्ठाभ्याᳫं स्वाहा । ॐ कनिष्ठाभ्याᳫं० । ॐ श्रियै० । ॐ विष्णवे० । ॐ रुद्राय० । ॐ पशुभ्यः० । ॐ पशुपतये० । ॐ वास्तोष्पतये० । ॐ पृथिव्यै० । ॐ अन्तरिक्षाय० । ॐ दिवे० । ॐ सूर्याय० । ॐ चन्द्रमसे० । ॐ नक्षत्रेभ्यः० । ॐ अद्भ्यः० । ॐ ओषधीभ्यः० । ॐ वनस्पतिभ्यः० । ॐ चराचरेभ्यः० । ॐ परिप्लवेभ्यः० । ॐ सरीसृपेभ्यः० । ॐ देशेभ्यः० । ॐ कालेभ्यः० । ॐ लोकेभ्यः० । ॐ वेदेभ्यः० । ॐ देवेभ्यः० । ॐ ऋषिभ्यः० । ॐ वसुभ्यः० । ॐ रुद्रेभ्यः० । ॐ आदित्येभ्यः० । ॐ इन्द्राय० । ॐ बृहस्पतये० । ॐ प्रजापतये० । ॐ ब्रह्मणे० । ॐ आयतनवते०' इति ॥ अथ दक्षिणतः प्राचीनावीती 'ॐ पितृभ्यः स्वधा नमः स्वाहा । ॐ पितामहेभ्यः स्वधा नमः० । ॐ प्रपितामहेभ्यः स्वधा नमः० । मातृभ्यः स्वधा० ॥ पितामहीभ्यः स्वधा० ॥ प्रपितामहीभ्यः स्वधा० ॥ मातामहेभ्यः स्वधा० ॥ मातुःपितामहेभ्यः स्वधा० ॥ मातुःप्रपितामहेभ्यः स्वधा० ॥ मातामहीभ्यः स्वधा० ॥ मातुःपितामहीभ्यः स्वधा० ॥ मातुःप्रपितामहीभ्यः स्वधा०' इति॥ अथाप उपस्पृश्योत्तरतो यज्ञोपवीती – 'ॐ नमो रुद्राय पशुपतये स्वाहा' इति ॥ अथ दिक्षु – 'ॐ प्राच्यै दिशे स्वाहा ॥ ॐ दक्षिणायै दिशे० । ॐ प्रतीच्यै दिशे० । ॐ उदीच्यै दिशे० । ॐ ऊर्ध्वायै दिशे० । ॐ अधरायै दिशे०' इति ॥ अथावान्तरदिक्षु — ॐ अग्नये स्वाहा । ॐ निर्ऋतये० । ॐ वायवे० । ॐ ईशानाय०' इति बलिं दत्वा 'ॐ बलिहरण देवताभ्यो नमः जलगन्धाद्युपचारपूजां समर्पयामि' इति सम्पूज्य, आकाशे बलिमुत्क्षिपति — 'ॐ ये भूताः प्रचरन्ति दिवा

बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा' इति ॥ ( रात्रौ चेद्दिवा स्थाने 'नक्तं' उभयोस्तन्त्रैक्ये 'दिवा नक्तं' इति च योजयेत् ) भूतेभ्यश्च दत्वा, सक्षालनं प्रागुदीच्यां दिशि निनयति – 'ॐ नमो रुद्राय भौमाय स्वाहा' इति ॥ पुनः 'जुषस्वनः० । अदितेन्वमंस्थाः०' इत्यग्निं परिषिच्य 'यत्ते अग्ने०' इत्युपस्थाय, प्रणम्य, 'अनेन वैश्वदेवहवनकर्मणा श्रीपरमेश्वरः प्रीयताम्' इति कर्म समापयेत् ॥ इति वैश्वदेवविधिः ॥



## अथ पञ्चमहायज्ञविधिः

अत्रेयं श्रुतिः (तै० आ० २-१०)– 'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते देवयज्ञः पितृयज्ञो भूत यज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः सन्तिष्ठते यत्पितृभ्यः स्वधाकरोत्यप्यपस्तत्पितृयज्ञः सन्तिष्ठते यद्भूतेभ्यो बलिंहरति तद्भूतयज्ञः सन्तिष्ठते यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः सन्तिष्ठते यत्स्वाध्यायमधीयीतैकामप्यृचं यजुःसाम वा तद्ब्रह्मयज्ञः सन्तिष्ठते' इति ॥ (तै० आ० २-११) ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छदिर्दर्श उदीच्यां प्रागुदीच्यां वोदित आदित्ये दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचामेद्द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य...दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायमधीयीतापां वा एष ओषधीनांरसो यद्दर्भाः सरसमेव ब्रह्मकुरुते दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यते...भूर्भुवःस्वरित्याह तद्वै वाचः सत्यं यदेव वाचः सत्यं तत्प्रायुङ्क्ताथ सावित्रीं गायत्रीं त्रिरन्वाह पच्छोऽर्धर्चशोऽनवानंसविता श्रियः प्रसविता श्रियमेवाऽऽप्नोत्यथोप्रज्ञातयैव प्रति

पद्या छन्दांश्सि प्रतिपद्यते' इति ॥ ॥ (बो० गृ० सू० २-९)— अथ वैश्वदेवं हुत्वाऽतिथिमाकाङ्क्षेदागोदोहकालम् । अन्नं वोद्धृत्य दद्यात् । विज्ञायते — 'यज्ञो वा एष पञ्चमो यदतिथिः' । जघनेन गार्हपत्यमुपविश्यौपासनस्य वा 'अधीहि भो' इति गार्हपत्यमुक्त्वा प्राणायामैस्त्रिरायम्य सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशवारम् । वेदादयश्छन्दांसि, कूष्माण्डानि चाधीयीत* — 'अग्निमीळे पुरोहितं' इति ऋग्वेदस्य, 'इषे त्वोर्जेत्वा' इति यजुर्वेदस्य, 'अग्न आयाहि वीतये' इति सामवेदस्य, 'शन्नो देवीरभिष्टय' इत्यथर्ववेदस्य, 'अग्निर्मूर्धा' इति छन्दांसि, 'यद्देवा देवहेळनं' इति कूष्माण्ड्यः । यदधीते स ब्रह्मयज्ञो, यज्जुहोति स देवयज्ञो, यत्पितृभ्यः स्वधाकरोति स पितृयज्ञो, यद्भूतेभ्यो बलिं हरति स भूतयज्ञो, यद्ब्राह्मणेभ्योऽन्नं ददाति स मनुष्ययज्ञ इति ॥ एते पञ्च महायज्ञाः सततं सुप्रयुक्ता नयन्ति परमां गतिम् ॥ 'प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते । पञ्चानां महतामेषां स यज्ञैः सह गच्छति ॥ प्रवासे कुरुते चैनान्यदन्नमुपपद्यते । न चेदुत्पद्यते चान्नमद्भिरेनान्समापयेत् ॥ अद्भिरेव व्रतं कुर्याद्यथालाभमनुव्रतम् । देवानां देवयज्ञेन द्विजा गच्छन्ति साम्यताम् ॥ पितॄणां पितृयज्ञेन भूतयज्ञेन भूतिनः । मनोर्मनुष्ययज्ञेन ब्रह्मयज्ञेन ब्रह्मणः ॥ एतासां साम्यतां गत्वा देवतानां शतं समाः । आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययम्' इति ॥ 'अथासा अतिथिर्भवति गुरोः समानवृत्तिर्वैखानसो वानप्रस्थः परिव्राजको गतश्रीः ['त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यः' इति (तै० सं० २-५-६)] स्नातको राजा वा धर्मयुक्तः । तेषामभ्युत्थायासनं पाद्यमर्हणमर्घ्यं वा प्रयुञ्जीत । यास्तत्रौषधयः सन्ति ता देयाः । अन्यां

* कूष्माण्डमन्त्राः संस्कारकाण्डे विवाहप्रकरणे द्रष्टव्याः ॥

वा प्रक्रियां प्रकुर्वीत । सर्वेभ्योऽभ्यागतेभ्य आश्वचण्डालेभ्यः स्वागतं कार्यम् । ओषधिविभागस्तु विभववता कार्यः । अभावे भूमिरुदकं तृणानि कल्याणी वागिति' ॥ 'एतानि वै सतोऽगारे न क्षीयन्ते कदा च न' इति तानेतान्परंब्रह्मेत्याचक्षते ॥ (बो० प० सू० २-४-४) अथ गृहस्य वैश्वदेवं कृत्वाऽग्रं दत्वा कालयोर्भोजनं मानुषम् ॥ (बो० प० सू० २-४-८)– पञ्च महायज्ञाः– देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । देवयज्ञः स्वाहाकार आकाष्ठात् । पितृयज्ञः स्वधाकार औदनपात्रात् । भूतयज्ञो नमस्कार आपुष्पेभ्यः । मनुष्ययज्ञो दानमामूलफलशाकेभ्यः । ब्रह्मयज्ञ ओङ्कार आव्याहृतिभ्यः । अथास्यातिथयोऽभ्यागता वर्णाश्रमा आनृशंसा अभ्युत्थेया अर्घ्या अर्चनीया आभ्यन्तरा रहस्या विश्वास्याश्च भवन्ति । श्रान्तोऽदृष्टपूर्वोऽश्रुतः केवलमन्नार्थी नान्यत्प्रयोजनो य एति सोऽतिथिर्भवति । अपि वा सर्ववर्णानामन्यतमः काले यथोपपन्नः सर्वेषामतिथीनां श्रेष्ठतमोऽतिथिर्भवति । श्वश्रूश्वशुरयोनिसम्बन्धाः स्नेहबन्धमभिभाषमाणा भूयो भूयोऽभ्यागच्छेरन् तथा प्रेषणिकाश्चाभ्यागता भवन्ति । सखा सहाधीतिः सहाध्वनीनो ब्राह्मणक्षत्रियवैश्यरथकाराः सगृहाः साग्निहोत्रिका अनस्विनो रथिनश्चातिथयो भवन्ति । तेषामन्तराले विपङ्क्तीः कृत्वा सर्वान्कामानुपहरेत्सानड्वाहपशून् । विज्ञायते – 'तस्मादनस्वी च रथी चातिथीनामपचिततमावपचितिमान्भवति य एवं वेद' इति ब्राह्मणम् ॥ ॥ यदि ब्राह्मणः क्षत्रियश्च समेत्यायातां ब्राह्मणोऽतिथिः क्षत्रिये सान्त्वम् । अथ यदि क्षत्रियो वैश्यश्च समेत्यायातां क्षत्रियोऽतिथिर्वैश्ये सान्त्वम् । अथ यदि वैश्यः शूद्रश्च समेत्यायातां वैश्योऽतिथिः शूद्रे सान्त्वम् ! अथ यदि शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् । अथ यदि ब्रह्मचारी मातापित्रोराचार्यार्थे वाऽध्वनि वर्तमानो गृहमागच्छेन्नैनं प्रत्युत्तिष्ठेत्स्वागतमित्युक्त्वाऽऽसनं पादशौचं च दत्वा कुशलमभिभाष्योपासीत । कपालमस्मै

दद्यात् 'नियममेवोपतिष्ठस्व' इति । उपावृत्ताय भैक्ष्यमिति ब्रुवते गृहादेवान्नं भैक्ष्यमित्युपहरेत्स तस्योपचारः । अथ यदि वानप्रस्थम भ्यागतं स्वागतमित्युक्त्वाऽभ्युत्थायासनं पादशौचं दत्वा कुशलमभिभाष्योपासीत । विदित्वा चरणं कन्दमूलफलशाकान्यारण्या श्चौषधय इत्युपहरेत्स तस्योपचारः । अथ यदि यतिमागतं स्वागतमित्युक्त्वाऽभ्युत्थायासनं पादशौचं च दत्वा कुशलमभिभाष्यो पासीत । नैनं पूर्वमुपामन्त्रयेन्न चास्मै प्रक्रियां प्रकुर्वीत । काले त्वन्नं भैक्ष्यमित्युपहरेत्स तस्योपचारः । यद्यर्थी वसत्याशय्या देशमुपकल्प्य काले ज्योतिष्करणं नोपस्तरणमेके ब्रुवते दद्याद्वा । बालानां वृद्धानां स्त्रीणां तु विभ्रष्टानां गूढचरितविकृतवेषाणा मपि वा श्वचण्डालादीनामानृशंस्यवत्सं विभागो विहितः । मत्त उन्मत्त आर्तो भीतो राजा चोरश्चेति सम्भ्रमेणाभ्युत्थेयाः । आचार्य ऋत्विक्पिता मातुलः श्वशुरो वेदविद्ब्राह्मणः क्षत्रियोऽभिषिक्तः सहस्रप्रदो वैश्यो राजपुरोहितश्चेत्यर्घ्यार्हा भवन्ति । पितृज्येष्ठक नीयसामुपाध्यायपुत्रस्त्रिमधुस्त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निष्षडङ्गविच्छीर्षको ज्येष्ठसामिकोऽथर्वाङ्गिरसोऽध्येतारः स्नातका इत्येते सवाहनस्नापनशय्यालङ्कारविभूषणाच्छादनैरर्चनीया भवन्ति । यदि बहवोऽतिथयोऽभ्यागच्छेरन्तत्राऽपि विद्वद्वृद्धकृशबालाश्चा र्चनीया भवन्ति । अथ यद्यतिथिरार्तो व्याधितो वा यद्ब्रूयादिदं मे क्रियतामित्यविद्यमानोऽन्यां प्रक्रियां प्रकुर्वीत । यद्याग्रय णेष्टिपशुचातुर्मास्याध्वराणामुद्यतां दक्षिणां नोत्सृजेत्तां तस्मै दद्यात् 'अतिथिः सर्वयज्ञक्रतुसम्मित' इति विज्ञायते । अथ यद्य तिथिरभ्यागतो वा यस्य गृहे नाश्नीयात्तस्मै सर्वा देवता अवरुद्धा भवन्ति तस्मात्सदारः सापत्योऽभ्युत्थानं पाद्यमर्हणमर्घ्यं वा प्रयच्छेत यास्तत्रौषधयस्ता उपहरेत् । य एतेन विधिनाऽतिथींन्नियच्छति यश्चैतेन विधिनाऽतिथीन्पूजयति नैनं मृत्युरभिभवति नार्तिर्नरिष्टिर्नावृत्तिर्न जरा न शोको यश्चैवं वेद यश्चैवं वेद ॥ ॥ (बो० ध० सू० २-६) अथेमे पञ्चमहायज्ञास्तान्येव महा

सत्राणि देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । अहरहस्स्वाहा कुर्यादाकाष्ठात्तथैतं देवयज्ञं समाप्नोति । अहरहस्स्वधा कुर्यादोदपात्रात्तथैतं पितृयज्ञं समाप्नोति । अहरहर्नमस्कुर्यादापुष्पेभ्यस्तथैतं भूतयज्ञं समाप्नोति । अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादामूलफलशाकेभ्यस्तथैतं मनुष्ययज्ञं समाप्नोति । अहरहस्स्वाध्यायं कुर्यादाप्रणवात्तथैतं ब्रह्मयज्ञं समाप्नोति । स्वाध्यायो वै ब्रह्मयज्ञः । तस्य ह वा एतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मन उपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोक उदयनं यावन्तं ह वा इमां वित्तस्य पूर्णां ददत्स्वर्गं लोकं जयति भूयांसं चाक्षय्यं चाऽप पुनर्मृत्युं जयति य एवं विद्वान्त्स्वाध्यायमधीते । तस्मा 'त्स्वाध्यायोऽध्येतव्य' इति हि ब्राह्मणम् ॥ ॥ 'अतिथिलक्षणम्' यमः — 'तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुः ॥ व्रती यतिरेकरात्रं निवसन्नुच्यतेऽतिथिः । यस्मान्नित्यं न वसति तस्मात्तमतिथिं विदुः' इति ॥ तथैवाहतुः पराशरशातातपौ – 'अचिन्तितमनाहूतं देशकाल उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥ क्षुधार्तस्तृषितः श्रान्तो दूरादध्वन आगतः । तं पूजयेत्प्रयत्नेन सोऽतिथिः स्वर्गसङ्क्रमः' इति ॥ ॥ विशेषमाहतुः शङ्खलिखितौ – 'नाब्राह्मणोऽतिथिर्ब्राह्मणस्य' इति ॥

अथ पञ्चमहायज्ञप्रयोगः ॥ वैश्वदेवबलिहरणानन्तरं अतिथिमाकाङ्क्षेदागोदोहनकालम् । आगतमतिथिं भोजयित्वाऽग्रं वोद्धृत्य दद्यात् । अथ प्रक्षालितपाणिपादोऽप आचम्याग्नेः पश्चाद्दर्भेष्वासीनो दर्भान्धारयमाणस्त्रीन्प्राणानायम्य सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वो दशवारं वा ॥ ॥ अथ वेदादीञ्छन्दांसि कूष्माण्डानि चाधीयीत ॥ ॥ ॐ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम् ॥ (इति ऋग्वेदस्य) ॥ ॥ इ॒षे त्वो॒र्जे त्वा॑ वा॒यव॑स्थ॒ पा॒यव॑स्थ दे॒वो

वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मामावस्तेन ईशत माघशंसो रुद्रस्य हेतिः परिवो वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ यज्ञस्य घोषदसि प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हिरच्छमनुना कृता स्वधया वितष्ठात आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे देवानां परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा त्वान्वङ्मा तिर्यक्पर्व ते राध्यासमाच्छेत्ता ते मा रिषन्देवबर्हिः शतवल्शं विरोह सहस्रवल्शा वि वयं रुहेम पृथिव्याः सम्पृचः पाहि सुसम्भृता त्वा सम्भराम्यदित्यै रास्नासीन्द्राण्यै सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मास्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना हराम्युर्वन्तरिक्षमन्विहि देवङ्गममसि ॥ शुन्धध्वं दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृंहस्व मा ह्वार्वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारं हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्यां सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मा सम्पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वाऽऽतनच्मीन्द्राय दधि विष्णो हव्यं रक्षस्व ॥ (इति यजुर्वेदस्य) ॥ ॥ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ (इति सामवेदस्य) ॥ ॥ शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥ (इत्यथर्ववेदस्य) ॥ ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥ त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥ भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।

यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ ॥ अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चं मश्रेत् ॥ जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे । घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥ त्वामग्ने अङ्गिरसो गुहाहितमन्वविन्दञ्छिश्रियाणं वने वने । स जायसे मथ्यमानः सहोमहत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥ यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते । इन्द्रेण देवैः सरथꣳसबर्हिषि सीदन्निहोता यजथाय सुक्रतुः ॥ त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ॥ शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे ॥ सखायः सं वः सम्यञ्चमिषꣳस्तोमञ्चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्याभर ॥ एना वो अग्निं नमसोर्जो न पातमाहुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् ॥ स योजते अरुषो विश्वभोजसा स दुद्रवत्स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳराधो जनानाम् ॥ उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः । उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः ॥ अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ॥ स इधानो वसुष्कविरग्निरीडेन्यो गिरा ॥ रेवदस्मभ्यं पुर्वणीक दीदिह । क्षपो राजन्नुतत्मनाऽग्ने वस्तोरुतोषसः । स तिग्मजंभरक्षसो दह प्रति ॥ आ ते अग्न इधीमहि द्युमन्तं देवाऽजरम् । यद्ध स्याते पनीयसो समिद्दीदयाति द्यवीषꣳस्तोतृभ्य आभर ॥ आते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते । सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳहूयत इषꣳ० ॥ उभे सुश्चन्द्र सर्पिषो दर्वीश्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ० ॥ अग्ने तमद्याश्वं न स्तोमैः क्रतुन्न भद्रꣳहृदि स्पृशम् । ऋध्यामात ओहैः ॥ अधाह्यग्ने क्रतोर्भद्रस्य दक्षस्य

साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्ति शुष्माः ॥ एभिर्नो अर्कैर्भवा नो अर्वाङ् सुवर्न ज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः ॥ अग्निꣳहोतारं मन्ये दास्वन्तं वसोः सूनुꣳ सहसो जातवेदसम् विप्रं न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य विभ्राष्टिमनु शुक्र शोचिष आजुह्वानस्य सर्पिषः ॥ अग्ने त्वन्नो अन्तमः । उत त्राता शिवो भव वरूथ्यः ॥ तन्त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यः ॥ वसुरग्निर्वसुश्रवाः । अच्छानक्षि द्युमत्तमो रयिं दाः ॥ इति छन्दाँसि ॥ 'यद्देवा देव हेळनं' इति कूष्माण्डमन्त्राः ॥ ॐ नमो ब्रह्मणे० इति त्रिरनूच्याप उपस्पृशेत् ॥

अथ देवयज्ञः – पूर्वोक्त० देवयज्ञेन यक्ष्ये – इति सङ्कल्प्य 'ॐ विद्युदसि विद्यमे पाप्मानमृतात्सत्यमुपैमि' इत्यपः स्पृष्ट्वाऽग्निं परिषिच्य 'ॐ देवेभ्यः स्वाहा' इत्यन्नं समिधं वा हुत्वा पुनः परिषिच्य 'वृष्टिरसि वृश्चमे पाप्मानमृतात्सत्यमुपागाम्' इत्यपः स्पृशेत् । इति देवयज्ञः ॥

अथ पितृयज्ञः – पूर्वोक्त० पितृयज्ञेन यक्ष्ये – इति सङ्कल्प्य 'विद्युदसि' इत्यपः स्पृष्ट्वा प्राचीनावीती अग्नेर्दक्षिणतोऽपसव्यं परिषिच्य दक्षिणाग्रेषु दर्भेषु 'पितृभ्यः स्वधास्तु' पिण्डमपो वा दत्वा पुनः परिषिच्य यज्ञोपवीती 'वृष्टिरसि' इत्यपः स्पृशेत् ॥ इति पितृयज्ञः ॥

अथ भूतयज्ञः – पूर्वोक्त० भूतयज्ञेन यक्ष्ये इति सङ्कल्प्य 'विद्युदसि' इत्यपः स्पृष्ट्वाऽग्नेरुत्तरतः परिषिच्य दर्भेषु 'भूतेभ्यो नमः' इत्यन्नं फलं पुष्पं वा दत्वा पुनः परिषिच्य 'वृष्टिरसि' इत्यपः स्पृशेत् ॥ इति भूतयज्ञः ॥

अथ मनुष्ययज्ञः – पूर्वोक्त० मनुष्ययज्ञेन यक्ष्ये इति सङ्कल्प्य 'विद्युदसि' इत्यपः स्पृष्ट्वा 'मनुष्येभ्यो हन्ता' इत्यतिथयेऽन्नं दद्यादभावे भूमौ वा परिषिच्य दत्वा 'वृष्टिरसि' इत्यपः स्पृशेत् ॥ ततश्चरुशेषं बहिर्भूमौ – ऐन्द्रवारुणवायव्या याम्या नैर्ऋति काश्च ये । ते काकाः प्रतिगृण्हन्तु भूमौ पिण्डं मयार्पितम् ॥ द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ । ताभ्यामन्नं प्रदास्यामि स्यातामेतावहिंसकौ ॥ इति दत्वा हस्तपादं प्रक्षालयेत् ॥ इति मनुष्ययज्ञः ॥

अथ ब्रह्मयज्ञः ॥ अथ दर्भेष्वासीनो दर्भान्धारयमाण आचम्य प्राणानायम्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्ये इति सङ्कल्प्य – 'विद्युदसि विद्यमे पाप्मानमृतात्सत्यमुपैमि' इति हस्तावनिज्य 'ॐ आपोहिष्ठा०' इति तिसृभि राचामेत् 'ॐ भूर्भुवःसुवः' इत्योष्ठौ द्विः परिमृज्य सकृदुपस्पृश्य सव्यं पाणिं पादौ च प्रोक्ष्य शिरश्चक्षुषी नासिके श्रोत्रे हृदय मालभ्य – वामपादोपरि दक्षिणपादं प्रतिष्ठाप्य दक्षिणजानूपरि दक्षिणोत्तरौ पाणी कृत्वा 'ॐ भूर्भुवः सुवः' इति प्रतिपद्य 'ॐ तत्सवितुर्वरेण्यम् । ॐ भर्गो देवस्य धीमहि । ॐ धियो यो नः प्रचोदयात् ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । ॐ धियो यो नः प्रचोदयात् ॥ ॐ तत्सवितु ... धीमहि । धियो ... यात् ॥ अग्निमीळे ... धातमम् ॥ इषे त्वोर्जे त्वा...

पशून्पाहि ॥ अग्न आ याहि ... बर्हिषि ॥ शन्नो देवी ... वन्तु नः ॥ अथ शिक्षां प्रवक्ष्यामि ॥ अमावास्येन वा पौर्णमासेन वा हविषा यक्ष्यमाणो भवति ॥ वृद्धिरादैच् ॥ समाम्नायः समाम्नातः ॥ मयरसतजभनलगसम्मितम् ॥ पञ्चसंवत्सरमयम् ॥ गौः ग्मा ज्मा ॥ योगीश्वरं याज्ञवल्क्यम् ॥ नारायणं नमस्कृत्य ॥ अथातो धर्मजिज्ञासा ॥ अथातो ब्रह्मजिज्ञासा ॥ ॐ नमो ब्रह्मणे ... बृहते करोमि' ॥ इति परिधानीयां त्रिरनूच्य 'वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम्' इत्यपः स्पृष्ट्वा, शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य । निवीतेन – ॐ प्रजापतिं काण्डर्षिं तर्पयामि तर्पयामि । सोमं काण्डर्षिं तर्पयामि तर्पयामि ॥ अग्निं काण्डर्षिं तर्पयामि तर्पयामि ॥ विश्वान्देवान्काण्डर्षींस्तर्पयामि तर्पयामि ॥ स्वयम्भुवं काण्डर्षिं तर्पयामि तर्पयामि' इति तर्पयित्वा । अनेन ब्रह्मयज्ञकर्मणा श्रीपरमेश्वरः प्रीयतामिति कर्मेश्वरार्पणं कृत्वा विष्णुस्मरणमाचमनं च कुर्यात् ॥ अत्रानुपाकृतवेदस्तु गायत्रीमेव दशकृत्व आवर्तयेदिति विशेषः ॥

अथ देवर्षिपितृतर्पणम् ॥ 'बो० ध० सू० (२-८-१५) पूतः पञ्चभिर्ब्रह्मयज्ञैरथोत्तरं देवतास्तर्पयति – 'अग्निः प्रजापतिः' ॥ ममोपात्त ... देवर्षिपितृतर्पणं करिष्ये इति सङ्कल्प्य ॐ अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पा इत्येतानि प्राग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि ॥ ॐ वसूंश्च त० ॥ ॐ पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि त० ॥ ॐ रुद्रांश्च त० ॥ ॐ मित्र इन्द्रो महापितर आपो विश्वेदेवा ब्रह्मा विष्णुरित्येतानि प्रत्यग्द्वाराणि दैवतानि सन ... तर्पयामि ॥ आदित्यांश्च तर्पयामि ॥ ॐ वसवो वरुणोऽज एकपादहिर्बुध्न्यः पूषाश्विनौ यम इत्येतान्युदग्द्वाराणि दैवतानि सन ... तर्प

यामि ॥ ॐ विश्वेदेवांस्तर्पयामि ॥ ॐ साध्यांश्च त० ॥ ॐ ब्रह्माणं त० ॥ ॐ प्रजापतिं त० ॥ ॐ चतुर्मुखं त० ॥ ॐ परमेष्ठिनं त० ॥ ॐ हिरण्यगर्भं त० ॥ ॐ स्वयम्भुवं त० ॥ ब्रह्मपार्षदांश्च त० ॥ ॐ ब्रह्मपार्षदीश्च० ॥ ॐ अग्निं० ॥ ॐ वायुं त० ॥ ॐ वरुणं त० ॥ सूर्यं त० ॥ ॐ चन्द्रमसं० ॥ ॐ नक्षत्राणि त० ॥ ॐ सद्योजातं त० ॥ ॐ भूः पुरुषं त० ॥ ॐ भुवः पुरुषं० ॥ॐ सुवः पुरुषं० ॥ ॐ भूर्भुवः सुवः पुरुषं त० ॥ ॐ भूस्त० ॥ ॐ भुवस्त० । ॐ सुवस्त० । ॐ महस्त० । ॐ जनस्त० । ॐ तपस्त० । ॐ सत्यं त० ॥ ॐ भवं देवं त० ॥ ॐ शर्वं देवं त० ॥ ओमीशानं देवं त० ॥ ॐ पशुपतिं देवं त० ॥ ॐ रुद्रं देवं त० ॥ ॐ उग्रं देवं त० ॥ भीमं देवं त० ॥ महान्तं देवं त० ॥ भवस्य देवस्य पत्नीं त० ॥ ॐ शर्वस्य देवस्य पत्नीं त० ॥ ॐ ईशानस्य देवस्य पत्नीं त० ॥ पशुपतेर्देवस्य पत्नीं त० ॥ ॐ रुद्रस्य देवस्य पत्नीं त० ॥ ॐ उग्रस्य देवस्य पत्नीं त० ॥ ॐ भीमस्य देवस्य पत्नीं त० ॥ महतो देवस्य पत्नीं त० ॥ भवस्य देवस्य सुतं त० ॥ ॐ शर्वस्य देवस्य सुतं त० ॥ ओमीशानस्य देवस्य सुतं त० ॥ ॐ पशुपतेर्देवस्य सुतं त० ॥ ॐ रुद्रस्य देवस्य सुतं त० ॥ ॐ उग्रस्य देवस्य सुतं त० ॥ ॐ भीमस्य देवस्य सुतं त० ॥ ॐ महतो देवस्य सुतं त० ॥ ॐ रुद्रांस्त० ॥ रुद्रपार्षदांस्त० ॥ ॐ रुद्रपार्षदीश्च त० ॥ ॐ विघ्नं त० ॥ ॐ विनायकं० ॥ ॐ वीरं त० ॥ ॐ स्थूलं० ॥ वरदं त० ॥ ॐ हस्तिमुखं त० ॥ ॐ वक्रतुण्डं त० ॥ एकदन्तं त० ॥ लम्बोदरं० ॥ विघ्नपार्षदांस्त० ॥ ॐ विघ्नपार्षदीश्च त० ॥ ॐ सनत्कुमारं त० ॥ स्कन्दं० ॥ ॐ इन्द्रं० । ॐ षष्ठीं० । षण्मुखं० । ॐ विशाखं० । जयन्तं० । महासेनं० ।

सुब्रह्मण्यं० । स्कन्दपार्षदांस्त० । स्कन्दपार्षदीश्च० ॥ ॐ आदित्यं० । सोमं० । अङ्गारकं० । बुधं० । बृहस्पतिं० । शुक्रं० । शनैश्चरं० । राहुं० । केतुं० ॥ ॐ केशवं० । नारायणं० । माधवं० । गोविन्दं० । विष्णुं० । मधुसूदनं० । त्रिविक्रमं० । वामनं० । श्रीधरं० । हृषीकेशं० । पद्मनाभं० । दामोदरं० । श्रियं देवीं० । सरस्वतीं देवीं० । पुष्टिं देवीं० ॥ तुष्टिं देवीं० । विष्णुं० । गरुत्मन्तं० । विष्णुपार्षदांस्त० । विष्णुपार्षदीश्च० ॥ ॐ यमं० । यमराजं० । धर्मं० । धर्मराजं० । कालं० । नीलं० । मृत्युञ्जयं । वैवस्वतं० । चित्रं० । चित्रगुप्तं० । वैवस्वत पार्षदांस्त० । वैवस्वतपार्षदीश्च० ॥ ॐ भूमिदेवांस्त० । काश्यपं० । अन्तरिक्षं० । विद्यां० । धन्वन्तरिं० । धन्वन्तरिपार्षदांस्त० । धन्वन्तरिपार्षदीश्च०' ॥ अथ निवीती उदङ्मुख ऋषितीर्थेन ऋषीन्द्विर्द्विस्तर्पयेत् — 'ॐ ऋषीं स्तर्पयामि तर्पयामि । महर्षींस्त० । परमर्षींस्त० । ब्रह्मर्षींस्त० । देवर्षींस्त० । राजर्षींस्त० । श्रुतर्षींस्त० । जनर्षींस्त० । तपर्षींस्त० । सत्यर्षींस्त० । सप्तर्षींस्त० । काण्डर्षींस्त० । ऋषिकांस्त० । ऋषिपत्नीस्त० । ऋषिपुत्रांस्त० । ऋषिपौत्रांस्त० । काण्वं बोधायनं० । आपस्तम्बं सूत्रकारं० । सत्याषाढं० । हिरण्यकेशिनं० । वाजसनेयं० । याज्ञवल्क्यं० । आश्वलायनं० । शौनकं० । व्यासं० । वसिष्ठं० । प्रणवं० । व्याहृतीस्त० । सावित्रीं० । गायत्रीं० । छन्दाँसि० । ऋग्वेदं० । यजुर्वेदं० । सामवेदं० । अथर्ववेदं० । इतिहासपुराणानि० । सर्ववेदांस्त० । सर्पदेवजनांस्त० । सर्वभूतानि०' ॥ इति ॥ अथ प्राचीनावीती दक्षिणामुखः पितृतीर्थेन पितॄंस्त्रिस्त्रिस्तर्पयेत् — 'ॐ पितॄन्स्वधानमस्तर्पयामि तर्पयामि तर्पयामि । पितामहान्स्वधानमस्त० । प्रपितामहान्स्वधानमस्त० । मातॄस्स्वधानमस्त० । पितामहीस्स्वधानमस्त० ।

प्रपितामहीस्स्वधानमस्त० ॥ मातामहान्स्वधा नमस्त० । मातुः पितामहान्स्वधा नमस्त० ॥ मातुः प्रपितामहान्स्वधा नमस्त० ॥ मातामहीस्स्वधा नमस्त० । मातुः पितामहीःस्वधा नमस्त० ॥ मातुः प्रपितामहीस्स्वधा नमस्त० ॥ ओमाचार्यान्स्वधा नमस्त० ॥ आचार्यपत्नीस्स्वधा नमस्त० ॥ गुरून्स्वधा नमस्त० । गुरुपत्नीस्स्वधा नमस्त० ॥ सखीन्स्वधा नमस्त० ॥ सखिपत्नीस्स्वधा नमस्त० ॥ ज्ञातीन् स्वधानमस्तर्प० । ज्ञातिपत्नीः स्वधानमस्तर्प० । अमात्यान्स्वधा नमस्तर्प० । अमात्यपत्नीः स्वधानमस्तर्प० ॥ सर्वान्स्वधा नमस्त० ॥सर्वास्स्वधा नमस्त०' ॥ इति ॥ अनुतीर्थमप उत्सिञ्चति — 'ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् । तृप्यत तृप्यत तृप्यत' इति ॥ अनेन देवर्षिपितृतर्पणकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥

## अथ गोग्रासप्रयोगः

ॐ आगावो अग्मन्नुत भद्रमक्रन् । सीदन्तु गोष्ठे रणयन्त्वस्मे ॥ प्रजावतीः पुरुरूपा इहस्युः । इन्द्राय पूर्वीरुषसो दुहानाः ॥ श्री गोदेव्यै नमः इति गन्धादिभिरभ्यर्च्य ॥ 'सौरभेय्यः सर्वहिताः सर्वपापप्रणाशनाः । प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः' ॥ श्री गोदेव्यै नमः ग्रासं समर्पयामि ॥ इति ग्रासं दत्वा प्रणम्य 'गावो मे पुरतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम्' इति प्रार्थयेत् । इति गोग्रासविधिः ॥

# अथ त्रिसुपर्णविधिः

'ज्ञानप्रतिबन्धकब्रह्महत्यादिपापनिवृत्तिहेतवः सहस्रपर्यन्तं पङ्क्तिपुनानास्त्रिसुपर्णमन्त्रा भोजनात्प्राक्पठनीयाः इति भाष्ये ॥ अथ त्रिसुपर्णमन्त्राः ॥ ॐ ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतु माम् । यास्ते सोम प्रजावत्सोभिसो अहम् । दुःष्वप्नहं दुरुष्षह । यास्ते सोम प्राणा स्ताञ्जुहोमि । त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात्पङ्क्तिं पुनन्ति । ॐ ॥१॥ ब्रह्म मेधया । मधु मेधया । ब्रह्ममेव मधुमेधया । अद्यानो देव सवितः प्रजावत्सा वीः सौभगम् । परा दुष्वप्नियꣳसुव । विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्म आसुव । मधु वाता० षधीः ॥ मधु नक्तमुतोषसि० नः पिता ॥ मधुमान्नो० भवन्तु नः ॥ य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । भ्रूणहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात्पङ्क्तिं पुनन्ति । ॐ ॥२॥ ब्रह्ममेधवा । मधु मेधवा । ब्रह्ममेव मधु मेधवा । ब्रह्मा देवानां पदवीः कवीना मृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाꣳस्वधितिर्वनानाꣳसोमः पवित्रमत्येति रेभन् ॥ हꣳसः शुचिषद्वसुरन्तरिक्ष सद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ ऋचे त्वा रुचे त्वा समित्स्रवन्ति सरितो न धेनाः । अन्तर्हृदा मनसा पूयमानाः । घृतस्य धारा अभिचाकशीमि । हिरण्ययो वेतसो मध्ये आसाम् । तस्मिन्त्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः । तस्यासते हरयः सप्ततीरे स्वधां दुहाना

अमृतस्य धाराम् । य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । वीरहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात्पङ्क्तिं पुनन्ति । ॐ ॥३॥ इति त्रिसुपर्णमन्त्राः ॥



# अथ भोजनविधिः

(बो० ध० सू०) अथ शालीनयायावराणामात्मयाजिनां प्राणाहुतीर्व्याख्यास्यामः । सर्वावश्यकावसाने संमृष्टोपलिप्ते देशे प्राङ्मुख उपविश्य तद्भूतमाह्रियमाणं 'भूर्भुवस्सुवरो' मित्युपस्थाय वाचं यच्छेत् । न्यस्तमन्नं महाव्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य सव्येन पाणिनाऽविमुञ्चन् 'अमृतोपस्तरणमसि' इति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति — 'प्राणे निविष्टोऽमृतं जुहोमि शिवो माऽऽविशाऽप्रदाहाय प्राणाय स्वाहेति' ॥ पञ्चान्नेन प्राणाहुतीर्दत्वा तूर्ष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन् । नाऽन्तरा वाचं विसृजेद्यदन्तरा वाचं विसृजेत् 'भूर्भुवस्सुवरोम्' इति जपित्वा पुनरेव भुञ्जीत । त्वक्केश नखकीटाखुपुरीषाणि दृष्ट्वा तं देशं पिण्डमुद्धृत्याऽद्भिरभ्युक्ष्य भस्माऽवकीर्य पुनरद्भिः प्रोक्ष्य वाचा च प्रशस्तमुपयुञ्जीत । अथाप्युदाहरन्ति — 'आसीनः प्राङ्मुखोऽश्नीयाद्वाग्यतोऽन्नमकुत्सयन् । अस्कन्दयंस्तन्मनाश्च भुक्त्वा चाग्निमुपस्पृशेत्' इति ॥ सर्वभक्ष्यापूपकन्दमूलफलमांसादीनि दन्तैर्नावद्येत् । नातिसुहितः । 'अमृतापिधानमसी' त्युपरिष्टादपः पीत्वाऽऽचान्तो हृदयदेशमभिस्पृशति 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्व' इति । पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणी निस्रावयति — 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' इति । हुतानुमन्त्रण

मूर्ध्वहस्तः समाचरेत् – 'श्रद्धायां प्राणे निविश्यामृतं हुतं प्राणमन्नेनाप्यायस्व' इति पञ्च। 'ब्रह्मणि म आत्मामृतत्वायेत्यात्मानम् । अक्षरेण चात्मानं योजयेत् । सर्वक्रतुयाजिनामात्मयाजी विशिष्यते' । अथाप्युदाहरन्ति – 'यथा हि तूलमैषीकमग्नौ प्रोतं प्रदीयते । तद्वत्सर्वाणि पापानि दह्यन्ते ह्यात्मयाजिनः ॥ केवलाघो भवति केवलादी । मोघमन्नं विन्दते' इति । स एवमेवाहरहः सायंप्रातर्जुहुयात् । अद्भिर्वा सायम् । अथाप्युदाहरन्ति 'अग्रे भोजयेदतिथीनन्तर्वत्नीरनन्तरम् । बालवृद्धांस्तथा दीनान्व्याधितांश्च विशेषतः ॥ अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्ते यथाविधि । भुज्यमानो न जानाति न स भुङ्क्ते स भुज्यते ॥ पितृदैवतभृत्यानां मातापित्रोर्गुरोस्तथा । वाग्यतो विघसमश्नीयादेवं धर्मो विधीयते' इति ॥ अथाप्युदाहरन्ति 'अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशतं गृहस्थस्याऽपरिमितं ब्रह्मचारिणः ॥ आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम्' इति ॥ 'गृहस्थो ब्रह्मचारी वा यो नाश्नंस्तु तपश्चरेत् । प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु सः' ॥ अन्यत्र प्रायश्चित्तात्प्रायश्चित्ते तदेव विधानम् । अथाप्युदाहरन्ति — 'अन्तरा प्रातराशश्च सायमाशं तथैव च । सदोपवासी भवति यो न भुङ्क्ते कदाचन ॥ प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत् । त्रेताग्निहोत्रमन्त्रांस्तु द्रव्यालाभे यथा जपेत्' इति ॥ एवमेवाचरन्ब्रह्मभूयाय कल्पते ब्रह्मभूयाय कल्पते इति ॥

अथ भोजनप्रयोगः प्रक्षालितपाणिपादो द्विराचम्य शुचौ संवृते देशे चतुरश्रमण्डले प्रक्षालितं भोजनपात्रं निधाय प्राङ्मुख उपविश्य परिविष्टमन्नं 'ॐ भूर्भुवः सुवरों' इत्युपस्थाय 'ॐ तत्सवितुः० प्रचोदयात्' इति प्रोक्ष्य 'सत्यं त्वर्तेन परिषिञ्चामि' इति प्रदक्षिणं परिषिच्य 'ॐ चित्राय स्वाहा । ॐ चित्रगुप्ताय स्वाहा । ॐ यमाय स्वाहा । ॐ यमधर्मराजाय स्वाहा' ।

इति दक्षिणतो भूमौ दण्डाकारेण बलिचतुष्टयं दत्वा तेषु 'ॐ चित्राय नमः तृप्तिरस्तु । ॐ चित्रगुप्ताय नमः तृप्तिरस्तु । ॐ यमाय नमः तृप्तिरस्तु । ॐ यमधर्मराजाय नमः तृप्तिरस्तु' । इति जलं दत्वा 'अन्तश्चरति भूतेषु गुहायां विश्वतो मुखः । त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णुः पुरुषः परः' इत्यन्नमभिमन्त्र्य वाचं यमो दक्षिणेन पाणिना जलमादाय सव्येन पात्रमविमुञ्चन् 'ॐ अमृतोपस्तरणमसि स्वाहा' इति प्राश्य सघृतेनान्नेन 'ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा । ॐ ब्रह्मणे स्वाहा' इति षडाहुतीर्मुखे हुत्वा षष्ठ मन्त्रानुसन्धानपूर्वकं यथात्महितं भुञ्जीत । भोजनान्ते 'अमृतापिधानमसि स्वाहा' इति पुनर्जलं प्राश्य द्वादशगण्डूषैर्मुखशुद्धिं कृत्वा हस्तपादं प्रक्षाल्य द्विराचामेत् ॥ ततो हृदयदेशमभिस्पृशति — 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः । तेनान्नेनाप्यायस्व' इति । पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणी निस्रावयति — 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' इति । भुक्तमन्नमूर्ध्वहस्तोऽभिमन्त्रयति – 'श्रद्धायां प्राणे निविश्यामृतꣳहुतम् । प्राणमन्नेनाप्यायस्व ॥ श्रद्धायामपाने निविश्यामृतꣳहुतम् । अपानमन्नेनाप्यायस्व ॥ श्रद्धायां व्याने निविश्यामृतꣳहुतम् । व्यानमन्नेनाप्यायस्व ॥ श्रद्धायामुदाने निविश्यामृतꣳहुतम् । उदानमन्नेनाप्यायस्व ॥ श्रद्धायाꣳसमाने निविश्यामृतꣳहुतम् । समानमन्नेनाप्यायस्व' ॥ ततो — ब्रह्मणिम आत्मामृतत्वाय' इत्यात्मानम् । वाङ्म आसन्' इति मुखम् । 'नसोः प्राणः' इति नासिके । 'अक्ष्योश्चक्षुः' इति चक्षुषी । 'कर्णयोः श्रोत्रम्' इति श्रोत्रे । 'बाहुवोर्बलम्' इति बाहू । 'ऊरुवोरोजः' इति ऊरू । 'अरिष्टा विश्वान्यङ्गानि तनूः' इति सर्वाङ्गानि । ततः प्रार्थयति — 'तनु वा मे सह नमस्ते अस्तु मा मा

हिꣳसीः' इति । ततो जपति – 'वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥ नमो रुद्राय विष्णवे मृत्युर्मे पाहि' इति ॥ इति भोजनप्रयोगः ॥

## अथ सायंसन्ध्याप्रयोगः

प्रातःकालवद्भस्मधारणान्तं कृत्वा । आचम्य प्राणानायम्य 'ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसन्ध्यामुपासिष्ये' इति सङ्कल्प्य आपोहिष्ठा० इत्यादिभिर्मार्जयित्वा हस्ते जलमादाय 'ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा' इत्यभिमन्त्र्य पीत्वा द्विराचम्य 'ॐ दधिक्राव्णो ... रिषत् । आपोहिष्ठा ... चनः' । इति चतुर्भिर्मार्जयित्वा 'ॐ भूर्भुवः सुवः' इत्यात्मानं प्रदक्षिणं परिषिच्य सूर्याभिमुख उपविश्यैवार्घ्यं दद्यात् – 'भास्कराय नमः इदमर्घ्यं' इत्यत्र 'सवित्रे नमः इदमर्घ्यं' इति वदेत् । अन्यत्सर्वं प्रातःकालवत् । जपं च उपविश्यैव कुर्यात् । तत उत्थाय सूर्यमुपतिष्ठते – 'इमं मे वरुण श्रुधीहवमद्या च मृडय । त्वामवस्युराचके ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः' इति ॥ दिगुपस्थानादिकं प्रातःकालवत् । अनेन सायंसन्ध्योपासनकर्मणा श्रीपरमेश्वरः प्रीयताम् । इति कर्मेश्वराय

समर्प्य 'तद्विष्णोः ... राततम्' इति विष्णुं स्मृत्वा द्विराचामेत् । ततः शिशुमारमुपतिष्ठते ॥ ॥ अथ शिशुमारोपस्थानं – पूर्वोक्त ... 'ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं ध्रुवमण्डले परब्रह्मण उपस्थानं करिष्ये' इति सङ्कल्प्य – ॐ भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवः स्वः प्रपद्ये ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्येऽमृतं प्रपद्येऽमृतकोशं प्रपद्ये चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति तं प्रपद्ये देवान्प्रपद्ये देवपुरं प्रपद्ये परीवृतो परीवृतो ब्रह्मणा वर्मणाऽहं तेजसा कश्यपस्य यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोऽधरा विष्णुर्हृदयꣳसंवत्सरः प्रजननमश्विनौ पूर्वपादावत्रिर्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्रस्ततः प्रजापतिरभयं चतुर्थꣳस वा एष दिव्यः शाक्वरः शिशुमारस्तꣳह य एवं वेदाप पुनर्मृत्युं जयति जयति स्वर्गं लोकं नाध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्यः प्रमीयते लघ्वान्नो भवति ध्रुवस्त्वमसि ध्रुवस्य क्षितमसि त्वं भूतानाꣳश्रेष्ठोसि त्वां भूतान्युपपर्यावर्तन्ते नमस्ते नमः सर्वन्ते नमो नमः शिशुकुमाराय नमः' इति ॥

अथ रात्रौ ब्रह्मचारिणामग्निकार्यम् – सङ्कल्पे समर्पणे च प्रातरिति स्थाने सायमिति योजनीयम् । अन्यत्सर्वं प्रातरग्नि कार्यवत् ॥

अथ सायमौपासनप्रयोगः – प्रातः इत्यत्र सायं इति 'सूर्याय स्वाहा' इत्यत्र 'अग्नये स्वाहा' इति योजनीयम् । अन्यत्सर्वं प्रातरौपासनवत् ॥ ॥ (रात्रौ 'पञ्चमहायज्ञा न सन्ति') देवताराधनमतिथिभोजनम् च यथोपपादं कुर्यात् ॥

अथ वैश्वदेवबलिहरणे– ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा ॥ इति विशेषः । अन्यत्सर्वं समानम् ॥ ॥ भोजनविधौ च— परिषेचने 'सत्यं त्वर्तेन' इत्यत्र 'ऋतन्त्वा सत्येन परिषिञ्चामि' इति विशेषः । अन्यत्सर्वं दिवाभोजनवत् ॥

## अथ शय्याविधिः

विष्णुः— (७०-१-१७) आर्द्रपादो न सुप्यात् । नोत्तराऽपरशिराः (अपरः– पश्चिमः) न नग्नः । नानुवंशं (अनुवंशं– गृहमूर्धन्यदीर्घकाष्ठम्) नाकाशे (अनावृते देशे) न पलाशे शयने । न पञ्चदारुकृते (पञ्चजातीय दारुकृते) न गजभग्नकृते । नभिन्ने । नाग्निप्लुष्टे । न घटसिक्तजले । न श्मशानशून्यालयदेवतालयेषु । न चपलमध्ये (चपलोऽत्रव्यसनी) न नारीमध्ये । न धान्यगोगुरुहुताशनसुराणामुपरि । नोच्छिष्टः । न दिवा स्वपते् । न सन्ध्ययोः । न भस्मनि देशे । न चाशुचौ । न चार्द्रे (देश इत्यनुवृत्तिः) । न पर्वतमस्तके ॥ हारीतः— न सन्धिवेलायां शयीत । नान्यपूर्वे (अन्यपूर्वे — पूर्वोपभुक्ते) नानुवंशास्तीर्णे । नाश्मपीठोपधाने । न तिर्यगुदक्प्रत्यक्शिराः । न नग्नः । नाशुचिः । नासने । नोच्छिष्टः । नोभग्ने । न प्रगे (प्रातः) नोच्चैर्निशायां भाषते । सुप्यात्प्रत्यक्शिराः इत्यनुवृत्तौ ॥ शङ्खलिखितौ– न विशीर्णं खट्वायाम् । नान्यवर्णोपसेवितायामनभ्युक्ष्य । न भूतयक्षग्रहायतनेषु । न श्मशानवृक्षच्छायासु । न पर्वणि रभसोत्सवे वा

(पर्वः प्रतिपत्पञ्चदश्योः सन्धिः । रभसोत्सवे — हर्षोत्पादकपुत्रजन्माद्युत्सवे) ॥ ॥ अथ प्रक्षालितपादः शय्यामधिष्ठाय रात्रिसूक्तं जपेत् । अथ रात्रिसूक्तम् – रात्रीव्यख्यदायती पुरुत्रा देव्य१क्षभिः । विश्वा अधिश्रियोऽधित ॥ ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः । ज्योतिषा बाधते तमः ॥ निरु स्वसारमस्कृतोषसं देव्यायती । अपेदु हासते तमः ॥ सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि । वृक्षे न वसतिं वयः ॥ निग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः । नि श्येनासश्चिदर्थिनः ॥ यावया वृक्यं१वृकं यवयस्तेनमूर्म्ये । अथा नः सुतरा भव ॥ उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय ॥ उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषे ॥ इति जपित्वा – सुत्रामाणंपृथिवीं द्यामनेहसꣳसुशर्माणमदितिꣳसुप्रणीतिम् । दैवीं नावꣳस्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥ अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः ॥ कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ इत्येतांश्च स्मृत्वा दक्षिणाशिराः प्राक्शिरा वा शयीत ॥ ब्राह्मे मुहूर्ते पुनरुत्थाय नित्यान्यारभेत ॥ इति शय्याविधिः ॥

## ❀ इति आह्निकाण्डम् ❀

# * अथ संस्कारकाण्डम् *

## अथ मङ्गलाचरणम्

योऽसौ कर्ममयो बिभर्ति भुवनं कर्ता स्वयं कर्मणां
भोक्ता कर्मफलोच्चयस्य च पुनर्दाताप्युपाधेर्वशात् ।
वेद्यो वेदवचःप्रमाणशरणैः प्राप्यश्च तैः सत्क्रियैः
सत्यानन्दचिदात्मकः स भगवान् विश्वेश्वरः पातु नः ॥
मेधां बोधायनो नो वितरतु सहितः षड्त्रिसाहस्त्रशिष्यैः
यस्यापस्तम्ब एकाधिकशतयजुषां पारगो मुख्यशिष्यः ।
सूत्रं प्रायुङ्क्त नैकक्रमविधिनिपुणाऽध्वर्युनानाप्रयोग—
व्यक्तिज्ञानोपयुक्तस्फुटमृदुगहनप्रौढसन्दर्भगर्भम् ॥
कल्पामृतं क्षितिसुरप्रकराय योऽदात्
वेदाम्बुराशिमधिमथ्य निजप्रभावात् ।
बोधायनाय मुनिवन्दितपादपद्म-
द्वन्द्वाय कण्वतनयाय नमोऽस्तु भूयः ॥

# ॥ अथ संस्काराणां स्वरूपनिरूपणम् ॥



॥ श्रीः ॥ संस्क्रियत आत्मा एभिरिति संस्काराः इति व्युत्पत्त्या अविद्योपहतस्यात्मनो विशुद्धिजनका वैदिकक्रियाविशेषाः संस्कारपदवाच्या भवितुमर्हन्ति। तेन जातसंस्कारा मृतसंस्काराश्चेति द्विविधा निरूप्यन्ते। तथा च गृह्यसूत्रम्— "तस्माज्जातस्य वै मनुष्यस्य द्वौ संस्कारावृणभूतौ भवतो जातसंस्कारो मृतसंस्कारश्चेति विज्ञायते जातसंस्कारेणेमंल्लोकमभिजयति मृतसंस्कारेणामुंल्लोकम्" इति ॥ तत्र 'गर्भाधानादयस्ते तु विवाहान्तास्तु षोडश' इति गृह्यसारसङ्ग्रहे– गर्भाधानं, पुंसवनं, सीमन्तोन्नयनं, जातकर्म, नामकरणं, उपनिष्क्रमणं, अन्नप्राशनं, कर्णवेधनं, चौलं, उपनयनं, होतृव्रतं शुक्रियं उपनिषत् गोदानञ्चेति चत्वारिवेदव्रतानि, समावर्तनं, विवाहश्चेति षोडश जातसंस्काराः प्राधान्येन स्मर्यन्ते। अत्र प्रसिद्धस्य विष्णुबलेः रक्षात्मकत्वात्, संमितव्रतस्य च तत्रैव— 'तानि व्रतानि पञ्च स्युः पञ्चमं नेष्यते परैः'। 'अथ सम्मितमेतत्तु गृहस्थैरपि चर्यते। चतुर्वेदव्रतं त्वष्टाचत्वारिंशद्भिराप्यते। वत्सरैः सम्मितं तद्धि संस्कारैर्वाऽखिलैर्यतः'। 'व्रतान्यवश्यचर्याणि चत्वार्युक्तानि यानि तु'। इत्यादि वक्ष्यमाणत्वाच्च संस्कारेषु परिगणना न कृतेति गम्यते ॥ मृतसंस्काराश्च दाहाद्याः षोडशैव संगृहीताः स्मृतिसङ्ग्रहे– "प्रथमञ्च द्वितीयञ्च तृतीयञ्च चतुर्थकम्। पञ्चमं चाथ षष्ठञ्च सप्तमञ्चाष्टमं तथा॥ नवमं दशमञ्चैव दशकर्माण्यनुक्रमात्। दहनं सञ्चयं चैव एकोद्दिष्टं च मासिकम्॥ सपिण्डीकरणं पश्चादेकोद्दिष्टं[1] ततः परम्। एतान्युत्तरकर्माणि षोडशेति विदुर्बुधाः" इति ॥ एतदुभयमपि संस्कारजातं प्रशंसितं प्रयोगरत्ने– "गर्भाधानोपक्रमाष्षोडशोक्ताः संस्कारास्ते जन्मभाजां द्विजानाम्। एतावन्तो मृत्युभाजाञ्च तेषां दाहाद्यास्ते पिण्डसंयोगनिष्ठाः॥ इत्येताभिस्संस्क्रियाभिर्विहीनो जीवन्विप्रो हीयते ब्राह्मणत्वात्। त्यक्त-

१. पश्चादेकोद्दिष्टन्तु महैकोद्दिष्टादनन्तरमेकोद्दिष्टविधानेन क्रियमाणं षोडशमासिकश्राद्धमिति प्रकरणादवगन्तव्यम्।

प्राणश्चान्त्यसंस्कारहीनः शश्वत्प्रेतः पुण्यलोकं न याति " ॥ इति । एतेन संस्काराः समन्त्रका द्विजात्यनुष्ठेयाश्चेत्याह याज्ञवल्क्यः— 'विप्रक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः । निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ' इति ॥ अथान्ये स्व-स्व-सूत्रानुसारेण संस्कारान्विविधमाचख्युः । यथा च मनुः– 'संस्कारैः संस्कृतः पूर्वैरुत्तरैरपि संस्कृतः ' इति गर्भाधानादिविवाहान्तानां पूर्वसंस्कारत्वं, पाकयज्ञहविर्यज्ञसोमयज्ञानामेकविंशतीनामुत्तरसंस्कारत्वं चोक्तवान् । हारीतस्तेषामेव क्रमेण ब्राह्मत्वं दैवत्वं चावोचत् । अङ्गिराश्च " गर्भाधानं पुंसवनं सीमन्तो बलिरेव च । जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं तथा ॥ चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् । स्नानोद्वाहौ चाग्रयणमष्टकाश्च यथायथम् ॥ श्रावण्यमाश्वयुज्यं च मार्गशीर्ष्यश्च पार्वणम् । उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यकाः ॥ संस्कारा नियता एते ब्राह्मणस्य विशेषतः । पञ्चविंशतिसंस्कारैस्संस्कृता ये द्विजातयः ॥ ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः " इति पञ्चविंशतिसंस्कारान्व्याचख्यौ ॥ गौतमोऽपि— " गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरणान्नप्राशन-चौलोपनयनानि, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणीसंयोगः, पञ्चमहायज्ञाः । अष्टका, पार्वणः, श्राद्धं, श्रावणी, आग्रहायणी, चैत्री, आश्वयुजीति सप्त पाकयज्ञसंस्थाः । अग्न्याधेयं, अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, आग्रयणेष्टिः, निरूढपशुबन्धः, सौत्रामणीति सप्त हविर्यज्ञाः । अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामः, इति सप्त सोमयज्ञसंस्थाः । इत्येते चत्वारिंशत्संस्काराः । अष्टावात्मगुणाः– दया सर्वभूतेषु, क्षान्तिः, अनसूया, शौचं, अनायासः, माङ्गल्यं, अकार्पण्यं, अस्पृहेति । यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणस्सायुज्यमाप्नोति " इत्यष्टाचत्वारिंशत्संस्कारान्व्यदधात् ॥ तथापि– " स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः । कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति " इत्यङ्गिरोवचनेनास्मद्गृह्ये केषाञ्चिदनुक्तौ संस्काराणां न्यूनत्वेऽपि न क्षतिरित्यवगन्तव्या । प्रयोगमालायाम्–विष्णु-

बलिसम्मितव्रताभ्यां सह गर्भाधानादिविवाहान्ता अष्टादश; शूलगवो. बलिहरणं, प्रत्यवरोहणं, आग्रयणं, अष्टकाहोमः, उत्सर्जनं, उपाकर्मेति सप्त; पञ्चमहायज्ञाः, सप्त हविर्यज्ञसंस्थाः, सप्त सोमसंस्थाः, दयाद्यष्टावात्मगुणा इति कथञ्चिदिहाप्यष्टाचत्वारिंशत्संस्काराः प्रकल्पिताः॥ आचार्यबोधायनस्तु न कुत्रापि संस्कारान्पर्यजीगणयत्। अपि तु (बो गृ. प. सू. १.१.१९) गृह्ये सप्त पाकयज्ञसंस्थाः श्रौते सप्त हविर्यज्ञसंस्थाः सप्त सोमयज्ञसंस्थाश्च सूत्रयन्–"एकविंशतिसंस्थो यज्ञ ऋग्यजुस्सामात्मकश्छन्दोभिश्रितो ग्राम्यारण्यपश्वोषधीभिर्हविष्मान् दक्षिणाभिरायुष्मान्"॥ (बो. गृ. प. सू. १.१.२४) "नाक्रियो ब्राह्मणो नासंस्कारो द्विजो नाविद्वान्विप्रो नैतैर्हीनः श्रोत्रियो नाश्रोत्रियस्य यज्ञः" इति यज्ञं व्याख्याय पाकयज्ञेषु गर्भाधानादीन् स्मार्तान्संस्कारान्सञ्जग्राह। तथा च (बो. गृ. सू. १.१) "यथो एतध्दुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्तपाकयज्ञसंस्था इति। ता अनुव्याख्यास्यामः॥ तत्र यध्दूयते स हुतो यथैतद्विवाहः सीमन्तोन्नयनश्चेति॥ तत्र हि हूयते एव॥ अथ यध्दुत्वा दीयते स प्रहुतो यथैतज्जातकर्म चौलश्चेति। तत्र हि हुत्वा दीयत एव॥ अथ यत् हुत्वा दत्वा चादीयते स आहुतो यथैतदुपनयनं समावर्तनश्चेति। तत्र हि हुत्वा दत्वा चादीयते॥ अथ यच्छूलेषूपानिक्षिप्य गव्यानि श्रपयन्ति स शूलगवः॥ अथ यद्गृह्याभ्यो देवताभ्योऽन्नं सम्प्रकिरन्ति तद्बलिहरणम्॥ अथ यद्दतो ऋतुं प्रत्यवरोहन्ति तत्प्रत्यवरोहणम्॥ अथ यदेकाष्टकायामन्नं क्रियते सोऽष्टकाहोम इति"॥ एवमिह सामान्येन कांश्चिदुदाहृत्योत्तरत्र हुते विवाह-गर्भाधान-पुंसवन-सीमन्तोन्नयन-विष्णुबलीन्; हुतानुकृतौ होतृ-शुक्रियादि वेदव्रतानि; प्रहुते जातकर्म-नामकरणोपनिष्क्रमणान्नप्राशन-कर्णवेधन-चूडाकर्माणि; आहुते उपनयनं समावर्तनश्चेति सङ्गृह्य सूत्रितवान्॥ नन्विह पाकयज्ञानामेव संस्कारत्वमस्तु गृह्ये गर्भाधानादिवत्तेषामप्यविशेषेण विधानात् इति न च वाच्यम्। तथात्वे (बो. गृ प. सू २.६.१) "यथो एतद्यत्किञ्चान्यत्र विहाराध्दूयते सर्वास्ताः पाकयज्ञसंस्थाः" इति सूत्रात् "अविशेषेण यत्किञ्चित्त्रेताग्नेरन्यत्र हूयते सर्वास्ताः पाकयज्ञसंस्थाः" इति

भवस्वामिभाष्याच्च पाकयज्ञानामपरिमितत्वात् संस्कारा अप्यानियता व्याकुलीभवेयुरिति ॥ तस्मादत्र आचार्यकल्पैः कारिकाकृद्भिर्निर्णीता एव गर्भाधानादयः प्रधानाष्षोडश जातसंस्काराः । तेष्वपि "इतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इति ब्रह्मचर्यानन्तरमेवैकान्तविरक्तस्य प्रवृज्याविधानात्, "नासंस्कारो द्विजः" इति व्यतिरेकेणाचार्यकृतद्विजशब्दार्थनिरुक्तेश्च गर्भाधानादि उपनयनान्ताः प्रधानतमा द्विजातेरवर्जनीयाश्चेति युक्तमुत्पश्यामः ॥ इति संस्कारनिरूपणम् ॥

## ॥ अथ स्नानादिचतुष्टयविधिः ॥

॥ श्रीः ॥ अथात्मशुद्ध्यर्थं स्नानं, पवन, मन्त्राचमनं, मन्त्रप्रोक्षणं चेत्येतानि सर्वकर्मणामादौ कर्तव्यानि भवन्ति-" स्नानं च पवनं चैव मन्त्राचमनमेव च । मन्त्रप्रोक्षणमेतानि कुर्यात्संस्कार आदितः" इति गृह्यसारसङ्ग्रहादिषु विधानात् । तत्र स्नानं आन्हिकप्रकरणोक्तप्रकारेण पुण्यतीर्थाऽवगाहनमेवेति ज्ञेयम् । (बो. गृ. प. सू. १. ३. ७–८) " वेदकर्माणि प्रयोक्ष्यन्नादित एव तीर्थे स्नात्वोदेत्याहतं वासः परिधायैकविंशत्या दर्भपिञ्जूलैरात्मानं पावयित्वा यस्य कुर्वन्भवति तं पवयति–'पवित्रं वै दर्भाः पवित्रं विष्णुस्स प्रतिष्ठा सोमस्य प्रतिष्ठित्यै' इति विज्ञायते ॥ एकविंशत्या पवयत्येकविंशो वै यज्ञ एकविंशः पुरुष एकविंशतिश्छन्दांस्येकविंशतिर्वै देवलोकाः छन्दोभिरेवैनं यज्ञेन यजमानमेकविंशे प्रतिष्ठाप्य पूतं मेध्यं याज्ञियं पवयति । सप्तभिः पवयति सप्त छन्दांसि छन्दोभिरेवैनं पवयति । सप्तभिः पवयति सप्तैवास्यैते पुरुषास्सन्तातिमनुसन्तन्वाति त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनान् पवयति । त्रेधा विभक्तैः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति' इति ब्राह्मणम्" इति गृह्योक्तेः । पवनश्चोक्तं गृ० सङ्ग्रहे-" आत्मानं

दर्भपिञ्जलैः पावयेत्सप्तकैस्त्रिभिः । मुखं नाभिं च गुल्फञ्च प्रोक्ष्य तानि क्षिपेदुदक् ॥ ऋत्विक्चेत्पवयित्वा स्वं स्वामिनं पावयेत्ततः'' इति । अन्यत्रापि–' सप्तभिस्सप्तभिर्दर्भैस्त्रिस्तूष्णीं पवनं भवेत् । कण्ठादूर्ध्वं कटेरूर्ध्वमधश्चैव कुशाग्रकैः '' इति ॥ मन्त्राचमनं मन्त्र-प्रोक्षणञ्च आन्हिककाण्डोक्तप्रकारेणैवेति ज्ञेयम् । मन्त्रप्रोक्षणविषये विशेष उक्तः प्रयोगमालायाम्– ' द्वात्रिंशन्मार्जनाः प्रोक्ताऽशिरः पूर्वादयः क्रमात् । शिरोवक्त्रग्रीवबाहुवक्षोहृन्नाभिपार्श्वयुक् ॥ कटिगुह्योरुजान्वादिजङ्घपादाङ्गुलीषु च । सर्वाङ्गेषु च ते कार्या मार्जनाः पापनाशनाः ॥ बाहुपार्श्वोरुजान्वाद्यङ्घ्रिष्वेकैकस्यैकमार्जनम् । शिरः पूर्वादिषु ज्ञेयौ मार्जनौ युग्मयुग्मकौ ' इत्युक्तम् ॥

अथ स्नानादिचतुष्टयप्रयोगः ॥ कर्ता सपत्नीकः संस्कार्येण सह प्रातर्मङ्गलस्नानं विधाय सन्ध्यावन्दनादिनित्यकर्म समाप्य दर्भेषु प्राङ्मुखं उपविश्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यामुककर्मकर्तुं, शरीरशुध्यर्थं स्नानपवनमन्त्राच-मनमन्त्रप्रोक्षणानि करिष्ये इति सङ्कल्प्य । ॐ आपोहिष्ठादि तिसृभिर्नवधा मार्जयित्वा एकविंशतिदर्भपिञ्जलानि त्रेधा विभज्य प्रथमभागेन कण्ठादुपरि शिरोन्तं तूष्णीं त्रिरुन्मृजेत् । एवं द्वितीयभागेन नाभेरुपर्याकण्ठं त्रिरुन्मृज्य तृतीयभागेन नाभेरधस्तादा-गुल्फं त्रिरवमृजेत् । त्रेधा विभक्तानि समुच्चित्याद्भिरभ्युक्ष्योदङ्निरस्य अप उपस्पृश्य शुध्यर्थमाचमनं कृत्वा दर्भपाणिर्मन्त्राचमनं " आपोहिष्ठादि त्रिभिः कृत्वा ॐ भूः ॐ भुवः ॐ सुवः इत्यङ्गुष्ठमूलेन मुखं त्रिः परिमृज्य इत्यादि सर्वैर्मूर्धानमित्युपस्पृशेत् '' ॥ ततो द्विराचम्य मन्त्रप्रोक्षणं कुर्यात्–' ॐदधिक्राव्ण इति सुरभिमत्या ' ॐ आपोहिष्ठा० ' इत्यादि तिसृभिरब्लिङ्गाभिः ' ॐ यच्चिद्धि ते० ' इत्यादि चतसृभिर्वारुणीभिः ' ॐ हिरण्यवर्णाः शुचयः० ' इत्यादि चतसृभिः ' ॐ पवमानः सुवर्जनः० ' इत्यादि पावमानीभिः सप्तदशभिश्चात्मानं कुशाग्रैः प्रोक्ष्य ॐ भूः ॥१॥ ॐ भुव ॥ २ ॥ ॐ सुवः ॥ ३ ॥ ॐ भूर्भुवस्सुवः ॥ ४ ॥ ३२ ॥

---

१. '' प्रोक्षयेत्पादपर्याप्तौ सर्वमन्त्रेष्वनुक्रमात् । अर्धर्चशो वा मन्त्रान्ते मन्त्रस्नानेष्वयं विधिः '' इति गृ. सं. ।

ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभिस्रवन्तु नः॥ ॥ॐ कयानश्चित्र आ भुवदूती सदावृधस्सखा। कया शचिष्ठया वृता॥ कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः। दृढाचिदारुजे वसु॥ अभीषु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः॥ ॥ ॐ तरत्समन्दी धावति धारा सुतस्यान्धसः। तरत्समन्दी धावति॥ उस्रा वेद वसूनां मर्तस्य देव्यवसः। तरत्समन्दी०॥ ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे॥ तरत्समन्दी०॥ आययोस्त्रिँशतन्तना सहस्राणि च दद्महे। तरत्समन्दी०॥ इत्येतैश्च मन्त्रैरात्मानं प्रोक्षयेत्। एभिः स्नान-पवन-मन्त्राचमन-मन्त्रप्रोक्षणकर्मभिः श्रीपरमेश्वरः प्रीयताम्॥ इति कर्म समर्पयेत्॥ इति स्नानादिचतुष्टयप्रयोगः॥

## ॥ अथ प्रधानसङ्कल्पः ॥

श्रीः। एवं कृतमङ्गलस्नानादिकोऽहतवासाः[1] स्वलङ्कृतः संभृतसकलसंभारः कर्ता शुचौ देशे प्राङ्मुखो दर्भेष्वासीनो दर्भान्धारयमाणः पत्नीं स्वदक्षिणतः प्राङ्मुखीमुपवेश्य संस्कार्यञ्च तद्दक्षिणतस्तथैवोपवेश्य माङ्गल्यमन्त्रघोषपुरस्सरं ब्राह्मणैरनुज्ञातः पवित्रपाणिर्यज्ञोपवीती द्विराचम्य प्राणानायम्य श्रीमहागणपतये नमः। "देवीं वाचमजनयन्त देवाः० नमो महद्भ्यो०" इत्यादि पठित्वा 'सुमुखश्चेत्यादि देशकालौ' संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रोऽमुकशर्माऽहममुकफलावाप्तयेऽमुककर्म श्वः सद्यो वा करिष्ये इति सङ्कल्पं[2] कुर्यात्॥ इति प्रधानसङ्कल्पः॥

---

१. "अहतं वाससां शुचिस्तस्मात्यार्थिकेज्यासंयुक्तं स्यात्सर्वं तदहतैर्वासोभिः कुर्यात्॥ प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नीयजमानावृत्विजश्च परिदधीरन्" इति बो. धर्मसूत्रे १ – ६ सू. सं. ४ – ५।

२. इमं सङ्कल्पं 'नान्दीश्राद्धादिपुण्याहान्तानि कर्माणि प्रयोगाद्बहिर्भूतानि' इति वदतां मते पुण्याहवाचनान्ते कुर्यात्॥

# ॥ अथ गणेशादिस्वेष्टदेवतापूजनविधिः ॥

सर्वेषामपि कर्मणामादौ निर्विघ्नपरिसमाप्तये गणपतिपूजनं कर्तव्यम् " न ऋते त्वत्क्रियते किं च न " इति मन्त्रलिङ्गात् । " नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः ! । तस्माद्विघ्नं समुत्पन्नं तत्क्रोधजमिदं खलु " इति पद्मपुराणे तदकरणेन विघ्नोपहतिस्मरणाच्च । तदर्चनन्तु मण्डलात्मकबिम्बे षोडशभिरुपचारैः कार्यं तथैव शिष्टाचारात् । बिम्बलक्षणं चोक्तं विश्वामित्रकारिकायाम्- " प्रादेशमात्रप्रमितं त्रिकोणषट्कोणयुक्तं गुणवर्तुळाढ्यम् । बिम्बन्तु बाह्ये चतुरस्रयुक्तं मध्ये यजेद्विघ्नपतिं विपश्चित् " इति । तल्लेखनप्रकारश्च तत्रैवोक्तः—"शक्रासुरानिलहुताशनवारुणेशभागाश्रितन्तु विलिखेद्रसकोणमन्तः । पाशीशपावकसुदिश्युदितं त्रिकोणं विघ्नार्चने तु विहितं नवकोणचक्रम् " इति ॥ षोडशोपचारास्तु ( बो. गृ. सू. १·११·१४ ) " आसनावाहनं पाद्यमर्घ्यमाचमनं तथा । स्नानं वस्त्रोपवीतं च गन्धपुष्पं तथैव च ॥ धूपं दीपं च नैवेद्यं पानीयाचमनं तथा । ताम्बूलोद्वासनं चेति ह्युपचारास्तु षोडश " इति ॥ एवं क्षेत्रपालपूजनं वास्तोष्पतिपूजनं कुलदेवतापूजनञ्च कुर्यात् शिष्टैः समादृतत्वात् । " सव्याहृतिं सप्रणवाञ्च सावित्रीमादौ त्रयीमातरमेकचित्तः । त्रिरायतप्राण उदीर्य कर्म चेष्ट्वाऽऽरक्षेताथ निजेष्टदेवान् " इति प्रयोगतिलके स्वेष्टदेवतापूजनविधानाच्च, इति ॥

अथ प्रयोगः ॥ आदौ निर्विघ्नतासिध्यर्थं महागणपतिपूजनं करिष्ये इति सङ्कल्प्य पूर्वोक्तप्रकारेण गणपतिबिम्बं विलिख्य तन्मध्ये गणपतये नमः आसनं कल्पयामीत्यासनं कल्पयित्वा, ॐ गणानान्त्वा गणपतिं० सीदसादनम् ॥ इति मन्त्रेण हृदि ध्यानं ॐ भूर्भुवस्सुवः महागणपतिमावाहयामीति दूर्वाक्षतैरावाह्य, ॐ गणपतये नमः पाद्यं समर्पयामि । एवमेव अर्घ्यं स० । आचमनं[1]० । स्नानं० । वस्त्रं० । उपवीतं० । गन्धं० । अक्षतं० । पुष्पं० । धूपं० । दीपं० । नैवेद्यं० । पानीयं० । आचमनं० । ताम्बूलं समर्पयामि इति षोडशोप-

१ इदमाचमनमुपहाराङ्गम् । एवं स्नानवस्त्रोपवीतेष्वप्याचमनं योज्यं तच्च न पृथगुपचारः । तदुक्तमाश्वलायनपरिशिष्टे।

चारैरन्यैः सुवर्णपुष्पमङ्गलनीराजनप्रदक्षिणनमस्काराद्युपचारैर्यथोपपन्नैरभ्यर्च्य 'वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा' इति प्रार्थ्य अनेन पूजनेन विघ्नहर्ता महागणपतिः प्रीयताम् इति समर्प्यान्ते विसर्जयेत्॥ ततः क्षेत्राधिपतिं फलताम्बूलादिना सन्तोष्य प्रणम्य "क्षेत्रस्य पतिना, क्षेत्रस्यपते" इति द्वाभ्यां प्रार्थयेत्॥ अथ वास्तुसमीपं गत्वा वास्तोष्पतिं गन्धादिभिरभ्यर्च्य॥ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शन्न एधि द्विपदे शञ्चतुष्पदे॥ वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या। आवः क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभिः सदा नः॥ अमीवहा वास्तोष्पते विश्वारूपाण्याविशन्। सखा सुशेव एधिनः॥ वास्तोष्पते नमस्तेऽस्तु भूशय्यानिरत प्रभो। मद्गृहे धनधान्यादिसमृद्धिं कुरु सर्वदा॥ इति प्रार्थयेत्॥ इति गणेशादिपूजनम्॥

अथानन्तरमभिधेयगर्भाधानादिसंस्काराणां प्रायेण मातृकापूजननान्द्यङ्कुरार्पणोदकशान्तिप्रतिसरबन्धपुण्याहवाचनाग्निमुखग्रहशान्तिपूर्वकत्वेन तत्सापेक्षकत्वात्प्रथमं तावदुद्देशक्रमेण नान्दीश्राद्धादयोऽभिधीयन्ते॥

# अथ मातृकापूजननान्दीश्राद्धयोर्विधिः॥

तत्र मातृकापूजनविषये विधिरुक्तस्मृत्यन्तरे "यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः" इति। तथा च ब्रह्मपुराणे– 'गणशः क्रियमाणानां मातॄणां पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु' इति॥ (बो. गृ. शे. सू. ४.१९) "आथातो नान्दीमुखं व्याख्यास्यामः। आदित एव द्वौ विप्रौ निमन्त्र्य चतुरवरांश्च पित्र्यर्थानथ श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं सम्पूज्याग्निमुपसमाधाय सम्परिस्तीर्याज्यं विलाप्योत्पूय दध्ना घृतेन संयुत्य स्रुवं सम्मृज्य देवार्थौ विप्रावुपवेश्यालङ्कृ-

त्यानुदेश्य द्विः पवित्र एव यवोदकं निधाय पुष्पफलाक्षतामिश्रं भोजनस्थानेष्वासनेषु यवान्सिकताश्च सम्प्रकीर्य पित्रर्थानुपवेश्य तेषां सपवित्रेषु पाणिषु 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यनेन मन्त्रेण पात्रान्तरेणोपहृत्य यवोदकं दत्वा द्विरथालङ्कृत्यै-वमेव दत्वाग्नौकरणमनुज्ञाप्यालङ्कृत्य पृषदाज्यात्स्रुवेणोपहृत्य 'नान्दीमुखेभ्यः पितृभ्यस्स्वाहा' इत्येतावदग्नौ कृत्वाऽन्नमुपस्तीर्णाभिघारितं पात्रेषूद्धृत्य पृषदाज्येन संसृज्य दर्भेषु सादयित्वा दर्भैः प्रतिच्छाद्य 'नान्दीमुखार्थानां पितॄणां क्षेप्ता अमुत्रामुष्मिंल्लोके' इति मन्त्रमूह्याभिमृश्य विप्रेभ्यो द्विरुपस्तीर्याभिमृष्टस्यान्नस्य द्विरवादय द्विरभिघार्य यथावद्भोजयेत्। पितृसामान्यवा-चिस्वधायुक्तानि ब्रह्माण्यभिश्राव्य भुक्तवत्स्वाचान्तेषूपलिप्याशयेषु दध्योदनं सम्प्रकीर्य संक्षाळनेन प्रदक्षिणं द्विःपरिषिच्य पूर्ववद्यवोदकं दत्वा दक्षिणां प्रदाय 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वाचयित्वाभिवाद्य स्वधायै स्थाने सर्वेस्समानं दक्षिणं जानुं निपात्य सव्यमुद्धृत्य जपति-'इडा देवहूः' इत्यान्तादनुवाकस्य जपित्वा 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यपो निनीय ब्राह्मणानुत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य देवताश्च विसृज्य दक्षिणेनाग्निं प्रागग्रेषु दर्भेषु नान्दीमुखेभ्यः पितृभ्यो दद्यात्-'नान्दीमुखेभ्यः पितृभ्यस्स्वाहा' इति संक्षाळनेन प्रदक्षिणं परिषिच्य 'ऊर्जं वहन्तीः' इति भाविजयाद्यर्थेन कालहोमान् पृषदाज्येन पूर्ववद्धोमं केचिदिच्छन्तीत्युक्तमेतन्नान्दीमुखम्" ॥

तत्र नान्दीनिमित्तान्युक्तानि (शेषसूत्रे ५. २. १०.१३) "नामादिनान्दीकरणमाशिषं द्विजभोजनम्। रक्षाबन्धनमन्नादि-चौळाद्यङ्कुरमेव च" इति "पुंसि नामान्नचौळोपस्नानपाणिग्रहेषु च। अग्न्याधाने च सोमे च दशस्वभ्युदयं स्मृतम्" इति च॥ वैद्यनाथीयेऽपि--"सीमन्तव्रतचौळनामकरणान्नप्राशनोपानयस्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च। पुंसूत्यावसथप्रवेशन-सुताद्यास्यावलोकाश्रमस्वीकारक्षितिपाभिषेकदयिताऽद्यर्तौ च नान्दीमुखम्" इति॥ एकदा तन्त्रेण बहुकर्म सन्निपाते एकस्यैव

कर्मणोऽसकृत्प्रयोगे च नान्दीश्राद्धादिकं सकृदेव कार्यं नत्वावृत्या—"एकदा क्रियमाणानामनेकशुभकर्मणाम्। वृध्यङ्कुरप्रतिसरान् सकृदेव समाचरेत्" "असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः। इत्युपक्रम्य–एवमेवभवेच्छ्राद्धमेतेषु न पृथक्पृथक्" इति वैद्यनाथीयोक्तेः॥ ॥ अथ नान्दीकालः। (बौ. गृ. प. सू. १.३) "अथाप आचम्य बाह्याभ्यन्तरतः पूतो मेध्यो यज्ञियो भूत्वा वेदकर्माणि प्रयोक्ष्यन् पूर्वद्युरेव युग्मान् ब्राह्मणान्भोजयेदिति नान्दीमुखा एवैता उक्ता भवन्ति॥ तेषु भुक्तवत्सु स्वधायै स्थाने 'मधुमनिष्ये मधुजनिष्ये' इत्येतद्यजुर्जपित्वा 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यपो निनयति स्वधैवैषोक्ता भवति॥ नैकाह्ना पित्र्यं दैवञ्च कुर्वन्ति यस्यैकाह्ना पित्र्यं दैवञ्च कुर्वन्ति प्रजा हास्य प्रमायुका भवन्ति 'तस्मात्पितृभ्यः पूर्वेद्युः क्रियते यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते' इति ब्राह्मणम्"॥ गृह्यसङ्ग्रहेऽपि 'नान्दीमुखञ्च पूर्वेद्युः पुण्याहञ्चा-परेऽहनि' इति। अनेन पूर्वेद्युरेव नान्दीकाल इत्यवसीयते॥ तथाऽपि "महत्सु पूर्वेद्युस्तदहरल्पेषु" इत्याश्वलायनगृह्यपरि-शिष्टोक्त्या कर्मणां महत्वे पूर्वेद्युरल्पत्वे सद्य इति व्यवस्थाप्यते॥ ॥ नान्दीमुखस्यावधिदिनान्युक्तानि निर्णयसिन्धौ "एकविंश-त्यहर्यज्ञे विवाहे दश वासराः। त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते" इति॥ ॥ नान्दीश्राद्धकर्तारः—"नान्दीश्राद्धं पिता कुर्यादाद्यपाणिग्रहावधि। अत उर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्" इति प्रयोगपारिजाते सायणीयवचनात्। "स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु। पिण्डानोद्वाहनात्तेषां तदभावे तु तत्क्रमात्॥ असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः" इति कात्यायनोक्तेः। "तस्मात्पितृ-याचार्यमातुलादयः संस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युः" इति हेमाद्रिनिगमनवाक्याच्च सुतसंस्कारकर्मसु आद्यविवाहपर्यन्तं पितैव स्वपितॄनुद्दिश्य नान्दीश्राद्धं कुर्यात्। पितुरभावे पूर्वसंस्कृतभ्राता स्वपितॄनुद्दिश्य कुर्यात्। तस्याप्यभावे पितृव्याचार्यमातुलादयस्संकार्यस्य पितॄनुद्दिश्य कुर्युः। तथा च नान्दीश्राद्धं आद्यविवाहपर्यन्तं पितैव कुर्यात्,

तस्याभावे भ्राता, तस्याप्यभावे पितृव्यादयः कुर्युः, द्वितीयविवाहादिषु स्वयमेव कुर्यादिति निर्णयः पर्यवस्यति ॥ तच्च नान्दीश्राद्धं पूर्वं मातृपार्वणं ततः पितृपार्वणं ततस्सपत्नीकमातामहपार्वणमिति पार्वणत्रयोद्देश्यकम् ॥ तत्र मातृजीवने सापत्नमातृमरणेऽपि न मातृपार्वणम् ॥ एवं मातामह्या जीवने मातामहीसपत्न्या मरणेऽपि न मातामहादेस्सपत्नीकत्वम् ॥ अथ कर्तुर्जीवत्पितृकत्वे "जीवेत्तु यदि वर्गाद्यस्तं वर्गन्तु परित्यजेत्" इति न्यायेन जीवत्पितृकः स्वापत्यसंस्कारेषु पितृपार्वणं विहाय मातृमातामहपार्वणयुतं नान्दीश्राद्धं कुर्यात्॥ मातरि च जीवन्त्यां मातामहपार्वणकमेव। पितृमातामहयोर्जीवतोर्मातृपार्वणकमेव ॥ वर्गत्रयाद्येषु जीवत्सु नान्दीश्राद्धलोप एव सुतसंस्कारेषूचितः॥ द्वितीयविवाहाधानपुत्रेष्टिसोमयागादिषु स्वसंस्कारकर्मसु 'येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः' इति वचनेन मृतमातृमातामहकोऽपि जीवत्पितृकः पितुर्मातृपितामहीप्रपितामह्यः। पितुः पितृपितामहप्रपितामहाः। पितुर्मातामहमातृपितामहमातृप्रपितामहाः। इत्येवं पार्वणत्रयमुद्दिश्य श्राद्धं कुर्यात्, न तु स्वमातृमातामहपार्वणोद्देशेन॥ तथा च 'येभ्य एव पिता दद्यात्' इति पक्षस्य 'वर्गाद्यजीवने तत्पार्वणलोपः' इति द्वारलोपपक्षस्य च स्वसंस्कारस्वापत्यसंस्कारभेदेन व्यवस्था सिद्धान्तितेति ज्ञेयम्। केचित्तु पक्षद्वयस्यैच्छिको विकल्पो न तु व्यवस्थित इत्याहुः॥ ॥ एतच्चाभ्युदयिकश्राद्धमन्नेन कार्यमिति मुख्यः कल्पः, आमेन हेम्ना वा कुर्यादित्यनुकल्पः, इति वैद्यनाथीये प्रदर्शितः॥ तदपि वैश्वदेवानन्तरं पुण्याहवाचनपूर्वकं कार्यम्॥ "वृद्धावादौ क्षये चान्ते दर्शे मध्ये महालये। आचान्तेषु च कर्तव्यं वैश्वदेवश्चतुर्विधं" इति स्मृतिसारसङ्ग्रहोक्तेः "नान्दीश्राद्धाङ्गपुण्याहवाचनं कार्यं" इति विष्णुभट्टोक्तेश्च॥ अत्र नान्दीश्राद्धे नियमविशेषः प्रोक्तो गृह्यसूत्रे (बो. गृ. शे. सू. ३ १२) "अथाभ्युदयिकेषु प्रदक्षिणमुपचारः, यज्ञोपवीतं, प्रागग्रा दर्भाः, युग्मा ब्राह्मणाः, यवैस्तिलार्थः, पृषदाज्यं हविः, सोपयामेन पात्रेण नान्दीमुखाः पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं च।

नान्दीमुखेभ्यः पितृभ्यस्स्वाहेत्यग्नौकरणमनुदेशनम्। आशयेषु च परिसमूढेषु प्रागग्रेषु दर्भेषु पृषदाज्येनानुप्रदानं सर्वं द्विर्द्विरिति"। विष्णुभट्टीये—"पुष्पफलाक्षतमिश्रयवैस्तिलकार्यं, तिलोसीत्यत्र यवोसीत्यूहः, दूर्वाभिर्दर्भकार्यं, उदगपवर्गः, सर्वत्र पितृपदात्पूर्वं पितृपदविभक्त्यन्तं नान्दीमुखपदं योज्यं, पृषदाज्येन होमपिण्डदानोपस्तरणाभिघारणानि, दध्यन्नेन विकिरणं, इडादेवहूरिति स्वधावाचनं, नामगोत्ररूपाण्यग्निमुखं स्विष्टकृदादयश्च न सन्ति, सत्यवसुसंज्ञका विश्वेदेवाः" इत्यपि विशेषः॥ ॥ पैतृके कर्मणि विश्वेषां देवानामावश्यकत्वमुक्तं देवलेन—"यत्र तु क्रियते कर्म पैतृके ब्राह्मणान्प्रति। तत्सर्वं तस्य कर्तव्यं वैश्वदैवत्यकर्माणि" इति। पुनस्तेषां संख्या नामानि च निर्दिश्यते बृहस्पतिना—"क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च । धुरिश्च रोचनश्चैव तथा चैव पुरूरवाः। माद्रवश्च दशैते तु विश्वेदेवाः प्रकीर्तिताः" इति। तद्ग्रहणकाल उक्तस्तेनैव—"इष्टिकाले क्रतुर्दक्षः सद्यो नान्दीमुखे वसुः। नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ॥ पुरूरवो माद्रवाश्च पार्वणे समुदाहृतौ" (३. ९१-९३) इति॥

अथ मातृकापूजननान्दीश्राद्धयोः प्रयोगः॥ कर्ता पूर्वेद्युः प्रातर्मङ्गलस्नानाद्यौपासनान्तं नित्यकर्म कृत्वा वैश्वदेवं हुत्वा आदित एव विश्वेदेवार्थौ द्वौ पित्रार्थांश्च षट् इत्यष्टावरान् ब्राह्मणान्निमन्त्र्य श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं सम्पूज्य द्विराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य श्वः करिष्यमाणामुककर्माङ्गतया विहितमभ्युदयार्थं नान्दीमुखश्राद्धं सदैवं करिष्ये इति सङ्कल्प्य, गणेशादीन्सम्पूज्य, "अस्य करिष्यमाणनान्दीश्राद्ध-(समाराधनाख्यस्य) कर्मणः ॐ पुण्याहं भवन्तो ब्रुवन्तु। अस्मै नान्दीश्राद्ध-(समाराधनाख्याय) कर्मणे ॐ स्वस्ति भवन्तो ब्रुवन्तु। अस्य नान्दीश्राद्ध-(समाराधनाख्यस्य) कर्मणः ॐ ऋद्धिं भवन्तो ब्रुवन्तु। नान्दीमुखाः पितरः प्रीयन्ताम्" इति पुण्याहं वाचयित्वा मातृकापूजनं कुर्यात्॥

अथ मातृकापूजनम् ॥ अमुककर्माङ्गभूतं मातृकापूजनं करिष्ये इति सङ्कल्प्य अक्षतपुञ्जेष्वावाहयेत्—ॐ गौर्यै नमः गौरीमावाहयामि, ॐ पद्मायै०, ॐ शच्यै०, ॐ मेधायै०, ॐ सावित्र्यै०, ॐ विजयायै०, ॐ जयायै०, ॐ देवसेनायै०, ॐ स्वधायै०, ॐ स्वाहायै०, ॐ मातृभ्यो०, ॐ लोकमातृभ्यो०, ॐ धृत्यै०, ॐ पुष्ट्यै०, ॐ तुष्ट्यै०, ॐ कुलदेवतायै०, ॐ ब्राह्म्यै०, ॐ माहेश्वर्यै०, ॐ कौमार्यै०, ॐ वैष्णव्यै०, ॐ वाराह्यै०, ॐ इन्द्राण्यै०, ॐ चामुण्डायै०, ॐ गणपतये०, ॐ दुर्गायै०, ॐ क्षेत्रपालाय०, ॐ वास्तोष्पतये नमः वास्तोष्पतिमावाहयामि इति रुप्तविंशतिदेवता आवाह्य, नयं प्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठिताम ॥ इति प्रतिष्ठाप्य, गौर्याद्यावाहितदेवताभ्यो नमः इति षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य, 'गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्' इति प्रार्थ्य अनेन पूजाराधनेन गौर्याद्यावाहितदेवताः प्रीयन्ताम् ॥ इति मातृकापूजनम् ॥

नान्दीश्राद्धप्रयोगः ॥ अथाग्निमुपसमाधाय[1] सम्परिस्तीर्य आज्यस्थालीं स्रुवं पृषदाज्यस्थालीं समिधं कूर्चं प्रोक्षणीपात्रं चेत्यासाद्य संस्कृताभिः प्रोक्षणीभिरद्भिः प्रोक्ष्य पृषदाज्यस्थाल्यां तिरः पवित्रं (कूर्चं) दध्न्यानीयाज्यस्थाल्यामाज्यं विलाप्याभिद्योत्योभयं पर्यग्निकृत्वाऽऽज्यमुत्पूय पृषदाज्यस्थाल्यामेव दध्यर्धपरिमितमवनयति तत्पृषदाज्यमत्र हविः। स्रुवं संमृज्य ब्राह्मणानुपवेश्य क्षणं दत्वा गन्धपुष्पयवदूर्वार्चिते मण्डले 'सत्यवसुसंज्ञका विश्वेदेवा इदं वः पाद्यमिदं वः पाद्यं' इति पाद्यं दद्यात्। 'अस्तु पाद्यम्' इति प्रतिवचनम्। एवमेव 'नान्दीमुखा मातृपितामहीप्रपितामह्यः, नान्दीमुखाः पितृपितामहप्रपितामहाः, नान्दीमुखा मातामहमातृ-



१. अत्रौपासनाग्निर्ग्राह्यः—"दैवधर्ममिदं कर्म भवेदौपासनानले" इति कल्पसारोक्तेः।

पितामहमातृप्रपितामहाः पत्नीसहिताः, इदं वः पाद्यमिदं च ' इति द्वयोर्द्वयोः प्रत्येकं पाद्यं दत्वा तान्प्रक्षालितपाणिपादानप आचमय्य प्रागग्रेष्वासनेषूदगपवर्गेषु द्वयोर्द्वयोर्दूर्वायवांश्च निदधाति ' नान्दीमुखानां विश्वेषां देवानां इदमासनमिदञ्च ' ' अस्तु सुखासनं ' इति प्रतिवचनम्। एवमेव ' नान्दीमुखानां मातृपितामहीप्रपितामहीनां, नान्दीमुखानां पितृपितामहप्रपितामहानां, नान्दीमुखानां मातामहमातृपितामहमातृप्रपितामहानां पत्नीसहितानां ' इदमासनमिदञ्च ' इतिद्वयोर्द्वयोः प्रत्येकमासनं दत्वा ' अस्तु सुखासनं ' इति प्रतिवचनम्॥ ततः प्रागग्रासु दूर्वासु अर्घ्यपात्राण्यासाद्य द्वेद्वे पवित्रे निधाय अप आनीय यवानोप्य पितृपात्रेषु मध्वानीयालोड्य किञ्चि-ञ्चिरस्यापः स्पृष्ट्वाभिमृश्य गन्धादिभिरभ्यर्च्य भोजनस्थानेष्वासनेषु च यवान् सिकताश्च सम्प्रकीर्य विश्वान्देवानावाह्य ' वैश्वदेवे क्षणौ क्रियेताम् ' इत्यङ्गुष्ठौ गृहीत्वा वदेत्। ' ॐ तथा ' इत्युक्ते ' प्राप्नुतां भवन्तौ ' इति वदेत्। ' प्राप्नवाव ' इति प्रतिवचनम्। ततः सत्यवसुसंज्ञका विश्वेदेवा इति प्रतिपदार्थमुक्त्वा ' इदं वो अर्घ्यमिदञ्च ' ' इदं वो वस्त्रमिदञ्च ' ' इदं वो गन्धोऽयञ्च ' ' इमानि वः पुष्पाणीमानि च ' ' इमे वो अक्षता इमे च ' ' अयं वो धूपोऽयञ्च ' ' अयं वो दीपोऽयञ्च ' ' इदं वो अर्घमिदञ्च ' इत्यर्घ्यादीनि दद्यात्। ' अस्त्वर्घ्यं ' ' सुवस्त्रं ' इत्यादि यथालिङ्गं प्रतिवदन्तौ प्रतिगृह्णीतः। एवमेव नान्दीमुखान्पितॄन् द्वयोर्द्वयोरावाह्य क्षणं ग्राहयित्वा तेषां सपवित्रेषु पाणिषु ' नान्दीमुखाः पितरः प्रीयन्ताम् ' इति मन्त्रेण पात्रान्तरेणोपहत्य[1] द्विर्द्विर्यवोदकं दत्वा वस्त्रादिभिरलंकृत्यैवमेव पुनश्चार्घ्यं दत्वा ' अग्नौ करिष्यामि ' इति वदन् ' कुरुष्व ' इति तैरनुज्ञातोऽग्निमलङ्कृत्य समिधमादाय स्रुवेण पृषदाज्यं गृहीत्वा ' नान्दीमुखेभ्यः पितृभ्यस्स्वाहा ' इति सकृदेवाहुतिं हुत्वा भोजनपात्रेषु द्विर्द्विः पृषदाज्येनोपस्तीर्य दध्योदनादिकं सर्वं सविशेषं द्विर्द्विः परिविष्य द्विर्द्विरभिघार्य प्रागग्रासु दूर्वासु सादयित्वा प्रागग्राभिर्दूर्वाभिः प्रतिच्छा-

१. दारुमयेन मृण्मयेन वा। श्रुतौ तथैवोपयामपात्रनिर्वचनात्।

द्याभिमृश्य ब्राह्मणेभ्यो निवेदयते 'सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नं स्वाहा न मम इदन्न' इति ब्रुवन् तयोः प्रक्षाळितेनाङ्गुष्ठेनानखेनानुदिश्य नमस्करोति । एवमेव 'नान्दीमुखार्थानां पितॄणां क्षेत्रा अमुत्रामुष्मिल्लोके' इति मन्त्र-मूह्याभिमृश्य 'नान्दीमुखेभ्यो मातृपितामहीप्रपितामहीभ्य इदमन्नं स्वाहा न मम इदन्न' इत्यादि प्रत्येकमनुदिश्य नम-स्करोति । पुष्पफलाक्षतयवदूर्वाः सङ्गृह्य 'ओदनमुद्रुवते । परमेष्ठी वा एषः । यदोदनः । परमामेवैनꣳ श्रियं गमयति ॥ ॥ यन्तु नद्यो वर्षन्तु पर्जन्याः । सुपिप्पला ओषधयो भवन्तु । अन्नवतामोदनवतामामिक्षवताम् । एषाꣳ राजा भूयासम् ॥ ॥ इति मन्त्रौ जपित्वा 'नान्दीमुखा देवताः पितरश्च प्रीयन्ताम्' इति वाचयन्नपो निनीय नमस्कृत्य 'ॐ तत्सदमृतमस्तु' इत्यनुज्ञाप्य सर्वान्यथावद् भोजयेत् ॥ पितृसामान्यवाचिस्वधायुक्तानि ब्रह्माण्यभिश्राव्य तृप्तान्प्रज्ञ्वाऽप आचम्योपलि-प्तेषु भोजनस्थानेषु दध्यन्नं विकीर्य संक्षालनेन प्रदक्षिणं द्विः परिषिच्य पूर्ववत्त्रिप्रहस्तेऽर्घ्यं द्विर्द्विर्दत्वा शक्त्या च दक्षिणां प्रदायाक्षय्यं वाचयित्वाभिवाद्य पुष्पफलाक्षतदूर्वाभिस्सहोदकुम्भमादाय दक्षिणं जानु निपात्य सव्यमुद्धृत्य जपति 'इडा देवहूः' इत्यान्तादनु-वाकस्य । नान्दीमुखाः पितरः प्रीयन्तामित्यपो निनीय पित्रर्थविप्रान्विसृज्योत्थाप्यानुव्रज्य प्रसाद्य प्रणम्य प्रदक्षिणीकृत्य शेषमनुज्ञापयेत् ॥ एवं देवार्थौ विप्रावपि विसृज्य [1]दक्षिणेनाग्निं प्रागग्रा दूर्वा आस्तीर्य तत्र यवोदकं दत्वा "नान्दीमुखेभ्यः पितृभ्यः स्वाहा" इति सकृत्स्रुवेण पृषदाज्यं दत्वा सङ्क्षालनेन यवमिश्रेण 'ऊर्जं वहन्तीः' इति मन्त्रेण प्रदक्षिणं द्विः परिषिच्य जयाद्यर्थं पूर्ववद्धुत्वा न वा हुत्वा कर्मशेषं समापयेत् ॥ इत्ययमाचार्योक्तः प्रधानः कल्पः ॥

१. उत्तरेणाग्निमिति विष्णुभट्टः ।

अथ गौणः कल्पः—पूर्वेद्युः सद्यो वा कृतस्नानादिक्रियो युग्मान्ब्राह्मणान्निमन्त्र्यासनेषूपवेश्य अमुककर्माङ्गभूतं नान्दीसमाराधनं हिरण्येन करिष्ये इति सङ्कल्प्य गणेशं संपूज्य वैश्वदेवं हुत्वा 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति पुण्याह वाचयित्वा मातृकापूजनं कुर्यात् ॥ ततो हस्ते दूर्वाक्षतजलञ्चादाय– नान्दीमुखास्सत्यवसुसंज्ञका विश्वेदेवाः भूर्भुवस्सुवरिदं वः पाद्यं स्वाहा नम इयञ्च वृद्धिः ॥ नान्दीमुखाः मातृपितामहीप्रपितामह्यः भूर्भुवस्सुवरिदं वः पाद्यं स्वाहा नम इयञ्च वृद्धिः ॥ नान्दीमुखाः पितृपितामहप्रपितामहाः भूर्भुवस्सुवरिदं वः पाद्यं० वृद्धिः ॥ नान्दीमुखाः मातामहमातृपितामहमातृप्रपितामहाः पत्नीसहिता भूर्भुवस्सुवरिदं वः पाद्यं० वृद्धिः ॥ इति पृथक्पृथगुद्दिश्य निनयेत् ॥ ततो गन्धपुष्पाक्षतजलञ्चादाय-- नान्दीमुखास्सत्यवसुसंज्ञका विश्वेदेवाः भूर्भुवस्सुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा० वृद्धिः ॥ नान्दीमुखाः मातृपितामहीप्रपितामह्यः भूर्भुवस्सुवरिदं व आसन० वृद्धिः ॥ नान्दीमुखाः पितृपितामह० इदं व आसन० ॥ नान्दीमुखाः मातामह० पत्नीसहिताः भूर्भुवस्सुवरिदं व आसन० ॥ इति तथैव निनयेत् ॥ पुनर्हस्ते हिरण्यं जलं चादाय– नान्दीमुखास्सत्यवसुसंज्ञका विश्वेदेवाः भूर्भुवस्सुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयभूतं किञ्चिद्धिरण्यं स्वाहा नम इयञ्च वृद्धिः ॥ नान्दीमुखाः मातृ० इदं वो युग्म० ॥ नान्दीमुखाः पितृ० इदं वो युग्म० ॥ नान्दीमुखाः मातामह० पत्नीसहिताः भूर्भुवस्सुवरिदं वो युग्म० ॥ इति पूर्ववन्निनीय गौर्यादि षोडशमातरो ब्राह्म्यादि सप्तमातरश्च गणपतिदुर्गाक्षेत्रपालवास्तोष्पतिसहिताः इदं वो० वृद्धिः ॥ "इडां देवहूर्मनु० शोभायै पितरोऽनु मदन्तु" इति जपित्वा कृतस्य कर्मणस्साङ्गतासिध्यर्थं 'द्राक्षामलकनिष्क्रयभूतं किञ्चिद्धिरण्यं स्वाहा नम इयञ्च वृद्धिः' इति किञ्चिद्धिरण्यं समर्प्य ॥ इडामग्ने

१. अयं कल्पः प्रयोगग्रन्थेषूल्लिखितः शिष्टैरादृतश्च।

२. "द्राक्षामलकमूलानि यवांश्च विनियोजयेत्। तान्येव दक्षिणार्थन्तु दद्याद्विप्रेषु सर्वदा" इति संस्कारकौस्तुभे।

पुरुद ॰ स ॰ सनिङ्गोऽश्शश्वत्तम॰ हवमानाय साध। स्यान्नस्सूनुस्तनयो विजा वाऽग्ने साते सुमतिर्भूत्वस्मे ॥ इड एहि। अदित एहि सरस्वत्येहि ॥ शिव॰ शिव॰ शिवम् ॥ इति गन्धपुष्पाक्षतादियुतपात्रं हस्ते धृत्वा हिरण्येन तदधास्त्रस्ताडयेदिति शिष्टाचारः॥ अनेन नान्दीसमाराधनकर्मणा श्रीपरमेश्वरः प्रीयताम् इति कर्म समर्प्य तत्साङ्गतासिध्यर्थं फलहिरण्यादिकमाचार्याय दद्यात्॥ आमश्राद्धपक्षे पूर्ववत् पाद्यमासनादिकं च दत्वा भोजनचतुर्गुणपरिमितमामं सोपस्करं पात्रे निधाय व्याहृतिसहितया गायत्र्या प्रोक्ष्य, इदं वो युग्मब्राह्मणभोजनपर्याप्तमामं स्वाहा नम इयत्त्र वृद्धिः॥ इत्यनुदिशेदिति विशेषः॥ अन्यत्सर्वं पूर्ववत्॥ ॥इति नान्दीश्राद्धम्॥

अथ कुलदेवतास्थापनम्॥ चौलोपनयनविवाहादिशुभकर्मसु नान्द्यनन्तरं पुण्याहानन्तरं वा यथाचारं तण्डुलपूर्णपात्रे फलताम्बूलादिकं निधाय स्वस्वकुलदेवतां तत्तन्मन्त्रेणावाह्य षोडशोपचारैस्सम्पूज्य देवस्य पुरतः प्रातस्रापयेत्॥ समाप्ते कर्मणि विसर्जयेदिति॥

## ॥ अथाङ्कुरार्पणविधिः ॥

(बो. गृ. शे. सू. ५. २. १०–१२) "चौळाद्यङ्कुरमेव च॥ गर्भवर्जोत्सवात्पूर्वमयुगेऽह्न्यङ्कुरार्पणम्। प्रदोषे वाथ सायाह्ने गुणाधिक्येऽह्नि वेष्यते॥ आधानगर्भसंस्कारजातकर्माणि नाम च। हित्वान्यत्र विधातव्यं मङ्गल्याङ्कुरवापनम्॥" (बो. गृ. शे. सू. ४.१८. १४, १५) "आसप्तमात्प्रजाकाम आषष्ठात्पुत्रनाशनम्। पञ्चमे भक्तिकामानां विष्णोः सर्वात्मनस्तथा॥ चतुर्थे चाङ्कुरं विद्यात्पापीयान् जायते तु सः। त्र्यहे सर्वकामानां सद्यो वाऽप्यङ्कुरार्पणम्॥" (बो. गृ. शे. सू. ४. १८. २)

"मध्ये चतुर्मुखं विद्यात्पूर्व वज्रिणमेव च। दक्षिणे तु यमं विद्यात्पश्चिमे वरुणं तथा॥ उत्तरे शशिनं विद्यात्पालिकास्थापनं क्रमात्।"
अन्यत्रापि—चौलोपनयने स्नाने दम्पत्योश्च विवाहके। अग्न्याधाने च सोमे च कुर्यादङ्कुरवापनम्॥

अथाङ्कुरार्पणप्रयोगः॥ कर्ता आचम्य प्राणानायम्य तिथ्यादि संकीर्त्य अमुककर्मकर्तुमादौ कर्मसाफल्यानिरन्तरशुभत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमंकुरार्पणं करिष्ये॥ इति संकल्प्य गणपतिं सम्पूज्य ब्राह्मणानभ्यर्च्य, पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा ब्रह्मादयः प्रीयंतामित्यपो निनीय। शुचौ समे देशे गोमयेन गोचर्ममात्रं[1] चतुरश्रं स्थण्डिलमुपलिप्याक्षतान्संप्रकीर्याद्भिरभ्युक्ष्य पञ्च पालिकाः सौवर्णा राजतास्ताम्रा मृण्मयीर्वा यथासंभवं संगृह्य तासु वल्मीकमृत्तिकां ह्रदमृदं शुष्कगोमयं च प्रक्षिप्य मध्ये प्रागादि चतुर्दिक्षु च दूर्वाङ्कुराश्वत्थशिरीषबिल्वपत्राणामुपरि ताः क्रमेण संस्थाप्य श्वेतसूत्रेणावेष्ट्य मध्यमायां व्याहृतीभिर्ब्रह्माणमावाहयति- "ॐभूः ब्रह्माणमावाहयामि। ॐभुवः प्रजापतिमावाहयामि। ॐसुवः चतुर्मुखमावाहयामि। ॐभूर्भुवस्सुवः हिरण्यगर्भमावाहयामि" इति एताभिरेव प्राच्याम्– इन्द्रं, वज्रिणं, शचीपतिं, शतक्रतुमिति॥ एताभिरेव दक्षिणस्याम्– यमं, वैवस्वतं, पितृपतिं, धर्मराजमिति॥ प्रतीच्याम्– वरुणं, प्रचेतसं, सुरूपिणं, अपांपतिमिति॥ उदीच्याम्– शशिनं, निशाकरं, चन्द्रं, सोमं चेत्यावाह्य अथैनान् स्नापयति–'आपो हिष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाश्शुचयः पावकाः' इति चतसृभिः 'पवमानस्सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वा गन्धपुष्पधूपदीपैरमुष्मै नमोऽमुष्मै नम इत्यभ्यर्च्याथैनानु-

१ "गोचर्ममात्रं परितः षण्णवत्यंगुलात्मकम्" इति गृ. संग्रहे।

पतिघ्नते—" दिशां पतीन्नमस्यामि सर्वकामफलप्रदान्। कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् " इति ॥ अथ व्रीहियवमाषतिल-मुद्गसर्षपान् मिश्रीकृत्य क्षीरेण प्रक्षाल्यौषधिसूक्तेन " या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा। मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च ॥ शतं वो अम्ब धामानि सहस्रमुतवोरुहः। अथा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ पुष्पावतीः प्रसूवतीः फलिनीरफला उत। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे। रपाꣳसि विघ्नतीरित रपश्चातयमानाः ॥ अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता। गोभाज इत्किलासथ यत्सनवथपूरुषम् ॥ यदहं वाजयन्निमा ओषधीर्हस्त आदधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ यदोषधयः सङ्गच्छन्ते राजानः समिताविव। विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥ निष्कृति-र्नामवोमाताथो यूयꣳ स्थ संकृतीः। सराः पतत्रिणीः स्थन यदामयति निष्कृत ॥ अन्या वो अन्यामवत्वन्यान्यस्या उपावत। ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः ॥ उच्छुष्मा ओषधीनां गावो गोष्ठा दिवेरते। धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥ अति-विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः। ओषधयः प्राचुच्यवुर्यत्किञ्च तनुवाꣳ रपः ॥ यास्त आतस्थुरात्मानं या आविविशुः परुः परुः। तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥ साकं यक्ष्म प्रपत श्येनेन किकिदीविना। साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ अश्वावतीꣳ सोमवतीमूर्जयन्तीमुदोजसम्। आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ या ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु। तासां त्वमस्युत्तमा प्र णो जीवातवे सुव ॥ अवपतन्तीरवदन्दिवओषधयः परि। यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः। इह सङ्गत्य तास्सर्वा अस्मै सन्दत्त भेषजम् ॥ मा वो रिषत्खनिता यस्मै चाहं खनामि वः। द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वना-

तुरम् ॥ ओषधयस्संवदन्ते सोमेन सह राज्ञा । यस्मै करोति ब्राह्मणस्त ँ राजन्पारयामसि ॥ " इत्यनुवाकेनाभिमन्त्र्य मथाक्रमं निवपति– " ब्रह्म जज्ञानं प्रथमं पुरस्तात् । विसीमतः सुरुचो वेन आवः ॥ सबुध्नियां उपमा अस्य विष्ठाः । सतश्च योनिमसतश्च विवः ॥ पिता विराजामृषभो रयीणाम् । अन्तरिक्षं विश्वरूप आ विवेश ॥ तमर्कैरभ्यर्चन्ति वत्सम् । ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः " इति द्वाभ्यां मध्यमायाम् ॥ " यत इन्द्र भयामहे ततो नो अभयंकृधि । मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुरएतु नस्स्वस्तिदा अभयंकरः " इति द्वाभ्यां प्राच्याम् ॥ " योऽस्य कौष्ठ्यजगतः पार्थिवस्यै-कइद्वशी ॥ यमं भंग्यश्श्रवो गाय यो राजा न परोध्यः ॥ यमङ्गाय भंग्यः श्रवो यो राजा न परोध्यः । येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा " इति द्वाभ्यां दक्षिणस्याम् ॥ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ तत्त्वा यामि ब्रह्मणा वन्दमान-स्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः " इति द्वाभ्यां प्रतीच्याम् ॥ " सोमो धेनुꣳ सोमो अर्वन्तमाशुम् । सोमो वीरं कर्मण्यं ददातु ॥ सादन्यं विदथ्यꣳ सभेयम् । पितुः श्रवणं यो ददाशदस्मै ॥ आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य संगथे " इति द्वाभ्यामुत्तरस्याम् ॥ ततो यथाक्रमं शुद्धाभिः सिकताभिः प्रच्छादयेत् । पञ्च-गव्येन यथाक्रमं सेचयेत् । प्रणवेनैव सापिधानं कृत्वा यावत्कर्म तावत् सुरक्षितं गोपायेत् । समाप्ते कर्माणि ब्राह्मणान् पञ्च भोजयेत् । व्याहृतीभिर्देवता यथाक्रममुद्वासयेत् ॥ ॥ इत्यङ्कुरार्पणप्रयोगः ॥

# ॥ अथोदकशान्तिविधिः ॥

( बो. गृ. शे. सू. १. १४. १–२ ) "अथ वै भवति–श्रद्धा वा आपः श्रद्धामेवारभ्येति । यज्ञो वा आपो यज्ञमेवारभ्येति । वज्रो वा आपो वज्रमेव भ्रातृव्येभ्यः प्रहृत्येति । आपो वै रक्षोघ्नी रक्षसामपहत्या इति । आपो वै देवानां प्रियं धामेति । अमृतं वा आपस्तस्मादद्भिरवतां तमभिषिञ्चन्तीति । आपो वै सर्वा देवता देवता एवारभ्येति । आपो वै शान्ताः शान्ताभिरेवास्य शुचं शमयति । इति ब्राह्मणम् । तस्मात्पवित्रेण शान्त्युदकं करोति । जन्मनक्षत्रे पुण्ये नक्षत्रे विवाहचौळोपनयनसमावर्तनसीमन्ताग्न्याधेयान्यन्यानि मङ्गलकार्याणि ग्रहोपरागे ग्रहोत्पाते वा द्विपात्सु चतुष्पात्सु भयं विन्देताथ शान्तिमारभेत " ॥

सा च श्वःकर्मकरणपक्षे पूर्वेद्युः प्रातर्नान्दीश्राद्धं कृत्वा तस्यामेव रात्रौ प्रदोषान्ते कर्तव्या । तदुक्तं गृह्यसारसंग्रहे–"एवं श्राद्धं समाप्याथ प्रदोषस्यान्त आगते " इत्यादिना । कारिकान्तरे तु–" शान्त्यर्थं चेद्दिवा कुर्याद्रात्रौ चेत्कर्मशुद्धये " इति व्यवस्था कृता ।

अथोदकशान्तेर्मन्त्रानुक्रमः । ( बो. गृ. शे. सू. १. १४. ७–८ ) " तत्सवितुर्वरेण्यम् " इत्येतां पच्छोऽर्धर्चशोऽनवानमुक्त्वा वेदादीन जपति । राक्षोघ्नं " कृणुष्व पाजः प्रसितिं " इत्येतमनुवाकं मदे चिदस्येत्यर्धर्चमपोद्धृत्य " इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः " इत्येतमनुवाकं " यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः " इति द्वाभ्याम् । " महाꣳ इन्द्रः, सजोषा इन्द्रः " इति द्वाभ्याम् । " ये देवाः पुरःसदः " इति पञ्चभिः पर्यायैः । " अग्नये रक्षोघ्ने " इति पञ्च । " अग्निरायुष्मान् " इति पञ्च । " या वामिन्द्रावरुणा " इति चतस्रः । यो वामिन्द्रावरुणौ " इत्यष्टौ । " अग्ने यशस्विन् " इति चतस्रः । राष्ट्रभृतं " ऋताषाडृतधामा "

इत्येतमनुवाकम् । "नमो अस्तु सर्पेभ्यः" इति तिसृभिरनुच्छन्दसम् । पञ्च चोडाः "अयं पुरो हरिकेशः" इति पञ्चभिः पर्यायैः । अप्रतिरथं "आशुः शिशानः" इत्येतमनुवाकम् । "शञ्च मे मयश्च मे" इत्येतमनुवाकम् ॥ विहव्यं "ममाग्ने वर्चो विहवेष्वस्तु" इत्येतमनुवाकम् । मृगारं "अग्नेर्मन्वे" इत्येतमनुवाकम् । सर्पाहुतीः "समीची नामासि प्राची दिक्" इति षड्भिः पर्यायैः । गन्धर्वाहुतीः "हेतयो नाम स्थ तेषां वः पुरोगृहाः" इति षड्भिः । अज्यानीः "शतायुधाय" इति पञ्च । "भूतं भव्यं भविष्यत्" इत्येतमनुवाकम् । अथर्वशिरसं "इन्द्रो दधीचो अस्थभिः" इत्येतमनुवाकम् । प्रत्यङ्गिरसं "चक्षुषो हेते मनसो हेते" इति प्रतिपद्य "भ्रातृव्यं पादयामसि" इत्यन्तम् । "प्राणो रक्षति विश्वमेजत्" इत्येतमनुवाकम् ॥ "सिंहे व्याघ्र उत या पृदाकौ" इत्येतमनुवाकम्। "अहमस्मि" इत्येतमनुवाकम्। "ता सूर्याचन्द्रमसा" इत्येतमनुवाकम् । "अग्निर्नः पातु" "ऋध्या स्म" "नवोनवः" इत्येतैस्त्रिभिरनुवाकैरुत्तमैरुपहोमैश्च । सुरभिमत्याब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिः । "तच्छंयोरावृणीमहे" इत्येतमनुवाकम् । "नमो ब्राह्मणे" इति परिधानीयां त्रिरन्वाहेति ब्राह्मणम् ॥ कल्पसारे— "तच्छंयोर्घृतसूक्तकम्" इति ॥

उदकशान्तिप्रयोगः ॥ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य चतुरवरान् युग्मान् ब्राह्मणान् सुप्रक्षाळितपाणिपादानप आचमय्य प्रतिदिशमासनेषूपवेश्य कर्ता शुचिः सपत्नीको दर्भेषु प्राङ्मुख उपविश्य दर्भान् दूर्वांश्च धारयमाणः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य सर्वामङ्गलनिरसनद्वारा सौमङ्गल्यप्राप्त्यर्थमेभिर्ब्राह्मणै-स्सहामुककर्माङ्गतया विहितामुदकशान्तिं करिष्ये, इति सङ्कल्प्य निर्विघ्नतासिध्यर्थं गणपतिं सम्पूज्य अस्मिन्नुदकशान्ति-कर्मणि पूर्वस्यां दिशि जपार्थं त्वामहं वृणे। एवं दक्षिणस्यां दिशि० वृणे । पश्चिमायां दिशि० वृणे । उत्तरस्यां दिशि०

वृणे । इति ब्राह्मणान् वृत्वा गन्धादिभिरभ्यर्च्य पञ्चप्रस्थपरिमितैर्व्रीहिभिर्यवैर्वा अरत्निमात्रं समचतुरश्रं स्थण्डिलं कृत्वा तस्मिन् सुवर्णरजतताम्रव्रीहिदर्भाणामन्यतमेन प्रादेशमात्रं त्रिः प्राचीनमुल्लिखेत्– मध्ये " ब्रह्म जज्ञानं " इति । दक्षिणे " नाके सुपर्णं " इति । उत्तरे " आप्यायस्व " इति ॥ एवं त्रिरुदीचीनं– मध्ये " यो रुद्रो अग्नौ " इति । अप उपस्पृश्य । पश्चिमे " इदं विष्णुः " इति । प्राच्यां " इन्द्रं विश्वा अवीवृधन् " इति ॥ शकलं निरस्याप उपस्पृश्याद्भिस्स्थण्डिलमभ्युक्ष्य दूर्वाभिर्दर्भैरास्तीर्य गन्धोदकेनाभ्युक्ष्य पुष्पैरवकीर्य, उत्तरतः प्रागग्रेषु दर्भेषु सूत्रवेष्टितब्रह्मपात्रमासाद्य संस्कृताभिः प्रोक्षणीभिस्त्रिः प्रोक्ष्य सुधूपितं तत्पात्रं स्थण्डिलमध्ये निदधाति–" ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः । सबुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः" इति ॥ अथ देवस्य त्वा० हस्ताभ्यां परिस्तृणामि ॥ ॐ भूर्भुवः सुवः, परि० ॥ उद्वयं० रुत्तमं, परि० ॥ अग्न आयाहि० बर्हिषि, परिस्तृणामि" प्रागादि चतुर्दिक्षु क्रमेण दर्भैः संपरिस्तीर्य ब्रह्मपात्रे तिरः पवित्रमप आनयन्नपति–" तत्सवितुर्वरेण्यं " इति । अद्भिः पूरयित्वा यवाक्षततण्डुलानावपति भूर्भुवस्सुवरोमिति ॥ ततो वक्ष्यमाणेन कलशस्थापनधर्मेण "गन्धद्वारां" इति गन्धम् । "काण्डात्काण्डात्" इति दूर्वाः । " अश्वत्थे वः " इति पल्लवान् । "याः फलिनीः" इति फलम् । "बृहस्पते जुषस्व नः" इति रत्नानि । "अग्ने रेतः " इति हिरण्यम् । " युवासुवासाः " इति वस्त्रम् । "पूर्णा दर्वि परापत " इति तण्डुलपूर्णपात्रं कूर्चं च निक्षिप्य । " तत्त्वा यामि " इति वरुणमावाह्य पूजयेत् ॥ ततो " ब्रह्म जज्ञानं " इति वेदब्रह्माणमावाह्य षोडशोपचारैरभ्यर्च्य पुष्पैर्दूर्वाभिः फलैरवकीर्य दूर्वाभिर्दर्भैः प्रतिच्छाद्याभिमृशाति "शन्नो देवीः" इति ॥ अथ सर्वे कुम्भमन्वारभ्य जपेयुः ॥ ॐ भूर्भुवस्सुवः ॥ तत्सवितुर्वरेण्यम् ॥ भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥१॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥२॥ तत्सवितुर्वरे-

ण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥३॥ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ॥ होतारं रत्नधातमम् ॥ (इति ऋग्वेदस्य) ॥ इषे त्वोर्जे त्वा वायवस्थोपायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशतमाघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ यज्ञस्य घोषदसि प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे देवानां परिषूतमसि वर्षवृद्धमसि देवबर्हिर्मा त्वान्वङ्मा तिर्यक्पर्व ते राध्यासमाच्छेत्ताते मा रिषन्देवबर्हिः शतवल्शं विरोह सहस्रवल्शा वियवꣳ रुहेम पृथिव्याः संपृचः पाहि सुसंभृता त्वा संभराम्यदित्यै रास्नासीन्द्राण्यै सन्नहनं पूषा ते ग्रंथिं ग्रंथ्नातु स ते मास्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना हराम्युर्वन्तरिक्षमन्विहि देवं गममसि ॥ शुन्धध्वं दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोसि द्यौरसि पृथिव्यासि विश्वधाया असि परमेण धाम्ना दृꣳहस्व माह्वार्वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारꣳ हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याꣳ सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मा संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वाऽऽतनच्मीन्द्राय दधि विष्णो हव्यꣳ रक्षस्व ॥ (इति यजुर्वेदस्य) ॥ अग्न आयाहि वीतये गृणानो हव्यदातये ॥ नि होता सत्सि बर्हिषि ॥ (इति सामवेदस्य) ॥ शंन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शंयोरभि स्रवन्तु नः ॥ (इत्यथर्ववेदस्य) ॥ कृणुष्वपाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन ॥ तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्यरक्षसस्तपिष्ठैः ॥ तव भ्रमास आशुयापतन्त्यनु स्पृश धृषता शोशुचानः ॥ तपूꣳष्यग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः ॥

प्रतिस्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः॥ यो नो दूरे अघशꣳसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ उदग्ने तिष्ठ प्रत्यातनुष्वन्यमित्राꣳओषतात्तिग्महेते ॥ यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ॥ अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् । स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ॥ विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो विदुरो अभिद्यौत् ॥ सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ॥ पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतामियङ्गीः ॥ स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून्॥ इह त्वा भूर्या चरेदुपत्मन्दोषावस्तर्दीदिवाꣳसमनु द्यून्॥ क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाम् ॥ यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ॥ तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥ महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ॥ त्वं नो अस्य वचसश्चिकिध्दि होतर्यविष्ठ सुक्रतो दमूनाः ॥ अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ॥ ते पायवः सध्रियञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ॥ ररक्षतान्त्सुकृतो विश्ववेदादिप्सन्त इद्रिपवो ना ह देभुः ॥ त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् ॥ उभाशꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ अया ते अग्ने समिधा विधेम प्रतिस्तोमꣳ शस्यमानं गृभाय ॥ दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म ॥ शिशानो अग्निः क्रतुभिस्समिद्धस्स नो दिवा सरिषः पातु नक्तम् ॥ विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ॥ प्रादेवीर्मायास्सहते दुरेवाः शिशीते श्रृंगे रक्षसे विनिक्षे ॥ उतस्वानासो दिविषन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ ॥ ॥इन्द्रं वो विश्वतस्परि हवामहे

जनेभ्यः । अस्माकमस्तु केवलः ॥ इन्द्रन्नरो नेमधिता हवन्ते यत्पार्यायुनजते धियस्ताः ॥ शूरो नृषाता शवसश्चकान आगोमति व्रजे भजा त्वन्नः ॥ इन्द्रियाणि शतक्रतो याते जनेषु पञ्चसु ॥ इन्द्र तानि त आवृणे ॥ अनु ते दायिमह इन्द्रियाय सत्रा ते विश्व मनुवृत्रहत्ये । अनुक्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये ॥ आयस्मिन्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा ॥ ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः ॥ आमासु पक्वमैरय आसूर्यं रोहयो दिवि ॥ घर्मं न साम तपतासु वृक्तिभिर्जुष्टं गिर्वणसे गिरः ॥ इन्द्रमिद्गाथिनो बृहदिन्द्र-मर्केभिरर्किणः ॥ इन्द्रं वाणीरनूषत ॥ गायंति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ॥ ब्रह्माणस्त्वा शतक्रतवुद्व शमिवयेमिरे ॥ अंहोमुचे प्रभरेमा मनीषा मोषिष्ठदाव्ने सुमतिं गृणानाः ॥ इदमिन्द्र प्रति हव्यं गृभाय सत्यास्सन्तु यजमानस्य कामाः ॥ विवेषयन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ॥ अंहसो यत्र पीपरद्यथा नो नावेव यान्त मुभये हवन्ते ॥ प्रसम्राजं प्रथममध्वराणामंहोमुचं वृषभं यज्ञियानाम् ॥ अपान्नपातमश्विना हयंतमस्मिन्नर इन्द्रियं धत्तमोजः ॥ वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ॥ अधस्पदं तमीं कृधि यो अस्मा अभिदासति ॥ इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ॥ अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥ मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगामा परस्याः ॥ सृकं संशाय पविमिन्द्र तिग्मं विशत्रून्ताढि विमृधो नुदस्व ॥ विशत्रून्विमृधो नुद विवृत्रस्य हनू रुज ॥ विमन्युमिन्द्र भामितोऽमित्रस्याभिदासतः ॥ त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् ॥ हुवे नु शक्रं पुरुहूतमिन्द्रं स्वस्तिनो मघवा धात्विन्द्रः ॥ माते अस्यां सहसावन्परिष्टावघाय भूम हरिवः परादै ॥ त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम ॥ अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ॥ अनश्वासो ये पवयोऽरथा

इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ ॥ यत इन्द्र भयामहे ततो नो अभयं कृधि ॥ मघवञ्छग्धि तव तन्न ऊतये विद्विषो वि मृधो जहि ॥ स्वस्तिदा विशस्पतिर्वृत्रहा वि मृधो वशी ॥ वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयङ्करः ॥ महा२ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु ॥ स्वस्तिनो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि ॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान् ॥ जहि शत्रू२ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ ॥ ये देवाः पुरस्सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा ॥ ये देवा दक्षिणसदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा ॥ ये देवाः पश्चात्सदः सवितृनेत्रा रक्षोहणस्ते नः पान्तु तेनोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा ॥ ये देवा उत्तरसदो वरुणनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा ॥ ये देवा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु तेनोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा ॥ ॥ अग्नये रक्षोघ्ने स्वाहा ॥ यमाय रक्षोघ्ने स्वाहा ॥ सवित्रे रक्षोघ्ने स्वाहा ॥ वरुणाय रक्षोघ्ने स्वाहा ॥ बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा ॥ ॥ अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान्तेन त्वायुषायुष्मन्तङ्करोमि ॥ सोम आयुष्मान्त्स ओषधीभिरायुष्मान्तेन त्वायुषायुष्मन्तङ्करोमि ॥ यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मान्तेन त्वायुषायुष्मन्तङ्करोमि ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषायुष्मन्तङ्करोमि ॥ देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वायुषायुष्मन्तङ्करोमि ॥ ॥ या वामिन्द्रावरुणा यतव्या तनूस्तयेमम२ हसो मुञ्चतम् ॥ या वामिन्द्रावरुणा सहस्या तनूस्तयेमम२ हसो मुञ्चतम् ॥ या वामिन्द्रावरुणा रक्षस्या तनूस्तयेमम २ हसो मुञ्चतम् ॥ या वामिन्द्रावरुणा तेजस्या तनूस्तयेमम २ हसो मुञ्चतम् ॥ यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा

द्विपात्सु पशुषु स्त्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा चतुष्पात्सु पशुषु स्त्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा गोष्ठे स्त्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा गृहेषु स्त्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणाप्सु स्त्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणौषधीषु स्त्रामस्तं वामेतेनाव यजे ॥ यो वामिन्द्रावरुणा वनस्पतिषु स्त्रामस्तं वामेतेनाव यजे ॥ ॥ अग्ने यशस्विन्यशसे ममर्पयेन्द्रावतीमपचितीमिहावह ॥ अयं मूर्धापरमेष्ठी सुवर्चाः समानानामुत्तमश्लोको अस्तु ॥ भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयः सुवर्विदः ॥ ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभिसन्नमन्तु ॥ धाता विधाता परमोतसन्दृक् प्रजापतिः परमेष्ठी विराजा ॥ स्तोमाश्छन्दाꣳसि निविदोम आहुरेतस्मै राष्ट्रमभिसन्नमाम ॥ अभ्यावर्तध्वमुपमेतसाकमयꣳ शास्ताधिपतिर्वो अस्तु ॥ अस्य विज्ञानमनुसꣳरभध्वमिमं पश्चादनुजीवाथ सर्वे ॥ ॥ ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु ता इदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवस्सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तवाः प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नय इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा भुवनस्य पते यस्य त उपरि गृहा इह च ॥ सनो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् ॥ परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः सुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो दूरे हेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवश्चारुः कृपणकाशीकामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्मक्षत्रं पातु ता इदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा सनो भुवनस्य पते यस्य त उपरि गृहा इह च ॥ उरुब्रह्मणेस्मै क्षत्राय महिशर्म यच्छ ॥ ॥ नमो

अस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥ ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ येदोरोचने दिवो ये वा सूर्यस्य रश्मिषु ॥ येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः ॥ या इषवो यातुधानानां ये वा वनस्पतीँरनु ॥ ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ ॥ अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षांसि प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दंक्ष्णवः पशवो हेतिः पौरुषेयोवधः प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ अयमुत्तरात्संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ अयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन्प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ ॥ आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रन्दनोऽनिमिष एकवीरः शतꣳसेना अजयत्साकमिन्द्रः ॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेणजयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः सनिषङ्गिभिर्वशी सꣳस्रष्टा सयुध इन्द्रो गणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पते परिदीयारथेन रक्षोहामित्राँ अपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणो युधाजयन्नस्माकमेध्यविता रथानाम् ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥

इम ँ संजाता अनुवीरयध्वमिन्द्रँ सखायोऽनुस ँ रभध्वम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ॥ अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्ररथमातिष्ठ गोवित् ॥ अभिगोत्राणि सहसा गाहमानोऽदायो वीरः शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयुध्योऽस्माकँ सेना अवतु प्रयुत्सु ॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्रे ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताँ शर्ध उग्रम् ॥ महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ॥ अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवताहवेषु ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां महाँसि ॥ उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतामेतु घोषः ॥ उपप्रेत जयतानरः स्थिरा वः सन्तु बाहवः ॥ इन्द्रो वः शर्म यच्छत्वनाधृष्या यथासथ ॥ अवसृष्टा परापत शरव्ये ब्रह्मस ँ शिता ॥ गच्छामित्रान्प्रविशमैषां कंचनोच्छिषः ॥ मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवस्ताम् ॥ उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनुमदन्तु देवाः ॥ यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव ॥ इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु ॥ ॥ शञ्च मे मयश्च मे प्रियञ्च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च म ऋतं च मेऽमृतञ्च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मेऽनमित्रं च मेऽभयं च मे सुगञ्च मे शयनञ्च मे सूषा च मे सुदिनञ्च मे ॥ ॥ ममाग्ने वर्चो विहवेष्वस्तु वयन्त्वेन्धानास्तनुवं पुषेम ॥ मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ मम देवा विहवे

सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः ॥ ममान्तरिक्षमुरुगोपमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥ मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः ॥ दैव्या होतारावनिषन्त पूर्वेऽरिष्टा स्याम तनुवा सुवीराः ॥ मह्यं यजन्तु मम यानि हव्याकूतिः सत्यामनसो मे अस्तु ॥ एनोमानिगां कतमच्च नाहं विश्वे देवासो अधिवोचता मे ॥ देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम् ॥ माहास्महि प्रजया मा तनूभिर्मा रधाम द्विष ते सोम राजन् ॥ अग्निर्मन्युं प्रतिनुदन् पुरस्ताददब्धो गोपाः परिपाहि नस्त्वम् ॥ प्रत्यञ्चो यन्तु निगुतः पुनस्तेमैषां चित्तं प्रबुधा विनेशत् ॥ धाता धातॄणां भुवनस्य यस्पतिर्देव ँ सवितारमभिमातिषाहम् ॥ इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् ॥ उरुव्यचानो महिषः शर्म य ँ सदस्मिन्हवे पुरुहूतः पुरुक्षु ॥ स नः प्रजायै हर्यश्व मृडयेन्द्र मा नो रीरिषो मा परादाः ॥ ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामवबाधामहे तान् ॥ वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥ अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धन जिदश्वजिद्यः ॥ इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा ॥ ॥ अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवस्समिन्धते ॥ विश्वस्यां विशि प्राविवि शिवा ँ समीमहे स नो मुञ्चत्व ँ हसः ॥ यस्येदं प्राणं निमिषद्यदेजति यस्य जातं जनमानं च केवलम् ॥ स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्व ँ हसः ॥ इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नस्तोमा उपमामुपागुः ॥ यो दाशुषः सुकृतो हवमुप गन्ता स नो मुञ्चत्व ँ हसः ॥ यः सङ्ग्रामं नयति संवशी युधे यः पुष्टानि स ँ सृजति त्रयाणि ॥ स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्व ँ हसः ॥ मन्वे वां मित्रावरुणा तस्य वित्त ँ सत्यौजसा दृ ँ हणा यन्नुदेथे ॥ या राजान ँ सरथं याथ उग्रा ता नो मुञ्चतमागसः ॥ यो वा ँ रथं ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन् ॥ स्तौमि

मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ वायोस्सवितुर्विदथानि मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः ॥ यौ विश्वस्य परिभूवभूवतुस्तौ नो मुञ्चतमागसः ॥ उपश्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् ॥ स्तौमि वायु॰ सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ रथीतमौ रथीनामह्व ऊतये शुभङ्गमिष्ठौ सुयमेभिरश्वैः ॥ ययोर्वान्देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः ॥ यदयातं वहतु॰ सूर्यायास्त्रिचक्रेण स॰ सदमिच्छमानौ ॥ स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ॥ आशून्हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ तिग्ममायुधं वीडित॰ सहस्वद्दिव्य॰ शर्धः प्रतनासु जिष्णु ॥ स्तौमि देवा-न्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥ देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ॥ आशून्हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ यदिदं माभिशोचति पौरुषेयेण दैव्येन ॥ स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥ अनुनोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् ॥ अग्निश्च हव्यवाहनो भवतान्दाशुषे मयः ॥ अन्विदनुमते त्वं मन्यासैशञ्च नः कृधि ॥ क्रत्वे दक्षाय नो हिनु प्रण आयू॰षि तारिषः ॥ वैश्वानरो न ऊत्याऽऽप्र यातु परावतः ॥ अग्निरुक्थेन वाहसा ॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ॥ वैश्वानरस्सहसा पृष्टो अग्निस्स नो दिवा सरिषः पातु नक्तम् ॥ ये अप्रथेताममितेभिरोजोभिर्येऽप्रतिष्ठे अभवतां वसूनाम् ॥ स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतम॰हसः ॥ उर्वीरोदसी वरिवः कृणोतं क्षेत्रस्य पत्नी अधि नो ब्रूयातम् ॥ स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतम॰हसः ॥ यत्ते :वयं पुरुषत्रा

यविश्राविद्वाꣳसश्चकृमा कच्चनागः ॥ कृधी स्वस्मा ꣳ अदितेरनागा व्येनाꣳसि शिश्रथो विष्वगग्ने ॥ यथाह तद्वसवो गौर्यं चित्पदिषितामसुञ्चता यजत्राः ॥ एवात्वमस्मत्प्रमुञ्चाव्य ꣳ हः प्रातार्यग्ने प्रतरान्न आयुः ॥ ॥ समीची नामासि प्राची-दिक्तस्यास्ते ऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ ओजस्विनी नामासि दक्षिणा दिक्तस्यास्त इन्द्रोऽधिपतिः पृदाकू रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ प्राची नामासि प्रतीची दिक्तस्यास्ते सोमोऽधिपतिः स्वजो रक्षिता यश्चाधि-पतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ अवस्थावा नामास्युदीची दिक्तस्यास्ते वरुणोऽ-धिपतिस्तिरश्चराजी रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ अधिपत्नी नामासि बृहती दिक्तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ वशिनी नामासीयं दिक्तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ ॥ हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवस्सलिलो वातनामन्तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवस्सगरो वातनामन्तेभ्यो वो नमस्तेनो मृडयत ते यं द्विष्मो यश्चनो द्वेष्टि तं वो जम्भे दधामि ॥ वज्रिणो नाम स्थ तेषां वः पश्चाद्गृहाः स्वप्नो व इषवो गह्वरो वातनामन्तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो

जम्भे दधामि ॥ अवस्थावानो नाम स्थ तेषां व उत्तराद्गृहा आपो व इषवः समुद्रो वातनामन्तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ अधिपतयो नाम स्थ तेषां व उपरि गृहा वर्षं व इषवोऽवस्वान्वातनामन्तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा अन्नं व इषवोऽनिमिषो वातनामन्तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ ॥ शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे ॥ शतं यो नः शरदो अजीतानिन्द्रो नेषदति दुरितानि विश्वा ॥ ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ॥ तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परिदत्तेह सर्वे ॥ ग्रीष्मो हेमन्त उत नो वसन्तश्शरद्वर्षाः सुवितन्नो अस्तु ॥ तेषामृतूना१ँ शत-शारदानां निवात एषामभये स्याम ॥ इदुवत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः ॥ तेषां वय१ँ सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम ॥ भद्रान्नः श्रेयस्समनैष्ट देवास्त्वयावसेन समशीमहि त्वा ॥ स नो मयोभूः पितो आविशस्व शं तोकाय तनुवे स्योनः ॥ ॥ भूतं भव्यं भविष्यद्वषट्त्स्वाहा नम ऋक्सामयजुर्वषट्त्स्वाहा नमो गायत्रीत्रिष्टुब्जगती वषट्त्स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट्त्स्वाहा नमोऽग्निर्वायुः सूर्यो वषट्त्स्वाहा नमः प्राणो व्यानोऽपानो वषट्त्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्त्स्वाहा नमः पिता पुत्रः पौत्रो वषट्त्स्वाहा नमो भूर्भुवस्सुवर्वषट्त्स्वाहा नमः ॥ ॥ इन्द्रो दधीचो अस्थभिः ॥ वृत्राण्यप्रतिष्कुतः ॥ जघान नवतीर्नव ॥ इच्छन्नश्वस्य यच्छिरः ॥ पर्वतेष्वपश्रितम् ॥ तद्विदच्छर्यणावति ॥ अत्राह गोरमन्वत ॥ नाम त्वष्टुरपीच्यम् ॥ इत्था चन्द्रमसो गृहे ॥ इन्द्रमिद्गाथिनो बृहत् ॥ इन्द्रमर्केभिरर्किणः ॥ इन्द्रं वाणीरनूषत ॥

इन्द्र इद्धर्योः सचा ॥ संमिश्ल आवचो युजा ॥ इन्द्रो वज्री हिरण्ययः ॥ इन्द्रो दीर्घाय चक्षसे ॥ आसूर्यꣳ रोहयद्दिवि ॥ वि गोभिरद्रिमैरयत् ॥ इन्द्र वाजेषु नो अव ॥ सहस्रप्रधनेषु च ॥ उग्र उग्राभिरूतिभिः ॥ तमिन्द्रं वाजयामसि ॥ महे वृत्राय हन्तवे ॥ स वृषा वृषभोऽभुवत् ॥ इन्द्रः स दामने कृतः ॥ ओजिष्ठः स बले हितः ॥ द्युम्नी श्लोकी स सौम्यः ॥ गिरा वज्रो न सम्भृतः ॥ सबलो अनपच्युतः ॥ ववक्षुरुग्रो अस्तृतः ॥ ॥ चक्षुषो हेते मनसो हेते ॥ वाचो हेते ब्रह्मणो हेते ॥ योमाघायुरभिदासति ॥ तमग्ने मेन्यामेनिं कृणु ॥ यो मा चक्षुषा यो मनसा ॥ यो वाचा ब्रह्मणाघायुरभिदासति ॥ तयाऽग्ने त्वं मेन्या ॥ अमुममेनिं कृणु ॥ यत्किञ्चासौ मनसा यच्च वाचा ॥ यज्ञैर्जुहोति यजुषा हविर्भिः ॥ तन्मृत्युर्निर्ऋत्या संविदानः ॥ पुरादिष्टादाहुतीरस्य हन्तु ॥ यातुधाना निर्ऋतिरादु रक्षः ॥ ते अस्य घ्नन्त्वनृतेन सत्यम् ॥ इन्द्रेषिता आज्यमस्य मथ्नन्तु ॥ मा तत्समृद्धि यदसौ करोति ॥ हन्मि तेऽहं कृतꣳ हविः ॥ यो मे घोरमचीकृतः ॥ अपाञ्चौत उभौ बाहू ॥ अपनह्याम्यास्यम् ॥ अपनह्यामि ते बाहू ॥ अपनह्याम्यास्यम् ॥ अग्नेर्देवस्य ब्रह्मणा ॥ सर्वं तेऽवधिषं कृतम् ॥ पुरामुष्य वषट्कारात् ॥ यज्ञं देवेषु नः कृधि ॥ स्विष्टमस्माकं भूयात् ॥ मास्मान्प्रापन्नरातयः ॥ अन्तिदूरे सतो अग्ने ॥ भ्रातृव्यस्याभिदासतः ॥ वषट्कारेण वज्रेण ॥ कृत्याꣳ हन्मि कृतामहम् ॥ यो मा नक्तं दिवा सायम् ॥ प्रातश्चाह्नो निपीयति ॥ अद्या तामिन्द्र वज्रेण ॥ भ्रातृव्यम्पादयामसि ॥ ॥ ॥ प्राणो रक्षति विश्वमेजत् ॥ इर्यो भूत्वा बहुधा बहूनि ॥ स इत्सर्वं व्यानशे ॥ यो देवो देवेषु विभूरन्तः ॥ आवृदूदात्क्षेत्रियध्वगद्वृषा ॥ तमित्प्राणं मनसोपशिक्षत ॥ अग्रं देवानामिदमत्तु नो हविः ॥ मनसश्चित्तेदम् ॥ भूतं भव्यं च गुप्यते ॥ तद्धि देवेष्वग्रियम् ॥ आ न एतु पुरश्चरम् ॥ सह देवैरिमꣳ हवम् ॥ मनः श्रेयसिश्रेयसि ॥ कर्मन्यज्ञपतिं दधत् ॥ जुषतां मे वागिदꣳ हविः ॥ विराट् देवी पुरो-

हिता ॥ हव्यवाडनपायिनी ॥ यया रूपाणि बहुधा वदन्ति ॥ पेशाꣳसि देवाः परमे जनित्रे ॥ सा नो विराडनपस्फुरन्ती ॥ वाग्देवी जुषता-मिदꣳ हविः ॥ चक्षुर्देवानां ज्योतिरमृते न्यक्तम् ॥ अस्य विज्ञानाय बहुधा निधीयते ॥ तस्य सुम्नमशीमहि ॥ मा नो हासीद्विचक्षणम् ॥ आयुरिन्नः प्रतीर्यताम् ॥ अनन्धाश्चक्षुषा वयम् ॥ जीवा ज्योतिरशीमहि ॥ सुवर्ज्योतिरुतामृतम् ॥ श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम् ॥ श्रोत्रेण वाचं बहुधोद्यमानाम् ॥ श्रोत्रेण मोदश्च महश्च श्रूयते ॥ श्रोत्रेण सर्वा दिश आशृणोमि ॥ येन प्राच्या उत दक्षिणा ॥ प्रतीच्यै दिशः शृण्वन्त्युत्तरात् ॥ तदिच्छ्रोत्रं बहुधोद्यमानम् ॥ अरान्ननेमिः परि सर्वं बभूव ॥ ॥ सिꣳहे व्याघ्र उत या पृदाकौ ॥ त्विषि-रग्नौ ब्राह्मणे सूर्ये या ॥ इन्द्रं या देवी सुभगा जजान ॥ सा न आगन्वर्चसा संविदाना ॥ या राजन्ये दुन्दुभावायतायाम् ॥ अश्वस्य क्रन्द्ये पुरुषस्य मायौ ॥ इन्द्रं या देवी सुभगा जजान ॥ सा न आगन्वर्चसा संविदाना ॥ या हस्तिनि द्वीपिनि या हिरण्ये ॥ त्विषिरश्वेषु पुरुषेषु गोषु ॥ इन्द्रं या देवी सुभगा जजान ॥ सा न आगन्वर्चसा संविदाना ॥ रथे अक्षेषु वृषभस्य वाजे ॥ वाते पर्जन्ये वरुणस्य शुष्मे ॥ इन्द्रं या देवी सुभगा जजान ॥ सा न आगन्वर्चसा संविदाना ॥ राडसि विराडसि ॥ सम्राडसि स्वराडसि ॥ इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामि ॥ इन्द्राय त्वौजस्वत ओजस्वन्तꣳ श्रीणामि ॥ इन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामि ॥ इन्द्राय त्वायुष्मत आयुष्मन्तꣳ श्रीणामि ॥ तेजोऽसि ॥ तत्ते प्रयच्छामि ॥ तेजस्वदस्तु मे मुखम् ॥ तेज-स्वच्छिरो अस्तु मे ॥ तेजस्वान्विश्वतः प्रत्यङ् ॥ तेजसा सम्पिपृग्धि मा ॥ ओजोऽसि ॥ तत्ते प्रयच्छामि ॥ ओजस्वदस्तु मे मुखम् ॥ ओजस्वच्छिरो अस्तु मे ॥ ओजस्वान्विश्वतः प्रत्यङ् ॥ ओजसा सम्पिपृग्धि मा ॥ पयोऽसि ॥ तत्ते प्रयच्छामि ॥ पयस्वदस्तु मे

मुखम् ॥ पयस्वच्छिरो अस्तु मे ॥ पयस्वान्विश्वतः प्रत्यङ् ॥ पयसा सम्पिपृग्धि मा ॥ आयुरसि ॥ तत्ते प्रयच्छामि ॥ आयुष्मदस्तु मे मुखम् ॥ आयुष्माच्छिरो अस्तु मे ॥ आयुष्मान्विश्वतः प्रत्यङ् ॥ आयुषा सम्पिपृग्धि मा ॥ इममग्न आयुषे वर्चसे कृधि ॥ प्रियꣳ रेतो वरुण सोम राजन् ॥ मातेवास्मा अदिते शर्म यच्छ ॥ विश्वेदेवा जरदष्टिर्यथासत् ॥ आयुरसि विश्वायुरसि ॥ सर्वायुरसि सर्वमायुरसि ॥ यतो वातो मनोजवाः ॥ यतः क्षरन्ति सिन्धवः ॥ तासान्त्वा सर्वासाꣳ रुचा ॥ अभिषिञ्चामि वर्चसा ॥ समुद्र इवासि गह्मना ॥ सोम इवास्यदाभ्यः ॥ अग्निरिव विश्वतः प्रत्यङ् ॥ सूर्य इव ज्योतिषा विभूः ॥ अपां यो द्रवणे रसः ॥ तमहमस्मा आमुष्यायणाय ॥ तेजसे ब्रह्मवर्चसाय गृह्णामि ॥ अपां य ऊर्मौ रसः ॥ तमहमस्मा आमुष्यायणाय ॥ ओजसे वीर्याय गृह्णामि ॥ अपां यो मध्यतो रसः ॥ तमहमस्मा आमुष्यायणाय ॥ पुष्ट्यै प्रजननाय गृह्णामि ॥ अपां यो यज्ञियो रसः ॥ तमहमस्मा आमुष्यायणाय ॥ आयुषे दीर्घायुत्वाय गृह्णामि ॥ ॥ अहमस्मि प्रथमजा ऋतस्य ॥ पूर्वं देवेभ्यो अमृतस्य नाभिः ॥ यो मा ददाति स इदेव मावाः ॥ अहमन्नमन्नमदन्तमद्मि ॥ पूर्वमग्नेरपि दहत्यन्नम् ॥ यत्तौ हासाते अहमुत्तरेषु ॥ व्यात्तमस्य पशवः सुजम्भम् ॥ पश्यन्ति धीराः प्रचरन्ति पाकाः ॥ जहाम्यन्यं न जहाम्यन्यम् ॥ अहमन्नं वशमिच्चरामि ॥ समानमर्थं पर्येमि भुञ्जत् ॥ को मामन्नं मनुष्यो दयेत ॥ पराके अन्नं निहितं लोक एतत् ॥ विश्वैर्देवैः पितृभिर्गुप्तमन्नम् ॥ यदद्यते लुप्यते यत्परोप्यते ॥ शततमी सा तनूर्मे बभूव ॥ महान्तौ चरू सकृद्दुग्धेन पप्रौ ॥ दिवञ्च पृश्नि पृथिवीञ्च साकम् ॥ तत्सम्पिबन्तो न मिनन्ति वेधसः ॥ नैतद्भूयो भवति नो कनीयः ॥ अन्नं प्राणमन्नमपानमाहुः ॥ अन्नं मृत्युं तमु जीवातुमाहुः ॥ अन्नं ब्रह्माणो जरसं वदन्ति ॥ अन्नमाहुः प्रजननं प्रजानाम् ॥

मोघमन्नं विन्दते अप्रचेताः ॥ सत्यं ब्रवीमि वध इत्स तस्य ॥ नार्यमणं पुष्यति नो सखायम् ॥ केवलाघो भवति केवलादी ॥ अहं मेघस्तनयन्वर्षन्नास्मि ॥ मामदन्त्यहमद्म्यन्यान् ॥ अह ँ सदमृतो भवामि ॥ मदादित्या अधि सर्वे तपन्ति ॥ देवीं वाचमजनयन्त देवाः ॥ तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेष मूर्जन्दुहाना ॥ धेनुर्वागस्मानुप सुष्टुतैतु ॥ यद्वाग्वदन्त्यविचेतनानि ॥ राष्ट्री देवानां निषसाद मन्द्रा ॥ चतस्र ऊर्जन्दुदुहे पयाँसि ॥ क्वस्विदस्याः परमञ्जगाम ॥ अनन्तामन्तादधिनिर्मितां महीम् ॥ यस्यां देवा अदधुर्भोजनानि ॥ एकाक्षरां द्विपदा ँ षट्पदाञ्च ॥ वाचं देवा उपजीवन्ति विश्वे ॥ वाचं देवा उपजीवन्ति विश्वे ॥ वाचं गन्धर्वाः पशवो मनुष्याः ॥ वाचीमा विश्वा भुवनान्यर्पिता ॥ सा नो हवं जुषतामिन्द्रपत्नी ॥ वागक्षरं प्रथमजा ऋतस्य ॥ वेदानां माताऽमृतस्य नाभिः ॥ सा नो जुषाणोपयज्ञमागात् ॥ अवन्ती देवी सुहवा मे अस्तु ॥ यामृषयो मन्त्रकृतो मनीषिणः ॥ अन्वैच्छन्देवास्तपसा श्रमेण ॥ तां देवीं वाचँ हविषा यजामहे ॥ सा नो दधातु सुकृतस्य लोके ॥ चत्वारि वाक्परिमिता पदानि ॥ तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहिता नेङ्गयन्ति ॥ तुरीयं वाचो मनुष्या वदन्ति ॥ श्रद्धयाग्निः समिध्यते ॥ श्रद्धया विन्दते हविः ॥ श्रद्धां भगस्य मूर्धनि ॥ वचसा वेदयामसि ॥ प्रियँ श्रद्धे ददतः ॥ प्रियँ श्रद्धे दिदासतः ॥ प्रियं भोजेषु यज्वसु ॥ इदं म उदितं कृधि ॥ यथा देवा असुरेषु ॥ श्रद्धामुग्रेषु चक्रिरे ॥ एवं भोजेषु यज्वसु ॥ अस्माकमुदितं कृधि ॥ श्रद्धां देवा यजमानाः ॥ वायुगोपा उपासते ॥ श्रद्धाँ हृदय्ययाऽऽकूत्या ॥ श्रद्धया हूयते हविः ॥ श्रद्धां प्रातर्हवामहे ॥ श्रद्धां मध्यान्दिनम्परि ॥ श्रद्धाँ सूर्यस्य निम्रुचि ॥ श्रद्धे श्रद्धापयेह मा ॥ श्रद्धा देवानधिवस्ते ॥ श्रद्धा

विश्वमिदं जगत् ॥ श्रद्धां कामस्य मातरम् ॥ हविषा वर्धयामसि ॥ ब्रह्म जज्ञानं प्रथमं पुरस्तात् ॥ विसीमतः सुरुचो वेन
आवः ॥ सबुध्निया उपमा अस्य विष्ठाः ॥ सतश्च योनिमसतश्च विवः ॥ पिता विराजामृषभो रयीणाम् ॥ अन्तरिक्षं विश्वरूप
आविवेश ॥ तमर्कैरभ्यर्चन्ति वत्सम् ॥ ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः ॥ ब्रह्म देवानजनयत् ॥ ब्रह्मविश्वमिदं जगत् ॥ ब्रह्मणः
क्षत्रं निर्मितम् ॥ ब्रह्म ब्राह्मण आत्मना ॥ अन्तरस्मिन्निमे लोकाः ॥ अन्तर्विश्वमिदं जगत् ॥ ब्रह्मैव भूतानां ज्येष्ठम् ॥ तेन को-
ऽर्हति स्पर्धितुम् ॥ ब्रह्मन्देवास्त्रयस्त्रिꣳशत् ॥ ब्रह्मन्निन्द्रप्रजापती ॥ ब्रह्मन्ह विश्वा भूतानि ॥ नावीवान्तः समाहिता ॥
चतस्र आशाः प्रचरन्त्वग्नयः ॥ इमं नो यज्ञं नयतु प्रजानन् ॥ घृतं पिन्वन्नजरꣳ सुवीरम् ॥ ब्रह्म समिद्भव-
त्याहुतीनाम् ॥ [आगावो अग्मन्नुत भद्रमक्रन् ॥ सीदन्तु गोष्ठे रणयन्त्वस्मे ॥ प्रजावतीः पुरुरूपा इह स्युः ॥ इन्द्राय
पूर्वीरुषसो दुहानाः ॥ इन्द्रो यज्वने पृणते च शिक्षति ॥ उपेद्ददाति नस्वं मुषायति ॥ भूयो भूयो रयिमिदस्य वर्धयन् ॥
अभिन्ने खिल्ये निदधाति देवयुम् ॥ न ता नशन्ति न दभाति तस्करः ॥ नैना अमित्रो व्यथिरादधर्षति ॥ देवाꣳश्च
याभिर्यजते ददाति च ॥ ज्योगित्ताभिः सचते गोपतिस्सह ॥ न ता अर्वा रेणुककाटो अश्नुते ॥ न सꣳस्कृतत्रमुपयन्ति
ता अभि ॥ उरुगायमभयं तस्य ता अनु ॥ गावो मर्त्यस्य विचरन्ति यज्वनः ॥ गावो भगो गाव इन्द्रो मे अच्छात् ॥
गावः सोमस्य प्रथमस्य भक्षः ॥ इमा या गावः सजनास इन्द्रः ॥ इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ यूयं गावो मे दयथा
कृशञ्चित् ॥ अश्लीलञ्चित्कृणुथा सुप्रतीकम् ॥ भद्रं गृहं कृणुथ भद्रवाचः ॥ बृहद्वो वय उच्यते सभासु ॥ प्रजावतीः सूयवसꣳ

रिशन्ती ॥ शुद्धा अपः सुप्रपाणे पिबन्तीः ॥ मावस्तेन ईशत माघश॑सः ॥ परि वो हेती रुद्रस्य वृञ्यात् ॥ उपेदमुपपर्चनम् ॥
आसु गोषूप पृच्यताम् ॥ उपर्षभस्य रेतसि ॥ उपेन्द्र तव वीर्ये ॥ ॥ ता सूर्याचन्द्रमसा विश्वभृत्तमामहत् ॥ तेजो वसुमद्राजतो
दिवि ॥ सामात्मानां चरतः सामचारिणा ॥ ययोर्व्रतं न ममे जातु देवयोः ॥ उभावन्तौ परियात अम्र्या ॥ दिवो न
रश्मी॑स्तनुतो व्यर्णवे ॥ उभा भुवन्ती भुवनाकविक्रतू ॥ सूर्या न चन्द्रा चरतो हतामती ॥ पतीद्युमद्विश्वविदा उभा दिवः ॥ सूर्या
उभा चन्द्रमसा विचक्षणा ॥ विश्ववारा वरिवो भावरेण्या ॥ ता नोऽवतं मतिमन्ता महिव्रता ॥ विश्ववपरी प्रतरणातरन्ता ॥
सुवर्विदा दृशये भूरि रश्मी ॥ सूर्या हि चन्द्रा वसुत्वेषदर्शता ॥ मनस्विना भानु चरतोऽनु सन्दिवम् ॥ अस्य श्रवो नद्यः सप्त
बिभ्रति ॥ द्यावाक्षामा पृथिवी दर्शतं वपुः ॥ अस्मे सूर्याचन्द्रमसाभिचक्षे ॥ श्रद्धेकमिन्द्र चरतो विचर्तुरम् ॥ पूर्वापरं चरतो
माययैतौ ॥ शिशू क्रीडन्तौ परियातो अध्वरम् ॥ विश्वान्यन्यो भुवनाभिचष्टे ॥ ऋतूनन्यो विदधज्जायते पुनः ॥ हिरण्यवर्णाः
शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ॥ अग्निं या गर्भं दधिरे विरूपास्ता न आपश्श॑स्योना भवन्तु ॥ यासा॑ राजा वरुणो
याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ॥ मधुश्चुतः शुचयो याः पावकास्ता न आपश्श॑स्योना भवन्तु ॥ यासां देवा दिवि
कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ॥ याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपश्श॑ स्योना भवन्तु ॥ शिवेनमा चक्षुषा पश्य-
तापः शिवया तनुवोप स्पृशत त्वचं मे ॥ सर्वा॑ अग्नी॑ रप्सुषदो हुवेवो मयि वर्चो बलमोजो निधत्त ॥ आपो भद्रा घृतमिदाप
आसुरग्नीषोमौ बिभ्रत्याप इत्ताः ॥ तीव्रो रसो मधुपृचामरङ्गम आमा प्राणेन सहवर्चसागन् ॥ आदित्पश्याम्युतवा शृणोम्यामा

घोषो गच्छति वाङ्न आसाम् ॥ मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥ नासदासीन्नो सदासीत्तदानीम् ॥ नासीद्रजो नो व्योमा परो यत् ॥ किमावरीवः कुह कस्य शर्मन् ॥ अम्भः किमासीद्गहनं गभीरम् ॥ न मृत्युरमृतं तर्हि न ॥ रात्रिया अह्न आसीत् प्रकेतः ॥ आनीदवात१ स्वधया तदेकम् ॥ तस्माद्धान्यं न परः किञ्च नास ॥ तम आसीत्तमसा गूढमग्रे प्रकेतम् ॥ सलिल१ सर्वमा इदम् ॥ तुच्छेनाभ्वपिहितं यदासीत् ॥ तमसस्तन्महिना जायतैकम् ॥ कामस्तदग्रे समवर्तताधि ॥ मनसो रेतः प्रथमं यदासीत् ॥ सतोबन्धुमसतिनिरविन्दन् ॥ हृदि प्रतीष्या कवयो मनीषा ॥ तिरश्चीनो विततो रश्मिरेषाम् ॥ अधस्विदासी ३ दुपरिस्विदासी ३ त् ॥ रेतोधा आसन्महिमान आसन् ॥ स्वधा अवस्तात्प्रयतिः परस्तात् ॥ को अद्धा वेद क इह प्रवोचत् ॥ कुत आजाता कुत इयं विसृष्टिः ॥ अर्वाग्देवा अस्य विसर्जनाय ॥ अथा को वेद यत आबभूव ॥ इयं विसृष्टिर्यत आबभूव ॥ यदि वा दधे यदि वा न ॥ यो अस्याध्यक्षः परमे व्योमन् ॥ सो अङ्ग वेद यदि वा न वेद ॥ कि१ स्विद्वनं क उस वृक्ष आसीत् ॥ यतो द्यावापृथिवी निष्टतक्षुः ॥ मनीषिणो मनसा पृच्छते दुतत् ॥ यदध्यतिष्ठद्भुवनानि धारयन् ॥ ब्रह्म वनं ब्रह्म सवृक्ष आसीत् ॥ यतो द्यावापृथिवी निष्टतक्षुः ॥ मनीषिणो मनसा विब्रवीमि वः ॥ ब्रह्माध्यतिष्ठद्भुवनानि धारयन् ॥ प्रातरग्निं प्रातरिन्द्र१ हवामहे ॥ प्रातर्मित्रावरुणा प्रातरश्विना ॥ प्रातर्भगं पूषणं ब्रह्मणस्पतिम् ॥ प्रातः सोममुत रुद्र१ हुवेम ॥ प्रातर्जितं भगमुग्र१ हुवेम ॥ वयं पुत्रमदितेर्यो विधर्ता ॥ आध्रश्चिद्यं मन्यमानस्तुरश्चित् ॥ राजाचिद्यं भगं भक्षीत्याह ॥ भग प्रणेतर्भग सत्यराधः ॥ भगेमां धियमुदवददन्नः ॥ भग प्रणो जनय गोभिरश्वैः ॥ भग प्रनृभिर्नृवन्तः स्याम ॥

उतेदानीं भगवन्तः स्याम ॥ उत प्रपित्व उत मध्ये अह्नाम् ॥ उतोदिता मघवन्त्सूर्यस्य ॥ वयं देवाना॑ँ सुमतौ स्याम ॥
भग एव भगवा॑ँ अस्तु देवाः ॥ तेन वयं भगवन्तः स्याम ॥ तं त्वा भग सर्व इज्जोहवीमि ॥ स नो भग पुर एता भवेह ॥
समध्वरायोषसो नमन्त ॥ दधिक्रावेव शुचये पदाय ॥ अर्वाचीनं वसुविदं भगं नः ॥ रथमिवाश्वा वाजिन आवहन्तु ॥
अश्वावतीर्गोमतीर्न उषासः ॥ वीरवतीः सदमुच्छन्तु भद्राः ॥ घृतन्दुहाना विश्वतः प्रपीनाः ॥ यूयं पात स्वस्तिभिः सदा नः ॥ ॥
अग्निर्नः पातु कृत्तिकाः ॥ नक्षत्रं देवमिन्द्रियम् ॥ इदमासां विचक्षणम् ॥ हविरासं जुहोतन ॥ यस्य भान्ति रश्मयो यस्य
केतवः ॥ यस्येमा विश्वा भुवनानि सर्वा ॥ स कृत्तिकाभिरभिसंवसानः ॥ अग्निर्नो देवः सुविते दधातु ॥ प्रजापते रोहिणी वेतु
पत्नी ॥ विश्वरूपा बृहती चित्रभानुः ॥ सा नो यज्ञस्य सुविते दधातु ॥ यथा जीवेम शरदः सवीराः ॥ रोहिणी देव्युदगात् पुरस्तात् ॥
विश्वा रूपाणि प्रतिमोदमाना ॥ प्रजापति॑ँ हविषा वर्धयन्ती ॥ प्रिया देवानामुपयातु यज्ञम् ॥ सोमो राजा मृगशीर्षेण आगन् ॥
शिवं नक्षत्रं प्रियमस्य धाम ॥ आप्यायमानो बहुधा जनेषु ॥ रेतः प्रजां यजमाने दधातु ॥ यत्ते नक्षत्रं मृगशीर्षमस्ति ॥ प्रिय॑ँ
राजन्प्रियतमं प्रियाणाम् ॥ तस्मै ते सोम हविषा विधेम ॥ शं न एधि द्विपदे शं चतुष्पदे ॥ आर्द्रया रुद्रः प्रथमान एति ॥ श्रेष्ठो देवानां
पतिरघ्नियानाम् ॥ नक्षत्रमस्य हविषा विधेम ॥ मा नः प्रजा॑ँ रीरिषन्मोत वीरान् ॥ हेती रुद्रस्य परिणो वृणक्तु ॥ आर्द्रानक्षत्रं
जुषता॑ँ हविर्नः ॥ प्रमुञ्चमानौ दुरितानि विश्वा ॥ अपाघश॑ँ सन्नुदतामरातिम् ॥ पुनर्नो देव्यदितिस्पृणोतु ॥ पुनर्वसू नः पुन-
रेतां यज्ञम् ॥ पुनर्नो देवा अभियन्तु सर्वे ॥ पुनः पुनर्वो हविषा यजामः ॥ एवा न देव्यदितिरनर्वा ॥ विश्वस्य भर्त्री

जगतः प्रतिष्ठा ॥ पुनर्वसू हविषा वर्धयन्ती ॥ प्रियं देवानामप्येतु पाथः ॥ बृहस्पतिः प्रथमं जायमानः ॥ तिष्यं नक्षत्रमभिसम्बभूव ॥ श्रेष्ठो देवानां पृतनासु जिष्णुः ॥ दिशो नु सर्वा अभयं नो अस्तु ॥ तिष्यः पुरस्तादुत मध्यतो नः ॥ बृहस्पतिर्नः परिपातु पश्चात् ॥ बाधेतां द्वेषो अभयं कृणुताम् ॥ सुवीर्यस्य पतयः स्याम ॥ इद ँ सर्पेभ्यो हविरस्तु जुष्टम् ॥ आश्रेषा येषामनुयन्ति चेतः ॥ ये अन्तरिक्षं पृथिवीं क्षियन्ति ॥ ते नः सर्पासो हवमागमिष्ठाः ॥ ये रोचने सूर्यस्यापि सर्पाः ॥ ये दिवं देवीमनुसञ्चरन्ति ॥ येषामाश्रेषा अनुयन्ति कामम् ॥ तेभ्यः सर्पेभ्यो मधुमज्जुहोमि ॥ उपहूताः पितरो ये मघासु ॥ मनोजवसः सुकृतः सुकृत्याः ॥ ते नो नक्षत्रे हवमागमिष्ठाः ॥ स्वधाभिर्यज्ञं प्रयतं जुषन्ताम् ॥ ये अग्निदग्धा येऽनग्निदग्धाः ॥ ये ऽमुं-लोकं पितरः क्षियन्ति ॥ या ँ श्च विद्म या ँ उच्न प्रविद्म ॥ मघासु यज्ञ ँ सुकृतं जुषन्ताम् ॥ गवां पतिः फल्गुनीनामसित्वम् ॥ तदर्यमन्वरुणमित्र चारु ॥ तं त्वा वय ँ सनितार ँ सनीनाम् ॥ जीवा जीवन्तमुपसंविशेम ॥ येनेमा विश्वा भुवनानि सञ्जिता ॥ यस्य देवा अनुसंयन्ति चेतः ॥ अर्यमा राजाजरस्तुविष्मान् ॥ फल्गुनीनामृषभो रोरवीति ॥ श्रेष्ठो देवानां भगवो भगासि ॥ तत्वा विदुः फल्गुनीस्तस्य वित्तात् ॥ अस्मभ्यं क्षत्रमजर ँ सुवीर्यम् ॥ गोमदश्ववदुपसन्नुदेह ॥ भगोह दाता भग इत्प्रदाता ॥ भगो देवीः फल्गुनीराविवेश ॥ भगस्येत्तं प्रसवङ्गमेम ॥ यत्र देवैः सधमादं मदेम ॥ आयातु देवः सवितोपयातु ॥ हिरण्ययेन सुवृता रथेन ॥ वहन्हस्त ँ सुभगं विद्मनापसम् ॥ प्रयच्छन्तं पपुरिं पुण्यमच्छ ॥ हस्तः प्रयच्छत्वमृतं वसीयः ॥ दक्षिणेन प्रतिगृभ्णीम

एनत् ॥ दातारमद्य सविता विदेय ॥ यो नो हस्ताय प्रसुवाति यज्ञम् ॥ त्वष्टा नक्षत्रमभ्येति चित्राम् ॥ सुभ ँ ससं युवति ँ रोचमानाम् ॥ निवेशयन्नमृतान्मर्त्या ँ श्च ॥ रूपाणि पि ँ शन्भुवनानि विश्वा ॥ तन्नस्त्वष्टा तदु चित्रा विचष्टाम् ॥ तन्नक्षत्रं भूरिदा अस्तु मह्यम् ॥ तन्नः प्रजां वीरवती ँ सनोतु ॥ गोभिर्नो अश्वैः समनक्तु यज्ञम् ॥ वायुर्नक्षत्रमभ्येति निष्ट्याम् ॥ तिग्मशृङ्गो वृषभो रोरुवाणः ॥ समीरयन्भुवना मातरिश्वा ॥ अप द्वेषा ँ सि नुदतामरातीः ॥ तन्नो वायुस्तदु निष्ट्या शृणोतु ॥ तन्नक्षत्रं भूरिदा अस्तु मह्यम् ॥ तन्नो देवासो अनुजानन्तु कामम् ॥ यथा तरेम दुरितानि विश्वा ॥ दूरमस्मच्छत्रवो यन्तु भीताः ॥ तदिन्द्राग्नी कृणुतां तद्विशाखे ॥ तन्नो देवा अनुमदन्तु यज्ञम् ॥ पश्चात्पुरस्तादभयं नो अस्तु ॥ नक्षत्राणामधिपत्नी विशाखे ॥ श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ ॥ विषूचः शत्रूनपबाधमानौ ॥ अप क्षुधं नुदतामरातिम् ॥ पूर्णा पश्चादुत पूर्णा पुरस्तात् ॥ उन्मध्यतः पौर्णमासी जिगाय ॥ तस्यां देवा अधि संवसन्तः ॥ उत्तमे नाक इह मादयन्ताम् ॥ पृथ्वी सुवर्चा युवतिः सजोषाः ॥ पौर्णमास्युदगाच्छोभमाना ॥ आप्याययन्ती दुरितानि विश्वा ॥ उरुन्दुहां यजमानाय यज्ञम् ॥ ॥ ऋध्या स्म हव्यैर्नमसोप सद्य ॥ मित्रं देवं मित्रधेयं नो अस्तु ॥ अनूराधान्हविषा वर्धयन्तः ॥ शतं जीवेम शरदः सवीराः ॥ चित्रं नक्षत्रमुदगात्पुरस्तात् ॥ अनूराधास इति यद्वदन्ति ॥ तन्मित्र एति पथिभिर्देवयानैः हिरण्ययै-र्विततैरन्तरिक्षे ॥ इन्द्रो ज्येष्ठामनु नक्षत्रमेति ॥ यस्मिन्वृत्रं वृत्रतूर्ये ततार ॥ तस्मिन्वयममृतं दुहानाः ॥ क्षुधं तरेम दुरितिं दुरिष्टिम् ॥ पुरन्दराय वृषभाय धृष्णवे ॥ अषाढाय सहमानाय मीढुषे ॥ इन्द्राय ज्येष्ठा मधुमद्दुहाना ॥ उरुं कृणोतु

यजमानाय लोकम् ॥ मूलं प्रजां वीरवतीं विदेय ॥ पराच्येतु निर्ऋतिः पराचा ॥ गोभिर्नक्षत्रं पशुभिः समक्तम् ॥ अहर्भूयाद्यजमानाय मह्यम् ॥ अहर्नो अद्य सुविते दधातु ॥ मूलं नक्षत्रमिति यद्वदन्ति ॥ पराचीं वाचा निर्ऋतिं नुदामि ॥ शिवं प्रजायै शिवमस्तु मह्यम् ॥ या दिव्या आपः पयसा सम्बभूवुः ॥ या अन्तरिक्ष उत पार्थिवीर्याः ॥ यासामषाढा अनुयन्ति कामम् ॥ ता न आपः शꣳ स्योना भवन्तु ॥ याश्च कूप्या याश्च नाद्याः समुद्रियाः ॥ याश्च वैशन्तीरुत प्रासचीर्याः ॥ यासामषाढा मधु भक्षयन्ति ॥ ता न आपः शꣳस्योना भवन्तु ॥ तन्नो विश्वे उपशृण्वन्तु देवाः ॥ तदषाढा अभिसंयन्तु यज्ञम् ॥ तन्नक्षत्रं प्रथतां पशुभ्यः ॥ कृषिर्वृष्टिर्यजमानाय कल्पताम् ॥ शुभ्राः कन्या युवतयः सुपेशसः ॥ कर्मकृतः सुकृतो वीर्यावतीः ॥ विश्वान्देवान्हविषा वर्धयन्तीः ॥ अषाढाः काममुपयान्तु यज्ञम् ॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुं च लोकमिदमूच सर्वम् ॥ तन्नो नक्षत्रमभिजिद्विजित्य ॥ श्रियं दधात्वहृणीयमानम् ॥ उभौ लोकौ ब्रह्मणा सञ्जितेमौ ॥ तन्नो नक्षत्रमभिजिद्विचष्टाम् ॥ तस्मिन्वयं पृतनाः सञ्जयेम ॥ तन्नो देवासो अनुजानन्तु कामम् ॥ शृण्वन्ति श्रोणाममृतस्य गोपाम् ॥ पुण्यामस्या उपशृणोमि वाचम् ॥ महीं देवीं विष्णुपत्नीमजूर्याम् ॥ प्रतीचीमेनाꣳ हविषा यजामः ॥ त्रेधा विष्णुरुरुगायो विचक्रमे ॥ महीं दिवं पृथिवीमन्तरिक्षम् ॥ तच्छ्रोणैति श्रव इच्छमाना ॥ पुण्यꣳ श्लोकं यजमानाय कृण्वती ॥ अष्टौ देवा वसवः सोम्यासः ॥ चतस्रो देवीरजराः श्रविष्ठाः ॥ ते यज्ञं पान्तु रजसः परस्तात् ॥ संवत्सरीणममृतꣳ स्वस्ति ॥ यज्ञं नः पान्तु वसवः पुरस्तात् ॥ दक्षिणतो भियन्तु श्रविष्ठाः ॥ पुण्यं नक्षत्रमभिसंविशाम ॥ मा नो अरातिरघशꣳसागन् ॥ क्षत्रस्य राजा वरुणोऽधिराजः ॥

नक्षत्राणाꣳ शतभिषग्वसिष्ठः ॥ तौ देवेभ्यः कृणुतो दीर्घमायुः ॥ शतꣳ सहस्रा भेषजा निधत्तः ॥ यज्ञं नो राजा वरुण उपयातु ॥ तन्नो विश्वे अभि संयन्तु देवाः ॥ तन्नो नक्षत्रꣳ शतभिषग्जुषाणम् ॥ दीर्घमायुः प्रतिरद्भेषजानि ॥ अज एकपादुदगात्पुरस्तात् ॥ विश्वा भूतानि प्रति मोदमानः ॥ तस्य देवाः प्रसवं यन्ति सर्वे ॥ प्रोष्ठपदासो अमृतस्य गोपाः ॥ विभ्राजमानः समिधा न उग्रः ॥ आन्तरिक्ष मरुहदगन्ध्याम् ॥ तꣳ सूर्यं देवमजमेकपादम् ॥ प्रोष्ठपदासो अनुयन्ति सर्वे ॥ अहिर्बुध्नियः प्रथमान एति ॥ श्रेष्ठो देवानामुत मानुषाणाम् ॥ तं ब्राह्मणाः सोमपाः सोम्यासः ॥ प्रोष्ठपदासो अभिरक्षन्ति सर्वे ॥ चत्वार एकमभिकर्मदेवाः ॥ प्रोष्ठपदास इति यान्वदन्ति ॥ ते बुध्नियं परिषद्यꣳ स्तुवन्तः ॥ अहिꣳ रक्षन्ति नमसोप सद्य ॥ पूषा रेवत्यन्वेति पन्थाम् ॥ पुष्टिपती पशुपावाजबस्त्यौ ॥ इमानि हव्या प्रयता जुषाणा ॥ सुगैर्नो यानैरुपयातां यज्ञम् ॥ क्षुद्रान्पशून्रक्षतु रेवती नः ॥ गावो नो अश्वाꣳ अन्वेतु पूषा ॥ अन्नꣳ रक्षन्तौ बहुधा विरूपम् ॥ वाजꣳ सनुतां यजमानाय यज्ञम् ॥ तदश्विनावश्व युजोपयाताम् ॥ शुभङ्गमिष्ठौ सुयमेभिरश्वैः ॥ स्वं नक्षत्रꣳ हविषा यजन्तौ ॥ मध्वा सम्पृक्तौ यजुषा समक्तौ ॥ यौ देवानां भिषजौ हव्यवाहौ ॥ विश्वस्य दूतावमृतस्य गोपौ ॥ तौ नक्षत्रं जुजुषाणोपयाताम् ॥ नमोऽश्विभ्यां कृणुमोऽश्वयुग्भ्याम् ॥ अप पाप्मानं भरणीर्भरन्तु ॥ तद्यमो राजा भगवान्विचष्टाम् ॥ लोकस्य राजा महतो महान्हि ॥ सुगं नः पन्थामभयं कृणोतु ॥ यस्मिन्नक्षत्रे यम एति राजा ॥ यस्मिन्नेनमभ्यषिञ्चन्त देवाः ॥ तदस्य चित्रꣳ हविषा यजाम ॥ अप पाप्मानं भरणीर्भरन्तु ॥ निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती ॥ सहस्रपोषꣳ सुभगा रराणा सा न आगन्वर्चसा संविदाना ॥ यत्ते देवा अदधुर्भागधे-

यममावास्ये संवसन्तो महित्वा॥ सा नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम्॥ ॥ नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे ॥ भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरति दीर्घमायुः॥ यमादित्या अꣳशुमाप्याययन्ति यमक्षित-मक्षितयः पिबन्ति॥ तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः॥ ये विरूपे समनसा संव्ययन्ती॥ समानं तन्तुं परितातनाते॥ विभू प्रभू अनुभू विश्वतो हुवे॥ ते नो नक्षत्रे हवमागमेतम्॥ वयं देवी ब्रह्मणा संविदानाः॥ सुरत्नासो देववीतिं दधानाः॥ अहोरात्रे हविषा वर्धयन्तः॥ अतिपाप्मानमतिमुक्त्यागमेम॥ प्रत्युवदृश्यायती॥ व्युच्छन्ती दुहिता दिवः॥ अपो मही वृणुते चक्षुषा॥ तमो ज्योतिष्कृणोति सूनरी॥ उदुस्रियाः सचते सूर्यः॥ स चा उद्यन्नक्षत्रमर्चिमत्॥ तवेदुषो व्युषि सूर्यस्य च॥ संभक्तेन गमेमहि॥ तन्नो नक्षत्रमर्चिमत्॥ भानुमत्तेज उच्चरत्॥ उप यज्ञमिहागमत्॥ प्रनक्षत्राय देवाय॥ इन्द्रायेन्दुꣳ हवामहे॥ स नः सविता सुवत्सनिम्॥ पुष्टिदां वीरवत्तमम्॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः॥ दृशे विश्वाय सूर्यम्॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः॥ आप्राद्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च॥ अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु॥ अदितिः पात्वꣳहसः॥ महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम॥ तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम्॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्॥ समूढमस्य पाꣳसुरे॥ प्र तद्विष्णुस्तवते वीर्याय॥ मृगो न भीमः कुचरो गिरिष्ठाः॥ यस्योरुषु त्रिषु विक्रमणेषु॥ अधिक्षियन्ति भुवनानि विश्वा॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्॥ अपाꣳ रेताꣳसि जिन्वति॥ भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः

सच॑से शि॒वाभिः॑ ॥ दि॒वि मू॒र्धानं॑ दधिषे सुव॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म् ॥ अनु॑ नो॒ऽद्यानु॑मतिर्य॒ज्ञं दे॒वेषु॑ मन्यताम् ॥ अ॒ग्निश्च॑ हव्य॒वाह॑नो॒ भव॑तां दा॒शुषे॒ मयः॑ ॥ अन्वि॒दनु॑मते॒ त्वं मन्या॑सै॒ शं च॑ नः कृधि ॥ क्रत्वे॒ दक्षा॑य नो हि॒नु प्रण॒ आयू॑ꣳषि तारिषः ॥ ह॒व्य॒वाह॑मभिमाति॒षाह॑म् ॥ र॒क्षो॒हणं॒ पृत॑नासु जि॒ष्णुम् ॥ ज्योति॑ष्मन्तं॒ दीद्य॑तं॒ पुर॑न्धिम् ॥ अ॒ग्निꣳ स्वि॑ष्ट॒कृत॒माहु॑वेम ॥ स्वि॑ष्टमग्ने अ॒भित॒त्पृ॑णाहि ॥ विश्वा॑देव॒ पृत॑ना अ॒भिष्य ॥ उ॒रुं नः॒ पन्थां॑ प्रदि॒शन्विभा॑हि ॥ ज्योति॑ष्मद्धेह्य॒जरं॑ न॒ आयुः॑ ॥ ॥ अ॒ग्नये॒ स्वाहा॑ कृत्ति॑काभ्यः॒ स्वाहा॑ ॥ अ॒म्बायै॒ स्वाहा॑ दु॒लायै॒ स्वाहा॑ ॥ नि॒तत्न्यै॒ स्वाहा॒ऽभ्रय॑न्त्यै॒ स्वाहा॑ ॥ मे॒घय॑न्त्यै॒ स्वाहा॑ व॒र्षय॑न्त्यै॒ स्वाहा॑ ॥ चु॒पुणी॑कायै॒ स्वाहा॑ ॥ प्र॒जाप॑तये॒ स्वाहा॑ रोहि॒ण्यै॑ स्वाहा॑ ॥ रोच॑मानायै॒ स्वाहा॑ प्र॒जाभ्यः॒ स्वाहा॑ ॥ सोमा॑य॒ स्वाहा॑ मृगशी॒र्षाय॒ स्वाहा॑ ॥ इ॒न्व॒काभ्यः॒ स्वाहौष॑धीभ्यः॒ स्वाहा॑ ॥ रा॒ज्याय॒ स्वाहा॑भि॒जित्यै॒ स्वाहा॑ ॥ रु॒द्राय॒ स्वाहा॒र्द्रायै॒ स्वाहा॑ ॥ पिन्व॑मानायै॒ स्वाहा॑ प॒शुभ्यः॒ स्वाहा॑ ॥ अदि॑त्यै॒ स्वाहा॑ पुन॒र्वसु॑भ्याम् ॥ स्वाहा॑ भूत्यै॒ स्वाहा॑ प्र॒जात्यै॒ स्वाहा॑ ॥ बृह॒स्पत॑ये॒ स्वाहा॑ ति॒ष्याय॒ स्वाहा॑ ॥ ब्र॒ह्म॒व॒र्च॒साय॒ स्वाहा॑ ॥ स॒र्पेभ्यः॒ स्वाहा॑श्रे॒षाभ्यः॒ स्वाहा॑ ॥ द॒न्द॒शू॒केभ्यः॒ स्वाहा॑ ॥ पि॒तृभ्यः॒ स्वाहा॑ म॒घाभ्यः॑ ॥ स्वाहा॑न॒घाभ्यः॒ स्वाहा॑ ग॒दाभ्यः॑ ॥ स्वाहा॑रुन्ध॒तीभ्यः॒ स्वाहा॑ ॥ अ॒र्य॒म्णे स्वाहा॑ फल्गु॑नीभ्याꣳ स्वाहा॑ ॥ प॒शुभ्यः॒ स्वाहा॑ ॥ भगा॑य॒ स्वाहा॑ फल्गु॑नीभ्याꣳ स्वाहा॑ ॥ श्रैष्ठ्या॑य॒ स्वाहा॑ ॥ स॒वि॒त्रे स्वाहा॑ ह॒स्ता॑य ॥ स्वाहा॑ ददते॒ स्वाहा॑ पृण॒ते ॥ स्वाहा॑ प्रयच्छ॒ते स्वाहा॑ प्रतिगृभ्ण॒ते स्वाहा॑ ॥ त्वष्ट्रे॒ स्वाहा॑ चि॒त्रायै॒ स्वाहा॑ ॥ चैत्रा॑य॒ स्वाहा॑ प्र॒जायै॒ स्वाहा॑ ॥ वा॒यवे॒ स्वाहा॑ निष्ट्या॑यै॒ स्वाहा॑ ॥ का॒म॒चा॒राय॒ स्वाहा॑भि॒जित्यै॒ स्वाहा॑ ॥ इ॒न्द्रा॒ग्निभ्याꣳ स्वाहा॑ वि॒शाखा॑भ्याꣳ स्वाहा॑ ॥ श्रैष्ठ्या॑य॒ स्वाहा॑भि॒जित्यै॒

स्वाहा ॥ पौर्णमास्यै स्वाहा कामाय स्वाहागत्यै स्वाहा ॥ मित्राय स्वाहानूराधेभ्यः स्वाहा ॥ मित्रधेयाय स्वाहाभिजित्यै स्वाहा ॥ इन्द्राय स्वाहा ज्येष्ठायै स्वाहा ॥ ज्यैष्ठ्याय स्वाहाभिजित्यै स्वाहा ॥ प्रजापतये स्वाहा मूलाय स्वाहा ॥ प्रजायै स्वाहा ॥ अद्भ्यः स्वाहाषाढाभ्यः स्वाहा ॥ समुद्राय स्वाहा कामाय स्वाहा ॥ अभिजित्यै स्वाहा ॥ विश्वेभ्यो देवेभ्यः स्वाहाषाढाभ्यः स्वाहा ॥ अनपजय्याय स्वाहाजित्यै स्वाहा ॥ ब्रह्मणे स्वाहाभिजिते स्वाहा ॥ ब्रह्मलोकाय स्वाहाभिजित्यै स्वाहा ॥ विष्णवे स्वाहा श्रोणायै स्वाहा ॥ श्लोकाय स्वाहा श्रुताय स्वाहा ॥ वसुभ्यः स्वाहा श्रविष्ठाभ्यः स्वाहा ॥ अग्र्याय स्वाहा परीत्यै स्वाहा ॥ वरुणाय स्वाहा शतभिषजे स्वाहा ॥ भेषजेभ्यः स्वाहा ॥ अजायैकपदे स्वाहा प्रोष्ठपदेभ्यः स्वाहा ॥ तेजसे स्वाहा ब्रह्मवर्चसाय स्वाहा ॥ अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यः स्वाहा ॥ प्रतिष्ठायै स्वाहा ॥ पूष्णे स्वाहा रेवत्यै स्वाहा ॥ पशुभ्यः स्वाहा ॥ अश्विभ्याँ स्वाहाश्वयुग्भ्याँ स्वाहा ॥ श्रोत्राय स्वाहा श्रुत्यै स्वाहा ॥ यमाय स्वाहापभरणीभ्यः स्वाहा ॥ राज्याय स्वाहाभिजित्यै स्वाहा ॥ अमावास्यायै स्वाहा कामाय स्वाहागत्यै स्वाहा ॥ चन्द्रमसे स्वाहा प्रतीदृश्यायै स्वाहा ॥ अहोरात्रेभ्यः स्वाहार्धमासेभ्यः स्वाहा ॥ मासेभ्यस्स्वाहर्तुभ्यः स्वाहा ॥ संवत्सराय स्वाहा ॥ अह्ने स्वाहा रात्रियै स्वाहा ॥ अतिमुक्त्यै स्वाहा ॥ उषसे स्वाहा व्युष्ट्यै स्वाहा ॥ व्यूषुष्यै स्वाहा व्युच्छन्त्यै स्वाहा ॥ व्युष्टायै स्वाहा ॥ नक्षत्राय स्वाहोदेष्यते स्वाहा ॥ उद्यते स्वाहोदिताय स्वाहा ॥ हरसे स्वाहा भरसे स्वाहा ॥ भ्राजसे स्वाहा तेजसे स्वाहा ॥ तपसे स्वाहा ब्रह्मवर्चसाय स्वाहा ॥ सूर्याय स्वाहा नक्षत्रेभ्यः स्वाहा ॥ प्रतिष्ठायै स्वाहा ॥ अदित्यै स्वाहा प्रतिष्ठायै स्वाहा ॥ विष्णवे स्वाहा यज्ञाय स्वाहा ॥

प्रतिष्ठायै स्वाहा ॥ ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ॥ सुरभिनो मुखाकरत्प्रण आयू॑ꣳषि तारिषत् ॥ आपो हि ष्ठा० चनः ॥ यच्चिद्धिते विशो यथा प्रदेव वरुण व्रतम् ॥ मिनीमसि द्यविद्यवि ॥ यत्किञ्चेदं वरुण दैव्ये जने ऽभिद्रोहं मनुष्या-श्चरामसि ॥ अचित्ती यत्तव धर्मा युयोपिममानस्तस्मादेनसो देव रीरिषः ॥ कितवासो यद्रि रिपुर्न दीवि यद्वाघा सत्यमुत यन्न विद्म ॥ सर्वाता विष्य शिथिरेव देवाथाते स्याम वरुण प्रियासः ॥ हिरण्यवर्णाश्शुचयः पावका० यासा ꣳ राजा० यासान्देवा० शिवेन० निधत्त ॥ पवमानस्सुवर्जनः० जातवेदा मोर्जयन्त्या पुनातु ॥ भूर्भुवः सुवः ॥ ॥ तच्छंयोरावृणीमहे ॥ गातुं यज्ञाय ॥ गातुं यज्ञपतये ॥ दैवी स्वस्तिरस्तु नः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वं जिगातु भेषजम् ॥ शं नो अस्तु द्विपदे ॥ शञ्चतुष्पदे ॥ ॥ यो ब्रह्म ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी ॥ ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन ॥ विभ्राजमानः सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात् ॥ स मृत्युपाशादपनुद्य घोरादिहायुषेणो घृतमत्तु देवः ॥ ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात्पुरुरूपं जयन्तम् ॥ सुवर्णरम्भग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन ॥ श्रियं लक्ष्मी-मौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः ॥ तां विद्यां ब्रह्मयोनि ꣳ सरूपामिहायुषे तर्पयामो घृतेन ॥ दाक्षायण्यः सर्वयोन्यस्सयोन्यः सहस्रशो विश्वरूपा विरूपाः ॥ ससूनवस्सपतयस्सयूथ्या आयुषेणो घृतमिदं जुषन्ताम् ॥ दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमथन्तु वीरान् ॥ तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः ॥ यमप्येति भुवन ꣳ साम्पराये स नो हविर्घृतमिहायुषेत्तु देवः ॥ वसून रुद्राना-

दित्यान्मरुतोऽथ साध्यानृभून्यक्षान्गन्धर्वांश्च पितृंश्च विश्वान् ॥ भृगून्त्सर्पाꣳश्चाङ्गिरसोऽथ सर्वान्घृतꣳ हुत्वा स्वायुष्या महयाम शश्वत् ॥ इति घृतसूक्तम् ॥ " नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि " इति त्रिः ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति ॥

ततः सर्वे प्रणवेन कुम्भमुत्थाप्य तत्रैव संस्थाप्य पुनर्यथोपपादमभ्यर्च्य यस्यैतत्कुर्वंति तं व्याहृतीभिः शान्त्युदकेन प्रोक्षेयुः ॥ अथ कृतस्योदकशान्तिकर्मणः साङ्गतासिध्यर्थमृत्विग्भ्यो दक्षिणां दद्यात् ॥ पुरस्तादुपविष्टाय हिरण्यं, दक्षिणतो रजतं, पश्चात्कांस्यं, उत्तरतो वास इति प्रत्यक्षं तन्निष्क्रयं वा दद्यात् ॥ देवतामुद्वास्य कलशमाचार्याय दत्वा अनेनोदकशान्तिकर्मणा श्रीपरमेश्वरः प्रीयतामिति कर्मेश्वरार्पणं कुर्यात् ॥ ॥ एवमेव शान्त्युदकं कृत्वा ग्रहगृहीतानां ज्वरगृहीतानां भूतोपसृष्टानां मित्रसुहृज्ज्ञातिसखिसम्बन्धिबान्धवानां राज्ञां राजपुरोहितानाञ्च बालवृद्धान्तर्वत्नीपापरोगिदीर्घरोगिकृशातुरान्प्रोक्षति ॥ हस्त्यश्वोष्ट्रगोमहिष्यजाविकभृत्यांश्च धनधान्यानि च प्रोक्षति ॥ एवमेकरात्रं त्रिरात्रं पञ्चरात्रं सप्तरात्रं नवरात्रमित्यपपुनर्मृत्युञ्जयतीत्याह भगवान् बोधायनः ॥ ॥

## ॥ अथप्रतिसरबन्धविधिः ॥

(बो. गृ. शे. सू. १·१५·१–२) " अथातः प्रतिसरबन्धं व्याख्यास्यामः ॥ यस्मिन् दिने नान्दीमुखं कुर्यात्तस्यां राज्यां प्रदोषान्ते प्रतिसरमारभेत "। उदकुम्भमन्वारभ्य सावित्रीं जपति " तत्सवितुर्वरेण्यम् " इत्येतां पच्छोऽर्धर्चशोऽनवानमुक्त्वा वेदादीन्जपति।

राक्षोघ्नं " कृणुष्व पाजः" इत्येतमनुवाकं " अग्ने यशस्विन् " इति चतस्र आप्यं " हिरण्यवर्णाः शुचयः पावकाः " इत्येतमनुवाकं " पवमानः सुवर्जनः " इत्येतमनुवाकम्। वरुणसूक्तं " उदुत्तमं वरुणपाशम् " इति षडृचं, रुद्रसूक्तं " परि णो रुद्रस्य हेतिः " इति षडृचं, ब्रह्मसूक्तं " ब्रह्म जज्ञानम् " इति षडृचं, विष्णुसूक्तं " विष्णोर्नुकम् " इति षडृचं, पञ्च दुर्गाः " जातवेदसे " इति, श्रीसूक्तं " हिरण्यवर्णां हरिणीम् " इति पञ्चदशर्चं, " नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह " इति ब्राह्मणम्। प्रणवेनोत्थाप्य व्याहृतीभिः सुरभिमत्याब्लिङ्गाभिः प्रोक्ष्य प्रतिसरसूत्रमादाय वासुकिं ध्यात्वा त्र्यम्बकेन त्रिरुर्ध्वं भस्मना सम्मृज्य " अग्निरायुष्मान् " इति पञ्चभिः तस्य दक्षिणहस्तं गृहीत्वा " बृहत्साम " इति बध्वा स्त्रीणां वामहस्तं, भस्मना घृतसूक्तेन " यो ब्रह्म ब्रह्मणः " इत्यर्धर्चेन रक्षां कुर्यात्॥ ( बो. गृ. शे. सू. ५. २. १४ ) " आधाने सोमयागे च दम्पत्योरुभयोरपि। सीमन्ते पुंसवे गर्भे स्त्रिया एव तु कौतुकम्॥"

अथ प्रतिसरबन्धप्रयोगः--पूर्वेद्युर्नान्दीश्राद्धं कृत्वा तस्यां रात्रौ प्रदोषान्ते आचमनप्राणायामादिदेशकालौ सङ्कीर्त्यामुकक-र्माङ्गतया विहितं रक्षार्थं प्रतिसरबन्धं करिष्ये इति सङ्कल्प्य ब्राह्मणवरणाद्युदकशान्तिवद्ब्रह्मकुम्भं संस्थाप्य व्याहृतीभिः शुद्धोदकैः पूरयित्वा अर्चनान्तं कृत्वा परिस्तीर्य दूर्वाक्षतफलैरवकीर्य दूर्वादर्भैः प्रतिच्छाद्य उत्तरतश्शालीतण्डुलपूर्णे कांस्यपात्रे प्रतिसरसूत्रं[1] गन्धानुलिप्तं भस्मना सहितं निदधाति। ततो ब्राह्मणाः कुम्भमन्वारभ्य जपन्ति--प्रणवं, व्याहृतीः, सावित्रीं पच्छोऽर्धर्चशोऽनवानमुक्त्वा। " अ॒ग्निमी॑ळे पु॒रोहि॑तम् ० इ॒षे त्वो॒र्जे त्वा॑ ० अग्न॒ आया॑हि ० शंनो॑ दे॒वीः ० " इति वेदादीन्॥ " कृणु॒ष्व पाज॒ः ० रक्ष॑से॒ हन्त॒वा उ॑॥ मदे॑चिदस्य प्र॒रुजन्ति॒ भामा॒ नद॑रन्ते परि॒बाधो॒ अदे॑वीः " इति राक्षोघ्नमनुवाकम्॥ " अग्ने॑

[1] " शालेयतण्डुलान् कंसे स्थापयेत्सकलाञ्छुभान्॥ नवतन्तुमयं सूत्रं गन्धाढ्यं तत्र निक्षिपेत् " इति कल्पसारे॥

यशस्विन् ” इति चतस्रः ॥ “ हिरण्यवर्णाः शुचयः ० निधत्त ॥ यददः संप्रयतीरहावनदता हते ॥ तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः ॥ यत्प्रेषिता वरुणेन ताः शीभꣳ समवल्गत ॥ तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थन ॥ अपकामꣳ स्यन्दमाना अवीवरत वो हिकम् ॥ इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हितम् ॥ एको देवो अप्यतिष्ठत्स्यन्दमाना यथा-वशम् ॥ उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥ आपो भद्रा घृतमिदाप आसुरग्नीषोमौ बिभ्रत्याप इत्ताः ॥ तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसा गन् ॥ आदित्पश्याम्युतवा शृणोम्या मा घोषो गच्छति वाङ्न आसाम् ॥ मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥ आपो हि ष्ठा ० चनः ॥ दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या सम्भव ब्रह्म-वर्चसमसि ब्रह्मवर्चसाय त्वा ” इत्येतमनुवाकम् ॥ “ पवमानस्सुवर्जनः ” इत्येतमनुवाकम् ॥ “ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳ श्रथाय ॥ अथा वयमादित्यव्रते तवानागसो अदितये स्याम ॥ अस्तभ्नाद्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥ यत्किञ्चेदं० रीरिषः ॥ कितवासो ० प्रियासः ॥ अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ॥ क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि ॥ तत्वा यामि० प्रमोषीः ” इति षड्टचं वरुणसूक्तम् ॥ परिणो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मति-रघायोः ॥ अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ॥ मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥ मीढुष्टम शिवतम शिवो नस्सुमना भव ॥ परमे वृक्ष आयुधं निधाय

कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥ अर्हन्बिभर्षि सायकानि धन्व ॥ अर्हन्निष्कं यजतं विश्वरूपम् ॥ अर्हन्निदं दयसे विश्वमब्भुवम् ॥ नवा ओजीयो रुद्र त्वदस्ति ॥ त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳ शर्धो मारुतं पृक्ष ईशिषे ॥ त्वं वातैररुणैर्यासि शं गयस्त्वं पूषा विधतः पासि नुत्मना ॥ आवो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः ॥ अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् " इति षड्टचं रुद्रसूक्तम् ॥ " ब्रह्म जज्ञानं ० पिता विराजां ० ब्रह्म देवान् ० अन्तरस्मिन्० ब्रह्म देवाः० चतस्र आशाः० " इति षड्टचं ब्रह्मसूक्तम् ॥ " विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ तदस्य प्रियमभिपाथो अश्याम् ॥ नरो यत्र देवयवो मदन्ति ॥ उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ प्रतद्विष्णुस्तवते वीर्याय ॥ मृगो न भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्रमणेषु ॥ अधिक्षियन्ति भुवनानि विश्वा ॥ परो मात्रया तनुवा वृधान ॥ न ते महित्वमन्वश्नुवन्ति ॥ उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वम् ॥ परमस्य वित्से ॥ विचक्रमे पृथिवीमेष एताम् ॥ क्षेत्राय विष्णुर्मनुषे दशस्यन् ॥ ध्रुवासो अस्य कीरयो जनासः ॥ उरुक्षितिꣳ सुजनिमा चकार ॥ त्रिर्देवः पृथिवीमेष एताम् ॥ विचक्रमे शतर्चसं महित्वा ॥ प्रविष्णुरस्तु तवसस्तवीयान् ॥ त्वेषꣳ ह्यस्य स्थविरस्य नाम " इति षड्टचं विष्णुसूक्तम् ॥ " जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ॥ स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुन्दुरितात्यग्निः ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ॥ दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरसितरसे नमः ॥ अग्ने त्वं पारयानव्यो अस्मान् स्वस्तिभिरति दुर्गाणि विश्वा ॥ पूश्च पृथ्वी बहुला

न उर्वी भवा तोकाय तनयाय शंयोः ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि ॥ अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ पृतनाजित ँ सहमानमुग्रमग्नि ँ हुवेम परमात्सधस्थात् ॥ स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरितात्यग्निः " इति पञ्चर्चं दुर्गासूक्तम् ॥ " हिरण्यवर्णा ँ हरिणी ँ सुवर्णरजतस्रजाम् ॥ चन्द्रा ँ हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्या ँ हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ अश्वपूर्वा ँ रथमध्या ँ हस्तिनादप्रबोधिनीम् ॥ श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ का ँ सोस्मिता ँ हिरण्य-माकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ॥ पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ चन्द्रां प्रभासां यशसा ज्वलन्ती ँ श्रियं लोके देवजुष्टामुदाराम् ॥ तां पद्मनीमी ँ शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ॥ तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह ॥ प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ॥ अभूतिमसमृद्धिञ्च सर्वां निर्णुद मे गृहात् ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरी ँ सर्वभूतानां तामिहोपह्वये श्रियम् ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि ॥ पशूना ँ रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ कर्दमेन प्रजा भूता मयिसम्भव कर्दम ॥ श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ आपः स्रजन्तु स्निग्धानि चिक्लीतवस मे गृहे ॥ नि च देवीं मातर ँ श्रियं वासय मे कुले ॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ॥ चन्द्रा ँ हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ आर्द्रा

यष्करिणीं यष्टिं सुवर्णां॑ हेममालिनीम् ॥ सूर्यां॑ हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां॑ हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् " इति पञ्चदशर्चं श्रीसूक्तम् ॥ "नमो ब्रह्मणे ० बृहते करोमि " इति परिधानीयां त्रिः ॥ ॥ इत्येवञ्जापित्वा पुनस्संपूज्य प्रणवेन कुम्भमुत्थाप्य कुम्भोदकेन तत्सूत्रं संस्कार्यञ्च व्याहृतीभिः " दधिक्राव्णः " इत्यृचा " आपो हि ष्ठा " इति तिसृभिः " देवस्य त्वा सवितुः प्रसवे ॥ अश्विनोर्बाहुभ्याम् ॥ पूष्णो हस्ताभ्याम् ॥ अश्विनोर्भैषज्येन ॥ तेजसे ब्रह्मवर्चसायाभिषिञ्चामि ॥ देवस्य त्वा० हस्ताभ्याम् ॥ सरस्वत्यै भैषज्येन ॥ वीर्यायान्नाद्यायाभिषिञ्चामि ॥ देवस्य त्वा० हस्ताभ्याम् ॥ इन्द्रस्येन्द्रियेण ॥ श्रियै यशसे बलायाभिषिञ्चामि " इति त्रिभिः पर्यायैश्च प्रोक्ष्य प्रतिसरसूत्रमादाय वासुकिं ध्यात्वा " त्र्यंबकं यजामहे सुगन्धिम्पुष्टिवर्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् " इति मन्त्रेण त्रिरूर्ध्वं भस्मना संमृज्य " अग्निरायुष्मान् " इति पञ्चभिः संस्कार्यस्य दक्षिणहस्तं गृहीत्वाथैतेन सूत्रेण " बृहत्साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् ॥ इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष " इति बध्नीयात् ॥ स्त्रीणाञ्चेद्वामहस्तम्, तत्र " आयुष्मतीं करोमि " इत्यूहो विशेषः ॥ ततो भस्मना घृतसूक्तेन " यो ब्रह्म ब्रह्मणः " इत्यष्टर्चेन रक्षां कुर्यात् ॥ ऋत्विग्भ्यो दक्षिणामुदकशान्तिवत्प्रतिपाद्य देवतामुद्वास्य कलशमाचार्याय दत्वा कर्मेश्वरार्पणं कुर्यात् ॥ ॥ इति प्रतिसरबन्धप्रयोगः ॥

१. " व्याहृतीभिर्दधिक्राद्यैश्चतुर्भिर्मन्त्रसंज्ञकैः ॥ महाशान्त्याख्यकैश्चैव महाभैषज्यमन्त्रकैः " इति गृ० संग्रहे ॥

२. " आयुष्मतीमिनी ह्याहुरूहमूहविदः स्त्रियः " इति कल्पसारे ॥

# ॥ पुण्याहवाचनम् ॥



(बो. गृ. प. सू. १. ३. ४-५) "ब्राह्मणो वा अष्टाविंशो नक्षत्राणां तत्तस्य वचः पुण्यम् । इति ॥ तावुभौ ब्रह्मण्यौ ब्रह्मवित्तमौ ब्राह्मणानां प्रतिष्ठातारौ ब्राह्मणेषु प्रतिष्ठितौ । य एवं विद्वान् ब्राह्मणपुरस्कृतानि कर्माणि करोति यज्ञस्य समृध्या इति "॥ —

अपरेद्युर्ब्राह्मणानन्नेन परिविष्येदिति दैवतं भवति । यद्दैवत्यं भवति तस्य पुण्याहं वाचयिष्यन्नाम गृह्णात्यसौ प्रीयतामिति ॥ पुण्याहं वाचयिष्यन् ब्राह्मणान्संपूजयति । अरिक्तपाणयः प्राङ्मुखा युग्मास्तिष्ठन्ति । तेषां दक्षिणत उदङ्मुखोऽपिहितकुंभं धारयन् वाचयिता तिष्ठति । तस्य दक्षिणं बाहुमन्वितरास्तिष्ठति । अथैनान्संपूजयति—" मनः समाधीयताम् " इति ॥ " समाहितमनसः स्मः " इतीतरेषां प्रतिवचनम् । मनो वै चन्द्रमा ब्राह्मणा नक्षत्राणि तस्माद् ब्राह्मणेषु मनः समादधाति । य एवं विद्वान्पुण्याहं वाचयति नास्य कर्मोपहतं भवति । सर्वत्रालंकृत्य ये तत्र ब्राह्मणाः सन्तिताननुज्ञाप्य कुर्वीत यत्कारी स्यात् समृद्धमेवास्य तत् ।

(बो. गृ. शे. सू. १. १०. २) "शुचौ समे देशे दर्भान्दूर्वान्धारयमाणाः चत्वारो ब्राह्मणा अरिक्तहस्ताः प्राङ्मुखा युग्मास्तिष्ठन्ति " ॥ अक्षतशब्देन व्रीहिमिश्रास्तंडुला उच्यंते । पूर्णकुंभमभ्यर्च्य ॥ (बो. गृ. प. सू. १. ५. १-२) " अथ शुचौ समे देशे इति कथं विज्ञायते । गोमयेन गोचर्ममात्रं चतुरश्रं स्थंडिलमुपलिप्तं भवति तच्छुचिर्भवति " ॥

(बो. गृ. शे. सू. १. ९) " पुण्याहदेवता व्याख्यास्यामः । विवाहस्याग्निः प्रीयतामौपासनस्याग्निसूर्यप्रजापतयः प्रीयन्तां पञ्चमेऽहन्युदुंबरो दशमेऽहन्यंते चित्र्याणि स्थालीपाकस्याग्निर्गर्भाधानस्य ब्रह्मा पुंसवनस्य प्रजापतिः सीमन्तस्य धाता विष्णुबलेः सविता जातकर्मणो मृत्युर्नामकरणस्य सविता तस्यान्ते प्रजापतिरुपनिष्क्रमणस्य सविता तस्यान्ते चित्र्याण्यन्नप्राशनस्य सविता

चौळस्य केशिनस्तस्यांते प्रजापतिरुपनयनस्येंद्रः श्रद्धामेधे इत्यंते विसर्गे सुश्रवाः पुनरुपनयनस्याग्निरथ यदि ब्रह्मचार्यव्रत्यमिव चरेत्तस्मिन्नध्यायहोमे सविता समावर्तनस्य श्रीरिन्द्रो वा शूलगवस्येशानः प्रत्यवरोहणस्य सविता उपाकर्मव्रतेषु च सविता वास्तुहोमस्य वास्तोष्पतिरंते प्रजापतिरद्भुतहोमस्येंद्रोऽते प्राजापतिरायुष्यहोमस्याग्निरायुष्मान् नक्षत्रहोमस्य न-क्षत्रेष्टिसूक्तमष्टमीप्रदोषस्येशान आग्रायणहोमस्याग्रायणदेवताः सर्पबलेः सर्पा अथैकोद्दिष्टस्यांते प्रजापतिस्तटाकादीनां वरुणो देवता यक्षिबलेर्यक्षी ग्रहशान्तिहोमस्यादित्यादिनवग्रहा गर्भाधानादितन्त्रहोमस्य ब्रह्मादयः प्रीयन्तामित्येवमन्येषां होमानां याज्यापुरोनुवाक्ययोर्देवता तस्यासौ प्रीयतामिति । सूतकान्ते प्रेतकान्ते प्रथमोदक्यान्ते च प्रजापतिः कूष्माण्डहोमस्याग्न्या-दयश्चान्द्रायणहोमस्याग्न्यादय अग्न्याधेयेऽग्नीषोमेंद्रा एवमनादिष्टकर्मसु प्रजापतिः" इति ॥ पुण्याहनिमित्तानि प्रयोगपा-रिजाते- "गर्भाधानादिसंस्कारेष्विष्टापूर्ते क्रतुष्वपि । वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम्" इति ॥ आश्वलायन-गृह्यपरिशिष्टेऽपि- "अथ स्वस्तिवाचनमृद्धिपूर्तेषु" "ऋद्धिर्विवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्ते" इति ॥ एतेन गर्भाधानादिसंस्कारेषु प्रतिष्ठोद्यापनादिपूर्तेषु अग्न्याधेयादिक्रतुष्वपि विहितनान्दीकेषु पूर्वेद्युर्नान्दीश्राद्धादिकं कृत्वा अपरेद्युः पुण्याहं वाचयेदिति विज्ञायते ॥ सद्योनान्दीकरणपक्षे सद्य एव नान्दीसमाराधनादिप्रतिसरबन्धनान्तं कृत्वा पुण्याहं वाच-येदित्यर्थादवसीयते ॥

कलशस्थापनक्रमः कल्पसारे- "उपलिप्ते शुचौ देशे मण्डले चतुरश्रके । धारया सहितं कुम्भं निदध्यात्तो-यपूरितम् । गंधपुष्पाक्षतफलैरर्चयित्वा सकूर्चकम् । अरिक्तकं सपात्रेण पिदध्यात्तं घटं ततः" इति ॥ प्रयोगपारिजाते- "गोमयेनोपलिप्योर्वीं रङ्गवल्लिकयार्चयेत् । प्रस्थधान्योपरिस्थाप्यं पूर्णं हि कलशद्वयम्" इति ॥ संस्काररत्नमालायां--

"शुभे कर्मणि पुण्याहवाचने कलशद्वयम् । स्थापयेदशुभे त्वेकामिति यज्ञविदो विदुः ॥ दक्षिणस्थः स्थिरश्चैव उत्तरस्थश्चरो भवेत्" इति ॥ प्रस्थादिपरिमाणमपि तत्रैव संगृह्योक्तम् — "पलश्च कुडवः प्रस्थ आढको द्रोण एव च । धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः । पलद्वयं तु प्रसृतं मुष्टिरेकं पलं स्मृतम्" इति ॥ कलशधातवः पञ्चरत्नानि पञ्चपल्लवाश्च तत्रैवोक्ताः– "हैमराजतताम्रा वा मृन्मया लक्षणान्विताः" इति धातवः ॥ "सुवर्णं रजतं मुक्ता माणिक्यञ्च प्रवालकम् । पञ्चरत्नमिति ख्यातं समस्तसुरवल्लभम् । अभावे सर्वरत्नानां हेम सर्वत्र योजयेत्" इति रत्नानि ॥ "न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः । पल्लवाः पञ्च विज्ञेयास्त्वक्चैतेषां विधीयते" इति पल्लवाः ॥ पुण्याहमण्डलं कर्मरत्ने– "अष्टाविंशतिरेखाभिः संयुतं पुण्यमण्डलम् । हस्तादितारकारूपं हस्तमात्रं लिखेद्बुधः । तिस्रस्तिस्रस्तु रेखा शशिवृषवदना दिक्षु पूर्वादिकेषु प्रालिख्यान्तश्चतस्रो वृषशशिशिखिमाहेश्वराग्राद्रिरेखाः । वह्नीशाग्राश्चतस्रोऽप्यनलमुखविदिक्षूल्लिखेद् द्वंद्वरेखास्तद्बाह्योष्ठासु दिक्षु त्रिदळमपिलिखेत्पुण्यबिम्बं विशुद्धम्" इति ॥

अथ पुण्याहवाचनप्रयोगः ॥ कर्ता कृतस्नानादिचतुष्टयः स्वलंकृतो दर्भपाणिर्गोमयेनोपलिप्ते रङ्गवल्लियुते शुचौ देशे पूर्वोक्तप्रकारेण पुण्याहमण्डलं विलिख्य प्रस्थपरिमितधान्यपुञ्जयोरुपरि दक्षिणोत्तरयोः सौवर्णराजतताम्रमृण्मयाद्यन्यतमं कलशद्वयमव्रणं मनोहरं सुशुद्धपुण्यजलपूरितं सपल्लवं निधाय सूत्रवेष्टितोत्तरकलशे पञ्च रत्नानि निक्षिप्य तदुपरि सिततण्डुलपूरितं सफलं सकूर्चं पात्रं निधाय तत्पश्चिमभागे प्रशस्तान् प्रतिवचनसमर्थाञ्छुचीन् सोत्तरीयान् दूर्वादर्भपाणीनरिक्तहस्तांश्चतुरवरान् युग्मान्ब्राह्मणान्प्राङ्मुखानुपवेश्य सोत्तरच्छदं भद्रासने स्वयं प्राङ्मुख उपविश्य पत्नीं संस्कार्यं च स्वदक्षिणतस्तथैवोपवेश्य द्विराचम्य प्राणानायम्य यथाचारमिष्टदेवतादिनमस्कारपूर्वकं सुमुखश्चेत्यादि पठित्वा देशकालौ सङ्कीर्त्य "अमुककर्मा-

ङ्गतया विहितं शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृद्ध्यर्थमभ्युदयार्थं च एभिर्ब्राह्मणैस्सह स्वस्तिपुण्याहवाचनं करिष्ये " इति सङ्कल्प्य निर्विघ्नतासिध्यर्थं गणपतिं सम्पूज्य अथ भूमिं स्पृशेत् " मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ॥ पिपृतां नो भरीमभिः " इति॥ " ओषधयः संवदन्ते सोमेन सह राज्ञा ॥ यस्मै करोति ब्राह्मणस्त ँ राजन्पारयामसि " इति तण्डुलान् ॥ " आजिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः सामा सहस्र आभज प्रजया पशुभिस्सह पुनर्मा विशताद्रयिः " इति कलशम् ॥ " इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोम ँ सचता परुष्णिया ॥ असिक्निया मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया " इति जलम् ॥ " गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरी ँ सर्वभूतानां तामिहोपह्वये श्रियम् " इति गन्धं कलशयोर्निक्षिपेत् ॥ " काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि ॥ एवानो दूर्वे प्रतनु सहस्रेण शतेन च " इति दूर्वाः ॥ " अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता ॥ गोभाज इत्किलासथ यत्सनवथ पूरुषम् " इति पल्लवान् ॥ " स्योना पृथिवि भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म सप्रथाः " इति मृदम् ॥ " याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व ँ हसः " इति फलम् ॥ " बृहस्पते जुषस्व नो हव्यानि विश्वदेव्या ॥ रास्व रत्नानि दाशुषे " इति रत्नानि ॥ " अग्ने रेतश्चन्द्र ँ हिरण्यम् ॥ अद्भ्यः सम्भूतममृतं प्रजासु ॥ तत्सम्भरन्नुत्तरतो निधाय ॥ अतिप्रयच्छन्दुरितिन्तरेयम् " इति हिरण्यम् ॥ " युवासुवासाः परिवीत आगात् ॥ स उ श्रेयान्भवति जायमानः ॥ तं धीरासः कवय उन्नयन्ति ॥ स्वाधियो मनसा देवयन्तः " इति वस्त्रम् ॥ " पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥

---

१ अत्र " मही द्यौः " इत्यादि मंत्रयोजनपद्धतिः प्रयोगशिखामणेः संगृहीता।

वलेव विक्रीणावहा इषमूर्ज॑ᳪ शतक्रतो" इति तण्डुलपूर्णपात्रम् ॥ अथ "तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशᳪसमा न आयुः प्रमोषीः" इति मंत्रेण व्याहृतीभिर्वरुणमावाह्य षोडशोपचारैरभ्यर्च्य कलशं स्पृष्ट्वा देवता भावयेत् – कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदस्सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहितास्सर्वे कलशन्तु समाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु मम देहस्य दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इति ॥ अथ "मातृदेवो भव ॥ पितृदेवो भव ॥ आचार्यदेवो भव ॥ अतिथिदेवो भव" इत्याशिषः प्रार्थयित्वा ब्राह्मणाननुज्ञापयाति "यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाश्शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये" इति ॥ ते प्रणवपूर्वकं "वाच्यताम्" इति प्रतिब्रूयुः ॥ तेषां सपवित्रेषु पाणिषु जलं ददाति 'ओमापः' इति ॥ "शिवा आपः सन्तु" इति ते प्रत्यूचुः ॥ ततो 'गन्धाः' इति गन्धान्ददाति ॥ "सुगन्धाः पान्तु" इति प्रतिगृह्णन्ति ॥ 'सुमनसः' इति पुष्पं ददाति ॥ "सौमनस्यमस्तु" इति प्रतिगृह्णन्ति ॥ 'अक्षतम्'[1] इत्यक्षतं ददाति ॥ "अक्षतञ्चारिष्टञ्चास्तु" इति प्रतिगृह्णन्ति (ब्राह्मणा अभुक्ताश्चेत् 'ओमन्वाहार्यः' इत्योदनं ददाति ॥ "स्वन्वाहार्योऽस्तु" इति प्रतिगृह्णन्ति)॥ तेभ्यो 'दक्षिणाः' इति दक्षिणां ददाति ॥ "स्वस्ति दक्षिणाः पान्तु बहुदेयञ्चास्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्तु" इति प्रत्यूचुः ॥ ततो वाचयिता दक्षिणं जानु भूमौ निधाय सव्यमुत्थाप्योदङ्मुखः 'इडा देवहूः' इति

---

१. "अक्षतशब्देन व्रीहिमिश्रास्तण्डुला उच्यन्ते" इति सूत्रे ॥

जपित्वोत्तरकलशमादायोत्तिष्ठन्नाह ' मनस्समाधीयताम् ' इति ॥ " समाहितमनसः स्मः " इति ते प्रत्याहुः ॥ ' प्रसीदन्तु भवन्तः ' इति वाचयिता ॥ " प्रसन्नाः स्मः " इति ते प्रत्यूचुः ॥ अथ पात्रान्तरे कलशोदकं निनयन्नाह " शान्तिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु, वृद्धिरस्तु, अविघ्नमस्तु, आयुष्यमस्तु, आरोग्यमस्तु, शिवं कर्मास्तु, कर्मसमृद्धिरस्तु, धर्मसमृद्धिरस्तु, वेदसमृद्धिरस्तु, शास्त्रसमृद्धिरस्तु, धनधान्यसमृद्धिरस्तु, पुत्रसमृद्धिरस्तु, इष्टसम्पदस्तु " इति । एवमेवेतरे प्रत्याहुः ॥ यद्दैवत्यं भवति तस्य नाम गृह्णाति ' असौ प्रीयताम् ' इति ॥ ' प्रीयतामसौ ' इतीतरे प्रत्याहुः ॥ " उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ॥ वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमावद विश्वतो नः शकुने पुण्यमावद ॥ यज्ञं नः पान्तु वसवः पुरस्तात् ॥ दक्षिणतोभियन्तु श्रविष्ठाः ॥ पुण्यं नक्षत्रमभिसंविशाम ॥ मा नो अरातिरघश ँ सागन् " ॥ मह्यं सह[1]कुटुम्बिने महाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणाय अस्य करिष्यमाणामुककर्मणः ' ॐ पुण्याहं भवन्तो ब्रुवन्तु ' ॥ ' ॐ पुण्याहं ' इति प्रत्याहुः । एवमेव त्रि[2]: ॥ " स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्तिनो बृहस्पतिर्दधातु ॥ अष्टौ देवा वसवः सोम्यासः ॥ चतस्रो देवीरजराः श्रविष्ठाः ॥ ते यज्ञं पान्तु रजसः परस्तात् ॥ संवत्सरीणममृत ँ स्वस्ति " ॥ मह्यं सहकुटुम्बिने० अस्मै करिष्यमाणामुककर्मणे ' ॐ स्वस्ति भवन्तो ब्रुवन्तु ' ॥ ' ॐ स्वस्ति ' इति प्रत्यूचुः । एवं त्रिः ॥ " ऋध्या स्म हव्यैर्नमसोपसद्य ॥ मित्रं देवं मित्रधेयं नो अस्तु ॥ अनूराधान्हविषा वर्धयन्तः ॥ शतं जीवेम शरदः सवीराः ॥ चित्रं नक्षत्रमुदगात्पुरस्तात् ॥ अनूराधास इति यद्वदन्ति ॥ तन्मित्र एति पथिभिर्देवयानैः ॥

---

१. अत्र सहशब्दः प्रशस्तवचनः इति संस्कारकौस्तुभे ॥ २. " पुण्याहादित्रयं त्रिस्तु ब्रूयुरुच्चोत्तरोत्तरम् " इति गृ० संग्रहे ॥

हिरण्ययैर्विततैरन्तरिक्षे " ॥ मह्यं० अस्य करिष्यमाणामुककर्मणः ' ॐ ऋद्धिं भवन्तो ब्रुवन्तु ' ॥ 'ओमृध्यताम्' इतीतरे प्रत्याहुः ॥ एवमेव त्रिर्वाचयित्वा ' ॐ पुण्याहसमृद्धिरस्तु । ॐ शिवं कर्मास्तु ' इति ॥ ' तथैव अस्तु ' इतीतरे प्रत्याहुः ॥ यद्देवत्यं भवति तस्य नाम गृह्णाति " असौ प्रीयताम् " इति ॥ ' प्रीयतामसौ ' इति प्रतिब्रूयुः ॥ अनाम्नातेषु " प्रजापतिः प्रीयताम् " इति ॥ " शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ शकुननिमित्तस्वप्नाः शिवा भवन्तु ॥ आयुषोऽभिवृद्धिरस्त्वायुषोऽभि वृद्धिरस्तु ॥ शिव ँ शिवमस्तु ॥ सर्वग्रहस ँ स्थित्यमस्तु ॥ सत्या एता आशिषः सन्तु " ॥ ईशान्यां बहिर्देशे ' अरिष्टनिरसनमस्तु । यत्पापं तत्प्रतिहतमस्तु ' इति किञ्चिन्निनयेत् ॥ " यच्छ्रेयस्तदस्तु । उत्तरे कर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरभिवृद्धिरस्तु ॥ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् । तिथिकरणमुहूर्तनक्षत्रसम्पदस्तु । इष्टसम्पदस्तु । शान्तिः पुष्टिस्तुष्टिश्चास्तु " इति ॥ तथैवेतरे प्रतिब्रूयुः ॥ ततः कलशजलमन्योन्यं संस्राव्य तज्जलं पात्रान्तरे निनीय हिरण्यं निधाय दर्भैर्ब्राह्मणाः सपत्नीकं यजमानं संस्कार्यञ्च प्रोक्षेयुः । तत्काले पत्नी वामभागे उपविशेत् ॥ सुरभिमत्याब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिरिति प्रोक्ष्य, " अनेन पुण्याहवाचनकर्मणा श्रीपरमेश्वरः प्रीयताम् " इति कर्मेश्वराय समर्प्य पुण्याहवाचनसाङ्गतासिध्यर्थं फलहिरण्यादिकमाचार्याय दद्यात् ॥ ॥ ततः " उत्तिष्ठ ब्रह्मणस्पते । देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानवः । इन्द्र प्राशूर्भवा सचा " ॥ " यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकाम्यार्थसिध्यर्थं पुनरागमनाय च " इत्युक्त्वा व्याहृतीभिरावाहितदेवता उद्वासयेत् ॥ ततो यथाचारं पुरन्ध्यो मङ्गलार्तिक्यं कुर्युः ॥ ब्राह्मणा मंत्राक्षतान्दद्युः ॥ इति पुण्याहवाचनप्रयोगः ॥

---

१. " सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः स्थिता ॥ विप्रपादक्षालने तु अभिषेके च वामतः " इति संस्कारकौस्तुभे ॥

## ॥ अथाग्निमुखविधानम् ॥

दर्भाः—( बो. गृ. शे. सू. १. ७) "सर्वत्र दर्वीहोमानामष्टोत्तरशतं दर्भाः—द्वे हस्तपवित्रे, द्वे आसनं, प्रागुदीचीनाग्रैः षोडश परिस्तरणं, दक्षिणतः प्रागग्रैः सप्तदश, पश्चादुदीचीनाग्रैरष्टादश, उत्तरतः प्रागग्रैः सप्तदश, पात्राणां पञ्च, सप्तदश ब्रह्मासनं, प्रणीतासनं द्वे, द्वे आज्यपवित्रे, द्वे अभिद्योतने, द्वे दर्भाग्रे, द्वे पर्यग्निकरणे, स्रुक्सम्मार्जनं चतुर्भिः" इति ॥ ( बो. गृ. शे. सू. १. ६ ) "दर्भैरविच्छिन्नाग्रैरनखच्छिन्नैरविवर्णकैरव्याधिकैरदग्धमूलैश्चतुरङ्गुल्यादिकैर्मूलं छिन्द्याद्धस्तसमम्" ॥ तत्र दर्भाः प्रयोगपारिजाते निरूपिताः—" नदीतीरेऽब्धितीरेऽद्रौ तीर्थे क्षेत्रे च कानने। जातः कुशः समस्तासु क्रियासु श्रेष्ठ उच्यते" ॥ "क्लीबो न हि प्रयोक्तव्यः स्त्रीपुंकर्मणि जातुचित्। स्त्रीपुंसावेव सर्वत्र प्रयोक्तव्यौ च लाभतः" इति ॥ स्त्रीपुन्नपुंसकलक्षणमुक्तं प्रयोगरत्ने— "अग्रस्थूलं भवेन्नारी मूलस्थूलं नपुंसकम्। अग्रमूलसमश्चैव पुमान्दर्भस्य लक्षणम्" इति ॥

॥ अथ पवित्रकरणं ॥ प्र० पारिजाते— "अत्रोक्तसङ्ख्यापिञ्जूलान्येकीकृत्य समं तथा। मूलानि दक्षिणे हस्ते धृत्वाग्राण्यन्यपाणिना ॥ दक्षहस्तेन तद्वाममनुवर्त्य यथादृढम् ॥ एकीकृत्याथ मूलाग्राण्यनुवर्त्य प्रदक्षिणम् ॥ तथैवाग्रेण चावेष्ट्य कुर्याद्ग्रन्थिं यथादृढम्। पवित्रकरणं त्वेवमुदितं सर्ववेदिनाम् ॥ वलयं स्वाङ्गुलीमानं ग्रन्थिरेकाङ्गुलिप्रमः। चतुरङ्गुलमग्रं स्यादस्य स्थानमनामिका[1]" इति ॥ हस्तपवित्रस्य कर्मभेदेन दर्भसङ्ख्याः प्रोक्ताः प्र० तिलके—" चतुर्भिः पौष्टिके दर्भैः पञ्चभि-

१. "अनामिकामूलदेशे ब्रह्मणस्य पवित्रकम्" इति प्र० तिलके ॥

स्त्वाभिचारके । पित्र्ये त्रिभिः पवित्रं स्याद्द्वौ दर्भौ नित्यकर्मणि " इति ॥ आज्यपवित्रकरणन्तूक्तं कर्मरत्ने–" समे द्वे स्थौल्य-दैर्घ्याभ्यां साग्रे प्रादेशसम्मिते । पवित्रे ग्रथिते ज्ञेये पित्र्ये त्वेकमबन्धनम् " इति ॥ " जूटाकारं बाहुमात्रञ्च शुल्वं कुर्याद्दर्भैर्द्वा-दशैर्मासरूपैः । त्रिस्त्रिर्दर्भैः सन्धिरग्रन्थियुक्तं तन्मूलाग्रे ब्रह्मबन्धेन बद्धम् " इति ॥

अथ परिधिपात्रादीनां लक्षणम् ॥ ( बो. गृ. शे. सू. १.७ ) " अरत्निमात्रं षडङ्गुलं तिस्रश्शम्याः परिधीन्कृत्वा, मध्यमाङ्गुलि-रनामिका कनिष्ठिकेति स्थविष्ठो मध्यमोऽणीयान् द्राघीयान् दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरतोऽङ्गुष्ठपर्वमात्र अष्टादश याज्ञिकाः काष्ठाः, प्रादेशमात्रं पवित्रं, दर्भतरुणकाभ्यामङ्गुष्ठपर्वमात्रं प्रोक्षणीमाज्यस्थालीं प्रस्थचतुर्भागपूर्णां प्रस्थद्विभागं प्रणीताप्रणयनं चरुस्थालीं प्रस्थमाहुतिप्रमाणं चतुरङ्गुलमवदानप्रमाणमङ्गुष्ठपर्वमात्रं दर्वीप्रमाणमेकविंशत्यङ्गुष्ठं तस्या द्व्यङ्गुष्ठमुन्नतं पञ्चाङ्गुष्ठं बिलमेवमेव स्रुक्प्रादेशमात्रमुच्छ्रितं चतुरङ्गुलं वा किञ्चिद्दक्षिणत उन्नतो भवति मेक्षणमिति होमदर्वीप्रमाणमिति ह स्माह बोधायनः " इति ॥ ( बो. गृ. प. सू. १.६ ) " एकविंशतिदारुमिध्मं करोति यज्ञस्य सरूपत्वाय " " वैकङ्कती स्रुगाकृतिर्भवति " ॥ ( बो. गृ. सू. १.३ ) " खादिरी दर्वी तेजस्कामस्यौदुम्बर्यन्नाद्यकामस्य पालाशी ब्रह्मवर्चसकामस्य इति ॥ अथ हैकेषां विज्ञायते ' निर्ऋतिगृहीता वै दर्वी यद्दर्व्या जुहुयान्निर्ऋत्याऽस्य यज्ञं ग्राहयेत्तस्मात्स्रुवेणैव होतव्यं ' इति ॥ पालाशेन स्रुवेणेत्यात्रेयः ॥ खादिरेणे-त्याङ्गिरसः ॥ ताम्रायसेनेत्याथर्वणः ॥ कार्ष्णायसेनाभिचरन्निति सार्वत्रिकम् " ॥ ( बो. गृ. शे. सू. १.१ ) " अरत्निमात्राः परिधय आर्द्रा वा सत्वक्काः ॥ ' प्रादेशमात्राण्येकविंशतिरिध्मदारूणि भवन्ति ' इति ब्राह्मणेन व्याख्यातम् ॥ अथ यदि शम्याः परिदधाति शमीमय्यश्शम्याकृतयो वाऽरत्निमात्राः " ॥

अथ समिल्लक्षणम् ॥ स्मृत्यर्थसारे— "सत्वचः समिधः कार्या ऋज्व्यः श्लक्ष्णाः समास्तथा । शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तथा ॥ आर्द्राः पक्वाः समाश्चैव तर्जन्यङ्गुलिवर्तुलाः । अपाटिता अद्विशिखाः कृमिदोषविवर्जिताः ॥ ईदृशीर्होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम्" इति ॥ "आर्द्राः शुष्का वा सत्वक्काः" इत्यापस्तम्बसूत्रम् ॥

अथ स्थण्डिलकरणम् ॥ (बो. गृ. शे. सू. १.८) "अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलं कृत्वा प्रादेशमात्रमुच्छ्रितं चतुरङ्गुलं वा किञ्चिद्दक्षिणत उन्नतो भवति ॥ प्राचीनप्रवणं किङ्कामस्योदीचीनप्रवणं किङ्कामस्य ? । प्राचीनप्रवणं ब्रह्मवर्चसकामस्योदीचीनप्रवणमन्नाद्यकामस्य प्रागुदक्प्रवणं प्रजाकामस्य समं प्रतिष्ठाकामस्य" ॥ (बो. गृ. शे. सू. १.५) "भस्मकेशतुषकपालशर्करतृणास्थिपिपीलिकैरार्द्रसिकतानि वर्जयेत् ॥ भस्मना यजमानक्षयः केशेन स्त्रीमरणं तुषेण पुत्रघ्नं कपालैरर्थनाशनं शर्करैर्बन्धुवियोगः तृणेन कर्मक्षयः अस्थिना ग्रामविनाशः पिपीलिकै राष्ट्रविनाशः आर्द्रसिकतैर्व्याधिभयं भवतीत्याह भगवान्बोधायनः" ॥ (बो. गृ. शे. सू. १.४) "सिकताश्चतुरङ्गुलं प्राचीनमुध्दृत्य पञ्चाङ्गुलिप्रमाणं पश्चिमत ऊर्ध्वमङ्गुलिविशेषं दक्षिणत ऊर्ध्वमङ्गुलिविहीनमुत्तरतः पञ्चप्रस्थं सिकताश्शुचयश्शुक्ला अनार्द्रा अरत्निमात्रं समचतुरश्रं प्राक्प्रवणं स्थण्डिलं करोति ॥ न लोष्टेन न काष्ठेन न शर्करैर्न नखैः । काष्ठेन व्याधितस्स्याल्लोष्टेन कुलनाशनम् । शर्करैः पुत्रनाशस्स्यान्नखैर्बन्धुविनाशनम् ॥ तस्मात्सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैर्वा दर्भैस्तदङ्गुष्ठेन च महानाम्न्या चोपसङ्गृह्य तस्य मध्यतः प्राचीनं सन्ततमृजुमुल्लिखेत् ॥ किं दैवत्यं किं मन्त्रमिति ? । ब्रह्मदैवत्यं 'ब्रह्म जज्ञानम्' इति ॥ तस्य दक्षिणतः प्राचीनं सन्ततमृजुमुल्लिखेत् । किं दैवत्यं किं मन्त्रमिति ? । यमदैवत्यं 'नाके सुपर्णम्' इति ॥ तस्योत्तरतः प्राचीनं सन्ततमृजुमुल्लिखेत् । किं दैवत्यं किं मन्त्रमिति ? । सोमदैवत्यं 'आप्यायस्व समेतु ते' इति ॥ तस्य मध्यत उदीचीनं सन्ततमृजुमुल्लिखेत् । किं दैवत्यं किं मन्त्रमिति ? । रुद्रदैवत्यं

'यो रुद्रो अग्नौ' इति ॥ तस्याः पश्चादुदीचीनं सन्ततमृजुमुल्लिखेत् । किं दैवत्यं किं मन्त्रमिति ? । विष्णुदेवत्यं 'इदं विष्णुर्विचक्रमे' इति ॥ तस्य पुरस्तादुदीचीनं सन्ततमृजुमुल्लिखेत् । किं दैवत्यं किं मन्त्रमिति ? । इन्द्रदैवत्यं 'इन्द्रं विश्वा अवीवृधन्' इत्ये-तस्मात् स्थण्डिलविधिर्भवति ॥ नकपालो नधूमो नज्वालो नविस्फुटो ननग्नमुखोद्रप्सः पतितं मुखज्वलितं च वर्जयित्वा—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां भूर्भुवस्सुवरोम्' इत्याह भगवान् बोधायनः" ॥ (बो. गृ. प. सू. १.५) "दर्भेषु दक्षिणतो ब्राह्मण उपविशति । स यद्युपविशत्याविशो व्युच्चयनादास्ते ॥ यद्यु वै नोपविशति दर्भेषु दक्षिणतः प्रागग्रं कूर्चं निधाय—'ॐ भूर्भुवस्सुवरों ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मणे' इत्युपातिष्ठते ब्रह्मैवात्रासीनो भवति तस्मै वरं ददाति ब्राह्मणं वा भोजयेदिति ॥ एतेन सशिरस्को यज्ञः—'यो वै यज्ञस्य शिरो वेद शीर्षण्वान्मेध्यो भवति' इति ॥ उत्तरत उदपात्रं ब्राह्मणमिध्मान्ब-र्हिरिति – 'एतद्वै यज्ञस्य शिरो य एवं वेद शीर्षण्वान्मेध्यो भवति' इति ब्राह्मणम् । अथ शम्याः परिदधाति– 'शम्या वा परिधयो वा' इति विज्ञायते । नाऽपरिधाय जुहुयात्– 'रक्षसामपहत्यै' इति ॥ सर्वत्र परिसमूहनपर्युक्षणपरिस्तरणपरिधानोपसमाधानालङ्क-रणमित्यादरादाचार्याः ॥ सर्वत्रालङ्कृत्य ये तत्र ब्राह्मणाः सन्तिताननुज्ञाप्य कुर्वीत यत्कारी स्यात्समृद्धमेवाऽस्य तत्" ॥ ॥ (बो. गृ. शे. सू. १.२) "कथमु खलु पात्रसादनानामानुपूर्व्यं भवति — आज्यस्थालीं, स्रुवं, च जुहूश्च, दर्वीश्च, प्रणीताप्रणयनं, प्रोक्षणीपात्रं, चरुस्थालीं, मेक्षणश्चेध्माबर्हिरिध्मप्रव्रश्चनान्येवमेवान्यानि, द्वन्द्वं न्यञ्चि न हीने नातिरिक्ते सादयति ॥ अथाप्युदा-हरन्ति 'असंस्कृताभिरद्भिः प्रोक्षणीभिरप्रोक्षितपात्रैर्होमश्चाऽसम्मार्जनैः स्रुक्स्रुवैर्नाधिश्रितपक्वैराज्येन न प्रचरितव्यम् । यदि प्रचरेद्यातुधाना असुरा रक्षांसि पिशाचा यज्ञं ग्राहयेयुः' इति" ॥

अत्र स्थण्डिलविधेः प्राक् श्वेतमृद्भिस्त्रिभिरेखाभिश्चतुरश्रं विलेख्यमिति सामान्यतो होममण्डलमभिहितम् ॥ विश्वा-मित्रकारिकायान्तु—"क्रूरासुराणां भयनाशनाय ब्रह्माऽसृजत्पावकरक्षणाय। शुभं त्रिरेखान्वितमष्टकोणं शान्तिप्रदं तत्किल यागबिम्बम्" ॥ "षण्णवत्यङ्गुलिमितं प्राक्प्रत्यग्दक्षिणोत्तरम्। गोचर्ममात्रमुद्दिष्टं तत्र होमो विधीयते" इत्यादिभिरष्टकोणात्मकं विंशतिरेखाभिर्बहिरश्वत्थदलाष्टकैश्चान्वितं होममण्डलं कार्यमिति विशेषोऽभिहितः॥ तल्लेखनप्रकारश्च तत एव सङ्गृह्य लिख्यते—"प्रागादिक्रमतः करद्वयमितैः सौम्येन्द्रवर्कैत्रिश्चतुष्कोणं प्रागुदगङ्गुलान्तरगतै रेखात्रिकैरुल्लिखेत्। तत्रान्यच्चतुरश्रमीशशिखिवक्त्रा[1]-ग्न्यादिरेखाद्विकैस्तद्बाह्ये विलिखेत्त्रिपल्लवयुताश्वत्थाष्टपत्राण्यपि" इति ॥ अत्र करप्रमाणमरत्निमात्रं विज्ञेयम्। अङ्गुलादि-मानन्तूक्तं गोपालकारिकायाम्—"चतुस्त्रिंशत्तिलान्कोशसंस्थितानङ्गुलं विदुः। प्रादेशो द्वादशैतानि पदं पञ्चदशाङ्गुलम् ॥ ते द्वे प्रक्रम एव स्यात्प्रादेशौ द्वावरत्निकः" इति ॥ शुल्बसूत्रेऽपि—"अथाङ्गुलप्रमाणं चतुर्दशाणवः[2], चतुस्त्रिंशत्तिलाः पृथुसंश्लिष्टा इत्यपरम्। द्वादशाङ्गुलं प्रादेशः, पदं पञ्चदश, षट्त्रिंशच्छम्या बाहुः, द्विपदः प्रक्रमः, द्वौ प्रादेशावरत्निः" इति ॥ अथवा लोकसिद्धा एव कर्तुरङ्गुलादयो ग्राह्याः ॥

अथ होमः कुण्डे वा स्थण्डिले वा कार्य इति॥ संस्काररत्नमालायामुक्तम्—"कुण्डे वा स्थण्डिले वाऽपि होमकर्म समाचरेत्" इति ॥ कुण्डलक्षणं च तत्रैव—"अरत्निमात्रं विज्ञेयमग्नेरायतनं शुभम्। श्रौते चौपासने कण्ठखातयोनिविवर्जितम् ॥ मेखला द्वितयं कार्यं रेखालग्नं तु बाह्यतः। बाह्या द्व्यङ्गुलविस्ताराऽभ्यन्तरा चतुरङ्गुला ॥ बाह्या षडङ्गुलोत्सेधाऽभ्यन्तरा

१. ईशशिखिवक्त्रैरग्न्यादिविदिग्गतरेखाद्विकैरिति समासयोजना॥ २. "व्रीहिभेदस्त्वणुः पुमान्" इति कोशः॥

द्वादशाङ्गुला ॥ अत्रौपासनग्रहणं गृह्योक्तलौकिकाग्निसाध्यकर्मोपलक्षणम् " इति ॥ ॥ अथोद्धननलक्षणं सङ्गृहीतं कर्मरत्नात्– "स्फ्यमध्यमं गृहीत्वाथ संयुक्ताङ्गुलिभिः पुरा। कनिष्ठेन विना तत्र भुवं स्फ्याग्रेण संस्पृशेत् ॥ मध्ये मध्ये च पश्चात्सुरपतिदिशि तद्दक्षिणे मध्यवह्न्योर्नैर्ऋत्यां चापि मध्ये वरुणशिवदिशोश्चोत्तरे स्फ्याग्रकेण। उद्धन्येत्यस्य वर्णैः शरशरविशिखद्वीपबाणाङ्गसङ्ख्यैर्वर्णैराम्नायशुभ्माम्बुधिपरिगणितैश्चोद्धतिर्भूमिशुध्यै " इति ॥ ॥ अथाऽप उपस्पर्शननिमित्तानि— ( बो. गृ. सू. ३.१३ ) "सर्वत्र छेदन-भेदन-खनन-निरसन-पितृराक्षस-नैर्ऋत-रौद्राभिचरणीयेष्वप उपस्पृशेदिति। विज्ञायते–' आपो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति ' इति ब्राह्मणम् " इति ॥ प्र० तिलके च — "सरुद्ररक्षःपितृनैर्ऋतानां यमाभिधाने खनने निरासे। अधश्च नाभेरभिमर्शने च छेदे च भेदेऽप उपस्पृशेच्च " इति ॥ ॥ अथ प्रोक्षणादिलक्षणमुक्तं कपर्दिकारिकायाम् — "उत्तानेन तु हस्तेन सेचनं प्रोक्षणं स्मृतम्। अवाचीनेन हस्तेन तदवोक्षणमुच्यते ॥ अभ्युक्षणन्तु परित ऊर्ध्वाङ्गुष्ठेन मुष्टिना " इति ॥ "सजलेन करेण त्रिरैशानीं दिशमादितः। प्रदक्षिणं तदीशान्तं यथाग्नौ न जलं पतेत् ॥ परितो मार्जयेत्तद्वदेतत्परिसमूहनम्। तिरश्चीनेन हस्तेन कार्यं पर्युक्षणं भवेत् " इति कारिकान्तरे ॥

अथाग्निस्थापनविधिः ॥ तत्रादावग्निनिर्णयः— "यस्मिन्नग्नावुपनयति तस्मिन्ब्रह्मचर्यं तस्मिन्समावर्तनं तस्मिन्पाणिग्रहणं तस्मिन्गृह्याणि कर्माणि तस्मिन्काम्यानि कर्माणि। तस्मिन्प्रजासंस्कारा इत्येके इत्याहाऽऽचार्यबोधायनः " ॥ "स्मार्तमौपासने कुर्याच्छ्रौतं वैतानिके गृही। लौकिकेऽपीतरेषान्तु विधिरेष सनातनः " इति प्र० पारिजाते ॥ "औपासने स होतव्यो यो यो होमो विधीयते। तद्व्रतोऽग्निः स एव स्याद्वृथाग्निरितरस्य तु ॥ स चापि श्रोत्रियागारात्सर्वत्राहार्य इष्यते। बहुभिः क्रियमाणेऽपि कर्मण्यग्निः स एव तु " इति गृ० सङ्ग्रहे ॥ सं० मालायान्तु–"उत्तमोऽरणिजन्योऽग्निरुत्तमः सूर्यकान्तजः। मध्यमः श्रोत्रियागारादधमः स्वगृहा-

द्विजः ''॥ '' दीप्तबह्वङ्गारमयं निर्धूमं स्थापयेद्बुधः '' इति लौकिकाग्नावपि विशेषोऽभिहितः ॥ इत्याग्निः ॥ ॥ अग्निप्रणयनपात्राण्यप्युक्तानि सं० मालायाम्– '' सौवर्णं राजतं ताम्रं तदभावे तु मृण्मयम् । पात्रान्तरेण पिहितमग्निप्रणयने स्मृतम् '' इति ॥ तत्स्थापनप्रकारश्च तत्रैवोक्तः— '' कुण्डे वा स्थण्डिले वाऽपि तत्तन्नाम्ना हविर्भुजम् । व्याहृतीभिर्मध्यदेशे योग्यं स्वाभिमुखं क्षिपेत् ॥ अग्निसंस्थापनं कुर्याद्वाग्यतः संयतेन्द्रियः '' ॥ इत्यग्निस्थापनविधिः ॥ ॥ अथाग्निप्रबोधनम् ॥ प्रायश्चित्तकुतूहले – '' धमनीमन्तरा कृत्वा तृणं वा काष्ठमेव वा । मुखेनाऽग्निं समिन्धीत मुखादग्निरजायत ॥ वेणोरग्निप्रसूतत्वाद्वेणुरग्नेश्च पावनः । तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः '' इति ॥ ॥ अथाऽन्वाधानविधिः ॥ '' अन्वाधानार्थमादाय सममृज्विन्धनत्रयम् । गन्धाक्षतप्रसूनानि दधानो दक्षिणे करे ॥ उद्दिष्टकर्माह्वयसामिधेनीर्हविस्तथा पावकयाऽऽज्यदैवम् । उक्त्वाङ्गदेवाऽन्वितमुख्यदेवताः सर्वाश्च ताः सन्निहिता भवन्त्विति ॥ उदीर्य परितो वह्निं विकीर्य कुसुमाक्षतान् । काष्ठान्यग्नौ निदध्याद्भूराद्यैर्व्याहृतिभिस्त्रिभिः '' इति प्र० रत्ने ॥ '' मध्याऽङ्गुष्ठयुगेन मध्यसमिधं मध्ये गृहीत्वाऽनले मध्ये भूरिति सन्निधाय च तथा तद्दक्षिणस्थां न्यसेत् । साङ्गुष्ठोपकनिष्ठिकेन भुव इत्यङ्गुष्ठतर्जन्यतो वामस्थां सुवरित्यथोत्तरदिशि न्यस्यार्धमध्योध्दृताम् '' इति कर्मरत्ने ॥ ॥ अथाऽग्निनामानि ॥ गृ० सङ्ग्रहे — '' लोकेषु व्यवहार्यो यो विज्ञेयोऽग्निः स लौकिकः । गृहस्थैर्धार्यते योऽसावौपासन इति स्मृतः ॥ गर्भाधाने मारुतोऽग्निश्चन्द्रमाः पुंसि कर्मणि ॥ सीमन्ते मङ्गलो नामा शोभनो वैष्णवे बलौ ॥ प्रबलो जातकर्माऽग्निः पार्थिवो नामकर्मणि । शिवोऽग्निरुपनिष्क्रान्तौ प्राशने तु शुचिस्स्मृतः ॥ वर्धमानः कर्णवेधे सभ्योऽग्निश्चौळकर्मणि । जातवेदास्तूपनये व्रताऽऽदेशे समुद्भवः ॥ परिवर्तः समावर्ते विवाहे योजकस्स्मृतः । चतुर्थ्यां जातवेदोऽग्निरग्निर्मूर्धा तु पञ्चमे ॥ वैश्वदेवे त्वाऽवसथ्यः पचनः पाककर्मणि । सभ्योऽग्निर्बहुकृत्येषु दहनस्त्वाऽऽभिचारके ॥ पूर्णाहुतौ मृडो नाम शान्तिके वरदः स्मृतः । प्रायश्चित्ते भवेच्चित्तिः पौष्टिके

बलवर्धनः ॥ शुद्धिहोमे पावमानो बभ्यार्थे कामदोऽनलः । कुक्षौ तु जठरो वह्निः क्रव्यादो मृतदाहने ॥ दैविके हव्यवाहोऽग्निः पैतृके कव्यवाहनः । शुक्र आरण्यकस्याऽग्निर्व्रतवान् ब्रह्मचारिणः ॥ आत्मज्योतिर्यतीनान्तु रायस्पोषः समृद्धिके । जात उत्तपनीयोऽग्निः कुतश्चित्तप्तभाण्डतः ॥ सङ्घात्ततकपालानामुत्थः सन्तपनः स्मृतः । इत्येवमग्नयः प्रोक्तास्तत्तत्कर्मसु योजिताः ॥ ग्रहाणां भास्करादीनां नवानां नव चाऽग्नयः । कपिलः पिङ्गलश्चैव धूमकेतुश्च जाठरः ॥ शिखी च हाटको नाम महातेजा हुताशनः । रौद्रोऽग्निरित्यथैतस्मिन्कर्मणीज्याः पृथक्पृथक् ॥ ब्रह्मा तु गार्हपत्योऽग्निरन्वाहार्यो महेश्वरः । विष्णुस्त्वाहवनीयोऽग्निरग्निहोत्रे त्रयोऽग्नयः ॥ अविदित्वा तु यो वह्नीञ्जुहुयादविचक्षणः । न तध्दुतं भवेदग्नौ न होता फलभाग्भवेत् " इति ॥ ॥ अथाऽग्नेर्जिह्वाः ॥ कर्मरत्ने- "हिरण्या पश्चिमा जिह्वा गगना[1] मध्यमास्थिता । रक्ता चैवोत्तरा जिह्वा कृष्णा याम्यां दिशि स्थिता ॥ ईशान्ये बहुरूपा च ह्यतिरक्ताऽग्निकोणके । सुप्रभा पूर्वजिह्वा च जिह्वास्थानं प्रकीर्तितम् ॥ विवाहे पश्चिमा जिह्वा जातकर्मसु[2] मध्यमा । द्विजत्वे चोत्तरा जिह्वा पितृहोमे च दक्षिणे ॥ आग्नेय्यां तिलैर्होमश्च[3] ईशान्यां चोग्रकर्मकम् । पूर्वदिक्सर्वदेवार्थमेतद्धोमस्य लक्षणम् " इति ॥

अथ होमद्रव्याणामाहुतिप्रमाणादीनि कारिकासूक्तानि यथा— "अङ्गुष्ठपर्वप्रमितमवदानं ततोऽपि च । ज्यायः स्विष्टकृतोऽवद्येत्तच्च बिल्वफलोपमम् ॥ आज्याहुतीनां धारा स्याच्चतुरङ्गुलिसन्तता । व्रीहीणां वा यवानां वा शतमेकाहुतिः स्मृता ॥ तदन्नं द्विगुणं ग्रासो मयूराण्डाकृतिस्तु वा । कर्षमात्रे मधुघृते दुग्धान्नं त्वक्षमात्रकम् ॥ पञ्चगव्यानि च पयो दधि शुक्तिमितं स्मृतम् । दूर्वात्रयं पलार्घाः स्युः शर्करागुडसर्षपाः ॥ माषा मुद्गाश्च लाजाश्च व्रीहिकोद्रवसक्तवः । पृथुका मुष्टिमात्राः स्युस्त-

१. कनका । २. यज्ञकर्मसु । ३. " शांतिहोमः " इति प्रयोगपरिजाते ।

दर्भास्तण्डुलास्तिलाः ॥ कदळीफलनारङ्गफलान्येकैकशो विदुः । मातुलिङ्गं चतुःखण्डं पानसं दशधा स्मृतम् ॥ अष्टधा नाळिकेराणि गुळूची चतुरङ्गुला । त्रिधा कृतं फलं बैल्वं कापित्थोर्वारुके तथा ॥ इक्षुः पर्वप्रमाणः स्यात्पायसं प्रसृतेः समम् । गव्यमाज्यं दधिक्षीरमाज्यं माहिषमेव[1] वा ॥ तिलजर्तिलयोस्तैलं सर्षपस्य फलस्य वा । संस्कृतेन तु यन्मिश्रं सर्वं तत्संस्कृतं भवेत् ॥ आज्यादिकं स्रुवेणान्नं दर्व्या वा मेक्षणेन वा । हस्तेनैव तु होतव्याः समित्सक्तुफलादिकाः " इति ॥ " ओषध्यः सक्तवः पुष्पं काष्ठं मूलं फलं तृणम् । एतद्धस्तेन होतव्यं नान्यत्किञ्चिदचोदनात् " इति शेषसूत्रे ॥ ॥ अथ मुद्राः ॥ कर्मरत्ने— " होमे मुद्रास्त्रयः प्रोक्ता मृगी हंसी च सूकरी । मुद्राहीनन्तु यद्धोमं तत्सर्वं निष्फलं भवेत् ॥ सूकरी पञ्च चाङ्गुल्यो हंसी मुक्तकनिष्ठिका । मृगी कनिष्ठतर्जन्या मुक्ता तिस्र उदीरिताः ॥ चरुहोमं प्रकुर्वीत सूकरीमुद्रयान्वितः ॥ रम्भामुकुलवन्नम्रपाणिनाऽधोमुखेन तु ॥ चक्राङ्गमुद्रयाऽऽचार्यः कुर्याद्धोमं समस्तकम् । कनिष्ठाधोमुखेनोदक्तिर्यगग्रेण पाणिना ॥ किञ्चिदाधोऽग्रसंयुक्ततर्जन्यनत्यवृषाग्रया । कुरङ्गीमुद्रया कुर्यादाज्यहोमं तथा रसम् ॥ हंसी स्यात्पौष्टिके यज्ञे मृगी स्याच्छान्तिकर्मणि । सूकरी त्वाभिचारेषु दर्व्यादिग्रहणे स्मृता " इति ॥ ॥ अथ होतृनियमः ॥ " विना मन्त्रजपं मौनी जान्वन्तस्थकरः शुचिः । पवित्री प्राङ्मुखासीनः कुर्यात्कर्मोत्तरीयवान् " ॥ " मन्त्रावसाने विदधीत कर्म स्वाहावसाने हवनं बलिञ्च " इति प्र० रत्ने ॥ " निधाय भूमावथ सव्यजानु चोध्धृत्य वामञ्च तदङ्घ्रिपार्श्वे । स्पृष्ट्वा च पत्सव्यतळेन वामहस्तात्स्पृशन्दक्षिणबाहुमूलम् " ॥ " देवतामिह मन्त्रोक्तां यामुद्दिश्याहुतिं हुनेत् । तस्या इदं न तु ममेत्युद्देशत्यागमाचरेत् " ॥ " सप्लुतप्रणवस्वाहापुटितेनात्मना हुनेत् । मन्त्रार्थगतचेतास्तु अक्षयं तध्दुतं भवेत् ॥ स्वाहान्तेनैव होतव्यं स्वरितान्ते तथैव च । होतव्यं प्लुतपर्याप्तौ हुतं तद्ब्रह्मवद्भवेत् ॥ चिकीर्षितं

---

१. " आजं वा माहिषं वाऽपि " इति प्र० रत्ने ।

हुतं यद्यत्प्रणवाद्यं प्लुतान्तकम् " इति गृ० सङ्ग्रहे ॥ ॥ अथ पक्वावदानधर्मः ॥ " आलोड्य मेक्षणेनैव चरुं दर्व्यामवद्यति । पूर्वार्धा-दपरार्धाच्च प्रथमं यद्यवद्यति ॥ द्वितीयाद्यवदाने तु तद्विपर्यय इष्यते । अथावत्तप्रदेशे तु प्रत्यज्य स्रुङ्मुखेन तु ॥ अथाम्नातं हविर्हुत्वा पुनस्तदभिहुत्य च । पुरस्तादुपरिष्टाच्च हविषां स्यात्स्रुवाहुतिः ॥ अथ स्विष्टकृतोऽवद्येदुत्तरार्धात्सकृच्चरोः । अवदायाऽभि-घार्य द्विः प्रत्यज्याम्नात्र तद्धविः " ॥ " उपस्तीर्याऽवदाय द्विः पुनस्तदभिघारयेत् । चतुःसम्पत्तिरेषा तु ज्ञेया चतुरवत्तिनाम् ॥ वत्सा विदा आर्ष्टिषेणाः पञ्चावत्तिन एव ते । तेषां हविरवद्येत्त्रिर्मध्यपूर्वापरार्धतः ॥ स्विष्टकृद्धविषस्तेषां त्रिः कार्यमभिघारणम् " इति गृ० सङ्ग्रहे ॥ " जामदग्न्या वत्सविदा आर्ष्टिषेणास्तथैव च ॥ भार्गवच्यावना और्वाः पञ्चावत्तिन ईरिताः " इति प्र० पारिजाते ॥ निर्वापमारभ्य पञ्चावदानधर्मः इति बोधायनः । अवदानमारभ्येति शालीकिः ॥ ॥ अथ याज्यापुरोऽनुवाक्ययोर्लक्षणम् ॥ " पुरोऽनुवाक्या याज्या च यद्याम्नाते उभे अपि । प्रणवान्तं पुरोऽनूच्य यजेत्स्वाहाऽन्त्ययाऽन्यया ॥ अन्त्यस्वरादिकस्यैव स्थाने सप्रणवः प्लुतः । ऋचौ संहतया ब्रूयादुत्तरार्धर्च उच्छ्वसेत् ॥ "

(बो. गृ. सू. ४.९) " हुतः प्रहुतः आहुतश्शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्तपाकयज्ञानां न प्रयाजा इज्यन्ते नानूयाजा न सामिधेनीरन्वाहतेषु कर्मस्वग्निमुपसमाधाय सम्परिस्तीर्य यत्र यत्र दर्वीहोमं कुर्यात्तत्र तत्र चरुं समवदाय जुहोति " ॥ (बो. गृ. प. सू. १.६) " सर्वत्र दर्वीहोमेष्वाघारवत्सु ' पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय ' इति ब्राह्मणम् ॥ यत्रैकाऽऽम्नाता स्यात्तां द्विरभ्यावर्तयेत् । ' तत्सवितुर्वरेण्यम् ' इत्यनुद्रुत्याऽऽम्नातया जुहोत्यथवा भूर्भुवस्सुवरो-मित्यनुद्रुत्य ' तत्सवितुर्वरेण्यम् ' इति जुहोति । अनाम्नातेषु तदेतत्सर्वप्रायश्चित्तम् । विष्णव आहुतीषु नामकरणोपनिष्क्रमणाऽन्न-प्राशनोपाकर्मव्रतेषु च पक्वहोमस्स्यान्नाऽपक्वाः पाकयज्ञास्सर्वत्र पक्वहोमं कुर्यादिति । एतेन होमदानप्राशनानि व्याख्यातानि भवन्ति-

पक्वाज्जुहोति पक्वाद्ददाति पक्वात्प्राश्नातीति पाकयज्ञास्तस्माध्दुतप्रहुताऽहुतेषु पक्वः कार्य इति ॥ एकविंशतिदारुमिध्मं करोति यज्ञस्य सरूपत्वाय । अभिघारयति 'तेजसैवैनं समर्धयति' इति ब्राह्मणम् । अरत्निमात्रीं दर्वीं बाहुमात्रीमित्यपरम् । अथ वै भवति 'निर्ऋतिगृहीता वै दर्वी यद्दर्व्या जुहुयान्निर्ऋत्याऽस्य यज्ञं ग्राहयेत्' इति दर्व्यान्नस्य जुहोति स्रुवेणाज्यस्य 'वैकङ्कती स्रुगाकृतिर्भवति' इति विज्ञायते"॥ (बो. गृ. शे. सू. १.१) "न पत्न्या हविषां भक्षणमन्यत्रोच्छिष्टमभिसम्पाताऽभिहुतानां पिण्डदानस्य शेषश्च नैव देवताहुतशेषमन्यत्र ब्रह्मौदनात्"॥ (बो. गृ. शे. सू. १.१) "पवित्रकरणं, प्रोक्षणीसंस्कारं, प्रणीताप्रणयनं, स्रुवस्रुवसम्मार्जनमिति दर्शपूर्णमासवत्तूष्णीम्"॥ (बो. गृ. शे. सू. १.३) "अथ संस्थायामाद्यन्तयोः परिषेचनं यथा पुरस्तात्। विज्ञायते— 'नासमित्के जुहुयाद्यदसमित्के जुहुयाद्यथाऽजिह्वेऽन्नं दद्यात्तादृक्तस्मात्समिद्वत्येव होतव्यम्' इति" ॥ ॥ होमे – आधारमाग्निहोत्रिकमापूर्विकश्चेति त्रीणि तंत्राण्युदाहरन्ति। तदाह बोधायनः — "आघारं प्रकृतिं प्राह दर्वीहोमस्य बादरिः। आग्निहोत्रिकमात्रेयः काशकृत्स्नस्त्वपूर्वताम्" इति ॥

## ॥ अग्निमुखम् ॥

(बो. गृ. शे. सू. ५.१) "शुचौ समे देशे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य, तत्र प्राङ्मुखस्स्नानादिपञ्चकं कृत्वोपविश्य स्फ्येनोद्धत्याऽवोक्ष्य, पञ्चप्रस्थसिकताभिस्स्थण्डिलकरणं व्याहृतीभिर्नियुप्यारत्निमात्रं समचतुरश्रं कृत्वा, तस्मिन्प्रादेशमात्रं चतुरश्रं दर्भैस्त्रिःप्राचीनमुल्लिखेदङ्गुष्ठाऽनामिकाभ्यां कनिष्ठिकया वा 'ब्रह्म जज्ञानं' इति मध्ये, दक्षिणे 'नाके सुपर्ण', उत्तरे

'आप्यायस्व' इति। त्रिरुदीचीनम्। मध्ये 'यो रुद्रः' इत्यप उपस्पृश्य, पश्चिमे 'इदं विष्णुः', प्राच्यां 'इन्द्रं विश्वा अवीवृधन्' इति। दर्भं निरस्याप उपस्पृश्याऽग्नेरासनं कल्पयित्वा, यथोक्तमग्निं पत्न्याऽऽहृतमङ्गाररूपं व्याहृतीभिर्नियुप्य, तत्पात्रेऽक्षतजलं निनयेत्। अथ प्रोक्षितस्थूलकाष्ठत्रयेण तूष्णीमन्वाधायोपतिष्ठतेऽग्निम्— 'जुष्टो दमूनाः' इति"॥ (बो. गृ. सू. १.३)
"अथैनं प्रदक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य प्रागग्रैर्दर्भैराग्निं परिस्तृणाति। अपि वोदगग्राः पश्चाच्च पुरस्ताच्च भवन्ति। दक्षिणानुत्तरानुत्तरानधरान्यदि प्रागुदगग्राः। उत्तरेणाऽग्निं प्रागग्रान्दर्भान्संस्तीर्य तेषु द्वन्द्वं न्यञ्चि पात्राणि संसादयति देवसंयुक्तान्येकैकशः पितृसंयुक्तानि सकृदेव मनुष्यसंयुक्तानि। 'यत्सह सर्वाणि मानुषाणि' इत्येतस्माद्ब्राह्मणात्"॥ (बो. गृ. शे. सू. ५.१)
पात्रोत्तराऽऽसनं ब्रह्मदक्षिणाऽऽसनं प्रणीतोत्तराऽऽसनं पश्चादात्माऽऽसनं सर्वं कल्पयित्वा पात्राणि सादयेत्। आज्यस्थालीं, स्रुवं, च जुहूं, प्रणीतां, च चरुस्थालीं, प्रोक्षणीं, चेध्माबर्हिश्चेध्मप्रव्रश्चनानि, मेक्षणं, च सादयित्वा दर्भैः प्रतिच्छाद्य शूर्पं, कृष्णाजिनं, चेत्यत्र दर्वीहोमो विकल्पे। अथ बर्हिषः पवित्रे कुरुते, प्रादेशमात्रे समे अप्रतिच्छिन्नाग्रे अनखच्छिन्ने तरुणे तूष्णीमद्भिरनुमृज्य, कृत्वा प्रोक्षण्यां निधायाऽप आनीय त्रिरुत्पूयाद्भिः प्रोक्ष्योत्तानानि पात्राणि कृत्वा, विस्रस्येध्मं त्रिः प्रोक्ष्य ब्राह्मणमिष्टिवद्दक्षिणत उपवेश्य 'ॐ भूर्भुवस्सुवर्ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मन् ब्रह्मणे' इति ब्राह्मणमुपातिष्ठत आदिशो व्युन्नयनादास्ते। यद्वा कूर्चमुपवेश्याभ्यर्च्य प्रणीतायां सपवित्रायां वरुणं पूजयित्वा सह पवित्रेण नासिकासममुत्थाप्योत्तरतस्सादयति 'भूर्भुवस्सुवरों वरुणोसि धृतव्रतो वारुणमसि' इति तमभ्यर्च्य दर्भैः प्रच्छाद्याथ व्रीहीन्निर्वपति – 'अमुष्मै जुष्टं निर्वपामि' इति वा तूष्णीं वा। एवं त्रिस्सकृत्तूष्णीम्। तथा तानभ्युक्ष्यावहत्य, त्रिष्फलीकृत्य, त्रिः प्रक्षाळ्य, निदधाति। तण्डुलान्वा निर्वपति। तानभ्युक्ष्य, त्रिः प्रक्षाळ्यैवं निदधाति। स्थाल्यामपः पयो वाऽऽनीयाऽधिश्रित्य, तिरःपवित्रं तण्डुलानावपति। पक्वमोदनं पायसं

वा याचति। तमभ्युक्ष्य स्रुवेण प्रणीताजलं निनयति। अग्नावधिश्रित्याथाऽऽज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरुह्य व्यन्ता-न्कृत्वा, तेष्वधिश्रित्याऽभिद्योतनेनाऽभिद्योत्य, द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाळ्य प्रत्यस्य, पुनरभिद्योत्योभयं त्रिः पर्यग्नि कृत्वा वर्त्म-कुर्वन्नुदगुद्वास्य प्रत्यूह्याऽङ्गारानथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय विस्रस्य पवित्रे अद्भिस्संस्पृश्याऽग्नावनु-प्रहरति। अथ स्रुवं जुहूं मेक्षणं च सम्मृज्य त्रिरन्तरतस्त्रिर्बाह्यतस्तथा मूलैर्मूलं सम्मृज्याद्भिस्संस्पृश्य पुनर्निष्टप्य निदधाति क्रमेण। अथ दर्भानद्भिस्संस्पृश्याऽग्नावनुप्रहरति। पश्चादग्नेर्बर्हिस्तीर्त्वा तत्राऽऽज्यं निदधाति। चरुमभिघार्योदग्नमुद्वास्य बर्हिष्यासाद्य प्रतिष्ठितमभिघारयति। स्थविष्ठो मध्यमो द्राघीयान्दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरत ऊर्ध्वे समिधावादधाति। अथाऽग्निं परिषिञ्चति— 'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनं 'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनं 'सरस्वतेऽनु-मन्यस्व' इत्युत्तरतः प्राचीनं 'देव सवितः प्रसुव' इति समन्तं प्रदक्षिणम्। समन्तमेव वा तूष्णीं परिषिञ्चति। अथाऽग्नि-मैन्द्रादिक्रमेणाऽभ्यर्च्य परि समिधं शिनष्टि। ब्राह्मणेनानुज्ञातस्स्वाहाकारेणाभ्याधायाऽनूयाजसमिधमिध्मसन्नहनं प्रणीतापात्रं निधायाऽऽघारावाघारयति। 'प्रजापतये स्वाहा' इति मनसोत्तरे परिधिसन्धौ संस्पृश्याऽक्षणया सन्ततम्। 'इन्द्राय स्वाहा' इत्युपांशु दक्षिणे परिधिसन्धौ संस्पृश्याऽक्षणया सन्ततम्। अथाऽऽज्यभागौ जुहोति- 'अग्नये स्वाहा' इत्युत्तरार्धपूर्वार्धे। प्रतिमुखं प्रबाहुग् जुहोति- 'सोमाय स्वाहा' इति दक्षिणार्धपूर्वार्धेऽथाऽग्निमुखं जुहोति— 'युक्तः, चतस्रः' आरभ्य व्याहृत्यन्तं हुत्वाऽथ चरुप्रायश्चित्तं हुत्वा चरुमभिघार्याऽथात्रत्यप्रायश्चित्तं कृत्वा स्रुवेण जुह्वामुपस्तीर्य मेक्षणेन चरुमालोड्य पूर्वार्धादवदायाऽपरार्धाद-वद्यत्यभिघारयति प्रत्यनक्ति पुरस्तात्स्रुवाऽऽहुतिं हुत्वा यथोक्तं पक्वाज्जुहोत्युपरिष्टात्स्रुवाहुतिश्च। (बो. गृ. शे. सू. १. १) "यदि पञ्चावत्ती स्याद्दर्व्यामुपस्तीर्य मध्यात्पूर्वार्धादवदायाऽपरार्धादवद्यत्यभिघारयति प्रत्यनक्ति। स्रुवं निमृज्य यथादेवतं पुरोनु-

वाक्यामनूच्य याज्यया जुहोति "॥ ( बो. गृ. शे. सू. १. १६ ) "पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय' इति ब्राह्मणम् । यत्रैकाऽऽम्नाता द्विरभ्यावर्तयेत् 'तत्सवितुर्वरेण्यम्' इत्यनुद्रुत्याऽम्नातया जुहोति वा"॥ ( बो. गृ. शे. सू. ५. १ ) "अथोपस्तीर्योत्तरार्धात् स्विष्टकृतसकृदवद्यति द्विरभिधारयति न प्रत्यनक्त्यन्तःपरिधि सह मेक्षणेन सादयित्वा यथोक्तमाज्याहुतीर्जुहोति । अथ पुरस्तात्स्रुवाऽऽहुतिं स्विष्टकृतमुपरिष्टात्स्रुवाहुतिं च हुत्वाऽप उपस्पृश्य मेक्षणमग्नौ प्रहृत्याऽथैनत्संस्रावेणाऽभिजुहोति स्रुक्स्रुवाभ्याम् । जुहूसङ्क्षालनमन्तःपरिधि निनयति । निर्णिज्य स्रुवं निष्टप्याऽद्भिः पूरयित्वा बहिःपरिधि निनयति । स्थालीपाकेऽन्तःपरिधि बहिःपरिधि समन्त्रकम् । अथाऽनूयाजसमिधमाधायेध्मसन्नहनमद्भिः संस्पृश्याऽग्नावनुप्रहरति । अथ जयानभ्यातानान् राष्ट्रभृतोऽमात्यहोमांश्च हुत्वाऽथ चतुर्गृहीतेन स्रुवेण वा प्राजापत्यं हुत्वा इध्मप्रव्रश्चनान्यभ्याऽधाय प्रायश्चित्तानि सौविष्टकृतं च हुत्वा स्रुवेण परिधीननक्ति । अथ परिस्तरांत्समुल्लिप्याऽऽज्यस्थाल्यां प्रस्तरवद्बर्हिरक्त्वा तृणं प्रच्छाद्याऽग्नावनुप्रहरति । अप उपस्पृश्य तृणञ्च मध्यमं परिधिमनुप्रहरति । अथेतरावुपसमस्यत्यूर्ध्वसमिधौ च । अथैनान्संस्रावेणाऽभिजुहोति– 'वसुभ्यः' इति । अत्र बलिं प्राशनं चाऽन्यत्रोपनयनादन्यानि तत्तदुक्तकर्माणि । अथाऽग्निं परिषिञ्चति– 'अन्वमꣳस्थाः, प्रासावीः' इति। वरुणमुद्वास्य बर्हिषि दिशो व्युन्नीय 'प्राच्याम्' इत्यादिना स्वयञ्च प्रोक्ष्य ब्रह्मणे वरं दत्वा चरुशेषं सघृतं वा ब्रह्माणं विसृजति । स्थालीपाकनक्षत्रहोमाऽऽयुष्यहोमादिषु प्राशनमुक्तम् । अथ बहुदैवत्ये द्वितीयमवदानमपरार्धादवदाय पूर्वार्धादवद्यति। सर्वमेवमाऽन्तात् । अथ स्विष्टकृत उपस्तीर्य यावती देवतासङ्ख्या तावदवदानं सकृत्सकृत् । शेषं समानम् । तथा मध्यादपरार्धात्पूर्वार्धादवद्यति । स्विष्टकृतो द्विर्द्विरवद्यति। शेषं समानं भवति। सर्वन्यायं ज्ञात्वाऽऽचार्यमुखेन कुर्यात् "॥

(बो. गृ. शे. सू. १.८) "उपलिप्तं वैश्वदेवत्यमुद्धत्यं नाकदेवत्यमवोक्षणं पितृदेवत्यं सैकतं सिन्धुदेवत्यमुल्लेखनं यमदेवत्यं निरसनं रुद्रदेवत्यं स्पर्शनं वरुणदेवत्यमग्निविधानं विष्णुदेवत्यं विहरणं वामदेवत्यं कर्म गायत्र्याः परिस्तरण-दर्भाऽऽज्यस्थालीस्रुवजुहूनां पृथिवीदेवत्यं स्रुक्सोमदेवत्यमाज्यं वसुदेवत्यं पवित्रं विष्णुदेवत्यं चरुः प्रजापतिदेवत्यं मेक्षणमग्निदेवत्यं सम्मार्जनं रुद्रदेवत्यं कूर्चं प्रजापतिदेवत्यमुदकुम्भमब्देवत्यं प्रणीता वरुणदेवत्यमश्मा महेन्द्रदेवत्यं वासस्सोमदेवत्यं कर्ता बृहस्पति-देवत्यं धूममतिथिदेवत्यमिध्ममग्निदेवत्यं मध्यमपरिधिर्यजमानदेवत्यं दक्षिणपरिधिरिन्द्रदेवत्यमुत्तरपरिधिर्वरुणदेवत्यमूर्ध्वसमिधौ सूर्यदेवत्यमिन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशाना अष्टदिग्देवत्यं व्यजनं वायुदेवत्यं गन्धमश्विनिदेवत्यं पुष्पं गन्धर्वदेवत्यं धूपमिन्द्रदेवत्यं दीपं भानुदेवत्यं प्रयाजाऽनुयाजमृतुदेवत्यं पक्कं प्रधानदेवत्यमुपहोमाः यथालिङ्गदेवत्यं यत्रयत्र होमे मन्त्र-विधानं तत्र तल्लिङ्गदेवत्यं परिषद्ब्रह्मदेवत्यं सदस्यास्सर्वदेवत्यमन्येषामनुक्तानां प्रजापतिदेवत्यं योऽस्य दैवतं मन्त्रतः कर्मतो वाऽभिज्ञाय जुहोति सोऽश्नुते श्रियमायुष्यमारोग्यं स्वर्ग्यं च भवति ॥ अग्निहीनमनावृष्टिर्मन्त्रहीनन्तु ऋत्विजः । आज्यहीनं कुलं हन्ति स्वाहाहीनन्तु पत्नयः ॥ यज्वानं दक्षिणाहीनमन्नहीनन्तु राष्ट्रकम् । सर्वहीनं सदस्यानि नास्ति यज्ञसमो रिपुः ॥ तस्मात्सर्वप्रयत्नेन किञ्चिद्द्रव्यस्समाचरेत् । श्रियः कामश्चरेत्सर्वं समृद्धं सहदक्षिणम् ॥ एवं ऋषिविधानोक्तं मुनीनां तत्त्व-वेदिनाम् । सर्वं वेदाहृतं ह्येवं सर्वलोकेषु पूजितम् ॥ सर्वलोकेषु पूजितमितीत्याह भगवान्बोधायनः " ॥ ॥

अथाग्निमुखप्रयोगः ॥ कर्ता शुचौ समे देशे गोमयेन गोचर्ममात्रं स्थंडिलमुपलिप्य तन्मध्ये पूर्वोक्तप्रकारेण होम-मण्डलं विलिख्य तत्पश्चात्प्रागग्रेषु दर्भेषु प्राङ्मुख उपविश्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य "अमुकहोमं कर्तुं

१. यजमानम् ।

स्थण्डिलोल्लेखनादि करिष्ये " इति संकल्प्य स्फ्याग्रेण स्थंडिलमुद्धंति— " उद्धन्यमानम् । अस्या अमेध्यम् । अपपाप्मानम् । यजमानाय हन्तु । शिवा नः सन्तु । प्रदिशश्चतस्रः । शन्नो माता । पृथिवी । तोकसाता " इति नवपदैः मध्ये – मध्यपश्चिमपूर्वेषु, दक्षिणे – मध्याग्नेयनिर्ऋतिषु, उत्तरे – मध्यवायव्येशान्येषु, क्रमेणोद्धत्याप उपस्पृश्य ॥ शन्नो देवीर० स्रवन्तु नः " इत्यवोक्ष्य तत्र सिकताः शुचयः शुक्ला अनार्द्राः केशकीटादिवर्जिताः पंचप्रस्थसम्मिताः " देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो-हस्ताभ्याम् ॥ भूर्भुवः सुवरोम् " इति नियुप्य ताभिररत्निमात्रं समचतुरश्रं चतुरंगुलोन्नतं प्रागुदक्प्लवं स्थण्डिलमीशान्यादा-रभ्येशान्यपर्यन्तं कृत्वा तस्य मध्ये सुवर्णरजतताम्रशकलव्रीहियवदर्भाणामन्यतमेन अंगुष्ठोपकनिष्ठिकाभ्यां संगृहीतेन त्रिः प्राचीनं सन्ततमृजुमुल्लिखेत्— " ॐ ब्रह्म जज्ञानं० विवः" इति मध्ये ॥ " ॐ नाके सुपर्णमुपयत्पतन्त ँ हृदावेनन्तो अभ्यचक्षतत्वा । हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् " इति दक्षिणे ॥ अप उपस्पृश्य ॥ " ॐ आप्यायस्व स मेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य संगथे " इत्युत्तरे । एवं त्रिरुदीचीनमुल्लिखेत्— " ॐ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु " इति मध्ये ॥ अप उपस्पृश्य ॥ " ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढ-मस्य पा ँ सुरे " इति पश्चिमे ॥ " ॐ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः । रथीतम ँ रथीनां वाजाना ँ सत्पतिं पतिम् " इति प्राच्याम् ॥ अथैतं शकलमीशान्यां निधायाद्भिरभ्युक्ष्य नैर्ऋत्यां दिशि निरस्याप उपस्पृश्य विरलमुष्ट्या स्थण्डिलमभ्युक्ष्य यथोक्तं समृद्धं विधूमं सुवर्णादिपात्रद्वयेन सम्पुटीकृतं पत्न्या श्रोत्रियागारात्स्वगृहाद्वा समाहृत्याग्नेय्यां निहितमग्निं " देवस्य त्वा सवितुः

प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । भूर्भुवस्सुवरोम् अमुकनामानमग्निं प्रतिष्ठापयामि " इत्यात्माभिमुखं पाणिभ्यां स्थण्डिले प्रतिष्ठाप्य तत्पात्रमक्षतजलेनोपसिच्येशान्यां निधाय प्रोक्षितेन्धनानि निक्षिप्याग्निं वेणुधमन्या प्रबोध्यान्वादध्यात् ॥ आचम्य प्राणानायम्य प्रोक्षितं स्थूलसमित्त्रयमादाय देशकालौ सङ्कीर्त्य " श्रीपरमेश्वरप्रीत्यर्थं अमुकहोमं करिष्ये ॥ अमुकहोमः कर्म, आघारवत्तन्त्रम्, पञ्चदशदारुरिध्मः, अग्नीषोमावाज्यभागौ, अमुको नामाग्निः, अमुकः प्रधानदेवता, चरुर्हविः उपहोमश्च, अमुकमन्त्रेणामुकद्रव्येणामुकसंख्यया, अग्निः स्विष्टकृत् । आज्यस्य मान्त्रवर्णिक्यो देवताः, अङ्गदेवताः प्रधानदेवताश्च ताः सर्वा अत्र संनिहतास्सन्तु, एवं साङ्गेन कर्मणा सद्यो यक्षे " इति सङ्कल्प्य । समित्त्रयं ॐ भूः ॐ भुवः ॐ सुवः इत्यग्नौ मध्यदक्षिणोत्तरक्रमेणाभ्याधाय उदीचीनाग्रेण शुल्बेन बर्हिर्मुष्टिं तथैवैकविंशतिदारुकमिध्मञ्च सन्नह्योत्तरतो निधायाग्निमुपतिष्ठते– " जुष्टो दमूना अतिथिर्दुरोणे ॥ इमं नो यज्ञमुपयाहि विद्वान् ॥ विश्वा अग्नेऽभियुजो विहत्य ॥ शत्रूयतामाभरा भोजनानि " इत्यथैनमग्निमीशान्यादारभ्य प्रदक्षिणमीशानपर्यंतं त्रिः परिसमूह्य त्रिः पर्युक्ष्य परिस्तृणाति– " ॐदेवस्य त्वा० हस्ताभ्यां । परिस्तृणामि " इति पुरस्तादुदगग्रैः षोडशभिर्दर्भैः ॥ " ॐ भूर्भुवस्सुवः । परिस्तृणामि " इति दक्षिणतः

---

१. " अष्टमे नवमे चैव दशमैकादशे तथा ॥ सेचनं परिधिश्चैव स्तरणं पूजनं क्रमात् " इति स्थण्डिलादेतदंगुलिमिते देशे परिषेचनादिकं कार्यमित्यर्थः ॥ २. " अलाभे चैव दर्भाणां यथा लाभन्तु कल्पयेत् " इति गृ० संग्रहे । " अग्नेः षोडशभिर्दर्भैः प्राच्यादिषु परिस्तृतिः " इति श्रौतपदार्थनिर्वचने ॥

प्रागग्रैः सप्तदशभिः ॥ " ॐ उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् । परिस्तृणामि " इति पश्चादुदगग्रैरष्टादशभिः ॥ " ॐ अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि । परिस्तृणामि " इत्युत्तरतः प्रागग्रैः सप्तदशभिरिति परिस्तीर्य दक्षिणान्दर्भान्पूर्वपश्चिमपरिस्तरणयोरुपरि कुर्यादुत्तराँस्तयोरधः ॥ अथाग्नेरुत्तरतः पात्रासादनार्थं पंचभिर्दर्भैरासनं कल्पयित्वा दक्षिणतो ब्रह्मासनं सप्तदशभिः, उत्तरतः प्रणीतासनं द्वाभ्याम्, पश्चादात्मासनं च द्वाभ्यां कल्पयित्वा पात्राणि सादयेत् ॥ आज्यस्थालीं[1] स्रुवं च दर्वीं स्रुचं च प्रणीतां प्रोक्षणीं च चरुस्थालीं मेक्षणं चेध्माबर्हिश्च स्फ्यमिध्मप्रव्रश्चनानि चेत्येवमेवोपयुक्तान्यन्यान्यपि पात्राणि द्वन्द्वं न्यञ्चि सादयित्वा दर्भैः प्रतिच्छाद्याथ बर्हिषः पवित्रे कुरुते-प्रादेशमात्रे समे अप्रच्छिन्नाग्रे अनखच्छिन्ने तरुणके तूष्णीमद्भिरनुमृज्य मध्ये ग्रन्थिं कृत्वा प्रोक्षणीपात्रमुत्तानं कृत्वा तस्मिन्नुदगग्रे पवित्रे निधायाप आनीयोत्तानहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यां पवित्रे उपसंगृह्य विच्छिद्य विच्छिद्य त्रिरुत्पूयाद्भिरेवापस्त्रिः[2] प्रोक्ष्योत्तानानि पात्राणि कृत्वा विस्रस्येध्मं त्रिः सर्वाभिः प्रोक्ष्य उदक्स्थितं ब्राह्मणं " अस्मिन्कर्मणि ब्रह्माणं त्वां वृणे " इति वृत्वा गन्धादिभिरभ्यर्च्य दक्षिणतो ब्रह्मासने उपवेश्य " ॐ भूर्भुवः सुवः ब्रह्मन्ब्रह्मासि नमस्ते ब्रह्मन्ब्रह्मणे " इति तमुपतिष्ठते ॥ ( वृतो ब्रह्मा पवित्रपाणिः प्राङ्मुखो यज्ञोपवीत्यप आचम्याग्रेणाग्निं परीत्योदङ्मुखस्तूष्णीं ब्रह्मसदनमुपस्थायांगुष्ठोपकनिष्ठिकाभ्यामासनात्तृणं नैर्ऋत्यां दिशि निरस्याप उपस्पृश्य द्यावापृथिवी

---

१. " आज्यस्थालीं स्रुवं चैव दर्वीं च स्रुचमेव च ॥ प्रणीतां प्रोक्षणीं चैव चरुस्थालीं समेक्षणाम् ॥ तथेध्माबर्हिषी चेति यैरन्यैश्च प्रयोजनम् । व्रीहिनिर्वापपक्षे तु मुसलोलूखले तथा ॥ शूर्पाजिने चेत्येतानि नित्यं पात्राणि सादयेत् " इति गृ० संग्रहे ॥ " द्वितीयहानौ सतृणन्तु साध्यं द्वन्द्वत्वसिध्यै समिधायुतं वा " इति कल्पसारे ॥ २. प्रोक्षणीगतागता एवाऽपस्तदेकदेशाभिः प्रोक्ष्येत्यर्थः ॥

समीक्षमाणो दक्षिणोत्तरेणोपस्थेनोपविशेद्वाचंयमश्चादिशो व्युन्नयनादासीत ) यद्वा तस्मिन्स्थाने कूर्चमुपवेश्याभ्यर्च्योपतिष्ठेत ॥ ततः प्रणीतापात्रे तिरः पवित्रमप आनीय गन्धादिभिरभ्यर्च्य " ब्रह्मन्नपः प्रणेष्यामि " इति ब्रह्माणमामन्त्र्य ॥ " ॐ प्रणय " इति तेनानुज्ञातस्तत्पात्रं दर्भस्थं दर्भसंच्छन्नं मुखसममुध्दृत्याविषिञ्चन्हृत्वोत्तरेणाग्निं दर्भेषु सादयति—" वरुणोसि धृतव्रतो वारुणमसि " इति ॥ अथैतद्दर्भैः प्रतिच्छाद्य पवित्रे आदायाग्नेः पश्चाच्चरुस्थाल्यां सिद्धमोदनं निर्वपति —" देवस्य त्वा० हस्ताभ्याममुष्मै जुष्टं निर्वपामि " इति त्रिर्यजुषा सकृत्तूष्णीं । पश्चावत्तिनां तु त्रिर्यजुषा द्विस्तूष्णीम् । अथैतत्पवित्रे गृहीत्वा ॥ " देवस्य त्वा० हस्ताभ्याममुष्मै वो जुष्टं प्रोक्षामि " इति प्रोक्षणीजलेन सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य स्रुवेण प्रणीताजलं किञ्चिन्निनीयाग्नावुत्तरतोऽधिश्रयति । अथाज्यं विलीनमप्यग्नावधिश्रित्याग्नेः पश्चादाज्यस्थाल्यां तिरः पवित्रमाज्यं निरुप्योदीचोऽङ्गारान्परिस्तरणाद्बहि-

---

१. जघनेनाऽग्निं कृष्णाजिने व्रीहीन्निर्वपति, व्रीहीन्वा तण्डुलान्वा निर्वपति पक्वमोदनं पायसं वा यावतीति सूत्रे पक्षत्रयमभिहितम् ॥ तत्र व्रीहिनिर्वापपक्षे " व्रीहीन्वा तण्डुलान्वापि स्थाल्यावाथ स्रुवेण वा । यजुषा त्रिः सकृत्तूष्णीमन्तर्धाय पवित्रके " इति गृ० संग्रहोक्तप्रकारेण जघनेनाग्निं कृष्णाजिनं प्रतीचीनग्रीवमुत्तरलोमोपस्तीर्य स्थाल्या स्रुवेण वा पवित्रमन्तर्धाय व्रीहीन् " देवस्य त्वा० हस्ताभ्याममुष्मै जुष्टं निर्वपामि " इति त्रिर्यजुषा सकृत्तूष्णीं निरुप्य तथैवामुष्मै वो जुष्टं प्रोक्षामीति सकृन्मंत्रेण द्विस्तूष्णीं प्रोक्ष्य तानुलूखले न्युप्य मुसलेनावहत्याञ्छूर्पे उद्वाप्य वितुषीकृत्य तुषान्निरस्याप उपस्पृश्य पात्रान्तरे तण्डुलान्प्रस्कन्दयति । एवं त्रिष्फलीकृत्य त्रिः प्रक्षाल्य समोदकां स्थालीमग्नावधिश्रित्य तत्र तिरः पवित्रं किंचित्प्रणीता जलमानीय तण्डुलानावपति ॥ तण्डुलनिर्वापपक्षे त्रिष्फलीकरणवर्ज्यमन्यत्समानम् ॥ अनेकदेवतास्थके तु ॥ " अनेकदैवतेऽप्येका स्थाली द्रव्यैक्यमस्ति चेत् । तस्यां सपवित्रायां तण्डुलान्प्रास्य तान्पचेत् " इति विशेषः ॥

२. " स्पृष्ट्वै वामहस्तेन घृतस्थाल्यां घृतं वपेत् " इति गृ० संग्रहे ॥

रुदङ्नरूह्य तेष्वाज्यपात्रमधिश्रित्याभिद्योतनकुशद्वयेनाभिद्योत्यांगुष्ठपर्वमात्रे द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाळ्याज्ये प्रत्यस्य पुनस्ते-नैव कुशद्वयेनाभिद्योत्य अन्येन कुशद्वयेन चरुणा सहाज्यं त्रिः पर्यग्निकृत्वाज्यपात्रं वर्त्म कुर्वन्नुदगुद्वास्य प्रत्यूह्याङ्गारानथैनदाज्य-मुदीचीनाग्राभ्यां पवित्राभ्यामुत्तानाभ्यां पाणिभ्यामंगुष्ठोपकनिष्ठिकाभ्यां पुरस्तान्नीत्वा पश्चादानीय पवित्रे उद्धरति । तदेकं पुनराहारमुत्पवनम् । एवं त्रिरुत्पूय विस्रस्य पवित्रे अद्भिः सँस्पृश्याग्नावनु प्रहरति । अथ दक्षिणहस्तेन स्रुवं च दर्वीं मेक्षणं च सव्येन चतुरो दर्भांश्चादाय सहैवाग्नौ प्रतितप्य दक्षिणहस्ते तान्दर्भानावेष्ट्य तदग्रैः स्रुवाग्रमन्तरतः प्रागपवर्गं त्रिः सम्मृज्य प्रत्यग्बिलं न्यग्गृहीत्वा बाह्यतः प्रत्यगपवर्गं त्रिः सम्मृजेत् । ततः प्रत्यग्दण्डं गृहीत्वा दर्भमूलैर्दण्डमधस्तात्प्रत्यगपवर्गमुपरिष्टा-त्प्रागपवर्गश्च त्रिस्त्रिः सम्मृज्याद्भिः सँस्पृश्य पुनर्निष्टप्योत्तरतो निदधाति । एवमेव स्रुचं दर्वीं मेक्षणं च सम्मृज्य तथैव निष्टप्योत्तरतो निधाय दर्भानद्भिः सँस्पृश्याग्नावनु प्रहरति ॥ अथाग्नेः पश्चात्परिस्तरणाद्बहिरात्मनोऽग्रतो भुवं प्रोक्ष्य तत्र बर्हिः सन्नहनं प्रागुदगग्रं प्रसार्य तस्मिन् प्रागग्रं बर्हि स्तीर्त्वाऽऽज्यस्थालीं निधाय तस्यां स्रुवं तदुत्तरतः स्रुचं दर्वीं चरु-स्थाल्यां मेक्षणं चेति निदधाति । ततः स्रुवेण चरुमभिघार्योदश्चमुद्वास्याग्न्याज्ययोर्मध्ये नीत्वाऽऽज्याद्दक्षिणतो बर्हिष्यासाद्य प्रतिष्ठितमभिघारयति । अथ परिधीन्परिदधाति— मध्यमं परिधिमुदगग्रं तस्योपरि दक्षिणं प्रागग्रमधस्तादुत्तरं प्रागग्रं

---

१. अयमुत्पवनक्रमः ॥ पुनराहारम् एवमिव हि प्राणापानौ संचरतः ॥ इति श्रुत्या निदर्शितः श्रौतसूत्रव्याख्यात्रा केशवस्वामिनाऽपि व्याख्यातः । अतो नात्र प्रत्यगपवर्गता दोषः शंकनीयः ॥ २. एष सम्मार्गक्रमः तदु वा आहुः । अग्रत एवोपरिष्टात्सम्मृज्यात् मूलतोऽधस्तात् ॥ इत्यादि श्रुत्यर्थानुसारं श्रीमद्विद्यारण्येन दर्शपूर्णमाससूत्रभाष्ये सन्दर्शितः ॥

परिधाय द्वे ऊर्ध्वे समिधावाग्नेयैशान्ययोरादधाति ॥ अथाग्नौ " स्वाहा " इत्येकां समिधमाधाय ॥ जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन् । उप स्पृश दिव्य ँ सानु स्तूपैः स ँ रश्मिभिस्ततनः सूर्यस्य ॥ इत्युपस्थाय प्रदक्षिणमग्निं परिषिञ्चति- अदितेऽनुमन्यस्व ॥ इति दक्षिणतः प्राचीनम् ॥ अनुमतेऽनुमन्यस्व ॥ इति पश्चादुदीचीनम् ॥ सरस्वतेऽनुमन्यस्व ॥ इत्युत्तरतः प्राचीनम् ॥ देव सवितः प्रसुव ॥ इति समन्तं प्रदक्षिणम् ॥ समन्तमेव वा तूष्णीं परिषिञ्चति ॥ अथाग्निमैन्द्रादिक्रमेण " ॐ अग्नये नमः । जातवेदसे नमः । सहोजसे नमः । अजिराप्रभवे नमः । वैश्वानराय नमः । नर्यापसे नमः । पङ्क्तिराधसे नमः । विसर्पिणे नमः " इति गन्धपुष्पाक्षतैरभ्यर्च्य "अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् " इति प्रणमेत् । एवमग्निमलंकृत्येध्ममलंकृत्य, ब्रह्माणञ्चालंकृत्याथेध्माग्रमध्यमूलान्यभिघार्यैकां समिधमिध्मसन्नहनरज्जुं च प्रणीतापात्रे निधाय ॥ " ॐ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य ॥ त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्या ँ आविवेश" इत्यग्निं ध्यात्वा " स्वाहा " इत्यग्नाविध्ममभ्यादधाति ॥ अग्नय इदं न मम ॥ इत्युद्देशत्यागः ॥

---

१. " स्वाहाकृतिः स्यात्समिधस्तु मन्त्रः " इति कल्पसारे ॥

२. " ऊर्ध्वे द्वे समिधे ततश्च समिधं हुत्वा जुषस्वेत्युपस्थायासिञ्चतु दक्षिणाद्यमदितेन्वाद्यैर्वैकारान्तकैः " इति प्र० रत्ने ।

३. " कृताञ्जलिरुपस्थाय जुषस्व न इति ब्रुवन् । परिषिच्य क्रमादष्टमूर्तिभिर्वह्निमर्चयेत् " इति प्र० तिलके । मूर्तयश्चारण्यके प्रोक्ताः– " अग्निश्च जातवेदाश्च सहोजा अजिराप्रभुः । वैश्वानरो नर्यापाश्च पङ्क्तिराधाश्च सप्तमः ॥ विसर्पे वाष्टमोऽग्नीनाम् " इति ॥

४. " जुषस्वनादींश्च विधाय चालंकृत्येध्ममभ्यर्च्य विधिं समर्चयेत् । ततस्त्वनुज्ञाप्य निधाय चानूयाजञ्च चत्वारिमनुस्मृतान्ते ॥ स्वाहेति वह्नौ जुहुयाच्च केवलम् " इति प्र० तिलके ।

अथाघारावाघारयति स्रुवेणाज्यमादाय ॥ ॐ प्रजापतये स्वाहा ॥ इति मनसा उत्तरपरिधिसन्धिमारभ्याग्निमध्यपर्यन्तमक्षणया सन्ततञ्जुहुयात् । प्रजापतय इदं० ॥ ततः स्फ्यावेष्टितेनेध्मसन्नहनेन परिधीन्मूलादारभ्याग्रपर्यन्तं सम्मार्ष्टि त्रिर्मध्यमम् ॥ अग्रेणाग्निं पर्याणीय त्रिर्दक्षिणार्ध्यं प्रतिपर्याहृत्य त्रिरुत्तरार्ध्यं सम्मृज्याग्निं च प्राचीनं त्रिः सम्मृज्य तत्प्रणीतापात्रे निधाय ॥ ॐ इन्द्राय स्वाहा ॥ इत्युत्तराघारमुपाँशु दक्षिणपरिधिसन्धिमारभ्याक्षणया सन्ततं पूर्ववत्स्रुवेण जुहोति ॥ इन्द्रायेदं० ॥ अथाज्यभागौ प्रतिमुखं प्रबाहुग्जुहोति— ॐ अग्नये स्वाहा ॥ इत्युत्तरार्धपूर्वार्धे ॥ अग्नय इदं० ॥ ॐ सोमाय स्वाहा ॥ इति दक्षिणार्धपूर्वार्धे ॥ सोमायेदं० ॥ अथाग्निमुखं जुहोति — ॐ युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्सनेमि स्वाहा ॥ जातवेदसेऽग्नय इदं० ॥ ॐ चतस्र आशाः प्रचरन्त्वग्नय इमन्नो यज्ञं नयतु प्रजानन् ॥ घृतं पिन्वन्नजरꣳ सुवीरं ब्रह्म समिद्भवत्याहुतीनाꣳ स्वाहा ॥ घृतं पिन्वते ब्रह्मण इदं० ॥ ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथासदमिद्वृधेऽसन्नप्रायुवो रक्षितारो दिवेदिवे स्वाहा ॥ असन्नप्रायुभ्यो रक्षितृभ्यो देवेभ्य इदं० ॥ ॐ विरूपाक्ष मा विबाधिष्ठा मा विबाध विबाधिथाः ॥ निर्ऋत्यै त्वा पुत्रमाहुः स नः कर्माणि साधय स्वाहा ॥ विरुपाक्षाय निर्ऋतिपुत्रायेदं० ॥ विरुपाक्षमहं यजे निजङ्घꣳ शबलोदरम् । यो मायं परिबाधते श्रियै पुष्ट्यै च नित्यदा तस्मै स्वाहा ॥ विरुपाक्षाय निजङ्घाय शबलोदराय मां परिबाध-

---

१. " बध्वेध्मरज्जुं स्फ्येनैवान्वग्रे मध्यादितः क्रमात् । परिधींस्त्रिस्त्रिः प्राचीनश्चाग्निं सम्मार्ष्टि तान्न वा " इति गृ० संग्रहे ॥

मानायेदं० ॥ ॐ या तिरश्ची निपद्यसेहं विधरणी इति ॥ तां त्वा घृतस्य धारयाग्नौ सꣳराधिनीं यजे स्वाहा ॥ तिर्यङ्-निपद्यमानायै विधरण्यै सꣳराधिन्या इदं० ॥ ॐ सꣳराधिन्यै देव्यै स्वाहा ॥ सꣳराधिन्यै देव्या इदं० ॥ ॐ प्रसाधि-न्यै देव्यै स्वाहा ॥ प्रसाधिन्यै देव्या इदं० ॥ ॐ भूः स्वाहा ॥ अग्नय इदं० ॥ ॐ भुवः स्वाहा ॥ वायव इदं० ॥ ॐ सुवः स्वाहा । सूर्यायेदं० ॥ ॐ भूर्भुवः सुवः स्वाहा ॥ प्रजापतय इदं० ॥ अथ चरूत्सेकप्रायश्चित्तं करिष्ये इति संकल्प्य ॥ ॐ अग्नये स्वाहा ॥ अग्नय इदं० ॥ ॐ यमाय स्वाहा ॥ यमायेदं० ॥ अप उपस्पृश्य ॥ ॐ वरुणाय स्वाहा ॥ वरुणायेदं० ॥ ॐ सोमाय स्वाहा ॥ सोमायेदं० ॥ व्याहृतीश्च हुत्वा आज्येन चरुमाप्याययति— ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा-वाजस्य संगथे ॥ सन्ते पयाꣳसि समुयन्तु वाजाः संवृष्णियान्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवाꣳ-मस्युत्तमानि धिष्व ॥ इति द्वाभ्यामाप्याय्य मिन्दाहुती च जुहुयात् ॥ अनेकदेवतास्थले चरुं पृथक्कृत्य ॥ असुष्मै त्वा मुष्मै त्वेति यथादेवतमभिमृशेत् ॥

अथ स्रुवेण दर्व्यामुपस्तीर्य मेक्षणेन चरुमालोड्यांगुष्ठपर्वमात्रं पूर्वार्धादवदायापरार्धादवद्यति, अभिघारयति, प्रत्यनक्ति, पुरस्तात्स्रुवाहुतिं हुत्वा, पक्कं यथादेवतं पुरोनुवाक्यामनूच्य याज्यया जुहोत्युपरिष्टात्स्रुवाहुतिं च ॥ बहुदेवत्ये कर्मणि

---

१. यस्यै यस्यै दिश्युत्सिच्येत तस्यै तस्यै देवतायै स्रुवाहुतिं जुहुयाद्यदि प्रागग्नये यदि दक्षिणतो यमाय यदि पश्चाद्वरुणाय यद्युत्तरतः सोमायाथ यदि सर्वत एवोत्सिच्येत ताभ्यः सर्वाभ्यो देवताभ्यः स्रुवाहुतीर्जुहुयात् ॥ विदिक्षूत्सेके व्याहृतीर्जुहुयात् उत्सिक्तं चरुमाज्येनाप्याययति ॥ आप्यायस्व सन्ते ॥ इति द्वाभ्यां मिन्दाहुती च जुहुयात् ॥ इति मन्त्रगणाम्नातप्रायश्चित्तसूत्रम् ॥

द्वितीयादिपक्षमपरार्धादवदाय पूर्वार्धादवद्येत् ॥ प्रागपवर्गमुदगपवर्गं वा जुहुयात् ॥ पंचावत्तिनामुपस्तरणं मध्यात्पूर्वार्धादपरार्धाच्चावदानमभिघारणं चेति पंचावदानं, द्वितीयादौ तु मध्यादपरार्धात्पूर्वार्धादवदानमिति विशेषः ॥ यत्रैकैव ऋगाम्नाता स्यात्तत्र तां द्विरभ्यावर्तयेत् ॥ 'तत्सवितुर्वरेण्यं' इत्यनुद्रुत्याम्नातया वा जुहुयात् ॥ अनाम्नातेषु 'भूर्भुवः सुवरोम्' इत्यनुद्रुत्य "तत्सवितुर्वरेण्यम्" इति जुहुयात् ॥ अथोपस्तीर्य सकृदुत्तरार्धाद्बिल्वफलप्रमाणं स्विष्टकृतमवद्यति द्विरभिघारयति न प्रत्यनक्ति ॥ बहुदेवत्ये यावती देवतासंख्या तावदवदानं सकृत्सकृत् ॥ पंचावत्तिनां पंचावत्तसिद्धये उत्तरार्धाद्द्विरवदाय द्विरभिघारणं सकृदवदाय वा त्रिरभिघारणं कार्यम् ॥ अथावत्तं स्विष्टकृतं मेक्षणेन सहांतःपरिधि सादयित्वा यथाम्नातमाज्याहुतीरुपजुहोति[1] ॥ अनाम्नातेषु व्याहृतिभिरुपहुत्य ॥ पुरस्तात्स्रुवाहुतिं हुत्वा स्विष्टकृतमादायोत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति — "ॐ हव्यवाहमभिमातिषाहꣳ रक्षोहणं पृतनासु जिष्णुम् ॥ ज्योतिष्मंतं दीद्यतं पुरंधिमग्निꣳ स्विष्टकृतमाहुवेमा ३ स्विष्टमग्ने अभितत्पृणाहि विश्वादेव पृतना अभिष्य ॥ उरुं नः पंथां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरं न आयुः स्वाहा" इति ॥ अग्नये स्विष्टकृत इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा मेक्षणमग्नौ प्रहृत्याथैनत्सꣳस्रावेणाभिजुहोति स्रुक्स्रुवाभ्याम् ॥ अथ दर्व्यामप आनीय संक्षाळनमंतःपरिधि[2] निनयाति— "वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम् ॥ स नः

---

१. यत्रानेककर्तृकः स्यादुपहोमस्तत्रोद्देशत्यागसौकर्याय "या या यक्ष्यमाणदेवतास्ताः सर्वा अत्र सन्निहिताः संतु ॥ हूयमानद्रव्यं च तत्तद्देवत्यमस्तु" इत्युद्दिश्यातिसृजेदित्याचारः शिष्टैरादृतः ॥

२. "स्थालीपाकेऽतःपरिधि बहिःपरिधि समंत्रकम्" इति गृह्यशेषे ॥

पितरं पितामहं प्रपितामहꣳ सुवर्गे लोके गच्छतु पिन्वमानꣳ स्वधानमः" इति ॥ अग्नये वैश्वानरायेदं० ॥ निर्णिज्य दर्वी निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयति — "इम ꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये ॥ घृतं दुहानामदितिं जनायाग्ने मा हिꣳ सीः परमे व्योमन्" इति ॥ समुद्रायेदं० ॥ अथानूयाजसमिधमभ्याधाय केवलेनेध्मसन्नहनेन परिधीनग्निं च पूर्ववत्सकृत्सकृत्सम्मृज्येध्मसन्नहनं विस्रस्याद्भिः सꣳस्पृश्याग्नावनु प्रहरति— "रुद्राय पशुपतये स्वाहा" इति ॥ रुद्राय पशुपतय इदं० ॥ अप उपस्पृश्य ॥ एतत्कर्म समृध्यर्थं जयादि होमं करिष्ये ॥ सर्वत्र मंत्रादौ प्रणवमनुसंदध्यात् ॥ अथ जयाञ्जुहोति— ॐ चित्तं च स्वाहा ॥ चित्तायेदं०॥ चित्तिश्च स्वाहा ॥ चित्या इदं०॥ आकूतं च स्वाहा ॥ आकूतायेदं०॥ आकूतिश्च स्वाहा ॥ आकूत्या इदं०॥ विज्ञातं च स्वाहा ॥ विज्ञातायेदं०॥ विज्ञानं च स्वाहा ॥ विज्ञानायेदं०॥ मनश्च स्वाहा ॥ मनस इदं० ॥ शक्करीश्च स्वाहा ॥ शक्करीभ्य इदं०॥ दर्शश्च स्वाहा ॥ दर्शायेदं० ॥ पूर्णमासश्च स्वाहा ॥ पूर्णमासायेदं० ॥ बृहच्च स्वाहा ॥ बृहत इदं० ॥ रथंतरं च स्वाहा ॥ रथंतरायेदं० ॥ प्रजापतिर्जयानिंद्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमंत सर्वास्स उग्रः सहिहव्यो बभूव स्वाहा ॥ प्रजापतय इदं० ॥ अथाभ्यातानान् जुहोति— अग्निर्भूतानामधिपतिः स मावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याꣳ स्वाहा ॥ अग्नये भूतानामधिपतय इदं० ॥ इंद्रो ज्येष्ठानामधिपतिः स मावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याꣳ स्वाहा ॥ इन्द्राय ज्येष्ठानामधिपतय इदं० ॥ यमः पृथिव्या अधिपतिः स मावत्वस्मिन्० देवहूत्याꣳ स्वाहा ॥ यमाय पृथिव्या अधिपतय इदं० ॥ अप उपस्पृश्य ॥ वायुरंतरिक्षस्याधिपतिः स मावत्वस्मिन्० देवहूत्याꣳ स्वाहा ॥ वायवेऽन्तरिक्षस्याधिपतय इदं० ॥ सूर्यो दिवोऽधिपतिः स मावत्वस्मिन् ० देवहूत्याꣳ

स्वाहा ॥ सूर्याय दिवोऽधिपतय इदं० ॥ चंद्रमा नक्षत्राणामधिपतिः स मावत्वस्मिन ० हूत्या ॰ स्वाहा ॥ चंद्रमसे नक्षत्राणामधिपतय इदं० ॥ बृहस्पतिर्ब्रह्मणोऽधिपतिः स मावत्वस्मिन्० हूत्या ॰ स्वाहा ॥ बृहस्पतये ब्रह्मणोऽधिपतय इदं० ॥ मित्रः सत्यानामधिपतिः स मावत्वस्मिन्० हूत्या ॰ स्वाहा ॥ मित्राय सत्यानामधिपतय इदं० ॥ वरुणोऽपामधिपतिः स मावत्वस्मिन्० हूत्या ॰ स्वाहा ॥ वरुणायापामधिपतय इदं० ॥ समुद्रः स्रोत्यानामधिपतिः स मावत्वस्मिन्० हूत्या ॰ स्वाहा ॥ समुद्राय स्रोत्यानामधिपतय इदं० ॥ अन्न ॰ साम्राज्यानामधिपति तन्माऽवत्वस्मिन्० हूत्या ॰ स्वाहा ॥ अन्नाय साम्राज्यानामधिपतिन इदं० ॥ सोम ओषधीनामधिपतिः स मावत्वस्मिन्० हूत्या ॰ स्वाहा ॥ सोमायौषधीनामधिपतय इदं० ॥ सविता प्रसवानामधिपतिः स मावत्वस्मिन्० हूत्या ॰ स्वाहा ॥ सवित्रे प्रसवानामधिपतय इदं० ॥ रुद्रः पशूनामधिपतिः स ० हूत्या ॰ स्वाहा ॥ रुद्राय पशूनामधियपत इदं० ॥ अप उपस्पृश्य ॥ त्वष्टा रूपाणामधिपतिः स मा० हूत्या ॰ स्वाहा ॥ त्वष्ट्रे रूपाणामधिपतय इदं० ॥ विष्णुः पर्वतानामधिपतिः स मा० हूत्या॰ स्वाहा ॥ विष्णवे पर्वतानामधिपतय इदं० ॥ मरुतो गणानामधिपतयस्ते माऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्या ॰ स्वाहा ॥ मरुद्भ्यो गणानामधिपतिभ्य इदं० ॥ इति सप्तदश स्रुवाहुतीर्हुत्वा हुत्वा वाचयति— " पितरः पितामहाः परेवरे ततास्ततामहा इहमावत " इति ॥ स्वकर्तृकहोमे त्विमं मंत्रं प्राचीनावीती दक्षिणां दिशं पश्यन् जपित्वाप उपस्पृशेत् ॥ अथ राष्ट्रभृतो जुहोति— ऋताषाडृतधामाग्निर्गंधर्वः स इदं ब्रह्मक्षत्रं पातु

१. " अस्मिन्ब्रह्मस्ततो ब्रूयादिति सप्तदशस्वपि ॥ जपेत् पितर इत्यादि यजुर्होमे हुते हुते " इति गृ० संग्रहे ॥

२. " राष्ट्रभृत्सु यथालिंगमनुषंगो न वा ततः ॥ स्वाहाकारद्वयांते वा होमः प्रत्येकमेव वा " इति कल्पसारे ॥

तस्मै स्वाहा ॥ ऋतासाहे ऋतधाम्नेऽग्नये गंधर्वायेदं० ॥ तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्मक्षत्रं पांतु ताभ्यः स्वाहा ॥ ओषधीभ्योऽप्सरोभ्य ऊर्भ्य इदं न मम ॥ सꣳहितो विश्वसामा सूर्यो गंधर्वः स इदं ब्रह्मक्षत्रं पांतु तस्मै स्वाहा ॥ सꣳहिताय विश्वसाम्ने सूर्याय गंधर्वायेदं० ॥ तस्य मरीचयोऽप्सरस आयुवो नाम ता इदं ब्रह्मक्षत्रं पांतु ताभ्यः स्वाहा ॥ मरीचिभ्योऽप्सरोभ्य आयुभ्य इदं० ॥ सुषुम्नः सूर्यरश्मिश्चंद्रमा गंधर्वः स इदं० तस्मै स्वाहा ॥ सुषुम्नाय सूर्यरश्मये चंद्रमसे गंधर्वायेदं० ॥ तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम ता इदं० ताभ्यः स्वाहा ॥ नक्षत्रेभ्योऽप्सरोभ्यो बेकुरिभ्य इदं० ॥ भुज्युः सुपर्णो यज्ञो गंधर्वः स इदं० तस्मै स्वाहा ॥ भुज्यवे सुपर्णाय यज्ञाय गंधर्वायेदं० ॥ तस्य दक्षिणा अप्सरसस्तवा नाम ता इदं० ताभ्यः स्वाहा ॥ दक्षिणाभ्योऽप्सरोभ्यस्तवाभ्य इदं० ॥ प्रजापतिर्विश्वकर्मा मनो गंधर्वः स इदं० तस्मै स्वाहा ॥ प्रजापतये विश्वकर्मणे मनसे गंधर्वायेदं० ॥ तस्यर्क्सामान्यप्सरसो वह्नयो नाम ता इदं० ताभ्यः स्वाहा ॥ ऋक्सामभ्योऽप्सरोभ्यो वह्निभ्य इदं० ॥ इषिरो विश्वव्यचा वातो गंधर्वः स इदं० तस्मै स्वाहा ॥ इषिराय विश्वव्यचसे वाताय गंधर्वायेदं० ॥ तस्यापोऽप्सरसो मुदा नाम ता इदं० ताभ्यः स्वाहा ॥ अद्भ्योऽप्सरोभ्यो मुदाभ्य इदं० ॥ भुवनस्यपते यस्य त उपरि गृहा इह च ॥ स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिꣳ स्वाहा ॥ भुवनस्य पत्य इदं० ॥ परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वः स इदं० तस्मै स्वाहा ॥ परमेष्ठिनेऽधिपतये मृत्यवे गंधर्वायेदं० ॥ तस्य विश्वमप्सरसो भुवो नाम ता इदं० ताभ्यः स्वाहा ॥ विश्वस्मा अप्सरोभ्यो भूभ्य इदं० ॥ सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गंधर्वः स इदं० तस्मै स्वाहा ॥ सुक्षितये सुभूतये भद्रकृते सुवर्वते पर्जन्याय गंधर्वायेदं० ॥ तस्य विद्युतोऽप्सरसो रुचो

नाम ता इदं० ताभ्यः स्वाहा॥ विद्युद्भ्योऽप्सरोभ्यो रुग्भ्य इदं०॥ दूरे हेतिरमृडयो मृत्युर्गंधर्वः स इदं० तस्मै स्वाहा॥ दूरे हेतयेऽमृडयाय मृत्यवे गंधर्वायेदं०॥ तस्य प्रजा अप्सरसो भीरुवो नाम ता इदं० ताभ्यः स्वाहा॥ प्रजाभ्योऽप्सरोभ्यो भीरुभ्य इदं०॥ चारुः कृपणकाशी कामो गन्धर्वः स इदं० तस्मै स्वाहा॥ चारवे कृपणकाशिने कामाय गंधर्वायेदं०॥ तस्याधयोऽप्सरसः शोचयंतीर्नाम ता इदं० ताभ्यः स्वाहा॥ आधिभ्योऽप्सरोभ्यः शोचयंतीभ्य इदं०॥ स नो भुवनस्य पते यस्य त उपरि गृहा इह च॥ उरुब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा॥ भुवनस्य पत्ये ब्रह्मण इदं०॥ इति द्वाविंशति स्रुवाहुतीर्हुत्वाथामात्यहोमाञ्जुहोति-- ॐ यद्देवादेव हेडनम्॥ देवासश्चकृमा वयम्॥ आदित्यास्तस्मान्मामुंचत॥ ऋतस्यर्तेन मामुत स्वाहा॥ देवेभ्य आदित्येभ्य इदं०॥ देवा जीवन काम्या यत्॥ वाचाऽनृतमूदिम॥ अग्निर्मा तस्मादेनसः॥ गार्हपत्यः प्रमुंचतु॥ दुरिता यानि चकृम॥ करोतु मामनेनसꣳ स्वाहा॥ अग्नये गार्हपत्यायेदं०॥ ऋतेन द्यावापृथिवी॥ ऋतेन त्वꣳ सरस्वति॥ ऋतान्मा मुंचताꣳहसः॥ यदन्य कृतमारिम स्वाहा॥ द्यावापृथिवीभ्याꣳ सरस्वत्या इदं०॥ सजातशꣳ सादुत वा जामि शꣳ सात्॥ ज्यायसः शꣳसादुत वा कनीयसः॥ अनाज्ञातं देवकृतं यदेनः॥ तस्मात्वमस्माञ्जातवेदो मुमुग्धि स्वाहा॥ अग्नये जातवेदस इदं०॥ यद्वाचा यन्मनसा॥ बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम्॥ शिश्नैर्यदनृतं चकृमा वयम्॥ अग्निर्मा तस्मादेनसः० अनेनसꣳ स्वाहा॥ अग्नये गार्हपत्यायेदं०॥ यद्धस्ताभ्यां चकर किल्बिषाणि॥ अक्षाणां वग्नुमुपजिघ्नमानः॥ दूरेपश्या च राष्ट्रभृच्च॥ तान्यप्सरसावनुदत्तामृणानि स्वाहा॥ दूरे पश्यायै राष्ट्रभृतेऽप्सरोभ्यामिदं०॥ अदीव्यन्नृणं यदहं चकार॥ यद्वादास्यन्सञ्जगारा जनेभ्यः॥ अग्निर्मा तस्मादेनसः० अनेनसꣳ स्वाहा॥

अग्नये गार्हपत्यायेदं० ॥ यन्मयि माता गर्भे सति ॥ एनश्चकार यत्पिता ॥ अग्निर्मा तस्मादेनसः० अनेनसꣳ स्वाहा ॥
अग्नये गार्हपत्यायेदं० ॥ यदा पिपेष मातरं पितरम् ॥ पुत्रः प्रमुदितो धयन् ॥ अहिꣳसितौ पितरौ मया तत् ॥
तदग्ने अनृणो भवामि स्वाहा ॥ अग्नय इदं० ॥ यदंतरिक्षं पृथिवीमुतद्याम् ॥ यन्मातरं पितरं वाजिहिꣳसिम ॥ अग्निर्मा
तस्मादेनसः ० अनेनस ꣳ स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ यदाशसा निशसा यत्पराशसा ॥ यदेनश्चकृमा नूतनं यत्पु-
राणम् ॥ अग्निर्मा तस्मादेनसः० अनेनस ꣳ स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ अतिक्रामामि दुरितं यदेनः ॥ जहामि रिप्रं
परमे सधस्थे ॥ यत्र यंति सुकृतो नापि दुष्कृतः ॥ तमारोहामि सुकृतान्नुलोकꣳ स्वाहा ॥ अग्नये सुकृताँल्लोकायेदं० ॥ त्रिते
देवा अमृजतैतदेनः ॥ त्रित एतन्मनुष्येषु मामृजे ॥ ततो मा यदि किंचिदानशे ॥ अग्निर्मा तस्मादेनसः० अनेनसꣳ स्वाहा ॥
अग्नये गार्हपत्यायेदं० ॥ दिवि जाता अप्सु जाताः ॥ या जाता ओषधीभ्यः ॥ अथो या अग्निजा आपः ॥ ता नः शुंधन्तु
शुन्धनीः स्वाहा ॥ अद्भ्यः शुन्धनीभ्य इदं० ॥ यदापो नक्तं दुरितं चराम ॥ यद्वा दिवा नूतनं यत्पुराणम् ॥ हिरण्यवर्णास्तत
उत्पुनीतनः स्वाहा ॥ अद्भ्यो हिरण्यवर्णाभ्य इदं० ॥ इमं मे वरुण श्रुधीहवमद्या च मृडय ॥ त्वामवस्युराचके स्वाहा ॥ वरुणायेदं० ॥
तत्वा यामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशꣳसमा न आयुः प्रमोषीः स्वाहा ॥
वरुणायेदं० ॥ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳ-
सि प्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ॥ अव यक्ष्व नो

वरुण॑ᳶ रराणो वीहि मृडीक॑ᳶ सुहवा न एधि स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ त्वमग्ने अयास्यया सन्मनसाहितः ॥ अयासन् हव्यमूहिषेऽयानो धेहि भेषज॑ᳶ स्वाहा ॥ अग्नये अयस इदं० ॥ इत्यातादनुवाकस्य प्रत्यृचम् ॥ अथ चतुर्गृहीतेन वा स्रुवेण वा प्राजापत्याञ्जुहोति – प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वय॑ᳶ स्याम पतयो रयीणा॑ᳶ स्वाहा ॥ प्रजापतय इदं० ॥ इति ॥ अथेध्मप्रव्रश्चनान्यभ्याधाय प्रायश्चित्तानि जुहोति–"अस्मिन्होममध्ये द्रव्यहविर्मंत्रसंस्काराणां न्यूनातिरिक्तप्रायश्चित्ताज्याहुतीर्होष्ये" इति संकल्प्य–मनोज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञ॑ᳶ समिमन्दधातु ॥ या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहा ॥ मनसे ज्योतिष इदं० ॥ अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि ॥ अयसा मनसा धृतोऽयसा हव्यमूहिषेऽयानो धेहि भेषज॑ᳶ स्वाहा ॥ अग्नये अयस इदं० ॥ यदस्मिन्कर्मण्यंतरगाम मंत्रतः कर्मतो वा ॥ अनयाहुत्या तच्छमयामि सर्वं तृप्यंतु देवा आवृषंतां घृतेन स्वाहा ॥ देवेभ्य इदं० ॥ स्वस्ति न इंद्रो वृद्धश्रवाः

---

१. " अप्रायश्चित्तिको यज्ञो भुज्येत हि सुरेतरैः " इति कल्पसारे ॥

२. आचारप्रावुर्यात्प्रयोगशिखामणौ प्रोक्ता एवात्रोल्लिखिताः ॥ प्र० तिलक–गृ० संग्रहयोस्तु– " न्यूनातिरिक्तदोषाणां प्रायश्चित्तार्थमादरात् ॥ मनस्वतीमयाश्चाग्ने यदस्मिन्स्वस्तिनस्तथा ॥ माता मिंदा व्याहृतिश्च आभिर्गीर्भिरिति क्रमात् ॥ अनाज्ञातं च पुरुषसम्मितो यज्ञ इत्यथ ॥ यत्पाकत्रामहायाश्च व्याहृतीर्जुहुयाद्बुधः ॥ देवेभ्यश्च पितृभ्यश्च भूर्भुवस्वर्महस्तथा ॥ प्रणवांतं यजेद्विद्वानग्नेभूयः पुनस्त्विवति ॥ आज्यार्कां समिधं हुत्वा पुनस्त्वेति पुनर्घृतम् ॥ पवमानः पावकश्च शुचिर्व्रतपतिस्तथा ॥ पथिकृत्तंतुमान्वैश्वानरोऽभिपदपूर्वकाः ॥ सप्तैते स्युश्चतुर्थ्यन्तास्ततः पाद्यादि पंचकम् ॥ यदस्य कर्मण इति हुनेत्स्विष्टकृदादिकम् " इत्येतावत्य एव न्यूनातिरेकप्रायश्चित्ताहुतयो निर्दिष्टाः ॥

स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु स्वाहा ॥ इंद्राय वृद्धश्रवसे पूष्णे विश्ववेदसे तार्क्ष्यायारिष्टनेमये बृहस्पतय इदं० ॥ तत्सवितुः० प्रचोदयात्स्वाहा ॥ सवित्र इदं० ॥ यन्म आत्मनो मिंदाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः स्वाहा ॥ अग्नये जातवेदसे विचर्षणय इदं०॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रो बृहस्पतिः ॥ पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः स्वाहा ॥ अग्नींद्रबृहस्पत्यश्विभ्य इदं०॥ भूः स्वाहा ॥ अग्नय इदं०॥ भुवः स्वाहा ॥ वायव इदं०॥ सुवः स्वाहा ॥ सूर्यायेदं० ॥ भूर्भुवः सुवः स्वाहा ॥ प्रजापतय इदं न मम ॥ इष्टेभ्यः स्वाहा ॥ इष्टेभ्य इदं०॥ वषडनिष्टेभ्यः स्वाहा ॥ वषडनिष्टेभ्य इदं० ॥ भेषजं दुरिष्ट्यै स्वाहा ॥ भेषजं दुरिष्ट्या इदं०॥ निष्कृत्यै स्वाहा ॥ निष्कृत्या इदं०॥ दौराध्यै स्वाहा ॥ दौराध्या इदं० ॥ दैवीभ्यस्तनूभ्यः स्वाहा ॥ दैवीभ्यस्तनूभ्य इदं०॥ ऋध्यै स्वाहा ॥ ऋध्या इदं० ॥ समृध्यै स्वाहा ॥ समृध्या इदं० ॥ यत इंद्र० जहि स्वाहा ॥ इंद्राय मघवत इदं० ॥ स्वस्तिदा विशस्पतिः० अभयंकरः स्वाहा ॥ इंद्रायाभयंकरायेदं० ॥ आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ॥ यदा स्तोतृभ्यो महिगोत्रा रुजासि भूयिष्ठभाजो अधते स्याम स्वाहा ॥ हरिवते वर्धमानायेदं० ॥ अनाज्ञातं यदाज्ञातम् ॥ यज्ञस्य क्रियते मिथु ॥ अग्ने तदस्य कल्पय ॥ त्वꣳ हि वेत्थ यथातथꣳ स्वाहा ॥ अग्नय इदं० ॥ पुरुष सम्मितो यज्ञः ॥ यज्ञः पुरुष सम्मितः ॥ अग्ने तदस्य कल्पय ॥ त्वꣳ हि वेत्थ यथातथꣳ स्वाहा ॥ अग्नय इदं० ॥ यत्पाकत्रा मनसा दीन दक्षान ॥ यज्ञस्य मन्वते मर्तासः ॥ अग्निष्टद्धोता क्रतु-विद्विजानन् ॥ यजिष्ठो देवाꣳ ऋतुशो यजाति स्वाहा ॥ अग्नय इदं० ॥ भूरग्नये च पृथिव्यै च महते च स्वाहा ॥ अग्नये पृथिव्यै महत इदं० ॥ भुवो वायवे चांतरिक्षाय च महते च स्वाहा ॥ वायवेऽन्तरिक्षाय महत इदं० ॥ सुवरादित्याय च दिवे च महते च

स्वाहा ॥ आदित्याय दिवे महत इदं० ॥ भूर्भुवः सुवश्चंद्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ॥ चंद्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदं०॥ पाहि नो अग्न एनसे स्वाहा ॥ अग्नय इदं० ॥ पाहि नो विश्ववेदसे स्वाहा ॥ विश्ववेदस इदं० ॥ यज्ञं पाहि विभावसो स्वाहा ॥ विभावसव इदं० ॥ सर्वं पाहि शतक्रतो स्वाहा ॥ शतक्रतव इदं० ॥ पाहि नो अग्न एकया ॥ पाह्युत द्वितीयया ॥ पाह्यूर्जं तृतीयया ॥ पाहि गीर्भिश्चतसृभिर्वसो स्वाहा ॥ अग्नय इदं० ॥ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि ॥ सप्त होत्राः सप्तधा त्वा यजंति सप्त योनीरापृणस्वा घृतेन स्वाहा ॥ अग्नये सप्तवत इदं० ॥ पुनस्त्वादित्या रुद्रा वसवः समिंधतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वं तनुवो वर्धयस्व सत्याः संतु यजमानस्य कामाः स्वाहा ॥ इति घृतानुषिक्तां[१] समिधं हुत्वा पुनस्तेनैवाज्याहुतिं जुहुयात् -- पुनस्त्वादित्या० कामाः स्वाहा ॥ वसुनीथायेदं० ॥ ब्रह्म जज्ञानं० विवः स्वाहा ॥ ब्रह्मण इदं० ॥ ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचः ॥ ब्रह्म यज्ञानां हविषामाज्यस्य ॥ अतिरिक्तं कर्मणो यच्च हीनम् ॥ यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् ॥ स्वाहा कृताहुतिरेतु देवान्स्वाहा ॥ देवेभ्य इदं० ॥ आश्रावितमत्याश्रावितम् ॥ वषट्कृतमत्यनूक्तं च यज्ञे ॥ अतिरिक्तं कर्मणो यच्च हीनम् ॥ यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् ॥ स्वाहा कृताहुतिरेतु देवान् स्वाहा ॥ देवेभ्य इदं० ॥ यद्वो देवा अति पादयानि ॥ वाचा चित्प्रयतं देव हेडनम् ॥ अरायो अस्माँ अभिदुच्छुनायते ॥ अन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहा ॥ मरुद्भ्य इदं० ॥ ततम्म आपस्तदुताय ते पुनः ॥ स्वादिष्ठाधीतिरुचथाय शस्यते ॥ अयं समुद्र उत विश्वभेषजः ॥

---

१. " पुनस्त्वेति हुनेदेधः पुनस्त्वेति हुनेद्धृतम् " इति गृ० संग्रहे ॥

स्वाहाकृतस्य समुंतृप्णुतर्भुवः स्वाहा ॥ ऋभुभ्य इदं० ॥ जातवेदसे सुनवाम सोममरातीयतो निर्दहाति वेदः ॥ स नः पर्षदति दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः स्वाहा ॥ जातवेदसेग्नय इदं० ॥ गणानां त्वा० सादन ँ स्वाहा ॥ गणपतय इदं० ॥ क्षेत्रस्य पतिना० मृडातीदृशे स्वाहा ॥ क्षेत्रपालायेदं न मम ॥ वास्तोष्पते प्रति० चतुष्पदे स्वाहा ॥ वास्तोष्पतय इदं० ॥ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् ॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात्स्वाहा ॥ त्र्यंबकायेदं० ॥ व्याहृतीश्च हुत्वा सौविष्ट-कृतमुत्तरार्धपूर्वार्धे जुहोति— "यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान् सर्वँ स्विष्टँ सुहुतं करोतु मेऽग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामाना ँ समर्धयित्रे स्वाहा" इति ॥ अग्नये स्विष्टकृत इदं० ॥ अथ स्रुवेण मध्यदक्षिणोत्तरान्परिधीन् क्रमेणानक्ति ॥ प्रागादितः परिस्तरांद्बर्हिः समुल्लिप्याज्यस्थाल्यां प्रस्तरवदग्रमध्यमूलान्यक्त्वा बर्हिरेकं पृथक्कृत्याग्रादारभ्यामूलं प्राञ्चं दाहयन्नेव प्रास्येत् ॥ पृथक्कृतमपि तथैव प्रास्य मध्यमं परिधिमनुप्रहराति ॥ इतरा-वपि युगपत्प्रहृत्योर्ध्वे समिधौ च प्रास्याथैनान्स्सँस्रावेणाभि जुहोति "वसुभ्यो रुद्रेभ्य आदित्येभ्यः सँस्रावभागेभ्यः स्वाहा" इति ॥ वसुभ्यो० सँस्रावभागेभ्य इदं० ॥ तच्छंयोरावृणीमहे० चतुष्पदे स्वाहा ॥ शंयव इदं० ॥ अथ सांगतासिध्यर्थं सर्वप्रायश्चित्तं

१. "समज्य परिधीन्दर्भान् प्रस्तरेभ्यो विलुप्य च ॥ अग्रं मध्यं च मूलं च घृतस्थाल्यां समज्य च ॥ बर्हिरेकं पृथक्कृत्य ततोऽग्नौ प्रस्तरं क्षिपेत् ॥ अग्रादारभ्य च प्रांचमूर्ध्वाग्रं न च कम्पयेत् ॥ न तिर्यक्न बहिर्ध्वस्तं हस्तेनैव प्रतिक्षिपेत् ॥ आमूलाग्राद्दहन्प्रास्येत्पृथक्कृतकुशं ततः" इति गृ० संग्रहे ॥ २. "शंयुवाकं च सर्वत्र हुनेद्धोमावसानके" इति प्र० तिलके ॥

जुहुयात् ॥ ॐ भूर्भुवः सुवः स्वाहा ॥ प्रजापतय इदं० ॥ नवग्रहादिशांतिकपौष्टिकादिहोमेषु पूर्णाहुतिं जुहुयात्— ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् ॥ कविꣳ सम्राजमतिथिं जनानामासन्नापात्रं जनयंत देवाः स्वाहा ॥ मूर्धाग्नय इदं० ॥ देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वातेधाः स्वाहा ॥ देवेभ्यो गातुविद्भ्य यज्ञाय परमात्मन इदं० ॥ अत्र हुतशेषप्रदानं प्राशनं चान्यानि तत्तत्कर्मसु विहितानि यथाम्नातं कृत्वा पूर्ववज्जुषस्व न इत्याद्यग्निं परिषिंचति – " अदिते ऽन्वमꣳस्थाः ॥ अनुमते ऽन्वमꣳस्थाः ॥ सरस्वते ऽन्वमꣳस्थाः ॥ देव सवितः प्रासावीः " इति ॥ अथैनꣳ समिधमाधायोपतिष्ठते — " यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् ॥ यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् ॥ यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासम् ॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयींद्र इंद्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु " इति षोढाविहितेनोपस्थायोपविश्य " मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ॥ वीरान्मा नो रुद्रभामितोवधीर्हविष्मंतो नमसा विधेमते " इत्याग्नेयं भस्म गृहीत्वांगुष्ठोपकनिष्ठिकाभ्यां क्रमेणांगेषु

१. नवग्रहे— " मूर्धानं दिवोअरतिम्, इति पूर्णां हुत्वा " इति गृ० शेषे ॥ " संस्रावं घृतपात्रं तु मानार्धघृतपूरितम् ॥ तिष्ठन्नीत्वाऽऽगलं तच्च्युतस्रुवधारा यथानिशम् ॥ देया पूर्णाहुतिरब्ध्यादिनाम्नौ दक्षिणार्चिषि " इति गृ० संग्रहे ॥ " तत उत्थाय संस्राव्य देवा गातुविदस्त्विति " इति प्र० तिलके ॥ २. " स्त्रीमूर्धहोमं हुतशेषदानं संप्राशनं चान्यदपीदृशं यत ॥ कुर्वीत सर्वं तदनुक्तकाले होमे समाप्ते परिषेकतः प्राक् " इति प्र० तिलके ॥ " ओषध्यादिवद्वल्लिहरणं प्राक्परिषेचनाध्दुतशेषप्रदानं प्राशनं चैवमेव मूर्ध्नि संस्रावहोमः प्रदक्षिणं चान्यत्रोपनयनात् " इति गृह्यशेषे ॥ " हुतशेषनिधानं च देवतावाहनं तथा ॥ अग्नेः पुरस्तात्कुर्वीत पित्र्ये दक्षिणतः क्रिया " इति गृ० संग्रहे ॥

धारयेत् — "ओजोऽसि" इति ललाटे ॥ "सहोऽसि" इति कण्ठे ॥ "बलमसि" इति दक्षिणबाहुमूले ॥ "भ्राजोऽसि" इति कण्ठपृष्ठे ॥ "देवानां धाम नामासि" इति नाभौ ॥ "विश्वमसि विश्वायुः" इति हृदये ॥ "सर्वमसि सर्वायुरभि भूः" इति मूर्ध्नि ॥ अथाग्नेः पश्चाद्बर्हिषि पूर्णपात्रं निधायाभिमृशन् जपति —"सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः" इति ॥ अथ दिशो व्युन्नयाति — "प्राच्यां दिशि देवा ऋत्विजो मार्जयंताम्[2]॥ दक्षिणायां दिशि मासाः पितरो मार्जयंताम् ॥ प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् ॥ उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् ॥ ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम्" इति ॥ अतिशिष्टाः पराचीर्निनयति — "समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत ॥ अच्छिद्रः प्रजया भूयासं मा परासेचिमत्पयः" इति ॥ ताभिरद्भिर्दंपती प्रोक्षयेत् ॥ अत्र यजमानस्य वामपार्श्वस्थितपत्न्यंजलौ "समुद्रं वः" इति पूर्णपात्रजलं प्रत्यङ्मुखं निषिच्य तज्जलैर्यजमानं पत्नीं चाचार्यः प्रोक्षेत् ॥ पत्नी तु तज्जलं बर्हिषि निषिंचेत् ॥ अथवा यजमान एवोत्तानीकृतस्ववामपाणिं बर्हिषि निधाय तत्र दक्षिणपाणिना पूर्णपात्र-

१. अत्र ललाटाद्यंगक्रमः प्रयोगग्रंथात्संगृहीतः । २. "प्रणीतापात्रमुद्वास्य सदसीत्यादि मंत्रतः ॥ प्रागादि मार्जयेत्प्राच्यामित्यादि ब्रह्मणे वरम् ॥ दत्वा चोद्वास्य च विधिं भूर्भुवः सुवरोमिति ॥ कूर्चं चेद्धोजयेद्विप्रं सदस्येभ्यश्च गां तथा ॥ संस्राव्यावभृथेनाथ समुद्रमिति दंपती" इति प्र० तिलके ॥

जलमासिच्य ता आपः समुद्रं गच्छंतीति ध्यायंस्ताभिरात्मानं पत्नीं च प्रोक्षेदिति विशेषः प्रोक्तः प्र० पारिजाते ॥ अथ ब्रह्मणे- " ब्रह्मन् वरं ते ददामि " इति गां चरुशेषं सघृतं वा दत्वा तं प्रणिपत्य विसर्जयेत् ॥ सदस्येभ्यश्च धेनुमृषभमनड्वाहं वा यथाशक्ति दद्यात् । ततः षोडशोपचारैर्यज्ञपुरुषमभ्यर्च्य " अग्ने नय० अग्नये घृतार्चा ॥ सकृत्ते अग्ने नमः ॥ द्विस्ते नमः ॥ त्रिस्ते नमः ॥ चतुस्ते नमः ॥ पंचकृत्वस्ते नमः ॥ दशकृत्वस्ते नमः ॥ शतकृत्वस्ते नमः ॥ आसहस्रकृत्वस्ते नमः ॥ अपरिमित कृत्वस्ते नमः ॥ नमस्ते अस्तु मा मा हिं ँ सीः ॥ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ॥ अन्यं ते अस्मत्तपंतु हेतयः पावको अस्मभ्यं ँ शिवो भव ॥ नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये ॥ नम आहवनीयाय महावेद्यै नमो नमः ॥ कांडद्वयोपपाद्याय कर्मब्रह्मस्वरूपिणे ॥ स्वर्गापवर्गदात्रे च यज्ञेशाय नमो नमः ॥ यज्ञेशाच्युत गोविंद माधवानंत केशव ॥ कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः " ॥ इति प्रदक्षिणनमस्कारान्कृत्वा " मंत्रहीनं क्रियाहीनं भक्तिहीनं हुताशन ॥ यद्धुतं तु मया देव परिपूर्णं तदस्तु मे ॥ अज्ञानाद्वा प्रमादाद्वा वैकल्यात्साधनस्य वा ॥ यन्न्यूनमतिरिक्तं च तत्सर्वं क्षंतुमर्हसि ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ॥ आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन " इति संप्रार्थ्य ॥ " यस्य स्मृत्या च नामोक्त्या तपोहोमक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् " इति विष्णुं स्मृत्वा ॥ " अनेनामुकहोमकर्मणा श्रीपरमेश्वरः प्रीयताम् " इति कर्मेश्वराय समर्प्य " गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने पुरुषोत्तम ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन " इत्यग्निमुद्वासयेत् ॥ इत्येष सर्वकर्मसाधारण आधारवान् दर्वीहोमः ॥

## ॥ अथाग्निहोत्रिकविधिः ॥

( बो. गृ. प. सू. २. १ ) " अथात आग्निहोत्रिकं व्याख्यास्यामः । सर्वमेवैतत्स्वाहाकारप्रदानं कुर्यादिति सिद्धम् । आ परिधानात्कृत्वा ' अमुष्यै स्वाहा ' इति दैवतं जुहोति । अग्निस्स्विष्टकृद्द्वितीयः । द्विर्जुहोति द्विर्निमार्ष्टि द्विः प्राश्नात्युत्सृप्याऽऽ-चामति निर्लेढि इति । एष आग्निहोत्रिकः " ॥ ( बो. गृ. सू. १. ५ ) " अथापरः— परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान् मन्त्रान् समनुद्रुत्य सकृदेवाहुतिं जुहोति ॥ अग्निस्स्विष्टकृद्द्वितीयः ॥ द्विर्जुहोति द्विर्निमार्ष्टि द्विः प्राश्नात्युत्सृप्याऽऽचामति निर्लेढि इत्येष आग्निहोत्रिकः " इति ॥ कारिकाश्च— " अथापरः समिध्याग्निं पर्युक्ष्यास्तीर्य दर्भकैः । आज्यस्थालीं स्रुवं चैव स्रुचं च समिधं तथा ॥ प्रोक्षणीं बर्हिरित्येवं कूर्चे पात्राणि सादयेत् । प्रोक्ष्य तानि पवित्राभ्यां पूतमाज्यं निरूप्य तत् ॥ संस्कृत्य स्रुक्स्रुवौ मृष्ट्वा स्रुचं कूर्चे निधाय च । चतुराज्यं गृहीत्वास्यां समिधं प्रास्य चोपरि ॥ परिषिच्य निधायाग्नौ समिधं चान्तयोः स्पृशेत् । अपः स्पृष्ट्वा समिध्येव जुहुयादपराधतः ॥ प्रधानमंत्रा यावन्तश्चिकीर्षितस्य कर्मणः । तानुक्त्वाऽनुच्छ्वसन्नन्ते सर्वेषामिति निश्चयः ॥ सकृत्स्रुचं तां सन्ताप्य ततः स्विष्टकृदाहुतिः । सन्ताप्य चैतां त्रिः कूर्चे निधायाथ स्पृशेद्घृतम् ॥ प्राच्योत्तानेन हस्तेन सम्मृज्यात्कूर्च उत्तरे ॥ पूर्वाह्णिकी क्रिया चेत्स्यादथ चेदन्यकालिका । प्रत्यग्गतेन हस्तेन नीचा तद्वन्निमार्जयेत् ॥ प्राचीनावीतवांस्तद्वत्प्रमृज्यात्कूर्चदक्षिणे । सँस्पृश्यापो द्विरङ्गुल्या तत्प्राश्याचम्य भक्षयेत् ॥ उदङ्मुखः स्रुचैवैतत्स्पृष्ट्वा प्रागूर्ध्वदण्डया । आचम्य दर्भैर्निर्णिज्य स्रुचं निष्टप्य चोत्सृजेत् ॥ आग्निहोत्रिक एष स्यात् " इति गृ० सङ्ग्रहे ॥

अथ प्रयोगः॥ स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य "अमुकहोमं करिष्ये, अमुकहोमः कर्म, आग्निहोत्रिकं तन्त्रं, अमुको नामाग्निः, अमुको देवता, आज्यं हविः, अग्निः स्विष्टकृत्, सद्यो यक्ष्ये" इति सङ्कल्प्याग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्याऽऽज्यस्थालीं स्रुवं स्रुचं समिधं प्रोक्षणीं बर्हिश्चेति कूर्चे पात्राण्यासाद्य संस्कृताभिः प्रोक्षणीभिः प्रोक्ष्याज्यं संस्कृत्य स्रुवं स्रुचं च संमृज्य कूर्चे स्रुचं निधाय तस्यां चतुर्गृहीतमाज्यं गृहीत्वात्रैता॰ समिधं निधायाग्निं परिषिच्यालङ्कृत्याथैता॰ समिधमग्नावभ्याधायाऽऽद्यन्तयोः स्पृष्ट्वाप उपस्पृश्य तस्यामादीप्तायामुद्दिष्टकर्मणः प्रधानमन्त्रान्सर्वाननुच्छ्वसन्ननुद्रुत्य सर्वान्ते स्वाहाकारमनुसन्धाय समिधोपरार्धे प्रथमामाहुतिं स्रुवपरिमितां जुहोति॥ अमुकदेवताभ्य इदं न ममेत्युद्देशत्यागः॥ ततः स्रुचं सकृत्सन्ताप्यावशिष्टात् "अग्नये स्विष्टकृते स्वाहा" इति स्रुवद्वयपरिमितां द्वितीयामाहुतिं समिध्येव पूर्वार्धे जुहोति॥ अग्नये स्विष्टकृत इदं०॥ स्रुचं त्रिः सन्ताप्य कूर्चे निधाय पूर्वाह्णिके कर्मणि प्राचोत्तानेन पाणिना स्रुग्बिलस्थघृतमूर्ध्वमुन्मृज्योत्तरार्धे कूर्चे लेपमुन्मार्ष्टि॥ अन्यकालिके तु कर्मणि प्रतीचा नीचा पाणिना स्रुग्बिलमवाचीनमवमृज्य कूर्चे लेपं निमार्ष्टि॥ एवमेव प्राचीनावीती दक्षिणार्धे सम्मृज्याप; उपस्पृश्य यज्ञोपवीती स्रुक्स्थं हुतावशिष्टघृतं द्विरङ्गुल्या प्राश्याप आचम्योदङ्मुखः प्राचीनदण्डया स्रुचा भक्षयित्वाऽऽचम्य दर्भैः स्रुचं निर्णिज्य निष्टप्याद्भिः पूरयित्वा प्रायश्चित्तार्थं मिन्दाहुतीर्व्याहृतीश्च हुत्वोत्तरपरिषेकादि शेषं समाप्यापो निनयेत्॥ इत्याग्निहोत्रिकप्रयोगः॥

अथापूर्वविधि॥ (बो. गृ. सू. १·४) "अथापरः- परिसमूह्य पर्युक्ष्य परिस्तीर्य प्राकृतेन हविषा यावदाम्नातमाहुतीर्जुहोत्येष ह्यपूर्वः"॥ (बो. गृ. प. सू. २·१) "अथातोऽपूर्वं व्याख्यास्यामः। 'सायंप्रातर्दशहोतारं जुहुयात्पर्वसु चतुर्होतारमाग्रयणेष्वज्यानीः चातुर्मास्येषु पञ्चहोतारं पशुबन्धे षड्ढोतारमृतुमुख ऋतुमुखीयं सोमे सप्तहोतारम्' इति 'पयसा दशहोतारं जुहुयादन्नेन चतुर्होतारं पायसेनाज्यानीः पृषदाज्येन पञ्चहोतारमामिक्षया षड्ढोतारमाज्येन ऋतुमुखीयं सोमेन सप्तहोतारं'

इति । स एष औपासननिष्ठानां याथातथ्यदर्शिनां निरीप्सितानां श्रद्दधानानामपूर्वो होमः प्रजासंस्कारार्थो वा किञ्चिज्ज्ञानां प्राकृतेन हविषा यत्कामयते तज्जुहोति हुतमेवास्य तद्भवति " ॥ इत्यपूर्वविधिः ॥

अथाऽऽपूर्विकाविधिः ॥ ( बो. गृ. शे. सू. १·३ ) " परिसमूह्य पर्युक्ष्य परिस्तीर्य परिषिच्योपसमाधायाऽलङ्कृत्य यावदाम्नातमाहुतीर्जुहोत्याद्यन्तयोर्व्याहृतीभिराज्याहुतीः परिधानं प्रणीताप्रणयनं ब्रह्मोपवेशनश्च न विद्यते विद्यते वा " ॥ अस्य विवरणं गृ० सङ्ग्रहे— " आपात्रासादनात्तद्वत्पात्राण्येतानि सादयेत् । आज्यस्थालीं स्रुवञ्चैव चरुस्थालीं समेक्षणाम् ॥ दर्वींञ्च प्रोक्षणीं बर्हिश्चतस्रस्समिधस्तथा । संस्कृत्य प्रोक्षणीं प्रोक्ष्य सादयेत्पूर्ववद्धविः ॥ तद्द्रव्यकं हविर्ज्ञेयं यद्द्रव्यं कर्म तद्भवेत् । सिद्धं हविस्तथोद्वास्य स्रुवदर्व्यौ विशोध्य च ॥ परिषिच्य निधायैतास्समिधो जुहुयात्ततः । व्याहृतीरवदायाऽथ स्वैर्मन्त्रैर्जुहुयाद्धविः ॥ मन्त्रोक्तिः पूर्ववज्ज्ञेया देवतानामभिस्तु वा ॥ पुनश्च व्याहृतीर्हुत्वा स्वनाम्ना स्विष्टकृद्भवेत् । आपूर्वविधिरेतावान्न सन्त्यन्ये त्वचोदनात् " इति ॥ " अशक्तस्सङ्कटे रोगे द्रव्याभावे नृपाद्भये । कुर्यादापूर्विकेनैव सुकृता चैव सा क्रिया " इति कारिकान्तरे ॥

अथ प्रयोगः ॥ स्थण्डिलोल्लिखनाद्यग्निं प्रतिष्ठाप्य ॥ " अमुकहोमः कर्म, आपूर्विकं तन्त्रं, चतस्रः सामिधेन्यः, अमुको नामाग्निः, अमुको देवता, अमुकं हविः, उपहोमश्चामुकमन्त्रेणामुकद्रव्येणामुकसङ्ख्यया, अग्निः स्विष्टकृत्, आज्यस्य मान्त्रवर्णिक्यो देवताः, अङ्गदेवताः प्रधानदेवताश्च तास्सर्वा अत्र सन्निहितास्सन्तु ॥ एवं साङ्गेन कर्मणा सद्यो यक्ष्ये " इति सङ्कल्प्य, अन्वाधानादि पात्रासादने– आज्यस्थालीं स्रुवं चरुस्थालीं मेक्षणं दर्वीं प्रोक्षणीं बर्हिश्चतस्रस्समिधश्चेत्यासाद्य, पवित्रकरणादि प्रतिष्ठिताभिघारणान्तं कृत्वा

१. " अग्नये स्विष्टकृते स्वाहा " इत्यनेनेत्यर्थः ॥

प्रदक्षिणमग्निं परिषिच्यालङ्कृत्य चतस्रस्समिधोऽग्नावभ्याधाय व्याहृतीर्हुत्वा चरूसेतप्रायश्चित्तान्ते अवदानधर्मेण चरुमवदाय तत्तत्कर्मोक्तयाज्यानुवाक्याभ्यां पक्वं हुत्वा व्याहृतीर्जुहुयात् ॥ तथैवावत्तं स्विष्टकृतमुपहोमान्ते 'अग्नये स्विष्टकृते स्वाहा' इति हुत्वा मेक्षणमग्नौ प्रहृत्य दर्वीसङ्क्षाळनं परिधिदेशेऽन्तर्बहिश्च निनीय ॥ "मनो ज्योतिः" इत्यादिभिर्यथासम्भवं प्रायश्चित्तं "यदस्य कर्मणः" इति सौविष्टकृतं च हुत्वा परिस्तरणप्रहरणादि होमशेषं समापयेत् ॥ इत्यापूर्विकविधिः ॥

# ॥ अथ प्रायश्चित्तानि ॥

अथात्र कर्मणि सम्भाव्यानि प्रायश्चित्तानि ॥ "प्रायो विनाश इत्युक्तश्चित्तं सन्धानमुच्यते । यस्मात्सन्धीयतेऽनेन प्रायश्चित्तं ततस्स्मृतम्" इत्यनेन प्रयोगतिलकोक्तनिर्वचनेन विहितस्याननुष्ठानादन्यथानुष्ठानाद्वा प्राप्तस्य कर्मवैकल्यस्य निरासेन कर्मसन्धायकानि प्रायश्चित्तपदवाच्यानि भवन्ति ॥ ॥ अथ प्रायश्चित्ताहुतीः प्रधानादौ प्रधानान्ते स्विष्टकृतः पूर्वं वा जुहुयात् ॥ ( बो. गृ. सू. ४·५ ) "प्रवृत्ते कर्मणि प्रधानादौ जुहुयादिति बोधायनः ॥ प्रधानान्त इति शालीकिः ॥ पुरस्तात्स्विष्टकृत इत्यौपमन्यवः" इति ॥ गृ० सङ्ग्रहे च– "प्रधानस्यादितोऽन्ते वा प्राक्स्विष्टकृत एव वा ॥ प्रायश्चित्ताहुतीः कुर्यादर्थलुप्तेष्वनादरः" इति ॥

---

१. "मनस्वतीमयाश्चाग्ने यदस्मिन्कर्मणीति च । हुत्वा स्वस्ति न इन्द्रेति जुहुयाद्व्याहृतीस्ततः ॥ यदस्य कर्मणोतीति जुहुयात्प्रागुदग्दिशि" इति गृ० सङ्ग्रहे होमे एतावदेवाऽनाम्नातप्रायश्चित्तमित्ययमपि पक्षो निदर्शितः ॥ २. प्रयोजनशून्येष्वित्यर्थः ।

( बो. गृ. सू. ४·१ ) " तत्रादित एवोपलिप्ते श्वा वेटको वा यदि गच्छेत्कीटो वा पिण्डकारी स्यात्तत्पुनरुपलिप्य प्रोक्षति- ' देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा प्रोक्षामि ' इति प्रोक्ष्य स्थण्डिलमुद्धरेत् ॥ स्थण्डिल- मुद्धृतं गौरश्वो वा यदि विकिरेदन्यद्वा श्वापदमधितिष्ठेत्तत्पदमभ्युक्ष्य जपति- ' पृथिवि देवयजन्योषध्यास्ते मूलं मा हिँसिषम् ' इति " ॥

अथ यदि प्रणीतापात्रं भिद्येत तदभिमन्त्रयते— " अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुनः " इति ॥ अथान्यदाहरति- ' घर्मो देवाँ अप्येतु ' इति पूरयित्वा व्याहृतीभिरुपतिष्ठते ॥ ॥ अथ यदि प्रणीताः प्रणीयमानाः प्रणीता वा परासिच्येरंस्ता अभिमन्त्रयते— " अक्षितो ऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोके " इति । पूरयित्वोपतिष्ठते— " भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे धारयत पशून्मे धारयत माम आयुः प्राणाः प्रजाः पशवः परासिच्येरन् " इति ॥

( बो. गृ. सू. ४·२ ) " सर्वत्र दर्वीकूर्चप्रस्तरपरिधिबर्हिःपवित्रेध्मद्रव्यसंभाराणां छेददाहोपघातेषु नाशे विनाशे वा अन्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य – ' त्वन्नो अग्ने, स त्वन्नो अग्ने, त्वमग्ने अयासि, प्रजापते ' इत्येताभिः स्रुवाहुती- र्जुहुयात् " ॥ ॥ परिस्तरणदाहे— " अग्नये क्षामवते स्वाहा " अग्नये क्षामवत इदं० ॥ इति हुत्वा " इन्द्रं वो विश्वतस्परि, इन्द्रं नरः " इति द्वाभ्यां परिस्तीर्य " इन्द्राय स्वाहा " इति पुनर्जुहुयात् ॥ इन्द्रायेदं० ॥ ॥ परिधिदाहे अन्यं परिधाय " परि त्वाग्ने पुरं वयं विप्रँ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः स्वाहा " इति जुहुयात् ॥ अग्नय इदं० ॥ ॥ अथ वस्त्राणां प्रोक्षितानां

चेद्धाहोपघाते नाशे विनाशे वा अन्यद्यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य जुहोति–" सोमाय स्वाहा " इति ॥ सोमायेदं० ॥ ॥ अथ सिचाभिघातः स्यात्तदभिमन्त्रयते–" सिर्गसि नसि वज्रोऽसि नमस्ते अस्तु मा मा हि॰ सीः " इति दशासूत्रमादाय मुखवातेन प्रध्वंसयेत् ॥ ॥ अथ यदि गौर्वाऽश्वो वा श्वमृगमहिषवराहदंष्ट्रावन्तो वाऽन्यद्वा श्वापदमपसव्यं गच्छेत्तस्य पदमभ्युक्ष्य जपति– " तद्विष्णोः परमं पद॰ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् " इति ॥ ॥ अथ यद्येत एव रौद्रमभिव्याहरेयुः रौद्यावृचौ जुहुयाज्जपेद्वा– " त्वमग्ने रुद्रः, आवो राजानं " इति ॥ ॥ अथ यदि शकुनमभिव्याहरेत्तां वाचमनुमन्त्रयते– " द्विपच्चतुष्प-दस्माक॰ सर्वमस्त्वनातुरम् ॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शँससि । स्वस्ति नः शकुने अस्तु प्रति नः सुमना भव " इति ॥ ॥ अथ यदि सालावृकी वाश्येत तामनुमन्त्रयते– " दीर्घमुखि दुर्हणु । मास्म दक्षिणतो वदः । यदि दक्षिणतो वदाद्द्विषन्तं मेऽव बाधासै " इति ॥ ॥ अथ परिक्षवे परिकासने चाप उपस्पृश्य जपेत्– " अनुहवं परिहवं परीवादं परिक्षपम् । दुःस्वप्नं दुरुदितं तद्विषद्भ्यो दिशाम्यहम् ॥ अनुहूतं परिहूत॰ शकुनेर्यदशाकुनम् । मृगस्य सृतमक्ष्णया तद्विषद्भ्यो दिशाम्यहम् " इति ॥

(बो. गृ. सू. ४·३) " सर्वत्र स्वयं प्रज्वलितेऽग्नौ समिधावादधाति– ' उद्दीप्यस्व जातवेदोपघ्नं निर्ऋतिं मम । पशू॰श्च मह्यमावह जीवनश्च दिशो दिश स्वाहा ॥ मा नो हि॰सीज्जातवेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि श्रिया मा परिपातय स्वाहा ' इति द्वाभ्याम् " ॥ जातवेदसेऽग्नय इदं० ॥ ॥ (बो. गृ. सू. ४·५) अथ द्रव्यहविर्मन्त्रकर्मादीनामतिपन्नस्कन्न-भिन्नभग्ननष्टदुष्टविपरीतदग्धाशृतातिशृतानामनाम्नातेषु जुहुयात् –– " मनो ज्योतिः, अयाश्चाग्ने, यदस्मिन्कर्मणि, स्वस्ति न इन्द्रो

वृद्धश्रवाः, " इत्येतैर्व्याहृतिभिश्च ॥ व्याहृतीनां प्रयोगे यथाकृतं यथावद्भवतीत्याचार्या ब्रुवते ॥ अत्रोदाहरन्ति – भूरित्यृचो भुव इति यजूंषि सुवरिति समानि ॥ ॥ ( बो. गृ. सू. ४·७ ) अथ विपरीतदर्भास्तरणपवित्रकरणपात्रासादनप्रोक्षणीसंस्कार-ब्रह्मप्रणीताहविर्निर्वापणाज्यसंस्कारस्रुक्सम्मार्जनपरिधिपरिषेचनेध्माभ्याधानविपरीतेषु— " ततम्म आपः, यत्पाकत्रा, मनस्वती, मिन्दाहुती, महाव्याहृतीः, व्याहृतीश्च " प्रायश्चित्तं जुहुयात् ॥ ॥ ( बो. गृ. सू. ४·८ ) अथ भग्ननष्टदुष्टविपरीतस्फुटितद्विजश्व-बिडालकाकखरमृगपशुपक्षिसरीसृपाणामन्यतमः कीटो वा ऋत्विजोऽग्नीनन्तरा गच्छेत्— " दुर्गा, मनस्वती, महाव्याहृती-स्तिस्रस्तन्तुमतीश्च " जुहुयात् ॥ ॥ ( बो. गृ. सू. ४·९ ) सर्वत्र स्कन्ने भिन्ने छिन्ने क्षामे विपर्यासे उद्वाहे ऊनातिरिक्ते पवित्रनाशे पात्रभेदे च द्वे मिन्दाहुती जुहोति ॥ ॥ अथ मक्षिकैर्मशकैर्वा रोमभिः पिपीलिकैर्वा व्यापद्येत प्रजापतये होमं कुर्यात् — " प्रजापते न त्वत् " इति ॥ ॥ व्यापन्नमाज्यमव्यापन्नमन्तर्हितमनाज्ञातप्रायश्चित्तं यज्ञसमृद्धीर्जुहोति— " इष्टेभ्यः स्वाहा " इत्यष्टौ ॥ अथान्तरागमने दशहोतारं चानुद्रुत्याज्ञ्य जुहोति — " ॐ चित्तिः स्रुक् ॥ चित्तमाज्यम् ॥ वाग्वेदिः ॥ आधीतं बर्हिः ॥ केतो अग्निः ॥ विज्ञातमग्निः ॥ वाक्पतिर्होता ॥ मन उपवक्ता ॥ प्राणो हविः ॥ सामाऽध्वर्युः ॥ वाचस्पते विधे नामन् ॥ विधेम ते नाम ॥ विधेस्त्वमस्माकं नाम ॥ वाचस्पतिः सोमं पिबतु ॥ आस्मासु नृम्णं धात्स्वाहा " ॥ वाचस्पतये ब्रह्मण इदं० ॥ " ॐ अन्वग्निरुषसा-

---

१. " पिपीलिकादिभिश्चैव जीवैः स्याद्धविषो यदि । योगः पश्चाधिकैर्ज्ञेया तदा तस्य सदोषता ॥ न्यूनैश्चेत्पतिताञ्जीवानुध्दृत्याद्भिः समुक्ष्य च । लौकिकाभ्यां पवित्राभ्यां पवनात्तस्य योग्यता " इति सं० रत्नमालायाम् ॥

२. सर्वत्र होतृहोमं मनसानुद्रुत्य चतुर्गृहीतेन सग्रहं जुहुयात् ॥

मग्नमख्यदन्वहानि प्रथमो जातवेदाः ॥ अनु सूर्यस्य पुरुत्राच रश्मीननु द्यावापृथिवी आततान स्वाहा "॥ अनूख्याग्नय इदं० ॥ ॥ अन्तर्हिते चतुर्होतारं चानुख्याञ्च जुहोति—" ॐ पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता । वाचस्पते वाचो वीर्येण । सम्भृततमेनायक्ष्यसे । यजमानाय वार्यम् । आ सुवस्करस्मै । वाचस्पतिः सोमं पिबति । जजनदिन्द्रमिन्द्रियाय स्वाहा "॥ वाचस्पतये ब्रह्मण इदं० ॥ " अन्वग्निरुषसां " इत्यपि जुहुयात् ॥ ॥ अथ मण्डूकसर्पमूषिकमार्जारान्तरागमने पञ्चहोतारं चानुख्याञ्च जुहोति — " अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता । सोमः सोमस्य पुरोगाः । शुक्रः शुक्रस्य पुरोगाः । श्रातास्त इन्द्र सोमाः । वातापेर्हवनश्रुतः स्वाहा "॥ वाचस्पतये ब्रह्मण इदं० ॥ " अन्वग्निः " इति च जुहुयात् ॥

अथ विकृतरूपे विकृतशब्द विस्फुटे शंयुवाकं चानुख्यां च जुहोति— " ॐ तच्छंयोरावृणीमहे० चतुष्पदे स्वाहा "॥ शंयव इदं० ॥ " ॐ अन्वग्निः० आततान स्वाहा " इति ॥ ॥ अनादिष्टं सर्वप्रायश्चित्तं व्याख्यातं वारुणीमिति निर्दिशेत् ॥ देवता-मन्त्रतन्त्रकर्मादिविपर्यासे पाहीति पञ्च स्रुवाहुतीर्जुहोति ॥ ॥ अथ स्वराक्षरपदवृत्तभ्रेषेषु " आभिर्गीर्भिः " इति जुहुयात् ॥ (बो. गृ. सू. ४·१०) अथ यदि होमकालेष्वग्निरुद्वातः स्यात्सर्वं तत्- " अपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः " इति प्रोक्ष्य " अयन्ते योनिः " इति क्षिप्रं तद्भस्म सामिधि समारोप्य स्थण्डिलमुद्धृत्य लौकिकाग्निं प्रतिष्ठाप्य " आजुह्वानः, उद्बुध्यस्वाग्ने " इति द्वाभ्यां समारोपितसमिधमाधाय सम्परिस्तीर्य प्रायश्चित्तं जुहोति— " अयाश्चाग्ने, पञ्चहोता, ब्राह्मण एकहोतेत्यादि दश, मनस्वती, मिन्दाहुती, महाव्याहृतीः, व्याहृतीश्च " इति ॥ यद्युपनयना-

ग्निर्विवाहाग्निर्जातकर्माग्निः श्मशानाग्निराचतुर्थाद्वादशाहाद्वासञ्चयनाद्वुद्रातः स्यादेतदेव प्रायश्चित्तं जुहुयात् ॥ ॥ ॐ ब्राह्मण एकहोता । स यज्ञः । स मे ददातु प्रजां पशून्पुष्टिं यशः । यज्ञश्च मे भूयात्स्वाहा ॥ यज्ञायेदं० ॥ ॐ अग्निर्द्विहोता । स भर्ता । स मे ददातु प्रजां पशून्पुष्टिं यशः । भर्ता च मे भूयात्स्वाहा ॥ अग्नय इदं० ॥ ॐ पृथिवी त्रिहोता । स प्रतिष्ठा । स मे ददातु० यशः । प्रतिष्ठा च मे भूयात्स्वाहा ॥ पृथिव्या इदं० ॥ ॐ अन्तरिक्षं चतुर्होता । स विष्ठाः । स मे ददातु० यशः । विष्ठाश्च मे भूयात्स्वाहा ॥ अन्तरिक्षायेदं० ॥ ॐ वायुः पञ्चहोता । स प्राणः । स मे० यशः । प्राणश्च मे भूयात्स्वाहा ॥ वायव इदं० ॥ ॐ चन्द्रमाः षड्ढोता । स ऋतून्कल्पयाति । स मे० यशः । ऋतवश्च मे कल्पन्ता ँ स्वाहा ॥ चन्द्रमस इदं० ॥ ॐ अन्न ँ सप्तहोता । स प्राणस्य प्राणः । स मे० यशः । प्राणस्य च मे प्राणो भूयात्स्वाहा ॥ अन्नायेदं० ॥ ॐ द्यौरष्टहोता । सोऽनाधृष्यः । स मे० यशः । अनाधृष्यश्च भूयास ँ स्वाहा ॥ दिव इदं० ॥ ॐ आदित्यो नवहोता । स तेजस्वी । स मे० यशः । तेजस्वी च भूयास ँ स्वाहा ॥ आदित्यायेदं० ॥ ॐ प्रजापतिर्दशहोता । स इद ँ सर्वम् । स मे० यशः । सर्वञ्च मे भूयात्स्वाहा ॥ प्रजापतय इदं० ॥ इति ॥ अन्ये मन्त्राः प्रागुक्ताः ॥ ॥

(बो. गृ. सू. ४·११) "अथ गृहमेधिनो ब्रह्मचारिणश्चानुगतेऽग्नौ कालातिक्रमे होमयोर्दर्शपूर्णमासयोश्चाग्रयणेनानिष्ट्वा नवान्नप्राशनाज्यस्कन्नावधूतहीनमन्त्राधिककर्मणश्चाकृतसीमन्तायां प्रसूतायां भार्यायां स्त्रीषु गोषु यमळजनने रजस्वलाऽभिगमने पतितसंभाषणे दिवामैथुने शूद्रीगमने स्वप्नान्ते रेतस्कन्दने उदके मूत्रपुरीषकरणे कुमारस्य जातस्यासंस्कारेऽकृताग्निसंसर्गे

देवताविपर्यासे मन्त्रविपर्यासे कर्मविपर्यासे ब्रह्मचारिणश्च व्रतविपर्यासे मेखलायज्ञोपवीतस्योच्छेदने कृष्णाजिनस्याधारणे कमण्डलवधारणे दण्डभङ्गे सन्ध्यालोपेऽग्निकार्यलोपे उदकुम्भलोपे भिक्षाचरणस्वाध्यायलोपे शुश्रूषालोपे एतैश्चान्यैश्चानाम्नातेषु प्रायश्चित्तम् ॥ अग्निमुपसमाधाय सम्परिस्तीर्य प्रायश्चित्तं जुहोति— 'पाहि नो अग्न एनसे स्वाहा ॥ पाहि नो विश्ववेदसे स्वाहा ॥ यज्ञं पाहि विभावसो स्वाहा ॥ सर्वं पाहि शतक्रतो स्वाहा ॥ पाहि नो अग्न एकया । पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जां पते । पाहि चतसृभिर्वसो स्वाहा ' इति " ॥ ॥ अथ यद्यग्नेरेकदेशमुपहरेयुस्तदा " मनो ज्योतिः " इति स्रुवाहुतिं जुहुयात् ॥ इति प्रयोगमालायाम् ॥ ॥ अवत्तहविस्कन्दनादौ गृ० सङ्ग्रहे– " यद्यवत्तेऽवदाने प्राक् होमाद्वाभिन्ने निपातिते । भूमौ चेत्त्याग एव स्याच्चरुस्थाल्यान्तु चेत्तदा ॥ किमुत्पतसि मन्त्रेण समाहृत्य पुनः स्रुचि । निक्षिप्य जुहुयात्प्राग्वद्भूमौ निपतिते पुनः ॥ अवद्य पक्वमन्त्रेण जुहुयाच्च स्रुवाहुतिम् । हुत्वापक्वं हुनेत्प्राग्वदिति धर्मो व्यवस्थितः ॥ अग्नौ हुतेऽवदाने च भिन्ने निपतिते बहिः । भिन्ने त्वन्नादिमन्त्राभ्यां मनस्वत्याहुतिं हुनेत् ॥ दिशि यस्यां निपतितं तद्दैवत्यमृ वाहुतिम् । हुत्वा स्रुचः पृष्ठकेन समाहृत्य च पूर्ववत् ॥ वह्नेर्मध्ये विनिक्षिप्य हुनेत्पूर्ववदाहुती । अग्नौ हुतेऽवदानेऽथ स्कन्दिते परिधेर्बहिः ॥ हुत्वा स्रुवाहुतिं प्राग्वदाहृत्याग्नौ विनिक्षिपेत् । चतुर्गृहीतमाज्यञ्च स्रुचादायाथ पक्ववत् ॥ जुहुयात्पक्वमन्त्रेण प्रायश्चित्तार्थमादरात् " इति ॥ " किमुत्पतसि किमुत्प्रेष्ठाः शान्तः शान्तेरिहागहि । अघोरो यज्ञियो भूत्वासीद सदन ँ स्वम् " ॥ मार्जाराद्यन्तरागमने विशेषः– गृ० सङ्ग्रहे– " मार्जारमूषकाद्याश्च मनुष्याः पशवो मृगाः । ब्रह्माग्न्योरन्तरा याताः प्रायश्चित्तं

१. 'द्वे मिन्दाहुती ' इति प्र० तिलके पाठः ॥

कथं भवेत् ॥ ब्रह्मप्रतिष्ठा मनसोऽप्यग्निर्होतादिना तथा। अन्वाग्निश्च मनो ज्योतिर्हुनेदेतैः स्रुवाहुतीः "॥ "यजमानस्य वह्नेश्च गच्छेयुस्तेऽन्तरा यदि। पृथिवी होतादिनाऽन्वग्निर्मनस्वत्याऽऽहुतीर्हुनेत्" इति॥ ॥ गृ० सङ्ग्रहे— "ऊनातिरिक्ते मन्त्राणां कर्मणाञ्च मनस्वस्तीम् । अनाज्ञातादिकांश्चैव व्याहृतीश्च हुनेद्बुधः॥ अनादिष्टेषु सर्वेषु प्रायश्चित्तेषु वै बुधः। पाह्यादि-पञ्चकं तद्वन्मिन्दाहुत्यौ मनस्वती॥ महाद्या व्याहृतीस्तद्वच्चतस्रो व्याहृतीर्हुनेत् ॥ यदि विस्फोटितोऽङ्गारो निर्गतः परिधेर्बहिः॥ अध्वर्युब्रह्मपत्न्यग्निपशूनां व्याधिमाहरेत् ॥ यजमानस्य सर्वत्र प्रागारभ्य दिशां क्रमात्। तदङ्गारं समाहृत्य स्रुवपृष्ठेन बुद्धिमान्॥ मा तमाद्येन मन्त्रेण मा हिंसीरन्तकेन तु। अमुं स्थाने नाम चैषां नियोज्याग्नौ विनिक्षिपेत्॥ सहस्रशृङ्गमन्त्रेण जुहुयाच्च स्रुवा-हुतिम् "॥ "मा तमो मा यज्ञस्तमन्मा यजमानस्तमत्। नमस्ते अस्त्वायते। नमो रुद्र परायते। नमो यत्र निषीदसि। अमुं मा हिꣳ-सीरमुं मा हिꣳ सीः"॥ "सहस्रशृङ्गो वृषभो जातवेदाः। स्तोमपृष्ठो घृतावान्सुप्रतीकः॥ मा नो हासीन्मेत्थिलो नेत्वा जहाम। गोपोषं नो वीरपोषं च यच्छ"॥ ॥ प्र० तिलके— "पुरोनुवाक्या याज्याऽन्तरुच्छ्वासे होतुरायुषः। क्षयः स्यादायुरायुर्दा इति द्वाभ्यां हुनेद्बुधः॥ प्रायश्चित्तार्थमथवा जुहुयात्पाहिपञ्चकैः" इति॥ "आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः। पुनस्ते प्राण आयति परा यक्ष्मꣳ सुवामि ते स्वाहा॥ आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमꣳ स्वाहा" इति॥ आयुर्दाऽग्नय इदं० ॥ पाहीति पञ्चभिर्वा जुहुयात्॥ ॥ "होता वा यजमानो वा ब्रह्मा चोच्छिष्टदूषितः। निस्तीर्योच्छिष्टमाचान्तः पावमानादिभिर्हुनेत्" इति॥ ॥

# ॥ अथ ग्रहशान्तिविधिः ॥

( बो. गृ. शे. सू. १. १६ ) अश्रद्दधानमशुचिमजपं त्यक्तमङ्गलम् । ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम् ॥ ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणाम् । उपचारान्प्रवक्ष्यामि शान्त्यर्थं तु यथाविधि ॥ मासिमास्यृतावृतावयने चन्द्रग्रहे सूर्यग्रहे शुभाशुभे जन्मनक्षत्रे वा तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानः सर्वान्कामानवाप्नोतीति । उक्तमेकाग्निविधानम् । "एको वा विषमस्थः स्यात्सर्व एवार्चनीया भवन्ति" इति । भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ । सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥ कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च । ग्रहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत् ॥ बलींश्चैवोपचारांश्च गंधमाल्ये तथैव च । यथाक्रमेणोपहरेत्सर्वेषामानुपूर्वशः ॥ अर्कसमिधमादित्याय खादिरमङ्गारकायौदुम्बरं शुक्राय पालाशं सोमायापामार्गं बुधायाश्वत्थं बृहस्पतये शमीमयं शनैश्चराय राहवे दूर्वाः केतवे कुशा इति । सर्वेषामलाभे पालाशीर्वा ॥ अथोपोत्थायाग्रेणाग्निं तण्डुलैः स्थण्डिलं कृत्वा ग्रहदेवता आवाहयति ॥ मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु । पूर्वे तु भार्गवं विद्यात्पूर्वदक्षिणतः शशी ॥ पूर्वोत्तरे बुधं विद्यादुत्तरे तु गुरुं तथा । पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुर्ग्रहस्थानं विधीयते । दक्षिणोत्तरभागे तु साधिप्रत्यधिदेवताः ॥ वृत्तमादित्याय त्रिकोणमङ्गारकाय पञ्चकोणं शुक्राय चतुरश्रं सोमाय बाणं बुधाय दीर्घचतुरश्रं बृहस्पतये धनुः शनैश्चराय राहवे शूर्पं केतवे ध्वजमिति । अर्कः शुक्रो बुधः पूर्वो गुरुरुत्तरतो मुखः । पश्चिमे तु शनिश्चन्द्रः शेषा दक्षिणतोमुखाः ॥ यवा आढकयस्तण्डुलाः श्यामाका मुद्गमेव च । चणकास्तिलमाषाश्च कुळित्थाश्च क्रमात्क्षिपेत् ॥ अग्नीश्वरौ भास्करस्य भूक्षेत्रेशौ कुजस्य हि । इन्द्राणीन्द्रौ सितस्याथ ह्यापो गौरी निशापतेः ॥ विष्णुर्विष्णुर्बुधस्येन्द्रो मरुत्वान्

ब्रह्म वै गुरोः । शनेः प्रजापतिर्यमौ राहोः सर्पश्च निर्ऋतिः ॥ केतोर्ब्रह्मा च चित्रश्च स्वस्वमन्त्रैः स्वनामाभिः । लोकपालान् दुर्गविघ्नक्षेत्रवास्तुत्रियम्बकान् ॥ अभयङ्करमृत्यू च ह्यग्निं वैश्वानरं क्रमात् । आवाहयेद्व्याहृतिभिर्यजेद्व्यष्टोपचारकैः " ॥ नवानां ग्रहाणां पक्वं हुत्वा घृतान्वक्तानां समिधामष्टसहस्रमष्टशतमष्टाविंशतिं वा जुहुयात्प्रत्यृचं हविषो जुहुयात्प्रत्यृचमाज्यस्य जुहुयात्प्रत्यृचम् । गुळोदनमादित्याय हविष्यमन्नमङ्गारकाय घृतोदनं शुक्राय घृतपायसं सोमाय क्षीरोदनं बुधाय दध्योदनं बृहस्पतये तिलपिष्टमिश्रमाषोदनं शनैश्चराय राहोर्माषोदनं केतोश्चित्रोदनमिति ॥ सर्वेषामलाभे हविष्यं वा ॥ इति ॥ यदाष्टसहस्रं तदाधिप्रत्यधिदेवतानामष्टाविंशतिं यदाष्टशतं तदाष्टावष्टौ यदाष्टविंशतिं तदा तिस्रस्तिस्र आहुतीर्जुहुयादेवमेव लोकपालादीनाम् ॥ कपिलां धेनुमादित्याय रक्तमनड्वाहमङ्गारकाय रजतं शुक्राय शङ्खं सोमाय काञ्चनं बुधाय वासो बृहस्पतये कृष्णां गां शनैश्चराय राहवे छागं केतवे कुञ्जरमिति । सर्वेषामलाभे हिरण्यं वा ॥ आचार्याय धेनुं ददाति । यथा समुत्थितं घोरयन्त्रेण प्रतिहन्यते । एवं समुत्थितं घोरं शीघ्रं शान्तिं नयेत्सदा ॥ यथाशस्त्रप्रहरणात्कवचं स्यान्निवारणम् । एवं दैवोपघातानां शान्तिर्भवति वारणम् ॥ अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च । नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥ ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ॥ ईश्वरं भास्करं विद्यात्स्कन्दमङ्गारकं तथा । शुक्रं शचीपतिं विद्यादुमां चैव निशाकरम् ॥ बुधं नारायणं विद्याद्ब्रह्माणं च बृहस्पतिम् । यमं शनैश्चरं विद्याद्राहुं कालं तथैव च ॥ केतुमग्निमयं विद्याद्देवं देवा यथा ग्रहाः । देवता ग्रहरूपेण दर्शयन्ति शुभाशुभम् ॥ दर्शयन्ति शुभाशुभमित्याह भगवान् बोधायनः ॥

अथ मन्त्रानुक्रमः — आसत्येन, अग्निं दूतं, येषामीशे, इत्यादित्याय ( साधिप्रत्यधिदेवताय इति वेदितव्यम् ) । अग्निर्मूर्धा, स्योना पृथिवि, क्षेत्रस्य पते, इत्यङ्गारकाय । प्र वः शुक्राय, इन्द्राणी, इन्द्रं वो विश्वतः, इति शुक्राय । आ प्यायस्व, अप्सु मे सोमो-

अब्रवीत्, गौरीमिमाय, इति सोमाय। उद्बुध्यस्वाग्ने, विष्णोर्नु कं, विष्णोरराटमसि, इति बुधाय। बृहस्पते, इन्द्र मरुत्वः, ब्रह्म जज्ञानम्, इति बृहस्पतये। शं नो देवीः, प्रजापते, इमं यम प्रस्तरम्, इति शनैश्चराय। कया नः, आयङ्गौः, यत्ते देवी, इति राहवे। केतुं कृण्वन्, ब्रह्मा देवानाम्, सचित्र चित्रम्, इति केतवे॥ त्रातारमिन्द्रम्, अग्निर्दा द्रविणम्, यमो दाधार पृथिवीम्, असुन्वन्तम्, सधमादो द्युम्निनीः, आ नो नियुद्भिः, सोमो धेनुम्, सहस्राणि सहस्रधा, इति लोकपालानाम्॥ जातवेदसे, गणानान्त्वा, क्षेत्रस्य पतिना वयम्, वास्तोष्पते, त्र्यंबक यजामहे, यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः, ये ते सहस्रम्, मूर्धानं दिवो अरतिम्, इति दुर्गादीनाम्। एवमेव हुत्वाऽऽज्यमिश्रतिलव्रीहिभिर्व्याहृतिभिर्हुत्वा सर्वस्मात्सकृत्सकृदवदाय द्विरभिघार्य स्विष्टकृतं 'अर्यमणम्' इति पुरोनुवाक्यामनूच्य 'सोमꣳ राजानम्' इति याज्यया जुहोति। मेक्षणमभ्यादाय जयप्रभृतिसिद्धम्। 'मूर्धानं दिवो अरतिम्' इति पूर्णां हुत्वाऽग्रेणाग्निं ग्रहानभ्यर्चयति — 'आपो हि ष्ठा' इति तिसृभिः 'हिरण्यवर्णाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वा स्वस्वनामभिस्तर्पयित्वा स्वेन स्वेन मन्त्रेण गन्धपुष्पधूपदीपैरभ्यर्च्य बलिमुपहृत्य लाजापूपपृथुकाद्युपहारांश्च दत्वा नमस्कृत्य प्रवाह्य जघनेनाग्निमुपविश्याद्भिर्मार्जयति— 'आपो हि ष्ठा' इति तिसृभिः 'देवस्य त्वा' इति तिसृभिः शंयुवाकेन च॥

गृह्यसंग्रहे — "एकाग्नावेक ऋत्विग्वा बहवो वात्र सम्मताः। ग्रहशान्तिं प्रकुर्वीत यो नश्नोत्यशुभोदयात्॥ विषमस्थो ग्रहो हन्याच्छुभमात्मकृतं सदा। तस्मात्संपूज्य तं कुर्याद्भूतिकर्माणि चादितः" इति। प्र० पारिजाते – "कार्यारम्भेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च। नववेश्मप्रवेशे च गर्भाधानादिकर्मसु। आरोग्यस्नानसमये संक्रान्तौ रोगसम्भवे। आभिचारे च यः कुर्याद्ग्रहपूजां विधानतः। सोऽभीष्टफलमाप्नोति निर्विघ्नेन न संशयः" इति॥ याज्ञवल्क्योऽपि —"श्रीकामः शान्तिकामो वा ग्रहपूजां समाचरेत्।

वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्नपि " इति च ॥ एतैर्वचनैः प्रतिकूलग्रहाणामानुकूल्यतासिध्यर्थं शुभाभीष्टप्राप्त्यर्थं च मासि-मासीत्याद्युक्तकालेषु गर्भाधानादिशुभकर्मारंभेषु रोगाद्यनिष्टसंपातेषु आयुःश्रीपुष्टिवृष्ट्यादिकामनासु चैकाग्निवेकेनर्त्विजा बहु-भिर्वा ऋत्विग्भिः ग्रहशान्तिः कर्तव्येति विधीयते ॥

अथ नवग्रहशान्तिप्रयोगः ॥ यजमानः प्रातः स्नानादि नित्यकर्म कृत्वा वैश्वदेवं हुत्वा सपत्नीको दर्भेष्वासीनो दर्भा-न्धारयमाण आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " अस्माकं सकुटुम्बानां सपरिवाराणां द्विपच्चतुष्पदसाहितानां समस्त-ग्रहचारपीडानिवृत्ति–क्षेमायुस्सकलैश्वर्याभिवृद्धि–सर्वग्रहानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहशान्तिं करिष्ये । तदादौ शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृध्यर्थमभ्युदयार्थश्चैभिर्ब्राह्मणैस्सह नान्दीसमाराधनं स्वस्तिपुण्याहवाचनं निर्विघ्नतासिध्यर्थं गणपतिपूजनञ्च करिष्ये " इति सङ्कल्प्य कामनाविशेषे तु अमुककामनासिद्धिद्वारा इत्यादि यथाकामं सङ्कल्प्य । गणपतिपूजनं नान्दीसमाराधनं पुण्याहवाचनञ्च यथाक्रमं कुर्यात् । पुण्याहवाचने— " आदित्यादिनवग्रहाः प्रीयन्ताम् " इति विशेषः ॥ ततः " अस्मिन् ग्रहशा-न्तिकर्मण्याचार्यादि ऋत्विजो वरयिष्ये" इति सङ्कल्प्य ब्राह्मणान्नमस्कृत्य " आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यागेऽस्मिन्नाचार्यो भव सुव्रत " इति प्रार्थ्य ' अमुकगोत्रोत्पन्नममुकशर्माणं ब्राह्मणमस्मिन् ग्रहशान्तिकर्मण्याचार्यं त्वां वृणे ' इत्या-चार्यं वृणुयात् । ' वृतोस्मि ' इति प्रतिवचनम् ॥ एवमेव " यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः । तथा त्वं मम यागेऽस्मिन् ब्रह्मा भव द्विजोत्तम " इति प्रार्थ्य ' अमुकगोत्रोत्पन्नममुकशर्माणं ब्राह्मणमस्मिन् ग्रहशान्तिहवनकर्मणि ब्रह्माणं त्वां वृणे ' इति ब्रह्मव-रणम् । एवमुपहोमादिकर्मण्यन्यानपि यथानुकूलं वृत्वा तान् गन्धादिभिरभ्यर्च्य " अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया । सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् " इति प्रार्थयेत् ॥ अथाचार्यः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य

"यजमानेन वृतोऽहं ग्रहशान्तिहोमं कर्तुं स्थण्डिलोल्लेखनादि करिष्ये" इति सङ्कल्प्य स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वान्वादध्यात्— "आदित्यादिनवग्रहानुकूलतासिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं ग्रहशान्तिहोमं करिष्ये। ग्रहशान्तिहोमः कर्म। आधारवत्तन्त्रम्। पञ्चदश दारुरिध्मः। अग्नीषोमावाज्यभागौ। कपिलो नामाग्निः, आदित्यो देवता। धूमकेतुर्नामाग्निः, अङ्गारको देवता। हाटको नामाग्निः, शुक्रो देवता। पिङ्गलो नामाग्निः, चन्द्रो देवता। जाठरो नामाग्निः, बुधो देवता। शिखी नामाग्निः, बृहस्पतिर्देवता। महातेजा नामाग्निः, शनैश्चरो देवता। हुताशनो नामाग्निः, राहुर्देवता। रौद्रो नामाग्निः, केतुर्देवता। चरुर्हविः॥ उपहोमश्चादित्यादीनां नवानां ग्रहाणां क्रमेणार्कखदिरौदुम्बरपालाशापामार्गाश्वत्थशमीदूर्वाकुशाख्यसमिच्चर्वाज्यद्रव्यैः प्रत्येकं "अष्टसहस्रमष्टशतमष्टाविंशतिर्वा" इति सूत्रोक्तान्यतमसङ्ख्या। अधिप्रत्यधिदेवतानां तैरेव द्रव्यैः, इन्द्रादिलोकपालानां-दुर्गादीनां च समिच्चर्वाज्यद्रव्यैः प्रत्येकं प्रत्येकं प्रधानानुगुणममुकसंख्यया। आज्यमिश्रतिळव्रीहिभिः समस्तव्याहृतिभिरमुकसंख्यया। स्विष्टकृतः अर्यमादयो देवताः। आज्यस्य मान्त्रवर्णिक्यो देवताः। अङ्गदेवताः प्रधानदेवताश्च सर्वा अत्र सन्निहिताः सन्तु। एवं साङ्गेनकर्मणा सद्यो यक्ष्ये" इति सङ्कल्प्य समिदाधानाद्याप्रणीताभ्यः कृत्वा हवींषि निर्वपति— "देवस्य त्वा सवितुः० हस्ताभ्याᳬं सवित्रे जुष्टं निर्वपामि" इति त्रिर्यजुषा सक्तूष्णीम्॥ एवमेव अङ्गारकाय जुष्टं निर्वपामि। शुक्राय ०। सोमाय०। बुधाय०। बृहस्पतये०। शनैश्चराय०। राहवे०। केतवे जुष्टं निर्वपामि। इति त्रिर्मंत्रेण सकृत्तूष्णीं निरुप्य॥ "देवस्य त्वा० हस्ताभ्याᳬं सवित्रे वो जुष्टं प्रोक्षामि अङ्गारकाय शुक्राय सोमाय बुधाय बृहस्पतये शनैश्चराय राहवे केतवे इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्याज्य-

संस्कारादि हविरुद्वासनप्रतिष्ठिताभिघारणान्तं कुर्यात् ॥ अथाग्रेणाग्निमीशान्यभागेऽष्टदलं पद्ममालिख्य तत्राक्षतपुञ्जैः तन्तुवेष्टितं शुद्धजलपूरितं पञ्चरत्नसहितं सपल्लवं सफलं सकूर्चं वस्त्रवेष्टितमव्रणं कलशं प्रतिष्ठाप्य पूर्वभागे तण्डुलैः स्थण्डिलं कृत्वा तत्राष्टदळं सकर्णिकं नळिनमुल्लिख्य मध्ये कर्णिकायामादित्याय रक्तवर्णैर्वृत्ताकारं मंडलं विलिख्य तत्र यवधान्यपूरितं पात्रं निधाय तदुपरि फलं प्रतिमां कूर्चं वा विन्यस्य वस्त्रयुगेनावेष्टयेत् ॥ एवमेव दक्षिणदळे अङ्गारकाय रक्तवर्णैस्त्रिकोणाकारमण्डलं विलिख्य फल-प्रतिमादियुतमाढकीधान्यपूरितं पात्रम् । पूर्वदळे शुक्राय शुक्लवर्णैः पञ्चकोणाकृतिमण्डलमालिख्य फलप्रतिमादिसहितं तण्डु-लपूर्णपात्रम् । आग्नेयदळे सोमाय शुक्लवर्णैश्चतुरश्रमण्डलं विरच्य फलादिसंयुतं श्यामाकपूर्णपात्रम् । ईशान्यदळे बुधाय पीत-वर्णैराचिते बाणाकारमण्डले फलादियुतं मुद्गपूरितपात्रम् । उत्तरदळे बृहस्पतये पीतवर्णैः कृते दीर्घचतुरश्रमण्डले फलप्रतिमा-दियुतं चणकपात्रम् । पश्चिमदळे शनैश्चराय कृष्णवर्णैर्धनुराकारं मण्डलं विलिख्य फलादिसहितं तिलपूर्णपात्रम् । नैर्ऋतदळे राहवे कृष्णवर्णैरेव विरचिते शूर्पाकारमण्डले फलादियुतं माषपूरितपात्रम् । वायव्यदळे केतवे धूम्रवर्णैर्ध्वजाकारं मण्डलं लिखित्वा फलप्रतिमादियुतं कुळित्थधान्यपूरितं पात्रं चेति यथाक्रमं निधाय दर्भेषु प्राङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यामुकफलसिद्धिद्वारा आदित्यादिनवग्रहप्रीत्यर्थं नवग्रहपूजां करिष्ये, इति सङ्कल्प्यासनभूशुध्यादि विधाय

१. " विधिवत्कलशस्थानं तदैशान्यां प्रकल्पयेत् । प्राच्यां ग्रहार्चनस्थानं कृत्वा यागमथारभेत् " इति गृ० संग्रहे ॥

२. " अलाभे प्रतिमानां तु प्रशस्ता दर्भकूर्चकाः " इति गृ० संग्रहे ॥ प्रतिमानां " अश्मन्नूर्जं " इत्यनुवाकेनाग्न्युत्तारणं कृत्वा पञ्चगव्यैः शुद्धोदकेन च प्रक्षाळ्य तत्तत्स्थाने निधाय प्राणप्रतिष्ठां कुर्यात् । इति सं० मालायाम् ॥

" मही द्यौः " इत्यादि कलशे वरुणपूजान्तं कृत्वा " सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः " इति भावयित्वा, ग्रहमण्डले ग्रहानावाहयति— मध्ये कर्णिकायामादित्यं " पद्मासनं पद्महस्तं पद्मगर्भसमद्युतिम् । सप्ताश्वं सारुणरथं द्विभुजं काश्यपिं रविम् ॥ त्रैलोक्यदीपकं देवं गुणरूपं त्रयीमयम् । स्थापयामि महाभक्त्या भास्करं ग्रहनायकम् " ॥ मध्ये वर्तुलाकारमण्डले प्रत्यङ्मुखं कलिङ्गदेशजं काश्यपगोत्रजं विश्वामित्रार्षं विशाखानक्षत्रजं त्रिष्टुप्छन्दसं कपिलाग्निकं पद्मासनं पद्मवर्णं द्विभुजं रक्तवस्त्रं रक्तगन्धं माणिक्यरत्नाभरणभूषितं किरीटिनं रक्तच्छत्रध्वजपताकिनं छन्दोमयहरितसप्ताश्वं सप्तरज्जुकमेकचक्रं रक्तं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमाधिदेवताग्निं प्रत्यधिदेवतारुद्रं च, इत्येवं ध्यात्वा । ॐ आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवना वि पश्यन् ॥ ॐ भूर्भुवस्स्वः आदित्याय नमः आदित्यमावाहयामि । तत्रैव दक्षिणे ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ ॐ भूर्भुवस्स्वः आदित्याऽधिदेवायाऽग्नये नमः आदित्याधिदेवमग्निमावाहयामि ॥ एवं सर्वत्र ॥ उत्तरे ॐ येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् । निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु ॥ ॐ भूर्भुवस्स्वः आदित्यप्रत्यधिदेवं रुद्रमावाहयामि इत्यावाह्य ॥ ॥ अथ दक्षिणदळे ऽ

१. तत्रैव " क्ष्मादिभूतानि विघ्नं च दुर्गामावाहयेत् क्रमात् " इति ग्रन्थान्तरे ॥

२. " प्रणवं त्वादितः कृत्वा भूर्भुवः स्वस्ततः परम् । चतुर्थ्या नाम संयुक्तं नमस्कारान्तयोजितम् ॥ एष मंत्रः समाख्यातो ग्रहपूजाविधायकः । अनेनावाहनं कुर्यादनेनैव विसर्जयेत् " इति प्र० पारिजाते ॥ सर्वत्र— आवाहने विसर्जने च प्रणवादिः नमोन्तः चतुर्थ्यन्तश्च योजनीयः ॥

गारकमावाहयेत्— " रक्तस्रगम्बरालेपं गदाशक्त्यासिशूलिनम् ॥ चतुर्भुजं मेषगमं भारद्वाजं धरासुतम् ॥ रक्तकाञ्चनसंकाशं रक्तकिञ्जल्कसन्निभम् ॥ स्थापयामि महारौद्रं रुद्रमूर्तिं महाबलम् " ॥ सूर्यस्य दक्षिणदिग्भागे त्रिकोणाकारमण्डले दक्षिणाभिमुखमवन्तीदेशजं भारद्वाजगोत्रजं जामदग्न्यार्षं गायत्रीछन्दसं धूमकेत्वग्निकं खड्गशक्तिशूलगदाधरं चतुर्भुजं रक्ताम्बरधरं रक्तविद्रुमरत्नाभरणभूषितं किरीटिनं रक्तच्छत्रध्वजपताकिनं रक्तमेषवाहनमग्निजरक्ताष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताभूमिं प्रत्यधिदेवताक्षेत्रपालं च, ध्यात्वा ॥ ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳ जिन्वति ॥ ॐ भूर्भुवस्सुवः अङ्गारकाय नमः अङ्गारकमावाहयामि ॥ तद्दक्षिणे ॐ स्योना पृथिवि भवा नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥ ॐ भूर्भुवस्सुवः अङ्गारकाधिदेवतां भूमिमावाहयामि ॥ तदुत्तरे ॐ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ॥ मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥ ॐ भूर्भुवस्सुवः अङ्गारकप्रत्यधिदेवं क्षेत्रपालमावाहयामि, इति ॥

॥ अथ पूर्वदळे शुक्रमावाहयेत्— " शुक्रं शुक्लतनुं श्वेतवस्त्राढ्यं दैत्यमन्त्रिणम् । भार्गवं दण्डवरदकमण्डल्वक्षसूत्रिणम् ॥ कुन्दपुष्पसमानाभं मुक्ताफलसमप्रभम् । स्थापयामि महाशान्तं भृगुं दैत्यगुरुं प्रभुम् " ॥ सूर्यस्य पूर्वदिग्भागे पञ्चकोणाकारमण्डले प्राङ्मुखं भोजकटकदेशजं भार्गवगोत्रजं शौनकार्षं तिष्यनक्षत्रजं त्रिष्टुप्छन्दसं हाटकाग्निकं श्वेतमक्षसूत्रदण्डकमण्डलुवरदचतुर्भुजं श्वेताम्बरगन्धमाल्यवस्त्ररत्नाभरणभूषितं किरीटिनं श्वेतच्छत्रध्वजपताकिनं श्वेताश्ववाहनं भूसंभवश्वेतदशाश्वं श्वेतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्राणीं प्रत्यधिदेवतेन्द्रं च, ध्यात्वा॥ ॐ प्र वः शुक्राय भानवे भरध्वम् । हव्यं मतिं चाग्नये सुपूतम् ॥ यो दैव्यानि मानुषा जनूꣳषि । अन्तर्विश्वानि विद्मना जिगाति ॥ ॐ भूर्भुवस्सुवः शुक्राय नमः शुक्रमावाहयामि ॥ ॐ

इन्द्राणी मासुनारिषु सुपत्नीमहमश्रवम्। नह्यस्या अपरं चन जरसामरते पतिः ॥ ॐ भूर्भुवस्सुवः शुक्राधिदेवतामिन्द्राणी-मावाहयामि ॥ ॐ इन्द्रं वो विश्वतस्परि० केवलः ॥ ॐ भूर्भुवस्सुवः शुक्रप्रत्यधिदेवमिन्द्रमावाहयामि, इति ॥ ॥ अथ आग्नेयदळे सोममावाहयेत्— "श्वेतवस्त्रधरं श्वेतदशाश्वं रथवाहनम्। द्विभुजं साभयगदमात्रेयं सामृतं विधुम् ॥ शान्तं नक्षत्रनाथं च रोहिणीवल्लभं प्रभुम्। कुन्दपुष्पोज्वलाकारं स्थापयामि निशाकरम्" ॥ सूर्यस्याग्नेयदिग्भागे चतुरस्राकारमण्डले प्रत्यङ्मुखं यमुनादेशजमात्रेयगोत्रजमात्रेयार्षं कृत्तिकानक्षत्रजं गायत्रीछन्दसं पिङ्गलाग्निकं अभयगदाधरं द्विभुजं श्वेताम्बरगन्धमाल्य-मुक्ताभरणभूषितं किरीटिनं श्वेतच्छत्रध्वजपताकिनं वारिसम्भूतदशाश्वं त्रिचक्रं श्वेतरथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतापं प्रत्यधिदेवतागौरीं च ध्यात्वा ॥ ॐ आ प्यायस्व समेतु ते० संगथे ॥ ॐ भूर्भुवस्सुवः सोमाय नमः सोममावाहयामि ॥ ॐ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः ॥ ॐ भूर्भुवस्सुवः सोमाधिदेवता अप आवाहयामि ॥ ॐ गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा च-तुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ ॐ भूर्भुवस्सुवः सोमप्रत्याधिदेवतां गौरीमावाहयामि, इति ॥ ॥ अथैशान्यदळे बुधमावाहयेत्— "पीतस्रग्गन्धवस्त्राढ्यं स्वर्णाभं च चतुर्भुजम्। शक्तिचर्मासिगदिनमात्रेयं सिंहगं बुधम् ॥ चाम्पेयपुष्पसंकाशं विशुद्धकनकप्रभम्। स्थापयामि महासौम्यं बुधं सोमात्मजं प्रभुम्" ॥ सूर्यस्यैशानदिग्भागे बाणाका-रमण्डले प्राङ्मुखं मगधदेशजमात्रेयगोत्रजं भारद्वाजार्षं श्रविष्ठानक्षत्रजं त्रिष्टुप्छन्दसं जाठराग्निकं शक्तिखड्गचर्मगदाधरं चतुर्भुजं पीताम्बरगन्धमाल्यमरकतरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं पीतसिंहवाहनं वाय्वग्निजपीताष्टाश्वं

पीतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताविष्णुं प्रत्यधिदेवताविष्णुं च, ध्यात्वा ॥ ॐ उद्बुध्य-स्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते स ँ सृजेथामयं च । पुनः कृण्व ँ स्त्वा पितरं युवानमन्वाता ँ सीत् त्वयि तन्तुमेतम् ॥ ॐ भूर्भुवस्सुवः बुधाय नमः बुधमावाहयामि ॥ ॐ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजा ँ सि यो अस्कभायदुत्तर ँ सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ॐ भूर्भुवस्सुवः बुधाधिदेवं विष्णुमावाहयामि ॥ ॐ विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥ ॐ भूर्भुवस्सुवः बुधप्रत्यधिदेवं विष्णुमावाहयामि, इति ॥ ॥ अथोत्तरदळे बृहस्पतिमावाहयेत्— " आंगिरसं देवगुरुं पीतस्रग्गन्धवाससम् । दण्डिनं वरदं पीतं साक्षसूत्रकमण्डलुम् ॥ कुन्दपुष्पसमानाभं तप्तकांचनसन्निभम् । स्थापयामि महाभक्त्या प्रसन्नवदनं गुरुम् " ॥ सूर्यस्योत्तरादिग्भागे दीर्घचतुरश्रमण्डले उदङ्मुखं सिन्धुदेशजमाङ्गिरसगोत्रजं वसिष्ठार्षमुत्तराफल्गुनीनक्षत्रजं त्रिष्टुप्छन्दसं शिल्यग्निकं पीतमक्षसूत्रदण्डकमण्डलुवरद-चतुर्भुजं पीताम्बरगन्धमाल्यपुष्यरागरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं विश्वरूपाख्यपाण्डुराष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्रं प्रत्यधिदेवताब्रह्माणं च, ध्यात्वा ॥ ॐ बृहस्पते अति य-दर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ॐ भूर्भुवस्सुवः बृहस्पतये नमः बृहस्पतिमावाहयमि ॥ ॐ इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्नाविवा-सन्ति कवयस्सुयज्ञाः ॥ ॐ भूर्भुवस्सुवः बृहस्पत्यधिदेवमिन्द्रं मरुत्वन्तमावाहयामि ॥ ॐ ब्रह्म जज्ञानं० विवः ॥ ॐ भूर्भुवस्सुवः बृहस्पतिप्रत्यधिदेवं ब्रह्माणमावाहयामि, इति ॥ ॥ अथ पश्चिमदळे शनैश्चरमावाहयेत्—

"इन्द्रनीलनिभं मन्दं काश्यपिं चित्रभूषणम् । चापबाणधरं चर्मशूलिनं गृध्रवाहनम् ॥ इन्द्रनीलसमानाभं नीलोत्पलसमप्रभम् । स्थापयामि महारौद्रं सूर्यपुत्रं शनैश्चरम् " ॥ सूर्यस्य पश्चिमदिग्भागे धनुराकारमण्डले उदङ्मुखं काश्यपगोत्रजं भृग्वार्षेयं रेवती-नक्षत्रजं सौराष्ट्रदेशजं गायत्रीछन्दसं महातेजोऽग्निकं नीलं चर्मबाणधनुःशूलचतुर्भुजं नीलाम्बरगन्धमाल्यनीलरत्नाभरणभूषितं किरीटिनं नीलच्छत्रध्वजपताकिनं नीलगृध्रवाहनमाकाशजजम्बालाष्टाश्वं नीलं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताप्रजापतिं प्रत्यधिदेवतायमं च, ध्यात्वा ॥ ॐ शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ । शं योर॒भिस्रवन्तु नः ॥ ॐ भूर्भुवस्सुवः शनैश्चराय नमः शनैश्चरमावाहयामि ॥ ॐ प्रजा॒पते न त्वदे॒तानि० र॒यी॒णाम् ॥ ॐ भूर्भुवस्सुवः शनैश्चराधिदेवं प्रजापतिमावाहयामि ॥ ॐ इ॒मं यम प्रस्त॒रमाहि सीदाङ्गि॑रोभिः पि॒तृभिः संविदा॒नः । आ त्वा॒ मंत्राः कविश॒स्ता व॑हन्त्वे॒ना रा॑जन् ह॒विषा मादयस्व ॥ ॐ भूर्भुवस्सुवः शनैश्चरप्रत्यधिदेवं यममावाहयामि, इति ॥ ॥ अथ नैर्ऋत्य-दळे राहुमावाहयेत्—"सैंहिकेयं कराळास्यं कौण्डिनेयं तमोमयम् । खड्गचर्मधरं भीमं नीलसिंहासने स्थितम् ॥ नीलाञ्जनसमानाभं नीलमेघसमद्युतिम् । स्थापयामि महावक्त्रं राहुं चन्द्रार्कवैरिणम् " ॥ सूर्यस्य नैर्ऋत्यदिग्भागे शूर्पाकार-मण्डले दक्षिणाभिमुखं बर्बरदेशजं पैठीनसिगोत्रजमाङ्गिरसार्षमश्विनीनक्षत्रजं गायत्रीछन्दसं हुताशनाग्निकं कृष्णं खड्ग-चर्मधरं द्विभुजं कृष्णाम्बरगन्धमाल्यगोमेदरत्नाभरणभूषितं किरीटिनं कृष्णच्छत्रध्वजपताकिनं कराळवदनमुरगालंकारं कृष्ण-सिंहासने स्थितमष्टाश्वं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतासर्पं प्रत्यधिदेवतानिर्ऋतिं च, ध्यात्वा ॥ ॐ कया॑ नश्चि॒त्र आभु॑वदू॒ती स॒दावृ॑धः सखा॑ । कया॒ शचि॑ष्ठया वृ॒ता ॥ ॐ भूर्भुवस्सुवः राहवे नमः राहुमावाहयामि ॥ ॐ

आयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः ॥ ॐ भूर्भुवस्सुवः राह्वधिदेवं सर्पमावाहयामि ॥ ॐ यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् । इदं ते तद्विष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः ॥ ॐ भूर्भुवस्सुवः राहु-प्रत्यधिदेवं निर्ऋतिमावाहयामि, इति ॥ ॥ अथ वायव्यदळे केतुमावाहयेत्— " धूम्रान् द्विबाहुगदिनो विकृतास्यांच्छतात्मकान् । गृध्रासनगतान् केतून् वरदान् ब्रह्मणः सुतान् ॥ नीलमेघसमानाभं चित्रवर्णं महाबलम् । स्थापयामि महारौद्रं केतुं सर्वफलप्रदम् " ॥ सूर्यस्य वायव्यदिग्भागे ध्वजाकारमण्डले दक्षिणाभिमुखमन्तर्वेदिदेशजं जैमिनिसूत्रजं रौद्राग्निकं धूम्रं वरदगदाधरं द्विभुजं चित्राम्बरगन्धमाल्यवैडूर्यरत्नाभरणभूषितं किरीटिनं धूम्रच्छत्रध्वजपताकिनं चित्रगृध्रवाहनं धूमारुणाश्वं धूम्रं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताब्रह्माणं प्रत्यधिदेवताचित्रगुप्तं च, ध्यात्वा ॥ ॐ केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ॐ भूर्भुवस्सुवः केतवे नमः केतुमावाहयामि ॥ ॐ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ ॐ भूर्भुवस्सुवः केत्वधिदेवं ब्रह्माणमावाहयामि ॥ ॐ सचित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयो धाम् । चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥ ॐ भूर्भुवस्सुवः केतुप्रत्यधिदेवं चित्रगुप्तमावाहयामि, इति ग्रहानावाह्य, पूर्वाद्यष्टदिक्षु इन्द्रादीन् ग्रहमण्डलस्य पश्चिमभागे उदगपवर्गं दुर्गादींश्चाक्षतपुञ्जेष्वावाहयेत् — पूर्वदळाग्रे " ॐ त्रातारमिंद्रम्० इन्द्रः " ॐ भूर्भुवस्सुवः इन्द्रमावाहयामि ॥ आग्नेयदळाग्रे " अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति । अग्निर्दिवि हव्यमाततानाग्नेर्धामानि विभृता पुरुत्रा " ॐ भूर्भुवस्सुवः अग्निमावाहयामि ॥ दक्षिणदळाग्रे " ॐ यमो दाधार पृथिवीं यमो विश्वमिदं जगत् ॥ यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम् "

ॐ भूर्भुवस्सुवः यममावाहयामि ॥ नैर्ऋत्यदळाग्रे "ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यां तस्करस्यान्वेषि । अन्यमस्मदिच्छसातं इत्या नमो देवि निर्ऋते तुभ्यमस्तु" ॐ भूर्भुवस्सुवः निर्ऋतिमावाहयामि ॥ पश्चिमदळाग्रे "ॐ सधमादो द्युम्निनीरूर्जं एता अनिभृष्टा अपस्युवो वसानाः । परस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः" ॐ भूर्भुवस्सुवः वरुणमावाहयामि ॥ वायव्यदळाग्रे "ॐ आनो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् । वायो अस्मिन् हविषि मादयस्व यूयं पात स्वस्तिभिः सदा नः" ॐ भूर्भुवस्सुवः वायुमावाहयामि ॥ उत्तरदळाग्रे "ॐ सोमो धेनुꣳ सोमो अर्वन्तमाशुम् । सोमो वीरं कर्मण्यं ददातु ॥ सादन्यं विदथ्यꣳ सभेयम् । पितुः श्रवणं यो ददाशदस्मै" ॐ भूर्भुवस्सुवः सोममावाहयामि ॥ ईशानदळाग्रे "ॐ सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीनामुखा कृधि" ॐ भूर्भुवस्सुवः ईशानमावाहयामि ॥ अथ मण्डलस्य पश्चिमभागे "ॐ जातवेदसे० अग्निः" ॐ भूर्भुवस्सुवः दुर्गामावाहयामि ॥ तदुत्तरे "ॐ गणानां त्वा० सादनम्" ॐ भूर्भुवस्सुवः गणपतिमावाहयामि ॥ तदुत्तरे "ॐ क्षेत्रस्य पतिना० मृडातीदृशे" ॐ भूर्भुवस्सुवः क्षेत्रपालमावाहयामि ॥ तदुत्तरे "ॐ वास्तोष्पते प्रतिजानीहि० चतुष्पदे" ॐ भूर्भुवस्सुवः वास्तोष्पतिमावाहयामि ॥ तदुत्तरे "ॐ त्र्यम्बकं यजामहे० मामृतात्" ॐ भूर्भुवस्सुवः त्र्यम्बकमावाहयामि ॥ तदुत्तरे "यत इन्द्र० विमृधो जहि ॥ स्वस्तिदा० अभयङ्करः" ॐ भूर्भुवस्सुवः अभयङ्करेन्द्रमावाहयामि ॥ तदुत्तरे "ॐ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानवयजामहे" ॐ भूर्भुवस्सुवः मृत्युमावाहयामि ॥ तदुत्तरे "ॐ मूर्धानं दिवो अरतिं पृथिव्या

वैश्वानरमृताय जातमग्निम् ॥ कविᳪं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः " ॐ भूर्भुवस्सुवः अग्निं वैश्वानर-मावाहयामि ॥ इत्येवं क्रमेण देवता आवाह्य " ॐ आदित्याय नमः ॥ ॐ अङ्गारकाय नमः " इत्यादिनाममंत्रैरासनं पाद्यमर्घ्यमाच-मनीयञ्च दद्यात् ॥ अथ परिधानप्रभृत्यग्निमुखान्तं कृत्वा चरुं नवधा विभज्य " आदित्याय त्वा, अङ्गारकाय त्वा " इत्यादि यथा-क्रममभिमृश्य पक्वाज्जुहोति ॥ सर्वत्रावदानधर्मेण पक्वमवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ " तत्सवितुर्वरेण्यं० प्रचोदयो ३ म् " इति पुरोनुवाक्यामनूच्य तत्तदुक्तयाज्यया पक्वं हुत्वा उपरिष्टात्स्रुवाहुतिं जुहुयात् ॥ " आसत्येन " इत्यादित्याय ॥ " अग्निर्मूर्धा " इत्यङ्गारकाय ॥ " प्र वः शुक्राय " इति शुक्राय ॥ " आ प्यायस्व " इति सोमाय ॥ " उद्बुध्यस्व " इति बुधाय ॥ " बृहस्पते अतियदर्यो अर्हात् " इति बृहस्पतये ॥ " शं नो देवीरभिष्टये " इति शनैश्चराय ॥ " कयानश्चित्र आभुवत् " इति राहवे ॥ " केतुं कृण्वन् " इति केतवे ॥ इति याज्यामन्त्रैः क्रमेण नवानां ग्रहाणां पक्वं हुत्वा घृतान्वक्ता अर्कखदिरौदुम्बरपलाशापामार्गाश्वत्थ-शमीदूर्वाकुशाख्याः समिधः क्रमेण " आसत्येन " इत्यादिभिः प्रत्यृचमष्टसहस्रमष्टशतमष्टाविंशतिं वोपहुत्याधिप्रत्यधिदेवतानां च " अग्निं दूतं, येषामीशे " इत्यादिभिः प्रधानस्याष्टसहस्रोपहोमे अष्टाविंशत्यष्टाविंशतिं, अष्टशतोपहोमे अष्टावष्टौ, अष्टाविंशत्यु-पहोमे तु तिस्रस्तिस्रः इत्येवं क्रमेणोपजुहुयात् । एवमेव तत्तद्ग्रहोक्तान्योदनानि हविष्यं वोपहुत्याज्यं च यथाक्रमं जुहुयात् ॥ अथेन्द्रादीनां दुर्गादीनां च समिच्चर्वाज्यैः " त्रातारमिन्द्रं " इत्यादिभिः प्रतिमन्त्रमधिप्रत्यधिदेवताहुतिसङ्ख्ययोपहुत्याज्यमिश्रै-स्तिलव्रीहिभिश्च व्याहृतिभिरष्टोत्तरशतमष्टाविंशतिं वोपजुहुयात् ॥ ततः स्विष्टकृतं प्रतिपक्वमुत्तरार्धात्सकृत्सकृदवदाय द्विरभिघार्य पुरस्तात्स्रुवाहुतिं हुत्वा " अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुᳪं सरस्वतीᳪं सवितारं च वाजिनो ३ म्,

सोम ँ राजानं वरुणमग्निमन्वारभामहे । आदित्यान्विष्णुँ सूर्यं ब्रह्माणं च बृहस्पतिँ स्वाहा " इत्युत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहुयात् ॥ अर्यम्णे, बृहस्पतये, इन्द्राय, वाचे, विष्णवे, सरस्वत्यै, सवित्रे, सोमाय राज्ञे, वरुणाय, अग्नये, आदित्येभ्यः, सूर्याय, ब्रह्मणे स्विष्टकृत इदं न मम ॥ अथवा अग्नये स्विष्टकृत इदं० ॥ अथोपरिष्टात्स्रुवाहुतिं हुत्वा मेक्षणप्रहरणादि शुल्बप्रहरणान्ते जयप्रभृति प्रायश्चित्तहवनान्तं कृत्वा " ॐ मूर्धानं दिवो० देवाः स्वाहा " इति पूर्णाहुतिं जुहुयात् ॥ अग्नये वैश्वानरायेदं० ॥ अथाग्रेणाग्निं ग्रहानभ्यर्चयति— " आपो हि ष्ठा मयोभुवः " इति तिसृभिः " हिरण्यवर्णाः शुचयः पावकाः " इति चतसृभिः " पवमानः सुवर्जनः " इत्येतेनानुवाकेन मार्जयित्वा " आदित्यं तर्पयामि । अङ्गारकं तर्पयामि । शुक्रं तर्पयामि । सोमं तर्पयामि । बुधं तर्पयामि । बृहस्पतिं तर्पयामि । शनैश्चरं तर्पयामि । राहुं तर्पयामि । केतुं तर्पयामि । " इति तर्पयित्वा " ॐ आदित्याय नमः । ॐ अङ्गारकाय नमः " इत्यादिनाममंत्रैर्गन्धपुष्पधूपदीपैरभ्यर्च्य लाजापूपपृथुकाद्युपहारान्निवेद्य " ॐ आदित्याय स्वाहा । ॐ अङ्गारकाय स्वाहा " इत्यादिभिर्हुतशेषेण बलिमुपहृत्य ताम्बूलदक्षिणानीराजनाद्युपचारान्कृत्वा मंत्रपुष्पांजलिं समर्प्य

वन्दे रविं द्युमणिमम्बुरुहे निषण्णं दोर्भ्यां दधानमरुणाम्बुरुहे ग्रहेन्द्रम् । माणिक्यभूषमरुणांशुकगन्धमाल्यैर्भ्राजन्तमर्कममितद्युतिमब्जमित्रम् ॥ जपाकुसुमसङ्काशं काश्यपेयं महाद्युतिम् । तमोहरं कल्मषघ्नं भास्करं प्रणमाम्यहम् ॥ दिवाकरं दीप्तसहस्ररश्मिं तेजोमयं जगतः कर्मसाक्षिम् । मित्रं भानुं सूर्यमादिं ग्रहणां रविं सदा शरणमहं प्रपद्ये ॥ १ ॥ रक्तस्रग्गन्धवासाः करविधृतगदाशक्तिखड्गत्रिशूलो भारद्वाजस्त्रिणेत्रो वसुमतितनयो लोहिताङ्गः शुभाङ्गः ॥ मेषव्याघ्रध्वजोऽर्कद्युतिसदृशमहाकुण्डलाश्लिष्टकर्णः पायाद्भास्वत्किरीटाङ्गदवलयलसद्विद्रुमालङ्कृतो नः ॥ धरणीगर्भसम्भूतं विद्युत्काञ्चनसन्निभम् । कुमारं शक्ति-

हस्तञ्च लोहिताङ्गं नमाम्यहम् ॥ महेश्वरस्याननस्वेदबिन्दाभूमौ जातं रक्तमाल्याम्बराढ्यम् । सुदीधितिं लोहिताङ्गं कुमारमङ्गारकं सदा शरणमहं प्रपद्ये ॥ २ ॥ वन्दे विराजितसिताऽशुकगन्धमाल्यमच्छाऽश्वगं तनुविराजितवज्ररत्नम् । दोर्भिस्सदण्डगुणकुण्डित-मक्षसूत्रं बिभ्राणमासुरगुरुं भृगुपुत्रमीड्यम् ॥ हिमकुन्दतुषाराभं दैत्यानां परमं गुरुम् । सर्वशास्त्रप्रदातारं भार्गवं प्रणमाम्यहम् ॥ वर्षप्रदं चिन्तितार्थानुकूलं नयप्रधानं विनयोपपन्नम् । तं भार्गवं योगविशुद्धसत्वं शुक्रं सदा शरणमहं प्रपद्ये ॥ ३ ॥ श्वेताम्बरस्रगनु-लेपनमत्रिनेत्रजातं दशाश्वरथवाहनमोषधीशम् । दोर्भ्यां धृताऽभयगदं भपतिं सुधांशुं श्रीमत्सुमौक्तिकधरं प्रणमामि चन्द्रम् ॥ दधिशङ्खतुषाराऽऽभं क्षीरोदाऽर्णवसम्भवम् । नमामि शशिनं भक्त्या शम्भोर्मुकुटभूषणम् ॥ यः कालहेतोः क्षयवृद्धिमेति यं देवताः पितरो वा पिबन्ति । तं वै वरेण्यं ब्रह्मेन्द्रवन्द्यं सोमं सदा शरणमहं प्रपद्ये ॥ ४ ॥ वन्दे बुधं मरकतोज्ज्वलदेहकान्तिं पीताम्बर-स्रगनुलेपनभूषिताऽङ्गम् । शक्तिञ्च दोर्भिरसिचर्मगदादधानं सिंहध्वजं शशिसुतं बुधमत्रिवंशम् ॥ प्रियङ्गुगुलिकाऽऽभासं रूपेणाऽ-प्रतिमं बुधम् । सौम्यं सौम्यगुणोपेतं नमामि शशिनस्सुतम् ॥ विशुद्धबुद्धिं श्रुतिकालबोधं सद्व्याहरं सोमवंशप्रदीपम् । सुदीधितिं छान्दसं विश्वरूपं बुधं सदा शरणमहं प्रपद्ये ॥ ५ ॥ पीताम्बरं तनुलसद्धृतपुष्परागं केयूरहारमणिकुण्डलमण्डिताङ्गम् । दण्डं वराऽक्षगुणकुण्डियुतं दधानं आङ्गीरसं सुरगुरुं हयगं नमामि ॥ देवतानां ऋषीणाञ्च गुरुं काञ्चनसन्निभम् । सुवन्द्यं त्रिषु लोकेषु प्रणमामि बृहस्पतिम् ॥ बुद्ध्यात्मनो यस्य न कश्चिदन्यो मतिं देवा उपजीवन्ति यस्य । प्रजापतेरात्मजं धर्मनित्यं बृहस्पतिं सदा शरणमहं प्रपद्ये ॥ ६ ॥ दोर्भिर्धनुर्विशिखचर्मधरं त्रिशूलं भास्वत्किरीटमकुटोज्वलितेन्द्रनीलम् । नीलातपत्रकुसुमांशुकगन्धभूषं गृध्रस्थितं रविसुतं प्रणतोऽस्मि मन्दम् ॥ नीलाऽञ्जनचयाऽऽकारं रविसूनुं नपुंसकम् । छायागर्भसमुद्भूतं वन्दे भक्त्या शनैश्चरम् । शनैश्चरं प्रजापतिं यो हि यस्य शनैर्भोगो गमनं चेष्टितञ्च । सूर्यात्मजं क्रोधनसुप्रसन्नं शनैश्चरं सदा शरणमहं प्रपद्ये ॥ ७ ॥ राहुं

कराग्रपरिमण्डितचर्मखड्गं भीमं तमोमयतनुस्तममिन्द्रिनाऽरिम् । कौण्डिन्यसूनुमसितांशुकगन्धभूषं गोमेदभूषिततनुं हरिगं नमामि ॥ अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् । सिंहिकागर्भसम्भूतं तं राहुं प्रणमाम्यहम् ॥ यो विष्णुनैवाऽमृतं पीयमानं छित्वा शिरो ग्रहभावे नियुक्तः । योऽभ्यर्कचन्द्रौ ग्रसति पर्वकाले राहुं सदा शरणमहं प्रपद्ये ॥ ८ ॥ गृध्रस्थितान् जलजयोनिसमानवक्त्रान् धूम्रान्वराभयकरान् सुभुजान्कुमारान् । वैदूर्यभूषिततनून्वरजैमिनेयान् केतून् भयानकमुखान् द्विभुजान्नमामि ॥ पलाशधूम्रसङ्काशान् तारकाग्रहमस्तकान् । रुद्रान् रौद्रात्मकान्घोरान् तान् केतून्प्रणमाम्यहम् ॥ ये ब्रह्मपुत्रा ब्रह्मसमानवक्त्राः ब्रह्मोद्भवा ब्रह्मसमा कुमाराः । ब्रह्मोत्तमा वरदा जामदग्न्याः केतून् सदा शरणमहं प्रपद्ये ॥ ९ ॥

इति प्रणम्य " शान्तिरस्तु शिवं मेऽस्तु ग्रहाः कुर्वन्तु मङ्गलम् । अरिष्टानि प्रणश्यन्तु दुरितानि भयानि च " इति प्रार्थ्य " ॐ भूर्भुवस्सुवः आदित्यमधिप्रत्यधिदेवतासहितमुद्वासयामि ॥ ॐ भूर्भुवस्सुवः अङ्गारकमधिप्रत्यधिदेवतासहितमुद्वासयामि " एवमेव शुक्रं सोमं बुधं बृहस्पतिं शनैश्चरं राहुं केतुं चेति क्रमेणावाहितदेवता उद्वासयेत् ॥ अथाचार्योऽग्नेः पश्चाद्यजमानं सपत्नीकं प्राङ्मुखमुपवेश्य कलशोदकेन मार्जयेत्— " आपो हि ष्ठा मयोभुवः " इति तिसृभिः " देवस्य त्वा " इति तिसृभिः " तच्छंयोरावृणीमहे " इति शंयुवाकेन, ग्रहमन्त्रैः, " सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ इन्द्राद्या मातराः सर्वा लक्ष्मीश्चोमा सरस्वती ॥ कश्यपाद्याश्च मुनयो गङ्गाद्याः सरितस्तथा । अनन्तादिमहानागा गिरयः सप्त सागराः ॥ सर्वे त्वामभिषिञ्चन्तु सर्वकाम्यार्थसिद्धये । सूर्यादयो ग्रहाः सर्वे साधिप्रत्यधिदेवताः ॥ पृथिव्यादीनि भूतानि विघ्नो दुर्गादयस्तथा । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये " इत्येतैश्च मार्जयित्वा उत्तरपरिषेकादिहोमशेषं समाप्य कर्मसाङ्गतासिध्यर्थमादित्यादिग्रहप्रीत्यर्थं तत्तद्ग्रहोक्तदक्षिणा धान्यानि च दद्यात् ॥ ॥ " कपिले सर्वदेवानां पूजनीयासि रोहिणी ।

सर्ववेदमयी यस्मादतः शान्तिं प्रयच्छ मे " इति कपिलां धेनुमादित्याय ॥ " धर्मस्त्वं वृषरूपेण जगदानन्दकारक । अष्टमूर्तेरधिष्ठान अतः शान्तिं प्रयच्छ मे " इति रक्तमनड्वाहमङ्गारकाय ॥ " विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः । विष्णोरर्कस्य वाहः स्यादतः शान्तिं प्रयच्छ मे " इत्यश्वं शुक्राय ॥ " पुण्यस्त्वं शङ्ख पुण्यानां मङ्गळानाञ्च मङ्गळम् । विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे " इति शङ्खं सोमाय ॥ " हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे " इति काञ्चनं बुधाय ॥ " पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानादस्य मे विष्णुः प्रीतो भवतु सर्वदा " इति वस्त्रं बृहस्पतये ॥ " गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादतः शान्तिं प्रयच्छ मे" इति कृष्णां गां शनैश्चराय ॥ " यस्मात्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः । यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे " इति छागं राहवे ॥ " महासत्व महाकाय क्षीरोदार्णवसम्भव । सर्वसङ्ग्रामविजय जयं गज कुरुष्व मे " इति कुञ्जरं केतवे ॥ सर्वेषामलाभे हिरण्यं वा । एवं तत्तद्धान्यप्रतिमादियुतं कलशं " कलशं प्रतिमां वस्त्रं प्राप्तपापाऽपनुत्तये । तुभ्यं दास्यामि विप्रेन्द्र यथोक्तफलदो भव " इति ' हिरण्यगर्भ० ' इति यथाशक्ति दक्षिणाञ्च आचार्यादिभ्यो दत्वा, "अनेन ग्रहशान्तिकर्मणा श्रीपरमेश्वरः प्रीयताम् । कृतस्य ग्रहशान्तिकर्मणः साङ्गतासिध्यर्थं यावच्छक्ति ब्राह्मणान् भोजयिष्ये तेभ्यश्च यथाशक्ति भूयसीं दक्षिणां दातुमुत्सृजे " इति सङ्कल्प्य विष्णुं स्मरेत् ॥

## ॥ अथ गर्भाधानम् ॥

अथेदानीमवसरप्राप्तेषु संस्कारेषु प्रथमं गर्भाधानमभिधीयते ॥ अत्र संस्कारेषु " एतदन्तस्त्वनुक्रान्तः प्रजासंस्कार[1] इष्यते । केचित्तु गर्भसंस्कारं जन्मनः[2] प्राक्प्रचक्षते " इति उपनयनव्रतोत्सर्जनान्ते वक्ष्यमाणेन गृह्यसंङ्ग्रहवचनेन गर्भाधानादयः सर्वे प्रजा-

१. क्षेत्रसंस्कारमित्यर्थः ॥ २. जातकर्मण इत्यर्थः ॥

संस्कारा इति बह्वः समामनन्ति, केचित्तु गर्भाधानादिविष्णुबल्यन्ताः क्षेत्रसंस्काराः जातकर्मादयः प्रजासंस्काराः इत्यपि मन्यन्ते, इत्येवं पक्षद्वयं प्रतीयते ॥ तत्र प्रजासंस्कारपक्षे "प्रतिप्रधानं गुणावृत्तिः" इति न्यायाद्गर्भाधानादयः सर्वेऽपि प्रतिगर्भमावर्तनीया भवन्ति। क्षेत्रसंस्कारपक्षे तु "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता" इति देवलवचनेन गर्भाधानादिविष्णुबल्यन्ताः संस्काराः स्त्रियः प्रथमगर्भे सकृत्करणेन सर्वत्र गतार्थाः स्युरित्यवगन्तव्यम् ॥ (बो. गृ. शे. सू. २. २) "पूर्वपक्षे पुण्ये नक्षत्रे ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्यृद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति — 'प्रवेधसे० हेड्यान् स्वाहा' इति। स्विष्टकृतमवदाय तमन्तःपरिधि सादयित्वाऽथाज्याहुतीरुपजुहोति– 'ज्येष्ठाय स्वाहा, श्रेष्ठाय स्वाहा, प्रतिष्ठाय स्वाहा, प्रतिष्ठित्यै स्वाहा, सम्पत्यै स्वाहा, सम्पतये स्वाहा, ब्रह्मणे स्वाहा, आयतनवते स्वाहा' इति ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ हविष्यमन्नमभिमन्त्रयते— 'तत्सवितुर्वृणीमहे। वयं देवस्य भोजनम् ॥ श्रेष्ठ ँ सर्व धातमम्। तुरं भगस्य धीमहि' इति। अपरेणाग्निमुभौ जायापती प्राश्नीयाताम्— 'तत्सवितुर्वरेण्यम्' इति। प्राश्याप आचम्य जठरमभिमृशति— 'यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः' इति द्वाभ्याम्। यं कामं कामयते तं मनसा ध्यायेत्"॥

(बो. गृ. सू. १. ७) "ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनात् 'जातः' इत्यभिधीयते। उपनीतमात्रो व्रतानुचारी, वेदानां किञ्चिदधीत्य ब्राह्मणः। एकां शाखामधीत्य श्रोत्रियः। अङ्गाध्याय्यनूचानः। कल्पाध्यायी ऋषिकल्पः। सूत्रप्रवचनाध्यायी भ्रूणः। चतुर्वेदादृषिः। अत ऊर्ध्वं देवः॥ अथ यदि कामयेत श्रोत्रियं जनयेयमिति आ अरुन्धत्युपस्थानात्कृत्वा त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणावासाते। अथ यदि कामयेतानूचानं जनयेयमिति द्वादशरात्रमेतद्व्रतं चरेत् ॥ अथ यदि भ्रूणं जनयेयमिति चतुरो मासानेतद्व्रतं चरेत् ॥ अथ यदि कामयेत ऋषिं जनयेयमिति षण्मासानेतद्व्रतं चरेत् ॥ अथ यदि कामयेत देवं जनयेयमिति संवत्सरमे-

तद्व्रतं चरेत् ॥ अथ यदैषा मलवद्वासा स्यात् 'नैनया सह संवदेत न सहासीत नास्या अन्नमद्यात् ब्रह्महत्यायै ह्येषा वर्ण प्रतिमुच्या-स्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यत्' इति । नैनामुपेयात् । नारण्ये । न पराचीम् ॥ न स्नाति । नाभ्यङ्क्ते । न प्रलिखते । नाङ्क्ते । न दतो धावते । न नखानि निकृन्तते । न कृणात्ति । न रज्जुं सृजति । न पर्णेन पिबति । न खर्वेण पिबति । 'तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय' इति ब्राह्मणम् । चतुर्थ्यां स्नातायां निशायामलङ्कृत्य शयनेऽभिमन्त्रयते—'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पि ँ शतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ यथाग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी । वायुर्यथा दिशां गर्भ एवं गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ हिरण्ययी अरणी यन्निर्मन्थतो अश्विना । तं ते गर्भं दधाम्यहं दशमे मासि सूतवे । नेजमेष परापत सुपुत्रः पुनरापत । अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान्' ॥ अथैनां परिष्वजति—'अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं रेतोऽहं रेतोभृत्त्वं मनोहमस्मि वाक्त्वं सामाहमस्मि ऋक्त्वं तावेहि संभवाव सह रेतो दधावहै पु ँ से पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय' इति । आत्मानं प्रत्यभिमृशते—'अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वंतः । अहं प्रजामजनयन्पितृणामहं जनिभ्यो अपरेषु पुत्रान्' इति । अथैनामुपैति—'तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेपम्' इति । स एवमेव चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैति । प्रजानिश्रेयसमृतुगमनमित्याचार्याः । सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः । यच्चादौ यच्चर्ताविति शालीकिः" ।

(बो. गृ. शे. सू. ५. ३) "अथ ऋतुशान्तिं व्याख्यास्यामः–तिथिवारनक्षत्रयोगकरणलग्नदोषशान्त्यर्थं चतुर्थे वा पञ्चमेऽह्नि वा शान्तिस्नानं प्रकुर्वीत । देवालये गृहे वा प्रस्थाष्टभिर्धान्यैस्तदर्धं तण्डुलैस्तदर्धं तिलैश्चोपर्युपरि चतुरश्रमरत्निमात्रं चतुरश्रं स्थण्डिलं कृत्वा तन्मध्ये नळिनमुल्लिख्य तस्मिन् तन्तुवेष्टितं कुम्भं निधाय तूष्णीं संस्कृताभिरद्भिः प्रोक्ष्य ब्रह्म जज्ञानमिति कुम्भं निधाय सपवित्रेण 'आपो वा इदꣳ सर्वम्' इत्येतेनानुवाकेन अब्लिङ्गाभिश्च कुम्भमुदकैः पूरयित्वा गन्धादिभिरलङ्कृत्य कूर्चमन्तर्धाय "गजाश्वरथवल्मीकमृदमाहृत्य गोकुलात्। चतुष्पथाद्राजगृहात्तुलसीबिल्वमूलयोः ॥ देवालयात्पर्वताद्वा गृह्णीयात्पञ्च मृत्तिकाः ॥ पालाशोदुम्बराश्वत्थवटप्लक्षकयाज्ञिषु ॥ जम्बूबिल्वकपित्थाम्रशिरीषेषु च पल्लवान् । त्वेषां त्वचश्च पञ्चैव गृह्णीयात्संभवेषु वै" इत्युक्तरीत्या पञ्च मृत्तिकाः पञ्च पल्लवान् पञ्च त्वचश्च निक्षिप्य नवरत्नमीषत्काञ्चनं नववस्त्रेणाच्छाद्य चूतपल्लवैर्बिल्वपल्लवैर्वावकीर्य नाळिकेरफलेनापिधाय दर्भैर्दूर्वादिना प्रतिच्छाद्यालंकृत्य सम्परिस्तीर्य पुरुषं पुण्डरीकाक्षं ध्यात्वा कुम्भं सम्पूज्य श्रोत्रियान्विप्रान् षडष्टौ वा वरणपूर्वकमभ्यर्च्याचार्यं चाभ्यर्चयेत् ॥ त ऋत्विजः कुम्भमन्वारभ्य वैष्णवीं गायत्रीमष्टसहस्रमष्टशतं वा वदन्तो वेदादीन् 'आपो हि ष्ठा मयोभुवः' इति तिस्रः 'हिरण्यवर्णाः, पवमानः' इत्यनुवाकौ वरुणसूक्तं श्रीसूक्तं पुरुषसूक्तं पञ्चशान्तिम्, 'ऋचां प्राची' इत्येतमनुवाकं च जपेयुः । 'नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह' इति ब्राह्मणम् । प्रणवेनोत्थाप्य 'आभिर्गीर्भिः' इति जपेयुः । अथालङ्कृतामुरुविष्टर आसीनां 'देवस्य त्वा' इति प्रोक्ष्य 'ऋतं च सत्यं च' इति त्रिभिर्मन्त्रैः ऋत्विजः स्नापयेयुः । ततो नारीं पञ्चगव्यं प्राशयेत् । 'गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम्' इति पञ्चगव्यम् । अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रमुपलिप्य लौकिकमग्निं श्रोत्रियागारादाहृत्य

स्वगृह्योक्तविधानेनाग्निमुखात्कृत्वा पालाशसमिद्भिरष्टोत्तरशतं विष्णुसूक्तेन जुहुयात् । तथा ब्रह्मसूक्तेनाज्यं रुद्रसूक्तेनाज्यम् । एतानि सूक्तान्यष्टादशकृत्वः प्रत्येकमावर्तयेत्तदानीमष्टोत्तरशतं सम्पद्यते । अथर्तुनक्षत्रस्य समिदन्नाज्याहुतीः प्रत्येकमष्टाविंशति-कृत्वः तन्मन्त्रेण जुहुयात् । मन्त्रौ चतुर्दशकृत्व आवर्तयेत् । अथ त्रियम्बकेन तिलहोममष्टोत्तरशतं जुहुयात् ॥ अथाज्याहुती-र्घृतसूक्तेनाष्टौ जुहुयात् । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् । अथ ऋत्विग्भ्यो दक्षिणां दद्यात्याचार्याय विशेषतः । एवं यदि शान्तिं कुर्यात्ततो नारी दोषात्प्रमुच्यते सर्वारिष्टशान्तिरस्त्वित्याह भगवान् बोधायनः" ॥

(बो. गृ. सू. ४. १२) "अथ गृहस्थस्य विद्यार्थिनस्त्रियाभ्यनुज्ञातस्य ऋतुसंवेशनविच्छेदप्रायश्चित्तं व्याख्यास्यामः । वसन्तो ग्रीष्मो वर्षाश्शरद्धेमन्तश्शिशिरेणर्तुकालमुक्त्वा ब्राह्मणेभ्यो निवेदयित्वा चीर्णव्रतान्तेन प्रदोषे देवयजनमुदा-नयति । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति – 'यस्त्वा हृदा कीरिणा मन्यमानः' इति पुरोनुवाक्या-मनूच्य 'यस्मै त्वꣳ सुकृते जातवेदः' इति याज्यया जुहोति । अथाज्याहुतीरुपजुहोति—'मधुश्च स्वाहा । माधवश्च स्वाहा' इत्याऽन्तादनुवाकस्य । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् । अपरेणाग्निमाज्यशेषमुदकशेषं चोभौ जायापती प्राश्नीयाताम्" ॥

अथ गर्भाधाननिमित्तस्य रजसो लक्षणमुक्तं प्रयोगपारिजाते— "नाभिमूले स्थितं पुष्पं चतुर्दलसमन्वितम् । तस्मिन्स-र्वाश्च दधते गर्भसम्भवकारणम् ॥ अधोमुखं स्थितं स्त्रीणां तद्बाल्ये मुकुलीकृतम् । बाल्यात्परवयः प्राप्ते मुकुलं विकसद्भवेत् ॥ उत्फुल्लकुसुमात्स्त्रीणां स्वभावेन स्रवेद्रजः । तदाप्रभृति सर्वासां मासि मासि ऋतुर्भवेत्" इति ॥ ॥ अथ प्रथमरजोदर्शने मास-पक्षतिथिनक्षत्रादीनां शुभाशुभफलानि कानिचिन्निरूप्यन्ते ॥ तत्र मासफलमुक्तं सं० रत्नमालायाम्— "आद्यर्तौ विधवा नारी चैत्रमासे भवेद्ध्रुवम् । वैशाखे बहुपुत्रा स्याज्ज्येष्ठे रोगातुरा भवेत् ॥ आषाढे त्वनपत्या स्याच्छ्रावणे धनिनी भवेत् । भाद्रे तु दुर्भगा

क्लीवा ह्याश्विने च तपस्विनी ॥ कार्तिके विधवा बाला मार्गशीर्षे बहुप्रजा । पौषे स्यात्पुंश्चली नारी माघे पुत्रसुतान्विता ॥ फाल्गुने सुखसम्पन्ना प्रथमर्तौ फलं स्मृतम् " इति ॥ ॥ पक्षफलं तत्रैव— "शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत् । कृष्णस्य दशमीयावन्मध्यमं फलमादिशेत् " ॥ ॥ तिथिफलं प्रयोगपारिजाते— "प्रथमायां पतिं हन्ति द्वितीयायां सुखं भवेत् । तृतीयायां श्रियै स्याच्च चतुर्थ्यां वृषली भवेत् ॥ पञ्चम्यां पुत्रलाभश्च षष्ठ्यां चारित्रविक्रिया । सप्तम्यां पुत्रवृद्धिः स्यादष्टम्यां सुतनाशनम् ॥ नवम्यां रुदती नित्यं दशम्यां धर्मशालिनी । एकादश्यां पतिस्निग्धा द्वादश्यां क्रन्दिनी भवेत् ॥ त्रयोदश्यां मानधना तत्परा बहुदोषकृत् । पर्वण्यन्यगृहीता स्याद्विद्यादेवं तिथेर्वशात् " इति ॥ ॥ वारफलं सं० मालायाम्— "रुग्णा पतिव्रता दुःखी पुत्रिणी भोगभागिनी । पतिप्रिया क्लेशवती सूर्यवारादिषु क्रमात् " इति ॥ ॥ नक्षत्रफलञ्च तत्रैवोक्तम्— "अश्विनी सुखदा स्त्रीणां भरणी कामवर्धिनी । कृत्तिका दैन्यदा ज्ञेया रोहिणी सुखदा भवेत् ॥ मृगस्तु कामभोगाय सुखदं रुद्रदैवतम् । आदित्यर्क्षं सुखं दद्याद्गुरुभं सुखवर्धनम् ॥ आश्लेषाः सुखनाशाय मघा वैधव्यदाः स्मृताः । पूर्वा फल्गुनिका पुत्रकन्या-सुखविवर्धिनी ॥ उत्तरा ह्यर्थनाशाय हस्तः पुत्रप्रवर्धनः । चित्रा चित्रतनुं नारीं कुरुते नात्र संशयः ॥ स्वाती शुभाय नारीणां विशाखा सुखनाशिनी । अनूराधार्थभोगाय ज्येष्ठा भर्तृवियोगदा ॥ शुभं वाऽप्यशुभं मूलं पूर्वाषाढार्थनाशिनी । सुखदा चोत्तराषाढा श्रवणः सुखवर्धनः ॥ धनिष्ठापञ्चकं स्त्रीणां प्रथमर्तौ सुखप्रदम् " इति ॥ ॥ अमासङ्क्रांत्यादौ विशेषतो वर्ज्यघटिकाः प्रोक्ता-स्तत्रैव—"अमासङ्क्रांतिविष्ट्यादौ व्यतीपाते च वैधृते । परिघस्य तु पूर्वार्धे षट् षट् गण्डातिगण्डयोः ॥ व्याघाते नव शूले च नाड्यः पञ्चर्तुदर्शने " वर्जनीया इति शेषः ॥ ॥ ग्रहणफलं चोक्तम्— "प्रसूतिर्यदि जायेत ग्रहणे चन्द्रसूर्ययोः । सङ्क्रांतौ च तदा स्त्रीणामादौ च ऋतुदर्शने ॥ व्याधिः पीडा च दारिद्र्यं शोकश्च कलहो भवेत् " इति ॥ ॥ वेलाफलमप्युक्तं तत्रैव— "प्रातःकाले

रजस्स्त्रीणां प्रथमं शोकवर्धनम् । सङ्गवे सुखसन्तत्यै मध्याह्ने धनसन्तती ॥ अपराह्ने धनाऽवाप्तिः सायाह्ने मध्यमं फलम् । पूर्वरात्रे सुखायाऽलं मध्यरात्रे धनक्षयः ॥ परात्रेऽर्थनाशश्च प्रथमर्तौ फलं भवेत् । महद्द्वयं सन्ध्ययोः स्यादर्थहानिस्तथैव च " इति ॥ ॥ लग्नफलं निर्णयसिन्धौ— " कुलीरवृषचापान्त्यनृयुक्कन्यातुलाघटाः । राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे " इति ॥ ॥ अथ परिहितवस्त्रफलं शोणितबिन्दुफलश्चोक्तं प्रयोगपारिजाते— " सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता । क्षौमवस्त्राऽन्विता प्राज्ञा नववस्त्रा सुखाऽन्विता ॥ दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा । नीलाम्बरधरा नारी पुष्पिणी विधवा भवेत् ॥ मलिनाम्बरधृङ्नारी दरिद्रा स्याद्रजस्वला ॥ वस्त्रेषु विषमै रक्तबिन्दुभिः पुत्रमाप्नुयात् । समैश्च कन्यकां चैव फलं स्यात्प्रथमार्तवे " इति ॥ ॥ रजोदर्शनकालीनक्रियाफलमपि तत्रैवोक्तम्— " सम्मार्जनीकाष्ठतृणाऽग्निशूर्पान् हस्ते दधाना कुलटा तदा स्यात् । तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात् " इति ॥ ॥ अथ द्रष्टृफलं सं० मालायाम्— " पुरन्ध्र्या दृश्यते यत्तु रजस्स्त्रीणां सुखाय तत् । विशस्तया तु यद्दृष्टं रजो वैधव्यदं स्मृतम् ॥ रजः पश्यति चेत्कन्या पुमान्वा तत्सुखं भवेत् । स्वयं दृष्ट्वा तथा स्त्रीणामात्मघाताय कल्पते " इति ॥ ॥ अथ-रजोदर्शनदिननिर्णयमाह याज्ञवल्क्यः— " रात्रिं कुर्यात् त्रिभागां तु द्वौ भागौ पूर्वगामिनौ । उत्तमोंऽशः प्रभातेन युज्यते ऋतुसूतके " इति ॥ स्मृत्यन्तरेषु— " विहाय सन्ध्याद्वितयं त्रिधैव विभक्तरात्रेस्तु तृतीयभागात् । पुरा यदि स्याज्जननं मृतिर्वा ऋतुस्तदा पूर्वदिनाद्यघं स्यात् " " अर्धरात्रादार्धरात्रं दिनं स्यात्सूतकादिषु " " रात्रावेव समुत्पन्ने मृते रजसि सूतके । पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः " इति च यदुक्तं तत्र देशाचाराद्व्यवस्था ज्ञेया ॥ ॥ अथ सामान्यतो रजस्वलानियमाः—निर्णयसिन्धौ— " वर्जयेन्मधुमांसञ्च पात्रे खर्वे च भोजनम् । गन्धमाल्ये दिवास्वापं ताम्बूलञ्चास्यशोधनम् ॥ दग्धे शरावे भुञ्जीत पेयञ्चाञ्जलिना

पिबेत्" इति ॥ प्र० तिलके तु—"यदा पुष्पवती च स्यात्पत्नी सैतानि वर्जयेत् । स्नानं भूषां दिवानिद्रां शिल्पविद्यां गृहक्रियाम् ॥ ताम्बूलमध्वगमनं रात्रिभोजनमेव च ॥ गोविप्रस्पर्शनञ्चैव ज्योतिषामीक्षणं तथा ॥ अन्त्यजैस्सह सम्भाषां पायसान्नं घृतौदनम् । न गच्छेद्देववेश्मानि न वसेच्छूद्रमन्दिरे ॥ इत्थं व्रतं त्रिरात्रं सा चरित्वाऽपरवासरे । स्नात्वा स्वपतिमर्कं वा पश्येन्नान्यं निरीक्षयेत्" इति ॥ ॥ रजस्वलयोरन्योन्यं सम्भाषणे स्पर्शने च प्रायश्चित्तमुक्तं प्र० पारिजाते—"सम्भाषेतां स्पृशेतां वा ब्राह्मण्यौ च रजस्वले । आस्नानकालं नाश्नीतमुभे मत्या मिथः क्वचित् ॥ स्नात्वोपवासं कुर्यातां पञ्चगव्येन शुध्यतः । उपवासे त्वशक्ता चेत्तत्समं दानमाचरेत्" इति ॥ ॥ चाण्डालादिस्पर्शे सं० मालायां बोधायनवचनमुदाहृतम्—"रजस्वला तु संस्पृष्टा चाण्डालान्त्यश्ववायसैः । तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यति" ॥ अत्र पञ्चगव्याऽशनमप्यर्थात्प्राप्तम्—"रजस्वला तु भुञ्जाना श्वान्त्यजादीन् स्पृशेद्यदि । गोमूत्रयावकाऽऽहारा षड्रात्रेण विशुध्यति ॥ अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वाऽथ भोजनम्" इति ॥ ॥ रजस्वला-नैमित्तिकस्नानप्राप्तौ तत्रैव पराशरः—"स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत्" इति ॥ ॥ अथ प्रथमर्तौ नियमविशेष उक्तः प्र० पारिजाते— "प्रथमर्तौ तु पुष्पिण्या पतिपुत्रयुताः स्त्रियः । अक्षतैरासनं कुर्युस्तस्मिंस्तामुपवेशयेत् ॥ हरिद्रापुष्पगन्धादीन्दद्यात्ताम्बूलकं स्रजम् । आशिषो वाचयेयुस्ताः पतिपुत्रवती भव ॥ दीपैर्नीराजनं कुर्यात्सदीपे वासयेद्गृहे । ताः सर्वाः पूजयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः ॥ भक्षणाऽपूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः" इति ॥ ॥ अथ रजस्वलाशुद्धिमाह कात्यायनः प्र० पारिजाते—"[1]प्रथमेऽहनि चाण्डाली द्वितीये रजकी स्मृता । तृतीयेऽहनि शूद्री स्याच्चतुर्थेऽहनि शुध्यति । शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति" इति ॥

---

१. "प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति" इति वै० पराशरः ॥

केचित्तु चतुर्थदिवसे दर्शेष्ट्यादि श्रौतकर्माणि कर्तव्यानीत्याहुः ॥ ॥ अथ चतुर्थेऽह्नि स्नानविधिः सं० मालायाम्— "रजस्वला चतुर्थेऽह्नि मृत्तिकापाष्टिभिः पृथक् । शौचं कृत्वा यथान्यायं दन्तानां धावनं तथा ॥ कृत्वा तु सङ्गवेऽतीते सचैलं स्नानमाचरेत् । भस्मगोमयमृद्भिश्च सर्वैरन्यतमेन वा ॥ स्नात्वांशुकं परिच्छाद्य गन्धपुष्पैरलङ्कृता । आचम्य पुष्पैरादित्यमर्चयित्वा यथोचितम् ॥ ऐन्द्रं वरं प्रभो मह्यमिदानीं दातुमर्हसि । इत्युक्त्वाथैन्द्रभावेन प्रार्थयेत्तु स्वकं पतिम् ॥ ऋतुस्नाता तु या नारी यं स्नेहान्नरमीक्षते । तादृशं जनयेत्पुत्रं पतिमेव निरीक्षयेत्" इति ॥ ॥ आतुरायाः स्नानविधिः प्र० पारिजाते— "आतुरे चेदृतुमती तस्याः स्नानं कथं भवेत् । स्पृष्ट्वा तु तां परा स्नायाद्दशकृत्वो ह्यनातुरा ॥ वासोभिर्दशभिश्चैव परिधाप्य यथाक्रमम् । ब्राह्मणान्भोजयित्वाऽथ पुण्याहेन विशुध्यति ॥ आतुराणान्तु सर्वेषामेवं शुद्धिर्विधीयते" इति ॥ ॥ अथ रजःस्नातायाः पुनः स्वकालादर्वाग्रजोदर्शने निर्णयः प्र० पारिजाते— "रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ॥ विंशात्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्" इति ॥ "एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि । ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डिलचोदितम्" इति च ॥ अत्रैवं व्यवस्था— यस्याः प्रायेण मासे मासे रजोदर्शनं तस्याः सप्तदशदिनपर्यन्तं पुना रजोदर्शने स्नानाच्छुद्धिः । अष्टादशाहे एकरात्रमशुचित्वं, एकोनविंशाद्विरात्रं, विंशात्प्रभृति त्रिरात्रम् ॥ यस्याः पुनः पक्षे पक्षे रजोदर्शनं तस्या दशदिनपर्यन्तं पुना रजोदर्शने स्नानाच्छुद्धिः । एकादशाहे त्वेकरात्रमशुचित्वं, द्वादशाहे द्विरात्रं, तदूर्ध्वं त्रिरात्रम्, इति ॥ रोगेणाऽन्वहं रजोदर्शने नाऽस्पृश्यत्वं, किन्तु रजोनिवृत्तिपर्यन्तं पाक-दैव-पित्र्य-कर्माऽनधिकारमात्रं, साऽपि मासजं रजः सावधानं निरीक्ष्य त्रिरात्रमशुचिर्भवेत् । सर्वत्र रजसः सूतकवज्ज्ञानकालमार-

भ्यैव दोषोऽवगन्तव्यः ॥ "व्यसनात्कार्यकरणान्निद्राविस्मरणादपि । रजःस्रावमविज्ञाय सा शुचिः पूर्वकर्मसु" इति सं० मालायां यमोक्तेः ॥

अथ गर्भाऽधानकालनिर्णयः ॥ तत्र मनुः—"ऋतुस्स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः । चतुर्भिरितरैः सार्धमहोभिः सद्भिर्गर्हितैः ॥ तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या । त्रयोदशी च शेषाः स्युः प्रशस्ता दशरात्रयः ॥ युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियाम्" इति ॥ ज्योतिषेऽपि चतुर्थीप्रभृतिषु त्रयोदशरात्रिषूपगमने पृथक्पृथक्फलं निर्दिष्टम्—"पुत्रोऽल्पायु दारिका वंशकर्ता वन्ध्या पुत्रः सुन्दरीशोऽतिदुष्टा। श्रीमान्पापा पुण्यशीलो गुणाढ्या सर्वज्ञस्स्यात्तुर्यरात्रिक्रमेण" इति ॥ एतेन ऋतुसंवेशने रजोदर्शनप्रभृतिषोडशरात्रिषु आद्याश्चतस्रः एकादशी त्रयोदशी चेति षड्रात्रयो निन्दिताः। अन्या दशरात्रयः प्रशस्ताः तत्राऽपि युग्माः प्रशस्ततराः इति सामान्यतः पर्यवस्यति ॥ "स एवमेव चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैति" इति गृह्ये चतुर्थ्यामप्युपगमनविधानं तत्तुतरां रजोनिवृत्तावेवेति द्रष्टव्यं अनिवृत्ते रजस्युपगमनस्य सर्वत्रनिषेधात् । तथा च पराशरः— "स्नात्वा रजस्वला या तु चतुर्थेऽहनि शुध्यति । कुर्याद्रजो-निवृत्ते तु दैवपित्र्यादिकर्म च ॥ साध्वाऽऽचारा न तावत्सा रजो यावत्प्रवर्तते । रजोनिवृत्तौ गम्या स्त्री गृहकर्माणि चैव हि" इति ॥ ॥ धर्मसूत्रेऽपि ( बौ. ध. सू. ४·१·२१ ) "ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति। तुल्यमाहुस्तयोः पापमयोनौ यश्च सिञ्चति" इति ऋतावगमनं अनृतौ गमनं अयोनौ निषेचनं च निषेधन्नाचार्यो ऋतावेव भार्यामुपेयात्प्रतिषिद्धवर्ज्यमिति विदधाति ॥ यच्च (तै.सं· २.५.१) "ता अब्रुवन्वरं वृणामहा ऋत्वियात्प्रजां विन्दामहै काममा विजनितोः सम्भवामेति तस्मादृत्वियात्स्त्रियः प्रजां विन्दते काममाविजनितोः सम्भवन्ति" इति स्त्रीणां "ऋतौ गर्भधारणं ततश्चाऽऽप्रसवं यथाकामं पुरुषसम्भोगश्च"

इतीन्द्रदत्तवरश्रवणादनृतावपि गमनं स्मर्यते तत्कामयमानायामेव स्त्रियामिति वेदितव्यम् ॥ ॥ अथ प्रतिषिद्धान्याह सं० मालायां गर्गः— "अमासङ्क्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत्" इति ॥ मनुरपि— "अमावास्यामष्टमीञ्च पौर्णमासीं चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः" इति ॥ श्रुतिश्च (तै. सं. २.५.६) "नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रियः स्यात्" इति ॥ हेमाद्रौ च— "दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती । श्राद्धं दत्वा च भुक्त्वा च श्रेयोऽर्थी न च पर्वसु" इति ॥ ॥ अथात्र निषेककर्मणि ग्राह्यतिथ्यादि विशेषमाह नि० श्रीधरः— "षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा । शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्काऽऽर्यसितेन्दुजानाम्" ॥ ॥ "विष्णु-प्रजेशरविमित्रसमीरपौष्णमूलोत्तरावरुणभानि निषेककार्ये । पूज्यानि पुष्यवसुशीतकराश्विचित्रादित्याश्च मध्यमफला विपुला स्युरन्ये" इति ॥ ॥ वैद्यना०— "वृषभमिथुनकर्किसिंहकन्यातुलघटचापझषाः शुभाः भवन्ति । यदि शुभबलकारिणोऽनुकूला निधनविशुद्धिकरा निषेककार्ये" इति ॥ ॥ अत्र गुरुशुक्रयोरस्तदोषो मलमासश्च नास्तीत्युक्तं सं० मालायाम्— "उत्सवेषु च सर्वेषु सीमन्तक्रतुजन्मनोः । सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते" "गर्भाधानादिकर्माणि नाधिमासे विवर्जयेत्" इति ॥ ॥ अथ गर्भाधानं प्रथमार्तवे तिथ्याद्यन्यतमदोषस्य नित्यत्वाच्छान्तिपूर्वकं कार्यं, शान्तिश्च रजोनिवृत्तिनिश्चये चतुर्थेऽह्नि अन्यथा पञ्चमेऽह्नि प्रकर्तव्या— "तिथिवारनक्षत्रयोगकरणलग्नशान्त्यर्थं चतुर्थे वा पञ्चमेऽह्नि वा शान्ति-स्नानं प्रकुर्वीत" इति सूत्रोक्तेः । "अर्थपुत्रादिलाभाय दम्पत्योरभिवृद्धये । पञ्चमेऽह्नि चतुर्थे वा ग्रहयज्ञपुरःसरम् । तस्मिन्नहनि

---

१. "चतुर्दश्यष्टमी पक्षद्वये दर्शश्च पूर्णिमा । सङ्क्रान्तिश्चेति पर्वाणि पञ्च प्राहुर्महर्षयः" इति वैद्यनाथीये ॥

२. क्वचिद्द्वितीयादिरजसि गर्भाधानकरणे अस्तादिदोषोऽस्तीत्युक्तम् ।

कर्तव्यमृतुहोमो विधानतः " इति प्र० पारिजातोक्तेश्च ॥ ग्रहयज्ञस्त्वत्र न नियतो बौधायनानाम्, स्वयं ऋतुशान्तिं विदधताऽऽचार्येण स्फुटमनुक्तत्वात् ॥ तथा चात्र प्रथमार्तवे ऋतुशान्तिः ऋतुसंवेशनं गर्भाधानहोमश्चेति त्रीणि कर्तव्यानि भवन्ति ॥

अथ गर्भाधानप्रयोगः ॥ कर्ता पूर्वोक्तनिर्णयान्निर्णीते जन्मनक्षत्रवर्जिते शुभे मुहूर्ते सभार्यः प्रातर्मंगलस्नानादि नित्यकर्म कृत्वा वैश्वदेवं हुत्वा स्नानादिचतुष्टयं विधाय पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य " मम अस्यां भार्यायां जनिष्यमाणगर्भस्य बीजगर्भसमुद्भवैनोनिबर्हणपूर्वकं प्रजासंस्कारातिशयप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानाख्यं कर्म करिष्ये, तदादौ मम भार्यायाः प्रथमरजोदर्शनकाले समुत्थिततिथिवारनक्षत्रयोगकरणलग्नदोषशांत्यर्थं ऋतुशांतिं करिष्ये, ( ग्रहशांतिं चिकीर्षायां ग्रहशांतिपूर्वकमृतुशांतिं करिष्ये, इत्यूहेत् ) तदंगत्वेनादौ शांत्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृद्ध्यर्थमभ्युदयार्थञ्चैभिर्ब्राह्मणैः सह पुण्याहवाचनपूर्वकं नांदीश्राद्धं स्वस्तिपुण्याहवाचनं निर्विघ्नतासिध्यर्थमादौ गणपतिपूजनं च करिष्ये " इति संकल्प्य गणपतिपूजनं नांदीसमाराधनं उदकशांतिप्रतिसरबन्धौ च कृत्वा प्रधानपुण्याहवाचनं कुर्यात् । तत्र " सवितृवेधसौ प्रीयेतां " इति विशेषः ॥ अथर्तुशांतिं कुर्वन् देवालये गृहे वा शुचौ समे देशे उद्धृत्यावोक्ष्य प्रस्थाष्टभिर्धान्यैस्तदर्धतंडुलैस्तदर्धतिलैश्चोपर्युपरि अरत्निमात्रं समचतुरश्रं स्थंडिलं कृत्वा तन्मध्ये नळिनमष्टदळमुल्लिख्य दूर्वाक्षतफलैरवकीर्य प्रागग्रान्दर्भान् संस्तीर्य गंधोदकेनाभ्युक्ष्य पुष्पैरवकीर्य तंतुवेष्टितं सुधूपितं कुंभं प्रोक्षण्या सहोत्तरतः सादयित्वा तूष्णीं संस्कृताभिः प्रोक्षणीभिः प्रोक्ष्य " ब्रह्म जज्ञानम् " इति मन्त्रेण स्थण्डिलमध्ये कुम्भं निधाय पवित्रमन्तर्धाय " आपो वा इदꣳ सर्वं विश्वा भूतान्यापः

---

१. गर्भाधानपुंसवनसीमन्तोन्नयनाङ्गनान्दीसमाराधनेषु " क्रतुदक्षसंज्ञका विश्वेदेवाः " इति धर्मसिन्धौ ॥

प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दा ँ स्यापो ज्योती ँ ष्यापो यजू ँ ष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ओम् " इत्यनुवाकेन अच्छिद्राभिश्चोदकैः पूरयित्वा गन्धादिभिरलंकृत्य पञ्च मृत्तिकाः पञ्च पल्लवान् पञ्च त्वचश्च निक्षिप्य नवरत्नमीषत्काञ्चनं प्रक्षिप्य नववस्त्रेणाच्छाद्य चूतपल्लवैर्बिल्वपल्लवैर्वावकीर्य नाळिकेरफलेनापिधाय दर्भैर्दूर्वादिना प्रतिच्छाद्य सम्परिस्तीर्य कुम्भे वरुणमावाह्य सम्पूज्य तत्रैव " ब्रह्म जज्ञानम् " इति मन्त्रेण पुरुषं पुण्डरीकाक्षं ध्यात्वा व्याहृतिभिरावाह्य षोडशोपचारैरभ्यर्चयेत् ॥ ( अत्र कुम्भस्योत्तरतः कूर्चान्तर्हिते पात्रे " गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम् " इत्येवं क्रमेण पञ्चगव्यं संयोज्य प्रणवेनालोड्य कुम्भे किञ्चिन्निक्षिपेत् ॥ ) ततोऽस्मिन् ऋतुशान्तिकर्मणि पूर्वस्यां दिशि जपार्थं त्वामहं वृणे, इत्यादि चतुरोऽष्टौ वा श्रोत्रियान्विप्रानाचार्यश्च वृत्वा गन्धादिभिरभ्यर्चयेत् ॥ अथाचान्ता, ऋत्विजः कुम्भमन्वारभ्य जपेयु :—" ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् " इति वैष्णवीं गायत्रीमष्टसहस्र-मष्टशतं वा । " अग्निमीळे ० ॥ इषे त्वोर्जे त्वा ० ॥ अग्न आयाहि ० ॥ शं नो देवीः " इति वेदादीन् । " आपो हि ष्ठा " इति तिस्रः ॥ " हिरण्यवर्णाः शुचयः, पवमानः सुवर्जनः " इति द्वावनुवाकौ ॥ वरुणसूक्तं, श्रीसूक्तं, पुरुषसूक्तम् ॥ ॐ भद्रं कर्णेभिः

---

१. " मुक्ताफलं हिरण्यञ्च वैडूर्यं पद्मरागकम् । पुष्यरागं च गोमेदं नीलं गारुत्मकं तथा ॥ प्रवालयुक्तान्युक्तानि महारत्नानि वै नव " ॥ सर्वेषामभावे सुवर्णम् ॥ २. " वारुणं सूक्तमुक्त्वा च विष्णुसूक्तं ततः परम् । रुद्रसूक्तं ब्रह्मसूक्तं दुर्गाश्रीसूक्तमेव च " इति कारिकान्तरे ॥

शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः ॥ व्यशेम देवहितं यदायुः ॥ स्वस्ति न इंद्रो वृद्ध-श्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॥ ॐनमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॥ ॐ तच्छं योरावृणीमहे ॥ गातुं यज्ञाय ॥ गातुं यज्ञपतये ॥ दैवी स्वस्तिरस्तु नः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वं जिगातु भेषजम् ॥ शं नो अस्तु द्विपदे ॥ शं चतुष्पदे ॥ ॐ शान्तिः ० ॥ ॥ ॐनमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् ॥ शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती ॥ भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुप स्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तम्मा देवा अवंतु शोभायै पितरोऽनुमदन्तु ॥ ॐ शान्तिः० ॥ ॥ ॐ शं नो वातः पवतां मातरिश्वा शं नस्तपतु सूर्यः ॥ अहानि शं भवन्तु नः शꣳ रात्रिः प्रतिधी-यताम् ॥ शमुषानो व्युच्छतु शमादित्य उदेतु नः ॥ शिवा नः शन्तमा भव सुमृडीका सरस्वति ॥ मा ते

व्योम सन्दृशि ॥ इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्मह्यवास्तुः स भूयाद्यो ऽस्मान्द्वेष्टि यश्च वयं द्विष्मः ॥ प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठः स भूयाद्यो ऽस्मान्द्वेष्टि यश्च वयं द्विष्मः ॥ आ वात वाहि भेषजं वि वात वाहि यद्रपः ॥ त्वꣳ हि विश्वभेषजो देवानां दूत ईयसे ॥ द्वाविमौ वातौ वात आसिन्धोरापरावतः ॥ दक्षं मे अन्य आ वातु परान्यो वातु यद्रपः ॥ यद्दो वात ते गृहे ऽमृतस्य निधिर्हितः ॥ ततो नो देहि जीवसे ततो नो धेहि भेषजम् ॥ ततो नो मह आ वह वात आवातु भेषजम् ॥ शम्भूर्मयोभूर्नो हृदे प्र ण आयूꣳषि तारिषत् ॥ इन्द्रस्य गृहो ऽसि तं त्वा प्रपद्ये सगुः साश्वः ॥ सह यन्मे अस्ति तेन ॥ भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य ओं प्रपद्ये ॥ अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्ति मान्तया स्वस्त्या स्वस्ति मानसानि ॥ प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इंद्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥ द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ॥ तन्नो मित्रो वरुणो मामहन्तामदितिः सिंधुः पृथिवी उत द्यौः ॥ कया नश्चित्र आभुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः ॥ दृढाचिदारुजे वसु ॥ अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ॥ अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥ शं नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शं योरभिस्रवन्तु नः ॥ ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् ॥ अपो याचामि

भेषजम् ॥ सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यश्च वयं द्विष्मः ॥ आपो हि ष्ठा मयो भुवस्ता न ऊर्जे दधातन ॥ महे रणाय चक्षसे ॥ यो वः शिवतमोरसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ पृथिवी शान्ता साग्निना शान्ता सा मे शान्ता शुचꣳ शमयतु ॥ अन्तरिक्षꣳ शान्तं तद्वायुना शान्तं तन्मे शान्तꣳ शुचꣳ शमयतु ॥ द्यौः शान्ता सादित्येन शान्ता सा मे शान्ता शुचꣳ शमयतु ॥ पृथिवी शान्तिरन्तरिक्षꣳ शान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयश्शान्तिर्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिश्शान्तिरेव शान्तिश्शान्तिर्मे अस्तु शान्तिः ॥ तयाऽहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः ॥ एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः ॥ उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु ॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे ॥ य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात्समावृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥ ब्रह्मणश्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीꣳ सदेवां यदहं वेद तदहं

धारयाणि मा मद्बेदोऽधि विस्रंसत्॥ मेधामनीषे माविशता ँ समीची भूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि। आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः॥ यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम॥ ब्रह्म प्रावादिष्म तन्नो मा हासीत्॥ ॐ शान्तिः शान्तिः शान्तिः "॥ इति पञ्चशान्तिम्॥॥ " ऋचां प्राची महती दिगुच्यते॥ दक्षिणा-माहुर्यजुषामपाराम्॥ अथर्वणामङ्गिरसां प्रतीची॥ साम्नामुदीची महती दिगुच्यते॥ ऋग्भिः पूर्वाह्णे दिवि देव ईयते॥ यजुर्वेदे तिष्ठति मध्ये अह्नः॥ सामवेदेनास्तमये महीयते॥ वेदैरशून्यास्त्रिभिरेति सूर्यः॥ ऋग्भ्यो जाता ँ सर्वशो मूर्तिमाहुः॥ सर्वा गतिर्याजुषी हैव शश्वत्॥ सर्वं तेजः सामरूप्य ँ ह शश्वत्॥ सर्व ँ हेदं ब्रह्मणा हैव सृष्टम्॥ ऋग्भ्यो जातं वैश्यं वर्णमाहुः॥ यजुर्वेदं क्षत्रियस्याहुर्यो-निम्॥ सामवेदो ब्राह्मणानां प्रसूतिः॥ पूर्वे पूर्वेभ्यो वच एतदूचुः॥ आदर्शमग्निं चिन्वानाः॥ पूर्वे विश्वसृजोमृताः॥ शतं वर्षस-हस्राणि॥ दीक्षिताः सत्रमासत॥ तप आसीद्गृहपतिः॥ ब्रह्म ब्रह्माभवत्स्वयम्॥ सत्य ँ ह होतैषामासीत्॥ यद्विश्वसृज आसत॥ अमृतमेभ्य उदगायत्॥ सहस्रं परिवत्सरान्॥ भूत ँ ह प्रस्तोतैषामासीत्॥ भविष्यत्प्रति चाहरत्॥ प्राणो अध्वर्युरभवत्॥ इद ँ सर्व ँ सिषासताम्॥ अपानो विद्वानावृतः॥ प्रति प्रातिष्ठदध्वरे॥ आर्तवा उपगातारः॥ सदस्या ऋतवोऽभवन्॥ अर्धमासा-श्च मासाश्च॥ चमसाध्वर्यवोऽभवन्॥ अश ँ सद्ब्रह्मणस्तेजः॥ अच्छावाकोऽभवद्यशः॥ ऋतमेषां प्रशास्तासीत्॥ यद्विश्वसृज आसत॥ ऊर्ग्राजानमुदवहत्॥ ध्रुवगोपः सहोऽभवत्॥ ओजोभ्यष्टौद्ग्रावणः॥ यद्विश्वसृज आसत॥ अपचितिः पोत्रीयामयजत्॥ नेष्ट्रीयामयजत्त्विषिः॥ आग्नीध्राद्विदुषी सत्यम्॥ श्रद्धा हैवायजत्स्वयम्॥ इरा पत्नी विश्वसृजाम्॥

आकूतिरपिनद्धविः ॥ इध्म ँ ह क्षुच्चैम्य उग्रे ॥ तृष्णा चावहतामुभे ॥ वागेषाँ सुब्रह्मण्यासीत् ॥ छन्दोयोगान्विजानती ॥ कल्पतन्त्राणि तन्वानाहः ॥ स ँ स्थाश्च सर्वशः ॥ अहोरात्रे पशुपाल्यौ ॥ मुहूर्ताः प्रेष्या अभवन् ॥ मृत्युस्तदभवद्धाता ॥ शमितोग्रो विशांपतिः ॥ विश्वसृजः प्रथमास्सत्रमासत ॥ सहस्रसमं प्रसुतेन यन्तः ॥ ततो ह जज्ञे भुवनस्य गोपाः ॥ हिरण्मयः शकुनिर्ब्रह्म नाम ॥ येन सूर्यस्तपति तेजसेद्धः ॥ पिता पुत्रेण पितृमान्योनियोनौ ॥ नावेदविन्मनुते तं बृहन्तम् ॥ सर्वानुभुमात्मानँ सम्पराये ॥ एष नित्यो महिमा ब्राह्मणस्य ॥ न कर्मणा वर्धते नो कनीयान् ॥ तस्यै वात्मापदवित्तं विदित्वा ॥ न कर्मणा लिप्यते पापकेन ॥ पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः ॥ पञ्चपञ्चाशतः पञ्चदशाः ॥ पञ्चपञ्चाशतस्सप्तदशाः ॥ पञ्चपञ्चाशत एकविँशाः ॥ विश्वसृजाँ सहस्रसंवत्सरम् ॥ एतेन वै विश्वसृज इदं विश्वमसृजन्त ॥ यद्विश्वमसृजन्त ॥ तस्माद्विश्वसृजः ॥ विश्वमेनाननुप्रजायते ॥ ब्रह्मणस्सायुज्यँ सलोकतां यांति ॥ एतासामेव देवतानाँ सायुज्यम् ॥ सार्ष्टिताँ समानलोकतां यन्ति ॥ य एतदुपयन्ति ॥ ये चैनत्प्राहुः ॥ येभ्यश्चैनत्प्राहुः ओम् " इत्येतमनुवाकञ्च जपित्वा ॥ " नमो ब्रह्मणे नमो अस्त्वग्नये० बृहते करोमि " इति परिधानीयां त्रिरनूच्य प्रणवेन कुम्भमुत्थाप्य ॥ " आभिर्गीर्भिः " इति मन्त्रं जपेयुः ॥ अथ कुम्भं पुनस्सम्पूज्य ॥ व्याहृतिभिर्देवतामुद्वास्यालंकृतां पत्नीमङ्गणे विष्टरे प्राङ्मुखीमुपवेश्य ऋत्विजः कुम्भोदकैः " आपो हि ष्ठा " इति तिसृभिः " देवस्य त्वा " इति त्रिभिः पर्यायैश्च प्रोक्ष्य ॥ " ऋतञ्च सत्यं चाभीद्धात्तपसोध्यजायत ॥ ततो रात्रिरजायत ततस्समुद्रो अर्णवः ॥ समुद्रादर्णवादधिसंवत्सरो अजायत ॥ अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ॥ दिवं च

पृथिवीं चान्तरिक्षमथो सुवः " इति त्रिभिर्मन्त्रैः स्नापयेयुः ॥ ततस्तामहतवासोविभूषितां प्राङ्मुखोपविष्टामाचार्यः पञ्चगव्यं " यत्वगस्थिगतं पापं देहे तिष्ठति मामके ॥ प्राशनं पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् " इति वाचयन्प्राशयेत् ॥

अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्योल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम भार्यायाः प्रथमरजोदर्शनकाले जनिततिथिवारनक्षत्रयोगकरणलग्नादिदोषशान्त्यर्थं ऋतुशान्तिहोमं करिष्ये[1]॥ ऋतुशान्तिहोमः कर्म, आघारवत्तन्त्रम्, पञ्चदश सामिधेन्यः, वरदो नामाग्निः, सविता देवता, चरुर्हविः, उपहोमश्च—विष्णुसूक्तेन पलाशसमिद्भिः प्रत्यृचमष्टादशावृत्याष्टोत्तरशतसंख्याहुतिभिः, एवं ब्रह्मसूक्तेनाज्येन, रुद्रसूक्तेनाज्येन, चाष्टोत्तरशतसंख्याहुतिभिः, ऋतुनक्षत्रमन्त्राभ्यां समिच्चर्वाज्यद्रव्यैः प्रत्येकं प्रतिमन्त्रं चतुर्दशावृत्याष्टाविंशत्याहुतिभिः, त्र्यंबकमन्त्रेण तिलद्रव्येणाष्टोत्तर-शताहुतिभिः, घृतसूक्तेनाज्येन मन्त्रसंख्ययाष्टाहुतिभिः अग्निः स्विष्टकृत् " इत्यादि सङ्कल्प्याग्निमुखान्तं कृत्वा सावित्र्या पक्कं हुत्वा पलाशसमिद्भिः " विष्णोर्नु कं, तदस्य प्रियं, प्रतद्विष्णुः, परो मात्रया, विचक्रमे, त्रिर्देवः " इति षण्मन्त्रेण विष्णुसूक्तेन प्रतिमन्त्रमष्टा-दशावृत्याष्टोत्तरशताहुतीर्जुहुयात् ॥ एवं " ब्रह्म जज्ञानम्, पिता विराजाम्, ब्रह्म देवान्, अन्तरस्मिन्, ब्रह्मन्देवाः, चतस्र आशाः " इति षण्मन्त्रेण ब्रह्मसूक्तेनाज्येन० । " परि णो रुद्रस्य, स्तुहि श्रुतम्, मीढुष्टम, अर्हन्बिभर्षि, त्वमग्ने रुद्रः, आवो राजानम् " इति षण्मन्त्रेण रुद्रसूक्तेनाज्येन चाष्टोत्तरशताहुतीर्जुहुयात् ॥ एतेषु त्रिषूद्देशत्यागः क्रमेण – विष्णव इदं० । ब्रह्मण इदं० । रुद्रायेदं० । इति ॥ ततः " अग्निर्नः पातु, यस्य भांति " इति मन्त्राभ्यां कृत्तिकानक्षत्रस्य ॥ " प्रजापते रोहिणी, रोहिणी देवी " इति रोहिण्याः ॥

---

१. ग्रहशान्तिकरणपक्षे ग्रहशान्तिपूर्वकमृतुशान्तिं करिष्ये, इति संकल्प्य ग्रहशान्तिहोमानन्तरमृतुशान्तिहोमं कुर्यात् ॥ उभयमपि तन्त्रेण वा कुर्यात् ॥

" सोमो राजा, यत्ते नक्षत्रं मृगशीर्षम् " इति मृगशीर्षस्य ॥ " आर्द्रया रुद्रः, हेती रुद्रस्य " इत्यार्द्रायाः ॥ " पुनर्नो देवी, एवान देवी " इति पुनर्वस्वोः ॥ " बृहस्पतिः प्रथमम्, तिष्यः पुरस्तात् " इति तिष्यस्य ॥ " इदꣳ सर्पेभ्यो, ये रोचने " इत्याश्लेषानक्षत्रस्य ॥ " उपहूताः पित्तरः, ये अग्निदग्धाः " इति मघायाः ॥ " गवां पतिः, येनेमा विश्वा " इति पूर्वाफल्गुन्योः ॥ " श्रेष्ठो देवानां भगवः, भगो ह दाता " इत्युत्तराफल्गुन्योः ॥ " आयातु देवः, हस्तः प्रयच्छतु " इति हस्तस्य ॥ " त्वष्टा नक्षत्रं, तन्नस्त्वष्टा " इति चित्रायाः ॥ वायुर्नक्षत्रं, तन्नो वायुः " इति स्वात्याः ॥ " दूरमस्मत्, नक्षत्राणामधिपत्नी " इति विशाखयोः ॥ " ऋध्यास्म हव्यैः, चित्रं नक्षत्रम् " इत्यनूराधायाः ॥ " इन्द्रो ज्येष्ठां, पुरन्दराय " इति ज्येष्ठायाः ॥ " मूलं प्रजां, अहर्नो अद्य " इति मूलस्य ॥ " या दिव्या आपः, याश्च कूप्याः " इति पूर्वाषाढायाः ॥ " तन्नौ विश्वे, शुभ्राः कन्याः " इत्युत्तराषाढायाः ॥ " शृण्वन्ति श्रोणां, त्रेधा विष्णुः " इति श्रवणस्य ॥ " अष्टौ देवा वसवः, यज्ञं नः पान्तु वसवः " इति धनिष्ठायाः ॥ " क्षत्रस्य राजा, यज्ञं नो राजा " इति शतभिषजः ॥ अज एकपात्, विभ्राजमानः " इति पूर्वाप्रोष्ठपदः ॥ " अहिर्बुध्नियः प्रथमानः, चत्वार एकम् " इत्युत्तराप्रोष्ठपदः ॥ " पूषा रेवती, क्षुद्रान्पशून् रक्षतु " इति रेवत्याः ॥ " तदश्विनौ, यौ देवानाम् " इत्यश्विन्याः ॥ " अप पाप्मानं, यस्मिन्नक्षत्रे यमः " इति भरण्याः ॥ एवं तत्तन्नक्षत्रोक्तमन्त्राभ्यां प्रतिमन्त्रं चतुर्दशावृत्याष्टाविंशत्यष्टाविंशतिसमिच्चर्वाज्याहुतीर्जुहुयात् ॥ त्यागे तत्तन्नक्षत्रदेवता उद्दिशेत् ॥ तद्यथा– अग्नये कृत्तिकाभ्य इदं० ॥ प्रजापतये रोहिण्या इदं० ॥ सोमाय मृगशीर्षायेदं० ॥ रुद्रायाऽऽर्द्राया इदं० ॥ अदित्यै पुनर्वसुभ्यामिदं० ॥ बृहस्पतये तिष्यायेदं० ॥ सर्पेभ्य आश्लेषाभ्य इदं० ॥ पितृभ्यो मघाभ्य इदं ॥ अर्यम्णे फल्गुनीभ्यामिदं० ॥ भगाय फल्गुनीभ्यामिदं० ॥ सवित्रे हस्तायेदं० ॥ त्वष्ट्रे चित्राया इदं० ॥ वायवे निष्ट्याया इदं० ॥ इन्द्राग्निभ्यां विशाखाभ्यामिदं० ॥ मित्रायाऽनूराधेभ्य

इदं० ॥ इन्द्राय ज्येष्ठाया इदं० ॥ प्रजापतये मूलायेदं० ॥ अद्भ्योऽषाढाभ्य इदं० ॥ विश्वेभ्यो देवेभ्योऽषाढाभ्य इदं० ॥ विष्णवे श्रोणाया इदं० ॥ वसुभ्यः श्रविष्ठाभ्य इदं०॥ वरुणाय शतभिषजे भेषजेभ्य इदं०॥ अजायैकपदे प्रोष्ठपदेभ्य इदं० ॥ अहये बुध्नियाय प्रोष्ठपदेभ्य इदं० ॥ पूष्णे रेवत्या इदं० ॥ अश्विभ्यामश्वयुग्भ्यामिदं० ॥ यमायाऽपभरणीभ्य इदं० ॥ इति ॥ ततः "त्र्यम्बकं यजामहे" इति मन्त्रेणाऽष्टोत्तरशततिलाहुतीर्हुत्वा ( त्र्यंबकायेदं० )॥ अथ 'यो ब्रह्म ब्रह्मण० घृतेन स्वाहा' ॥ ब्रह्मण इदं० ॥ 'विभ्राजमानः० घृतमत्तु देवः स्वा०'॥ देवायेदं० ॥ 'ब्रह्म ज्योतिः० वर्धयामो घृतेन स्वाहा' ॥ अर्कायेदं० ॥ 'श्रियं लक्ष्मीं० तर्पयामो घृतेन स्वाहा' ॥ विद्याया इदं०॥ 'दाक्षायण्यः० घृतमिदं जुषंता ँ स्वाहा' ॥ दाक्षायणीभ्य इदं०॥ 'दिव्या गणा बहुरूपाः० वीरान् स्वाहा' ॥ दिव्येभ्यो गणेभ्य इदं० ॥ 'एकः पुरस्ताद्यः० आयुषेत्तु देवः स्वाहा' ॥ देवायेदं० ॥ 'वसून् रुद्राना० शश्वत्स्वाहा' ॥ वसुभ्यो रुद्रेभ्य आदित्येभ्यो मरुद्भ्यः साध्येभ्यो ऋभुभ्यो यक्षेभ्यो गन्धर्वेभ्यः पितृभ्यो भृगुभ्यः सर्पेभ्योऽङ्गिरोभ्य इदं० ॥ इत्यष्टौ घृताहुतीश्च जुहुयात् ॥ ततः स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथ "प्रजापतिः प्रीयताम्" इति पुण्याहं वाचयित्वा होमशेषं समाप्य ऋत्विग्भ्यो दक्षिणां दद्यात्याचार्याय विशेषतः ॥ ततः पत्नी दोषात्प्रमुक्ता भर्तारमादित्यञ्चेक्षेत ॥ इत्यृतुशान्तिप्रयोगः ॥

॥ अथ प्रथमर्तुसंवेशनविच्छेदप्रायश्चित्तम् ॥ अथ यदि गृहस्थस्य विद्यार्थिनः स्त्रियाभ्यनुज्ञातस्य प्रथमर्तुसंवेशन-विच्छेदस्स्यात्तदा स ब्राह्मणेभ्यो निवेद्य तदुपदिष्टव्रतं " ऋतुस्नातां न चेद्गच्छेन्नियतां धर्मचारिणीम् ॥ नियमातिक्रमे तस्य प्राणायामशतं स्मृतम् " इति धर्मसूत्रोक्तं शतप्राणायामरूपकृच्छ्रं वा चरित्वा अग्निमुपसमाधायाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम भार्यायाः प्रथमर्तुसंवेशनप्रायश्चित्तहोमाख्यं कर्म करिष्ये ॥ चित्तिर्नामाग्निः, जातवेदोऽग्निर्देवता,

चरुर्हविः " इत्यादि संकल्प्याग्निमुखान्तं कृत्वा पक्वाज्जुहोति — " ॐ यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ॥ जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां ३ यस्मै त्वꣳ सुकृते जातवेद उलोकमग्ने कृणवः स्योनम् ॥ अश्विनꣳ सपुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति स्वाहा " ॥ जातवेदसेऽग्नय इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति ॥ मधुश्च स्वाहा, मधव इदं० ॥ माधवश्च स्वाहा, माधवायेदं० ॥ शुक्रश्च स्वाहा, शुक्रायेदं० ॥ शुचिश्च स्वाहा, शुचय इदं० ॥ नभश्च स्वाहा, नभायेदं० ॥ नभस्यश्च स्वाहा, नभस्यायेदं० ॥ इषश्च स्वाहा, इषायेदं० ॥ ऊर्जश्च स्वाहा, ऊर्जायेदं० ॥ सहश्च स्वाहा, सहायेदं० ॥ सहस्यश्च स्वाहा, सहस्यायेदं० ॥ तपश्च स्वाहा, तपायेदं० ॥ तपस्यश्च स्वाहा, तपस्यायेदं० ॥ स ꣳ सर्पोऽस्य ꣳ हस्पत्याय त्वा स्वाहा, स ꣳसर्पायाऽꣳहस्पत्यायेदं० ॥ इति ॥ एवं त्रयोदश स्रुवाहुतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात्कृत्वा अपरेणाग्निमाज्यशेषमुदकशेषं चोभौ जायापती प्राश्नीयाताम् ॥ गायत्र्या प्राश्याप आचम्य " यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः " इति द्वाभ्यां जठरमभिस्पृश्य होमशेषं समापयेत् ॥ इत्यृतुसंवेशनविच्छेदप्रायश्चित्तम् ॥

अथ गर्भाधानहोमः ॥ यजमानः सपत्नीकः शुचौ समे देशे देवयजनोल्लेखनप्रभृतिगृह्याग्निं प्रतिष्ठाप्याचमनादिदेशकालकीर्तनान्ते " ममास्यां भार्यायां जनिष्यमाणगर्भस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरं प्रजासंस्कारातिशयद्वारा श्रीपर-

१. " गर्भादिजातकर्मान्तं कुर्यादौपासनेऽनले " इति गृ० सङ्ग्रहे ॥

मेश्वरप्रीत्यर्थं गर्भाधानहोमं करिष्ये " ॥ अन्वाधाने- मारुतो नामाग्निः, वेधा देवता, चरुर्हविः, इत्यादि सङ्कल्प्याऽग्निमुखान्तं कृत्वा पक्वाज्जुहोति— ॐ प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यो ३म् प्रवेधसे० यजे हेड्यान्त्स्वाहा ॥ वेधस इदं० ॥ ततः स्विष्टकृतमवदायाऽन्तःपरिधौ निधायाऽऽज्याहुतीरुपजुहोति— ॐ ज्येष्ठाय स्वाहा, ज्येष्ठाय इदं० ॥ ॐ श्रेष्ठाय०, श्रेष्ठाय इदं० ॥ ॐ प्रतिष्ठायै०, प्रतिष्ठाया इदं० ॥ ॐ प्रतिष्ठित्यै०, प्रतिष्ठित्या इदं० ॥ ॐ सम्पत्यै०, सम्पत्या इदं० ॥ ॐ सम्पतये०, सम्पतय इदं० ॥ ॐ ब्रह्मणे०, ब्रह्मण इदं० ॥ ॐ आयतनवते० आयतनवत इदं० ॥ एवमष्टभिर्हुत्वा स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वा हविष्यमन्नमभिमन्त्रयते— "तत्सवितुर्वृणीमहे । वयं देवस्य भोजनम् ॥ श्रेष्ठं २ सर्वधातमम् । तुरं भगस्य धीमहि " इति । अपरेणाग्निमुपविश्य जायापती प्राश्नीयाताम्— "तत्सवितुर्वरे-ण्यं० प्रचोदयात् " इति प्राश्याप आचम्य जठरमभिमृशति— "यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः " इति द्वाभ्याम् ॥ तत उत्तरपरिषेकादि होमशेषं समापयेत् ॥ यं कामं कामयते तं मनसा ध्यायेत् ॥ यथाशक्ति ब्राह्मणान्सम्भोज्य दक्षिणादिभिः सन्तोष्य तेभ्यश्चाशिषो गृण्हीयात् ॥ इति गर्भाधानहोमः ॥

अथ ऋतुसंवेशनम् ॥ अथ निशायां यजमानः स्वयमलङ्कृतः पत्नीश्चालङ्कृत्याऽऽचम्य देशकालौ सङ्कीर्त्य "ममास्यां भार्यायामायुष्मत्स्वरूपसुगुणसुपुत्रमुत्पादयितुमृतुसंवेशनं करिष्ये " इति सङ्कल्प्य गणपतिं सम्पूज्य सुवासिनीर्ब्राह्मणांश्च गन्धपु-ष्पादिभिरभ्यर्च्य— "फलं मनोरथफलं प्रददाति सदा नृणाम् । पुत्रपौत्राऽभिवृध्यर्थमतः शान्तिं प्रयच्छ मे " "ताम्बूलं श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम् । तस्मादस्य प्रदानेन स मे विष्णुः प्रसीदतु " "हिरण्यगर्भगर्भस्थं० प्रयच्छ मे " इति फलताम्बूल-

हिरण्यानि तेभ्यो दद्यात् ॥ अथ पुरन्ध्रयः पत्न्याः परिहितमङ्गलवस्त्रे फलताम्बूलतण्डुलादिकं पूरयेयुः— "याः फलिनीः० अ २ हंसः ॥ पुष्पावतीः प्रसूवतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः" इति ॥ ततो बान्धवा दम्पत्योर्मङ्गलवस्त्राणि दद्युः पुरन्ध्र्यो मङ्गलार्तिक्यं कुर्युः ब्राह्मणा मन्त्राक्षतान्दद्युः ॥ अथालङ्कृतां भार्यां हस्ते फलताम्बूलतण्डुलैः पूर्णं पात्रं दत्वा शयनेऽभिमन्त्रयते — "ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ यथाग्निगर्भा पृथिवी द्यौर्यथेन्द्रेण गर्भिणी । वायुर्यथा दिशां गर्भ एवं गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ हिरण्ययी अरणी यन्निर्मन्थतो अश्विना । तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ नेजमेष परापत सुपुत्रः पुनरापत । अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान्" इति ॥ अथैनां परिष्वजति— "अमूहमस्मि । सात्वम् । द्यौरहं । पृथिवी त्वम् । रेतोहम् । रेतोभृत्वम् । मनोहमस्मि । वाक्त्वम् । सामाहमस्मि । ऋक्त्वम् ॥ तावेहि सम्भवाव । सह रेतो दधावहे । पुंसे पुत्राय वेत्तवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय" इति ॥ आत्मानं प्रत्यभिमृशते— "अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पितृणामहं जनिभ्यो अपरीषु पुत्रान्" इति ॥ अप उपस्पृश्याऽथैनामुपैति— "तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयाते यस्यामुशन्तः प्रहराम शेपम्" इति ॥ ततो मूत्रवच्छौचं कृत्वा द्विराचामेत् ॥ एवमेव चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैति ॥ प्रजानिःश्रेयसमृतुगमनमित्याचार्याः ॥ सर्वाण्यृतुगमनानि मन्त्रवन्ति भवन्तीति बोधायनः ॥ यत्त्वादौ यत्त्वतावितिति शालीकिः ॥ रात्रौ मन्त्रवदृतुगमने स्वयमशक्तो दिवैव गर्भाधानहोमानन्तरं तत्पूर्वं वा तन्मन्त्रपठनं कृत्वा रात्रौ तूष्णीमुपगच्छेदिति शिष्टाचारः ॥ इति ऋतुसंवेशनम् ॥

## ॥ अथ पुंसवनम् ॥

( बौ. गृ. सू. १. ९ ) " विज्ञाते गर्भे तिष्ये पुंसवनम् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा । अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति— ' प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सह साम इन्द्र । विश्वैर्देवै रातिभिः सꣳरराणः पुꣳसां बहूनां मातरः स्याम स्वाहा ' इति । अथाज्याहुतीरुपजुहोति—' गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ' इति तिसृभिरनुच्छन्दसम् ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् । अथास्या आज्यशेषमास्ये प्रच्योतयति—' अस्मे देवासो वपुषे चिकित्सत ' इति चतसृभिरनुच्छन्दसम् " ॥

" मासप्रोक्ताः क्रिया याः स्युस्ताः सर्वाः सौरमानतः " इति सौरो मासो ग्राह्य इति केचित्, सावन इत्यन्ये । विद्यामाधवस्तु " साम्यं तयोरुत्तमम् " इति व्याचख्यौ । गुरुशुक्रास्तादि दोषोऽत्र नास्तीत्युक्तं सं० मालायाम्—' मासि प्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः । न दोषकृत्तदा मासलक्षणो बलवानिति ' ' वृद्धिर्दास्यं पुंसवाद्यं प्रेतकर्मानुमासिके । मलमासेऽपि कुर्वीत ' इति । अत्र वारनक्षत्रादयः प्रोक्ता मुहूर्तशतके–' कुर्यात्पुंसवनाख्यकर्मविदिते गर्भे तृतीये स्त्रिया मासे सद्दिवसे[1] हरीन्दुदिनकृत्पुष्येष्वरिक्तातिथौ । कन्याकर्कियमोनिते शुभगृहे पुन्नामभे वा विधौ वीर्याढ्ये च शुभग्रहे तनुगते शुद्धे ग्रहैरष्टमे ' इति । तथा च पुंसवनं विज्ञाते गर्भे तृतीये मासि शुभग्रहाणां वारे रिक्तावर्जितायां तिथौ मृगशीर्षतिष्यहस्तश्रवणान्यतमे नक्षत्रे मिथुनकर्ककन्यावर्जिते अष्टमशुद्धियुते

१ चन्द्रबुधगुरुशुक्राणां वासरे ॥

शुभपुंराशिलग्ने चन्द्रबलयुते शुभमुहूर्ते कर्तव्यमिति निष्कर्षः ॥ (बो. गृ. प. सू. १. १०. १४) "पुंसवनप्रभृत्याज्याभिघारितं पत्न्यश्नात्या प्रसवात्" ॥

अथ पुंसवनप्रयोगः ॥ कर्ता पूर्वेद्युर्नान्दीश्राद्धं प्रतिसरबन्धं च कृत्वा श्वोभूते कृतस्नानादिचतुष्टयो गणपतिं सम्पूज्य ब्राह्मणाननुज्ञाप्य "प्रजापतिः प्रीयताम्" इति पुण्याहं वाचयित्वा देवयजनोल्लेखनप्रभृति गृह्याग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "ममास्यां भार्यायां विद्यमानगर्भस्य पुंस्त्वप्रतिपादनपूर्वकबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनहोमं करिष्ये,"[1] अन्वाधाने—चन्द्रमा नामाग्निः, प्रजापतिर्देवता, चरुर्हविः, अग्निः स्विष्टकृत, इत्यादि सङ्कल्प्याग्निमुखान्तं कृत्वा पक्वाज्जुहोति— "ॐ प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सह साम इन्द्र। विश्वैर्देवै रातिभिः सꣳरराणा पुꣳसां बहूनां मातरः स्यामो३ प्रजापते तन्वं० स्याम स्वाहा" प्रजापतय इदं०॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति—"गर्भो अस्योषधीनाम्, प्रसद्य भस्मना, पुनरासद्य सदनम्" इति तिसृभिरनुच्छन्दसम्। सर्वत्र "अग्नये गर्भायेदं०" इत्युद्देशत्यागः ॥ ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा आज्यशेषं पत्न्या आस्ये प्रच्योतयति– "अस्मे देवासो वपुषे चिकित्सत" इति चतसृभिरनुच्छन्दसम्[2] ॥ अथोत्तरपरिषेकादि कर्मशेषं समापयेत् ॥ अतःपरं पत्नी सर्पिर्बहुलमन्नं भुञ्जीत ॥ इति पुंसवनप्रयोगः ॥

---

१. अयं होमसंकल्पः। अयमेव होमपदस्थाने कर्मपदयोजनेन प्रधानसंकल्पो भवति स च कर्मारंभे कर्तव्यः। अत्र विस्तरभयान्नोल्लिखितः। एवमुत्तरत्राप्यनुसन्धेयम् ॥

२. अत्र मन्त्राः प्रतीकतो निदर्शिताः, कृत्स्नशस्त्वग्रे समानतन्त्रप्रयोगावसरे लेखिष्यन्ते ॥

## ॥ अथ सीमन्तोन्नयनम् ॥ ( हुतः )

( बो. गृ. सू. १. ३ ) " तत्र यच्छूयेत स हुतः यथैतद्विवाहः सीमन्तोन्नयनं चेति " ॥ ( बो. गृ. सू. १. १० ) " प्रथमगर्भायाश्चतुर्थे मासि सीमन्तोन्नयनम् ॥ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ॥ अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति ॥ ' धाता ददातु नः ' इति पुरोनुवाक्यामनूच्य ' धाता प्रजाया उत राय ईशे ' इति याज्यया जुहोति ॥ अथाज्याहुतीरुपजुहोति—' धाता ददातु नो रयिं प्राचीम् ' इत्यान्तादनुवाकस्य । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथास्यास्त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैरुदुम्बरप्रसूनैर्यवप्रसूनैरिति केशान्विभजन् सीमन्तमुन्नयति- ' राकामहं, यास्ते राके ' इति द्वाभ्याम् ॥ अथास्यै यवप्रसूनान्याबध्नाति— ' यवोसि यवयास्मद्द्वेषो यवयारातीः ' इति ॥ अथैनौ वीणागाथिनाविति प्रतिगृह्णीते ॥ अथैनौ संशास्ति—' गायतम् ' इति ॥ तावेतां गाथां गायतः— ' सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरेणासौ तव ' इति यस्यै नद्यास्तीरे संश्रिता वसन्ति तस्यै नाम गृह्णाति " ॥

नक्षत्रादिकमुक्तं प्रयोगपारिजाते—" सीमन्ते तिष्यहस्तादितिहरिशशभृत्पौष्णविध्युत्तराख्याः पक्षच्छिद्रञ्च रिक्तां पितृतिथिमपहायापराः स्युः प्रशस्ताः । सिंहाली वर्जयित्वा शुभफलबहुला राशयोऽप्यंशकाश्च श्रेष्ठाः स्युः श्वेतरोचिर्भृगुबुधधिषणानां विशुद्धे चाष्टमेऽह्नि" इति ॥ षठ्यष्टमीद्वादश्यः पक्षच्छिद्राः, चतुर्थीनवमीचतुर्दश्यो रिक्ताः, एतास्तिथीर्वर्जयित्वान्यासु तिथिषु चन्द्रबुधगुरुशुक्राणां वारराश्यंकेषु तिष्यहस्तपुनर्वसुश्रवणमृगशिरोरेवतीरोहिण्युत्तरात्रयेषु नक्षत्रेषु लग्नाष्टमशुद्धौ सीमन्तोन्नयनं कुर्यादित्यर्थः ॥ वर्ज्यतिथिष्वपि त्याज्या त्याज्यनाडिकाः प्राह निर्णयसिन्धौ वसिष्ठः—" चतुर्दशी चतुर्थी च अष्टमी

नवमी तथा। षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वयाः स्मृताः ॥ क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः। भूताष्टमनुतत्वाङ्क-दशशेषास्तु शोभनाः " इति ॥

अथ सीमन्तोन्नयनप्रयोगः ॥ कर्ता पूर्वेद्युर्नान्दीं प्रतिसरञ्च कृत्वाऽपरेद्युः स्नानादिचतुष्टयं कृत्वा गणपतिं सम्पूज्य "धाता प्रीयताम्" इति पुण्याहं वाचयित्वा स्थण्डिलोल्लेखनादि गृह्याग्निं प्रतिष्ठाप्याचमनप्राणायामादि देशकालकीर्तनान्ते "ममास्यां भार्यायां विद्यमानगर्भस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरं क्षेत्रसंस्कारातिशयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सीमन्तोन्नयनहोमं करिष्ये" इति सङ्कल्प्य ॥ अन्वाधाने- मङ्गलो नामाग्निः, धाता देवता, चरुर्हविः इत्यादि। पात्रासादनकाले त्रेणीं[1] शलल्टीं दर्भानुदुम्बरप्रसूनानि यवप्रसूनानि[2] च प्राकृतपात्रेण सहासाद्याभिमुखान्तं कृत्वा पक्वाज्जुहोति—"ॐ धाता ददातु नो रयिमीशानो जगतस्पतिः। स नः पूर्णेन वावनों ३ धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान। धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम स्वाहा" ॥ धात्र इदं० ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजहोति—धाता ददातु नो रयिं प्राचीं० सत्यराधसः स्वाहा ॥ धात्र इदं० ॥ धाता ददातु दाशुषे० सजोषाः स्वाहा ॥ धात्र इदं० ॥ अनु नोऽद्यानुमतिः० मयः स्वाहा ॥ अन्विदनुमते० तारिषः स्वाहा ॥ अनुमन्यतां० यच्छतु स्वाहा ॥ यस्यामिदं० यच्छतु स्वाहा ॥ एतेषां चतुर्णां, अनुमत्या इदं० ॥ राकामहं० उक्थ्यः स्वाहा ॥ यास्ते राके० रराणा स्वाहा ॥ द्वयोः, राकाया इदं० ॥ सिनीवालि० दिदिड्ढि नः स्वाहा ॥ या सुपाणिः० जुहोतन स्वाहा ॥ इत्येतयोः, सिनीवाल्या इदं० ॥ कुहूमहं० विधेम स्वाहा ॥ कुहूर्देवानां ० चिकितुषे दधातु स्वाहा ॥

---

१. वराहरोमाणम् ॥ २. यवाङ्कुरान् ॥

एतयोर्द्वयोः, कुह्वा इदं० ॥ इति द्वादश स्रुवाहुतीर्हुत्वा स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वा, अथास्यास्त्रेण्या शलल्या दर्भैरुदुम्बर-प्रसूनैर्यवप्रसूनैश्च शिरोमध्ये केशान्विभजन् ( भ्रूमध्यमारभ्य पिठरान्तम् ) सीमन्तमुन्नयति—" राकामहम्, यास्ते राके " इति द्वाभ्याम् ॥ शलल्यादीनुत्तरतो निरस्याप उपस्पृश्य अस्याः शिरसि यवप्रसूनान्याबध्नाति–" यवो ऽसि यवयास्म द्वेषो यवयारातीः " इति ॥ अथ वीणागाथिनौ संशास्ति—" गायतम् " इति ॥ तावेतां गाथां गायतः— " सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः ॥ विवृत्तचक्रा आसीनास्तीरेणासौ तव " इति यस्या नद्यास्तीरे वसति तस्या नाम ' असौ ' इति पदस्थाने सम्बुद्ध्यन्तं निर्दिशेत्— ' गङ्गे तव ' ' कावेरि तव ' इति ॥ अथोत्तरपरिषेकादि कर्मशेषं समाप्य ब्राह्मणान् भोजयित्वाशिषो गृह्णीयात् ॥ इति सीमन्तो-न्नयनप्रयोगः ॥

## ॥ अथ विष्णुबलिः ॥ ( हुतः )

( बो. गृ. सू. १. १०–११ ) " अष्टमे मासि विष्णव आहुतीर्जुहोति- ' विष्णोर्नुकम् ' इत्येतेन सूक्तेन ॥ विष्णवे बलि-मुपहरति ॥ वैष्णवो ह्येष मासो विज्ञायते ॥ विष्णुर्हि गर्भस्य देवता ॥ इति हुतो व्याख्यातः ॥ यथैतद्धुते बलिहरणम् ॥ विष्णवे बलिरष्टमे मासि पूर्वपक्षस्य सप्तम्यां द्वादश्यां रोहिण्यां श्रोणायां वा ॥ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति

---

१. " सीमन्ते पुंसवे नाम्नि भूरिब्राह्मणभोजनम् । ब्राह्मणांश्चैव पञ्चाशच्चौले तूपनये शतम् ॥ विवाहे तु यथाशक्ति ह्याधाने शतभोजनम् " इति वैद्यनाथीये ॥

वाचयित्वा ॥ अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा उपोत्थायाग्रेणाग्निं दैवतमावाहयति । ओं भूः पुरुषमावाहयामि, ओं भुवः पुरुषं०, ओं सुवः पुरुषं०, ओं भूर्भुवः सुवः पुरुषं० इत्यावाह्य परिधानप्रभृत्याग्निमुखात्कृत्वा दैवतमर्चयति । 'आपो हि ष्ठा' इति तिसृभिः 'हिरण्यवर्णा' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वा । अथाद्भिस्तर्पयति- 'केशवं तर्पयामि, नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरं तर्पयामि' इति ॥ एतैरेव नामधेयैर्गन्धपुष्पधूपदीपैः 'अमुष्मै नमोऽमुष्मै नमः' इत्यभ्यर्च्य ॥ अथ विष्णव आहुतीर्जुहोति—'विष्णोर्नुकं, तदस्य प्रियं, प्रतद्विष्णुः, परो मात्रया, विचक्रमे, त्रिर्देवः' इति । जयप्रभृति सिद्धमाधेनुवरप्रदानात् । अथ गुडपायसं घृतमिश्रमन्नं निवेदयति—'अमुष्मै स्वाहा नमोऽमुष्मै स्वाहा नमः' इति द्वादशभिर्यथालिङ्गम् । वैष्णवीभिर्ऋग्यजुःसामाथर्वभिः स्तोत्रैः स्तुतिभिः स्तुन्वन्ति ॥ व्याहृतीभिः पुरुषमुद्वासयामीत्युद्वास्यान्नशेषं पत्नीं प्राशयेत् । पुमानस्यै जायत इति विज्ञायते"॥

प्र० पारिजाते वसिष्ठः— "मासेष्टमे च गर्भस्य कुर्याद्विष्णोर्बलिक्रियाम् । श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते । द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः । शुभग्रहोदयाः श्रेष्ठास्तेषां च दिवसा अपि । पापास्त्र्यायारिगाः श्रेष्ठा नेष्टाः सर्वेऽष्टमस्थिताः" इति । एतेन गर्भादष्टमे मासि शुक्ले पक्षे द्वितीयासप्तमीद्वादशीतिथिषु शुभग्रहवारोदयेषु रोहिणीश्रवणपुष्यनक्षत्रेषु विष्णुबलिं कुर्यादित्यवसीयते॥ (बो. गृ. प. सू. १. १०. १५-१६) "अष्टमासमुष्णोदकेन स्नात्वा विष्णवे बलिमुपहृत्य व्रतयति । अथ पुत्रप्रसूर्भवतीति विज्ञायते"॥

अथ विष्णुबलिप्रयोगः ॥ कर्ता नान्दीमुखादि प्रतिसरबन्धान्तं पूर्ववत्कृत्वा "सविता प्रीयताम्" इति पुण्याहं वाचयित्वा देवयजनोल्लेखनप्रभृति गृह्याग्निं प्रतिष्ठाप्य देशकालकीर्तनान्ते "ममास्यां भार्यायां विद्यमानगर्भस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरः-

सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विष्णुबलिहोमं करिष्ये" ॥ अन्वाधाने--शोभनो नामाग्निः, सविता देवता, चरुर्हविः, इत्यादि संकल्प्यापरिधानात्कृत्वोपोत्थायाग्रेणाग्निं तण्डुलपुञ्जेषु विष्णोः प्रतिमां कलशं वा प्रतिष्ठाप्य, "अस्य गर्भस्य रक्षार्थं पुष्ट्यर्थमायुःश्रीबलवृध्यर्थं विष्णुपूजां करिष्ये" इति सङ्कल्प्य महापुरुषं ध्यात्वा गन्धपुष्पाक्षतैरावाहयति— "ॐ भूः पुरुषमावाहयामि। ॐ भुवः पुरुषमावाहयामि। ॐ सुवः पुरुषमावाहयामि। ॐ भूर्भुवः सुवः पुरुषमावाहयामि। आयातु भगवान्महापुरुषः" इत्यावाह्य स्वागतेनाभिनन्दयति—"स्वागतमधुना भगवतो महापुरुषस्य" इति। "भगवते महापुरुषायै-तदासनमुपक्लृप्तमत्रास्तां भगवान्महापुरुषः" इत्युक्त्वा कूर्चं ददाति—"भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णस्तं जुषस्व" इति। अथ गायत्र्याभिमंत्रिते पात्रे तिरःपवित्रमप आनीय गन्धादिभिरभ्यर्च्य ओमित्यादित्यं दर्शयित्वा तासामेकदेशं पात्रान्तरे-णादाय "त्रिणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। ततो धर्माणि धारयन्" इति पाद्यं दत्वा "ॐ इदं विष्णुः० पांसुरे" इत्यर्घ्यमाचमनीयं च दद्यात्। ततः परिधानप्रभृति अग्निमुखान्तं कृत्वा, अथैनं स्नापयति आपो हिष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयित्वाद्भिस्तर्पयति– "केशवं तर्पयामि। नारायणं त०। माधवं त०। गोविन्दं त०। विष्णुं त०। मधुसूदनं त०। त्रिविक्रमं त०। वामनं त०। श्रीधरं त०। हृषीकेशं त०। पद्मनाभं त०। दामोदरं तर्पयामि" इति तर्पयित्वा एतैरेव नामधेयैरमुष्मै नमोऽमुष्मै नम इति गन्धपुष्पाक्षतधूपदीपैः क्रमेणाभ्यर्च्य पक्वाज्जुहोति–" ॐ भूर्भुवस्सुवरो३म् तत्सवितुः० चोदयात्स्वाहा" सवित्र इदं० ॥ स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति—"विष्णोर्नु कं, तदस्य प्रियं, प्रतद्विष्णुः, परो मात्रया, विचक्रमे, त्रिर्देवः" इति षड्भिरनुच्छन्दसम् ॥ ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा विष्णवे बलिमुपहरति

गुडपायसं घृतमिश्रमन्नं च—" ॐ केशवाय स्वाहा नमः ॥ नारायणाय स्वाहा नमः ॥ माधवाय स्वाहा नमः ॥ गोविन्दाय० ॥ विष्णवे० ॥ मधुसूदनाय० ॥ त्रिविक्रमाय० ॥ वामनाय० ॥ श्रीधराय० ॥ हृषीकेशाय० ॥ पद्मनाभाय० ॥ दामोदराय स्वाहा नमः " इति द्वादशभिः ॥ पुनस्तैरेव नामभिः " केशवं तर्पयामि " इत्यादिभिस्तर्पयित्वा वैष्णवीभिर्ऋग्यजुस्सामाथर्वभिः स्तुतिभिः स्तुत्वा व्याहृतिभिः पुरुषमुद्वासयेत् । " ॐ भूः पुरुषमुद्वासयामि । ॐ भुवः पुरुषमुद्वासयामि । ॐ सुवः पुरुषमु० । ॐ भूर्भुवस्सुवः पुरुषमुद्वासयामि ॥ प्रयातु भगवान्महापुरुषः क्षेमाय विजयाय पुनस्सन्दर्शनाय च " इत्युद्वास्यान्नशेषं पत्नीं प्राशयेत् ॥ तत उत्तरपरिषेकादिशेषं कर्म समापयेत् ॥ मासमेकं पत्नी शुचिरुष्णोदकेन स्नात्वाहरहर्विष्णवे बलिमुपहृत्य व्रतयति ॥ पुमानस्यै जायत इति विज्ञायते ॥ इति विष्णुबलिप्रयोगः ॥

## ॥ गर्भिणीपतिधर्माः ॥

अथ प्रसङ्गात् गर्भिणीतत्पतिधर्माः केचन निरूप्यंते ॥ तत्र गर्भिणीधर्ममाह प्र० पारिजाते कश्यपः— " नावस्करेषूपविशेन्मुसलोलूखलादिषु । जलञ्च नावगाहेत शून्यागारं च वर्जयेत् ॥ वल्मीकं नाधितिष्ठेत न चोद्विग्नमना भवेत् । विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥ न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् । वर्जयेत्कलहं लोकैर्गात्रभङ्गं तथैव च ॥ न मुक्तकेशी तिष्ठेत नाशुचिः स्यात्कदाचन । न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् ॥ न वस्त्रहीना नोद्विग्ना न चार्द्राम्बरधारिणी ॥ नामङ्गल्यं वदेद्वाक्यं न च हास्याधिका भवेत् ॥ कुर्याच्छ्वशुरयोर्नित्यं पूजां माङ्गल्यतत्परा । तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता ॥ संध्यायां नैव भोक्तव्यं गर्भिण्या हि प्रयत्नतः ॥ न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥ न शयाना सदा तिष्ठेत्खट्वाच्छायां विवर्ज-

येत् ॥ सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥ कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ॥ दानशीला तृतीयायां पार्वत्यां भक्तिमाचरेत् ॥ गर्भिणी कुञ्जराश्वादिवाहं हर्म्याधिरोहणम् । व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥ शोकं रक्तविमोक्षञ्च साध्वसं कुक्कुटासनम् । व्यवसायं दिवा स्वापं रात्रौ जागरणं त्यजेत् ॥ पतिव्रता भवेन्नारी विशेषेण तु गर्भिणी । अतिक्षारन्तु नाश्नीयादत्यल्पमतिभोजनम् ॥ अत्युष्णमतिशीतञ्च गुर्वाहारं परित्यजेत् । यस्तु तस्या भवेत्पुत्रः स्थिरायुर्वृद्धसम्मतः " इति ॥ निर्णयसिन्धौ स्कान्दवचनम्— " हरिद्राकुंकुमञ्चैव सिंदूरं कज्जलं तथा । कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ केश-संस्कारकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्ती वर्जयेद्गर्भिणी न हि " इति ॥

अथ गर्भिणीपतिधर्माः सं० मालायाम्— " गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोचितम् । सूते चिरायुषं पुत्रमन्यथा दोषमर्हति " इति ॥ याज्ञवल्क्योऽपि— " दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः " इति ॥ सुतचौलादिकं न कर्तव्यमित्युक्तं स्मृतिचिन्तामणौ— " पुंसो भार्या गर्भिणी यस्य चेत्स्यात्सूनोश्चौलं क्षौरकर्मात्मनश्च । गेहारम्भः स्तम्भसंस्थापनञ्च वार्धिस्नानं नैव कुर्याच्च यात्राम् " इति ॥ कालविधाने— " क्षौरं शवानुगमनं नखकृन्तनं च युद्धं च वास्तुकरणं त्वतिदूरयानम् । उद्वाह औपनयनं जलधेर्वगाह आयुष्क्षयं भवति गर्भिणिकापतीनाम् " इति ॥ एते च नियमाः सप्तममासादूर्ध्वमवश्यं पालनीयाः—" वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः । श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यच्च वेदवित् " इति प्र० पारिजाते आश्वलायनोक्तेः ॥ तत्रापि नैमित्तिकक्षौरं पित्रोः प्रेतकर्मादिकं कुर्यादित्युक्तं संस्काररत्नमालायाम्–" क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवम् । पित्रोः प्रेतविधानं च गर्भिणीपतिरेव च " " पित्रोः क्षयाहं दर्शं च गयाश्राद्धं महालयम् । ग्रहणान्वष्ट-काश्राद्धे कुर्याद्गर्भवतीपतिः " इति ॥

## ॥ अथ सुखप्रसवोपायः ॥

( बो. गृ. शे. सू. २. ३. १२–१३) "अथ विजननकाले क्षिप्रप्रसवनं शिरस्त उदकुम्भं निधाय पत्तस्तूर्यन्तीमथास्या उदरमभिमृशाति—'यथैव वायुः पवते यथा समुद्र एजाति। एवन्ते गर्भ एजतु सह जरायुणाऽपसर्पतु' इति ॥ अथ यदि जरायुर्न पतेद्भैरेव जठरं सम्मार्ष्टि—'तिलदेऽवपद्यस्व न मांसमसि नो दलम्। स्थविन्त्र्यवपद्यस्व स्वप्स्ये' इति"॥ ॥ पुनरुपायान्तरमुक्तं प्रयोगमालायाम्—"हिमवत्युत्तरे पार्श्वे शबरी नाम यक्षिणी। तस्या नूपुरशब्देन विशल्या भवतु गर्भिणी स्वाहा" इत्यनेनैरण्डतैलं महिषीक्षीरमिश्रितमभिमन्त्र्य पाययेदुदरे लेपयेच्च ॥

## ॥ अथ जातकर्म ॥ ( प्रहुतः )

( बो. गृ. सू. ११. ५ ) "अथयन्हुत्वा दीयते स प्रहुतो यथैतज्जातकर्म चौलं चोति" ॥ ( बो. गृ. सू. २. १ ) "अथ प्रहुतः। जातं कुमारमभिमन्त्रयते– 'अङ्गादङ्गः सम्भूतः' इत्येतेनानुवाकेन। अथैनं स्नापयति—'क्षेत्रियै त्वा निर्ऋत्यै त्वा' इति षड्भिरनुच्छंदसम्। अथैनं स्वोपस्थ आदधाति—'अङ्गादङ्गात्संभवसि ० शतम्' इति। अथैनं मूर्ध्न्यभिजिघ्रति–'अश्मा भव० जिघ्राम्यसौ' इति नक्षत्रनामधेयेन। अथास्य दक्षिणे कर्णे जपति– 'अग्निरायुष्मान्' इति पञ्चभिः पर्यायैः। अथैनं दधिमधुघृतमिति समुदायुत्य

---

१. पादयोः समीपे। २. अवका( शैवाल )मित्यर्थः।

हिरण्येन प्राशयति–‘ प्राणो रक्षति विश्वमेजत् ’ इत्येतेनानुवाकेन प्रत्यृचम्। अतिशिष्टं गोपदे निनयति व्याहृतीभिः। अथैनं मातुरुपस्थ आदधाति—‘ सीद त्वं मातुरस्या उपस्थे ’ इति चतसृभिः सहꣳसाभिः। स्तनमभिमन्त्रयते—‘ यस्ते स्तनः० धातवेकः ’ इति ॥ धयन्तमनुमन्त्रयते--‘ द्यौस्ते० पश्चात् ’ इति ॥ अथास्योदकुम्भमुच्छिरसि निदधाति—‘ आपः सुप्तेषु जाग्रत रक्षाꣳसि निरितो नुदध्वम् ’ इति ॥ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति—‘हरिꣳ हरन्तमनुयन्ति देवाः’ इति पुरोनुवाक्यामनूच्य ‘ मा च्छिदो मृत्यो मा वधीः ’ इति याज्यया जुहोति। अथाज्याहुतीरुपजुहोति—‘ सद्यश्चकमानाय ’ इत्यान्तादनुवाकस्य। स्विष्ट-कृत्प्रभृति सिद्धमाधेनुवरप्रदानात्। अथानोयुगं रथयुगं वा स्नाप्याच्छाद्यालङ्कृत्य अग्रेणाग्निमुद्धृत्य तस्याग्रेणाश्वत्थपर्णेषु हुतशेषं निदधाति—‘ नम आव्याधिनीभ्यः ’ इति ॥ अथास्तमित आदित्ये गौरसर्षपान् फलीकरणमिश्रान् अञ्जलिना जुहोति—‘ कृणुष्व पाजः प्रसितिं न पृथ्वीम् ’ इत्येतेनानुवाकेन प्रत्यृचम्। अथौदनं तिलसक्तुभिर्घृतेनेति समुदायुत्य गोष्ठेऽश्वत्थपर्णेषु हुतशेषं निदधाति–‘ अघोराय महाघोराय नेजमेषाय नमो नमः ’ इति ॥ अथातिशिष्टं सर्वा दिशः संप्रकिरन्ति—‘ आवेशनी ह्यश्रुमुखी कुतूहली हस्तिनी जृम्भिणी स्तंभिनी मोहिनी च। कृष्णा विशाखा रिमलब्रह्मरात्री भ्रातृव्यसङ्घेषु पतन्त्यमोघाः। ताभ्यो वै मातृभ्यो नमो नमः ’ इति। स एवमेव फलीकरणहोमप्रभृति सायंप्रातर्दशरात्रं करोति। नानुत्थितायां सूतिकायां भोज्यान्नता। दशम्यामुत्थानम् ” ॥

( बो. गृ. प. सू. १. ११ ) “ सा यदि पुत्रप्रसूर्भवति प्रसिद्धमौपासने जातकर्म कृत्वाऽन्यत्र फलीकरणहोमं जुहोति स सूतकाग्निर्भवति। तं दशाहं धारयति। अथ नवम्यां व्युष्टायां सूतकाग्नावाज्यं विलाप्योत्पूय युगमुत्थापयति—‘ ब्रह्म जज्ञानम् ’ इति। अथोदकुम्भमुत्थापयति—‘ भूर्भुवः सुवरोम् ’ इति। अथैनमप्सु विसर्जयति—‘ समुद्रं वः० चिमत्पयः ’ इति ॥ अथैतेनैव यथेतमेत्य सूतकाग्निमुपतिष्ठते--‘ बोधा नो अस्य० वन्दे अग्ने ’ इति। अथ पुत्रप्रसूमुपतिष्ठते—‘ स बोधि० द्वेषाꣳसि ’ इति। अथ

कुमारमुत्थापयति—'उत्तिष्ठ ब्रह्मणस्पते० सचा' इति ॥ अथैनमादायोपनिष्क्रम्यादित्यमुदीक्षयति—'उद्वयं तमसस्परि, उदु त्यं, चित्रं, तद्विष्णोः परमं पदं' इति चतसृभिः। अथैतेनैव यथेतमेत्य कुमारं मातृहस्ते दत्वा सूतकाग्नावाज्यस्य जुहोति—'हिरण्यगर्भः समवर्तताग्रे' इत्यान्तादनुवाकस्य प्रत्यृचम्। उत्सृजति सूतकाग्निम्। 'आयुर्दा अग्ने हविषो जुषाणः' इत्यरण्योर्वा समारोपयति। तमुपनयने मन्थति। अथौपासनमुपतिष्ठते—'अग्न आयूꣳषि पवसे, अग्ने पवस्व स्वपाः' इति द्वाभ्याम्। ज्योतिष्मत्या पुत्रस्य नाम गृह्णाति—'अन्नादमेवैनं करोति' इति ब्राह्मणम्। अथैनं मूर्ध्न्यवघ्रायाभिमन्त्रयते—'अग्निरायुष्मान्' इति पञ्चभिः पर्यायैः। प्रवासादेत्यागतं वा पुत्रमेतैरेवाभिमन्त्रयते। प्रसिद्धं दशम्यामुत्थानम्" ॥

मनुः—"प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते" इति॥ एतेन विवरणेन शिशोर्नालच्छेदनात्पूर्वं जातकर्मणो मुख्यः काल इत्यवगम्यते। न च तदानीं पितुराशौचशंकया कर्मानधिकारः इति वाच्यम्। "यावन्न च्छिद्यते नाळो तावन्नाप्नोति सूतकम्" इति पराशरीयजैमिनिवचनेन नाळच्छेदनात् प्रागाशौचस्यासम्भवात्। एतच्च सूतकान्तरमध्येपि कार्यम् ॥ "सूतके तु समुत्पन्ने पुत्र जन्म यदा भवेत्। कर्तुस्तात्कालिकी शुद्धिः" इति प्र० पारिजाते सूतकान्तरस्यापि तत्कालशुद्धिविधानात्। ततः सचैलं स्नानं विहितं तत्रैव—"जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते" इति। तत्र रात्रावपि कार्यम्—"पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः। राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि" इति॥ तत्रैव जाबालिवसिष्ठोक्तेः॥ जातकर्मणि हेम्नैव नान्दीश्राद्धं कार्यम्—"पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्" इति हेमाद्रौ संवर्तकोक्तेः। मुख्यकालातिपत्तौ सूतकान्ते कार्यमित्याह जाबालिः—"दैवादतीतकालं चेदतीते सूतके भवेत्' इति॥

अथ जातकर्मप्रयोगः ॥ पिता जातमात्रस्य पुत्रस्य मुखमवलोक्य नालच्छेदात्पूर्वं नद्यादौ सचैलं स्नात्वाहतं वासः परिधाय तदानीमेव हिरण्येन नान्दीसमाराधनं कृत्वा “ मृत्युः प्रीयताम् ” इति पुण्याहं वाचयित्वाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य “ मम कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्माख्यं कर्म करिष्ये ” इति संकल्प्य कुमारमभिमंत्रयते—“ अद्भ्यः सम्भूतः पृथिव्यै रसाच्च ” इत्येतेनानुवाकेन। अथैनं स्नापयति— “ क्षेत्रियै त्वा निर्ऋत्यै त्वा ” इति षड्भिरनुच्छन्दसम् ॥ अथैनं स्वोत्सङ्ग आदधाति—“ अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम् ” इति ॥ अथैनं मूर्धन्यभिजिघ्रति— “ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव। पशूनां त्वा हिङ्कारेण ब्रह्मणाभिजिघ्राम्यसौ ” इति ॥ अत्र ‘ असौ ’ स्थाने सम्बुध्यन्तं तत्तन्नक्षत्रनामधेयं नियोजयेत् ॥ यथा “ अश्वयुक्, आश्वयुजेति वा। अपभरण, आपभरणेति वा। कृत्तिक, कार्तिकेति वा। रौहिण। मार्गशीर्ष। आर्द्रक। पुनर्वसो। तिष्य। आश्रेष। माघ। पूर्वाफल्गुन। उत्तराफल्गुन। हस्त। चैत्र। स्वाते। विशाख। अनूराध। ज्यैष्ठ। मूलक। पूर्वाषाढ। उत्तराषाढ। श्रावण श्रवणेति वा। श्राविष्ठ। शातभिषज, शतभिषगिति वा। पूर्वप्रोष्ठपाद। उत्तराप्रोष्ठपाद। रैवत” इति। अथास्य दक्षिणकर्णे जपति—“ अग्निरायुष्मान्” इति पञ्चभिः पर्यायैः ॥ (“ आयुष्टे विश्वतो दधत् ” इत्युत्तरे कर्णे जपित्वा,) अथैनं दधि मधु घृतमिति समुदायुत्य हिरण्येन प्राशयति— “ प्राणो रक्षति विश्वमेजत् ” इति दशर्चेनानुवाकेन, प्रत्यृचं प्राशयित्वातिशिष्टं गोपदे निनयति

१. अनेन मंत्रेणोत्तरकर्णजपं प्रयुनक्ति विष्णुभट्टः ॥

२. “ प्राणो यो मनसश्चानो जुषताम्मे ययेति च। चक्षुरायुश्च श्रोत्रेण येन प्राच्या तथा दश ” इति मंत्रादिप्रदर्शकः श्लोकः ॥

व्याहृतीभिः ॥ अथैनं मातुरुपस्थ आदधाति—" सीद त्वं मातुरस्या उपस्थे, अन्तरग्ने, शिवो भूत्वा, हꣳसः शुचिषत् " इति चतसृभिः ॥ अथ स्तनमभिमंत्रयते—" यस्ते स्तनः शशयो यो मयोभूः " इति ॥ धयन्तमनुमंत्रयते—" द्यौस्ते पृष्ठꣳ रक्षतु " इति ॥ अथास्योदकुम्भमुच्छिरसि निदधाति—" आपस्सुप्तेषु जाग्रत रक्षाꣳसि निरितो नुदध्वम् " इति ॥

अथ देवयजनोल्लेखनादिगृह्याग्निं प्रतिष्ठाप्यान्वादध्यात् । तत्र प्रबलो नामाग्निः मृत्युर्देवता, चरुर्हविः, इति विशेषः ॥ अथाग्निमुखान्तं कृत्वा पक्वाज्जुहोति— " हरिꣳ हरन्तमनुयन्ति० विक्रमस्वो ३ माच्छिदो मृत्यो० विधेम स्वाहा " इति ॥ मृत्यव इदं० ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति— " सद्यश्चकमानाय, कामेन मे, परं मृत्यो, प्रपूर्व्यं मनसा " इति चतसृभिः ॥ सर्वत्र, मृत्यव इदं० ॥ ततः स्विष्टकृदादिप्रागुत्तरपरिषेकात्कृत्वा, अनोयुगं रथयुगं वा संस्नाप्याच्छाद्यालंकृत्याग्रेणाग्निमुध्दृत्य तस्याग्रेणाश्वत्थपर्णेषु हुतशेषं निदधाति— " नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः " इति ॥ अथोत्तरपरिषेकादिशेषं समापयेत् ॥ अत्र यथाशक्ति गोभूतिलहिरण्यादिकमन्त्रवर्जितं दद्यात् ॥ अथ फलीकरणहोमः ॥ अथास्तमित आदित्ये सूतिकागृहे स्थण्डिलं कृत्वा लौकिकाग्निं प्रतिष्ठाप्य " फलीकरणहोमं करिष्ये, तत्र रक्षोहाग्निर्देवता, गौरसर्षपफलीकरणमिश्रं द्रव्यम्, सद्यो यक्ष्ये" इति सङ्कल्प्याग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य फलीकरणमिश्रान् गौरसर्षपानुत्तरतः संसाद्य प्रोक्ष्याभिद्योत्य त्रिः पर्यग्नि कृत्वा दक्षिणतः प्रतिष्ठाप्य प्रदक्षिणमग्निं परिषिच्याभ्यर्च्य समिधमग्नावभ्याधाय गौरसर्षपान् फलीकरणमिश्रानञ्जलिना जुहोति— " कृणुष्व पाजः प्रसितिम् " इत्येतेनानुवाकेन प्रत्यृचम् ॥ सर्वत्र, अग्नये रक्षोघ्न इदं० ॥ अथोत्तरपरिषेकादिशेषं समाप्यौदनं तिलसक्तुभिर्घृतेन च समुदायुत्य गोष्ठेऽश्वत्थपर्णेषु बलिमुपहरति- " अघोराय महाघोराय नैजमेषाय नमो नमः " इति ॥ अथातिशिष्टं सर्वा दिशः सम्प्रकिरति- " आवेशनी ह्यश्रुमुखी कुतूहली हस्तिनी जृम्भिणी स्तम्भिनी मोहिनी च ।

कृष्णा विशाखा रिमलब्रंह्मरात्री भ्रातृव्यसङ्घेषु पतन्त्यमोघाः। ताभ्यो वै मातृभ्यो नमो नमः " इति ॥ स एवमेव फलीकरण-होमप्रभृति सायंप्रातर्दशरात्रं करोति ॥ सायमुपक्रमः प्रातरपवर्गः ॥ दशरात्रमिमं सूतकाग्निं रक्षेत् ॥ दशमेऽह्नि प्रातः फलीकरणहोमं बलिं च कृत्वा सूतकाग्नावाज्यं विलाप्योत्पूय स्रुक्स्रुवं सम्मृज्यौपासनाग्नेः पुरस्तादुच्छ्रितं युगमुत्थापयति—" ब्रह्म जज्ञानम् " इति ॥ उदकुम्भं च " भूर्भुवस्सुवरोम् " इत्युत्थाप्य " समुद्रं वः प्रहिणोमि " इति ता अपोऽप्सु विसृजति ॥ अथैतेनैव यथेतमेत्य सूतकाग्निमुपतिष्ठते—" बोधानो अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधा वः। पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने " इति ॥ अथ पुत्रप्रसूतिमुपतिष्ठते—" सबोधि सूरिर्मघवा वसुदावा वसुपतिः। युयोध्यस्मद्द्वेषाꣳसि " इति ॥ कुमारमुत्थापयति— " उत्तिष्ठ ब्रह्मणस्पते। देवयन्तस्त्वेमहे ॥ उपप्रयन्तु मरुतः सुदानवः। इन्द्र प्राशूर्भवा सचा " इति ॥ कुमारमादायोपनिष्क्रम्यादित्यमुदीक्षयति— " उद्वयं तमसस्परि, उदु त्यम्, चित्रं देवानाम्, तद्विष्णोः परमं पदम् " इति चतसृ-भिः ॥ मातृहस्ते शिशुं दत्वा सूतकाग्निं परिषिच्याज्याहुतीर्जुहोति—" हिरण्यगर्भः, यः प्राणतः, य आत्मदा, यस्येमे, यं क्रन्दसी, येन द्यौरुग्रा, आपो ह, यश्चिदापः " इत्यष्टाभिः प्रत्यृचम् ॥ सर्वत्र, ब्रह्मण इदं० ॥ अथ सूतकाग्निमुत्सृजति– " आयुर्दा अग्ने हविषो जुषाणः " इति ॥ ( अरण्योर्वा समारोपयते, तमुपनयने मन्थति ॥ ) अथौपासनाग्निमुपतिष्ठते— " अग्न आयूꣳषि पवसे, अग्ने पवस्व स्वपाः " इति द्वाभ्याम् ॥ " अग्ने गृहपते० आशासेऽमुष्मै ज्योतिष्मतीम् " इति ॥ ' अमुष्मै ' स्थाने पुत्रस्य नक्षत्रनाम चतु-र्थ्यन्तं गृह्णन्नाशास्ते ॥ अथैनम् " अश्मा भव " इति मूर्धन्यवघ्रायाभिमंत्रयते—" अग्निरायुष्मान् " इति पञ्चभिः पर्यायैः ॥ प्रवासा-देत्यागतं वा पुत्रमेतैरेवाभिमंत्रयते ॥ ॥ इति जातकर्मप्रयोगः ॥

१. अयं प्रजारणिपरिग्रहः स्मृतौ कलिनिषिद्धेषु परिगणितः ॥

# ॥ षष्ठीपूजा ॥

शिशुजननात्षष्ठ्यां सप्तम्यां वा रात्रौ रक्षार्थं षष्ठ्यादिदेवतापूजनं स्मृतावभिहितम् ॥ तथा हि प्र० पारिजाते मार्कण्डेयः—"रक्षणीया तथा षष्ठी निशा तत्र विशेषतः। रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः" इति। नारदोऽपि—"जननात्सप्तमे चाह्नि मृत्युरायाति चान्तकः। तद्दिने चैव रक्षेयं कर्तव्यायुर्विवृद्धये॥ सायाह्ने पूज्य विघ्नेशमपूपैश्च पृथग्विधैः" इति॥ "विघ्नेशो जन्मदा षष्ठीदेवी जीवन्तिका तथा। प्रदोषे पूजनीयाश्च गन्धपुष्पादिदानतः" इति सं० रत्नमालायाम्॥ शिशुजननात्षष्ठे सप्तमे वाह्नि यथाचारं रात्रेः प्रथमयामे पित्रादिः शुचिराचम्य देशकालौ सङ्कीर्त्य "अस्य शिशोः समातृकस्य समस्तमृत्युपीडानिवृत्तिद्वारा आयुरारोग्यप्राप्त्यर्थं षष्ठीपूजां करिष्ये" इति सङ्कल्प्याक्षतपुञ्जेषु विघ्नेशं, जन्मदाः, जीवन्तिकाश्च नाममन्त्रेणावाह्य "आयाहि वरदे देवि महादेवीति विश्रुते। शक्तिभिः सह बालं मे रक्ष जागरवासरे" इति षष्ठीदेवीमावाह्य तत्तन्नाममन्त्रैर्विघ्नेशादीन् 'शक्तिस्त्वं सर्वदेवानां लोकानां हितकारिणी। मातर्बालमिमं रक्ष महाषष्ठि नमोस्तु ते' इति मन्त्रेण षष्ठीदेवीं च षोडशोपचारैरभ्यर्च्य अपूपादिकं निवेद्य प्रणम्य प्रार्थयेत्—"लम्बोदर महाभाग सर्वोपद्रवनाशन। त्वत्प्रसादादविघ्नेश चिरं जीवतु बालकः। वरदाः सायुधा यूयं जन्मदा इति विश्रुताः। शक्तिभिः सह बालं मे रक्षतात्राह्नि जागरे॥ जननी सर्वभूतानां बालानाञ्च विशेषतः। नारायणीस्वरूपेण बालं मे रक्ष सर्वदा॥ भूतप्रेतपिशाचेभ्यो डाकिनीयोगिनीषु च। मातेव रक्ष बालं मे श्वापदे पन्नगेषु च॥ गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा। तथा ममाप्ययं बालः षष्ठिके रक्ष्यतां नमः" इति॥ ततो विप्रेभ्यस्ताम्बूलदक्षिणादि दत्वा तेभ्यश्चाशिषो गृह्णीयात्॥

# ॥ अथ यमलसंस्कारः ॥

तत्र ज्येष्ठस्य प्रथमसंस्कार्यत्वादादौ ज्येष्ठत्वनिर्णयः ॥ मनुस्मृतौ—"जन्मज्येष्ठस्य चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्। यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता" इति प्रथमजातस्य ज्येष्ठत्वमुक्तम्॥ सं० मालायाम्—"यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्। सन्तानः पितरश्चैव तस्मिञ्ज्यैष्ठ्यं प्रतिष्ठितम्" इति स्मृतितत्त्ववचनेन पित्रा प्रथममवलोकितस्य ज्येष्ठत्वं कल्पितम्॥ वैद्यनाथस्तु—"पार्श्वयोः संस्थितौ गर्भौ तयोर्यः पूर्वजः स तु। ज्येष्ठ इत्युच्यते सद्भिर्जातकादिषु कर्मसु" इति यमयोर्गर्भकोशे पार्श्वसंस्थत्वे पूर्वजातत्वं ज्येष्ठत्वप्रयोजकम्। उपर्यधोभागस्थत्वे—"यमलावेकगर्भे तु स्त्री वाथ पुरुषोऽपि वा। कनिष्ठ आद्यजातः स्यात्पश्चाज्जातोऽग्रजः स्मृतः" इति पश्चाज्जातत्वं ज्येष्ठत्वप्रयोजकम्॥ इत्येवं व्यवस्थापितवान्॥ ॥ अथ यमलयोः संस्कारविषये निर्णयसिन्धौ गर्गः—"एकस्मिन् वासरे प्राप्ते कुर्याद्यमलजातयोः। क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च"। तत्रैव भट्टकारिकापि—"एकस्मिन् वत्सरे चैकवासरे मण्टपे तथा। कर्तव्यं मङ्गलं स्वस्त्रोर्भ्रात्रोर्यमलजातयोः" इति॥ आश्वलायनस्मृतौ च—"पिता त्वहनि चैकस्मिन्नेकस्यां सहजातयोः। करोति जातकर्माणि पृथक् स्नात्वा यथाविधि" इति॥ वैद्यनाथदीक्षितीये स्मृतिमुक्ताफले सङ्ग्रहकारोऽपि—"एकगर्भप्रसूतौ चेदेकवेदीमवाप्य च। एकाचार्यैकलग्ने च कुर्यान्मौञ्जीव्रतं यतः॥ चौलोपनयने चैव जातकर्मणि नाम्नि च। चतुर्व्रतोपाकरणे यमलानां समं भवेत्" इति॥ ॥ एतैर्वचनैर्यमलयोर्जातकर्मादि (चौलान्तानि) संस्कारकर्माणि तत्तत्कालेषु द्वयोरप्येकदैव कर्तव्यानि॥ तत्र नान्दीपुण्याहहोमहुतशेषादयः पितृकर्तृकाः सकृदेव कर्तव्याः॥ सुतकर्तृकास्तूपनयनव्रतविवाहहोमाः पृथक्कार्याः॥ जातकर्मणि मातृस्नानाभिमंत्रणमुदकुम्भ-

निधानञ्च सकृत् । अन्यानि शिशुसम्बद्धानि तंत्राणि पृथगेव कार्याणि ॥ पुंसः समंत्रकं स्त्रियास्त्वमंत्रकं चेत्येवं सामान्यतः प्रयोगक्रमः पर्यवस्यति ॥ ॥ किञ्चात्र यमलजनने प्रायश्चित्तं शान्तिश्चाह बोधायनः ॥ ते च नामकरणात्प्राक्कर्तव्ये "पत्नी गावो वा यमलौ विजायेरन् तस्य संस्कारः प्राङ्नामकरणात्कार्यः" इति गृह्योक्तेः ॥

अथ यमलजननप्रायश्चित्तम् ॥ स्त्रीषु गोषु वा यमलजनने "यमलजननजनितप्रत्यवायपरिहारार्थं प्रायश्चित्तहोमं करिष्ये" इति सङ्कल्प्यापूर्वतंत्रेणाग्निमुपसमाधाय सम्परिस्तीर्याज्यसंस्काराद्यग्न्यलङ्करणान्तं कृत्वा पुरस्ताद्व्याहृतिभिश्चतसृभिः पाहीति पञ्चभिरुपरिष्टाद्व्याहृतिभिरित्येवं त्रयोदशाज्याहुतीर्हुत्वोत्तरपरिषेकादिशेषं समापयेदिति ॥ यमलजननशान्तिस्त्वग्रे प्रकीर्णकाण्डे द्रष्टव्या ॥ इति यमलसंस्कारनिरूपणम् ॥

## ॥ अथ नामकरणम् ॥

(बो. गृ. सू. २. १) "दशम्यां द्वादश्यां वा नामकरणम् । प्राजापत्येन सूक्तेन हुत्वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयन्नामास्मै ददाति । द्व्यक्षरं चतुरक्षरं षडक्षरमष्टाक्षरं वा । घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम् । अपि वा यस्मिन् स्वित्युपसर्गस्स्यात्तद्धि प्रतिष्ठितमिति विज्ञायते । ऋष्यणूकं देवताणूकं वा । यथैवैषां पूर्वपुरुषाणां नामानि स्युः । अयुगक्षरं कुमार्याः । अमुष्मै स्वस्तीति" ॥ (बो. गृ. प. सू. १. ११. २०) "नामकरणोपनिष्क्रामणान्नप्राशनानि ब्राह्मण-भोजनादेवैकेषाम् ॥ पुण्याहवाचनादेवैकेषाम्" ॥ (बो. गृ. शे. सू. १. ११) "दशम्यां द्वादश्यां वा मातापितरौ स्नात्वा शुच्यगारं कृत्वा पुत्रस्य नामधेयस्य निदधीयाताम् इति ॥ नामास्मै दधाति नक्षत्रनामधेयेन । द्वितीयस्य नामधेयं गुह्यमस्यान्यदभिवादनीय-

मौपनयनकालान्मातापितरौ संविदितौ भवतः। विज्ञायते च–'तस्माद् द्विनामा ब्राह्मणोर्धुकः' इति। 'सोमयाजिनस्तृतीयमस्य नामधेयं कुर्वीत' इति विज्ञायते। अयुगक्षरं कुमार्यै स्वस्तिश्रीसोम्योति दीर्घवर्णान्तम्। अथाप्युदाहरन्ति—'शर्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य गुप्तान्तं वैश्यस्य, भृत्यदासान्तं शूद्रस्य दासान्तमेव वा॥ अथ यदि ब्राह्मणं न विन्देतौपासने ज्योतिष्मत्या पुत्रस्य नाम गृह्णात्युपतिष्ठते वा"॥

मनुस्मृतौ– "नामधेयं दशम्यान्तु द्वादश्यां वापि कारयेत्। पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते" इति॥ तिथ्यादिकमाह निर्णयसिन्धौ श्रीधरः—"मित्राऽदित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाऽच्युतप्राजेशाऽश्विशशाङ्कपौष्णदिनकृत्पुष्येषु राशौ स्थिरे। छिद्रां पञ्चदशीं विहाय नवमीं शुद्धेऽष्टमे भार्गवज्ञाऽचार्याऽमृतपादभागदिवसे नामानि कुर्याच्छिशोः" इति॥ गृ० सङ्ग्रहे तु–"दशमेऽह्न्येव तु क्षौरं कृत्वा नामाऽऽदधीत च। द्वादशेऽह्न्यपि वा पुण्ये नक्षत्रे वा गुणाऽन्विते॥ नान्दीमुखन्तु कर्तव्यं कुर्याच्चेद्दशमेऽहनि। अशुचित्वान्न पूर्वेद्युः सद्यो न प्रतिषेधतः" इति विशेषोऽभिहितः॥ न चाऽत्र दशमेऽहन्याशौचसत्वात्कर्माऽनर्हता इति वाच्यम्॥ "प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा। त्रिष्वाशौचं न कुर्वीत सूतके पुत्रजन्मनि" इति प्र० पारिजाते व्यासोक्त्या तत्तद्विहितकर्मसु आशौचाऽभावविधानात्॥ तथा च प्रसवाद्दशमे द्वादशे वाऽहनि तत्रासम्भवे उपनिष्क्रमणादर्वाक् व्यतीपातवैधृतिपर्वच्छिद्रतिथिपापवारचरराशींश्च वर्जयित्वा अश्विनीरोहिणीमृगशिरःपुनर्वसुतिष्यमघोत्तरात्रयहस्तस्वात्यनुराधाश्रवणधनिष्ठाशतभिषग्रेवतीनक्षत्रेषु नामकरणं कुर्यादिति निर्णीयते॥ अत्राऽऽचारादौ "अमुकदेवताभक्तः" इति कुलदेवतानाम दध्यात्—

१. अमृतपादश्चन्द्रः॥ २. "अमासङ्क्रान्तिविष्टयादौ प्राप्तकालेऽपि नाऽचरेत्" इत्यमासङ्क्रान्त्यादिनिषेधः सर्वसंस्कारसाधारणः इति सं० र०॥

"कुलदेवतासम्बद्धं पिता नाम कुर्यात्" इति सं० मालायां शङ्खोक्तेः॥ द्वितीयं मासनाम ॥ "मासनाम प्रकुर्वीत बालकस्य पिता ततः । कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः॥ उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः। योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात" इति गर्गोक्तेः ।। अत्र मार्गशीर्षादिरेव क्रमः, इति सं० मालायाम् ॥ "चैत्राऽऽदिमासनामानि वैकुण्ठोऽथ जनार्दनः" इति मदनरत्नोदाहृतगर्गवचःसंवादान्निर्णीतः ॥ ततः सूत्रोक्तं नाक्षत्रं व्यावहारिकश्चेति नामद्वयमादधीत ॥ नाक्षत्राण्यभिहितानि ( बो. गृ. शे. सू. १. ११ ) "रोहिणीमृगशीर्षमघाचित्राज्येष्ठा-श्रवणशतभिषग्रेवत्याश्वयुक्षु प्रथमाक्षरवृद्धिः स्याद्रोहिण्यां रौहिणायेति तथेतराणि ॥ तिष्याऽऽश्रेषाहस्तविशाखाऽनुराधाऽषाढा-श्रविष्ठासु प्रकृतिवत्तिष्यायेति तथेतराणि ॥ फल्गुन्यां फल्गुनाय फाल्गुनायेति वा ॥ स्वातीपुनर्वस्वोः स्वातये पुनर्वसव इति ॥ मूला-र्द्रयोर्मूलकायाऽऽर्द्रकायेति ॥ प्रोष्ठपदासु प्रोष्ठपदाय प्रौष्ठपादायेति वा ॥ अपभरण्यामपभरणायाऽऽपभरणायेति वा ॥ अग्नये कृत्तिकाय कार्तिकायेति वा" इति ॥ तत्सङ्ग्रहार्थः श्लोकश्चोदाहृतः श्रीविद्यारण्यकृतबोधायनीयदर्शपूर्णमाससूत्रभाष्ये—"रोरेममृज्येचिषु[1] वृद्धिरादौ ठौत्पे[2] च वान्त्यश्रवशाश्वयुक्षु[3] । शेषेषु[4] नाम्नोः[5] कपरः स्वरोन्त्यः स्वाप्वोरदीर्घः[6] सविसर्ग इष्टः" इति ॥ तदेवं निष्पन्नानि नक्षत्रनामानि—अश्वयुक्, आश्वयुजः इति वा । अपभरणः, आपभरण इति वा । कृत्तिकः, कार्तिक इति वा । रौहिणः, मार्गशीर्षः, आर्द्रकः, पुनर्वसुः, तिष्यः, आश्रेषः, माघः, पूर्वाफल्गुनः, उत्तराफल्गुनः, फाल्गुन इति वा । हस्तः, चैत्रः, स्वातिः, विशाखः,

१. आद्यक्षरोपलक्षितेषु रोहिणीरेवतीमघामृगशीर्षज्येष्ठाचित्रेषु तद्धितप्रत्यययोजने आद्यक्षरवृद्धिः स्यादित्यर्थः ॥ २. 'प्रोष्ठपद' इत्यत्र ठकारात्परे पकारे च वृद्धिरित्यर्थः ॥ ३. अपभरणीश्रवणशतभिषगश्वयुक्षु च तद्धितपरेष्वाद्यक्षरवृद्धिर्वास्यादित्यर्थः ॥ ४. शेषेषु नक्षत्रेषु न वृद्धिः ॥ ५. आर्द्रामूलयोरन्त्यः स्वरः ककारपरो भवतीत्यर्थः ॥ ६. स्वातीपुनर्वस्वोरन्त्यस्स्वरः अदीर्घः सविसर्गश्चेति ॥

अनूराधः, ज्यैष्ठः, मूलकः, पूर्वाषाढः, उत्तराषाढः, श्रवणः श्रावण इति वा । श्रविष्ठः, शतभिषक् शातभिषज इति वा । पूर्वप्रोष्ठपादः, उत्तराप्रोष्ठपादः, प्रोष्ठपदः इति वा । रैवतः इति ॥

अथ नामकरणादिचौलाऽन्तेषु सुतसंस्कारेषु औपासनैकदेशाग्नौ संस्कारहोमः कर्तव्यः ॥ (बो. गृ. शे. सू. १-२) "प्रजासंस्कारार्थमन्यत्र शुचौ देशे स्थण्डिलं कृत्वोल्लिखेत् ॥ औपासनादेकदेशं प्रणवेनाऽऽहृत्य व्याहृतिभिर्निर्युप्याऽपि वा श्रोत्रियागारात् । एवमौपासनमुपसमाधाय 'मयि गृह्णाम्यग्रे अग्निं, यो नो अग्निः पितरः' इति द्वाभ्यामात्मन्यग्निं गृहीत्वोपस्थानादि समानम्" इति ॥ कपर्दिकारिकायामपि— "उत्सृष्टसूतकाग्निश्चेन्नामाद्युपनयादधः । औपासनैकदेशे स्यादप्रवृत्ते तु लौकिकः" इति ॥ "परार्थं लौकिकानले" इत्यपि कारिकान्तरम् ॥

अथौपासनैकदेशग्रहणविधिः ॥ "मम कुमारकस्याऽमुकसंस्कारं कर्तुमौपासनैकदेशग्रहणं करिष्ये" इति सङ्कल्प्य स्थण्डिलोल्लेखनाद्यौपसनादेकदेशं प्रणवेनाऽऽहृत्य 'भूर्भुवस्वरों प्रतिष्ठापयामि' इति स्थण्डिले प्रतिष्ठाप्य "मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मयि प्रजां मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः ॥ यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳ आविवेश । तमात्मन्परिगृह्णीमहे वयं मासो अस्माꣳ अवहाय परागात्" इति द्वाभ्यामात्मन्यग्निं गृहीत्वा "जुष्टो दमूना" इत्युपस्थायाऽग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्याऽऽज्यस्थालीं स्रुवं प्रोक्षणीं स्रुचं चेत्यासाद्य पवित्रकरणादि स्रुक्स्रुवसम्मार्जनान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा तूष्णीं समिधमभ्याधायाऽग्निं परिषिच्य 'सप्त ते अग्ने० घृतेन स्वाहा' अग्नये सप्तवत इदं० ॥ इति पूर्णाहुतिं हुत्वा तत्रैव नामकरणादि संस्कारहोमं कुर्यात् ॥ स चाग्निरप्रवृत्ते कर्माणि लौकिकः सम्पद्यते ॥ ॥ इत्येकदेशाग्निग्रहणविधिः ॥

अथ नामकरणप्रयोगः ॥ कर्ता पुत्रस्य जननाद्द्वादशेऽहन्यन्यस्मिन्वा शुभेहनि नामकरणं करिष्यन्पूर्वेद्युः प्रातर्मंगल-स्नानादि नान्दीश्राद्धं कृत्वा श्वः स्नानादिचतुष्टयं गणपतिपूजनम् " सविता प्रीयताम् " इति पुण्याहवाचनं च कृत्वा स्थण्डि लोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " ममास्य कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हण पुरस्सरमायुःश्रीबलवृद्धिव्यवहारासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकरणहोमाख्यं कर्म करिष्ये " ॥ अन्वाधाने—पार्थिवो नामाग्निः, सविता देवता, चरुर्हविः, इत्यादि सङ्कल्प्याग्निमुखान्ते सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधायाज्या-हुतीरुपजुहोति—" प्रजापते न त्वत्, रयीणां पतिम्, प्रजापते त्वम्, तवेमे लोकाः, प्रजापतिं प्रथमम्, यो रायः " इति षड्र्चेन प्राजापत्येन सूक्तेन ॥ सर्वत्र, प्रजापतय इदं० ॥ ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाग्रेणाग्निमश्वत्थपर्णेषु हुतशेषं निदधाति—" नमः सहमानाय० पतये नमः " इति ॥ अथ पितरौ देशकालौ सङ्कीर्त्य " अस्य कुमारकस्यायुःश्रीबलवृद्धिपूर्वकव्यवहारसिद्ध्यै नाम धास्यावहे " इति सङ्कल्प्य ब्राह्मणान्यथानुकूलमभ्यर्च्य " प्रजापतिः प्रीयताम् " इति पुण्याहं वाचयित्वा ॥ यथाचारं तण्डुल-पूर्णे सुवर्णाद्यन्यतमे पात्रे सुवर्णशलाकया हरिद्राखण्डेन वा नामचतुष्टयं लिखेत्—" गणपतिभक्तः " इत्यादि तत्तत्कुलदेवता-नाम । " वैकुण्ठः " इत्यादि यथाप्राप्तं मासनाम ॥ " आश्वयुजः " इत्यादि तत्तन्नक्षत्रनाम ॥ " हरिशर्मा " इत्यादि यथाभिमतं व्यावहारिकं नाम चेत्येवं नामचतुष्टयं विलिख्य " नयं प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् " इति प्रतिष्ठाप्य " नामचतुष्टयदेवताभ्यो नमः " इति षोडशोपचारैरभ्यर्च्योपोत्थाय ब्राह्मणान्प्रार्थयेताम्—

१. " हुतशेषस्त्वथ नमः सहमानाय मंत्रतः " इति प्र० तिलके ॥ प्र० रत्नेऽप्येवमेवोक्तम् ॥

"कुलदेवतानाम्ना गणपतिभक्ताय स्वस्ति भवन्तो ब्रुवन्तु" इति॥ "गणपतिभक्ताय स्वस्ति" इति ते प्रत्यूचुः॥ एवं "मासनाम्ना वैकुण्ठाय स्वस्ति भवन्तो ब्रुवन्तु" इति॥ "वैकुण्ठाय स्वस्ति" इति प्रतिवचनम्॥ "नक्षत्रनाम्ना आश्वयुजाय स्वस्ति भवन्तो ब्रुवन्तु" इति॥ "आश्वयुजाय स्वस्ति" इति प्रतिवचनम्॥ "व्यावहारिकनाम्ना हरिशर्मणे स्वस्ति भवन्तो ब्रुवन्तु" इति॥ "हरिशर्मणे स्वस्ति" इति प्रतिवचनम्॥ अथोपविश्य कुमारं मातुरुत्सङ्गे उपवेश्य पिता तस्य दक्षिणकर्णे— कुलदेवतानाम्ना "त्वं गणपतिभक्तोऽसि"। मासनाम्ना "त्वं वैकुण्ठोऽसि"। नाक्षत्रनाम्ना "त्वमाश्वयुजोऽसि"। व्यावहारिकनाम्ना "त्वं हरिशर्मासि" इति प्रत्येकमुपाँशु त्रिस्त्रिरुक्त्वोपोत्थाय ब्राह्मणान्कुमारेणाभिवादयन् ब्रूयात्— "कुलदेवतानाम्ना गणपतिभक्तोऽयं भवतः सर्वान् ब्राह्मणानभिवादयते" इति॥ "आयुष्मान् भवतु गणपतिभक्तः" इति ते प्रतिब्रूयुः॥ एवमेव "मासनाम्ना वैकुण्ठोऽयं भवतः सर्वान् ब्राह्मणानभिवादयते" इति॥ "आयुष्मान् भवतु वैकुण्ठः" इति प्रतिवचनम्॥ "नाक्षत्रनाम्ना आश्वयुजोऽयं भवतः सर्वान् ब्राह्मणानभिवादयते" इति॥ "आयुष्मान् भवत्वाश्वयुजः" इति प्रतिवचनम्॥ "व्यावहारिकनाम्ना हरिशर्मायं भवतः सर्वान् ब्राह्मणानभिवादयते" इति॥ "आयुष्मान् भवतु हरिशर्मा" इति ते प्रत्यूचुः॥ अथोपविश्योत्तरपरिषेकादि होमशेषं समाप्य कर्मेश्वराय समर्पयेत्॥ यथाचारं पुरन्ध्र्यो नीराजनं कुर्युः॥ कर्मसाद्गुण्याय यथाशक्ति ब्राह्मणान् भोजयित्वा दक्षिणादिभिः सन्तोष्याशिषो गृह्णीयात्॥ इति नामकरणप्रयोगः॥

"अत्र नामकरणोपनिष्क्रमणान्नप्राशनानि ब्राह्मणभोजनादेवैकेषां पुण्याहवाचनादेवैकेषाम्" इति बौ० परिभाषावचनम्॥ "अन्नाशनोपनिष्क्रान्तिनामकर्माण्यशक्तितः। पुण्याहेनैव सिध्यन्ति विप्राणां भोजनेन वा" इति गृ० सङ्ग्रहवचनं च होमादिष्वत्यन्ताशक्तमधिकृत्य प्रवृत्तमिति द्रष्टव्यम्॥

अथान्दोलारोहणम् ॥ तदुक्तं सं० रत्नमालायाम्— "आन्दोलारोहणे पुंसो द्वादशो दिवसः शुभः। त्रयोदशस्तु कन्याया न नक्षत्रविचारणा" इति ॥ "अन्यस्मिन्दिवसे चेत्स्याच्छुभकालं विचारयेत्" "अभीष्टे पुण्यदिवसे चन्द्रताराबलान्विते। मृदुध्रुवाक्षिप्रभेषु माता वा कुलयोषितः ॥ योगशायिहरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् ।" इति भविष्यवचनम् ॥ "करत्रये वैष्णवपौष्णभे चादितिद्वये चाश्विनकध्रुवेषु। कुर्याच्छिशूनां नृपतेश्च तद्वदान्दोलनं वै सुखिनो भवन्ति" इति ज्योतिर्निबन्धवचनं च तत्रैव संगृहीतम् ॥ ॥ अथ संक्षेपतस्तद्विधिः — "जननदिनाद्द्वादशेऽहनि पुंसः, त्रयोदशेऽह्नि कन्यायाः, अन्यस्मिन्वा पूर्वोक्तनक्षत्रादियुते शुभदिने यथाचारं कुलदेवतापूजां विधायालंकृतं शिशुं हरिद्राद्यलंकृतायां दोलायां मात्राद्याः सौभाग्यवत्यः कुलस्त्रियो योगशायिनं हरिं स्मृत्वा प्राक्शिरसं शाययेयुः, इति ॥

## ॥ अथोपनिष्क्रमणम् ॥

(बो. गृ. सू. २. २) "चतुर्थे मास्युपनिष्क्रमणम्। ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा। अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा स्वस्त्यात्रेयं जुहोति—"स्वस्ति नो मिमीतां" इत्यष्टाभिरनुच्छंदसम्। जयप्रभृति सिद्धमाधेनुवरप्रदानात्। अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृतान्नेन ब्राह्मणान्संपूज्याशिषो वाचयित्वा प्रदक्षिणीकृत्य स्वान्गृहानानयति" ॥ "शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना। रिक्ताषष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जयेत् ॥ चत्वार्यर्थमतस्त्रीणि वैश्वात्त्रीणि च वृष्ण्यभात्। मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः ॥ वृषालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च। सतां तु वारवर्गाश्च शुभदाः सूदयास्तथा ॥ उपनिष्क्रमणे शस्ता मातुलो वाहयेच्छिशुम्" इति सं० रत्नमालायाम्। "मासे तृतीये

दिवसे दिनेशं शिशुं चतुर्थे शशिनं च धेनुम्। विलोकयित्वाविधिप्रयुक्ते काले गृहान्निष्क्रमणं विदध्यात्" इति तत्रैव श्रीधरः। चतुर्थे मासि शुक्ले पक्षे कृष्णेऽप्यन्त्यत्रिकवर्जिते दर्शरिक्तच्छिद्रतिथीर्वर्जयित्वा शुभग्रहाणां वारोदयेषु उत्तरात्रयचित्रास्वाती-श्रवणधनिष्ठारेवत्यश्विन्यनूराधापुनर्वसुतिष्यरोहिणीनक्षत्रेषु शिशोर्ग्रहात्प्रथमनिर्गमनं कारयेदिति फलितार्थः॥

अथोपनिष्क्रमणप्रयोगः॥ नामकरणवन्मङ्गलस्नानाद्यौपासनैकदेशाग्निप्रतिष्ठापनान्तं कृत्वाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमुपनिष्क्रमणहोमं करिष्ये"। अन्वाधाने—शिवो नामाग्निः, सविता देवता, चरुर्हविः, इति विशेषः॥ सावित्र्या पक्वं हुत्वावत्तं स्विष्टकृतमन्तःपरिधौ निधायाज्याहुतीरुपजुहोति—ॐ "स्वस्ति नो मिमीता॰ सुचेतना स्वाहा। अश्विभगादितिपूषद्यावापृथिवीभ्य इदं॰॥ ॐ स्वस्तये वायुं॰ भवन्तु नः स्वाहा। वायुसोमबृहस्पत्यादित्येभ्य इदं॰॥ ॐ विश्वेदेवा नो॰ पात्वꣳहसः स्वाहा। विश्वेदेव-वैश्वानरवस्वग्निदेवऋभुरुद्रेभ्य इदं॰॥ ॐ स्वस्ति मित्रावरुणा॰ कृधि स्वाहा। मित्रावरुणपथ्यारेवतीन्द्राग्न्यदितिभ्य इदं॰॥ ॐ स्वस्ति पन्था॰ सङ्गमेमहि स्वाहा। देवेभ्य इदं॰॥ ॐ स्वस्त्ययनं तार्क्ष्यं॰ रुहेम स्वाहा। तार्क्ष्यायारिष्टनेमय इदं॰॥ ॐ अꣳहोमुचमाङ्गिरसं॰ अस्तु स्वाहा। स्वस्त्यात्रेयतार्क्ष्याभ्यामिदं॰॥ ॐ स्वस्ति न इन्द्रः॰ दधातु स्वाहा। इन्द्राय वृद्धश्रवसे पूष्णे विश्ववेदसे तार्क्ष्यायारिष्टनेमये बृहस्पतय इदं॰"॥ इत्यष्टाभिरुपहुत्य स्विष्टकृत्प्रभृति सिद्धं प्रागुत्तरपरिषेकादथाग्रेणाग्निमश्वत्थपर्णेषु व्याहृतिभिर्हुतशेषं निदधाति॥ अथ मङ्गलघोषपुरस्सरं कुमारेण सहोपनिष्क्रम्य बाह्यानि चित्रियाणि चन्द्रार्कधेनुदिगीशादीनि "चित्रियेभ्यो नमः" इति गन्धाक्षतपुष्पैरभ्यर्च्य "चन्द्रार्कयोर्दिगीशानां दिशाश्च गगनस्य च। निक्षेपार्थमिमं दद्मि तेऽमुं रक्षन्तु

सर्वदा ॥ अप्रमत्तं प्रमत्तं वा दिवा रात्रमथापि वा । रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः " इति सम्प्रार्थ्य, त्रिवृताऽन्नेन हिरण्येन वा ब्राह्मणान् सम्पूज्य " चित्रियाणि प्रीयन्ताम् " इति पुण्याहं वाचयित्वा चित्रियाणि प्रदक्षिणीकृत्य कुमारं गृहमानाय्योत्तर-परिषेकादिहोमशेषं समापयेत् ॥ यथाचारं नीराजनं ब्राह्मणभोजनमाशीर्ग्रहणञ्च कुर्यात् ॥ ॥ इत्युपनिष्क्रमणप्रयोगः ॥

## ॥ अन्नप्राशनम् ॥

( बो. गृ. सू. २. ३ ) " षष्ठे मास्यन्नप्राशनम् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा । अथ देव-यजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा अन्नसूक्तेन जुहोति— ' अहमस्मि प्रथमजा ऋतस्य ' इत्यष्टाभिरनुच्छंदसम् । जयप्रभृति सिद्ध-माधेनुवरप्रदानात् । अथौदनं दध्ना मधुना घृतेनाद्भिरिति समुदायुत्य हिरण्येनौषधस्य कुमारं प्राशयति—' या जाता ओषधयः ' इति षड्भिरनुच्छन्दसम् " इति । " भूर्भुवःसुवरपां त्वौषधीनां रसमन्नं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वसौ इति सर्वास्वनुषजति " ॥ ॥ वारलग्नाद्युक्तं पारिजाते-- " वारांशकाश्च गुरुशुक्रशशीन्दुजानां मेषाऽलिमीन-रहितानि शुभानि यानि ॥ भुक्तौ शिशोः शुभकराः परिहृत्य सौम्यं भौमं सितं न वमनैधनसप्तकेषु " इति ॥ ( मुहूर्तग्रन्थेत्र दशमशु-द्धिरभिहिता ) तिथिनक्षत्राण्युक्तानि सं० मालायाम्–" आदित्यतिष्यवसुसौम्यकराऽनिलाश्विचित्राऽजविष्णुवरुणोत्तरपौष्णमित्राः । बालान्नभोजनविधौ दशमे विशुद्धे छिद्रां विहाय नवमीं तिथयः शुभास्स्युः " इति ॥ " अन्नप्राशनकार्ये तु जन्मभं मृत्युदं भवेत् । शुभं कर्मर्क्षमाधानं विवाहे चान्नभोजने " " जन्मदं जन्मनक्षत्रं दशमं कर्मसंज्ञितम् । एकोनविंशमाधानं त्रयोविंशं विनाशभम् " इति प्र० परिजाते आद्यजन्मर्क्षं दूषितम् ॥ तथा च जननात्षष्ठे मासे शुक्ले पक्षे नवमीछिद्रावर्जितेषु तिथिषु शुभग्रहवारेषु मेष-

१. ओदनापूपसक्त्वात्मकं त्रिवृदन्नमिति सत्याषाढः ॥ " भक्ष्यं भोज्यं च पेयं चेत्येतत्समुदितं त्रिवृत् " इति कारिका ॥

वृश्चिकमीनातिरिक्तेषु दशमशुद्धियुतेषु राशिषु आद्यजन्मर्क्षं विपत्प्रत्यरवधर्क्षाणि च वर्जयित्वा अश्विनीरोहिणीमृगशिरःपुनर्वसु-तिष्योत्तरात्रयहस्तचित्रास्वात्यनूराधाश्रवणधनिष्ठाशतभिषग्रेवतीनक्षत्रेष्वन्नप्राशनं कुर्यादिति पर्यवस्यति ॥

अथान्नप्राशनप्रयोगः ॥ कर्ता पूर्वेद्युः प्रातर्नांदीश्राद्धं रात्रौ प्रतिसरबंन्धञ्च कृत्वा श्वः स्नानादिचतुष्टयं गणपतिपूजनं 'सविता प्रीयताम्' इति पुण्याहवाचनं च कृत्वा देवयजनोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनहोमं करिष्ये"॥ अन्वाधाने—शुचिर्नामाग्निः, सविता देवता, चरुर्हविः, इत्याद्यग्निमुखान्ते सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तः-परिधौ निधायाज्याहुतीरुपजुहोति—"अहमस्मि, पूर्वमग्नेः, जहाम्यन्यम्, पराके अन्नम्, महान्तौ चरू, अन्नं प्राणम्, मोघमन्नं, अहं मेघः" इत्यष्टर्चेनान्नसूक्तेन ॥ सर्वत्र, अन्नायेदं० ॥ अथ स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाग्रेणाग्निमश्वत्थपर्णेषु हुतशेषं निदधाति—"ॐ भूर्भुवस्सुवः" इति ॥ अथ सौवर्णे राजते कांस्ये वा पात्रे दध्ना मधुना घृतेनाद्भिश्चौदनं समुदायुत्य मातुरुत्सङ्गो-पविष्टं कुमारं हिरण्येन प्राशयति—"या जाता ओषधयः, शतं वो अम्ब, पुष्पावतीः, ओषधीरिति, अश्वत्थे वः, यदहं वाजयन्" इति षड्भिरनुच्छन्दसम् ॥ "भूर्भुवः सुवरपान्त्वौषधीनाꣳ रसमन्नं प्राशयामि । शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयः सन्तु" इति सर्वत्र मंत्रान्ते अनुषजति॥ मुखं प्रक्षाळ्योत्तरपरिषेकादि होमशेषं समाप्य कर्मसमर्पणं कुर्यात् । ततो नीराजनादिब्राह्मणाशीर्ग्रहणान्तं पूर्ववद्यथाचारं कुर्यात् ॥ ॥ इत्यन्नप्राशनप्रयोगः ॥

---

१. "रक्षाबन्धनमग्न्यादि" इति शेषसूत्रे ॥

# ॥ कर्णवेधनम् ॥

( बो. गृ. शे. सू. १. १२ ) " सप्तमेऽष्टमे वा मासि कर्णवेधः । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽऽग्निमुखात्कृत्वा पक्वाज्जुहोति— 'श्रोत्रेण भद्रम्' इति पुरोनुवाक्यामनूच्य 'येन प्राच्यै' इति याज्यया जुहोति। अथाज्याहुतीरुपजुहोति—'प्राणो रक्षति विश्वमेजत्' इत्येतेनानुवाकेन प्रत्यृचम् । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् । अथाग्रेणाग्निं वेणुपर्णेषु हुतशेषं निदधाति—'समुद्राय वयुनाय सिन्धूनां पतये नमः' इति। अथाशिषो वाचयित्वा लोहितसूच्या वा कंटकेन वा दक्षिणं कर्णमातृणत्ति—'गायत्री त्रिष्टुप्०' इति। 'द्विपदा०' इत्युत्तरम् । अथ लोहितसूत्रेण वा वेणुसूत्रेण वा कर्णौ बध्नाति—'वरुणस्य स्कम्भनमासि' इति। श्वोभूते विस्रसयाति—'वरुणस्य स्कम्भसर्जनमसि' इति। सूत्रेण वा वेणुकाण्डेन वा वर्धयाति "। निर्णयसिन्धौ श्रीधरः—'मासे षष्ठे सप्तमे वाष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि। मध्ये वाह्नः पूर्वभागेन रात्रौ नक्षत्रे द्वे द्वे तिथी वर्जयित्वा' इति । दिवा नक्षत्रद्वयतिथिद्वययोः सन्धिर्यत्रापतति तद्दिनं वर्ज्यमित्यर्थः। तथा च मुहूर्तशतके— 'श्रुतिवेधने तिथिभयोः सन्धिश्च वर्ज्यो दिवा' इति । नक्षत्रादींश्चाह श्रीधरः— " हरिहरकरचित्रासौम्यपौष्णोत्तरार्यादितिवसुषु घटालीसिंहवर्ज्ये विलग्ने। शशिबुधगुरुकाव्यानां दिने पर्वरिक्तारहिततिथिषु शुद्धे नैधने कर्णवेधः' इति। तत्र जन्मर्क्षं द्वितीयादिवर्षे जन्ममासश्च वर्जयेदित्यन्यत्र विस्तरः। तथा च जननाद्द्वादशे षोडशे वाह्नि षष्ठे सप्तमेऽष्टमे वा मासि शुक्लपक्षे पूर्वाह्णे दिवा तिथिनक्षत्रसन्धिपूर्वरिक्ततिथिपापवारांश्च वर्जयित्वा जन्मर्क्षवर्जितेषु मृगशीर्षार्द्रापुनर्वसुतिष्योत्तरात्रयहस्तचित्राश्रवणधनिष्ठारेवतीनक्षत्रेषु सिंहवृश्चिककुम्भरहितेष्वष्टमशुद्धेषु राशिषु कर्णवेधः कार्य इत्यवगम्यते ॥

अथ कर्णवेधनप्रयोगः ॥ पूर्वेद्युर्नान्दीं प्रतिसरबन्धं श्वः स्नानादिचतुष्टयं च कृत्वा गणपतिं सम्पूज्य " श्रोत्रं प्रीयताम् " इति पुण्याहं वाचयित्वा देवयजनोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्य " मम कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपूर्वकमायुः-श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कर्णवेधनहोमं करिष्ये " ॥ वर्धमानो नामाग्निः, श्रोत्रं देवता, चरुर्हविः, इत्यन्वाधाने विशेषः ॥ अग्निमुखान्ते—" ॐ श्रोत्रेण भद्रम्० शृणोमी३ येन प्राच्यां० बभूव स्वाहा । श्रोत्रायेदं० " । इति पक्वं हुत्वावत्तं स्विष्टकृतमन्तः-परिधौ निधायाज्याहुतीरुपजुहोति—" ॐ प्राणो रक्षति० व्यानशे स्वाहा ॥ प्राणायेदं० ॥ ॐ यो देवो० हविः स्वाहा ॥ प्राणायेदं० ॥ ॐ मनसश्चित्तेदं० अग्नियः स्वाहा ॥ मनस इदं० ॥ ॐ आ न एतु पुरश्चरम्० दधत्स्वाहा ॥ मनस इदं० ॥ ॐ जुषतां मे० अनपायिनी स्वाहा ॥ वाच इदं० ॥ ॐ यया रूपाणि० हविः स्वाहा ॥ वाच इदं० ॥ ॐ चक्षुर्देवानां० विचक्षणः स्वाहा ॥ चक्षुष इदं० ॥ ॐ आयुरिन्नः० उतामृतः स्वाहा ॥ चक्षुष इदं० ॥ ॐ श्रोत्रेण भद्रं० शृणोमि स्वाहा ॥ श्रोत्रायेदं० ॥ ॐ येन प्राच्यां० बभूव स्वाहा ॥ श्रोत्रायेदं० " इति दशाज्याहुतीर्हुत्वा स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाग्रेणाग्निं वेणुपर्णेषु हुतशेषं निदधाति—' समुद्राय वयुनाय० विश्वाहामर्त्यः हविः ' इति ॥ अथ ब्राह्मणान्सम्पूज्य " प्रजापतिः प्रीयताम् " इति पुण्याहं वाचयित्वा लोहित-सूच्या कंटकेन वा दक्षिणं कर्णमातृणत्ति—" गायत्री त्रिष्टुप्० शिम्यन्तु त्वा " इति ॥ उत्तरकर्णमपि— " द्विपदा या० शिम्यन्तु त्वा " इत्यातृद्य लोहितसूत्रेण वा शणसूत्रेण वा कर्णौ बध्नाति—' वरुणस्य स्कम्भनमसि ' इति ॥ श्वोभूते तद्विस्रंसयति—' वरुणस्य स्कम्भसर्जनमसि ' इति ॥ अथोत्तरपरिषेकादि होमशेषं समाप्य कर्मेश्वराय समर्पयेत् ॥ ततः पुरन्ध्र्यो यथाचारं नीराजनादिकं कुर्युः, ब्राह्मणान् भोजयित्वा दक्षिणादिना सन्तोष्य तेभ्यश्चाशिषो गृह्णीयात् ॥ ॥ इति कर्णवेधनप्रयोगः ॥

## ॥ चूडाकर्म ॥ (प्रकृतः)

(बौ. गृ. सू. २. ४) "संवत्सरे (असमाप्ते द्वादशे मासे इति शिष्टिभाष्ये) चूडाकर्म त्रिषु वा संवत्सरेषु। ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽऽग्निमुखात्कृत्वा पक्वाज्जुहोति—'ये केशिनः' इति पुरोनुवाक्यामनूच्य 'नर्ते ब्रह्मणः' इति याज्यया जुहोति। अथाज्याहुतीरुपजुहोति—'आरोह प्रोष्ठं विषहस्व शत्रून्' इत्यान्तादनुवाकस्य॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात्॥ अथाग्रेणाग्निमुदुम्बरपर्णे हुतशेषं निदधाति-- 'नमो हिरण्यबाहवे' इति। अपरेणाग्निमुभयीरपस्संनिषिञ्चति। उष्णासु शीता आनयति—'उष्णेन वायवुदकेनेह्यदितिः केशान्वपतु' इति॥ ताभिरस्य शिर उनत्ति- 'आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति। ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति—'ओषधे त्रायस्वैनम्' इति। क्षुरमभिमन्त्रयते- 'ज्योक्च सूर्यं दृशे' इति। अथैनं तिर्यञ्चं निदधाति—'स्वधिते मैनꣳ हिꣳसीः' इति। अथास्य केशान्वपति—'येनावपत्सविता क्षुरेण' इति। प्रवपतोऽनुमन्त्रयते—'मा ते केशाननुगाद्वर्च एतत्' इति। अथैनान्समुच्चित्य दर्भस्तम्बे निदधाति— 'तेभ्यो निधानं बहुधा व्यैच्छन्' इति। अथैनमुष्णोदकेनाप्लावयति-- 'बलं ते बाहुवोः सविता दधातु' इति। अथैनमेकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मस्स्यात्। यथर्षि शिखां निदधातीत्येके। अथैनं स्नाप्यालङ्कृत्य त्रिवृतान्नेन ब्राह्मणान्संपूज्याशिषो वाचयति"। गृह्यसङ्ग्रहे— "प्रथमेऽब्दे तृतीये वा पूर्णे चौलन्तु कारयेत्। तृतीये गतभूयिष्ठे वर्षे लौगाक्षिरुचिवान्" इति॥ प्र० तिलके-- "तृतीये पञ्चमे वाऽपि सप्तमे वाऽपि वत्सरे। बालानां कीर्तितं चौलमुत्तरायणगे रवौ" इति॥ प्र० पारिजाते यमः — "ततः संवत्सरे पूर्णे चूडाकर्म विधीयते। द्वितीये वा तृतीये वा

कर्तव्यं श्रुतिचोदनात् " इति ॥ श्रीधरोऽपि— " वर्षे तृतीयेऽप्यथ पञ्चमेऽब्दे गतत्रिभागे प्रवदन्ति चौलम् । उदग्गतेऽर्के गुरुशुक्र-तेजःप्रकाशिते व्योम्नि च शुक्लपक्षे " इति ॥ अधिमासादिकं दूषयति तत्रैव बृहस्पतिः— " अधिमासस्तु निन्द्यस्स्यात्संसर्पोऽहस्पती तथा । गुरुशुक्रौ न दृश्येते यदाऽतिस्फुटमम्बरे ॥ बालवृद्धाह्वयः कालश्चौले निंद्यस्तयोर्द्वयोः " इति ॥ ज्येष्ठापत्यस्य ज्येष्ठे मासि चौलादिकं न कार्यमित्युक्तं सं० रत्नमालायाम्— " मार्गे मासि तथा ज्येष्ठे चौलं परिणयं व्रतम् । ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥ कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् " इति ॥ अथ तिथ्यादयः प्र० पारिजाते प्रोक्ताः — " षष्ठ्यष्टमीप्रतिपदस्तिथयश्च रिक्ता वर्ज्याः शशाङ्कगुरुसोमजभार्गवाणाम् । वारांशकोदयविलोकनमिष्टमाहुः क्षौरे तु कर्मणि न शौक्रमुशन्तिशावे ॥ आदित्यसौम्यवसुवैष्णवपौष्णतिष्यत्वाष्ट्राऽश्विचण्डकिरणेषु दिवा प्रशस्तम् । स्वातीविधातृवरुणोत्तरभानि मध्यान्याहुर्निशास्वथ न च क्षुरकर्म कार्यम् " इति ॥ " कर्क्यङ्गनामिथुनमीनतुलोक्षनक्राः पूज्याः क्रियाऽऽलिहरिचापधरा जघन्यः " इति च ॥ क्षौरकर्मणि पापवाराणामपि वर्णविशेषेण ग्राह्यत्वमुक्तं माधवीये— " क्षौरेऽपि चौलविहितः समयस्समानः श्रेष्ठा द्विजस्य च रवेरुदयांशवाराः । इन्दोस्त्रियाः क्षितिपतेः क्षितिजस्य सौरेर्विट्शूद्रयोरुशनसो न शुभास्तु शावे " इति ॥ मुहूर्तचिन्तामणौ तु— " चूडा वर्षात्तृतीयात्प्रभवति विषमेष्वर्करिक्ताद्यषष्ठी पर्वोनाहे विचैत्रोदगयनसमये ज्ञेन्दुशुक्रेज्यकानाम् । वारे लग्नांऽशयोश्चास्वभनि धनतनौ नैधने शुद्धियुक्ते शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभैरायषट्त्रिस्थपापैः " इति विशेषोऽभिहितः अत्राऽष्टमशुद्धिरुक्ता ॥ माधवीये तु— " सर्वेऽप्यष्टमगा न जातु शुभदाः शुक्रोऽत्र सम्पत्प्रदः " इत्यष्टमे शुक्रयोगः

१. स्वजन्मराशिलग्नाभ्यामष्टमराशिव्यतिरिक्ते इत्यर्थः ॥ २. मृद्वादिनक्षत्राणि मुहूर्तशतके— " चित्रान्त्यैन्दवमैत्रभं मृदु चरं श्रोत्रद्वयाश्विप्रसूवातर्क्षं स्थिरमुत्तराजभमिनार्याद्यं लघूग्रं परम् " इति ॥

सम्पत्प्रदत्वेन प्रशंसितः, "इच्छन्त्यग्रहतां स्मरादिषु पदेषूद्वाहविप्रक्रिया चौलप्राशनमौलिबन्धनगृहप्रारम्भणेषु क्रमात्" इति चौले विशेषतो नवमशुद्धिश्चाभिहिता ॥ चौलोपनयनविवाहादिमङ्गलकार्येषु सामान्यतो वर्जनीया महादोषाश्चोक्तास्तत्रैव— "पश्चाद्व्यतीपातदलं सपार्श्वौ दर्शश्च विष्टव्यभ्युदयश्च साक्षात्। वर्ज्याश्च ताराः कुजसूर्यसून्वोर्वारोदयास्तर्वगुणैरभेद्याः ॥ गुलिकोदयविषघटिकाश्चन्द्राऽष्टमपापसग्रहोष्णशिखाः। अविहितसामाऽऽदिकालाः दिनान्तचक्रार्धयोगवर्षान्ताः ॥ जन्माद्यनिष्टभांशाः कविधिषणाऽस्तादयो महादोषाः। विभिद्यन्ते बलिभिर्गुरुशुक्रबुधोदयादिभिश्च गुणैः" इति ॥ वर्ज्यानामपि विपत्प्रत्यरवधताराणां द्वितीयतृतीयपर्याययोश्चरणभेदेन ग्राह्यत्वमुक्तं तत्रैव— "सर्वानेव विपत्तिपञ्चमवधेष्वाद्येषु भेष्वंशकान्मध्येष्वाद्यतुरीयपावकमितानन्त्येषु वा वर्जयेत्। सत्कर्मा बलवाञ्छुभांशकगतो दृष्टश्च सौम्यैर्ग्रहैर्जन्मप्रत्यरजान्विपद्वधभवान्दोषान्विधुर्बाधते" इति ॥

अथ जन्ममासतिथिनक्षत्रेषु, मातरि गर्भिण्याञ्च, चौलं न कार्यमित्युक्तं मुहूर्तशतके— "चूडाकर्मणि जन्ममासदिनभं त्याज्यं समोऽब्दस्त्रियां गर्भिण्यां गृहकर्म दूरगमनं चौलञ्च वर्ज्यं शिशोः" इति ॥ मातरि गर्भिण्यां विशेषमाह सं० मालायां नारदः— "सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्। पञ्चाब्दात्प्रागतोर्ध्वन्तु गर्भिण्यामपि कारयेत्। सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते" इति ॥ वसिष्ठोऽपि—"गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु। पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत्" इति ॥ अथ मातरि रजस्वलायामपि चूडादिकं न कार्यमित्युक्तं सं० कौस्तुभे— "विवाहव्रतचूडासु माता यदि रजस्वला। तस्याश्शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत्" इति ॥ अथ चौलादिप्रारम्भोत्तरं मातृरजस्सम्भवे शान्तिं कृत्वा तत्कार्यमित्युक्तं सं० कौस्तुभे— "सूतिकोदक्ययोश्शुध्यै गां दद्याद्धोमपूर्वकम्। प्राप्ते कर्माणि शुद्धा स्यादितरस्मिन्न शुध्यति ॥ अलाभे सुमुहूर्तस्य रजोदोष उपस्थिते।

श्रियं सम्पूज्य तत्कुर्याद्वृत्रहत्याभयङ्करी ॥ हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत् । प्रत्यृचं पायसं हुत्वाऽभिषिच्य शुभमाचरेत् ” इति ॥ अथ त्रिपुरुषात्मककुले ऋतुत्रयादर्वागुपनयनविवाहरूपमण्डनकार्योत्तरमसतिवत्सरभेदे चूडाकर्म न कार्यमिति विवाहप्रकरणे वक्ष्यमाणमत्राप्यनुसन्धेयम् ॥ तथा च बालस्य जन्मनो द्वितीयतृतीयपञ्चमसप्तमान्यतमवर्षे उत्तरायणे शुक्लपक्षे गुरुशुक्राऽस्तमलमासजन्ममासजन्मतिथिजन्मनक्षत्राऽऽदिकं वर्जयित्वा शुभवारतिथिषु अश्विनीरोहिणीमृगशिरःपुनर्वसुतिष्योत्तरात्रयहस्तचित्रास्वातीश्रवणधनिष्ठाशतभिषग्रेवतीनक्षत्रेषु वृषभमिथुनकर्ककन्यातुलामकरमीनलग्नेषु नवमाष्टमशुद्धियुतेषु चौलं कुर्यादिति निष्कर्षः ॥

अथ चूडाकर्म ॥ कर्ता भार्यया कुमारेण सह कृतमङ्गलस्नानादिकः पूर्वेद्युरेव प्रातर्नान्दीश्राद्धं रात्रावुदकशान्तिं प्रतिसरबन्धमंकुरार्पणञ्च[1] कृत्वा श्वः स्नानादिचतुष्टयान्ते गणपतिं सम्पूज्य 'केशिनः प्रीयन्ताम्' इति पुण्याहं वाचयित्वा देवयजनोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य “ मम कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चौळहोमाख्यं कर्म करिष्ये, ” सभ्यो नामाग्निः, केशिनो देवताः, चरुर्हविः, इत्याद्यन्वाधाय पात्रासादने प्राकृतपात्रेण सह क्षुरं दर्भाञ्छीता उष्णाश्चाप इत्यासाद्याग्निमुखान्तं कृत्वा पक्वाज्जुहोति—“ ॐ ये केशिनः प्रथमाः सत्रमासत येभिराभृतं यदिदं विरोचते । तेभ्यो जुहोमि बहुधा घृतेन रायस्पोषेणेमं वर्चसा सꣳसृजाथों ३ नर्ते ब्रह्मणस्तपसो विमोको द्विनाम्नी दीक्षा वशिनी ह्युग्रा । प्रकेशाः सुवते काण्डिनो भवन्ति तेषां ब्रह्मेदीशे वपनस्य नान्यः स्वाहा ”

१. ' चौळाद्यंकुरमेव च ' इति गृह्यशेषे ॥

इति ॥ केशिभ्य इदं० ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति—"ॐ आरोह प्रोष्ठं० पाशात्स्वाहा ॥ सोमाय राज्ञ इदं० ॥ ॐ येनावपत्सविता० सꣳसृजाथ स्वाहा ॥ ब्रह्मभ्य इदं० ॥ ॐ मा ते केशाननुगाद्वर्च० आदधात्स्वाहा ॥ धात्र इन्द्राय बृहस्पतये सवित्र इदं० ॥ ॐ तेभ्यो निधानं बहुधा० स ꣳसृजाथ स्वाहा ॥ ब्रह्मभ्य इदं० ॥ ॐ बलन्ते बाहुवोः सविता० स ꣳसृजाथ स्वाहा ॥ सवित्रे सोमायाश्विभ्यां ब्रह्मभ्य इदं० ॥ ॐ यत्सीमन्तं० सꣳसृजाथो वीर्येण स्वाहा ॥ अश्विभ्यामिदं०" इति षड्भिरुपहुत्य स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाग्रेणाग्निमुदुम्बरपर्णेषु हुतशेषं निदधाति—"नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः" इति ॥ अथापरेणाग्निमुष्णास्वप्सु शीता अप आनयति—उष्णेन वायवुदकेनेह्यदितिः केशान्वपतु" इति ॥ ताभिरद्भिः प्रत्यङ्मुखोपविष्टस्य शिशोः शिर उनत्ति—"ॐ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे" इति ॥ ऊर्ध्वाग्रं बर्हिरनूच्छ्र्यति—"ओषधे त्रायस्वैनम्" इति ॥ तत्सव्येन गृह्णन् दक्षिणेन हस्तेन क्षुरमादायाभिमंत्रयते—"ज्योक्च सूर्यं दृशे" इति ॥ बर्हिरनूच्छ्रितेषु केशेष्वेनं क्षुरं तिर्यञ्चं निदधाति- "स्वधिते मैनꣳ हिꣳसीः" इति ॥ अथास्य केशान्वपति —"येनावपत्सविता० स ꣳसृजाथ" इति ॥ प्रवपतोऽनुमंत्रयते-- "मा ते केशान्० वर्च आदधात्" इति ॥ उत्तानेतान्समुच्चित्य दर्भस्तम्बे निदधाति —"तेभ्यो निधानं बहुधा० सꣳसृजाथ" इति ॥ अथैनमुष्णोदकेनाप्लावयति— "बलं ते बाहुवोः०

१. सोमराजोद्देश्यकत्वान्मंत्रस्यैवमुद्देशत्यागः समादृतः ॥ २. "ताभिरुन्द्याच्छिरः शिशोः । प्रत्यङ्मुखस्याभिमुखः प्राङ्मुखः स्वयमास्थितः" इति गृ० संग्रहे ॥ ३. "मा ते केशानिति जपेत्पतितान्वीक्ष्य मूर्धजान्" इति प्र० तिलके ॥

स २ संजाथ ” इति ॥ एवमेकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्यात् ॥ यथर्षि शिखां निदधातीत्येके ॥ अथैनं संस्नाप्याच्छाद्यालंकृत्य त्रिवृतान्नेन ब्राह्मणान् सम्पूज्य “ प्रजापतिः प्रीयताम् ” इति पुण्याहं वाचयित्वोत्तरपरिषेकादि होमशेषं समाप्य कर्मेश्वराय समर्पयेत् ॥ यथाचारं पुरन्ध्रयो नीराजयेयुः, ब्राह्मणांश्च सम्भोज्याशिषो गृह्णीयात् ॥ इति चूडाकर्म ॥

## ॥ अथ गर्भाधानादिचौलान्तसंस्काराणां समानतन्त्रविधिः ॥

( बो. गृ. सू. ३·१३ ) “ अथर्तुसंवेशनादि जन्मप्रभृति वा कुमारः क्रियाभिलुतस्स्यादुपनयनं चैकं स्यात् तासां पृथक्पृथक् क्रियाणां करणं न चैकहोमे सर्वाणि कर्माण्युपपादयेत् । यद्येकहोमे सर्वाणि कर्माण्युपपादयेत् प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती जुहुयात् । मिन्दाहुती हुत्वा जयानभ्यातानान् । रुद्राहुत्यन्तं चेति विज्ञायते ” । ( बो. गृ. सू. ४·६ ) “ अथ गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनचौळोपनयनादि कार्यं न कारयेदिति समानं कर्म । ‘ ततं म आपः, यत्पाकत्रा, ’ मनस्वती, मिन्दाहुती, महाव्याहृतीः, व्याहृतयश्च प्रायश्चित्तं जुहुयादिति । कालातिक्रमे प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती जुहुयादिति । व्याहृतिपूर्वकं चेति सर्वेषां समानमाचार्या ब्रुवते । तत्रोदाहरन्ति– पक्वं सौविष्टकृतमाज्यं प्रणीताप्रणयनं ब्रह्माणमिध्माबर्हिरेकमिति विज्ञायत इति हि ब्राह्मणमिति हि ब्राह्मणम् ” ॥

---

१. “ शतानां सप्तत्रिगुणमष्टोत्तरमथापि च । केशानामपि संख्यानां शिखैका परिकीर्तिता ” इति स्व० गृह्यसूत्रे ॥ २. “ यथाकुलं शिखा कार्या प्रवरे वा यथा मुनिः । शिरसो दक्षिणे भागे वासिष्ठाः कुर्वते शिखाम् ॥ भारद्वाजास्तथा सव्ये उभयत्रात्रिकाश्यपाः । गालवा मध्यतो मुण्डा भृगवश्चेति वै स्मृतिः ” इति गृ० संग्रहे ॥ यथर्षि यथाप्रवरम्, एकार्षेयस्यैका, द्व्यार्षेयस्य द्वे, त्र्यार्षेयस्य तिस्रः इत्यादि सं० रत्नमालायाम् ॥

सर्वेषां लोपे तूपनयनकाले तानि कर्माणि प्रायश्चित्तपूर्वकं तथैव कर्तव्यानि। तत्र च नान्दीपुण्याहोदकशान्तिप्रतिसरादीनि सकृदेव कृत्वा संस्कारहोमान्पृथक्पृथक्स्थण्डिलेषु कालातिपत्तिप्रायश्चित्तपूर्वकं कुर्यादित्येकः पक्षः, एकस्मिन्वा स्थण्डिले कालातिपत्तिप्रायश्चित्तं तन्त्रप्रायश्चित्तञ्च कृत्वा प्रतिप्रधानादौ व्याहृतीर्मिन्दाहुती च हुत्वा संस्कारहोमान्कुर्यादित्यपरः पक्ष इत्यवसीयते । किञ्चात्र विहितकाले कर्मणामकरणे कृच्छ्रमप्याचरणीयतया तत्र तत्र स्मर्यते, यदाह वैद्यनाथीये कात्यायनः—"गर्भाधानादि चौळान्ते स्वकाले विधिनाऽकृते । प्रत्येकं पादकृच्छ्रं स्याद्द्विगुणं स्यादनापदि ॥ चौळकेऽर्धं तु सर्वत्र मत्या तु द्विगुणं चरेत् " इति । न चात्र कालातीतकर्मणामतिक्रमप्रायश्चित्तादेव सिद्धौ पुनस्तत्करणमनवश्यकम्, " प्रायश्चित्ते कृतेऽतीतं लुप्तं कर्म कृताकृतम् " " प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै । कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः " इत्यनेन वचनद्वयेन तत्करणस्य विकल्पो वास्त्विति वाच्यम्, " कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च । कालातीतानि कृत्वैव विदध्यादुत्तराणि तु " इति त्रिकाण्डमण्डनोक्त्या, 'लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विधीयते । प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत्' इति कात्यायनवचनेन च कृतेऽपि प्रायश्चित्ते तत्कर्माचरणस्य पुनर्विधानात् प्रायश्चित्तस्य प्रत्यवायपरिहारकत्वेऽपि तत्तत्प्रधानसंस्कारजन्यापूर्वाधायकत्वाभावाच्च इति ॥

गर्भाधानादिचौलान्तसंस्काराणां समानतन्त्रप्रयोगः ॥ अथ कर्ता सपत्नीकः संस्कार्येण सह पूर्वेद्युः प्रातर्मंगलस्नानं कृत्वा संध्योपासनादि नित्यकर्म निर्वर्त्य वैश्वदेवं हुत्वा दर्भेष्वासीनः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य " मम कुमारकस्य श्वःकरिष्यमाणगर्भाधानपुंसवनसीमंतोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौळकर्मांगतया विहितमभ्युदयार्थं नांदीश्राद्धं करिष्ये " इति संकल्प्य गणपतिपूजनं नांद्यंगपुण्याहवाचनं नांदीश्राद्धं च विधाय

तस्यां रात्रावुदकशांतिप्रतिसरबंधावंकुरार्पणं च कृत्वा, श्वोभूते प्रातः स्नानादिचतुष्टयं विधाय, भद्रासने स्वयं प्राङ्मुख उपविश्य पत्नीं स्वदक्षिणतः प्राङ्मुखीमुपवेश्य तद्दक्षिणतः संस्कार्यं च तथैवोपवेश्य, दर्भपाणिराचम्य प्राणानायम्य यथाचारमिष्टदेवता-नमस्कारपूर्वकं सुमुखश्चेत्यादिकं पठित्वा, देशकालौ संकीर्त्य "मम कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्री-बलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं, गर्भाधानादिचौळांतकर्माणि समानतंत्रेण कर्तुमादौ शांत्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृद्ध्यर्थ-मभ्युदयार्थं चैभिर्ब्राह्मणैः सह स्वस्तिपुण्याहवाचनं तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं च करिष्ये" इति संकल्प्य गणपतिं संपूज्य पुण्याहं वाचयेत् । तत्रायं विशेषः – 'मम कुमारकस्याद्यकरिष्यमाणगर्भाधानपुंसवन० चौळकर्मणामों पुण्याहं भवंतो ब्रुवंतु, कुमारकस्याद्यकरिष्यमाणगर्भाधान० चौळकर्मभ्य ॐस्वस्ति भवंतो ब्रुवंतु, करिष्यमाणगर्भाधान० चौळकर्मणामोमृद्धिं भवंतो ब्रुवंतु, वेधाः प्रजापतिर्धाता सविता मृत्युः सविता सविता सविता श्रोत्रं केशिनः प्रीयंताम्' इति ॥ अन्यत्सर्वं प्रोक्षणान्तं समानम् । अथाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धि-द्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानपुंसवनसीमंतोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौळकर्माणि समानतंत्रेण करिष्ये" इति प्रधानसंकल्पं कृत्वा लुप्तस्यर्तुसंवेशनस्येदानीमर्थलोपात् "विष्णुर्योनिं कल्पयतु" इत्यादि "प्रहराम शेपं" इत्यंतं मंत्रमात्रं पठित्वा कुमारमभिमंत्रयते—"अद्भ्यः सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणस्समवर्तताधि ॥ तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे ॥ वेदाहमेतं पुरुषं महांतम् । आदित्यवर्णं तमसः परस्तात् ॥ तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय ॥ प्रजापतिश्चरति गर्भे अंतः । अजायमानो बहुधा विजायते । तस्य धीराः परिजानंति

योनिम् ॥ मरीचिनां पदमिच्छंति वेधसः ॥ यो देवेभ्य आतपति । यो देवानां पुरोहितः ॥ पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये ॥ रुचं ब्राह्मं जनयंतः ॥ देवा अग्रे तदब्रुवन् ॥ यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे ॥ ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे ॥ नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् ॥ इष्टं मनिषाण । अमुं मनिषाण ॥ सर्वं मनिषाण " इति ॥ अथैनं स्नापयति— " क्षेत्रियै त्वा निर्ऋत्यै त्वा । द्रुहो मुंचामि वरुणस्य पाशात् ॥ अनागसं ब्रह्मणे त्वा करोमि । शिवे ते द्यावापृथिवी उभे इमे ॥ शं ते अग्निः सहाद्भिरस्तु । शं द्यावापृथिवी सहौषधीभिः ॥ शमन्तरिक्षꣳ सह वातेन ते । शं ते चतस्रः प्रदिशो भवंतु ॥ या दैवीश्चतस्रः प्रदिशः । वातपत्नीरभिसूर्यो विचष्टे । तासां त्वा जरस आदधामि ॥ प्रयक्ष्म एतु निर्ऋतिं पराचैः ॥ अमोचि यक्ष्माद्दुरितादवर्त्यै ॥ द्रुहः पाशान्निर्ऋत्यै चोदमोचि ॥ अहा अवर्तिमविदत्स्योनम् । अप्यभूद्भद्रे सुकृतस्य लोके ॥ सूर्यमृतं तमसो ग्राह्या यत् ॥ देवा अमुञ्चन्नसृजन्व्येनसः ॥ एवमहमिमं क्षेत्रियाज्जामि शꣳसात् । द्रुहो मुंचामि वरुणस्य पाशात् ॥ बृहस्पते युवमिंद्रश्च वस्वः । दिव्यस्येशाथे उत पार्थिवस्य ॥ धत्तꣳ रयिꣳ स्तुवते कीरये चित् ॥ यूयं पात स्वस्तिभिः सदा नः " इति ॥ अथैनं स्वांके उपवेशयति— " अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम् " इति ॥ अथैनं मूर्धन्यभिजिघ्रति— " अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । पशूनां त्वा हिंकारेण ब्रह्मणाभिजिघ्राम्याश्वयुज " इति तत्तन्नक्षत्रनामधेयेन ॥ अथास्य दक्षिणे कर्णे जपति— " अग्निरायुष्मान् " इति पञ्चभि पर्यायैः ॥ " आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ॥ पुनस्ते प्राण आयति परायक्ष्मꣳ सुवामि ते " इत्युत्तरे कर्णे जपित्वा । अथैनं दधि मधु घृतं च समुदायुत्य हिरण्येन प्राशयति— " प्राणो रक्षति० व्यानशे ॥ यो देवो देवेषु० नो हविः ॥ मनसश्चित्तेदं० देवेष्वग्नियम् ॥ आ

न एतु० दधत् ॥ जुषतां मे० अनपायिनी ॥ यया रूपाणि० हविः ॥ चक्षुर्देवानां० विचक्षणम् ॥ आयुरिन्नः० उतामृतम् ॥ श्रोत्रेण भद्रं० शृणोमि ॥ येन प्राच्यां० बभूव " इति दशभिः प्रत्यृचं प्राशयित्वा अतिशिष्टं गोपदे निनयति— " भूर्भुवस्सुवः " इति ॥ अथैनं मातुरुत्सङ्गे उपवेशयति— " सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनामर्चिषा मा तपसाभिशूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्विभाहि ॥ अंतरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव ॥ शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहा सदः ॥ हꣳसः शुचिषद्वसुरन्तीरक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् " इति ॥ स्तनमभिमन्त्रयते[1]—" यस्ते स्तनः शशयो यो मयोभूः । येन विश्वा पुष्यसि वार्याणि ॥ यो रत्नधा वसुविद्यस्सुदत्रः ॥ सरस्वति तमिह धातवेकः " इति ॥ धयन्तमनुमंत्रयते — " द्यौस्ते पृष्ठꣳ रक्षतु वायुरूरू अश्विनौ च स्तनं धयन्तꣳ सविताभिरक्षतु । आवाससः परिधानाद्बृहस्पतिर्विश्वेदेवा अभिरक्षंतु पश्चात् " इति ॥ अथास्योदकुम्भमुच्छिरसि निदधाति — " आपः सुप्तेषु जाग्रत रक्षाꣳसि निरितो नुदध्वम् " इति ॥ अथ देवयजनोल्लेखनप्रभृतिगृह्याग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ संकीर्त्य " ममास्य कुमारकस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरं प्रजासंस्कारातिशयद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलहोमान् समानतंत्रेण करिष्ये ॥ गर्भाधानपुंसवन० चौलहोमाः कर्म, आघारवत्तंत्रम्, पंचदश दारुरिध्मः, अग्नीषोमावाज्यभागौ, मारुतचन्द्रमामङ्गलशो-

---

१. स्तनाभिमन्त्रणादि त्रयस्येदानीमर्थलोपान्मन्त्रमात्रं पठेत् ॥

भनप्रबलपार्थिवाशिवशुचिवर्धमानसभ्या नामाग्नयः, वेधाः प्रजापतिर्धाता सविता मृत्युः सविता सविता सविता श्रोत्रं केशिनो देवताः, चरुर्हविः, अग्निः स्विष्टकृत, आज्यस्य मान्त्रवर्णिक्यो देवताः, अङ्गदेवताः प्रधानदेवताश्च ताः सर्वा अत्र सन्निहिताः संतु एवं साङ्गेन कर्मणा सद्यो यक्ष्ये " इति संकल्प्य । समिदाधानादिकं कृत्वा । पात्रासादनकाले प्राकृतपात्राणि क्षुरं दर्भाञ्छीताश्चोष्णाश्चापः सूचीं लोहितसूत्रं चेत्यासाद्यापरिधिनिधानात्कृत्वोपोत्थायाग्रेणाग्निमक्षतपुञ्जे हरेः प्रतिकृतिं कृत्वा गन्धपुष्पाक्षतोदकान्यञ्जलौ गृहीत्वा देवतामावाहयति— " ॐ भूः पुरुषमावाहयामि । ॐ भुवः पुरुषमावाहयामि । ॐ सुवः पुरुषमावाहयामि । ॐ भूर्भुवः सुवः पुरुषमावाहयामि, आयातु भगवान्महापुरुषः " इत्यावाह्य स्वागतेनाभिनन्दयति— " स्वागतमधुना भगवतो महापुरुषस्य " इति । " भगवते पुरुषायैतदासनमुपक्लृप्तमत्रास्तां भगवान् महापुरुषः " इत्युक्त्वा कूर्चं ददाति— " भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णस्तं जुषस्व " इति । अथ गायत्र्याभिमंत्रिते पात्रे तिरः पवित्रमप आनीय गंधादिभिरभ्यर्च्य ओमित्यातमितोरादित्यं दर्शयित्वा तासामेकदेशं पात्रांतरेणादाय, " त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् " इति पाद्यं दत्वा " इदं विष्णुर्विचक्रमे " इत्यर्घ्यमाचमनीयं च दद्यात् । अथ परिधान-प्रभृत्यग्निमुखान्तं कृत्वाथैतं चरुं दशधा विभज्य " वेधसे त्वा, प्रजापतये त्वा, धात्रे त्वा, सवित्रे त्वा, मृत्यवे त्वा, सवित्रे त्वा, सवित्रे त्वा, सवित्रे त्वा, श्रोत्राय त्वा, केशिभ्यस्त्वा " इत्युदगपवर्गं यथाक्रममभिमृश्याथैनं स्नापयति— " आपो हि ष्ठा " इति तिसृभिः, " हिरण्यवर्णाः " इति चतसृभिः, " पवमानः सुवर्जनः " इत्येतेनानुवाकेन मार्जयित्वा, " केशवं तर्पयामि । नारायणं तर्पयामि । माधवं त० । गोविन्दं त० । विष्णुं त० । मधुसूदनं० । त्रिविक्रमं० । वामनं० । श्रीधरं० । हृषीकेशं० । पद्मनाभं० ।

दामोदरं तर्पयामि " इत्यद्भिस्तर्पयित्वा, " इदं विष्णुः, तद्विष्णोः, इरावती, तत्सवितुः, उद्दीप्यस्व " इति पञ्चभिर्यथाक्रमं गंधपुष्पाक्षतधूपदीपैरभ्यर्चयेत् ॥ अथास्य कुमारकस्य गर्भाधानादिचौलांतकर्मणां मुख्यकालातिपत्तिप्रायश्चित्तं तंत्रप्रायश्चित्तं च करिष्ये, इति सङ्कल्प्य, स्मृत्युक्तकृच्छ्रप्रत्याम्नायं हिरण्यं दत्वा "ततम्म आपः, यत्पाकत्रा, मनो ज्योतिः, यन्म आत्मनः, पुनरग्निः, महाव्याहृतीः, व्याहृतीः" इति त्रयोदश॥ व्याहृतीः, मिंदाहुती, चित्तञ्च स्वाहेत्यादि त्रयोदश॥ अग्निर्भूतानामित्यादि रुद्रः पशूनामित्यन्तं चतुर्दश॥ इत्येवं स्रुवेणाज्याहुतीर्हुत्वा, अवदानधर्मेण चरुमवदाय पुरस्तात्स्रुवाहुतिं हुत्वा गर्भाधानपक्कं जुहोति-- " ॐ प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे। यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यां ३ प्रवेधसे० यजे हेड्यान्स्वाहा " इति। वेधस इदं०॥ उपरिष्टात्स्रुवाहुतिं हुत्वा अथाज्याहुतीरुपजुहोति-- " ॐ ज्येष्ठाय स्वाहा॥ ( ज्येष्ठायेदं० इत्यादि यथालिंगं त्यागः )॥ श्रेष्ठाय स्वाहा ॥ प्रतिष्ठाय स्वाहा ॥ प्रतिष्ठित्यै स्वाहा ॥ सम्पत्यै स्वाहा ॥ सम्पतये स्वाहा॥ ब्रह्मणे स्वाहा॥ आयतनवते स्वाहा " इति॥ अथ व्याहृतीर्मिन्दाहुती च हुत्वा दर्व्यामुपस्तीर्यापरार्धादवदाय पूर्वार्धादवद्यत्यभिघारयति प्रत्यनक्ति पुरस्तात्स्रुवाहुतिं हुत्वा पुंसवनपक्कं जुहोति— " ॐ प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सहसाम इन्द्र। विश्वैर्देवै रातिभिः सꣳरराणः पुꣳसां बहूनां मातरं स्यामां ३ प्रजापते तन्वं मे जुषस्व० स्याम स्वाहा " इति॥ प्रजापतय इदं०॥ अथाज्याहुतीरुपजुहोति-- " ॐ गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि स्वाहा। अग्नये गर्भायेदं०॥ ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। सꣳसृज्य मातृभिस्त्वं ज्योतिष्मान्पुनरासदः स्वाहा॥ अग्नये गर्भायेदं०॥ ॐ पुनरासद्य सदनमपश्च पृथिवीमग्ने। शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः स्वाहा॥ अग्नये गर्भायेदं०"

इति ॥ अथ पूर्ववद्व्याहृतीर्मिन्द्राहुती हुत्वा अवदानधर्मेण चरुमवदाय सीमंतोन्नयनपक्वं जुहोति-- "ॐ धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनौ ३ धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान । धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम स्वाहा " इति ॥ धात्र इदं० ॥ अथाज्याहुतीरुपजुहोति-- " ॐ धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिꣳ सत्यराधसः स्वाहा । धात्र इदं० ॥ ॐ धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे । तस्मै देवा अमृतास्संव्ययन्तां विश्वे देवासो अदितिस्सजोषाः स्वाहा । धात्र इदं० ॥ ॐ अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतां दाशुषे मयः स्वाहा । अनुमत्या इदं० ॥ ॐ अन्विदनुमते त्वं मन्यासै शन्न नः कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः स्वाहा । अनुमत्या इदं० ॥ ॐ अनुमन्यतामनुमन्यमाना प्रजावन्तꣳ रयिमक्षीयमाणम् । तस्यै वयꣳ हेडसि मापि भूम सा नो देवी सुहवा शर्म यच्छतु स्वाहा । अनुमत्या इदं० ॥ ॐ यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रति भूषन्त्यायवः । यस्या उपस्थ उर्वन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु स्वाहा । अनुमत्या इदं० ॥ ॐ राकामहꣳ सुहवाꣳ सुष्टुती हुवे शृणोतु नस्सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरꣳ शतदायमुक्थ्यꣳ स्वाहा ॥ राकाया इदं० ॥ ॐ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषꣳ सुभगे रराणा स्वाहा । राकाया इदं० ॥ ॐ सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः स्वाहा । सिनीवाल्या इदं० ॥ ॐ या सुपाणिः स्वङ्गुरिस्सुषूमा बहुसूवरी । तस्यै विश्पत्नियै हविः सिनीवाल्यै जुहोतन स्वाहा ॥ सिनीवाल्या इदं० ॥ ॐ कुहूमहꣳ सुभगां विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि ॥ सा नो ददातु श्रवणं पितॄणां

तस्यास्ते देवि हविषा विधेम स्वाहा ॥ कुह्वा इदं० ॥ ॐ कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्चिकेतु । सन्दाशुषे किरतु भूरिवामᳩ रायस्पोषं चिकितुषे दधातु स्वाहा ॥ कुह्वा इदं० ” इति ॥ अथ पूर्ववद्व्याहृतीर्मिन्दाहुती हुत्वा विष्णुबलि-पक्कं जुहोति— “ ॐ भूर्भुवस्सुवरों ३ तत्सवितुर्वरेण्यं० प्रचोदयात्स्वाहा ” ॥ सवित्र इदं० ॥ इति ॥ अथाज्याहुतीरुपजुहोति— “ ॐ विष्णोर्नु कं० त्रेधोरुगायः स्वाहा । सर्वत्र विष्णव इदं न ममेत्युद्देशत्यागः ॥ ॐ तदस्य प्रियमभिपाथः० उत्सः स्वाहा ॥ ॐ प्र तद्विष्णु स्तवते० विश्वा स्वाहा ॥ ॐ परो मात्रया० वित्से स्वाहा ॥ ॐ विचक्रमे० चकार स्वाहा ॥ ॐ त्रिर्देवः० नाम स्वाहा ” इति षड्भिः ॥ अथ पूर्ववद्व्याहृतीर्मिन्दाहुती च हुत्वा जातकर्मपक्कं जुहोति— “ ॐ हरिᳩ हरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम् । ब्रह्म सरूपमनुमेदमागादयनं मा विवधीर्विक्रमस्वों ३ माछिदो मृत्यो मावधीर्मा मे बलं विवृहो मा प्रमोषीः । प्रजां मा मे रीरिष आयुरुग्र नृचक्षसं त्वा हविषा विधेम स्वाहा ” इति ॥ मृत्यव इदं० ॥ अथाज्याहुतीरुपजुहोति— “ ॐ सद्यश्चकमानाय । प्रवेपानाय मृत्यवे ॥ प्रास्मा आशा अशृण्वन् । कामेनाजनयन्पुनः स्वाहा । मृत्यव इदं० ॥ ॐ कामेन मे काम आगात् । हृदयाद्धृदयं मृत्योः ॥ यदमीषामदः प्रियम् । तदैतूपमामभि स्वाहा ॥ मृत्यव इदं० ॥ ॐ परं मृत्यो अनुपरेहि पन्थाम् । यस्ते स्व इतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजाᳩ रीरिषो मोत वीरान्त्स्वाहा ॥ मृत्यव इदं० ॥ ॐ प्रपूर्व्यं मनसा वन्दमानः । नाधमानो वृषभं चर्षणीनाम् ॥ यः प्रजानामेकराण्मानुषीणाम् । मृत्युं यजे प्रथमजा ऋतस्य स्वाहा । मृत्यव इदं० ” ॥ अथ व्याहृतीर्मिन्दाहुती च हुत्वा नामकरणपक्कं जुहोति— “ ॐ भूर्भुवस्सुवरों ३ तत्सवितुर्वरेण्यं० चोदयात्स्वाहा ” इति ॥ सवित्र इदं० ॥ अथाज्याहुतीरुपजुहोति— “ ॐ प्रजापते न त्वदेतान्यन्यः । विश्वा जातानि परि ता

बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु । वयꣳ स्याम पतयो रयीणाꣳ स्वाहा ॥ सर्वत्र प्रजापतय इदं न ममेत्युद्देशत्यागः ॥ ॐ रयीणां पतिं यजतं बृहन्तम् । अस्मिन्भरेऽनृतमं वाजसातौ ॥ प्रजापतिं प्रथमजामृतस्य । यजाम देवमधि नो ब्रवीतु स्वाहा । ॐ प्रजापते त्वं निधिपाः पुराणः । देवानां पिता जनिता प्रजानाम् ॥ पतिर्विश्वस्य जगतः परस्पाः । हविर्नो देव विहवे जुषस्व स्वाहा ॥ ॐ तदेमे लोकाः प्रदिशो दिशश्च । परावतो निवत उद्वतश्च । प्रजापते विश्वसृज्जीवधन्य इदं नो देव । पतिर्हय हव्यꣳ स्वाहा ॥ ॐ प्रजापतिं प्रथमं यज्ञियानाम् । देवानामग्रे यजतं यजध्वम् । स नो ददातु द्रविणꣳ सुवीर्यम् । रायस्पोषं विष्यतु नाभिमस्मे स्वाहा ॥ ॐ यो राय ईशे शतदाय उक्थ्यः । यः पशूनाꣳ रक्षिता विष्ठितानाम् । प्रजापतिः प्रथमजा ऋतस्य । सहस्रधामा जुषताꣳ हविर्नः स्वाहा" इति षड्भिः ॥ अथ व्याहृतीर्मिन्दाहुती हुत्वा उपनिष्क्रमणपक्वं जुहोति— "ॐ भूर्भुवस्सुवरों ३ तत्सवितुः० चोदयात्स्वाहा" इति ॥ सवित्र इदं० ॥ अथाज्याहुतीरुपजुहोति— "ॐ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना स्वाहा ॥ अश्विभगादितिपूषद्यावापृथिवीभ्य इदं०॥ ॐ स्वस्तये वायुमुपब्रवामहै सोमꣳ स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिꣳ सर्वगणꣳ स्वस्तये स्वस्तय आदित्यासो भवन्तु नः स्वाहा ॥ वायुसोमबृहस्पत्यादित्येभ्य इदं० ॥ ॐ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वꣳहसः स्वाहा ॥ विश्वेदेववैश्वानरवस्वग्निदेवऋभुरुद्रेभ्य इदं० ॥ ॐ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि स्वाहा ॥ मित्रावरुणपथ्यारेवतीन्द्राग्न्यदितिभ्य इदं० ॥ ॐ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददता घ्नता जानता सङ्गमेमहि स्वाहा ॥ देवेभ्य इदं० ॥ ॐ स्वस्त्ययनं तार्क्ष्यमरिष्ट-

नेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम स्वाहा ॥ तार्क्ष्यायारिष्टनेमयेऽसुरघ्नाये-न्द्रसखायेदं० ॥ ॐ अꣳहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् ॥ प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नो अस्तु स्वाहा ॥ स्वस्त्यात्रेयाय तार्क्ष्यायेदं० ॥ ॐ स्वस्ति न इन्द्रो ० दधातु स्वाहा ॥ इन्द्राय वृद्धश्रवसे पूष्णे विश्ववेदसे तार्क्ष्यायारिष्टनेमये बृहस्पतये चेदं० " इति ॥ अथ व्याहृतीर्मिन्दाहुती हुत्वान्नप्राशनपक्वं सावित्र्या पूर्ववदेव हुत्वाज्याहुतीरुप-जुहोति— " ॐ अहमस्मि प्रथमजा ऋतस्य । पूर्वं देवेभ्यो अमृतस्य नाभिः ॥ यो मा ददाति स इ देवमावाः । अहमन्नमन्न-मदन्तमद्मि स्वाहा ॥ अन्नायेदं न ममेति सर्वत्र त्यागः ॥ ॐ पूर्वमग्नेरपि दहत्यन्नम् । यत्तौ हासाते अहमुत्तरेषु ॥ व्यात्तमस्य पशवः सुजम्भम् । पश्यन्ति धीराः प्रचरन्ति पाकाः स्वाहा ॥ ॐ जहाम्यन्यं न जहाम्यन्यम् । अहमन्नं वशामिच्चरामि ॥ समानमर्थं पर्येमि भुञ्जत् । को मामन्नं मनुष्यो दयेत स्वाहा ॥ ॐ पराके अन्नं निहितं लोक एतत् । विश्वैर्देवैः पितृभिर्गुप्तमन्नम् ॥ यद्द्यते लुप्यते यत्परोप्यते । शततमी सा तनूर्मे बभूव स्वाहा ॥ ॐ महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवं च पृश्नि पृथिवीं च साकम् ॥ तत्सम्पिबन्तो न मिनन्ति वेधसः । नैतद्भूयो भवति नो कनीयः स्वाहा ॥ ॐ अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्युं तमु जीवा-तुमाहुः ॥ अन्नं ब्रह्माणो जरसं वदन्ति । अन्नमाहुः प्रजननं प्रजानाꣳ स्वाहा ॥ ॐ मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्स तस्य ॥ नार्यमणं पुष्यति नो सखायम् । केवलाघो भवति केवलादी स्वाहा ॥ ॐ अहं मेघस्तनयन्वर्षन्नस्मि । माम-दन्त्यहमद्म्यन्यान् ॥ अहꣳ सदमृतो भवामि । मदादित्या अधि सर्वे तपन्ति स्वाहा " इत्यष्टभिः ॥ अथ व्याहृतीर्मिन्दाहुती हुत्वा कर्णवेधनपक्वं जुहोति— " ॐ श्रोत्रेण भद्रमुत शृण्वन्ति सत्यꣳ श्रोत्रेण वाचं बहुधोद्यमानाम् ॥ श्रोत्रेण मोदश्च महश्च

श्रूयते श्रोत्रेण सर्वा दिश आशृणोमी ३ येन प्राच्या उत दक्षिणा प्रतीच्यै दिशश्शृण्वन्त्युत्तरात् ॥ तदिच्छ्रोत्रं बहुधोद्यमानमराम्न-नेमिः परि सर्वं बभूव स्वाहा "॥ श्रोत्रायेदं०॥ इति ॥ अथाज्याहुतीरुपजुहोति—" ॐ प्राणो रक्षति० व्यानशे स्वाहा ॥ प्राणायेदं० ॥ ॐ यो देवो देवेषु० नो हविः स्वाहा ॥ प्राणायेदं० ॥ ॐ मनसश्चित्तेदं० अग्रियꣳ स्वाहा ॥ मनस इदं० ॥ ॐ आ न एतु० यज्ञपतिं दधत्स्वाहा ॥ मनस इदं० ॥ ॐ जुषतां मे० अनपायिनी स्वाहा ॥ वाच इदं० ॥ ॐ यया रूपाणि० हविः स्वाहा ॥ वाच इदं० ॥ ॐ चक्षुर्देवानां० विचक्षणꣳ स्वाहा ॥ चक्षुष इदं० ॥ ॐ आयुरिन्नः० उतामृत ꣳ स्वाहा ॥ चक्षुष इदं० ॥ ॐ श्रोत्रेण भद्रं० आशृणोमि स्वाहा ॥ श्रोत्रायेदं० ॥ ॐ येन प्राच्या उत ० बभूव स्वाहा ॥ श्रोत्रायेदं० " इति ॥ अथ पूर्ववद्व्याहृतीमिन्द्राहुती हुत्वावदानधर्मेणावदाय चूडाकर्मणः पक्वं जुहोति— " ॐ ये केशिनः प्रथमाः सत्रमासत येभिराभृतं यदिदं विरोचते ॥ तेभ्यो जुहोमि बहुधा घृतेन रायस्पोषेणेमं वर्चसा स ꣳ सृजाथो ३ नर्ते ब्रह्मणस्तपसो विमोको द्विनाम्नी दीक्षा वशिनी ह्युग्रा ॥ प्रकेशास्सुवते काण्डिनो भवन्ति तेषां ब्रह्मेदीशे वपनस्य नान्यः स्वाहा " इति ॥ केशिभ्य इदं० ॥ अथ स्विष्टकृतमुत्तरार्धात् सर्वतः सकृत्सकृदवदाय द्विरभिघार्यान्तःपरिधौ निधायाज्याहुतीरुपजुहोति— " ॐ आरोह प्रोष्ठं विषहस्व शत्रून् । अवास्राग् दीक्षा वशिनी ह्युग्रा ॥ देहि दक्षिणां प्रतिरस्वायुः । अथा मुच्यस्व वरुणस्य पाशात्स्वाहा ॥ सोमाय राज्ञ इदं० ॥ ॐ येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ॥ तेन ब्रह्माणो वपतेदमस्योर्जेमम् । रय्या वर्चसा सꣳ सृजाथ स्वाहा ॥ ब्रह्मभ्य इदं० ॥ ॐ मा ते केशाननुगाद्वर्च एतत् । तथा धाता करोतु ते ॥ तुभ्यमिन्द्रो बृहस्पतिः । सविता वर्च आदधात्स्वाहा ॥ धात्र इन्द्राय बृहस्पतये सवित्र इदं० ॥ ॐ तेभ्यो निधानं बहुधा व्यैच्छन् । अन्तरा द्यावापृथिवी अपः सुवः ॥ दर्भस्तम्बे वीर्यकृते

निधाय। पौंस्येनेमं वर्चसा सꣳसृजाथ स्वाहा ॥ ब्रह्मभ्य इदं० ॥ ॐ बलं ते बाहुवोः सविता दधातु। सोमस्त्वानक्तु पयसा घृतेन ॥ स्त्रीषु रूपमश्विनैतं निधत्तम्। पौंस्येनेमं वर्चसा सꣳ सृजाथ स्वाहा ॥ सवित्रे सोमायाश्विभ्यामिदं० ॥ ॐ यत्सीमन्तं कङ्कतस्ते लिलेख। यद्वा क्षुरः परिववर्ज वपꣳस्ते ॥ स्त्रीषु रूपमश्विनैतं निधत्तम्। पौंस्येनेमꣳ सꣳ सृजाथो वीर्येण स्वाहा ॥ अश्विभ्यामिदं० " इति ॥ अत्र " हव्यवाहं, स्विष्टमग्ने " इति सौविष्टवतीभ्यां स्विष्टकृतं हुत्वा मेक्षणप्रहरणादि प्रागुत्तरपरिषेकात् कृत्वाग्रेणाग्निं जातकर्मादिहुतशेषषट्कं निदधाति। तत्राद्यं चतुष्टयमश्वत्थपर्णेषु " नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः ॥ नमः सहमानाय विव्याधिने आव्याधिनीनां पतये नमः ॥ ॐ भूर्भुवस्सुवः " इति मंत्रैः क्रमेण निधाय पञ्चमं वेणुपर्णेषु " समुद्राय वयुनाय सिन्धूनां पतये नमः " इति ॥ षष्ठमुदुम्बरपर्णेषु " नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः " इति मंत्रेण निदध्यात् ॥ ततस्तत्तदुपरिष्टात्तंत्राणि यथाक्रमं कुर्यात् ॥ तत्र गर्भाधानादिसीमन्तोन्नयपर्यन्तानामतीतानामर्थलोपान्मन्त्रपठनमेव। गर्भाधानतंत्रे— " तत्सवितुर्वृणीमहे। वयं देवस्य भोजनम् ॥ श्रेष्ठꣳ सर्वधातमम्। तुरं भगस्य धीमहि ॥ तत्सवितुर्वरेण्यं० चोदयात् ॥ यत इन्द्र० जहि ॥ स्वस्तिदा० अभयङ्करः " इति ॥ पुंसवनतंत्रे— " अस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः। पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः ॥ आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायः सचताꣳ समोकसा। य आसिचत्सन्दुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः ॥ सर्पिर्ग्रीवी पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य। सह जानिर्यः सुमखस्य मा न इन्द्रायाशिरꣳ सह कुम्भ्यादात् ॥ आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सवर्चसम्। सञ्जयन्क्षेत्राणि सहसाहमिन्द्र कृण्वानो अन्याꣳ अधरान्त्सपत्नान् " इति ॥ सीमन्तोन्नयनतंत्रे— " राकामहꣳ०

उक्थ्यम् ॥ यास्ते राके० रराणा ॥ यवोऽसि यवयास्मद्द्वेषो यवयारातीः ॥ सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरेण गंगे तव " इत्येवं मंत्रान्पठेत् ॥ ॥ अथ विष्णुबलितंत्रम् ॥ विष्णवे बलिमुपहरति गुडपायसं घृतमिश्रमन्नञ्च " ॐ केशवाय स्वाहा नमः ॥ नारायणाय० ॥ माधवाय० ॥ गोविन्दाय० ॥ विष्णवे० ॥ मधुसूदनाय० ॥ त्रिविक्रमाय० ॥ वामनाय० ॥ श्रीधराय० ॥ हृषीकेशाय० ॥ पद्मनाभाय० ॥ दामोदराय स्वाहा नमः " इति द्वादशभिः ॥ पुनस्तैरेव नामभिः-- " केशवं तर्पयामि, नारायणं०, माधवं०, " इत्यादिभिस्तर्पयित्वा, पुष्पाञ्जलिं समर्प्य वैष्णवीभिर्ऋग्यजुस्सामाथर्वभिः स्तुत्वा व्याहृतीभिः पुरुषमुद्वासयेत्-- " ॐ भूः पुरुषमुद्वासयामि ॥ ॐ भुवः पुरुषं० ॥ ॐ सुवः पुरुषं० ॥ ॐ भूर्भुवस्सुवः पुरुषमुद्वासयामि ॥ प्रयातु भगवान् महापुरुषः क्षेमाय विजयाय पुनः संदर्शनाय च " इति ॥ ॥ अथ जातकर्मणो मुख्यकालाऽभावादिदानीं फलीकरणहोमस्याप्रसक्तेः केवलं तंत्रोक्तान्--" कृणुष्व पाजः प्रसितिम् " इत्यादि " अग्निरायुष्मान् " इति पञ्चपर्यायान्तं मंत्रान्पठेत् ॥ ॥ अथ नामकरणतंत्रम् ॥ तत्र यथाचारं तण्डुलपूर्णे सुवर्णाद्यन्यतमे पात्रे सुवर्णशलाकया हरिद्राखण्डेन वा " गणपतिभक्तः " इत्यादि तत्तत्कुलदेवतानाम " कृष्णः " इत्यादितत्तन्मासनाम " आश्वयुजः " इत्यादि तत्तन्नाक्षत्रनाम " हरिशर्मा " इत्याद्यभिमतव्यावहारिकनाम चेत्येवं नामचतुष्टयं विलिख्य " नर्यं प्रजां मे गोपाय " इति मंत्रेण प्रतिष्ठाप्य षोडशोपचारैरभ्यर्चयेत् ॥ ततः पितरौ देशकालौ संकीर्त्य " अस्य कुमारकस्यायुःश्रीबलवृद्धिपूर्वकं व्यवहारसिद्ध्ये नाम धास्यावहे " इति सङ्कल्प्य ब्राह्मणान्सम्पूज्य " प्रजापतिः प्रीयताम् " इति पुण्याहं वाचयित्वा प्रार्थयेताम्— " कुलदेवतानाम्ना गणपतिभक्ताय स्वस्ति भवन्तो ब्रुवन्तु " इति ॥ " गणपतिभक्ताय स्वस्ति " इति ते प्रतिब्रूयुः ॥ एवमेव " मासनाम्ना कृष्णाय स्वस्ति भवन्तो ब्रुवन्तु " इति ॥ " कृष्णाय स्वस्ति " इति

प्रति० ॥ " नाक्षत्रनाम्ना आश्वयुजाय स्वस्ति भवन्तो ब्रुवन्तु " इति ॥ " आश्वयुजाय स्वस्ति " इति प्रति० ॥ " व्यावहारिकनाम्ना हरिशर्मणे स्वस्ति भवन्तो ब्रुवन्तु " इति ॥ " हरिशर्मणे स्वस्ति " इति प्रति० ॥ ततो मातुरुत्सङ्गोपविष्टस्य कुमारकस्य दक्षिणे कर्णे ब्रूयात्— " कुलदेवतानाम्ना त्वं गणपतिभक्तोऽसि ॥ मासनाम्ना त्वं कृष्णोऽसि ॥ नाक्षत्रनाम्ना त्वं आश्वयुजोऽसि ॥ व्यावहारिकनाम्ना त्वं हरिशर्मासि " इति प्रत्येकमुपांशु त्रिस्त्रिरुक्त्वोपोत्थाय ब्राह्मणान्कुमारेणाभिवादयन्प्रवदेत्– "कुलदेवतानाम्ना गणपतिभक्तोऽयं भवतः सर्वान्ब्राह्मणानभिवादयते " इति ॥ " आयुष्मान्भवतु गणपतिभक्तः " इति ते प्रतिब्रूयुः ॥ एवमेव " मासनाम्ना कृष्णोऽयं भवतः सर्वान्ब्राह्मणानभिवादयते ॥ नाक्षत्रनाम्ना आश्वयुजोऽयं भवतः सर्वान्ब्राह्मणानभिवादयते ॥ व्यावहारिकनाम्ना हरिशर्मायं भवतः सर्वान्ब्राह्मणानभिवादयते " इति ॥ सर्वत्र " आयुष्मान्भवतु अमुकः " इति तत्तन्नाम योजयन्तः प्रतिब्रूयुः ॥ ॥ अथोपनिष्क्रमणतंत्रम् ॥ मङ्गलघोषपुरस्सरं कुमारेण सह बहिरुपनिष्क्रम्य बाह्यानि चित्रियाणि दैवतानि " चित्रियेभ्यो नमः " इति गन्धपुष्पाक्षतैरभ्यर्च्य " चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च । निक्षेपार्थमिमं दद्मि तेऽमुं रक्षन्तु सर्वदा ॥ अप्रमत्तं प्रमत्तं वा दिवा रात्रमथापि वा । रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः " इति सम्प्रार्थ्य त्रिवृतान्नेन हिरण्येन वा ब्राह्मणान्सम्पूज्य " चित्रियाणि प्रीयन्ताम् " इति पुण्याहं वाचयित्वा तान्प्रदक्षिणीकृत्य कुमारं गृहमानयेत् ॥ ॥ अथान्नप्राशनतंत्रम् ॥ सुवर्णादिपात्रे दध्ना मधुना घृतेनाद्भिश्चौदनं समुदायुत्य हिरण्येन मातुरङ्कोपविष्टं कुमारं प्राशयति–" ॐ या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च ॥ भूर्भुवः सुवरपान्त्वौषधीनाꣳ रसमन्नं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयः सन्तु" इति ॥ एवमेव " शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अथा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ भूर्भुवः

सुवरपां० ओषधयः सन्तु ॥ पुष्पावतीः प्रसूवतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ भूर्भुवः सुवरपां० ओषधयः सन्तु ॥ ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे । रपाꣳसि विघ्नतीरितरपश्चातयमानाः ॥ भूर्भुवः सुवरपां० ओषधयः सन्तु ॥ अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ भूर्भुवः सुवरपां० ओषधयः सन्तु ॥ यदहं वाजयन्निमा ओषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ भूर्भुवः सुवरपान्त्वौषधीनाꣳ रसमन्नं प्राशयामि शिवास्त आप ओषधयः सन्त्वनमीवास्त आप ओषधयः सन्तु " इति षड्भिः प्राशयित्वा हस्तं प्रक्षाळयेत् ॥ ॥ अथ कर्णवेधन-तंत्रम् ॥ ब्राह्मणान्सम्पूज्य "प्रजापतिः प्रीयताम्" इति पुण्याहं वाचयित्वा लोहितसूच्या कण्टकेन वा कुमारस्य दक्षिणं कर्ण-मातृणत्ति-- "गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुत्सूचीभिः शिम्यन्तु त्वा" इति । अथ सव्यकर्णं "द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा । सच्छन्दा या च विच्छन्दाः सूचीभिः शिम्यन्तु त्वा" इत्यातृद्य लोहितसूत्रेण शणसूत्रेण वा कर्णौ बध्नाति— "वरुणस्य स्कम्भनमसि" इति ॥ श्वोभूते तद्विस्रंसयति— "वरुणस्य स्कम्भसर्जनमसि" इति ॥

॥ अथ चौळतन्त्रम् ॥ अपरेणाग्निमुष्णास्वप्सु शीता आनयति— "उष्णेन वायवुदकेनेह्यदितिः केशान्वपतु" इति ॥ ताभिरद्भिः प्राङ्मुखः पिता प्रत्यङ्मुखोपविष्टस्य कुमारस्य दक्षिणतः शिर उनत्ति— "आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे" इति ॥ ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति— "ओषधे त्रायस्वैनम्" इति । तत्सव्येन गृहीत्वा दक्षिणहस्तेन क्षुरमादायाभिमन्त्रयते— "ज्योक्च सूर्यं दृशे" इति । तत्रैनं तिर्यञ्चं निदधाति— "स्वधिते मैनꣳ हिꣳसीः" इति । अथास्य केशान्वपति—"येनावपत्सविता० सृजाथ" इति ।ताननुमंत्रयते—"मा ते केशान्० आदधात्" इति । उप्तान्केशान्समुच्चित्य दर्भस्तम्बे निदधाति— "तेभ्यो निधानं० वर्चसा

स॰ सृजाथ " इति । अथैनं कुमारमुष्णोदकेनाप्लावयति—" बलन्ते बाहुवोः० स॰ सृजाथ " इति । अथैनं संस्नाप्याच्छाद्यालंकृत्य त्रिवृतान्नेन हिरण्येन वा ब्राह्मणान्सम्पूज्य 'प्रजापतिः प्रीयताम्' इति पुण्याहं वाचयेत् ॥ अथोत्तरपरिषेकादि होमशेषं समाप्य " यस्य स्मृत्या " इत्यादिना विष्णुं स्मृत्वा, " एभिर्गर्भाधानादिचौलान्तकर्मभिः श्रीपरमेश्वरः प्रीयताम् " इति कर्मेश्वराय समर्प्य यथाशक्ति ब्राह्मणान्सम्भोज्य दक्षिणादिभिः सन्तोष्याशिषो गृह्णीयात् ॥ ॥ इति गर्भाधानादिचौलान्तसंस्काराणां समानतंत्र-प्रयोगः ॥

## ॥ अथाक्षरारम्भविधिः ॥

॥ अथ प्रसङ्गात्प्राप्तमक्षरारम्भणं निरूप्यते ॥ तत्र कालनिर्णयमाह नि० नृसिंहः— " अक्षरस्वीकृतिं कुर्यात् प्राप्ते पञ्चमहायने । उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ॥ शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना " इति ॥ नक्षत्रादीन्याह श्रीधरः— " हस्तादित्यसमीरमित्रपुरजित्पौष्णाश्विचित्राच्युतेष्वाराक्यँशदिनोदयादिरहिते राशौ स्थिरे चोभये । पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं षष्ठीमष्टमशुद्धिभाजिभवने प्रोक्ताक्षरस्वीकृतिः " इति ॥ वारविशेषेण फलविशेषमाह सं० मालायां मार्कण्डेयः— " वारे दिनेशभृगुपुत्रबृहस्पतीनां विद्वानसौ भवति योऽपि विमूढबुद्धिः । चन्द्रे च चन्द्रतनये च कुशाग्र सर्वं विघ्नो भवेदवनिजे रविजे विनाशः " इति ॥ तथाचोत्तरायणे कुम्भरहितेषु मासेषु शुक्लपक्षे रविगुरुभार्गवाणां वारोदयेषु प्रतिपद्रिक्ताषष्ठ्य-ष्टमीवर्जितासु तिथिषु हस्तपुनर्वसुस्वात्यनुराधार्द्रारेवत्यश्विनीचित्राश्रवणनक्षत्रेषु अष्टमशुद्धियुतेषु स्थिरोभयलग्नेष्वक्षरारम्भं कुर्यादिति निष्कर्षः ॥ अक्षरारम्भप्रकारस्तूक्तः प्र० पारिजाते— " सरस्वतीं गणेशं च सूत्रकारं गुरुं तथा । पूजयित्वा

यथान्यायं पात्रस्थे तण्डुले लिखेत् ॥ प्राङ्मुखो गुरुरासीनो वरुणाभिमुखः शिशुः । अंगुष्ठानामिकाभ्यां तु चतुर्थ्यन्तेष्टदेवताम् ॥ ओंकारमादितः शब्दमुच्चार्यैवाक्षराणि च । ततः प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेत् । चतुर्दश्यष्टमीपर्वदिनानि प्रतिपद्दिनम् " इति ॥ " अभ्यङ्गस्नानपूर्वन्तु गन्धवस्त्रादिभूषितः । शलाकया सुवर्णस्य पञ्चाशद्वर्णकांल्लिखेत् " इति संस्काररत्नमालायां विशेष उक्तः ॥

अथ प्रयोगः— यथोक्तमुहूर्ते कुमारमभ्यङ्गपूर्वकं स्नापयित्वा, गन्धादिभिरलंकृत्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " मम कुमारकस्य समस्तविद्याप्राप्त्यर्थमक्षरारम्भं कारयिष्ये " इति सङ्कल्प्य निर्विघ्नतासिध्यर्थं गणपतिं सम्पूज्य शुचौ समे देशे गोचर्ममात्रं स्थण्डिलं गोमयेनोपलिप्य तत्र सैकतं स्थण्डिलं कृत्वा तन्मध्ये पलाशशाखमूलेन मृदं खनित्वा पलाशशाखां तत्रैव रोपयित्वा तत्र " ॐ भुवनमातः सर्ववाङ्मयरूपे आगच्छागच्छ " इति मंत्रेण सरस्वतीमावाहयेत् ॥ तथा तण्डुलपुञ्जेषु गणेशं सूत्रकारं गुरुञ्च नाममंत्रेणावाह्य प्रणवेन नाममन्त्रेण च यथाक्रममासनादिदीपान्तानुपचारान्कृत्वा पायसं गुडौदनं च निवेद्य नमस्कारान्तं पूजां समाप्य गुरुञ्च वस्त्रालंकारादिभिर्यथाशक्ति सम्पूज्य कुमारेण सह सर्वांस्तान् त्रिः प्रदक्षिणीकृत्य सम्प्रार्थ्यावाहनक्रमेण देवता उद्वासयेत् ॥ ततो गुरुः प्राङ्मुख उपविश्य प्रत्यङ्मुखोपविष्टं कृतप्रणामं कुमारमाशीर्भिरभिनन्द्य तण्डुलपूर्णपात्रे अंगुष्ठानामिकाभ्यां सुवर्णशलाकया वा प्रणवपूर्वकं नमःसहितेष्टदेवतानामाक्षराणि[1] अकारादि पञ्चाशद्वर्णांश्चोच्चारयन्नेव लेखयेत् । ततो गुरुं ब्राह्मणांश्च भोजनादिना सन्तोष्य कर्मेश्वरार्पणं कुर्यात् ॥ ॥ इत्यक्षरारम्भविधिः ॥

---

१. " ॐ नमः सिद्धम् इति लिखेत् पूर्वसम्प्रदायात् " इति सं० रत्नमालायाम् ॥

अथानुपनीतधर्माः ॥ प्र० पारिजाते गौतमः —" प्रागुपनयनात्कामचारकामवादकामभक्षाः " इति ॥ कामचार इच्छागतिः । कामवादोऽश्लीलादिभाषणम् । कामभक्षः पर्युषितादिभक्षणम् । एतेषु प्रागुपनयनान्न दोष इत्यभिप्रायः ॥ विष्णुपुराणेऽपि—" भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते । अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते " इति ॥ एतच्च महापातकव्यतिरिक्तविषयम् । तदुक्तं स्मृत्यन्तरे —" स्यात्कामचारभक्षोक्तिर्महतः पातकादृते " इति ॥ दैवान्महापातकसम्भवे पित्रादिभिस्तत्प्रायश्चित्तं कर्तव्यम् । " अनुपेतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि । तस्य कृच्छ्रत्रयं कार्यं पित्रा भ्रात्रा तथैव च " इति पराशरीये जातूकर्ण्योक्तेः ॥ आचारविषये त्वाह बोधायनो धर्मसूत्रे ( बो. ध. सू. १. ३. ७ ) " नास्य कर्म नियच्छन्ति किञ्चिदामौञ्जिबन्धनात् । वृत्या शूद्रसमो ह्येष यावद्वेदेषु जायते " इति ॥ अस्पृश्यस्पर्शने " शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् । रजस्वलादिसंस्पर्शे स्नानमेव कुमारके " इति प्र० पारिजाते स्मृतिदीपिकावचनम् ॥ शिश्वादीनां लक्षणं च तत्रैवोक्तम्—" प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः । कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम् " इति ॥

## ॥ अथोपनयनम् ॥ ( आहुतः )

अथाऽधुना द्विजत्वसम्पादको ऋष्यृणापनोदक उपनयनविधिरभिधीयते ॥ ( बो. गृ. सू. २. ५ ) " अथाहुतः । गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् । आषोडशाद्ब्राह्मणस्याऽनात्यय इति । एवमेवेतरयोः द्वाविंशतिश्च चतुर्विंशतिश्च । अथाऽपि काम्यानि भवन्ति– सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाम-

मेकादश इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाममिति। वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं वर्षासु रथकारमिति। सर्वानेव वा वसन्ते ॥ ० मौञ्जी ब्राह्मणस्य ज्यामौर्वी राजन्यस्य आवीसूत्रं वैश्यस्य। सर्वेषामेव वा मौञ्जीम् ॥ ० कृष्णाजिनं ब्राह्मणस्य रौरवं राजन्यस्य बस्ताजिनं वैश्यस्य। सर्वेषां वा कृष्णाजिनम् ॥ ० अथास्मै दण्डं प्रयच्छति– पालाशं बैल्वं वा ब्राह्मणस्य नैयग्रोधं स्कन्दजमवाङ्ग्रं रौहितकं वा राजन्यस्य बादरमौदुम्बरं वा वैश्यस्य। सर्वेषां वा वार्क्षम् ॥ 'सोमोसि सोमपं मा कुरु' इति पालाशम्। 'ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा' इति बैल्वम्। 'ओजोस्योजो मयि धेहि' इति नैयग्रोधम्। 'बलमसि बलं मयि धेहि' इति रौहीतकम्। 'पुष्टिरसि पुष्टिं मयि धेहि' इति बादरम्। 'ऊर्गस्यूर्जं मयि धेहि' इत्यौदुम्बरम् ॥ ० स मातरमेवाऽग्रे भिक्षेत। भवति भिक्षां देहीति ब्राह्मणो भिक्षेत। भिक्षां भवति देहीति राजन्यः। देहि भिक्षां भवतीति वैश्यः ॥ ० त्र्यहमेतमग्निं धारयन्ति। प्रसिद्धं सन्ध्यामुपासीत– नम ईशानाय नमो गोपितृदेवेभ्य इति। अथ गुरूनभिवादयते मातरं पितरं भ्रातरं मातुलमाचार्यमन्यांश्च विशेषांस्त्रिवर्षपूर्वान्। क्षारलवणवर्जमधश्शय्या च ॥ ० अथाऽधो नाभ्युपरि जान्वाच्छाद्य दण्डमजिनं मेखलाञ्च धारयन् श्राद्धसूतकमैथुनमधुमांसानि वर्जयन् भैक्ष्याऽऽहारोऽधश्शायी चाऽऽचार्यस्य गृहानेतीति विज्ञायते आचार्यो वै ब्रह्मेति" ॥

(बो. ध. सू. १. ३. २) "आषोडशादाद्वाविंशादाचतुर्विंशादनात्यय एषां क्रमेण" इति ॥ ॥ मनुः— "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्याऽर्थार्थिनोऽष्टमे" इति ॥ ॥ वसन्तस्य विवरणं हेमाद्रौ— "व्रतस्य बन्धे यदि वाखिलानां माघादयः पञ्च भवन्ति मासाः" इति ॥ तथा च पञ्चमादिषोडशान्ता वत्सराः माघादयः पञ्च मासाश्च ब्राह्मणानामुपनयनकालः, तत्राप्यष्टमवर्षपर्यन्तं मुख्यः कालस्तदनन्तरं गौणः षोडशादूर्ध्वन्तु पतितसावित्रीका भवन्तीति

विज्ञायते ॥ ॥ अथात्रोपनयने बटोर्गोचरे गुरुबलमावश्यकम् ॥ " सर्वेषां गुरुचन्द्रर्क्षबलं श्रेष्ठं प्रकीर्तितम् । मौञ्जीबन्धे विवाहे च प्रतिष्ठायां विशेषतः " इति सं० मालायां राजमार्तण्डोक्तेः ॥ गुरुबलं चोक्तं मुहूर्तचिन्तामणौ— " बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः । श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयान्यत्र निन्दितः " इति ॥ राशिविशेषस्थस्य गुरोरष्टमादिस्थितावपि न क्षतिरित्याह सं० मालायां भरद्वाजः—" धनुर्मीनकुळीरस्थो जीवो जन्मान्त्यमृत्युगः । अतिसौख्यं बटोः कुर्याद्वसिष्ठवचनं यथा " इति ॥ मुख्यकाले बलहीनोऽपि गुरुः शान्त्या शुभदो भवति न पुनर्गौणकाले इत्याह नारदः— " बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः । यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् " इति ॥ शान्त्यभावेऽपि मीनचैत्रे तत्प्रशास्यत इत्युक्तं निर्णयसिन्धौ— " शुद्धिर्नैव गुरोर्यस्य वर्षे प्राप्तेऽष्टमे यदि । चैत्रे मीनगते भानौ तस्योपनयनं शुभम् " इति ॥ ॥ अथाऽयनमासाऽदिनिर्णयः सं० मालायाम् —" विप्रस्य क्षत्रियस्याऽपि मौञ्जी स्यादुत्तरायणे । दक्षिणे तु विशां कुर्यान्नानध्याये न सङ्क्रमे " इति वृद्धवासिष्ठः ॥ " मृगकुम्भगते भानौ मध्यमं मीनमेषयोः । उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम् " इति बृहस्पतिः ॥ " न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीयदिने विदध्यात् । न ज्येष्ठमासि प्रथमस्य सूनोस्तथा सुताया अपि मङ्गलानि" इति वृत्तशते ॥ " ज्येष्ठे मासि विशेषेण ज्येष्ठपुत्रस्य नैव हि । मौञ्जीबंधं प्रकुर्वीत कृतश्चेन्मृत्युदो भवेत् " इति गर्गः ॥ जन्ममासे वर्ज्यदिनान्याह नि० राजमार्तण्डः— " जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशाऽत्रिः । जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि ॥ जन्ममासे तिथौ भे च विपरीतदले सति । कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः " इति ॥ ' जन्ममासतिथिलग्नतारकाराशिपृपनतिरग्रजन्मनां ' इत्यविशेषेण ब्राह्मणानां जन्ममासादिकं विदधाति मुहूर्तमालाकारः ॥ मुहूर्तचिन्तामणौ च—" जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती । आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे " इति विशेषः प्रोक्तः ॥ ॥ अथ पक्षादिकमुक्तं प्र० पारिजाते—" शुक्ले पक्षे निर्मले

शीतभानौ शुक्रे जीवे चाऽम्बरे दृश्यमाने। शाखाधीशे शक्तियुक्तेऽनुकूले राशावृक्षे स्याद्विशोमौञ्जिबन्धः" इति ॥ "ऋगादीनां क्रमेणेशा जीवशुक्रारसोमजाः" इति ज्योतिषे ॥ कृष्णपक्षेऽपि ग्राह्यांशमाह बृहस्पतिः— "शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना" इति ॥ ॥ अथ वर्ज्यतिथयः ॥ प्रयोगपारिजाते — "रिक्ताषष्ठीपर्वतिथीरनध्यायांश्च वर्जयेत्। नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे चैव भास्करे ॥ कर्तव्यं नोपनयनं नानध्याये गलग्रहे" इति ॥ ॥ अनध्यायाश्चोक्ता मुहूर्तमालायाम्— "अनध्यायाः स्मृता भूतत्रयाष्टम्यर्कसङ्क्रमाः। शुक्लद्वीशार्कदिक्तिथ्यः शुक्रपौषतपःशुचेः" इति ॥ भूतत्रयं— चतुर्दश्यादितिथित्रयम् ॥ नैमित्तिकाऽनध्यायाश्चोक्ता निर्णयसिन्धौ— "अष्टकासु च सर्वासु युगमन्वन्तरादिषु। अनध्यायं प्रकुर्वीत तथा सोपपदास्वपि" इति ॥ सोपपदास्तु तत्रैवोक्ताः— "सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता। चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः" इति ॥ गलग्रहाश्चोक्तास्तत्रैव— "कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम्। त्रयोदशीचतुष्कञ्चेत्यष्टावेते गलग्रहाः" इति ॥ अत्राऽनध्यायेष्वपि ग्राह्यतिथीराह तत्रैव व्यासः— "या चैत्रवैशाखसिता तृतीया माघे च सप्तम्यथ फाल्गुनस्य। कृष्णे द्वितीयोपनये प्रशस्ताः प्रोक्ता भरद्वाजमुनीन्द्रमुख्याः" इति ॥ सोपपदाश्च याजुषाणां न दोषावहा इत्यप्युक्तं तत्रैव— "वेदव्रतोपनयने स्वाध्यायाध्ययने तथा। न दोषो यजुषां सोपपदास्वध्ययनेऽपि च" इति ॥ वसन्ते गलग्रहदोषोऽपि नास्तीत्याह तत्रैव नारदः— "विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे। अपराह्णे चोपनीतः पुनस्संस्कारमर्हति" इति ॥ ॥ अथ वारानाह सं० मालायां नारदः— "सर्वेषां जीवशुक्रज्ञवाराः प्रोक्ता व्रते शुभाः। चन्द्रार्कौ मध्यमौ ज्ञेयौ सामबाहुजयोः कुजः ॥ शाखाधिपतिवारश्च शाखाधिपबलं तथा। शाखाधिपतिलग्नञ्च दुर्लभं त्रितयं व्रते" इति ॥ ॥ अथ नक्षत्राण्याह

१. "राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते" इति सं० मालायाम् ॥

विद्यामाधवः— " चित्रामित्रवसूत्तरादितिविधिब्रघ्नेन्दवः पूजिताः पुष्याऽन्त्याऽच्युतवारुणाऽश्विमरुतो मध्या द्वितीयोद्भवेः ॥ क्षोणीमङ्गलसामिधेन्यमरराट्सङ्ख्यातिथिर्निन्दिता त्याज्योऽनध्ययनोऽखिलोऽपि समयः शुक्लेऽपि षष्ठी शुभा " इति ॥ मुहूर्तमालायाञ्च— " व्रतबन्धोऽग्निपित्र्येन्द्रद्वीशयाम्याम्बुपं विना कुजार्की च विना कार्यो द्वित्रीष्वर्केशदिक्तिथौ ॥ ऋग्वेदिनां मूलपूर्वाऽऽश्लेषाऽर्द्रेन्दुकरत्रये । यजुर्विदां ध्रुवान्त्येज्यमित्रादित्येन्दुहस्तभे " इति ॥ अथाऽत्र ग्राह्यलग्नानि फलतो निर्दिशति विद्यामाधवः- " मूको विद्वान्बोधवान् वेदवादी शिल्पी धीमान् लब्धवाणिज्यवृत्तिः । पापी पूज्यः शूद्रको राजदूतः शास्त्रार्थज्ञः स्याच्च मेषादिलग्ने " इति ॥ अथान्यदपि चौलप्रकरणोक्तं व्यतीपातगुलिकादिमहादोषवर्जनं मातृरजःकालवर्जनादिकञ्चाऽत्राऽनुसन्धेयम् ॥

॥ अथोपनेतारः ॥ सं० रत्नमालायां गर्गः — " पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः । उपनायेऽधिकारी स्यात्पूर्वाभावे परः परः " इति ॥ " पितैवोपनयेत्पुत्रं तदभावे पितुः पिता । तदभावे पितुर्भ्राता तदभावे तु सोदरः " इति च ॥ एतेषामभावे आचार्य उपनयेत् ॥ तत्र नान्दीश्राद्धे उपनेयस्य पित्रादीनेवोद्दिशेत् ॥ ' असगोत्रः सगोत्रो वा य आचार्य उपानयेत् । तदोपनेयपित्रादीनुद्दिश्याऽभ्युदयं चरेत् ॥ कन्योद्वाहेऽप्ययं मार्गो मुनिभिः परिकीर्तितः ' इति तत्रैव विश्वप्रकाशोक्तेः ॥

अथोपनयनोपयोगिपदार्थाः ॥ सं० रत्नमालायां यमः— " मेखलामजिनं दण्डमुपवीतं च सर्वदा । कटिसूत्रं च कौपीनं ब्रह्मचारी तु धारयेत् " इति ॥ तत्रादौ कौपीनं धार्यम् ॥ तल्लक्षणमुक्तं स्मृत्यर्थसारे—" कौपीनमहतं धार्यं खण्डं वा वस्त्रपार्श्वयुक् " इति ॥ आचार्यबोधायनस्तु परिधानार्थं वस्त्रं प्रोक्तवान्—( बो. गृ. सू. २. ५ ) " अथैनं तिष्ये वासः सद्यः कृत्वोदङ्परिधापयन् वाचयति " इति ॥ तत्र वस्त्रं विशिनष्ट्यापस्तम्बः—" वासांसि शाणक्षौमाविकानि काषायकञ्चैके वस्त्रमुपदिशन्ति ब्राह्मणस्य " इति ॥ आश्वलायनोऽपि—" काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः " इति ॥ सत्याषाढस्तु—" अथैनमहतं वासः

परिधापयति " इत्याह ॥ अहतलक्षणञ्चाह सं० मालायां प्रचेताः —" ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् सर्वकर्मसु पावनम् " इति ॥ अथ मेखलाः ब्राह्मणक्षत्रियवैश्यानां क्रमेणोक्ताः—( बो. ध. सू. १. ३ ) " मौञ्जीधनुर्ज्या शाणीति मेखलाः " इति ॥ तत्रानुकल्पमाह मनुः— " मुञ्जाऽभावे तु कर्तव्याः कुशाश्मन्तकबल्वजैः । त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा " इति ॥ ॥ अजिनानि ब्राह्मणादिक्रमेणोक्तानि— ( बो. ध. सू. १. ३ ) " कृष्णरुरुबस्ताजिनान्याजिनानि " इति ॥ इदञ्चाजिनमुत्तरीयार्थं धार्यम् ॥ प्रावरणपर्याप्तस्याऽस्य पुनरलाभे विशेषमाह सं० मालायां शाकलः—" अखण्डं वा त्रिखण्डं वाऽष्टाचत्वारिंशदङ्गुलम् । चतुरङ्गुलविस्तीर्णं धारयेदजिनं सदा " इति ॥ खण्डत्रयमानं च तत्रैवोक्तम्—" त्र्यङ्गुलन्तु बहिर्लोम यत्रास्याच्चतुरङ्गुलम् । अजिनं धारयेद्विप्रश्चतुर्विंशाष्टषोडशैः " इति ॥ चतुर्विंशत्यङ्गुल एकः, अष्टाङ्गुलो द्वितीयः, षोडशाङ्गुलस्तृतीयः, एवं त्रिभिः खण्डैरष्टाचत्वारिंशदङ्गुलमजिनं धार्यमित्यर्थः ॥ गृ० सङ्ग्रहे तु—" कार्ष्णरौरवबास्तानि चर्माणि स्युस्त्रिवर्णतः । कृष्णाजिनं वा सर्वेषामाधामाद्युपवीतवत् ॥ कनिष्ठिकार्धविस्तारं त्र्यङ्गुलं वाऽग्रजन्मनः । वर्णक्रमाच्चतुस्त्रिद्विच्छिद्रैस्तु दृढसन्धिमत् ॥ दक्षिणावृत्तलोमैतच्छिशुं तं प्रतिमोचयेत् " इत्युक्तम् ॥ ॥ अथ दण्डाः— ( बो. ध. सू. १. ३ ) " मूर्धललाटनासाग्रप्रमाणा याज्ञियवृक्षस्य दण्डाः " इति ॥ गृ०सङ्ग्रहे तु—" याज्ञियाश्चाऽपि सर्वेषामव्रणा ऋजवः शुभाः । अनुद्वेगकरा नृणां सत्वचो नाऽग्निदूषिताः ॥ शिरोललाटनासाग्रैस्ते च वर्णक्रमान्विताः " इति विशेष उक्तः ॥

॥ अथोपवीतम् ॥ तत्र श्रुतिः—" दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतꣳ संवीतं मानुषम् " इति ॥ ( बो. ध. सू. १. ८ ) " कौशं सौत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतमानाभेर्दक्षिणं बाहुमुद्धृत्य सव्यमवधाय शिरोऽव-

दध्यात् ॥ विपरीतं पितृभ्यः ॥ कण्ठेऽवसक्तं निवीतम्। अधोऽवसक्तमधोवीतम्" इति ॥ (बो. गृ. प. सू. २. २) "कथमु खलु यज्ञोपवीतं विजानीयात्। तदेतद्दक्षिणस्य हस्तस्याऽधस्ताद्भवति योऽयं दक्षिणो हस्तः स यज्ञः इति 'यज्' इत्ययं शब्दो देवपूजा-सङ्गतिकरणदानेषु यस्मादेतानि कुर्वते तस्माद्यज्ञः। वाग्यज्ञस्तस्याऽग्निरधिदैवतं स चात्र यतस्तस्माद्यज्ञोपवीतम्। यश्चायमङ्गुष्ठस्स विष्णुस्स यज्ञस्याऽधिदैवतं तस्माच्च भवतीति, तीर्थत्वाच्च। वागेव यज्ञो यद्वाचा वदति तदनेन निर्वर्तयतीति" इति॥ (बो. गृ. शे. सू. २. ७) "तन्तुद्विगुणितं सूत्रं विष्णुना त्रिगुणीकृतम्। चतुर्वेदस्य चत्वारि त्रिवेदस्य त्रिकं भवेत्॥ द्वे स्यातां वै द्विवेदस्य एकमेवैकवेदिनः" इति॥ तत्र मनुः — "कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्" इति। देवलस्तु—"कार्पास-क्षौमगोवालशाणवल्कतृणादिकम्। यथा सम्भवतो धार्यमुपवीतं द्विजातिभिः" इति ॥ तत्प्रमाणादिकं सं० मालायाम्—"नाभे-रूर्ध्वमनायुष्यमधो नाभेस्तपः क्षयः। तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः" इति वासिष्ठः॥ "उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते। एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः" इति देवलः॥ गृ० सङ्ग्रहेऽपि—"स्तनादूर्ध्वमधोनाभेर्न धार्यं तत्कथञ्चन। ब्रह्मचारिण एकं स्यात् स्नातकप्रभृति द्वयम्॥ एकवेदस्य चैकं स्यादिति वा वेदसङ्ख्यया॥ बहूनि चायुष्कामस्येत्यादि काम्यं प्रचक्षते" इति॥ "तृतीयमुत्तरीयार्थं वस्त्राऽभावे तदिष्यते" इति स्मृत्यर्थसारे॥ उपवीतधारणे विशेषस्तत्रैव— "ब्रह्मसूत्रेऽ-पसव्येंऽसे स्थितं यज्ञोपवीतिता। प्राचीनावीतिता सव्ये कण्ठस्थे तु निवीतिता" इति॥ स्मृतिसारसमुच्चये—"तिलकं ब्रह्मसूत्रञ्च पाद्यमाचमनीयकम्। तिष्ठन्नपि यदा कुर्यात्सद्यः शूद्रो भवेद्द्विजः" इति शाट्यायनिः॥ "यज्ञोपवीतग्रहणमभिमन्त्र्य प्रदापितम्। उपविश्यैव तद्धार्यं शास्त्रस्यैवं विनिश्चयः" इति गालवः॥ वैद्यनाथीयेऽपि— "उपविश्याऽऽसने दार्भे प्राणानायम्य वाग्यतः। मन्त्रं

१. 'नाभेरधोऽवसक्तं' इत्यर्थः। एतदेव संवीतं मानुषं इति चोच्यते। अञ्जनाभ्यञ्जनोद्वर्तनादिषु मनुष्यकार्येषु तथा कर्तव्यम्॥

सदैवमुच्चार्य ब्रह्मसूत्रं गले क्षिपेत् ॥ गृहस्थस्य वनस्थस्य सूत्रं प्रति पुनः पुनः । मन्त्रोच्चारणमाचामो द्वितयं क्रमशः स्मृतम् " इति भारद्वाजः ॥ यज्ञोपवीतपदाभिधेयत्वमुक्तं गृ० संग्रहे— " यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः । उपवीतं यतोऽस्येदं तस्माद्यज्ञोपवीतकम् " इति ॥ छेदविनाशादौ तद्विसृज्य पुनर्नवं धार्यमित्युक्तं गृ० सङ्ग्रहे— " विच्छिन्नं वाप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत् " " छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम् । विधवाद्याभिरथवा सूत्रं गृह्णीत वै शुचिः " " मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्येद्विनष्टानि गृहीत्वाऽन्यानि मन्त्रवत् " इति ॥ अथोपवीतकरणमाह सं० मालायां भृगुः— " त्रिवृदूर्ध्ववृतं कुर्यात्तन्तुत्रयमधोवृतम् । त्रिवृतं तूपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते " इति ॥ स्मृत्यर्थसारेऽपि— " शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके । आवेष्ट्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः ॥ अब्लिङ्गकैस्त्रिभिस्सम्यक्प्रक्षाळ्योर्ध्ववृतं तु तत् । अप्रदक्षिणमावृत्य सावित्र्या त्रिगुणीकृतम् ॥ अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम् । त्रिरावेष्ट्य दृढं बध्वा हरिब्रह्मेश्वरान्नमेत् ॥ यज्ञोपवीतं परममिति मन्त्रेण धारयेत् । सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् । सावित्र्या दश कृत्वोऽद्भिर्मन्त्रिताऽभिस्तदुक्षयेत् " इति ॥

( बो. गृ. शे. सू. २.७ )— अथ यज्ञोपवीतविधिः— शुचिराचम्य शुद्धया ब्राह्मणकन्यकया ब्राह्मणविधवया वा शुचिस्स्नातया कृताचमनीयया निर्मितं सूत्रं गृहीत्वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य चतुरङ्गुलमात्रं षण्णवतिसूत्रं परिमण्डलं वा द्वितीयमेवं तृतीयमद्भिः प्रक्षाळ्य 'आपो हि ष्ठा' इति तिसृभिः 'हिरण्यवर्णाश्शुचयः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनाऽनुवाकेन च मार्जयित्वा शुचौ देशे याज्ञिकवृक्षशाखायामवलम्ब्य सजीवं बध्नाति – " पितृभ्यो नमः " इति ॥ अथ

सव्यहस्ते मृदं गृहीत्वा " ॐ भूः प्रतिष्ठापयामि । ॐ भुवः प्रतिष्ठापयामि । ॐ स्वुवः प्रतिष्ठापयामि । ॐ भूर्भुवस्स्वुवः प्रतिष्ठापयामि " इति प्रतिष्ठाप्य व्याहृतीभिः पत्रपुष्पफलदूर्वास्तत्र निक्षिप्य करतलं त्रिस्सन्ताड्याऽपसव्यं वलितं कुर्वञ्जपति— " भूर्भुवस्स्वुवः । ओजो बलम् । ब्रह्म क्षत्रम् । यशो महत् । सत्यं तपो नाम । रूपममृतम् । चक्षुः श्रोत्रम् । मन आयुः । विश्वं यशो महः । समं तपो हरो भाः । जातवेदा यदि वा पावकोऽसि । वैश्वानरो यदि वा वैद्युतोऽसि । शं प्रजाभ्यो यजमानाय लोकम् । ऊर्जं पुष्टिं ददद्भ्यावर्वृत्स्व " इत्येतमनुवाकम् ॥ अथ सावित्र्या पुनस्त्रिगुणीकृत्य प्रदक्षिणं वलितं कुर्वन्नभिमन्त्रयते—" ॐ भूरग्निश्च पृथिवीश्च माश्च । त्रींश्च लोकान्संवत्सरञ्च । प्रजापतिस्त्वा सादयतु । तया देवतयाऽऽङ्गिरस्वद्ध्रुवा सीद " इति दक्षिणावृत्तिम् ॥ " भुवो वायुश्चाऽन्तरिक्षञ्च माञ्च । त्रींश्च लोकान्० सीद " इति मध्यमाम् ॥ " स्वरादित्यश्च दिवञ्च माञ्च । त्रींश्च लोकान्० सीद " इत्युत्तराम् । " भूर्भुवस्वश्चन्द्रमसञ्च दिशश्च माञ्च । त्रिंश्च लोकान्० सीद " इति त्रिधाऽवृत्तिञ्च ॥ ततस्त्रिरावेष्ट्य दृढं ग्रन्थिं करोति— " यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात् " इति ॥ " ॐ भूः प्रतिष्ठापयामि " इत्यादिभिः पुनः प्रतिष्ठाप्य " उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आ वह पितृन्हविषे अत्तवे " इति जपित्वा प्रदक्षिणतो दृढं करोति ॥ अथ वर्तित्रयं ब्रह्मविष्णुमहेश्वरात्मकं विभाव्य " ओङ्कारोऽग्निश्च नागश्च सोमः पितृप्रजापती । वायुः सूर्यो विश्वेदेवा इत्येते तन्तुदेवताः " इत्युक्तदेवतास्तत्राऽऽवाह्य सम्पूज्य प्रणम्य " देवस्य त्वा० हस्ताभ्यामाददे " इति तदादाय

१. " सव्ये मृदं गृहीत्वाऽस्मिन्स्थापयेद्भूरिति ब्रुवन् । पत्रं पुष्पं फलञ्चात्र व्याहृतीभिः प्रनिक्षिपेत् ॥ त्रिस्ताडयेत्करतलं देवानामपि तृप्तये । भ्रमता वेक्षितव्यं तु पितृणां तृप्तिदं हि तत् " इति गृ० सङ्ग्रहे ॥

" उद्वयं " इत्यादित्यं दर्शयित्वा " यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः " इति मन्त्रेण धारयेत् ॥ ॥ अनेन विधिना यज्ञोपवीतनिर्माणाऽसम्भवे तूष्णीमेव निर्मितं यज्ञोपवीतं पूर्वोक्तमन्त्रैरभिमन्त्र्य धारयेत् ॥

राजन्यवैश्ययोरुपनयनम् ॥ ( बो. गृ. शे. सू. २·८ ) " अथ राजन्यवैश्ययोरुपनयनं प्रसिद्धम् । एतावदेव नाना । आचार्य एव पक्वाज्जुहोति । ब्रह्मसूत्रमवोध्धृत्य त्रिष्टुब्भी राजन्यस्य ' जिघर्म्यग्निम्, आ त्वा जिघर्मि, आयुर्दा अग्ने हविषो जुषाणः ' इति ॥ जगतीभिर्वैश्यस्य ' जनस्य गोपा अजनिष्ट जागृविः, त्वामग्ने मानुषीरीडते विशः, सप्त ते अग्ने समिधः सप्त जिह्वाः" इति । वैश्यस्य रथकारस्यैतावदेव नानाऽऽचार्य एव पक्वाज्जुहोति – ' तत्सवितुर्वरेण्यम् ' इति । अथाज्याहुतीरुपजुहोति— ' क्षेत्रियै त्वा निर्ऋत्यै त्वा ' इति षड्भिरनुच्छंदसम् । नात्र जगतीभिर्वैश्यस्य जुहोति ॥ अथाग्रेणाग्निं हुतशेषं दत्वा विरमेत् । ब्राह्मणेन क्षत्रियायामुत्पन्नो ब्राह्मणवदेवैतावदेव नाना । तस्य ' क्षेत्रियै त्वा ' इति व्याहृतीभिश्चेत्युपहोमः । क्षत्रियवदम्बष्ठस्य ' क्षेत्रियै त्वा ' इत्येवोपहोमः । क्षत्रियाद्वैश्यायामुत्पन्नः क्षत्रियवदेव ' क्षेत्रियै त्वा ' सावित्र्या चोपहोमः । वैश्याच्छूद्रायामुत्पन्नस्तूष्णीं वैश्यवत् ॥ ' गायत्री त्रिष्टुब्जगत्यः ' तत्सवितुर्वरेण्यम, आसत्येन, युञ्जते मनः ' इति सावित्र्यो यथाक्रमं ब्राह्मणक्षत्रियवैश्यानाम् " ॥

अथोपनयनप्रयोगः ॥ कर्ता पूर्वेद्युः पत्न्या संस्कार्येण च सहितः प्रातर्मङ्गलस्नानं कृत्वा सन्ध्योपासनादि नित्यकर्मविधानान्ते वैश्वदेवं हुत्वा पवित्रपाणिराचम्य देशकालौ सङ्कीर्त्य " मम कुमारकस्य श्वःकरिष्यमाणोपनयनाङ्गतया विहितं स्वस्तिपुण्याहवाचनपूर्वकं मातृकापूजनं नान्दीसमाराधनं कुलदेवतास्थापनञ्च करिष्ये " इति सङ्कल्प्य, निर्विघ्नता सिध्यर्थं गणपतिं सम्पूज्य " नान्दीमुखाः पितरः प्रीयन्ताम् " इति पुण्याहं वाचयित्वा मातृकापूजनं नान्दीश्राद्धं कुलदेवतास्थापनञ्च कृत्वा रात्रावङ्कुरार्पण-

मुदकशान्तिप्रतिसरबन्धौ च कृत्वा श्वोभूते कृतस्नानादिचतुष्टयो दर्भासने प्राङ्मुख उपविश्य स्वदक्षिणतो भार्यां तद्दक्षिणतः संस्कार्यं च तथैवोपवेश्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम कुमारकस्योपनयनं कर्तुमादौ शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृध्यर्थमभ्युदयार्थं चैभिर्ब्राह्मणैः सह स्वस्तिपुण्याहवाचनं निर्विघ्नतासिध्यर्थं गणपतिपूजनञ्च करिष्ये" इति सङ्कल्प्य, गणपतिं सम्पूज्य "मेधाकरेन्द्रः प्रीयताम्" इति पुण्याहं वाचयित्वा, उपनेतृत्वाधिकारार्थं कृच्छ्रत्रयं कृत्वा[1] गायत्र्युपदेशाधिकारसिध्यर्थं द्वादशसहस्रगायत्रीजपं स्वयं वा ब्राह्मणद्वारा वा कुर्यात्॥ अथाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम कुमारकस्य द्विजत्वसिद्धिपूर्वकवेदाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमुपनयनाख्यं कर्म करिष्ये" इति संकल्प्य, कुमारं ब्रह्मचारिभिः सह भोजयित्वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य देवयजनं कल्पयित्वा मङ्गलानि संस्तीर्य, तत्पश्चादाचार्यः स्वयं प्राङ्मुख उपविश्य स्वाग्रतः कुमारं प्रत्यङ्मुखमुपवेश्य तस्य चौलवत्तूष्णीं केशानोप्य स्नातं[2] शुचिवाससं मङ्गलतिलकालंकृतं बद्धशिखं बद्धकौपीनं[3] तं कुमारं मङ्गलासने प्राङ्मुखमुपवेश्य तूष्णीं द्विराचमय्य "कामचारकामवादकामभक्षणदोषपरिहारद्वारा उपनेयत्वाधिकारसिद्ध्यर्थं कृच्छ्रत्रयं तत्प्रत्याम्नायहिरण्यद्वारा करिष्ये" इति संकल्पपूर्वकं कुमारेण कृच्छ्रत्रयं कारयित्वा आचार्यो देशकालसंकीर्तनपूर्वकमस्य कुमारकस्य श्रौतस्मार्तकर्मानुष्ठानयोग्यतासिद्ध्यर्थं ब्रह्मतेजोऽभिवृध्यर्थं यज्ञोपवीतं धारयिष्ये, इति संकल्प्य (कुमारेणापि मम श्रौतस्मार्त-

---

१. "कृच्छ्रत्रयञ्चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत्" इति॥ "गुरुर्द्वादशसाहस्रं सावित्रीं प्रजपेत्ततः। स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम्" इति च सं० मालायाम्॥ २. "स्नापयित्वोदकलशैर्वासोभूषाशिखान्वितम्" इति प्र० तिलके॥ ३. "एतदादि सदा धार्यं कौपीनं कटिसूत्रकम्" इति स्मृत्यर्थसारे।

कर्मानुष्ठानयोग्यतासिध्यर्थं यज्ञोपवीतधारणमहं करिष्ये इति संकल्पं कारयित्वा ) निर्विघ्नतासिध्यर्थं गणपतिं सम्पूज्य भुक्तवद्भ्यो ब्रह्मचारिभ्यो गोपीचन्दनयज्ञोपवीतफलदक्षिणादिकं दत्त्वाचार्यो विधिवन्निर्मितं यज्ञोपवीतं ज्योतिर्विद्भिर्मङ्गलाष्टके पठ्यमाने आचान्तं कुमारं प्रतिमुञ्चन्वाचयति— " यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः " इति ॥ ततो यथाचारं ब्राह्मणाः श्रद्धामेधाप्रज्ञाभिवृध्यर्थं श्रद्धासूक्तब्रह्मसूक्तमेधासूक्तादिभिः कुमारमभिमन्त्रयेयुः । तेभ्यो यथाशक्ति फलहिरण्यादिकं दद्यात् ॥ अथैनं यज्ञोपवीतिनं कुमारं मन्त्रवदाचमय्य दक्षिणे हस्ते गृहीत्वा " स्वस्ति पन्थामनुचरेम " इत्यादि मङ्गलमन्त्रघोषपुरस्सरं देवयजनमुदानयति । तत्र स्थण्डिलात्पश्चिमभागे स्वस्य दक्षिणतः कुमारं प्राङ्मुखमुपवेश्य स्वयं च प्राङ्मुख उपविश्य देवयजनोल्लेखनप्रभृति लौकिकाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ संकीर्त्य " मम कुमारकस्य द्विजत्वसिध्या वेदाध्ययनाधिकारसिध्यर्थमुपनयनहोमं करिष्ये " समित्त्रयमादाय-उपनयनहोमः कर्म, आघारवत्तन्त्रम्, पञ्चदशदारुरिध्मः, अग्नीषोमावाज्यभागौ, जातवेदा नामाग्निः, मेधाकरेन्द्रो देवता, चरुर्हविः, अग्निः स्विष्टकृत्, इत्याद्यन्वाधाय पात्रासादनकाले " अश्मानं दण्डम्[2]अजिनं वस्त्रं मौञ्जीं समिद्[3]द्वयम् । व्रतार्थं समिधश्[4]चेति सादयेत्सह पात्रकैः " इति कारिकोक्तपात्राण्यासाद्य प्रोक्षणीसंस्काराद्यग्निमुखान्तं कृत्वा पालाशीं समिधमाज्येनाङ्क्त्वाभ्याधापयन् वाचयति— " ॐ आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं

१. " उपनीतेस्तु समये दातव्यं गोपिचन्दनम् । ब्रह्मवर्चसकामेन यज्ञसूत्रं प्रदापयेत् " इति स्मृ० समुच्चये ॥ २ मुखसम्मितं पालाशं दण्डम् । ३. पालाशीं समिधम् । ४. पालाशीः समिधः ।

स्वाहा" इति। आयुर्दाग्नेय इदं०। अथैनमुत्थाप्याग्न्याचार्यावन्तरेण नीत्वाग्नेरुत्तरतः सादितमश्मानं दक्षिणेन पदा आस्थापयति— "आतिष्ठेममश्मानमश्मेव त्व ᳪ स्थिरो भव। अभितिष्ठ पृतन्यतः सहस्व पृतनायतः" इति॥ यथेतं पुनरानीय वास उदक्परिधापयन् वाचयति— "या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त॥ तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः" इति॥ परिहितमनुमन्त्रयते— "परिधत्त धत्त वाससैन ᳪ शतायुषं कृणुहि दीर्घमायुः। बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ॥ जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा॥ शतञ्च जीव शरदस्सुवर्चा रायश्च पोषमुपसंव्ययस्व। परीदं वासो अधि धाः स्वस्तयेऽभूरापीनामभिशस्तिपावा॥ शतञ्च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन्" इति॥ अथैनं मौञ्जीं मेखलां त्रिवृतां त्रिः प्रदक्षिणं परिव्ययन् वाचयति— "इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात्। प्राणापानाभ्यां बलमाभरन्ती प्रिया देवाना ᳪ सुभगा मेखलेयम्" इति॥ परिवीतामनुमन्त्रयते— "ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षस्सहमाना अरातीः॥ सा नस्समन्तमनुपरीहि भद्रया भर्तारस्ते मेखले मा रिषाम" इति॥ नाभिदेशे ग्रन्थिं करोति— "प्राणानां ग्रन्थिरसि स मा विस्रसः" इति। अथास्मै चतुरङ्गुलविस्तीर्णमुत्तरलोमाजिनं प्रतिमुञ्चन् वाचयति— "मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविर ᳪ समिद्धम्। अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम्" इति॥ अथास्मै पालाशं बैल्वं वा शिरस्सम्मितं दण्डं प्रयच्छन् वाचयति—"सोमोऽसि सोमपं मा कुरु" इति पालाशम्॥ बैल्वं चेत् "ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा" इति॥ अथाचार्यः कुमारं पृच्छति—

१. पालाशबैल्वयोरभावे 'अहं वृक्षस्य रेरिति दद्यान्मन्त्रेण याज्ञिकान्' इति गृ० संग्रहे।

'को नामासि' इति। 'हरिशर्मास्मि' इति कुमारः स्वनाम निर्दिशन्प्रतिवदेत् ॥ अथैनमाचार्यो दक्षिणे हस्ते गृह्णाति--"यस्मिन्भूतं च भव्यं च सर्वे लोकाः समाहिताः। तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णामि हरिशर्मन्" इति सम्बुध्यन्तं बटोर्नाम निर्दिशेत्। अथैनं देवताभ्यः परिददाति—"देवेभ्यस्त्वा परिददामि विश्वदेवेभ्यस्त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददामि हरिशर्मन्" इति॥ ततो ज्योतिर्विदादिष्टे सुमुहूर्ते द्विजमङ्गलाशीर्भिरभिनन्दितं कृपादृष्ट्यानुगृहीतं बटुमात्मनोऽङ्कसम्मुखमुपनयते—"देवस्य त्वा० हस्ताभ्यामुपनये हरिशर्मन्" इति ॥ किञ्चित्कालं तन्मुखं सम्यगीक्षेत। अथ कुमारो यथास्थानमुपविश्य पक्वाज्जुहोति—"ॐ यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योऽध्यमृतात्सम्बभूव। समेन्द्रो मेधया स्पृणोत्वमृतस्य देव धारणो भूयासं ३ यश्छन्दसामृषभो० भूयास ँ स्वाहा" इति॥ मेधाकरेन्द्रायेदं० ॥ अथाचार्यः स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति— "ॐ क्षेत्रियै त्वा निर्ऋत्यै त्वा। द्रुहो मुञ्चामि वरुणस्य पाशात् ॥ अनागसं ब्रह्मणे त्वा करोमि। शिवे ते द्यावापृथिवी उभे इमे स्वाहा ॥ ब्रह्मणे द्यावापृथिवीभ्यामिदं ० ॥ ॐ शन्ते अग्निः सहाद्भिरस्तु। शं द्यावापृथिवी सहौषधीभिः ॥ शमन्तरिक्ष ँ सह वातेन ते। शं ते चतस्रः प्रदिशो भवन्तु स्वाहा ॥ अग्नये द्यावापृथिवीभ्यामन्तरिक्षाय दिग्भ्य इदं० ॥ ॐ या दैवीश्चतस्रः प्रदिशः । वातपत्नीरभिसूर्यो विचष्टे ॥ तासां त्वा जरस आदधामि। प्रयक्ष्म एतु निर्ऋतिं पराचैः स्वाहा ॥ दिग्भ्यो वातपत्नीभ्य इदं० ॥ ॐ अमोचि यक्ष्माद्दुरितादवर्त्यै। द्रुहः पाशान्निर्ऋत्यै चोदमोचि ॥ अहा अवर्ति मविदत्स्योनम्। अप्यभूद्भद्रे सुकृतस्य लोके स्वाहा ॥ अग्नय इदं० ॥ ॐ सूर्यमृतं

१. अयमेव प्राधान्येनोपनयनशब्दार्थः ॥

तमसो ग्राह्या यत् । देवा अमुञ्चन्नसृजन्व्येनसः ॥ एवमहमिमं क्षेत्रियाज्जामिशꣳसात् । दुहो मुञ्चामि वरुणस्य पाशात्स्वाहा ॥ देवेभ्य इदं० ॥ ॐ बृहस्पते युवमिन्द्रश्च वस्वः । दिव्यस्येशाथे उत पार्थिवस्य ॥ धत्तꣳ रयिꣳ स्तुवते कीरये चित् । यूयं पात स्वस्तिभिः सदा नः स्वाहा ॥ बृहस्पतय इन्द्रायेदं०" ॥ एवं ब्रह्मसूक्तेन—" ॐ ब्रह्म जज्ञानं० विवः स्वाहा ॥ सर्वत्र, ब्रह्मण इद० ॥ ॐ पिता विराजा ० वर्धयन्तः स्वाहा ॥ ॐ ब्रह्म देवान् ० आत्मना स्वाहा ॥ ॐ अन्तरस्मिन्निमे ० स्पर्धितुꣳ स्वाहा ॥ ॐ ब्रह्मन्देवाः ० नावीवान्तः समाहिताः स्वाहा ॥ ॐ चतस्र आशाः ० आहुतीनाꣳ स्वाहा " इति ॥ अथ स्विष्टकृदाद्युत्तर-परिषेकात्प्राक्कृत्वाग्रेणाग्निं पलाशपर्णेषु हुतशेषं निदधाति — " नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः " इति ॥ ततो बटुः " मम गायत्रीग्रहणयोग्यतासिद्ध्यर्थं सावित्रीव्रतोपक्रमहोमं करिष्ये " इति सङ्कल्प्याग्निं परिषिच्यालंकृत्य पालाशीर्याज्ञिकानां वृक्षाणामन्यतमस्य वा पूर्वासादिताश्चतस्रो घृतान्वक्ताः समिधोऽभ्या-दधाति । आचार्योऽभ्याधापयन् वाचयति— " ॐ अग्ने व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ अग्नये व्रतपतय इदं ० ॥ ॐ वायो व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ वायवे व्रतपतय इदं ० ॥ ॐ आदित्य व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ आदित्याय व्रतपतय इदं ० ॥ ॐ व्रतानां व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ व्रतानां व्रतपतय इदं ०" ॥ पुनः परिषिञ्चेत् ॥ अथाचार्योऽपरे-णाग्निमुदगग्रं कूर्चं निधाय तस्मिन् प्राङ्मुख उपविशति— " राष्ट्रभृदस्याचार्यासन्दीमात्वद्योषम् " इति ॥ कुमारस्तस्य पुरस्ताद्दर्भेषु

१. " अथारभेत सावित्रं व्रतं बालः स्वयं ततः " इति गृ० संग्रहे ॥

प्रत्यङ्मुख आसीनो दक्षिणेन पाणिना गुरोर्दक्षिणं पादं सव्येन सव्यं पादञ्चोपसङ्गृह्य जानुभ्यामवनिं गत्वा 'सावित्रीं भो अनुब्रूहि' इत्याचार्यं प्रार्थयेत् । आथाचार्यस्तस्मै 'ओम्' इति प्रतिपद्य दक्षिणे कर्णे उपदिशति सावित्रीं पच्छोऽर्धर्चशः समस्तां प्रथमं पादादिषु तिस्रो व्याहृतीरथार्धर्चयोरादावाद्ये द्वे ततः कृत्स्नाया आदावुत्तमामित्येवं क्रमेण विहृता व्याहृतीः सप्रणवाः संयोज्य— "ॐ भूः तत्सवितुर्वरेण्यम्, ॐ भुवः भर्गो देवस्य धीमहि, ॐ सुवः धियो यो नः प्रचोदयात् ॥ ॐ भूः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । ॐ भुवः धियो यो नः प्रचोदयात् । ॐ सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" इत्युपदिशेत् ॥ ततो बटुराचार्यमभिवाद्य तस्योत्तरत उपविश्य पक्वावशिष्टादामलकप्रमाणं हविरुपादाय प्राश्नाति— "शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा ॥ कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः ॥ श्रुतं मे गोपाय" इति प्राश्याप उपस्पृश्याचम्यादित्यमुपतिष्ठते— "उद्वयं तमसस्परि॰ ज्योतिरुत्तमम्" इति ॥ अथैनमाचार्यः सꣳशास्ति— "ब्रह्मचार्यसि" इति ॥ 'अस्मि' इति बटुर्वदेत् । "अपोऽशान" इत्याचार्यः । 'अश्नामि' इति बटुः ॥ "कर्म कुरु" इत्याचार्यः ॥ 'करिष्यामि' इति बटुः ॥ "मा दिवा सुषुप्थाः" इत्याचार्यः ॥ 'न स्वप्स्यामि' इति बटुः ॥ "समिधमाधेहि" इत्याचार्यः ॥ 'आधास्यामि' इति बटुः ॥ "भैक्षाचर्यं चर" इत्याचार्यः ॥ 'चरिष्यामि' इत बटुः ॥ "सदारण्यात्समिधमाहर" इत्याचार्यः ॥ 'आहरिष्यामि' इति बटुः ॥ "उदकुम्भञ्चाहर" इत्याचार्यः ॥ 'आहरिष्यामि' इति

---

१. 'योज्यास्तिस्रस्ताश्च पादत्रयादावर्धर्चादौ व्याहृती द्वे पुरस्तात् । कृत्स्नोक्तायां स्यात्तदादौ तृतीया व्याहृत्याद्यास्ताश्च सर्वास्सतारा:' इति प्र० रत्ने ॥

बटुः ॥ " आचर्याधीनो वेदमधीष्व " इत्याचार्यः ॥ ' अध्येष्ये ' इति बटुः ॥ एवमादिष्टो बटुः काले सर्वमनुतिष्ठेत् ॥ अथास्मा अरिक्तं पात्रं प्रयच्छन्नाह— " मातरमेवाग्रे भिक्षस्व " इति ॥ स बटुर्मातरमेवाग्रे भिक्षते— " भवति भिक्षां देहि " इति ॥ तथाऽप्रत्याख्यायिनीरन्या अपि भिक्षयित्वा तत्सर्वं समाहृत्याचार्याय प्राह— " भैक्षमिदम् " इति ॥ तत् " सुभैक्षम् " इत्याचार्यः प्रतिगृह्णाति ॥ अथोत्तरेणाग्निं तण्डुलपुञ्जे द्वे स्त्रीप्रतिकृती कृत्वा तयोः क्रमेण श्रद्धां मेधां चावाह्य " श्रद्धायै नमः, मेधायै नमः " इति गन्धमाल्यादिभिर्यथोपपादमभ्यर्च्य त्रिवृतान्नेन हिरण्येन वा ब्राह्मणान्संपूज्य "अस्य श्रद्धामेधापूजाकर्मणः ॐ पुण्याहं भवन्तो ब्रुवन्तु ॥ ॐ स्वस्ति भवन्तो ब्रुवन्तु ॥ ॐ ऋद्धिं भवन्तो ब्रुवन्तु ॥ श्रद्धामेधे प्रियेताम् " इति पुण्याहं वाचयित्वा श्रद्धामेधे उद्वास्योत्तर-परिषेकादिशेषं कर्म कृत्वा " अनेनोपनयनकर्मणा श्रीपरमेश्वरः प्रीयताम् " इति कर्मेश्वराय समर्पयेत् ॥ " कृतस्य कर्मणः साङ्गता सिद्ध्यर्थं यावच्छक्ति ब्राह्मणान् भोजयिष्ये, यथाशक्ति दक्षिणां दातुमहमुत्सृजे " इति सङ्कल्प्य ब्राह्मणान् भोजयित्वा दक्षिणादिभि स्तोषयेत् ॥ ततः पुरन्ध्र्यो यथाचारं मङ्गलार्तिक्यं कुर्युर्ब्राह्मणाश्चाशिषो दद्युः ॥ ॥ ततो बटुराह्निककाण्डोक्तप्रकारेण मध्याह्न-सन्ध्यांब्रह्मयज्ञञ्च विधायास्तमित आदित्ये सायंसन्ध्यानन्तरमग्निकार्यं कुर्यात् ॥ अग्निकार्यानन्तरं गुरुं मातरं पितरं मातुलमाचार्यमन्यांश्च त्रिवर्षपूर्वानेवमेव क्रमेणाभिवादयेत् ॥ एवमुपक्रान्तसावित्रव्रतो बटुः सायंप्रातरग्निकार्यं कुर्वन् त्र्यहमेतमग्निं धारयेदक्षारलवणं च भुञ्जीताधः शयीत ॥

---

१. " यावद्ब्रह्मोपदेशस्तु तावत्सन्ध्यादिकं न च । ततो मध्याह्नसन्ध्यादि सर्वं कर्म समाचरेत् " इति वै० जैमिनिः ॥ " अनुपाकृतवेदस्य कर्तव्ये ब्रह्मयज्ञके । वेदस्थाने तु सावित्री गृह्यतेऽन्यत्समं भवेत् ॥ काण्डर्षितर्पणं नित्यमुपेतेन निवीतिना " इति कपर्दिकारिका ॥ " स्नानञ्च भोजनं तद्वत्सन्ध्योपासनमेव च । ब्रह्मयज्ञश्च नित्यानि सामान्यस्यापि तानि तु " इति गृ० संग्रहे ॥ २. ते च " आयुष्मान् भव सौम्य ३ " इत्याभि-वदेयुः ॥ ' आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ' इति मनूक्तेः ॥

अथ चतुर्थेऽहनि प्रातः स्नानसन्ध्याग्निकार्याणि निर्वर्त्यैतमग्निमादाय पलाशवृक्षमूलं गत्वाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "ममोपनयनव्रताङ्गतया विहितं सुश्रवःपूजनं करिष्ये" इति सङ्कल्प्य "सुश्रवः सुश्रवसं मा कुरु यथा त्वꣳ सुश्रवः सुश्रवा अस्येवमहꣳ सुश्रवः सुश्रवा भूयासं यथा त्वꣳ सुश्रवस्सुश्रवा देवानां निधिगोपोऽस्येवमहं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम्" इति तं पलाशं प्रदक्षिणं परिसमूह्य गन्धादिभिरभ्यर्चयेत् ॥ अथ तस्याग्रेणोत्तरेण वा तमग्निं प्रतिष्ठाप्य प्राणानायम्य "सावित्रीव्रतविसर्जनहोमं करिष्ये" इति सङ्कल्प्याग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यस्थालीं स्रुवं प्रोक्षणीं च चतस्रः पालाशीः समिधश्चेत्यासाद्य संस्कृताभिः प्रोक्षणीभिः प्रोक्ष्याज्यं संस्कृत्य स्रुवं सम्मृज्याग्निमलंकृत्याथाव्रत्यप्रायश्चित्तं करिष्ये, इति सङ्कल्प्य "यन्म आत्मनः, पुनरग्निः" इति द्वाभ्यां स्रुवाहुती हुत्वा चतस्रो घृतान्वक्ताः पालाशीः समिधोऽभ्यादधाति। आचार्योऽभ्याधापयन् वाचयति— "ॐ अग्ने व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा, अग्नये व्रतपतय इदं० ॥ ॐ वायो व्रतपते सावित्रं व्रतमचारिषं० राधि स्वाहा, वायवे व्रतपतय इदं० ॥ ॐ आदित्य व्रतपते सावित्रं० राधि स्वाहा, आदित्याय व्रतपतय इदं० ॥ ॐ व्रतानां व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा, व्रतानां व्रतपतय इदं०" इति ॥ पुनः पूर्ववत् सुश्रवसमभ्यर्च्य ब्राह्मणान् सम्पूज्य "सुश्रवाः प्रीयताम्" इति पुण्याहं वाचयित्वा अत्रैव पालाशवृक्षमूले दण्डमजिनं मेखलां वासश्च विसृज्याप उपस्पृश्यान्यानि मन्त्रवद्धारयेत् । उत्सृष्टं वास आचार्य आदत्ते— "यस्य ते प्रथमवास्यꣳ हरामस्तं त्वा विश्वे अनुमदन्तु देवाः । तं त्वा भ्रातरस्सुहृदो वर्धमानमनु जायन्तां बहवः सुजातम्" इति ॥ अथाग्निं पुनः परिषिच्य समिधमाधायोपस्थानादिकं कृत्वा तमग्निमात्मनि समारोपयते— "ॐ या ते अग्ने यज्ञिया तनूस्त-

येह्यारोहात्मानम् । अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि ॥ यज्ञो भूत्वा यज्ञमासीद स्वां योनिम् ॥ जातवेदो भुव आजायमानः सक्षय एहि " इति ॥ तं समारोपितमग्निं पुनरग्निकार्यकाले— " उपावरोह जातवेदः पुनस्त्वम् । देवेभ्यो हव्यं वह नः प्रजानन् ॥ आयुः प्रजा ँ रयिमस्मासु धेहि । अजस्रो दीदिहि नो दुरोणे, भूर्भुवस्सुवरोमग्निं प्रतिष्ठापयामि " इति लौकिकाग्नाववरोप्याग्निकार्यं कृत्वा तथैव समारोपयेत् ॥ अथाधो नाभ्युपरि जान्वाच्छाद्य दण्डमजिनं मेखलां च धारयन् श्राद्धसूतकमैथुनमधुमांसादिवर्जयन् भैक्षाहारोऽधःशायी चाचार्यस्य गृहानेतीति विज्ञायते ॥

अथ प्रसङ्गादुपनयनाग्निनाशे प्रायश्चित्तम् ॥ यद्युपनयनाग्निराचतुर्थाद्दिनादुद्वातः स्यात्तत्र प्रायश्चित्तम्— " अपहता असुरा रक्षा ँ सि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः " इति सर्वं तद्भस्म प्रोक्ष्य " अयन्ते यो निर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथानो वर्धया रयिम् " इति तद्भस्म समिधि समारोप्य गोमयेनोपलिप्य स्थण्डिलोल्लेखनादिलौकिकाग्निं प्रतिष्ठाप्य तत्रैतां समिधमादधाति— " ॐ आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमासीद साध्या । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ उद्बुध्यस्वाग्ने ० तन्तुमेतम् " इति द्वाभ्याम् ॥ ॥ अथाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यास्मिन्नुपनयनव्रतमध्ये अग्न्युद्वातप्रायश्चित्तहोमं करिष्ये, प्रायश्चित्तहोमः कर्म, अपूर्वं तन्त्रं, चित्तिर्नामाग्निः, अग्न्यादयो देवताः ' आज्यं हविः, सद्यो यक्ष्ये, इति सङ्कल्प्याज्यसंस्कारान्तं कृत्वास्रुवस्रुवं सम्मृज्याग्निमलंकृत्य व्याहृतीर्हुत्वा प्रायश्चित्ताज्याहुतीर्जुहोति— " ॐ अयाश्चाग्ने० भेषज ँ स्वाहा " ॥ अग्नये अयस इदं० ॥ अथ स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं जुहोति— " ॐ अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाग्नीत् । मित्र उपवक्ता । सोमः सोमस्य पुरोगाः ।

शुक्रः शुक्रस्य पुरोगाः । आतास्त इन्द्र सोमाः । वातापेर्हवनः श्रुतः स्वाहा" इति ॥ वाचस्पतये ब्रह्मण इदं ० ॥ अथ स्रुवेण दशात्मकान् जुहोति— "ॐ ब्राह्मण एकहोता । स यज्ञः । स मे ददातु प्रजां पशून् पुष्टिं यशः । यज्ञश्च मे भूयात् स्वाहा । ब्रह्मण इदं ० ॥ ॐ अग्निर्द्विहोता । स भर्ता । स मे ददातु० यशः । भर्ता च मे भूयात् स्वाहा ॥ अग्नय इदं० ॥ ॐ पृथिवी त्रिहोता । स प्रतिष्ठा । स मे ० यशः । प्रतिष्ठा च मे भूयात् स्वाहा ॥ पृथिव्या इदं० ॥ ॐ अन्तरिक्षं चतुर्होता । स विष्ठाः । स मे ददातु० यशः । विष्ठाश्च मे भूयात् स्वाहा ॥ अन्तरिक्षायेदं० ॥ ॐ वायुः पञ्चहोता । स प्राणः । स मे ददातु० यशः । प्राणश्च मे भूयात् स्वाहा ॥ वायव इदं० ॥ ॐ चन्द्रमाः षड्ढोता । स ऋतून्कल्पयाति । स मे ददातु० यशः । ऋतवश्च मे कल्पन्ता ँ स्वाहा ॥ चन्द्रमस इदं० ॥ ॐ अन्न ँ सप्तहोता । स प्राणस्य प्राणः । स मे ददातु० यशः । प्राणस्य च मे प्राणो भूयात् स्वाहा ॥ अन्नायेदं० ॥ ॐ द्यौरष्टहोता । सोऽनाधृष्यः । स मे ददातु ० यशः ॥ अनाधृष्यश्च भूयास ँ स्वाहा ॥ दिव इदं० ॥ ॐ आदित्यो नवहोता । स तेजस्वी । स मे ददातु० यशः । तेजस्वी च भूयास ँ स्वाहा ॥ आदित्यायेदं० ॥ ॐ प्रजापतिर्दशहोता । स इद ँ सर्वम् । स मे ददातु० यशः । सर्वञ्च मे भूयात् स्वाहा ॥ प्रजापतय इदं० " इति ॥ एवमेव मनस्वतीं मिन्दाहुती महाव्याहृतीर्व्याहृतीश्च हुत्वा होमशेषं समापयेत्, इति ॥ ॥ अथोपनयनमध्ये मेखलाजिनवस्त्रोपवीतदण्डादीनां भङ्गदाहनाशादौ प्रायश्चित्तमुक्तं विश्वामित्रकारिकायाम्— " उपनीतिदिनादूर्ध्वं चतुरह्नादधो यदि । मौञ्जीदण्डाजिनं सर्वमुपवीताऽम्बराणि च ॥ भग्नदाहविनाशेषु शिशोरब्दान्मृतिर्भवेत् । चतुर्भिर्ब्राह्मणैस्सूत्रं जप्त्वा तस्य प्रदापयेत् ॥ अन्यानि पूर्ववद्धृत्वा प्रायश्चित्तमथाऽऽ-

चरेत् ॥ क्षेत्रिये त्वा द्वादशभिरग्नेभ्यादिचतुष्टयैः ॥ महाव्याहृतिभिस्तद्वन्मिदाव्याहृतिभिस्तथा । विप्राय दक्षिणां दद्यात्कर्मशेषं समापयेत् " इति ।

अथ जडबधिरमूकाऽऽदीनामुपनयनप्रयोगः ॥ (बो. गृ. शे. सू. २.९) नाऽत्र ऋतुनियमो विद्यते । पुण्ये नक्षत्रे पूर्ववन्नान्दीश्राद्धाऽऽदिकं कृत्वा तूष्णीं केशानोप्य स्नातं शुचिवाससमलङ्कृतं बद्धशिखं बद्धकौपीनं तूष्णीं यज्ञोपवीतं प्रतिमुच्याऽप आचमय्य देवयजनमुदानयति ॥ अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा याज्ञिकीं समिधमाज्येनाऽङ्क्त्वा तूष्णीमभ्याधापयति । तूष्णीमश्मानमास्थापयति । यथालाभं तूष्णीं वासः परिधापयति । तूष्णीं मेखलां परिव्ययति । मन्त्रवद्ग्रन्थिं करोति । तूष्णीमजिनं प्रतिमुञ्चति । तूष्णीं याज्ञिकस्य वृक्षस्य दण्डं प्रयच्छति । न नाम पृच्छति । अथैनं दक्षिणे हस्ते गृह्णाति— "यस्मिन्भूतश्च० गृह्णामि" इति ॥ अथैनं देवताभ्यः परिददाति— "देवेभ्यस्त्वा० परिददामि" इति ॥ अथैनमुपनयति— "देवस्य त्वा सवितुः० पूष्णो हस्ताभ्यामुपनये" इति ॥ सर्वं नामग्रहणवर्जम् ॥ आचार्य एव सावित्र्या पक्वं हुत्वा 'क्षेत्रियै त्वा' इति षड्भिर्व्याहृतिभिश्चाज्याहुतीरुपहुत्य प्रागुत्तरपरिषेकात्कृत्वा याज्ञिकवृक्षपर्णेषु हुतशेषं मन्त्रवन्निदधाति ॥ अथ कुमारः पक्वादुपादाय तूष्णीमेव प्राश्नाति ॥ सर्वान्मन्त्रानाचार्य एव जपेदित्येके ॥ उत्तरपरिषेकादि शेषं समापयेत् ॥ ततस्तृतीयेऽहनि[1] तूष्णीं मधुपर्कं दत्वा तमग्निमुत्सृजति— "आयुर्दा अग्ने हविषो जुषाणः" इति ॥ पिता वा भ्राता वा आत्मनि समारोपयेदित्येके ॥ एवमेव षण्डजडक्लीबाऽन्धव्यसनिव्याधितोन्मत्तहीनाङ्गबधिराऽधिकाङ्गाऽऽमयाव्यपस्मारिश्वित्रिकुष्ठिदीर्घरोगिणां संस्कारं कुर्यादित्येके ॥

१. " मधुपर्कं तदा दद्यात्तृतीयेऽहन्यमन्त्रकम् " इति प्र० तिलके ॥

अथ पुनरुपनयनम् ॥ तत्र निमित्तानि (बो. गृ. प. सू. १. १२) "अथोपनीतस्याऽव्रत्यानि भवन्ति ॥ नान्यस्योच्छिष्टं भुञ्जीताऽन्यत्र पितृज्येष्ठाभ्याम् ॥ न स्त्रिया सह भुञ्जीत ॥ मधुमांसश्राद्धसूतकाऽन्नमनिर्दशाहं सन्धिनीक्षीरं छत्राकनिर्यासौ विलयनं गणान्नं[1] गणिकान्नमित्येतेषु पुनस्संस्कारः ॥ प्रतिषिद्धगमनमित्येके ॥ अथाऽप्युदाहरन्ति— "सौराष्ट्रं सिन्धुसौवीरमवन्तीं दक्षिणापथम् । एतानि ब्राह्मणो गत्वा पुनस्संस्कारमर्हति" इति ॥ "तीर्थयात्रां विना गत्वा पुनस्संस्कारमर्हति" इति विशेषमाह वै० व्यासः ॥ (बो. ध. सू. २. १) "वपनव्रतनियमलोपश्च पूर्वाऽनुष्ठितत्वात् ॥ अथाऽप्युदाहरन्ति— अमत्या वारुणीं पीत्वा प्राश्य मूत्रपुरीषयोः । ब्राह्मणः क्षत्रियो वैश्यः पुनस्संस्कारमर्हति" इति ॥ आपस्तम्बोऽपि— "अजिनं मेखलां दण्डं भैक्षाचर्यांश्च यस्त्यजेत् । पुनरसंस्कारमर्हेत्स विधिदृष्टेन कर्मणा" इति ॥ अत्र वर्ज्यान्याह बोधायनः (बो. गृ. प. सू. १. १२) "वपनं दक्षिणादानं मेखला दण्डमजिनं भैक्षाचर्या व्रतानि निवर्तन्ते पुनस्संस्कारकर्माणि" इति ॥

अथ प्रयोगः — कर्ता प्रातः स्नानादिनित्यकर्म कृत्वा दर्भेषु प्राङ्मुख उपविश्य संस्कार्यं दक्षिणतस्तथैवोपवेश्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "अस्याऽमुकशर्मण उच्छिष्टभोजनाऽऽद्यव्रत्येषु संभाविताऽमुकदोषनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुनरुपनयनं करिष्ये" इति सङ्कल्प्य गणपतिं सम्पूज्य "अग्निः प्रीयताम्" इति पुण्याहं वाचयित्वा देवयजनोल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्य पुनरुपनयनहोमं करिष्ये, इति सङ्कल्प्य । जातवेदा नामाऽग्निः, अग्निः सप्तवान्देवता, चरुर्हविः, इत्याद्यन्वाधायाऽग्निमुखान्तं कृत्वा पालाशीं समिधमाज्येनाऽक्त्वाऽभ्याधापयति— "ॐ पुनस्त्वाऽऽदित्याः० कामाः स्वाहा" इति । वसुनीथायेदं० ॥ अथाऽव्रत्यप्रायश्चित्तं जुहोति— "यन्म आत्मनः, पुनरग्निः" इति द्वाभ्याम् ॥ अथ पक्वाज्जुहोति—

१. "गणान्नं शूद्रान्नं गणिकान्नम्" इत्यपि पाठो वैद्यनाथीये ॥

"सप्त ते अग्ने० घृतेनों ३ सप्त ते अग्ने० घृतेन स्वाहा" इति। अग्नये सप्तवत इदं०॥ अथाऽवत्ते स्विष्टकृत्याज्याहुतीरुपजुहोति— "ॐ येन देवाः पवित्रेण० पुनन्तु मा स्वाहा। पावमानीभ्य इदं०॥ ॐ प्राजापत्यं० ब्रह्म पुनीमहे स्वाहा। ब्रह्मण इदं०॥ ॐ इन्द्रः सुनीती० मोर्जयन्त्या पुनातु स्वाहा। इन्द्राय सुनीत्या सहिताय सोमाय स्वस्त्या सहिताय वरुणाय समीच्या सहिताय यमाय राज्ञे प्रमृणाभिः सहिताय जातवेदस ऊर्जयन्त्या सहितायेदं०" इति॥ ततः स्विष्टकृदादि होमशेषं समापयेत्॥ इति॥

अथाऽपदः — आ परिधानात्कृत्वा पालाशीं समिधमाधायाऽन्त्यप्रायश्चित्ताऽऽहुती हुत्वा व्याहृतीर्जुहुयात्, इति॥ ॥ अथाऽपरः — ब्राह्मणाऽनुज्ञया सावित्र्या शतवारमभिमंत्रितं घृतं प्राश्नीयात्, गुरोरुच्छिष्टं वा भुञ्जीत, कृतप्रायश्चित्तो भवति॥ इति॥

अथोपवीतनाशे प्रायश्चित्तम्॥ तदाह सं० मालायां हारीतः— "मनोव्रातपतीभिश्चतस्र आज्याहुतीर्हुत्वा पुनः प्रतीयात्" इति॥ अथ प्रयोगः— उपवीतस्थाने वस्त्रं वा सूत्राऽन्तरं धृत्वा स्नातः शुचिराचम्य देशकालौ सङ्कीर्त्य "मम यज्ञोपवीतनाशजनितप्रत्यवायपरिहारार्थं प्रायश्चित्तहोमं करिष्ये" इति सङ्कल्प्याऽपूर्वतन्त्रेण स्थण्डिलोल्लेखनादि चित्तिनामानमग्निं प्रतिष्ठाप्याऽऽज्यसंस्काराऽन्तं कृत्वा स्रुवं सम्मृज्याऽग्निमलंकृत्य प्रायश्चित्ताज्याहुतीर्जुहोति— "ॐ मनो ज्योतिः० घृतेन स्वाहा॥ मनसे ज्योतिष इदं०॥ ॐ त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः स्वाहा॥ अग्नये व्रतपतय इदं०॥ ॐ यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः। अग्निष्टद्विश्वमा पृणाति विद्वान्येभिर्देवाँ॥ ऋतुभिः कल्पयाति स्वाहा॥ अग्नये व्रतपतय इदं०॥ ॐ व्रतानुबिभ्रद्व्रतपा अदाभ्यः। यजानो देवाँ॥ अजरस्सुवीरः॥ दधद्रत्नानि सुविदानो अग्ने। गोपायनो

जीवसे जातवेदः स्वाहा ॥ अग्नये व्रतपतय इदं० " इति हुत्वा होमशेषं समाप्य पुनर्नूतनं विधिवदभिमन्त्रितमुपवीतं धारयेत् इति ॥ स्मृतिरत्नावल्यां तु— " उपवीतविनाशे तु गायत्र्या जुहुयात्तिलम् । अष्टोत्तरसहस्रं वाऽप्यष्टोत्तरशतं तु वा " इत्युक्तम् ॥ यज्ञोपवीते वामस्कन्धावरोपिते कूर्परस्थानं गते मणिबन्धस्थानं गते वा तद्यज्ञोपवीतं पूर्वस्थाने निवेश्य यथाक्रमं त्रिवारं षड्वारं द्वादशवारं प्राणायामं कुर्यात् ॥ वामहस्तव्यतीते तु तद्विसृज्य पुनर्नूतनं यज्ञोपवीतं विधिवद्धारयेत् इत्युक्तं सं० मालायाम् ॥ इत्युपवीतनाशप्रायश्चित्तम् ॥



## ॥ ब्रह्मचारिधर्माः ॥

॥ अथ प्रसङ्गाद्ब्रह्मचारिधर्माः केचन निरूप्यन्ते ॥ ( बो. ध. सू. १. ३ ) अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम् ॥ चतुर्विंशतिं द्वादशं वा प्रतिवेदम् ॥ संवत्सरावमं वा प्रतिकाण्डम् ॥ ग्रहणान्तं वा ॥ जीवितस्याऽस्थिरत्वात् ॥ कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ॥ " नाऽस्य कर्म नियच्छन्ति किञ्चिदामौञ्जिबन्धनात् । वृत्त्या शूद्रसमो ह्येष यावद्वेदेषु जायत " इति ॥ ते ब्राह्मणाद्यास्स्वकर्मस्थाः ॥ सदाऽरण्यात्समिध आहृत्याऽऽदध्यात् ॥ सत्यवादी ह्रीमाननहङ्कारः ॥ पूर्वोत्थायी जघन्यसंवेशी ॥ ( गुरोः स्यादिति शेषः )॥ सर्वत्राऽऽप्रतिहतगुरुवाक्योऽन्यत्र पातकात् ॥ यावदर्थसम्भाषी स्त्रीभिः ॥ नृत्तगीतवादित्रगन्धमाल्योपानच्छत्रधारणाञ्जनाभ्यञ्जनवर्जी ॥ दक्षिणं दक्षिणेन सव्यं सव्येन चोपसङ्गृह्णीयाद्दीर्घमायुः स्वर्गञ्चेप्सन् ॥ 'असावहं भो' इति श्रोत्रे संस्पृश्य मनस्समाधानार्थम् ॥ अधस्ताज्जान्वोरा पद्भ्याम् ॥ नाऽऽसीनो नाऽऽसीनाय न शयानो न शयानाय नाऽप्रयतो नाऽप्रयताय ॥ काममन्यस्मै साधुवृत्ताय गुरुणानुज्ञातः ॥ शक्तिविषये मुहूर्तमपि नाऽप्रयत स्यात् ॥ समिद्धार्युदकुम्भपुष्पान्न—

हस्तो नाऽभिवादयेद्यश्चाऽन्यदप्येवं युक्तम् ॥ न समवायेऽभिवादनमत्यन्तशः ॥ भ्रातृपत्नीनां युवतीनां च गुरुपत्नीनां जातवीर्यः ॥ नौशिलाफलककुञ्जरप्रासादकटकेषु चक्रवत्सु चाऽदोषं सहाऽऽसनम् ॥ प्रसाधनोच्छादनस्नापनोच्छिष्टभोजनानीति गुरोः ॥ उच्छिष्टवर्जं तत्पुत्रेऽनूचाने वा ॥ प्रसाधनोच्छादनस्नापनोच्छिष्टवर्जं च तत्पत्न्याम् ॥ धावन्तमनुधावेद्गच्छन्तमनुगच्छेत् तिष्ठन्तमनुतिष्ठेत् ॥ नाऽप्सु श्लाघमानस्स्नायात् ॥ दण्ड इव प्लवेत् ॥ अब्राह्मणादध्ययनमापदि ॥ शुश्रूषाऽनुव्रज्या च यावदध्ययनम् ॥ तयोस्तदेव पावनम् ॥ भ्रातृपुत्रशिष्येषु चैवम् ॥ ऋत्विक्छ्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थायाऽभिभाषणम् ॥ प्रत्यभिवाद इति कात्यः ॥ शिशावाङ्गिरसे दर्शनात् ॥ ( बो. ध. सू. १. ४ ) "धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा। विद्यया सह मर्तव्यं न चैनामूषरे वपेत् ॥ अग्निरिव कक्षं दहति ब्रह्मपृष्टमनादृतम्। तस्माद्वै शक्यं न ब्रूयाद्ब्रह्म मानमकुर्वतामिति ॥ अत्रैवाऽस्मै वचो वेदयन्ते ॥ ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत्तस्मै ब्रह्मचारिणमेव न प्रायच्छत् सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति यामेव रात्रिं समिधं नाऽऽहराता इति ॥ तस्माद्ब्रह्मचारी यां रात्रिं समिधं नाऽऽहरति आयुष एव तामादाय वसति ॥ तस्माद् ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ दीर्घसत्रं ह वा एष उपैति यो ब्रह्मचर्यमुपैति ॥ स यामुपयन्सामिध आदधाति सा प्रायणीयाऽथ यां स्नास्यन्सोदयनीयाऽथ या अन्तरेण सत्र्या एवाऽस्य ताः ॥ ब्राह्मणो ह वै ब्रह्मचर्यमुपयंश्चतुर्धा भूतानि प्रविशत्यग्निं पदा मृत्युं पदाऽऽचार्यं पदाऽऽत्मन्येव चतुर्थः पादः परिशिष्यते । स यदग्नौ समिधमादधाति य एवाऽस्याग्नौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशति । अथ यदाऽऽत्मानं दरिद्रीकृत्याऽह्रीर्भूत्वा भिक्षते ब्रह्मचर्यं चरति य एवाऽस्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशति । अथ यदाऽऽचार्यवचः करोति य एवाऽऽऽस्याचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशति । अथ यत्स्वाध्यायमधीते य एवाऽ-

स्याऽऽत्मनि पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशति । न ह वै स्नात्वा भिक्षेताऽपि ह वै स्नात्वा भिक्षां चरत्यपि ज्ञातीनामशनायाऽपि पितॄणामन्याभ्यः क्रियाभ्यः । स यदन्यां भिक्षितव्यां न विन्देताऽपि वा स्वामेवाऽऽचार्यजानां भिक्षेताऽथो स्वां मातरं नैनं सप्तम्यभिक्षिताऽतीयात् ॥ भैक्षस्याऽचरणे दोषः पावकस्यासमिन्धने । सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् ॥ तमेवं विद्वांसमेव चरन्तं सर्वे वेदा आविशन्ति ॥ यथा ह वा अग्निस्समिद्धो रोचत एवं ह वा एष स्नात्वा रोचते य एवं विद्वान्ब्रह्मचर्यं चरतीति ब्राह्मणमिति ब्राह्मणम् " इति ॥

अवकीर्णिलक्षणम् ॥ ( बो. ध. सू. २. १ ) "यो ब्रह्मचारी स्त्रियमुपेयात्सोऽवकीर्णी " ॥ ( बो. ध. सू. २. १३ ) "गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत् । प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु सः " ॥ ॥ अवकीर्णिप्रायश्चितम् ॥ ( बो. ध. सू. ४. २ ) "अथाऽवकीर्ण्यमावास्यायां निश्यग्निमुपसमाधाय दार्विहोमिकीं परिचेष्टां कृत्वा द्वे आज्याहुती जुहोति— ' कामाऽवकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा ॥ कामाऽभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहा ' इति ॥ हुत्वा प्रयताऽञ्जलिः कवातिर्यङ्ङग्निमुपतिष्ठते— ' सं मा सिञ्चतु मरुतस्समिन्द्रस्सं बृहस्पतिः । सं माऽयमग्निस्सिञ्चत्वायुषा च बलेन चाऽऽयुष्मन्तं करोतु मे " इति ॥ प्रति हाऽस्मै मरुतः प्राणान्दधाति प्रतीन्द्रो बलं प्रति बृहस्पतिर्ब्रह्मवर्चसं प्रत्यग्निरितरत्सर्वं सर्वतनुर्भूत्वा सर्वमायुरेति । त्रिरभिमन्त्रयेत । त्रिषत्या हि देवा इति विज्ञायते । योऽपूत इव मन्येत आत्मानमुपपातकैः । स हुत्वैतेन विधिना सर्वस्मात्पापात्प्रमुच्यते " ॥

प्र० पारिजाते मनुः—"उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः । आचारमग्निकार्यञ्च सन्ध्योपासनमेव च" इति ॥ यमः— " मेखलामजिनं दण्डमुपवीतञ्च नित्यशः । कौपीनं कटिसूत्रञ्च ब्रह्मचारी तु धारयेत् ॥ अग्नीन्धनं भैक्षचर्यामधःशय्यां गुरोर्हितम् ।

आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः " इति ॥ याज्ञवल्क्योऽपि— " मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् । दर्पणाऽलोकनाऽश्लीलपरिवादान् विवर्जयेत् " इति ॥ ॥ व्याधितस्य मध्वादिभक्षणे न दोषः ॥ ( बो. ध. सू. २. १ ) " स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भैषज्यार्थे सर्वं प्राश्नीयात् ॥ येनेच्छेत्तेन चिकित्सेत ॥ स यदा गदी स्यात्तदुत्थायाऽऽदित्यमुपतिष्ठते ' हंसः शुचिषत् ' इत्येतया " इति ॥ सं० मालायां बृहस्पतिरपि— " अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् " इति ॥ मनुश्च विशेषमाह— " अभ्यङ्गमञ्जनं चाऽक्ष्णोरुपानच्छत्रधारणम् । कामं क्रोधश्च लोभश्च नर्तनं गीतवादनम् । द्यूतञ्च जनवादञ्च परिवादं तथाऽनृतम् । स्त्रीणाञ्च प्रेक्षणाऽऽलम्भमुपघातं परस्य च ॥ एकः शयीत सर्वत्र न रेतस्कन्दयेत्क्वचित् " इति ॥ सं० मालायां दक्षोऽप्याह— " ब्रह्मचर्यं सदा रक्षेदष्टधा लक्षणं पृथक् । स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥ सङ्कल्पोऽध्यवसायश्च क्रिया निष्पत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ वैपरीत्ये ब्रह्मचर्यं नष्टं प्राह प्रजापतिः " । अन्यच्च— " न ध्यातव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन ॥ एतैस्सर्वैस्सुनिष्णातो यतिर्भवति नान्यथा " इति ॥ अन्यदप्याह तत्रैव देवलः— " ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः । यदि कुर्याच्चरेत्कृच्छ्रं पुनस्संस्कारमेव च " इति ॥ ( बो ध. सू. २. १. २४ ) " ब्रह्मचारिणश्शवकर्मणा व्रताऽऽवृत्तिरन्यत्र मातापित्रोराचार्याच्च " ॥ आह च मनुः— " आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुम् । निर्हृत्य तु व्रती प्रेतं व्रतेन न वियुज्यते " इति ॥ गालवः— " गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् । प्रेताऽऽहारैः समं तत्र दशरात्रेण शुध्यति " इति ॥ संवर्तोऽपि— " मातापित्रोरुपाध्यायाऽऽचार्ययोरौर्ध्वदेहिकम् । कुर्यान्मातामहानाञ्च व्रती न भ्रश्यते व्रतात् " इति ॥ ॥ इति ब्रह्मचारिधर्माः ॥

# ॥ अथोपाकर्मोत्सर्जने ॥

( बो. ध. सू. १. १२ ) " श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेयुः " इति ॥ ( बो. गृ. सू ३. १ ) " हुतानुकृतिरुपाकर्म । श्रावण्यां पौर्णमास्यां क्रियेताऽपि वाऽऽषाढ्याम् " इति ॥ पराशरीये वसिष्ठः— " अथातः स्वाध्यायोपाकर्म श्रावण्यां पौर्णमास्यां प्रौष्ठपद्यां वा " इति ॥ " नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके । कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे " इति तत्रैव बृहस्पतिः ॥ प्र० पारिजाते व्यासः— " श्रावणस्य तु मासस्य पौर्णमास्यां द्विजन्मनाम् । आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम् " इति ॥ तत्र विशेषमाह पराशरीये गार्ग्यः— " पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसङ्क्रान्तिवर्जिते " इति ॥ " उपाकर्म न कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः । ग्रहसङ्क्रान्तियुक्तेषु हस्तश्रवणपर्वसु " इति नि० हेमाद्रिः ॥ ग्रहणसङ्क्रान्त्योर्वर्जने कालावधिमाह गार्ग्यः— " अर्धरात्रादधस्ताच्चेत्सङ्क्रातिर्ग्रहणं तथा । उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् " इति ॥ कात्यायनोऽपि— " यद्यर्धरात्रादर्वाक्तु ग्रहः सङ्कम एव वा । नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा " इति ॥ अधिमासेऽपि न कार्यमित्याह सं० मालायां ज्योतिष्पराशरः— " उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः । मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् " इति ॥ श्रावण्यां ग्रहणादिदोषप्राप्तौ व्यवस्थामाह वैद्यनाथीये व्यासः— " श्रावण्यामथवाऽऽषाढ्यां प्रौष्ठपद्यामथाऽपि वा । दुष्टायां पूर्वपूर्वस्यामुत्तरस्यां विधीयते ॥ कालत्रयेऽपि दोषे तु श्रावण्यामेव कारयेत् " इति ॥ एतच्च गुरुशुक्रयोर्मौढ्यवार्धकबाल्येष्वपि श्रावण्यां कार्यम् ॥ तदुक्तं स्मृतिकौस्तुभे— " यज्ञोपवीतं[1] कर्तव्यं

---

१. यज्ञोपवीतोपलक्षितमुपाकर्मेत्यर्थः ॥

श्रावणे गुरुशुक्रयोः । मौढ्येऽपि वार्धके बाल्ये नित्यवत्कर्म चोदितम् " इति ॥ प्रथमोपाकृतिस्तु गुरुशुक्रास्तादौ न कार्या — "गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा । तथाधिमाससंसर्पमलमासादिषु द्विज ॥ प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत्" इति सं० मालायां कश्यपोक्तेः ॥ वैद्यनाथीये तु— "शान्तिं कृत्वा तयोर्वाऽपि तयोरुदितमन्त्रकैः । कर्तव्यं श्रावणं विप्रैरिति जीवेन भाषितम्" इति वचनैः श्रावणभाद्रपदाषाढेष्वेकस्मिन् दोषरहिते प्रथमोपाकृतिः कर्तव्या ॥ त्रिष्वपि दुष्टेषु श्रावणमासे शान्तिपूर्विका कर्तव्या ॥ गुरुशुक्रयोर्मौढ्यादौ तयोर्ग्रहयज्ञोक्तमन्त्रैः शान्तिः कर्तव्या ॥ मलमासे— "आप्यायस्व" इति सोमस्य शान्तिः । सङ्क्रान्तौ— "चित्रं देवानाम्, उदु त्यम्, सूर्यो देवीमुषसम्, आ सत्येन रजसा, देवो वस्सवितोत्पुनातु" इति सूर्यस्य । सोमोपरागे— "सोमो धेनुम्" इति षड्भिः "नवो नवः" इति च सोमस्य शान्तिहोमं कृत्वोपाकर्म कुर्यात्, इति विशेषः प्रदर्शितः ॥ अत्रौदयिकी पौर्णमासी ग्राह्येत्युक्तम् ॥ तत्र व्यवस्थामाह पराशरीये गार्ग्यः— "श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि । तदात्वौदयिकी ग्राह्या नान्यदौदयिकी भवेत्" इति ॥ सं० मालायाम्— "उदये सङ्गवस्पर्शे श्रुतौ पर्वणि चार्कभे । कुर्युर्नभस्युपाकर्म ऋग्यजुस्सामगाः क्रमात्" इति ॥ नि० सिङ्गाभट्टीयेऽपि— "श्रवणः श्रावणं पर्व सङ्गवस्पृग्यदा भवेत् । तदैवौदयिकं ग्राह्यं नान्यदौदयिकं भवेत्" इति ॥ तदेतेन वचनजातेन बौधायनैः श्रावणपौर्णमास्यामुपाकर्म कार्यम्, तत्र दोषसम्भावनायामाषाढ्यां कार्यम्, तस्यामपि दुष्टायां प्रौष्ठपद्यां वा कार्यम् । तिसृषु दुष्टासु श्रावण्यामेव शान्तिं कृत्वा कुर्यात् । दोषाश्च द्वितीयाद्युपाकृतौ ग्रहणसङ्क्रांतिमलमासाः । प्रथमोपाकृतौ ग्रहणादयो गुरुशुक्रास्तबाल्यवार्धकादयोऽपि । आशौचदोषस्तूभयत्र समान एवेति चावगम्यते ॥ पौर्णमासीपरदिने सङ्गवकालमतीत्य ( उदयादिद्वादशघटिकाधिककिञ्चित्कालं व्याप्य )

१. मिथुनार्करहितायामाषाढ्यां कार्यमिति पुरुषार्थचिन्तामणावुक्तम् ॥

यदि वर्तते तदा यजुःशाखिभिः सर्वैः परा ग्राह्या अन्यथा पूर्वैवेति माधववैद्यनाथादीनामाशयः। पुरुषार्थचिन्तामणौ तु बौधायनैर्द्वितीयदिने मुहूर्तत्रयादिपरिमिता चेदुत्तरैव ग्राह्या मुहूर्तत्रयन्यूना चेत्तदा पूर्वैव पूर्णिमा ग्राह्येति निर्णीतम् ॥ अत्रेयं व्यवस्था परिकल्प्या– परेद्युः षण्मुहूर्तन्यूना चेत्पूर्वद्युः सङ्गवात्पूर्वं प्रवृत्ता पूर्णिमा ग्राह्या, तदलाभे सङ्गवैकदेशव्यापापि परैव ग्राह्या। परेद्युस्त्रिमुहूर्तन्यूनत्वे, पूर्वेद्युरेवोदयमारभ्य प्रवृत्ता चेत्तदापि पूर्वैव ग्राह्या इति ॥

अथोत्सर्जनकालः ॥ ( बो. गृ. सू. ३. ९ ) "बलिहरणानुकृतिरुत्सर्गः ॥ तैष्यां पौर्णमास्यां क्रियेताऽपि वा माघ्याम्" इति ॥ गृ० सङ्ग्रहे च — "यद्याषाढ्यामुपाकर्म तैष्यां स्वाध्यायमुत्सृजेत्। श्रावण्यां च तथा माघ्यां तैष्यां वेत्यपरं मतम् ॥ प्रौष्ठपद्यामुपाकृत्य माघ्यां वाऽपि तमुत्सृजेत्" इति ॥ उपाकर्मदिने एव वोत्सर्जनं कुर्यादित्युक्तं निर्णयसिन्धौ खादिरगृह्ये— "पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा" इति ॥ स्मृत्यर्थसारेऽपि— "वर्षञ्चाधीत्योपाकर्मदिने उत्सर्गं कार्यं न वा, तर्पणं कार्यमेव" इति ॥ तथा चाषाढ्यां श्रावण्यां प्रौष्ठपद्यां वा छन्दाँस्युपाकृत्य पुष्यपौर्णमास्यां माघ्यां वोत्सर्जनं कुर्यात्। अथवा कृत्स्नं वर्षं छन्दांस्यधीत्य तदुत्तरोपाकर्मदिन एवोपाकर्मणः प्रागुत्सर्जनं कुर्यात् ॥ नूतनब्रह्मचारिणान्तु प्रथममुपाकर्मकाले उपाकर्ममात्रं कृत्वा मुख्योत्सर्जनकाले द्वितीयोपाकर्मदिने वोत्सर्जनं कार्यमिति पर्यवसितम् ॥ उपाकर्मोत्सर्जनाभ्यां छन्दसां शुद्धिर्भवतीत्याह सं० मालायां कात्यायनः— "प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः। क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥ आयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम् ॥ अस्थानोच्छ्वासविच्छेदो घोषणाध्यापनादिषु ॥ प्रामादिकः श्रुतौ यः स्याद्यातयामत्वकारि सः" इति ॥

अथेदानीमुपाकर्माभिधानस्य क्रमप्राप्तत्वेऽपि "उपाकर्मदिन एव वोपाकर्मणः प्रागुत्सर्जनं कार्यम्" इत्यनुकल्पस्यैव शिष्टैः परिगृहीतत्वात्प्रयोगग्रन्थेऽपि प्रथममुत्सर्जनस्यानन्तरमुपाकर्मणः समानतन्त्रेणोल्लिखनाच्च अत्राप्यादावुत्सर्जनमनन्तरमुपाकर्मेत्येवं द्वयोस्तन्त्रेण प्रयोगक्रमोऽभिधीयते ॥ तत्रादौ शरीरशुध्यर्थं ब्रह्मकूर्चविधिना पञ्चगव्यप्राशनमुत्सर्जनाङ्गत्वेन विहिते स्नाने मृत्तिकास्नानविधिश्च क्वचिदनुतिष्ठन्ति शिष्टाः ॥ सं० मालायामप्यत्र ब्रह्मकूर्चविधानार्थं— "ब्रह्मशुद्धौ ग्रहारम्भे सूतके मृतके तथा। यज्ञारम्भे धनप्राप्तौ प्रायश्चित्ते विशेषतः ॥ रोगमुक्तौ च सम्पर्के क्षुद्रपापापनुत्तिषु । विदध्याद्ब्रह्मकूर्चञ्च मासि मास्यथ वा द्विजः" इति विधानमालावचनमुदाहृत्य 'ब्रह्मशुद्धौ' इत्यत्रोपाकर्मोत्सर्जनाभ्यां क्रियमाणायां, इति शेषः इति व्याख्यातम् ॥ मृत्तिकास्नानविध्यर्थं— "सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये। स्नानं कुर्वीत मतिमाञ्छ्रुतिस्मृतिविधानतः" इति भविष्यवचनं 'श्रुतिस्मृतिविधानतः' इति 'भस्मगोमयमृत्तिकास्नानप्राप्त्यर्थं' इति पृथ्वीचन्द्रोदयकृततद्व्याख्यानञ्चोदाहृतम् ॥ तस्मादादौ ब्रह्मकूर्चविधिर्मृत्तिकास्नानविधिश्चाभिधास्यते ॥

अथ ब्रह्मकूर्चविधिः ॥ अथ ब्रह्मकूर्चविधिः प्र० सङ्ग्रहे— "पञ्चगव्यविधिं वक्ष्ये" इत्युपक्रम्य "गोमूत्रं ताम्रवर्णायाः श्वेताया गोस्तु गोमयम्। पयः काञ्चनवर्णाया नीलाया गोर्दधि स्मृतम् ॥ घृतन्तु कृष्णवर्णाया उदकं शुद्धवर्णकम्। अलाभे सर्ववर्णायास्सर्वं कापिलमेव वा ॥ गोमूत्रन्तु पलं ग्राह्यमङ्गुष्ठार्धन्तु गोमयम्। पयस्त्रिपलमेवं स्याद्दधि द्विपलमुच्यते ॥ घृतं कुशोदकञ्चैव पलेनैकेन सम्मितम्। सावित्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ॥ आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि। घृतं शुक्रमसीत्युक्त्वा देवस्य त्वा कुशोदकम् ॥ पृथक्पृथक्समादाय क्रमादेकत्र भाजने। संयोज्य गन्धपुष्पाद्यैरर्चयीत यथाविधि"

१. पञ्चगव्यं ब्रह्मकूर्चमिति नार्थान्तरम्, धर्मसूत्रे पञ्चगव्यस्य ब्रह्मकूर्चत्वेनाऽभिधानात् ॥

इति ॥ अन्यदपि तत्रैव स्मृत्यन्तरात्सङ्गृह्योक्तम्— "परिश्रिते शुचौ देशे विधिवत्कृतमण्डले । शालीतण्डुलदर्भास्तु क्रमात्कूर्चं प्रविन्यसेत् ॥ यतात्मा विन्यसेत्तत्र शुद्धं स्वर्णादिभाजनम् । गोमूत्रादिक्रमात्तस्मिन्युञ्ज्यान्मन्त्रैस्तदीयकैः ॥ गायत्र्यधीशमावाह्य पूजयीत यथाविधि । गायत्र्यष्टसहस्रं वा जपेदष्टोत्तरं शतम् ॥ संस्पृशन्यतचित्तात्मा दद्यान्नैवेद्यमुत्तमम् । आपो हि ष्ठेति चालोड्य मानस्तोकेऽभिमन्त्रयेत् ॥ सदापर्णास्तु ये दर्भा अच्छिन्नाग्राश्शुकत्विषः । एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ॥ अष्टोत्तरसहस्रं वा गायत्र्याष्टोत्तरं शतम् । अष्टाविंशतिसंख्यां वा जुहुयादेनसो वशात् ॥ इरावती इदं विष्णुर्मानस्तोके च शंवती । पवमानानुवाकश्च महाव्याहृतयस्तथा ॥ एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः । कृतोपवासश्शुद्धात्मा पालाशेन पिबेत्तु तम् ॥ बैल्वेन वाऽपि पात्रेण ताम्रपात्रेण वा पुनः । तेषामन्यतमस्मिंस्तु पर्वण्यब्दं पिबेत्तु यः ॥ पारदार्यं ब्रह्महत्या ये चान्येऽस्थिगतामलाः । ब्रह्मकूर्चो दहेदेष सर्वमग्निस्तृणं यथा" इति ॥ पराशरीये तु— "क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ॥ इरावती इदं विष्णुर्मानस्तोके च शंवती । एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः ॥ आलोड्य प्रणवेनैव पिबेच्च प्रणवेन तु" इति विशेषोऽभिहितः ॥ 'शंवती' इत्यत्र शमित्येष शब्दो यस्यामृच्यस्ति सा शंवती । "शमग्निरग्निभिस्करत्" इति वा "शन्नो देवीरभिष्टये" इति वा सा द्रष्टव्या, इति तत्रैव व्याख्यातम् ॥ धर्मसूत्र-( बो. ध. सू. ४. ५. २५ )-व्याख्याने— "अग्नये चैव सोमाय सावित्र्या च तथैव च । प्रणवेन तथा हुत्वा ततश्च स्विष्टकृत्स्मृतः ॥ एवं हुत्वा ततश्शेषं पापं ध्यात्वा समाहितः । आलोड्य प्रणवेनैव निर्मन्थ्य प्रणवेन तु ॥

---

१. गोमूत्रादीनां स्थापनेऽपि क्रमः प्रोक्तः प्र० मालायाम्— "गोमूत्रं स्थापयेत्पूर्वे गोमयं दक्षिणे तथा । पश्चिमे तु पयश्चैव उत्तरे दधि कीर्तितम् ॥ मध्यमे तु घृतं स्थाप्यं वायव्ये तु कुशोदकम्" इति ॥

उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन च । एवं ब्रह्मकृतं कूर्चं मासि मासि चरन् द्विजः ॥ सर्वपापविशुद्धात्मा ब्रह्मलोकं स गच्छति" इति स्मृत्यन्तरवचनमुदाहृतम् । पराशरीयव्याख्यानेऽप्येतद्वचनमुदाहृतम् ॥

अथ प्रयोगः— शुचौ समे देशे स्थण्डिलोल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "त्वगस्थिगतसमस्तैनोनिबर्हणार्थं ब्रह्मकूर्च-(पञ्चगव्य)-होमं करिष्ये । ब्रह्मकूर्चहोमः कर्म, अपूर्वं तन्त्रम्, चित्तिर्नामाग्निः, सवित्रादयो देवताः, पञ्चगव्यं हविः, आज्यस्य मान्त्रवर्णिक्यो देवताः, एवं साङ्गेन कर्मणा सद्यो यक्ष्ये" इति सङ्कल्प्यान्वाधानादि-पात्रासादनकाले आज्यस्थालीं स्रुवं संयोजनस्थालीं सप्तदर्भमयं कूर्चं प्रोक्षणीं गोमूत्रादिद्रव्यञ्चेत्यासाद्य प्रोक्षणीः संस्कृत्य ताभिरुत्तानानि पात्राणि त्रिः प्रोक्ष्य संयोजनस्थाल्यामुदगग्रं कूर्चं निधाय सावित्र्या गोमूत्रमानीय, 'गन्धद्वारां' इति गोमयम्, 'आप्यायस्व' इति क्षीरम्, 'दधिक्राव्णः' इति दधि, 'शुक्रमसि ज्योतिरसि तेजोऽसि' इति घृतम्, देवस्य त्वा० हस्ताभ्यां गृह्णामि' इति कुशोदकञ्चेत्येवं क्रमेण संयोज्य 'आपो हि ष्ठा' इति तिसृभिरालोड्य 'मानस्तोके' इत्यभिमन्त्र्य तत्र सवितारमावाह्य सम्पूज्य गायत्र्याऽष्टोत्तरशतवारमभिमन्त्रयेत् ॥ अथाज्यनिर्वापादिपर्यग्निकरणकाले पञ्चगव्यस्याऽपि पर्यग्निकरणम् ॥ स्रुवं सम्मृज्याज्यं बर्हिष्वासाद्य तद्दक्षिणतः पञ्चगव्यस्थालीं कूर्चेण सह प्रतिष्ठाप्याभिघार्याऽग्निं परिषिच्यालङ्कृत्याज्येन चतस्रो व्याहृतीर्हुत्वा पञ्चगव्यं कूर्चेणोद्धृत्य जुहोति ॥ गायत्र्याष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिं वाहुतीर्हुत्वा । ॐ अग्नये स्वाहा । अग्नय इदं० ॥ ॐ सोमाय स्वाहा । सोमायेदं० ॥ ॐ इरावती धेनुमती हि भूत॒ँ सूयवसिनी मनवे यशस्ये । व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहा । विष्णव इदं० ॥ ॐ इदं विष्णुः० पा॒ँ सुरे स्वाहा । विष्णव इदं० ॥

ॐ मानस्तोके० विधेमते स्वाहा । रुद्रायेदं० ॥ ॐ शन्नो देवीः० स्त्रवन्तु नः स्वाहा । अद्भ्य इदं० ॥ ॐ पवमानः सुवर्जनः० पुनातु मा स्वाहा । पवमानाय इदं० ॥ ॐ पुनन्तु मा० आयवः स्वाहा । देवजनमनुविश्वायुभ्य इदं० ॥ ॐ जातवेदः० क्रतूँ२-रनु स्वाहा । जातवेदसेऽग्नय इदं० ॥ ॐ यत्ते पवित्रमर्चिषि ० पुनीमहे स्वाहा । अग्नय इदं० ॥ ॐ उभाभ्यां देव सवितः० पुनीमहे स्वाहा । देवाय सवित्र इदं० ॥ ॐ वैश्वदेवी पुनती० रयीणाँ२ स्वाहा । वैश्वदेव्यै देव्या इदं० ॥ ॐ वैश्वानरो० पुनीताँ२ स्वाहा । वैश्वानरवातेषिरद्यावापृथिवीऋतावरीभ्य इदं० ॥ ॐ बृहद्भिः सवितस्तृभिः० पुनाहि मा स्वाहा । सवित्रेऽग्नय इदं० ॥ ॐ येन देवा अपुनत० पुनीमहे स्वाहा । देवेभ्योऽद्भ्य इदं० ॥ ॐ यः पावमानीः० मातरिश्वना स्वाहा । पावमानीभ्य इदं० ॥ ॐ पावमानीर्यो० मधूदकँ२ स्वाहा । पावमानीभ्य इदं० ॥ ॐ पावमानीः स्वस्त्ययनीः० हितँ२ स्वाहा । पावमानीभ्य इदं० ॥ ॐ पावमानीर्दिशन्तु नः० समाभृताः स्वाहा । पावमानीभ्य इदं० ॥ ॐ पावमानीः स्वस्त्ययनीः० हितँ२ स्वाहा । पावमानीभ्य इदं० ॥ ॐ येन देवाः पवित्रेण० पुनन्तु मा स्वाहा । पावमानीभ्य इदं० ॥ ॐ प्राजापत्यं० पुनीमहे स्वाहा । ब्रह्मण इदं० ॥ ॐ इन्द्रः सुनीती० पुनातु स्वाहा । इन्द्राय सुनीत्या सहिताय सोमाय स्वस्त्या सहिताय वरुणाय समीच्या सहिताय यमाय राज्ञे प्रमृणाभिस्सहिताय जातवेदस ऊर्जयन्त्या सहितायेदं० ॥ ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा, इत्यादि चतस्रो महाव्याहृतीः॥ ॐ स्वाहा । परमात्मन इदं० ॥ ॐ अग्नये स्विष्टकृते स्वाहा । अग्नये स्विष्टकृत इदं० ॥ इत्येवं पञ्चगव्याहुतीर्हुत्वाऽऽज्येन मिन्दा-हुती व्याहृतीश्च हुत्वोत्तरपरिषेकादि होमशेषं समाप्य । शरीरशुध्यर्थं पञ्चगव्यप्राशनं करिष्ये, इति सङ्कल्प्य " यत्वगास्थिगतं पापं देहे तिष्ठति मामके । प्राशनं पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् " इत्युक्त्वा प्रणवेन प्राश्नीयात् ॥ ॥ इति ब्रह्मकूर्चविधिः ॥

अथ मृत्तिकास्नानविधिः ॥ (बो. गृ. शे. सू. ५. ४) "अथातो मृत्तिकास्नानविधिं व्याख्यास्यामः । ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजको वा 'अश्वक्रान्ते, सहस्रपरमा देवी' इति भूमिं दूर्वाभिरभिमन्त्र्य" इत्यादिना प्रोक्तः ॥ गृ० सद्ग्रहे च— "अथोच्यते ह्याश्रमिणां चतुर्णां स्नानसंस्क्रिया । अश्वक्रान्तेति मन्त्राभ्यां सहस्रपरमेत्यृचा ॥ मृदं दूर्वाश्च संसाद्य नदीतीरेऽभिमन्त्रयेत्" इत्यादिभिरुक्तः ॥ "प्रारम्भे च समाप्तौ च व्रतयज्ञादिकर्मसु । बोधायनोक्तविधिना मृदा स्नानं समाचरेत्" इति प्र० मालायामपि विहितः ॥

अथ प्रयोगः— शुद्धे नदीतीरे मृत्तिकां दूर्वाश्चासाद्य "अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा । शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ॥ भूमिर्धेनुर्धरणी लोकधारिणी" इति भूमिमभिमन्त्र्य, "सहस्रपरमा देवी शतमूला शताङ्कुरा । सर्वं॰ हरतु मे पापं दूर्वा दुस्स्वप्ननाशिनी" इति दूर्वामभिमन्त्र्य, उद्धृतासि वराहेण कृष्णेन शतबाहुना" इति मृत्तिकामादाय, "काण्डात्काण्डात्० शतेन च ॥ या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम्" इति द्वाभ्यां दूर्वामादाय, "मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् । मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ॥ मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् । मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके ॥ तया हतेन पापेन गच्छामि परमां गतिम्" इति दूर्वां मृदि प्रतिष्ठाप्य तदेकदेशं क्रमेण दिक्षु विनिक्षिपेत्— "यत इन्द्र० जहि" इति प्राच्याम् । "स्वस्तिदा० अभयङ्करः" इति दक्षिणस्याम् । "स्वस्ति न इन्द्रो० दधातु" इति प्रतीच्याम् । "त्रातारमिन्द्र० धात्विन्द्रः" इत्युत्तरस्याम् । "आपान्तमन्युः० प्रति मानानि देभुः" इत्यूर्ध्वम् । "परं मृत्यो० वीरान्" इत्यधश्च निक्षिप्य, "गन्धद्वारां० श्रियम्"

इत्यवशिष्टां मृदं गृहीत्वा, "उदु त्यं० सूर्यम्" इत्यादित्यं दर्शयित्वा, प्रत्यङ्गं क्रमेण विलिम्पेत्— "श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु" इति शिरः प्रदक्षिणीकृत्य, "सहस्रशीर्षा० दशाङ्गुलम्" इति शिर आलिप्य, "विष्णुमुखा वै देवाश्छन्दोभिरिमांल्लोकाननपजय्यमभ्यजयन्" इति मुखम् । "ओजो ग्रीवाभिः" इति ग्रीवाम् । "महाꣳ इन्द्रो वज्रबाहुः० द्वेष्टि" इति बाहू मन्त्रावृत्यालिम्पेत् । "सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम्" इति कक्षौ मन्त्रावृत्या । "शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु यो ऽस्मान्द्वेष्टि" इति शरीरम्, हृदयमित्यर्थः । "नाभिर्मे चित्तं विज्ञानम् । पायुर्मेऽपचितिर्भसत्" इति नाभिम् । "आपान्तमन्युस्तृपलप्रभर्माधुनिः शिमीवाञ्छरुमाꣳ ऋजीषी । सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः" इति कटिम् । "विष्णोरराटमसि विष्णोः पृष्ठमसि" इति पृष्ठम् । "वरुणस्य स्कंभनमसि" इति मेढ्रम् । "आनन्दनन्दावाण्डौ मे । भगः सौभाग्यं पसः" इत्यण्डौ । "ऊरुवो रोजः" इत्यूरू । "ऊरू अरत्नी जानुनी । विशो मेऽङ्गानि सर्वतः" इति जानुनी । "जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि॥ विशि राजा प्रतिष्ठितः" इति जङ्घे॥ "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिं तरेम" इति चरणौ मन्त्रावृत्या ॥ "इदं विष्णुर्वि चक्रमे० पाꣳ सुरे । त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । ततो धर्माणि धारयन्" इति द्वाभ्यां दक्षिणोत्तरौ पादतलौ । "सजोषा इन्द्र० विश्वतो नः" इति शेषं दूर्वासहितं लोष्टं शिरसि निधाय तीर्थमभिप्रपद्यते— "हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः॥ यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् । तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः" इति ॥ अथात्मानमभिषिञ्चति— "सुमित्रा न आप ओषधयस्सन्तु" इति । उदकाञ्जलिमादाय लोष्टदेशे निनयति— "दुर्मित्रास्तस्मै भूयासुः" इति

प्रथमम् । "योऽस्मान्द्वेष्टि" इति द्वितीयम् । "यञ्च वयं द्विष्मः" इति तृतीयम् । "हिरण्यशृङ्गं" इति चतुर्थम् । ततः "आपो हि ष्ठा मयो भुवः" इति तिसृभिः "हिरण्यवर्णाश्शुचयः" इति चतसृभिः "पवमानः सुवर्जनः" इत्येतेनानुवाकेन च मार्जयित्वा "नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः" इति नमस्कृत्य त्रिः प्रदक्षिणमुदकमावर्तयति— "यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् । अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् ॥ तन्नो वरुणो राजा पाणिना ह्यवमर्शतु । सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः ॥ नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्म सलोकताम् । यश्चाप्सु वरुणः स पुनात्वघमर्षणः" इति । "इमं मे गङ्गे० सुषोमया" इत्यपोऽभिमन्त्र्य ( प्रार्थयते— आपस्त्वमासि देवेश ज्योतिषां पतिरीश्वरः । पापं नाशय मे देव वाङ्मनःकर्मभिः कृतम् ॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ योऽसौ सर्वगतो विष्णुश्चिद्रूपी परमेश्वरः । स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ विष्णुपादोद्भवे देवि शिवे शिवजटालये । कमण्डलुसमुद्भूते ब्रह्मणस्त्वमिहावह" इति ) अथाप्सु सूर्याभिमुखः प्रवाहाभिमुखो वा त्रिर्निमज्योन्मज्य "ऋतञ्च सत्यं० समुद्रो अर्णवः ॥ समुद्रादर्णवात्० मिषतो वशी ॥ सूर्याचन्द्रमसौ ० चान्तरिक्षमथो सुवः" इत्यघमर्षणेनान्तर्गतजलस्त्रीन्प्राणायामान्धारयित्वा "यत्पृथिव्याꣳ रजस्वमान्तरिक्षे विरोदसी । इमाꣳस्तदापो वरुणः पुनात्वघमर्षणः ॥ पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः । एष भूतस्य मध्ये भुवनस्य गोप्ता ॥ एष पुण्यकृतांल्लोकानेष मृत्योर्हिरण्मयम् ॥ द्यावापृथिव्योर्हिरण्मयꣳ सꣳश्रितꣳ सुवः ॥ स नः सुवस्सꣳ शिशाधि" इत्यपोऽवगाह्य "आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि ॥ योहमस्मि ब्रह्माह-

मास्मि । अहमस्मि ब्रह्माहमस्मि ॥ अहमेवाहं मां जुहोमि स्वाहा ” इत्यपः पीत्वा “ अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः । वरुणोपामघमर्षणस्तस्मात् पापात् प्रमुच्यते ॥ रजो भूमिस्त्वमाꣳ रोदयस्व प्रवदन्ति धीराः । आक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ॥ वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ” इति पुनरवगाह्य द्विराचम्य वक्ष्यमाणप्रकारेण देवर्षिपितृतर्पणं कुर्यात् ॥ तत्राशक्तश्चेत् नित्यस्नानोक्तप्रकारेण “ ब्रह्मादयो ये देवाः ” इत्यादि यक्ष्मतर्पणान्तं विधाय, “ स्नातोऽहं सर्वतीर्थेषु स्रवन्मद्देहजं जलम् । तत्पानकामाः पितर आगच्छन्तु पिबन्तु च ” इत्युक्त्वा, “ शुचीवो हव्या० शुचयः पावकाः ” इत्यन्यत्प्रयतं वस्त्रं प्रोक्ष्य, “ देवस्य त्वा० हस्ताभ्यामाददे ” इति तद्वस्त्रमादाय “ अवधूतꣳ रक्षोऽवधूता अरातयः ” इत्यवधूय “ उदु त्यं, चित्रम् ” इत्यादित्यं दर्शयित्वा “ आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः ॥ वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा ॥ ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा ” इति वस्त्र परिधाय द्विराचम्य “ भूतप्रेतपिशाचाद्याः सर्वे ते भूमिभारकाः । सर्वेषामविरोधेन ब्रह्मकर्म समारभे ” इति दर्भासनं प्रतिष्ठाप्योपविश्य त्रिः प्राणानायम्याष्टोत्तरशतं गायत्रीं जपेत् । ब्राह्मणः पूतो भवति । ब्रह्महत्यागोवधगुरुतल्पसुरापानसुवर्णस्तेयादिसर्वपापप्रणाशनमिति विज्ञायते ॥ ॥ इति मृत्तिकास्नानविधिः ॥

अथ महातर्पणविधिः ॥ तद्विधिरुक्तः सं० मालायां विष्णुपुराणे— “ शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम् । तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ” इति ॥ स्मृत्यन्तरे— “ आर्द्रवासा देवर्षिपितृतर्पणमम्भस्येव कुर्यात्परिहितवासाश्चेत्तीर्थमुत्तीर्य ” इति ॥ व्यासः— “ एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम् ” इति ॥ सनकादय इति

स्वस्वशाखोक्तऋष्युपलक्षणम् । स्त्रीष्वपि विशेषः स्मृत्यन्तरे— "मातृमुख्याश्च यास्तिस्रो मातामह्यादयश्च याः । अञ्जलित्रयमेता-सामन्यत्रैकैकमञ्जलिम्" इति ॥ धर्मप्रवृत्तौ— "द्वौ द्वौ सपत्नीमातुश्च त्रींस्त्रीन्मातृगणस्य तु" इति ॥ सं० मालायान्तु— "जलाञ्जलित्रयं दद्याद्ये चान्ये संस्कृता भुवि । असंस्कृतप्रमीतानामेकामेवापरं क्षिपेत्" इति बोधायनः ॥ ॥ देवादितीर्थलक्षण-मुक्तं ( बो. ध. सू. १. ८ ) "अङ्गुष्ठमूलं ब्राह्मं तीर्थम् । अङ्गुष्ठाग्रं पित्र्यमंगुल्यग्रं दैवमङ्गुलिमूलमार्षम्" ॥ अङ्गुल्यङ्गुष्ठयोर्वा मध्यं पित्र्यम्" इति विवरणे ॥

अथ महातर्पणम् ॥ अथ पवित्रपाणिः प्राङ्मुखो द्विराचम्य यज्ञोपवीती देवतीर्थेन देवांस्तर्पयेत्— ( बो. ध. सू. २. ६ ) "ॐ अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिस्सर्पा इत्येतानि प्राग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि ॥ ॐ वसूंश्च० ॥ ॐ पितरोऽर्यमा भगस्सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि दैवतानि० ॥ ॐ रुद्रांश्च० ॥ ॐ मित्र इन्द्रो महापितर आपो विश्वेदेवा ब्रह्मा विष्णुरित्येतानि प्रत्यग्द्वाराणि दैवतानि० ॥ ॐ आदित्यांश्च० ॥ ॐ वसवो वरुणोऽ-जएकपादहिर्बुध्न्यः पूषाश्विनौ यम इत्येतान्युदग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि० ॥ ॐ विश्वान्दे-वान्०॥ ॐ साध्यान्० ॥ ॐ ब्रह्माणं० ॥ ॐ प्रजापतिं० ॥ ॐ चतुर्मुखं० ॥ ॐ परमेष्ठिनं० ॥ ॐ हिरण्यगर्भं० ॥ ॐ स्वयम्भुवं० ॥ ॐ ब्रह्मपार्षदान्० ॥ ॐ ब्रह्मपार्षदींश्च० ॥ ॐ अग्निं० ॥ ॐ वायुं० ॥ ॐ वरुणं० ॥ ॐ सूर्यं० ॥ ॐ चन्द्रमसं० ॥ ॐ नक्षत्राणि० ॥ ॐ ज्योतींषि० ॥ ॐ सद्योजातं० ॥ ॐ भूः पुरुषं० ॥ ॐ भुवः पुरुषं० ॥ ॐ सुवः पुरुषं० ॥ ॐ भूर्भुवस्सुवः पुरुषं० ॥ ॐ भूः० ॥ ॐ भुवः० ॥ ॐ सुवः० ॥ ॐ महः० ॥ ॐ जनः० ॥ ॐ तपः० ॥ ॐ सत्यं० ॥ ॐ भवं देवं० ॥ ॐ शर्वं देवं० ॥ ॐ ईशानं देवं० ॥ ॐ पशुपतिं देवं० ॥ ॐ रुद्रं देवं० ॥ ॐ उग्रं देवं० ॥ ॐ भीमं देवं० ॥ ॐ महान्तं देवं० ॥

ॐ भवस्य देवस्य पत्नीं० ॥ ॐ शर्वस्य देवस्य पत्नीं० ॥ ॐ ईशानस्य देवस्य पत्नीं० ॥ ॐ पशुपतेर्देवस्य पत्नीं० ॥ ॐ रुद्रस्य देवस्य पत्नीं० ॥ ॐ उग्रस्य देवस्य पत्नीं० ॥ ॐ भीमस्य देवस्य पत्नीं० ॥ ॐ महतो देवस्य पत्नीं० ॥ ॐ भवस्य देवस्य सुतं० ॥ ॐ शर्वस्य देवस्य सुतं० ॥ ॐ ईशानस्य देवस्य सुतं० ॥ ॐ पशुपतेर्देवस्य सुतं० ॥ ॐ रुद्रस्य देवस्य सुतं० ॥ ॐ उग्रस्य देवस्य सुतं० ॥ ॐ भीमस्य देवस्य सुतं० ॥ ॐ महतो देवस्य सुतं० ॥ ॐ रुद्रान्० ॥ ॐ रुद्रपार्षदान्० ॥ ॐ रुद्रपार्षदीश्च० ॥ ॐ विघ्नं० ॥ ॐ विनायकं० ॥ ॐ वीरं० ॥ ॐ शूरं० ॥ ॐ वरदं० ॥ ॐ हस्तिमुखं० ॥ ॐ वक्रतुण्डं० ॥ ॐ एकदन्तं० ॥ ॐ लम्बोदरं० ॥ ॐ गणपतिं० ॥ ॐ विघ्नपार्षदान्० ॥ ॐ विघ्नपार्षदीश्च० ॥ ॐ सनत्कुमारं० ॥ ॐ स्कन्दं० ॥ ॐ इन्द्रं० ॥ ॐ षष्ठीं० ॥ ॐ षण्मुखं० ॥ ॐ विशाखं० ॥ ॐ जयन्तं० ॥ ॐ महासेनं० ॥ ॐ स्कन्दपार्षदान्० ॥ ॐ स्कन्दपार्षदीश्च० ॥ ॐ आदित्यं० ॥ ॐ सोमं० ॥ ॐ अङ्गारकं० ॥ ॐ बुधं० ॥ ॐ बृहस्पतिं० ॥ ॐ शुक्रं० ॥ ॐ शनैश्चरं० ॥ ॐ राहुं० ॥ ॐ केतुं० ॥ ॐ केशवं० ॥ ॐ नारायणं० ॥ ॐ माधवं० ॥ ॐ गोविन्दं० ॥ ॐ विष्णुं० ॥ ॐ मधुसूदनं० ॥ ॐ त्रिविक्रमं० ॥ ॐ वामनं० ॥ ॐ श्रीधरं० ॥ ॐ हृषीकेशं० ॥ ॐ पद्मनाभं० ॥ ॐ दामोदरं० ॥ ॐ श्रियं देवीं० ॥ ॐ सरस्वतीं देवीं० ॥ ॐ पुष्टिं देवीं० ॥ ॐ तुष्टिं देवीं० ॥ ॐ वैनतेयं० ॥ ॐ विष्णुपार्षदान्० ॥ ॐ विष्णुपार्षदीश्च० ॥ ॐ यमं० ॥ ॐ यमराजं० ॥ ॐ धर्मं० ॥ ॐ धर्मराजं० ॥ ॐ कालं० ॥ ॐ नीलं० ॥ ॐ मृत्युं० ॥ ॐ अन्तकं० ॥ ॐ चित्रगुप्तं० ॥ ॐ औदुम्बरं० ॥ ॐ वैवस्वतं० ॥ ॐ वैवस्वतपार्षदान्० ॥ ॐ वैवस्वतपार्षदीश्च० ॥ ॐ भरद्वाजं० ॥ ॐ गौतमं० ॥ ॐ अत्रिं० ॥ ॐ आङ्गिरसं० ॥ ॐ विद्यां० ॥ ॐ दुर्गां० ॥ ॐ ज्येष्ठां० ॥ ॐ धान्वन्तरिं० ॥ ॐ धान्वन्तरिपार्षदान्० ॥ ॐ धान्वन्तरिपार्षदीश्च तर्पयामि" इति ॥ अथ निवीती उदङ्मुखं ऋषितीर्थेन ऋषीन्द्विर्द्विस्तर्पयेत्—"ॐ ऋषींस्तर्पयामि ॥ ॐ परमऋषीन्० ॥

ॐ महर्षीन्० ॥ ॐ ब्रह्मर्षीन्० ॥ ॐ देवर्षीन्० ॥ ॐ राजर्षीन्० ॥ ॐ श्रुतर्षीन्० ॥ ॐ जनर्षीन्० ॥ ॐ तपर्षीन्० ॥ ॐ सत्यर्षीन्० ॥ ॐ सप्तर्षीन्० ॥ ॐ काण्डर्षीन्० ॥ ॐ ऋषिकान्० ॥ ॐ ऋषिपत्नीः० ॥ ॐ ऋषिपुत्रान्० ॥ ॐ ऋषिपौत्रान्० ॥ ॐ काण्वं बोधायनं० ॥ ॐ आपस्तम्बं सूत्रकारं० ॥ ॐ सत्याषाढं हिरण्यकेशिनं० ॥ ॐ वाजसनेयिनं याज्ञवल्क्यं० ॥ ॐ आश्वलायनं शौनकं० ॥ ॐ व्यासं० ॥ ॐ वसिष्ठं० ॥ ॐ प्रणवं० ॥ ॐ व्याहृतीः० ॥ ॐ सावित्रीं० ॥ ॐ गायत्रीं० ॥ ॐ छन्दांसि० ॥ ॐ ऋग्वेदं० ॥ ॐ यजुर्वेदं० ॥ ॐ सामवेदं० ॥ ॐ अथर्ववेदं० ॥ ॐ अथर्वाङ्गिरसं० ॥ ॐ इतिहासपुराणानि० ॥ ॐ सर्ववेदान्० ॥ ॐ सर्पदेवजनान्० ॥ ॐ सर्वभूतानि तर्पयामि तर्पयामि " इति ॥ अथ प्राचीनावीती दक्षिणाभिमुखः पितृतीर्थेन पितृंस्त्रिस्त्रिस्तर्पयेत्— " ॐ पितृन्स्वधानमस्तर्पयामि तर्पयामि तर्पयामि ॥ ॐ पितामहान्० ॥ ॐ प्रपितामहान्० ॥ ॐ मातृः० ॥ ॐ पितामहीः० ॥ ॐ प्रपितामहीः० ॥ ॐ मातामहान्० ॥ ॐ मातुःपितामहान्० ॥ ॐ मातुःप्रपितामहान्० ॥ ॐ मातामहीः० ॥ ॐ मातुःपितामहीः० ॥ ॐ मातुःप्रपितामहीः० ॥ ॐ आचार्यान्० ॥ ॐ आचार्यपत्नीः० ॥ ॐ गुरून्० ॥ ॐ गुरुपत्नीः० ॥ ॐ सखीन्० ॥ ॐ सखिपत्नीः० ॥ ॐ ज्ञातीन्० ॥ ॐ ज्ञातिपत्नीः० ॥ ॐ अमात्यान्० ॥ ॐ अमात्यपत्नीः० ॥ ॐ सर्वान्० ॥ ॐ सर्वा स्वधानमस्तर्पयामि तर्पयामि तर्पयामि " इति ॥ अनुतीर्थमप उत्सिञ्चति— " ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥ स्वधा स्थ तर्पयत मे पितृन् । तृप्यत तृप्यत तृप्यत " इति ॥

अथोत्सर्जनोपाकर्मणोः समानतन्त्रप्रयोगः ॥ अथाचार्यस्सहान्तेवासिभिः प्रातः स्नानादिनित्यकर्म निर्वर्त्य प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य नद्यादौ विधिवत् स्नात्वा नदीतीरे देवालये वा शुचौ समे देशे चतस्रो वेदिकाः कुर्यात् ॥ तत्र

मध्ये–देवपूजार्थं चतुरस्रां प्राक्प्रवणां, तदुत्तरे–ऋषिपूजार्थं चतुरस्रां उदक्प्रवणां, दक्षिणे–पितृपूजार्थं चतुरस्रां दक्षिणाप्रवणां, तद्दक्षिणे–स्वस्वपितृपूजार्थं चतुरस्रां दक्षिणाप्रवणां च एवं वेदिचतुष्टयं कृत्वा, तण्डुलैः पूरयित्वा मध्यवेद्यां–दर्भद्वयकृतान्कूर्चान् प्रागग्रान्, एवमेव उत्तरवेद्याम्–उदगग्रान्, दक्षिणवेद्यां–त्रिदर्भकृतान्कूर्चान्दक्षिणाग्रान्, तद्दक्षिणवेद्यां–तथैव दक्षिणाग्रान्निदध्यात् ॥ अथाचार्योऽन्तेवासिभिस्सह कृतस्नानादिचतुष्टयो दर्भेष्वासीनो दर्भान्धारयमाण आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "सर्वेषामधीतानामध्येष्यमाणानां छन्दसामस्थानोच्छ्वासादिजनितयातयामतानिरासेनाऽऽप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थ-मुत्सर्जनोपाकर्मणी कर्तुं आदौ शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृद्ध्यर्थमभ्युदयार्थंश्चैभिर्ब्राह्मणैस्सह स्वस्तिपुण्याहवाचनं तदादौ निर्विघ्नता-सिद्ध्यर्थं गणपतिपूजनञ्च करिष्ये," इति सङ्कल्प्य गणपतिं सम्पूज्य 'अनयोरुत्सर्जनोपाकर्मणोः पुण्याहं भवन्तो ब्रुवन्तु' इत्यादि 'देवर्षिपितरः प्रीयन्ताम्, सविता प्रीयताम्' इति पुण्याहं वाचयेत् ॥ अथ सर्वे आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "सर्वेषामधीतानां छन्दसां सवीर्यत्वायोत्सर्जनाख्यं कर्म करिष्ये, तदङ्गत्वेन देवर्षिपितॄन्पूजयिष्ये" इति सङ्कल्प्यासनानि कल्पयन्ति ॥ सर्वे यज्ञोपवीतिनो देवमण्डले नैर्ऋत्यकोणादारभ्य प्रागपवर्गं— "ॐ ब्रह्मणे आसनं कल्पयामि १। प्रजापतये० २। बृहस्पतये० ३। अग्नये० ४। वायवे० ५। सूर्याय० ६। चन्द्रमसे० ७। नक्षत्रेभ्यः० ८। ऋतुभ्यः० ९। संवत्सराय० १०। इन्द्राय राज्ञे० ११। यमाय राज्ञे० १२। वरुणाय राज्ञे० १३। सोमाय राज्ञे० १४। वैश्रवणाय राज्ञे० १५। वसुभ्यः० १६। रुद्रेभ्यः० १७। आदित्येभ्यः० १८। विश्वेभ्यो देवेभ्यः० १९। साध्येभ्यो देवेभ्यः० २०। सर्वेभ्यो देवेभ्यः० २१। सर्वाभ्यो देवताभ्यः० २२। मरुद्भ्यः० २३। ऋभुभ्यः० २४। भृगुभ्यः० २५। अथर्वभ्यः० २६। अङ्गिरोभ्यः० २७। विश्वामित्राय० २८। जमदग्नये० २९। जामदग्न्याय०

---

१. सर्वेऽपि मण्डलेषु पृथक्पृथक् देवर्षिपितॄन्पूजयेयुः, आचार्य एव वा सर्वैरन्वारब्धः पूजयेत् ॥

३०। भरद्वाजाय० ३१। गौतमाय० ३२। आत्रेयाय० ३३। वसिष्ठाय० ३४। काश्यपाय० ३५। अरुन्धत्यै० ३६"॥ दक्षिणकोष्ठे—"अगस्त्याय० ३७"॥ अथ निवीतिनस्तदुत्तरे ऋषिमण्डले नैर्ऋत्यकोणादारभ्योदगपवर्गं—"ॐ कृष्णद्वैपायनाय० १। जातुकर्णाय० २। तरुक्षाय० ३। तृणबिन्दवे० ४। सोमशुष्मिणे० ५। सोमशुष्मायणाय० ६। वाजिने० ७। वाजश्रवसे० ८। बृहदुक्थाय० ९। वर्मिणे० १०। वज्रिणे० ११। वरूथाय० १२। सनत्कुमाराय० १३। वामदेवाय० १४। वाजिरत्नाय० १५। वीरजिताय० १६। हर्यश्वाय० १७। दमाय० १८। उद्मेधाय० १९। ऋणञ्जयाय० २०। तृणञ्जयाय० २१। कृतञ्जयाय० २२। धनञ्जयाय० २३। सत्यञ्जयाय० २४। बभ्रवे० २५। त्र्यरुणाय० २६। त्रिवर्षाय० २७। त्रिधातवे० २८। अश्वज्ञाय० २९। पराशराय० ३०। रुद्राय० ३१। मृत्यवे० ३२। कर्त्रे० ३३। विकर्त्रे० ३४। सुकर्त्रे० ३५। त्वष्ट्रे० ३६। धात्रे० ३७। विधात्रे० ३८। सुधात्रे० ३९। सुश्रवसे० ४०। सुतश्रवसे० ४१। सत्यश्रवसे० ४२। सवित्रे० ४३। सावित्र्यै० ४४। छन्दोभ्यः० ४५। ऋग्वेदाय० ४६। यजुर्वेदाय० ४७। सामवेदाय० ४८। अथर्ववेदाय० ४९। अथर्वाङ्गिरोभ्यः ५०। इतिहासपुराणेभ्यः० ५१। सर्वदेवजनेभ्यः० ५२। सर्वभूतेभ्यः० ५३"॥ अथ प्राचीनावीतिनो दक्षिणे पितृमण्डले वायव्यकोणादारभ्य दक्षिणापवर्गं—"ॐ वैशम्पायनाय० १। पलिङ्गवे० २। तित्तिरये० ३। उखाय० ४। उख्याय० ५। आत्रेयाय पदकाराय० ६। कौण्डिन्याय वृत्तिकाराय० ७। काण्वाय बोधायनाय० ८। प्रवचनकाराय० ९। आपस्तम्बाय सूत्रकाराय० १०। सत्याषाढाय हिरण्यकेशाय० ११। वाजसनेयाय याज्ञवल्क्याय० १२। भरद्वाजाय० १३। अग्निवेश्याय० १४। आचार्येभ्यः० १५। ऊर्ध्वरेतोभ्यः० १६। वानप्रस्थेभ्यः० १७। वंशस्थेभ्यः० १८। एकपत्नीभ्यः० १९"॥ तथैव तद्दक्षिणे स्वस्वपितृभ्यः वायव्यकोणादारभ्य दक्षिणापवर्गं—"ॐ पितृभ्यः० १। पितामहेभ्यः० २। प्रपितामहेभ्यः० ३। मातृभ्यः० ४। पितामहीभ्यः० ५। प्रपितामहीभ्यः ६। मातामहेभ्यः० ७। मातुःपितामहेभ्यः० ८। मातुःप्रपितामहेभ्यः० ९। मातामहीभ्यः० १०। मातुःपितामहीभ्यः० ११। मातुःप्रपितामहीभ्यः० १२"॥

इत्यासनं कल्पयित्वा एवमेव क्रमेण "ॐ भूर्भुवस्सुवः ब्रह्मणे नमः ब्रह्माणमावाहयामि" इत्यादिभिरावाह्य षोडशोपचारैरभ्यर्च्य ॐ ब्रह्मणे स्वाहा, प्रजापतये स्वाहा" इत्यादिभिर्यथाक्रममन्त्रेन बलिं दत्वा "ॐ ब्रह्माणं तर्पयामि, प्रजापतिं तर्पयामि" इत्यादिभिः फलोदकेन तर्पयित्वाऽथ सर्वे यज्ञोपवीतिनः आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, सर्वेषामधीतानां छन्दसां सवीर्यत्वाय श्रीपरमेश्वरप्रीत्यर्थमुत्सर्जनाङ्गब्रह्मयज्ञेन यक्ष्ये, इति सङ्कल्प्य "ॐ विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि" हस्ताववनिज्य त्रिराचामेद्द्विः परिमृज्य सकृदुपस्पृश्य सव्यं पाणिं पादौ च प्रोक्ष्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य, वामपादोपरि दक्षिणपादं प्रतिष्ठाप्य दक्षिणजानूपरि दक्षिणोत्तरौ पाणी कृत्वा "ॐ भूर्भुवस्सुवः" इति प्रतिपद्य सावित्रीं पच्छोऽर्धर्चशोऽनवानमुक्त्वा "अग्निमीळे" इत्यृचं, "इषे त्वोर्जे त्वा, यज्ञस्य, शुन्धध्वम्" इत्यादितस्त्रीननुवाकानधीयीरन् काण्डादीन्वा सर्वाननुवाकानेकदेशान्वा ॥ काण्डादयश्च (इषे त्वोर्जे त्वा, आप उन्दन्तु, उद्धन्यमानम्, अनुमत्यै पुरोडाशम्, सह वै देवानां, इति पञ्च) तथा–"अग्न आयाहि० बर्हिषि ॥ शन्नो देवीरभिष्टय० स्रवन्तु नः ॥ अथ शिक्षां प्रवक्ष्यामि ॥ आमावास्येन वा पौर्णमासेन वा हविषा यक्ष्यमाणो भवति ॥ वृद्धिरादैच् ॥ समाम्नायः समाम्नातः ॥ मयरसतजभनलगसम्मितम् ॥ पञ्च संवत्सरमयम् ॥ गौः ग्मा ज्मा ॥ योगीश्वरं याज्ञवल्क्यम् ॥ नारायणं नमस्कृत्य ॥ अथातो धर्मजिज्ञासा ॥ अथातो ब्रह्मजिज्ञासा" इत्येवमधीत्य "ॐ नमो ब्रह्मणे० करोमि" इति परिधानीयां त्रिरनूच्य "वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम्" इत्यपः स्पृष्ट्वा। (शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य) अथ निवीतिनः "ॐ प्रजापतिं काण्डर्षिं तर्पयामि ॥ सोमं काण्डर्षिं० ॥

---

१. देवानां सकृत्सकृत्, ऋषीणां द्विर्द्विः, पितॄणां त्रिस्त्रिस्तर्पणमिति ज्ञेयम् ॥

अग्निं काण्डर्षिं० ॥ विश्वान्देवान्काण्डर्षीन्० ॥ स्वयंभुवं काण्डर्षिं तर्पयामि " इति द्विर्द्विस्तर्पयित्वोपवीतिनो भूत्वा, " अनेनोत्सर्जनाङ्गब्रह्मयज्ञकर्मणा श्रीपरमेश्वरः प्रीयताम् " इति ब्रह्मयज्ञं समाप्य । न्यूनातिरेकदोषपरिहारार्थं " ॐ कामोऽकार्षीन्नमो नमः ॥ कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष ते काम कामाय स्वाहा ॥ मन्युरकार्षीन्नमो नमः ॥ मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा " इति मन्त्रौ पठित्वा " उत्सृष्टा वै वेदाः " इति छन्दांस्युत्सृज्य देवर्षिपितॄन्क्रमेणोद्वास्य जलसमीपे " काण्डात्काण्डात्, या शतेन प्रतनोषि " इति द्वाभ्यां दूर्वा रोपयित्वा नामग्राहमन्योन्यं हस्तैर्हस्तान्समालभ्य जलाशयं विलोडनेनोर्मिमन्तङ्कुर्वन्तोऽवगाह्य त्रिरुद्धत्य प्राचीमुदीचीं वा यावद्बलं शीघ्रं धावित्वा पुनरागत्य तदानीमेवोपाकर्म कुर्युः इति ॥

अथोपाकर्म ॥ सर्वे दर्भेष्वासीनाः पवित्रपाणय आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " सर्वेषामधीतानामध्येष्यमाणानां छन्दसामस्थानोच्चारादिजनितयातयामतानिरासनेनाऽऽप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थमुपाकर्माख्यं कर्म करिष्ये " इति सङ्कल्पं कुर्युः ॥ नूतनब्रह्मचारिणस्तु– वपनं स्नानादि चतुष्टयं च कृत्वाऽऽचमनादि देशकालसङ्कीर्तनान्ते " अध्येष्यमाणानां छन्दसां यातयामतानिरासेनाऽऽप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदोपाकरणाख्यं कर्म करिष्ये, तदादौ शान्त्यर्थं० अभ्युदयार्थं[1]चैभिर्ब्राह्मणैस्सह नान्दीसमाराधनं स्वस्तिपुण्याहवाचनं निर्विघ्नतासिध्यर्थं गणपतिपूजनञ्च करिष्ये " इति सङ्कल्प्य पुण्याहान्तं क्रमेण कुर्युः ॥ अथ समन्वारब्धेष्वन्तेवासिष्वाचार्यः स्थण्डिलोल्लेखनादिलौकिकाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ

१. नान्दीसमाराधनमाद्यविवाहान्तं पित्रादिभिरेव कार्यमिति नान्दीप्रकरणोक्तं सर्वत्र न विस्मरणीयम् ॥

सङ्कीर्त्य, सर्वेषामध्येष्यमाणानां छन्दसां सवीर्यत्वायोपाकर्महोमं करिष्ये, इति सङ्कल्प्य उपाकर्महोमः कर्म, आघारवत्तन्त्रम्, पञ्चवशदारुरिध्मः, अग्नीषोमावाज्यभागौ, बलवर्धनो नामाग्निः, सविता देवता, चरुर्हविः, अग्निः स्विष्टकृत्, इत्याद्यन्वाधायापरिधिन्निधानात्कृत्वाऽग्रेणाग्निं पञ्चकोष्ठेषु तण्डुलपुञ्जेषु उदगग्रान्कूर्चान्निधाय 'उपाकर्माङ्गत्वेन पञ्चकाण्डर्षीन्पूजयिष्ये' इति सङ्कल्प्य सर्वे निवीतनस्तेभ्य उदगपवर्गमासनानि कल्पयित्वा "ॐ सप्त ते अग्ने० घृतेन ॐ भूर्भुवस्सुवः प्रजापतिं काण्डर्षिमावाहयामि॥ ॐ भूर्भुवस्सुवः सोमं काण्डर्षिमावाहयामि ॥ ॐ भूर्भुवस्सुवः अग्निं काण्डर्षिमावाहयामि ॥ ॐ भूर्भुवस्सुवः विश्वान्देवान् काण्डर्षीनावाहयामि ॥ ॐ भूर्भुवस्सुवः स्वयंभुवं काण्डर्षिमावाहामि" इत्यावाह्य गन्धादिभिरभ्यर्च्य "ॐ प्रजापतिं काण्डर्षिं तर्पयामि । सोमं काण्डर्षिं त० । अग्निं कां० । विश्वान्देवान्कां० । स्वयंभुवं कां० " इति तर्पयित्वा यज्ञोपवीतिनो भवेयुः ॥ अथाऽऽचार्यः परिधानप्रभृत्यग्निमुखान्तं कृत्वा सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधायाथाऽऽज्याहुतीरुपजुहोति— "ॐ याज्ञिकीभ्यो देवताभ्यः स्वाहा ॥ याज्ञिकीभ्यो देवताभ्य इदं० ॥ ॐ साꣳहितीभ्यो देवताभ्यः स्वाहा ॥ साꣳहितीभ्यो देवताभ्य इदं० ॥ ॐ वारुणीभ्यो देवताभ्यः स्वाहा ॥ वारुणीभ्यो देवताभ्य इदं० ॥ ॐ सर्वाभ्यो देवताभ्यः स्वाहा ॥ सर्वाभ्यो देवताभ्य इदं० ॥ अथ निवीती — ॐ प्रजापतये काण्डर्षये स्वाहा ॥ प्रजापतये काण्डर्षय इदं० ॥ ॐ सोमाय काण्डर्षये स्वाहा ॥ सोमाय काण्डर्षय इदं० ॥ ॐ अग्नये काण्डर्षये स्वाहा ॥ अग्नये काण्डर्षय इदं० ॥ ॐ विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा ॥ विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदं० ॥ ॐ स्वयम्भुवे काण्डर्षये स्वाहा ॥ स्वयम्भुवे काण्डर्षय इदं० ॥ अथोपवीती– ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं

मेधामग्नासिषᳬ स्वाहा ॥ सदसस्पतय इदं० ॥ ॐ तत्सवितुर्वरेण्यं० प्रचोदयात्स्वाहा ॥ सवित्र इदं० ॥ ॐ ऋग्वेदाय स्वाहा ॥ ऋग्वेदायेदं० ॥ ॐ यजुर्वेदाय स्वाहा ॥ यजुर्वेदायेदं० ॥ ॐ सामवेदाय स्वाहा ॥ सामवेदायेदं० ॥ अथर्ववेदाय स्वाहा ॥ अथर्ववेदायेदं० ॥ ॐ अथर्वाङ्गिरोभ्यः स्वाहा ॥ अथर्वाङ्गिरोभ्य इदं० ॥ ॐ इतिहासपुराणेभ्यः स्वाहा ॥ इतिहासपुराणेभ्य इदं० ॥ ॐ सर्पदेवजनेभ्यः स्वाहा ॥ सर्पदेवजनेभ्य इदं० ॥ ॐ सर्वभूतेभ्यः स्वाहा ॥ सर्वभूतेभ्य इदं०" ॥ इत्येकोनविंशत्याज्याहुतीर्हुत्वा वर्त्या यज्ञोपवीतमवदानधर्मेणावदाय जुहोति— "ॐ यज्ञोपवीतं परमं० बलमस्तु तेजस्स्वाहा" इति ॥ प्रजापतय इदं० ॥ ततः सर्वे गुरुभ्यो यज्ञोपवीतं दत्त्वा "श्रौतस्मार्तकर्मानुष्ठानयोग्यतासिध्यर्थं यज्ञोपवीतधारणं करिष्ये" इति सङ्कल्प्याचम्य विधिवदभिमन्त्रितं यज्ञोपवीतं "यज्ञोपवीतम्" इति मन्त्रेण धृत्वा पुनराचामेयुः ॥ गृहस्थादय एवमेव द्वे त्रीणि वा यथोक्तं धृत्वा पुरा धृतं विसृजेयुः ॥ ब्रह्मचारिणस्त्वेकमेव यज्ञोपवीतं धृत्वाचम्य "इयं दुरुक्तात्" इति मेखलां त्रिः परिवीय "ऋतस्य गोप्त्री" इति परिवीतमनुमन्त्र्य "प्राणानां ग्रन्थिरसि" इति ग्रन्थिं कृत्वा "मित्रस्य चक्षुः" इति कृष्णाजिनं धृत्वा "सोमोऽसि सोमपं मा कुरु" इति पालाशं दण्डं, "ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा" इति बैल्वं वा दण्डं धृत्वा पूर्वधृतानप्सु विसृजेयुः ॥ अथ सर्वे दर्भेष्वासीना दर्भान्धारयमाणाः प्राणानायम्य देशकालौ सङ्कीर्त्य "उत्सृष्टानां छन्दसामुपाकरणार्थं ब्रह्मयज्ञेन यक्ष्ये" इति सङ्कल्प्य 'विद्युदसि' इत्याद्युत्सर्जनोक्तप्रकारेण काण्डर्षितर्पणान्तं ब्रह्मयज्ञं कृत्वा, अनेनोपाकर्माङ्गब्रह्मयज्ञकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ न्यूनातिरेकदोषपरिहारार्थं "कामोऽकार्षीन्नमो नमः, मन्युरकार्षीन्नमो

[1] "यज्ञोपवीतमन्त्रेण हुत्वाग्नावुपवीतकम्। दत्वा तु गुरवे नूत्नं धृत्वा स्वाध्यायमाचरेत्" इति स्मृत्यन्तरे ॥

नमः ” इति मन्त्रौ पठित्वा “ उपाकृता वै वेदाः ” इत्युक्त्वा स्विष्टकृदादि होमशेषं समाप्य काण्डर्षीनुद्वास्य ब्राह्मणानपूपैर्धानाभिः सक्तुभिरोदनेन वा यथोपपादं सन्तर्प्य “ ऋषयश्छन्दांस्याचार्या वेदा यज्ञाश्च प्रीयन्ताम् ” इति वाचयित्वा अनेनोपाकर्मकर्मणा श्रीपरमेश्वरः प्रीयताम्, इतीश्वरार्पणं कृत्वा त्र्यहमेकाहं वा नाधीयीरन्। एवमन्येष्वप्यनध्यायेषु नाधीयीरन् ॥ इत्युपाकर्महोमः ॥

अथानध्यायाः ॥ ते च नित्या नैमित्तिकाश्चेति द्विविधाः ॥ तत्र नित्यानाह पराशरीये हारीतः – “ प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः ॥ श्वोनध्यायेद्य शर्वर्यां नाधीयीत कदाचन ” इति ॥ नैमित्तिकानाह तत्रैव नारदः— “ अयने विषुवे चैव शयने बोधने हरेः ॥ अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ” इति ॥ मन्वादयश्चाभिहिता मत्स्यपुराणे– “आश्वयुक्शुक्लनवमी कार्तिके द्वादशी सिता। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा। आषाढस्याथ दशमी माघमासस्य सप्तमी। श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा। कार्तिकी फाल्गुनी चैत्री ज्येष्ठी पंचदशी सिता। मन्वन्तरादयश्चैते दत्तस्याक्षय्यकारकाः ” इति ॥ युगादयोपि विष्णुपुराणे वर्णिताः— “ वैशाखमासस्य सिता तृतीया नवम्यसौ कार्तिकशुक्लपक्षे। नभस्य मासस्य च कृष्णपक्षे त्रयोदशी पंचदशी च माघे ” इति ॥ अन्ये च नैमित्तिकाः प्रोक्ता कूर्मपुराणे— “ उपाकर्माणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम्। अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ” इति ॥ अष्टकाश्चाह बोधायनः—“तैषे माघे फाल्गुने चापरपक्षस्य सप्तम्यष्टमीनवम्यस्तिस्रोष्टकाः ” इति ॥ गृह्ये चान्ये नैमित्तिकानध्यायाः प्रोक्ताः। (बो. गृ. सू. ३·१) “श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य त्र्यहमेकाहं वा नाधीयीरन् ॥ मासं प्रदोषे नाधीयीरन्। नित्यं चैव भुक्त्वोर्ध्वम्। मध्यरात्रात्स्तानिते एवमेव काण्डोपाकरणकाण्डसमापनाभ्याम् ॥ सप्रदोषमहरनध्यायः। अस्तमिते चोदयाद्विद्युति च स्वप्नान्तम् ॥

एवमेव काण्डोपाकरणकाण्डसमापनाभ्याम् " इति ॥ त्रयोदश्यादिप्रदोषेष्वपि नाधीयीत। तथा चादित्यपुराणे- " मेधाकामस्त्रयोदश्यां सप्तम्यां च विशेषतः। चतुर्थ्यां च प्रदोषेषु न स्मरेन्न च कीर्तयेत् " इति ॥ अत्र तिथिद्वैधे निर्णयः स्मृत्यर्थसारे— " चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने। नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥ अर्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके " इति ॥ मण्डूकाद्यन्तरागमने उत्पातादौ चानध्याय उक्तः पराशरीये— " पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः। कृतेन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ चोरैरुपप्लुते ग्रामे संभ्रमे वाग्निकारिते ॥ अकालिकमनध्यायं विद्यात्सर्वाद्भुतेष्वपि " इति ॥ गृ० संग्रहेपि- " अकालवर्षणाच्चैव भूकम्पोल्कानिपातनात् ॥ सोमसूर्यग्रहादूर्ध्वं त्रिरात्रं वर्जयेत् त्रयीम् ॥ देवोत्सवे च यज्ञे च प्रयाते वसुधापतौ। महति श्रोत्रिये याते तद्दिनं वर्जयेत् त्रयीम् " इति ॥ धर्मसूत्रे च ( बो. ध. सू. १. २१ ) " पौर्णमास्यष्टकाऽमावास्याऽग्न्युत्पातभूमिकम्पश्मशानदेशपतिश्रोत्रियैकतीर्थप्रायणेष्वहोरात्रमनध्यायः ॥ वाते पूतिगन्धे नीहारे नृत्तगीतवादित्ररुदितसामशब्देषु तावन्तं कालम् ॥ स्तनयित्नुवर्षविद्युत्सन्निपाते त्र्यहमनध्यायोऽन्यत्र वर्षाकालात् ॥ पित्र्यप्रतिग्रहभोजनयोश्च तद्दिवसशेषम् ॥ भोजनेष्वाजरणम् ॥ पितर्युपरते त्रिरात्रम् ॥ शूद्रापपात्रश्रवणसन्दर्शनयोश्च तावन्तं कालम् ॥ नक्तं शिवाराबे नाऽधीयीत स्वप्नान्तम् ॥ अहोरात्रयोस्सन्धयोः पर्वसु च नाऽधीयीत ॥ अन्येषु चाद्भुतोत्पातेष्वहोरात्रमनध्यायोऽन्यत्र मानसात् ॥ मानसेऽपि जननमरणयोरनध्यायः ॥ अथाऽप्युदाहरन्ति— " हन्त्यष्टमी ह्युपाध्यायं हन्ति शिष्यं चतुर्दशी। हन्ति पञ्चदशी विद्यां तस्मात्पर्वाणि वर्जयेत् " इति ॥ अनध्यायानामपवादमप्याह मनुः— " वेदोपकरणे चैव स्वाध्याये चैव नैत्यके। नानुरोधोस्त्यनध्याये होममन्त्रेषु चैव हि " इति ॥ शौनकोपि- " नित्ये जपे च काम्ये च क्रतौ पारायणेपि च ॥ नानध्यायोस्ति वेदानां ग्रहणे ग्राहणे तथा " इति ॥ कूर्मपुराणे च— " अनध्यायस्तु नांगेषु नेतिहासपुराणयोः ॥ न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् " इति ॥ अनध्याये तिथिनिर्णयः प्रोक्तो

वैद्यनाथीये— " उदयेस्तमये वापी मुहूर्तत्रयगामि यत् ॥ तद्दिनं तदहोरात्रं चानध्यायविदो विदुः । केचिदाहुः क्वचिद्देशे यावत्तद्दिननाडिकाः । तावदेव त्वनध्यायो न तन्मिश्रदिनान्तरे " इति ॥

अथ वेदारम्भः ॥ स च गृ० संग्रहे विहितः– " काले वेदमुपाकृत्य विद्यारम्भं च कारयेत् ॥ शुभे परीक्षिते काले प्रबुद्धे च जनार्दने ॥ शश्यृक्षबलसंपूर्णे खेचरानिधनाश्रिते ॥ स्थंडिलेग्निं समिध्याथ कृत्वा ब्रह्मार्चनान्तकम् ॥ पुरत स्थंडिले वह्नेर्निदध्यात् कलशं शुभम् ॥ तिरःपवित्रं सावित्र्या पूरयेत्संविपाचितम् ॥ वनौषधिजलं यद्वा गालितं विमलोदकम् ॥ व्याहृतिप्रणवैः प्रास्येद्यवानक्षततंडुलान् ॥ दूर्वादर्भफलै स्तीर्ण दूर्वादिभैश्छिनोति तम् । वर्णरूपां च वाग्देवीं श्रद्धामेधासमन्विताम् ॥ तस्मिन्नावाहयेद्देवीं वाचं मन्त्रद्वयेन च ॥ तत्सूक्तत्रितयेनैव स्पृशन्नष्टशतं जपेत् ॥ गन्धाक्षतप्रसूनाद्यैर्विधिवत्तां समर्चयेत् ॥ अर्चयित्वाथ दुग्धान्नं प्रसाद्याग्निमुखान्तकम् ॥ कृत्वा पक्वं हुनेत्पंचवर्गमन्त्रामितस्य च ॥ तत्सूक्तस्यादिमग्भ्यां तु शिष्टर्ग्भिरुपहुत्य च ॥ श्रद्धामेधाख्यसूक्ताभ्यामष्टपंचाहुतीर्हुनेत् ॥ तत स्विष्टकृदाद्यं तु कुर्यादावरदानतः । कलशस्थां ततो देवीं प्रार्थयेद्यतमानसः ॥ उपवेश्य ततः शिष्यं देवीमावाहयेद्गुरुः ॥ यजुःपवित्रैरब्लिंगैस्तत्सूक्तत्रितयेन च । अभिषिंचेत्तदुदकं कुम्भस्थं देवतात्मकम् ॥ अभ्यर्च्य गन्धपुष्पाद्यैर्वनौषधिरसान्वितम् ॥ घृतं सम्पतितं काले तत्सूक्तेनाभिमन्त्रितम् ॥ शिरो मे श्रीः प्रमुखतः स्वाहान्तादनुवाकतः ॥ प्राशयेद्व्याहृतीभिस्तु स्वाहान्ताभिश्चतुर्थशः ॥ देवीं वाचं प्र णो जुष्टश्चोदयित्री च पावका । उत नो जुषतां मे च प्र ते महे यदप्सु च ॥ इयं यस्ते स्तन इति सूक्तं सारस्वतं स्मृतम् ॥ देवीं वाचं वदन्त्यन्तं सप्तर्चः परिकीर्तिताः ॥ प्र णो देवी यदप्स्वन्तं द्वौ द्वौ मन्त्रौ प्रकीर्तितौ ॥ श्रद्धयाग्निः षडृचस्तु श्रद्धया देव इत्यृचौ । श्रद्धासूक्तमिति प्रोक्तं सूक्ते विद्याप्रदे शुभे ॥ ततो गुरुः सशिष्यस्तु वाग्यतो नियतः शुचिः ॥ पूजयित्वा हरिं लक्ष्मीं वाग्देवीं च विनायकम् ॥ स्वविद्यासूत्रकारांश्च द्विजानभ्यर्च्य शक्तितः ॥ उपस्थाय

ततः सूर्यं सावित्रीं च ततो जपेत् ॥ सम्यगष्टशतं बालं कृतब्रह्मांजलिं तथा ॥ प्रोक्त्वा वेदादिसावित्रीं पच्छोविहरणक्रमात् ॥ वेदमध्यापयेत्किंचित्तदहश्च विसर्जयेत् ॥ उपाकर्मणि केचित्तु विधिमेतं स्म कुर्वते ॥ उपाकर्मैव केचित्तु नैवं विधिमिह श्रुतम्" इति ॥ अथात्र विद्यारम्भे तिथ्यादिकमाह प्र० पारिजाते श्रीधरः- "रिक्ताष्टमी पंचदशी निषिद्धा त्रयोदशी सप्तमिका च मध्या। विद्यारम्भे वित्सितमन्त्रिणां स्युर्वारोदया मध्यममिन्दुभान्वोः ॥ हस्ताश्वयुक्श्रवणतिष्यसमीरमित्रचित्रादितित्रिपुरजिन्मृगलांछनेषु । शस्तोत्तराकमलसम्भवपौष्णभेषु मध्याश्रुतिस्मृतिसमावगतिर्द्विजानाम् ॥ विद्यारम्भे द्विस्वभावा विशिष्टा मध्याः प्रोक्ता ये चराः राशयश्च ॥ शुद्धो राशिः सप्तमश्चन्द्रवारे कुर्यात्प्राज्ञः सर्वविद्यासमाप्तिम्" इति ॥ "पूर्वाह्णेवाथ मध्याह्ने विद्यारम्भो विशिष्यते ॥ अपराह्णे चन्द्रवारे विद्यामुक्तिर्विधीयते" इति तत्रैव वसिष्ठः ॥ अथाध्ययनप्रकारमाह मनुः— "अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः । कृतब्रह्मांजलिश्चैव लघुवासा जितेन्द्रियः ॥ व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ॥ सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः" इति ॥ सं० मालायामपि- "आसने तु समासीन आचान्तः प्राङ्मुखो गुरुः ॥ प्रणवं प्राक्समुच्चार्य शिष्यमध्यापयेत्सदा" इति ॥ तत्रैव भरद्वाजशिक्षा- "प्रश्नानुवाकाद्यारम्भे सविसर्गोच्चको हरिः ॥ न सन्धिः प्रणवे नित्यं विरामे स्वरितो भवेत् ॥ ओंकारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् ॥ ओंकारं च पुनः कृत्वा भूमिं स्पृष्ट्वा समापयेत्" इति ॥ पाराशरीये वसिष्ठः — "पारम्पर्यागतो येषां वेदः सपरिबृंहणः । तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥ यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ॥ स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥ अधीत्य शाखामात्मीयां परशाखां ततः पठेत्" इति ॥

---

१- 'संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः' ॥

अथ प्रयोगः— पिता कुमारेण सह प्रातः स्नानादि चतुष्टयं विधाय पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य "अस्य कुमारकस्य निर्विघ्नेन समस्तविद्याप्राप्त्यर्थं वेदारम्भं करिष्ये" इति संकल्प्य निर्विघ्नतासिध्यर्थं गणपतिं सम्पूज्य "श्रद्धामेधासहितवाग्देवी प्रीयताम्" इति पुण्याहं वाचयित्वा स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य "विद्यारम्भहोमं करिष्ये, बलवर्धनो नामाग्निः श्रद्धामेधासहितवाग्देवी देवता, चर्वाज्ये हविषी, अग्निः स्विष्टकृत्" इत्यादि संकल्प्यापरिधानात्कृत्वाग्रेणाग्निं स्थण्डिले कलशं विधिवत्प्रतिष्ठाप्य क्वाथं सर्वौषधिजलं शुद्धजलं वा सावित्र्या पूरयित्वा यवतण्डुलदूर्वादर्भफलानि प्रणवव्याहृतिभिः प्रास्य दूर्वादर्भैः प्रतिच्छाद्य वरुणं सम्पूज्य "ॐ देवीं वाचं० नुप सुष्टुतैतु ॥ यद्वाग्वदंत्यवि० जगाम ॥ ॐ भूर्भुवस्सुवः श्रद्धामेधासहितवाग्देवीमावाहयामि" इत्यावाह्य गन्धादिभिरभ्यर्च्य दुग्धान्नं निवेद्य "देवीं वाचं" इत्यादि पंचविंशत्यृचं सरस्वतीसूक्तं "श्रद्धयाग्निः" इत्याद्यष्टर्चं श्रद्धासूक्तं "मेधा देवी" इति पंचर्चं मेधासूक्तं चाष्टोत्तरशतं जपित्वा प्रसादयेत् ॥ अथ परिधानप्रभृत्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति- "ॐ देवीं वाचं० नुप सुष्टु-तैतो ३ यद्वाग्वदन्त्यवि० परमं जगाम स्वाहा" इति ॥ वाग्देव्या इदं० ॥ ततः स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुती-रुपजुहोति-"ॐ अनन्तामन्तादभि० विश्वे स्वाहा ॥ वाग्देव्या इदं० ॥ ३ ॥ ॐ वाचं देवा उप० मिन्द्रपत्नी स्वाहा ॥ वाग्देव्या इदं० ॥ ४ ॥ ॐ वागक्षरं० मे अस्तु स्वाहा ॥ वाग्देव्या इदं० ॥ ५ ॥ ॐ यामृषयो० सुकृतस्य लोके स्वाहा ॥ वाग्देव्या इदं० ॥ ६ ॥ ॐ चत्वारि वाक्० वदन्ति स्वाहा ॥ वाग्देव्या इदं० ॥ ७ ॥ ॐ प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती ॥ धीनामवित्र्यवतु स्वाहा ॥ सर्वत्र, सरस्वत्या इदं० ॥८॥ ॐ आ नो दिवो बृहतः पर्वतादासरस्वती यजतागन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची

शग्माज्ञो वाचमुशती शृणोतु स्वाहा ॥ ९ ॥ ॐ जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् ॥ यद्वाचो मधुमत्तस्मिन्मा धाः स्वाहा सरस्वत्यै स्वाहा ॥१०॥ ॐ ऋचा स्तोम॑ँ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि स्वाहा ॥११॥ ॐ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ॥ यज्ञं दधे सरस्वती स्वाहा ॥ १२ ॥ ॐ पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् । ग्नाभिरच्छिद्रँ शरणँ सजोषा दुराधर्षं गृणते शर्म यँसत्स्वाहा ॥ १३ ॥ ॐ पावका नः सरस्वती । वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः स्वाहा ॥ १४ ॥ ॐ सरस्वत्यभिनो नेषि वस्यः । मा पस्फरीः पयसा मा न आधक् । जुषस्व नः सख्या वेश्या च । मा त्वत्क्षेत्राण्यरणानि गन्म स्वाहा ॥ १५ ॥ ॐ उत नः प्रिया प्रियासु । सप्त स्वसा सुजुष्टा । सरस्वती स्तोम्या भूत् स्वाहा ॥ १६ ॥ ॐ इमा जुह्वाना युष्मदा नमोभिः । प्रति स्तोमँ सरस्वति जुषस्व । तव शर्मन्प्रियतमे दधानाः । उपस्थे यामशरणन्न वृक्षँ स्वाहा ॥ १७ ॥ ॐ जुषतां मे वागिदँ हविः । विराड्देवी पुरोहिता । हव्यवाडनपायिनी स्वाहा ॥ १८ ॥ ॐ यया रूपाणि बहुधा वदन्ति । पेशाँसि देवाः परमे जनित्रे । सा नो विराडनपस्फुरन्ती । वाग्देवी जुषतामिदँ हविः स्वाहा ॥ १९ ॥ ॐ प्र ते महे सरस्वति । सुभगे वाजिनीवति । सत्यवाचे भरेमतिँ स्वाहा ॥२०॥ ॐ इदं ते हव्यं घृतवत्सरस्वति । सत्यवाचे प्रभरेमा हवीँषि । इमानि ते दुरिता सौभगानि । तेभिर्वयँ सुभगास स्याम स्वाहा ॥२१॥ ॐ यदप्सु ते सरस्वति । गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति । मुखमङ्धि सरस्वति स्वाहा ॥२२॥ ॐ या सरस्वती वैशंभल्या । तस्यां मे रास्व । तस्यास्ते भक्षीय । तस्यास्ते भूयिष्ठभाजो भूयास्म स्वाहा ॥२३॥ ॐ इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा । वधूर्जजानन-वगज्जनित्री त्रय एनां महिमानः सचंते स्वाहा ॥ २४ ॥ ॐ यस्ते स्तनः० सरस्वति तमिहधातवेकः स्वाहा ॥२५॥" इति सरस्वती-

सूक्तेनोपहुत्य॥ "ॐ श्रद्धयाग्निः० वेदयामासि स्वाहा॥ सर्वत्र, श्रद्धाया इदं०॥ १॥ ॐ प्रियᳬ श्रद्धे० उदितं कृधि स्वाहा॥ २॥ ॐ यथा देवा० अस्माकमुदितं कृधि स्वाहा॥ ३॥ ॐ श्रद्धां देवा० हूयते हविः स्वाहा॥ ४॥ ॐ श्रद्धां प्रातर्ह० श्रद्धापयेह मा स्वाहा॥ ५॥ ॐ श्रद्धा देवानधि० वर्धयामासि स्वाहा॥ ६॥ ॐ श्रद्धया देवो देवत्वमश्नुते। श्रद्धाप्रतिष्ठा लोकस्य देवी। सा नो जुषाणोपयज्ञमागात्। कामवत्सामृतं दुहाना स्वाहा॥ ७॥ ॐ श्रद्धा देवी प्रथमजा ऋतस्य। विश्वस्य भर्त्री जगतः प्रतिष्ठा। ताᳬ श्रद्धाᳬ हविषा यजामहे। सा नो लोकममृतं दधातु। ईशाना देवी भुवनस्याधिपत्नी स्वाहा॥ ८॥" इति श्रद्धासूक्तेन॥ "ॐ मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा नुदमाना दुरुक्तान्बृहद्वदेम विदथे सुवीरा स्वाहा॥ सर्वत्र मेधाया इदं०॥ १॥ ॐ त्वया जुष्टऋषिर्भवति देवि त्वया ब्रह्मागतश्रीरुत त्वया। त्वया जुष्टश्चित्रं विदन्ते वसु सा नो जुषस्व द्रविणो न मेधे स्वाहा॥२॥ ॐ मेधां म इन्द्रो ददातु मेधां देवी सरस्वती। मेधां मे अश्विना-वुभावाधत्तां पुष्करस्रजा स्वाहा॥ ॐ अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवीं मेधां सरस्वती सा मां मेधा सुरभिर्जुषताᳬ स्वाहा॥ ४॥ ॐ आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताᳬ स्वाहा॥ ५॥" इति मेधासूक्तेन चेत्येवमष्टात्रिंशन्मंत्रैष्वाद्याभ्यां पक्वं हुत्वा इतरैः षट्त्रिंशन्मन्त्रैराज्याहुतीरुपहुत्य स्विष्टकृदादिहोमशेषं समाप्य कलशस्थां देवीं पुनः पूजयित्वा सम्प्रार्थ्य शिष्यमुदङ्मुखमुपवेश्य तस्मिन्देवीमावाह्य "आपो हि ष्ठा" इति तिसृभिः, "हिरण्यवर्णाः" इति चतसृभिः, "पवमानः सुवर्जनः" इत्येतेनानुवाकेन सरस्वत्यादिसूक्तत्रयेण च कलशोदकैस्तमभिषिच्य गन्धादिभिरलंकृत्य वनौषधिरसमिश्रं सम्पातमाज्यं "शिरो मे श्रीः"

इत्यादिभिः " कामान् समर्धयन्तु " इत्यन्तैश्चतुर्वारमुक्तैः क्रमेण व्याहृतिचतुष्टययोजितैः स्वाहान्तैः प्राशयेत्—"ॐ शिरो मे श्रीः ॥ यशो मुखम् ॥ त्विषिः केशाश्च श्मश्रूणि ॥ राजा मे प्राणोमृतम् ॥ सम्राट् चक्षुः ॥ विराट्छ्रोत्रम् ॥ जिह्वा मे भद्रम् ॥ वाङ्महः ॥ मनो मन्युः ॥ स्वराड्भामः ॥ मोदाः प्रमोदा अंगुलीरंगानि ॥ चित्तं मे सहः ॥ बाहू मे बलमिन्द्रियम् ॥ हस्तौ मे कर्मवीर्यम् ॥ आत्मा क्षत्रमुरो मम ॥ पृष्टीर्मे राष्ट्रमुदरमꣳसौ ॥ ग्रीवाश्च श्रोण्यौ ॥ ऊरू अरत्नी जानुनी ॥ विशो मेंगानि सर्वतः ॥ नाभिर्मे चित्तं विज्ञानम् ॥ पायुर्मेपचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे ॥ भगः सौभाग्यं पसः ॥ जंघाभ्यां पद्भ्यां धर्मोस्मि ॥ विशि राजा प्रतिष्ठितः ॥ प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे ॥ प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ प्रत्यंगेषु प्रतितिष्ठाम्यात्मन् ॥ प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे ॥ प्रतिद्यावापृथिव्योः ॥ प्रतितिष्ठामि यज्ञे ॥ त्रया देवा एकादश ॥ त्रयस्त्रिꣳशाः सुराधसः ॥ बृहस्पतिपुरोहिताः ॥ देवस्य सवितुः सवे ॥ देवा देवैरवन्तु मा ॥ प्रथमा द्वितीयैः ॥ द्वितीयास्तृतीयैः ॥ तृतीयाः सत्येन ॥ सत्यं यज्ञेन ॥ यज्ञो यजुर्भिः ॥ यजूꣳषि सामभिः ॥ सामान्यृग्भिः ॥ ऋचो याज्याभिः ॥ याज्या वषट्कारैः ॥ वषट्कारा आहुतिभिः ॥ आहुतयो मे कामान्त्समर्धयन्तु ॥ भूः स्वाहा" ॥ एवमेव " शिरो मे श्रीः" इत्यारभ्य " समर्धयन्तु " इत्यन्तमुक्त्वा "भुवः स्वाहा" ॥ पुनस्तथैवोक्त्वा " सुवः स्वाहा ॥ भूर्भुवस्सुवः स्वाहा" इत्येवं चतुर्भिश्चतुर्वारं प्राशयेत् ॥ ततो विनायकं वाग्देवीं हरिं लक्ष्मीं स्वविद्यां सूत्रकारं च सम्पूज्य द्विजान् दक्षिणादिभिः सन्तोष्य सूर्यमुपस्थायाष्टोत्तरशतं गायत्रीं जप्त्वा कृतब्रह्मांजलिमुदङ्मुखोपविष्टं शिष्यं गुरुः प्रणवपूर्वकं गायत्रीं पच्छोऽर्धर्चशोऽनवानमुक्त्वा पूर्वोक्तप्रकारेण किंचिद्वेदमध्यापयेत् ॥

# ॥ अथ काण्डानुक्रमणिका ॥

प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवं स्वायम्भुवं चेति पंच काण्डानि भवन्ति ॥ तत्रादिमं प्राजापत्यकाण्डम् ॥ ( बो. गृ. सू. ३·१ ) "पौरोडाशिकं याजमानं होतारो हौत्रं पितृमेध इति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि" इति सूत्रेभिहितम् ॥ काण्डानुक्रमणिकायामपि—"शाखादिं याजमानं च होतॄन्हौत्रं च दार्शिकम् ॥ तद्विधीन् पितृमेधं च नवाहुः कस्य तद्विदः" इति ॥ शाखादिः ( पौरोडाशिकम् ) याजमानं होतारः दार्शिकहौत्रं चेति चत्वारि तेषां ब्राह्मणान्यपि चत्वारि पितृमेधश्चेति नव प्राजापत्यानि भवन्तीत्यर्थः ॥ तद्विवरणमपि कृतं तत्रैव-- "इषे प्रश्नः पुरोडाश्यमनुवाकं विनान्तिमम् ॥ तृतीयस्यां च प्रत्युष्टं पुरोडाशीयको विधिः ॥ विश्वरूपादयः षट् च समिधो यजतौ च षट् ॥ निवीतशेषो देवा वै सामिधेनीरतः परः ॥ इन्द्रो वृत्रꣳ हत्वेत्येतद्दार्शिकं ब्राह्मणं विदुः ॥ ममेत्यत्र पयस्वतीरादिसन्त्वादयश्च षट् ॥ अनुवाकाश्च विख्यातमैष्टिकं याजमानकम् ॥ यथा वै समृतेत्यादि क्रमात्पंचानुवाकका: ॥ सꣳश्रवावर्जकं पश्च पाकयज्ञादि षड् भवेत् ॥ याजमानस्यैष्टिकस्य विधिरेष उदाहृतः ॥ चित्तिस्स्रुगादिहोतारस्त्वनुवाकास्त्रयोदश ॥ प्रश्नौ प्रजापतिर्ब्रह्मवादिनश्चेति तद्विधिः । सत्यं प्रश्नौ दार्शहौत्रं देवा वै नर्चिनादितः ॥ चत्वारोपि निवीतमित्याद्याभिजयतीति च ॥ मनुः पृथिव्याश्चत्वारः सꣳश्रवाह च तन्मतम् ॥ पित्र्यः परेयुवांसकम्" इति ॥

अथ द्वितीयं सौम्यकाण्डम् ॥ "आध्वर्यवं ग्रहा दाक्षिणानि समिष्टयजूꣳषि अवभृथयजूꣳषि वाजपेयः शुक्रियाणि सवाः इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि" इति सूत्रम् ॥ काण्डानुक्रमणिका च—"अध्वरप्रभृतित्रीणि तद्विधिर्वाजपेयके ॥ सवाः शुक्रियकाण्डे च नवेन्दोरितिधारणा" इति ॥ अध्वरो ग्रहाः दाक्षिणानीति त्रीणि तेषां ब्राह्मणान्यपि त्रीणि, वाजपेयः,

तद्ब्राह्मणम्, सवाः, शुक्रियाणि ( प्रवर्ग्यः ) तद्ब्राह्मणं चेति नव सौम्यानि भवन्तीत्यर्थः ॥ तद्विवरणम्—" आप उन्दन्तु देवस्य प्रश्नावन्तिमवर्जितौ ॥ पवमानो ब्रह्मसन्धत्तमेतौ चाध्वराह्वयाः ॥ प्राचीनवंशं षट्प्रश्नास्त्रिभिः प्रजननं मुखैः ॥ देवासुराः सप्रजापतिश्चत्वार्याध्वरो विधिः ॥ वर्जयित्वाददे प्रश्ने चतुरोन्त्यान् ग्रहाह्वयाः ॥ उभये वै ब्रह्मवादिनः कत्येतौ ग्रहे विधिः ॥ उदु त्यमिति चारभ्य त्रयो दाक्षिणनामकाः ॥ उक्तेऽध्वरविधावन्तर्गतोऽभूद्दाक्षिणो विधिः ॥ देवसवितरारभ्य वाजपेयाह्वयाश्च षट् ॥ वाजपेयस्य देवा वै यथाग्रष्टौ विधिर्मतः ॥ त्रिवृत्प्रश्नः सवाः प्रोक्तः, प्रवर्ग्यस्तु नमो वाचे परः प्रश्नश्च तद्विधिः " इति ॥

तृतीयमाग्नेयं काण्डम् ॥ " अग्न्याधेयमग्निहोत्रमग्न्युपस्थानमग्निचयनं सावित्रं नाचिकेतं चातुर्होत्रीयं वैश्वसृजमारुणा इति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि " इति सूत्रम् ॥ काण्डानुक्रमणिका च–" त्रिष्वग्न्याधेयपूर्वेषु ह्यग्नौ च सविधिद्वये ॥ विधौ चैवाग्निहोत्रस्य सप्तस्वग्निमृषिं विदुः " इति ॥ अग्न्याधेयपुनराधेयाग्न्युपस्थानानीति त्रीणि, अग्निः ( अग्निचयनम् ), अग्न्याधेयादि-त्रिकस्य ब्राह्मणं, अग्निचयनस्य ब्राह्मणमिति द्वयम्, अग्निहोत्रब्राह्मणं चेत्येवं सप्ताग्नेयानि भवन्तीत्यर्थः ॥ सावित्रादि काठक-चयनान्यप्यत्रैव परिगणनीयानि ॥ " काठकाग्निषु हव्यवाट् " इति तत्रैव संग्रहणात्सूत्रोक्तेश्च ॥ अथैषां विवरणम्—" उद्धन्यमानं घर्मः शिरोऽग्न्याधेयाविमौ मतौ ॥ कृत्तिकास्वग्निमित्यारभ्य च पञ्चानुवाककाः ॥ इमे व एत इति च त्रयोग्न्याधेयको विधिः ॥ भूमिर्भूम्नानुवाकोयं पुनराधेयनामकः ॥ देवासुराः परा वै च भूमिर्भूम्नेति चोत्तरम् ॥ देवासुराग्नीषोमयोः पुनराधेयको विधिः ॥ उपप्रयन्तः सम्पश्याम्यनुवाकद्वयं तथा ॥ अग्न्युपस्थानमाख्यातं मम नामेत्यृचश्च षट् ॥ अयज्ञादि त्रिकं पूर्वमग्न्युपस्थानको विधिः ॥ अन्त्यान्विनानुवाकान् स्वान् जीमूतस्येति च त्रयम् ॥ तुरीयमग्निकाण्डं स्याद्रुद्रान्त्यन्तु न वर्जयेत् ॥ मा नो हिंसीदस्माद्-र्ध्वमाप्यायस्व सशान्तिकम् ॥ इयमेवानुवाकान्ते ईयुष्टे ये च तादृशम् ॥ प्रजापतिर्मनसोर्ध्वं ज्योतिष्मतीं च योजयेत् ॥ आयुषः

प्राणमिन्द्रो दधीच एतेग्निकाण्डकाः ॥ सावित्राणीति चत्वारः प्रश्ना अन्तिमवर्जिताः ॥ द्विचत्वारिंशिकं ख्यातं गायत्रीति च वर्जितम् ॥ यदेकेनादिकं प्रश्नत्रितयं त्रैशिकं मतम् ॥ इन्द्राय रोहितस्तेगानित्यादीर्दर्शिनीर्विना ॥ ( सावित्राणीत्यादिकमाग्निचयनस्य ब्राह्मणमिति ज्ञेयम् ॥ ) संज्ञानमिह सावित्रं लोकोयं नाचिकेतकः ॥ चातुर्होत्रो ब्रह्म वै च परे वैश्वसृजास्ततः ॥ भद्र प्रश्नस्त्वारुणं स्यात्पंचैते चितिनामकाः ॥ योयमंगिरसः प्रश्नः सोग्निहोत्रविधिः स्मृतः ॥ उदस्थानिवा एतस्येत्येतौ चेह प्रवेशयेत् " इति ॥

चतुर्थं वैश्वदेवकाण्डम् ॥ " राजसूयः पशुबन्ध इष्टयो नक्षत्रेष्टयो दिवश्येनयोऽपाघाः सात्रायणमुपहोमाः कौकिली सूक्तान्यौपानुवाक्यं याज्या अश्वमेधः पुरुषमेधः सौत्रामण्यच्छिद्राणि पशुहौत्रमुपनिषदः इति सब्राह्मणानि सानुब्राह्मणानि वैश्वदेवानि " इति सूत्रम् ॥ काण्डानुक्रमणिका च — " अवशिष्टानि यानि स्युः काण्डान्यन्यानि षोडश ॥ विश्वान्देवानृषींस्तेषु विदुर्वेदविदो जनाः ॥ सब्राह्मणो राजसूयः पशुबन्धः सहेष्टिभिः ॥ उपानुवाक्यं याज्याश्च अश्वमेधः सब्राह्मणः ॥ सात्रायणश्चोपहोमाः सूक्तानि च सहेष्टिभिः ॥ सौत्रामणी सहाच्छिद्रैर्हौत्रं मेधश्च षोडश " इति ॥ राजसूयः तद्ब्राह्मणं पशुबन्धः काम्येष्टयः उपानुवाक्यं याज्याः अश्वमेधः तद्ब्राह्मणं सात्रायणं उपहोमाः सूक्तानि नक्षत्रेष्टयः सौत्रामणी अच्छिद्राणि पशुहौत्रं पुरुषमेधश्चेति षोडश वैश्वदेवानीत्यर्थः ॥ काठकोक्ता दिवश्येन्यपाघनामकाः इष्टय उपनिषदश्चात्रैव परिगणनीयाः सूत्रे तथैव परिगणनात् ॥ अथैषां विवरणं— " अनुमत्या इति प्रश्नो राजसूये विनान्तिमम् ॥ ऋतमेव परमेष्ठीत्यनुवाकश्च तादृशः ॥ अनुमत्यादयः प्रश्नो राजसूयविधिस्त्रयः ॥ प्रजा वै सत्रमग्निश्च देवा वै तेसुरा इति ॥ वायव्यमन्त्यवर्ज्यं तु काम्याः पशव ईरिताः ॥ प्रजापतिरिति प्रश्नत्रयमन्त्यान्विनेष्टयः ॥ अन्त्यान्विनोपानुवाक्यं तृतीयं काण्डमीरितम् ॥ इषे त्वादिह्यपान्त्वान्तं प्रश्नानामन्तगामिनः ॥ अनु-

वाकास्तु याज्याख्या युक्ष्वाहीत्यपि तादृशः ॥ अथाश्वमेधकाण्डस्य क्रमः साम्प्रतमुच्यते ॥ देवस्यादि दशैकस्मै दशार्वाङादितो दश ॥ मेषस्त्वैकादश तथा पृथिव्यै च चतुर्दश ॥ एता दाशिन्य आख्याताः पञ्चादौ सात्रिका इति ॥ महापृष्ठं जीमूतस्य यन्मायेन्नेः समिच्च षट् ॥ चतुर्दशेन्द्रायादीनि रोहितादि त्रयोदश ॥ दाशिन्यौ त्र्यंशिके एते दद्दृष्टमथोच्यते ॥ समिद्धो गायत्री कस्त्वा द्विचत्वारिंशिकं मतम् ॥ उत्तमा दाशिनीस्तेगानित्यादीनि च षोडश ॥ कर्मैरूर्ध्वं प्रयासाय चित्तमेतौ च योजयेत् ॥ प्रजापतेः पवस्वेति द्विचत्वारिंशिकौ मतौ ॥ यो वा अश्वस्य मेध्यस्येत्युत्तमां दाशिनीं विदुः ॥ अश्वमेधः सांग्रहण्यादिकं प्रश्नद्वयं विधिः ॥ सात्रायणं चांगिरस आद्याः सप्तानुवाककाः ॥ साध्या वै प्रजवमाद्याः क्रमाद्दश दशेरिताः ॥ बृहस्पतिः अदाद्येकादश गावो दशादितः ॥ नवैतानीत्यादि पञ्च यस्य प्रातरिति त्रयम् ॥ जुष्ट प्राण इति प्रश्नावुपहोमाः प्रकीर्तिताः ॥ 'पविः सूक्ताख्यईरितः' ॥ तत्राहमस्म्यनुवाकाद्धर्तां हरिं च योजयेत् ॥ अग्निर्नः पातु नक्षत्रेष्टिरग्नेः कृत्तिकात्रिभिः ॥ युवं सुरामसहितः स्वाद्वीं प्रश्नस्तु कौकिली ॥ अञ्जन्ति पाशुकं हौत्रं सवानच्छिद्रकाण्डकम् ॥ "नृमेधो ब्रह्मणे प्रश्नः" तुभ्य देवेभ्य इति च दिवश्येनीसमाह्वयौ ॥ तपसा देवेभ्य इति द्वावपाघौ समीरितौ ॥ शन्नः साँहित्युपनिषद्याज्ञिक्यम्भस्य विश्रुता ॥ भृगुर्ब्रह्मेति वारुण्यः प्रोक्तास्तित्तिरिणा इमाः" इति ॥

पञ्चमं स्वायम्भुवं काण्डम् ॥ "स्वायम्भुवं काण्डं काठके पठितो विधिः" इति सूत्रम् ॥ "ब्रह्माम्नायविधावृषिः" इति काण्डानुक्रमणिका ॥ आम्नायविधिश्च — "स्वाध्यायब्राह्मणमिति सह वै प्रश्न उच्यते" इति तत्रैव व्याख्यातः ॥ इत्येवं पञ्च-काण्डानि ॥ ॥ अथ दिवाकीर्त्यानि ॥ "कारीर्यश्चाथ पित्र्याश्च दिवाकीर्त्येति यत्र च ॥ रुद्रः सन्ततिरित्येतावनुवाकौ च सात्रिके ॥ होतृविध्यवसाने च ह्यनुवाकचतुष्टयम् ॥ सूक्तेषु सूक्तं यत्सौर्यं मेधो यश्चैव पित्रियः ॥ काठकानि च सर्वाणि सर्वाण्यारण्यकानि

च ॥ दिवाकीर्त्यानि शाखायामेतावन्तीति धारणा '' इति ॥ कारीर्यो- ' मारुतमसि मरुतामोजः ' इत्यादि चत्वारोनुवाकाः, पित्र्याः-"सोमाय पितृमते, उशन्तस्त्वा हवामह उशन्तः, इन्द्रो वृत्रꣳ हत्वा, वैश्वदेवेन वै प्रजापतिः प्रजा असृजत, ता वरुणप्रघासैः, अग्नये देवेभ्यः पितृभ्यः, सुरावन्तं बर्हिषदं, उशन्तस्त्वा हवामह, आ नो अग्ने सुकेतुना '' इत्येतेनुवाकाः ॥ दिवाकीर्त्येति पदं यस्मिन्ननुवाके स च "असावादित्योऽस्मिन्'' इति ॥ रुद्रो-' नमस्ते रुद्र ' इति प्रश्नः॥ सत्रप्रकरणे-"सन्ततिर्वै, एकविꣳश एष '' इत्यनुवाकौ ॥ होतृविध्यवसाने-" प्रजापतिः सोन्तर्वान् '' इत्याद्यनुवाकचतुष्टयम् ॥ सूर्यो देवीमुषसमित्यारभ्य सूर्य आत्मा जगत स्तस्थुषश्चेत्यन्तं सूर्यसूक्तम् ॥ पितृमेधः—" परेयुवाँसम् '' इति प्रश्नः ॥ काठकान्यारण्यकानि चेत्येतानि तैत्तिरीयशाखायां दिवैवकीर्त्यानि भवन्तीत्यर्थः ॥ इति ॥

## ॥ अथ वेदव्रतानि ॥

अत्रेदं गृह्यम् ( बो. गृ. सू. ३. २ ) "अथाचार्यप्रसूतः कर्माणि करोतीति विज्ञायते । आचार्यो वै ब्रह्मेति । काण्डे काण्डे च व्रतचर्या । अथेमानि ब्रह्माणि सांवत्सरिकैर्व्रतैरध्येयानि भवन्ति होतारः शुक्रियाण्युपनिषदो गोदानं सम्मितमिति '' इति ॥ धर्मसूत्रे ( बो. ध. सू. १.३ ) " अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम् ॥ चतुर्विंशतिं द्वादश वा प्रतिवेदम् ॥ संवत्सरावमं वा प्रति-काण्डम् ॥ ग्रहणान्तं वा '' इति ॥ गृ० संग्रहे— " वेदोपाकरणं कृत्वा सद्यो नान्दीमुखक्रिया । अत्रोदगयनादींस्तु कालान्केचित् प्रचक्षते '' इत्यादि ॥ प्र० तिलकेऽपि—" प्राजापत्यं च सौम्यं चाप्याग्नेयं वैश्वदेविकम् । स्वायम्भुवं पञ्चमं स्यात्प्रतिकाण्डं व्रतं चरेत् ॥ आब्दिकं ग्रहणान्तं वा द्वादशाहिकमेव वा '' इत्याद्युपक्रम्य वेदोपाकरणान्ते-" सद्यो नान्दीमुखक्रिया । तस्मिन्नाह्नि

तमेवाग्निमन्वाधायाथ पूर्ववत् ॥ प्रजापतिं काण्डऋषिमावाह्याग्निमुखान्तकम् । कृत्वा विसृज्य दण्डादीनन्यानादाय मंत्रवत् ॥ मौञ्जीदण्डोपवीतानि वासः कृष्णाजिनं तथा । पूर्वोपयुक्तान्युत्सृज्य धार्याणि स्युर्व्रते व्रते ॥ अच्छिन्नवासोऽप्यहतमुपवीतं न सन्त्यजेत् । सावित्र्याथ हुनेत्पक्वं ततः पञ्चदशाहुतीः" इत्यादि प्रयोगक्रमं चोक्त्वान्ते— "नियमाचरणं कुर्याद्वपनं च व्रते व्रते" इत्युपसंहृतम् ॥ एतेन श्रावण्यामध्यायोपाकर्म कृत्वा तद्दिने वान्यस्मिन् वा वेदारम्भानुकूले सुदिने होतृव्रतमुपाकृत्य प्राजापत्य-काण्डमधीयानः संवत्सरं यावदध्ययनं वा व्रतं चरित्वा तस्योत्सर्गं कुर्यात् ॥ एवमेव क्रमेण शुक्रियादि काण्डाध्ययनं व्रतं च कृत्वा तत्तदुत्सर्गं कुर्यादित्युक्तं भवति ॥

अथ होत्रादिव्रतप्रयोगः ॥ आचार्यानुशिष्टो ब्रह्मचारी प्रातः कृतकेशवपनः स्नानादिचतुष्टयं कृत्वा दर्भेषु प्राङ्मुख उपविश्य पवित्रपाणिराचम्य देशकालौ सङ्कीर्त्य "मम प्राजापत्यकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं होतृव्रतोपाकरणं करिष्ये" इति सङ्कल्प्य गणपतिं सम्पूज्य हिरण्येन नान्दीसमाराधनं "सविता प्रीयताम्" इति पुण्याहवाचनं च कृत्वा देव-यजनोल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्य तत्रात्मनि समारोपितमुपनयनाग्निं "उपावरोह जातवेदः" इति मंत्रेण संयोज्य प्राणानायम्य देशकालौ सङ्कीर्त्य "प्राजापत्यकाण्डाध्ययनार्थं होतृव्रतोपाकरणहोमं करिष्ये । समुद्भवो नामाग्निः, सविता देवता, चरुर्हविः, अग्निः स्विष्टकृत्" इत्यादि सङ्कल्प्यान्वाधाय पात्रासादनकाले प्राकृतपात्रैः सह दण्डाजिनमेखलावासांसि चतस्रः पालाशीः समिधश्चेत्यासाद्य पवित्रकरणाद्यापरिधानात्कृत्वाग्रेणाग्निमक्षतपुञ्जे प्रजापतिं काण्डऋषिमावाह्य सम्पूज्य परिधान-प्रभृत्याग्निमुखान्तं कृत्वा पूर्वधृतवासोमेखलादीन्युत्सृज्यासादितान् वासोमेखलाजिनदण्डान् मंत्रवद्धृत्वा पक्वाज्जुहोति— "ॐ

भूर्भुवस्सुवरों तत्सवितुः० प्रचोदयात्स्वाहा ”॥ सवित्र इदं० ॥ स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति — “ ॐ याज्ञिकीभ्यो देवताभ्यो होतृभ्यः स्वाहा ॥ याज्ञिकीभ्यो देवताभ्यो होतृभ्य इदं० ॥ इत्यादि यथालिङ्गं त्यागः ॥ ॐ सा॑ꣳहितीभ्यो देवताभ्यो होतृभ्यः स्वाहा ॥ ॐ वारुणीभ्यो देवताभ्यो होतृभ्यः स्वाहा ॥ ॐ सर्वाभ्यो देवताभ्यो होतृभ्यः स्वाहा ॥ अथ निवीती, ॐ प्रजापतये काण्डऋषये स्वाहा ॥ अथोपवीती, ॐ सदसस्पतिमद्भुतं० यासिषꣳ स्वाहा ॥ ॐ तत्सवितुः० प्रचोदयात्स्वाहा ॥ ॐ ऋग्वेदाय स्वाहा ॥ ॐ यजुर्वेदाय स्वाहा ॥ ॐ सामवेदाय स्वाहा ॥ ॐ अथर्ववेदाय स्वाहा ॥ ॐ अथर्वाङ्गिरोभ्यः स्वाहा ॥ ॐ इतिहासपुराणेभ्यः स्वाहा ॥ ॐ सर्पदेवजनेभ्यः स्वाहा ॥ ॐ सर्वभूतेभ्यः स्वाहा ”॥ एवं पञ्चदश स्रुवाहुतीर्हुत्वाथाग्निं परिषिच्य चतस्रः पालाशीर्घृतान्वक्ताः समिधोऽभ्यादधाति— “ ॐ अग्ने व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ अग्नये व्रतपतय इदं० ॥ ॐ वायो व्रतपते होतारं व्रतं० राध्यताꣳ स्वाहा ॥ वायवे व्रतपतय इदं० ॥ ॐ आदित्य व्रतपते होतारं व्रतं० राध्यताꣳ स्वाहा ॥ आदित्याय व्रतपतय इदं० । ॐ व्रतानां व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ व्रतानां व्रतपतय इदं० ” इति ॥ पुनः परिषिच्य ब्रह्मयज्ञधर्मेण प्राजापत्यकाण्डस्याद्यं “ इषे त्वोर्जे त्वा ” इत्यनुवाकमधीत्य स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वाग्रेणाग्निं पलाशपर्णेषु प्रणवव्याहृतिसहितया गायत्र्या हुतशेषं दत्वा तथैव गायत्र्या पक्वादुपादाय प्राश्याचम्योत्तरपरिषेकादि होमशेषं समाप्य “ या ते अग्ने यज्ञिया तनूः ” इत्यात्मन्यग्निं समारोपयेत् ॥ एवं होतृव्रतमुपाकृत्य प्राजापत्यकाण्डमाचार्यादधीयानः संवत्सरं यावदध्ययनं वा व्रतं चरित्वान्ते विसृजेत् ॥

अथ होतृव्रतविसर्जनम् ॥ प्राजापत्यकाण्डाध्ययनार्थमुपाकृतस्य होतृव्रतस्योत्सर्जनं करिष्ये, इति सङ्कल्प्य स्थण्डिलोल्लेखनाद्युपनयनाग्निं प्रतिष्ठाप्याग्निमुखान्तं कृत्वाव्रत्यप्रायश्चित्तं जुहोति — "यन्म आत्मनः, पुनरग्निः" इति द्वाभ्याम् ॥ अथ सावित्र्या पक्वं हुत्वा पूर्ववत्पञ्चदशाज्याहुतीरुपहुत्याग्निं परिषिच्य चतस्रो घृतान्वक्ताः पालाशीः समिधोऽभ्यादधाति— "ॐ अग्ने व्रतपते होतारं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ अग्नये व्रतपतय इदं० ॥ ॐ वायो व्रतपते होतारं व्रतमचारिषं० राधि स्वाहा ॥ वायवे व्रतपतय इदं० ॥ ॐ आदित्य व्रतपते होतारं० मे राधि स्वाहा ॥ आदित्याय व्रतपतय इदं० ॥ ॐ व्रतानां व्रतपते होतारं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ व्रतानां व्रतपतय इदं० " ॥ नात्राध्ययनम् ॥ स्विष्टकृदादि हुतशेषप्राशनान्तं पूर्ववत्कृत्वोत्तरपरिषेकादि शेषं समाप्याग्निमात्मनि समारोपयेत् ॥ इति होतृव्रतम् ॥

अथ शुक्रियव्रतम् ॥ केशवपनं स्नानादिचतुष्टयं नान्दीपुण्याहादिकं होतृव्रतवदेव कुर्यात् ॥ सौम्यकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुक्रियव्रतोपाकरणं करिष्ये, इति सङ्कल्पे विशेषः । आपरिधानात्कृत्वाग्रेणाग्निमक्षतपुञ्जे सोमं काण्डऋषिमावाह्य सम्पूज्य परिधानप्रभृत्यग्निमुखान्ते सावित्र्या पक्वं हुत्वाज्याहुतीरुपजुहोति— "ॐ याज्ञिकीभ्यो देवताभ्यः शुक्रियेभ्यः स्वाहा ॥ ॐ साꣳहितीभ्यो देवताभ्यः शुक्रियेभ्यः स्वाहा ॥ ॐ वारुणीभ्यो देवताभ्यः शुक्रियेभ्यः स्वाहा ॥ ॐ सर्वाभ्यो देवताभ्यः शुक्रियेभ्यः स्वाहा ॥ ॐ सदसस्पति० सिषꣳस्वाहा" इत्यादि "सर्वभूतेभ्यः स्वाहा" इत्यन्तम् ॥ नात्र व्रतसमिद्धोमः ॥ सौम्यकाण्डस्याद्यं "आप उन्दन्तु" इत्यनुवाकमधीत्य स्विष्टकृदादिशेषं होतृव्रतवदेव कुर्यात् ॥

अथावान्तरदीक्षा ॥ अपराह्णे ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्र गृहा न दृश्यन्ते तत्राचार्येण सह गत्वा प्रवर्ग्य-काण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुक्रियव्रताङ्गभूतामवान्तरदीक्षामहमाचरिष्ये, इति सङ्कल्प्य शुचौ समे देशे अग्निमुपसमाधाय सम्परिस्तीर्याज्यं संस्कृत्य मदन्तीरधिश्रित्य मदन्तीरपः स्पृष्ट्वा " नमो वाचे " इति प्रथमेनानुवाकेन शान्तिं कृत्वा प्रवर्ग्यदेवताभ्यो दर्भैरासनानि कल्पयति—" अग्रेणाग्निमुदगपवर्ग—ॐ प्रवर्ग्याय कल्पयामि । घर्माय कल्पयामि । महावीराय कल्पयामि । सम्राजे० ॥ दक्षिणेनाग्निं— ब्रह्मणे० । प्रजापतये० ॥ उत्तरेणाग्निं— ऋषिभ्यो मंत्रकृद्भ्यो मंत्रपतिभ्यः० । देवेभ्यो घर्मपेभ्यः क० ॥ अथ दक्षिणतः— प्राचीनावीती, दक्षिणापवर्ग— पितृभ्यो घर्मपेभ्यः क० । यमायाङ्गिरस्वते पितृमते क० ॥ अथाप उपस्पृश्योत्तरतो यज्ञोपवीती— रुद्राय रुद्रहोत्रे क० ॥ अप उपस्पृश्य, सर्वाभ्यः प्रवर्ग्यदेवताभ्यः कल्पयामि " इति ॥ अथैनं प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीश्चतस्रः समिधोऽभ्याधाय प्रवर्ग्यदेवतास्सम्पूज्य मदन्तीभिस्तर्पयति–" अग्रेणाग्निं-प्रवर्ग्यं तर्पयामि । घर्मं त० । महावीरं त० । सम्राजं त० ॥ दक्षिणेनाग्निं— ब्रह्माणं त० । प्रजापतिं त० ॥ उत्तरेणाग्निं— ऋषीन्मंत्रकृतो मंत्रपतींस्त० । देवान् घर्मपांस्तर्पयामि । अथ दक्षिणतः प्राचीनावीती— पितॄन् घर्मपांस्तर्पयामि । यममङ्गिरस्वन्तं त० । अप उपस्पृश्योत्तरतो यज्ञोपवीती— रुद्रं रुद्रहोतारं त० । अप उपस्पृश्य, सर्वाः प्रवर्ग्यदेवतास्तर्पयामि " इति तर्पयित्वा ॥ चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति—"ॐ पृथिवी समित् । तामग्निः समिन्धे । साग्निꣳ समिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताꣳ स्वाहा ॥ अग्नय

१. " तस्य तु व्रतबाहुल्यान्नाचरन्ति कलौ जनाः । काण्डाध्ययनमेवास्य केचित्कुर्वन्ति तद्व्रतम् ॥ पारम्पर्येण विप्राद्यैर्यद्व्रतं कार्यमेव तत् " इति प्र० तिलके ॥

इदं० ॥ ॐ अन्तरिक्षꣳ समित् । तां वायुः समिन्धे । सा वायुꣳ समिन्धे । तामहꣳ समिन्धे । सा मा० अन्नाद्येन समिन्ताꣳ स्वाहा ॥ वायव इदं० ॥ ॐ द्यौः समित् । तामादित्यः समिन्धे । साऽऽदित्यꣳ समिन्धे । तामहꣳ समिन्धे । सा मा० अन्नाद्येन समिन्ताꣳ स्वाहा ॥ आदित्यायेदं० ॥ ॐ प्राजापत्या मे समिदसि सपत्नक्षयणी । भ्रातृव्यहा मेऽसि स्वाहा । प्रजापतय इदं० " इति ॥ अथ देवता उपतिष्ठते— " अग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ॥ वायो व्रतपते शुक्रियं व्रतं० राध्यताम् ॥ आदित्य व्रतपते शुक्रियं व्रतं० राध्यताम् ॥ व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् " इति ॥ अथैतयोः प्रश्नयोः सर्वेषामनुवाकानामादीन् वाचयति । प्रथमोत्तमयोर्वा " युञ्जते मन उत युञ्जते धियः, सविता भूत्वा प्रथमेऽहन्प्रवृज्यते " इति ॥ अथैनꣳ सꣳ शास्ति— " सम्मील्य वाचं यच्छ " इति ॥ अथास्याहतेन वाससा त्रिः प्रदक्षिणं समुखं शिरो वेष्टयति—" चितःस्थ परिचितः । स्वाहा मरुद्भिः परिश्रयस्व " ॥ ततः प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिश्चतस्रः समिधोऽभ्याधाय मदन्तीभिः पूर्ववत्प्रवर्ग्यदेवतास्तर्पयित्वा " शं नो वातः पवताम् " इत्युत्तमेनानुवाकेन शान्तिं कृत्वा होमशेषं समाप्यास्तमित आदित्ये ग्राममागत्य वाग्यतस्तिष्ठेदेतां रात्रिमुपविशेत्संविशेद्वा ॥ अथ प्रातरुदित आदित्ये ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य पूर्ववदग्निमुपसमाधायेत्यादि प्रवर्ग्यदेवतासनकल्पनान्तं कृत्वा " वयस्सुपर्णाः " इति शिरोवेष्टितं वासो विमुच्याथास्याग्निमप आदित्यं गां ब्राह्मणं हिरण्यमिति षट्तयमादितस्त्रितयं वा दर्शयित्वा यथोपपादमितराण्यपि दर्शयेत् ॥ अथ प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीश्चतस्रः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तरां शान्तिं कृत्वाथास्य व्रतचर्यामुपदिशेत्—" न यानमारोहेन्न वृक्षमधिरोहेन्न कूपमवरोहेन्न छत्रं धारयीत नोपानहौ धारयीत

नासन्यां शयीत न स्त्रिया न शूद्रेण सह संभाषेत, यदि संभाषेत ब्राह्मणेन सह संभाषेत ॥ न सायं भुञ्जीत, यदि सायं भुञ्जीतापज्वलितं भुञ्जीत ॥ न स्नायादप्स्वप्स्यां, पर्वाणि चोपवसेत्तदहश्च स्नायाद्ग्राग्यतस्तिष्ठेत् तां रात्रिमुपविशेत्संविशेद्वा ॥ व्रतमध्ये शवचण्डालपतितलोहितादिदर्शने ज्योतिषां सन्दर्शनम् ॥ अमेध्यदर्शने– "अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीः" इति जपेत् ॥ अभिवर्षणे—"उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट" इति जपेत् ॥ ( प्रवर्ग्यकाण्डं ग्रामाद्बहिरेव पूर्वोत्तरशान्तिसहितमधीयीतान्यत्सौम्यकाण्डं गृहेऽधीयीत ) एवमधीयानः संवत्सरं यावदध्ययनं वा व्रतं चरेत् ॥

अथ शुक्रियव्रतविसर्गः ॥ सौम्यकाण्डाध्ययनार्थमुपाकृतस्य शुक्रियव्रतस्योत्सर्जनं करिष्ये, इति सङ्कल्प्य पूर्ववत् स्थण्डिलोल्लेखनाद्यग्निमुखान्ते अव्रत्यप्रायश्चित्तं सावित्र्या पक्वहोमं याज्ञिक्यादि पञ्चदशभिराज्येनोपहोमं च कृत्वा समिद्धोमाध्ययने वर्जयित्वा स्विष्टकृद्धुतशेषदानप्राशनादिकं सर्वं पूर्ववदेव कुर्यात् ॥

अथावान्तरदीक्षाविसर्गः ॥ पूर्ववद्ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य, प्रवर्ग्यकाण्डाध्ययनाङ्गभूतं अवान्तरदीक्षोत्सर्जनं करिष्ये, इति सङ्कल्प्याग्निमुपसमाधाय सम्परिस्तीर्य मदन्तीरधिश्रित्याज्यसंस्कारस्रुवसम्मार्जनान्तं कृत्वा पूर्वां शान्तिं जपित्वा प्रवर्ग्यदेवताभ्यः पूर्ववदासनानि कल्पयित्वाग्निमलंकृत्य "यन्म आत्मनः, पुनरग्निः" इति द्वाभ्यामव्रत्यप्रायश्चित्ताज्याहुती हुत्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिश्चतस्रो वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वा चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति— "ॐ द्यौः समित् । तामादित्यः समिन्धे ।

साऽऽदित्यꣳ समिन्धे । तामहꣳ समिन्धे । सा मा० अन्नाद्येन समिन्ताꣳ स्वाहा ॥ आदित्यायेदं० ॥ ॐ अन्तरिक्षꣳ समित् । तां वायुः समिन्धे० समिन्ताꣳ स्वाहा ॥ वायव इदं० ॥ ॐ पृथिवी समित् । तामग्निः समिन्धे० समिन्ताꣳ स्वाहा ॥ अग्नय इदं० ॥ ॐ प्राजापत्या मे समिदसि० मेऽसि स्वाहा ॥ प्रजापतय इदं० " इति ॥ अथ देवता उपतिष्ठते— " ॐ आदित्य व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधि ॥ वायो व्रतपते० ॥ अग्ने व्रतपते० ॥ व्रतानां व्रतपते शुक्रियं व्रतमचारिषं० मेऽराधि " इति ॥ पुनः प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीश्चतस्रः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तरां शान्तिं जपित्वा होमशेषं समापयेत् ॥ इति शुक्रियव्रतम् ॥

अथोपनिषद्व्रतम् ॥ वपनस्नानादिकं विधाय वैश्वदेवकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं उपनिषद्-व्रतोपाकरणं करिष्ये, इति सङ्कल्प्य, पुण्याहान्तं कृत्वा स्थण्डिलोल्लेखनादि होतृव्रतवदेव कुर्यात् ॥ अत्र विशेषः—प्रतिष्ठितहविरभि-घारणान्ते विश्वान् देवान्काण्डर्षीनावाह्य सम्पूज्य परिधानादि सावित्र्या पक्वं हुत्वा ॥ " ॐ याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा ॥ ॐ साꣳहितीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा ॥ ॐ वारुणीभ्यो० निषद्भ्यः स्वाहा ॥ ॐ सर्वाभ्यो० उपनिषद्भ्यः स्वाहा ॥ ॐ विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा ॥ ॐ सदसस्पति० सिषꣳ स्वाहा " इत्यादि " सर्वभूतेभ्यः स्वाहा " इत्यन्तमाज्याहुतीरुपहुत्याग्निं परिषिच्य पालाशीश्चतस्रो घृतान्वक्ताः समिधोऽभ्यादधाति— " ॐ अग्ने व्रतपत उपनिषदं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ ॐ वायो व्रतपत उपनिषदं० राध्यताꣳ स्वाहा ॥ ॐ आदित्य व्रतपत उप० राध्यताꣳ स्वाहा ॥ ॐ व्रतानां व्रतपत उपनिषदं० राध्यताꣳ स्वाहा " इति ॥ अग्नये व्रतपतय इदं०, इत्यादि पूर्ववत् त्यागः ॥

ततो वैश्वदेवकाण्डस्याद्यं "अनुमत्यै पुरोडाशम्" इत्यनुवाकमधीत्य स्विष्टकृदादि हुतशेषनिधानप्राशनान्तं कृत्वोत्तरपरिषेकादि-शेषं समापयेत् ॥ एवमुपाकृत्य संवत्सरं यावदध्ययनं वा व्रतं चरेत् ॥ ॥ अथ विसर्जनम् ॥ वैश्वदेवकाण्डाध्ययनार्थमुपाकृतस्योपनिषद्व्रतस्योत्सर्जनं करिष्ये, इति सङ्कल्प्य स्थण्डिलोल्लिखनाद्युपाकरणवत् ॥ समिद्धोमे — "ॐ अग्ने व्रतपत उपनिषदं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा" इत्यादि विशेषः ॥ अध्ययनवर्जं स्विष्टकृदादि शेषं समापयेत् ॥ इत्युपनिषद्व्रतम् ॥

अथ गोदानव्रतम् ॥ षोडशे वर्षे (उदगयने विद्यारम्भानुकूले शुभे मुहूर्ते) आग्नेयकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोदानव्रतोपाकरणं करिष्ये, इति सङ्कल्प्य पुण्याहान्तं कृत्वा चौलवच्चूर्णीं सर्वान्केशान्वापयित्वा स्नात्वा देवयजनोल्लिखनादि समानमापरिधानात्कृत्वाग्निं काण्डऋषिमावाह्य सम्पूज्य परिधानप्रभृत्यग्निमुखान्ते सावित्र्या पक्वं हुत्वाज्याहुतीरुपजुहोति— "ॐ याज्ञिकीभ्यो देवताभ्यो गोदानेभ्यः स्वाहा ॥ यथालिङ्गं त्यागः ॥ ॐ सा॰हितीभ्यो० गोदानेभ्यः स्वाहा ॥ ॐ वारुणीभ्यो देवताभ्यो गोदानेभ्यः स्वाहा ॥ ॐ सर्वाभ्यो ० गोदानेभ्यः स्वाहा ॥ ॐ अग्नये काण्डऋषये स्वाहा" ॥ "सदसस्पतिम्" इत्यादि "सर्वभूतेभ्यः स्वाहा" इत्यन्तं हुत्वाग्निं परिषिच्य पालाशीश्चतस्रो घृतान्वक्ताः समिधोऽभ्यादधाति— ॐ अग्ने व्रतपते गोदानं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता॰ स्वाहा ॥ ॐ वायो व्रतपते गोदानं० राध्यता॰ स्वाहा ॥ ॐ आदित्य व्रतपते गोदानं० राध्यता॰ स्वाहा ॥ ॐ व्रतानां व्रतपते गोदानं० राध्यता॰ स्वाहा" इति ॥ अग्नये व्रतपतय इदं० इत्यादि त्यागः ॥ अथाग्नेयकाण्डस्याद्यं "उद्धन्यमानम्" इत्यनुवाकमधीत्य स्विष्टकृदादि होमशेषं होतृव्रतवत्समाप्य गां सम्पूज्य

१. अत्र कारीर्यध्ययनकाले (बो. गृ. सू. ३. १) "चतूरात्रमक्षारलवणं भूमौ भुञ्जीत पशुवत्" इति सूत्रोक्तं व्रतं कुर्यात् ॥

" गावो मे मातरस्सन्तु पितरस्सन्तु गोवृषाः । ग्रासमुष्टिं मया दत्तं प्रतिगृह्णन्तु मातरः " इति ग्रासं दत्वा तां गुरवे दद्यात् ॥ आग्नेयकाण्डमधीयानः संवत्सरं यावदध्ययनं वा व्रतं चरेत् ॥ ॥ अथोत्सर्जनम् ॥ " आग्नेयकाण्डाध्ययनार्थमुपाकृतस्य गोदानव्रत-स्योत्सर्जनं करिष्ये " इति सङ्कल्प्य शिखावर्ज्यं केशानोप्याध्ययनं विहाय सर्वमुपाकरणवत्कुर्यात् ॥ समिद्धोमे — " ॐ गोदानं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा " इति विशेषः ॥ (अस्मिन् व्रतक्रमे उपनिषद्व्रतानन्तरं गोदानव्रतं निवेशितमाचार्येण । काण्डक्रमे त्वाग्नेयकाण्डानन्तरं वैश्वदेवं काण्डम् । इत्यतोऽत्र सन्दिह्य क्वचिद्गोदानव्रतानन्तरमुपनिषद्व्रतं सम्प्रयुक्तम् । प्रयोगतिलके— " अधीत्य काण्डमाग्नेयं स्वस्थाने पूर्वमेव तु । सम्प्राप्ते षोडशे वर्षे तदिदानीं व्रतं चरेत् " इति प्रथमं केवलमाग्नेय-काण्डमधीत्योपनिषद्व्रतवैश्वदेवकाण्डाध्ययनान्ते षोडशे वर्षे गोदानव्रतमात्रं कुर्यादित्युक्तम् । अत्र पुनराचार्योक्तक्रममनुरुध्यैव व्रतप्रयोगः समुल्लिखितः, इति द्रष्टव्यम् ॥) एतद्व्रतचतुष्टयं ब्रह्मचारिभिः अवश्यमनुष्ठेयम् ॥ " व्रतान्यवश्यचर्याणि चत्वार्युक्तानि यानि तु " इति गृ० सङ्ग्रहोक्तेः ॥ पञ्चमस्य सम्मितव्रतस्य गृहस्थैरप्याचरितुं शक्यत्वान्न तथावश्यकता तथापि क्रमप्राप्तत्वाद-निषेधाच्च तदप्यत्रोल्लिख्यते ॥

अथ सम्मितव्रतम् ॥ स यदि ब्रह्मचारी स्याद्देवयजनोल्लिखनादि प्रतिपद्येत ॥ अथ यद्यब्रह्मचारी स्यात्स केशश्मश्रु-लोमनखानि वापयित्वा तीर्थं गत्वा स्नात्वाचम्य सुरभिमत्याब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिरिति मार्जयित्वान्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वान्यत्प्रयतं वासः परिधायाप आचम्य

१. आरुणाध्ययनकाले (तै. आ. १. ३२) " संवत्सरमेतद्व्रत चरेत् । द्वौ वा मासौ " इति श्रुत्युक्तं व्रतं चरेत् ॥

देवयजनमुदानयति, इति विशेषः ॥ पुण्याहवाचनान्तमुभयोः समानम् ॥ अथ देवयजनोल्लेखनप्रभृति स्वस्वाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " स्वायम्भुवकाण्डाध्ययनाधिकारपूर्वकशास्त्रोक्तफलसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सम्मितव्रतोपाकरणहोमं करिष्ये, समुद्भवो नामाग्निः, सविता देवता, चरुर्हविः " इत्यादि सङ्कल्प्यापरिधानात्कृत्वाग्रेणाग्निमक्षतपुञ्जेस्वयम्भुवं काण्डर्षिमावाह्य सम्पूज्य परिधानप्रभृत्यग्निमुखान्तं कृत्वाथाव्रत्यप्रायश्चित्तं जुहोति— " ॐ नाहं करोमि कामः करोति कामः कर्ता कामः कारयितैतत्ते काम कामाय स्वाहा ॥ कामायेदं० ॥ ॐ नाहं करोमि मन्युः करोति मन्युः कर्ता मन्युः कारयितैतत्ते मन्यो मन्यवे स्वाहा ॥ मन्यव इदं० " इति द्वाभ्याम् ॥ अथ सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति— " ॐ याज्ञिकीभ्यो देवताभ्यः सम्मितीभ्यः स्वाहा ॥ यथालिङ्गं त्यागः ॥ ॐ सा᳚हितीभ्यो० सम्मितीभ्यः स्वाहा ॥ ॐ वारुणीभ्यो० ॥ ॐ सर्वाभ्यो० सम्मितीभ्यः स्वाहा ॥ ॐ स्वयम्भुवे काण्डऋषये स्वाहा " ॥ " सदसस्पतिम् " इत्यादि "सर्वभूतेभ्यः स्वाहा" इत्यन्तं हुत्वा औदुम्बरीश्चतस्रः समिधो घृतान्वक्ता अभ्यादधाति— " ॐ अग्ने व्रतपते सम्मितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता᳚ स्वाहा ॥ ॐ वायो व्रतपते० ॥ ॐ आदित्य व्रतपते० ॥ ॐ व्रतानां व्रतपते सम्मितं० राध्यता᳚ स्वाहा " इति ॥ ततः स्वायम्भुवकाण्डस्याद्यं " सह वै देवानाम् " इत्यनुवाकमधीत्य स्विष्टकृदादिहुतशेषनिधानप्राशनान्तं कृत्वोत्तरपरिषेकादि शेषं समापयेत् ॥ एवं व्रतमुपाकृत्य अधोनाभ्युपरि जान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपयोगी नागारं प्रविशेदन्यत्र गुरुनियोगात् ॥ भैक्षं वा तत्कालं भुञ्जीत । कामं कन्दमूलफलम् । स्त्रीशूद्रपतितरभसरजस्वलाभिश्च न

१. " हुत्वाग्निमुखमत्रापि व्रतलोपस्य निष्कृतिः । नाहं करोमि मंत्राभ्यां याज्ञिक्याद्या इहापि च " इति गृ० संग्रहे ॥

सम्भाषेत ॥ कामं मातरमुपाध्यायिनीं भगिनीश्चाभिभाषेत याश्चान्या एवंविधाः स्त्रियोऽसक्ताः । अथेमानि नित्यकर्माणि प्रणवव्याहृतिसहितगायत्रीजपः प्राणायामोऽग्नीधनं भिक्षाचरणं द्युनिशोः सम्मितदेवताभ्यः सुमनसो निवेदनम् ॥ " ॐ ब्रह्माणं तर्पयामि । प्रजापतिं० । परमेष्ठिनं० । स्थाणुं० । शिवं० । शर्वं० । बहुरूपं० । स्कन्दं० । इन्द्रं० । यमं० । ऋषींस्त० । पितॄंस्त० । सर्वाः सम्मितदेवतास्तर्पयामि " इति तर्पणं चेति ॥ गुरोः समानवृत्तिषु गुरुवृत्तिः स्यात् ॥ प्रेषितस्तदेव प्रतिपद्येतान्यत्र पातकात् ॥ एवं द्वादश संवत्सरानेकादश नव सप्त पञ्च त्रीन् संवत्सरान् षण्मासांश्चतुरो मासान् द्वौ मासौ मासं वा व्रतं चरेत् । अपि वा योऽनूचानः श्रोत्रियः स द्वादशरात्रं पराकव्रतं चरेन्न त्वेवासम्मिती स्यात् ॥ अस्योत्सर्जने " साम्मितं व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा" इति समिद्धोमे विशेषः ॥ अन्यत्सर्वं पूर्ववत् ॥ इति साम्मितव्रतम् ॥

एवं तत्तकाले तत्तद्व्रतमुपाकृत्य तत्तत्काण्डमधीत्याध्ययनान्ते तत्तद्व्रतं विसृजेदित्ययं प्रधानः कल्पः ॥ तदसम्भवे "अशक्तौ होममात्रेण चर्यन्ते त्वेकतंत्रतः । कालायत्तमिदं कर्म कालो हि दुरितक्रमः ॥ तस्मात्तन्निष्कृतिं कृत्वा तंत्रैक्येणापि वा चरेत् । त्वमग्ने व्रतपेत्येकः सावित्री च मनस्वती ॥ महाव्याहृतयश्चेति प्रायश्चित्ताहुतिर्मता । पक्वं हुत्वोपहोमाः स्युस्तत्तद्व्रतवशात्तथा ॥ समिद्धोमस्तथा तत्तत्काण्डाध्ययनमेव च । व्रतादाने विधिरयं विसर्गेऽप्ययमेव सः ॥ पक्वहोमादिकोऽधीतिवर्जितः पुनरेव तु । यावन्ति व्रतकर्माणि तावन्त्यप्याचरेत्तथा ॥ ग्रहणं मेखलादीनां नेष्यतेऽत्र पृथक्पृथक् ॥ ततः स्विष्टकृदाद्यन्तु प्राग्वदेव समाचरेत् " इति गृ० सङ्ग्रहोक्तप्रकारेणैकदैव होत्रादिपञ्च व्रतानि प्रायश्चित्तपूर्वकमुपाकृत्य पञ्च काण्डान्यधीत्य तथैव तंत्रेण तान्युत्सृजेत् । तस्याप्यसम्भवे—" गोदानादीनि कर्माणि विवाहात्पूर्ववासरे । एकतन्त्रेण वा कुर्यादिति यज्ञविदो विदुः " इति धर्मप्रवृत्तिवचनेन, " होतृशुक्रीयोपनिषद्गोदानं सम्मितं तथा । एषां व्रतानां पञ्चानां कर्मतंत्रैक्यमुच्यते ॥ पुण्याहवाचनं

सद्यो नान्दीं कृत्वाथ मन्त्रवत् । मौञ्जीदण्डोपवीतादि धृत्वा पूर्वधृतं त्यजेत् ॥ उल्लेखनप्रभृत्यग्निमुखान्ते पूर्ववद्धुनेत् । जयाभ्यातानहोमादि साविञ्या पक्वहोमके ॥ स्रुवेणाज्यस्य जुहुयाद्याज्ञिक्यादींश्च तेष्विह । होत्रादिव्रतनामानि सक्तुसंहितया वदन् ॥ चतुर्थ्यन्तं काण्डऋषीन् ते प्रजापतिसोमकौ । अग्निश्च विश्वेदेवाश्च स्वयम्भूरिति च क्रमात् ॥ तत्तद्व्रतं समिद्धोमे काण्डाधीतिः समान्यपि । इषे त्वेत्याप उन्दन्तु उद्धन्यानुमतिः सह । तंत्रे स्विष्टकृतः पूर्वं तथैवोत्सर्जनान्यपि । स्विष्टादिगोप्रदानैर्वा सिद्ध्यन्त्येतद्व्रतानि च " इति प्रयोगमालोक्तकुमारस्वामिकारिकावचनेन च विवाहदिनात्पूर्वेद्युः सद्यो वा पञ्चानामपि व्रतानामुपाकर्मोत्सर्जने तंत्रेण कुर्यात् ॥ ॥ तत्रायं प्रयोगक्रमः ॥ ब्रह्मचारी प्रातः कृतस्नानसन्ध्याग्निकार्यादिनित्यक्रिय आचार्यानुशिष्टः स्नानादिचतुष्टयं कृत्वाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " प्राजापत्यसौम्यवैश्वदेवाग्नेय स्वायम्भुवकाण्डाध्ययनाङ्गभूतहोतृशुक्रियोपनिषद्गोदानसम्मितव्रतानामुपाकर्मोत्सर्जनानि समानतंत्रेण करिष्ये, तदादौ शांत्यर्थं० अभ्युदयार्थं च हिरण्येन नान्दीसमाराधनं स्वस्तिपुण्याहवाचनं निर्विघ्नतासिध्यर्थमादौ गणपतिपूजनञ्च करिष्ये " इति सङ्कल्प्य गणपतिपूजनं पित्रादिद्वारा नान्दीसमाराधनं " सविता प्रीयताम् " इति पुण्याहवाचनं च कृत्वा नूतनानुपवीतवासोमेखलाजिनदण्डान्मन्त्रवद्धृत्वा पूर्वधृतान्युत्सृज्याप उपस्पृश्य स्थण्डिलोल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्य तत्रात्मसमारोपितमग्निं " उपावरोह जातवेदः " इति मंत्रेण संयोज्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " होत्रादिव्रतानामुपाकर्मोत्सर्जनहोमौ कालातिक्रमतंत्रप्रायश्चित्तपूर्वकं समानतंत्रेण करिष्ये, समुद्भवो नामाग्निः, सविता सविता देवते, चरुर्हविः " इत्यादि सङ्कल्प्यान्वाधानादि प्रतिष्ठितहविरभिघारणान्तं कृत्वाग्रेणाग्निमक्षतपुञ्जेषु निवीतिन पञ्च काण्डऋषीनावाह्य सम्पूज्य तर्पयित्वा यज्ञोपवीती परिधानप्रभृत्यग्निमुखान्तं कृत्वाज्येन— ततम्म आपः, यत्पाकत्रा, मनो ज्योतिः, यन्म आत्मनः, पुनरग्निः, महाव्याहृतीः,

व्याहृतीश्चेति कालातिक्रमप्रायश्चित्तं, व्याहृतीः, मिन्दाहुती, चित्तं च स्वाहेत्यादि रुद्राहुत्यन्तं चेति तंत्रप्रायश्चित्तं च हुत्वा चरुं द्विधा विभज्य "सवित्रे त्वा, सवित्रे त्वा" इत्यभिमृश्य दक्षिणस्थाच्चरोरवदानधर्मेणावदाय सावित्र्या पक्वं हुत्वाज्याहुतीर्जुहोति–" ॐ याज्ञिकीभ्यो देवताभ्यो होतृशुक्रियोपनिषद्गोदानसम्मितीभ्यः स्वाहा ॥ सर्वत्र यथालिङ्गं त्यागः ॥ ॐ सा꣡ꣳहितीभ्यो देवताभ्यो होतृशुक्रियो० सम्मितीभ्यः स्वाहा ॥ ॐ वारुणीभ्यो देवताभ्यो होतृशुक्रियो० सम्मितीभ्यः स्वाहा ॥ ॐ सर्वाभ्यो देवताभ्यो होतृशुक्रियोपनिषद्गोदानसम्मितीभ्यः स्वाहा ॥ अथ निवीती, ॐ प्रजापतये काण्डऋषये स्वाहा ॥ ॐ सोमाय काण्डऋषये स्वाहा ॥ ॐ अग्नये काण्डऋषये स्वाहा ॥ ॐ विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा ॥ ॐ स्वयम्भुवे काण्डऋषये स्वाहा ॥ अथोपवीती, ॐ सदसस्पतिमद्भुतं० यासिषꣳ स्वाहा ॥ ॐ तत्सवितुर्वरेण्यं० प्रचोदयात् स्वाहा ॥ ॐ ऋग्वेदाय स्वाहा ॥ ॐ यजुर्वेदाय स्वाहा ॥ ॐ सामवेदाय स्वाहा ॥ ॐ अथर्ववेदाय स्वाहा ॥ ॐ अथर्वाङ्गिरोभ्यः स्वाहा ॥ ॐ इतिहासपुराणेभ्यः स्वाहा ॥ ॐ सर्पदेवजनेभ्यः स्वाहा ॥ ॐ सर्वभूतेभ्यः स्वाहा ॥" इत्येकोनविंशत्याहुतीर्हुत्वा तूष्णीं प्रदक्षिणमग्निं परिषिच्य प्रतिव्रतं चतस्रो घृतान्वक्ताः समिधः क्रमेणाभ्यादधाति—" ॐ अग्ने व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳ स्वाहा ॥ अग्नये व्रतपतय इदं० ॥ ॐ वायो व्रतपते होतारं व्रतं० तन्मे राध्यताꣳ स्वाहा ॥ वायवे व्रतपतय इदं० ॥ ॐ आदित्य व्रतपते होतारं० राध्यताꣳ स्वाहा ॥ आदित्याय व्रतपतय इदं० ॥ ॐ व्रतानां व्रतपते होतारं० तन्मे राध्यताꣳ स्वाहा ॥ व्रतानां व्रतपतय इदं० " ॥ एवमेव शुक्रियादीनामपि "शुक्रियं व्रतं चरिष्यामि" इत्याद्यूहेन व्रतसमिधो हुत्वा पुनः परिषिच्य ब्रह्मयज्ञधर्मेण पञ्चकाण्डादीननुवाकान् तदेकदेशान्वाधीत्योत्सर्जनार्थं "यन्म आत्मनः, पुनरग्निः"

इति द्वाभ्यामव्रत्यप्रायश्चित्तं हुत्वा प्रधानादौ व्याहृतीर्मिन्दाहुती च हुत्वा सावित्र्या पक्वहोमम् ॥ " ॐ याज्ञिकीभ्यो देवताभ्यो होतृ० सम्मितीभ्यः स्वाहा " इत्याद्येकोनविंशत्याज्याहुतीः ॥ " व्रतमचारिषं तदशकं तन्मे राधि " इत्यूहपूर्वकं होत्रादिव्रतसमिद्धोमांश्च पूर्ववत्कृत्वा स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाग्रेणाग्निं पलाशपर्णेषु प्रणवव्याहृतिसहितया गायत्र्या हुतशेषं निधाय तथैव पक्वादुपादाय प्राश्नीयात् ॥ अत्र काण्डऋषीनुद्वास्योत्तरपरिषेकादि होमशेषं समाप्य " अनेन होत्रादिव्रतोपाकरणोत्सर्जनकर्मणा श्रीपरमेश्वरः प्रीयताम् " इति कर्म समापयेत् ॥ ॥ इति होत्रादिव्रतप्रयोगः ॥

अथ ब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥ ब्रह्मचार्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " मम शौचाचमनसंध्यावन्दनभिक्षाग्निकार्यलोपस्त्रीशूद्रादिस्पर्शकौपीनकटिसूत्रयज्ञोपवीतमेखलाजिनदण्डादित्यागदिवास्वापच्छत्रोष्णीषादिधारणपादुकाद्यारोहणमालाधारणोद्वर्तनानुलेपनाभ्यञ्जनजलक्रीडाद्यूतगीतनृत्यवाद्याद्यभिरतिपाखण्डादिसम्भाषणपर्युषितभोजनादिजनितदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृच्छ्राचरणपूर्वकं ब्रह्मचारिव्रतलोपप्रायश्चित्तहोमं करिष्ये " इति सङ्कल्प्य कृच्छ्राचरणाशक्तौ तत्प्रत्याम्नायगोहिरण्यादिकं दत्वा स्थण्डिलोल्लेखनादिस्वाग्निं प्रतिष्ठाप्यापूर्वतन्त्रेणाज्यसंस्कारान्तं कृत्वा स्रुवं सम्मृज्याग्निं परिषिच्यालंकृत्य समिधमभ्याधायाज्याहुतीर्जुहोति— पुरस्ताद्व्याहृतिचतुष्टयं हुत्वा " ॐ पाहि नो अग्न एनसे स्वाहा ॥ अग्नय इदं० ॥ ॐ पाहि नो विश्ववेदसे स्वाहा ॥ विश्ववेदस इदं० ॥ ॐ यज्ञं पाहि विभावसो स्वाहा ॥ विभावसव इदं० ॥ ॐ सर्वं पाहि शतक्रतो स्वाहा ॥ शतक्रतव इदं० ॥ ॐ पाहि नो अग्न एकया ॥ पाह्युत द्वितीयया ॥ पाह्यूर्जं तृतीयया ॥ पाहि गीर्भिश्चतसृभिर्वसो स्वाहा ॥ अग्नय इदं० " इति पञ्च ॥ उपरिष्टाद्व्याहृतिचतुष्टयञ्चेति पाहित्रयोदशं हुत्वा पुनः परिषेचनादि होमशेषं समापयेत् ॥ ॥ इति ब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥

## ॥ अथ समावर्तनम् ॥

( बो. गृ. सू. २. ६ ) " वेदमधीत्य स्नास्यन्नित्युक्तं समावर्तनम् । मन्त्रब्राह्मणं वेद इत्याचक्षते। मन्त्रब्राह्मणयोर्वेदनामधेयम् । मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् । मन्त्रब्राह्मणे अधीत्य चीर्णेषु वा व्रतेषु । एतावदेवनाना । यस्मिन्नग्नावुपनयति तस्मिन्ब्रह्मचर्यं तस्मिन्व्रतचर्या तस्मिन्समावर्तनं तस्मिन्पाणिग्रहणं तस्मिन्गृह्याणि कर्माणि क्रियन्ते। तस्मिन्काम्यानि तस्मिन्प्रजासंस्कारा इत्येके " ॥

( बो. गृ. प. सू. १. १६. १ ) " त्रयः स्नातका भवन्ति- वेदस्नातको व्रतस्नातको वेदव्रतस्नातकश्चेति " ॥ तत्रैव स्नातक-त्रैविध्यमुक्तम् । " वेदमधीत्य स्नास्यन्नित्युक्तं समावर्तनम् " इत्यनेन तादृशस्नानमेव समावर्तनमिति च व्याख्याय तत्र ( बो. गृ. प. सू. १. १३ ) " रोहिण्यां स्नायादित्येकम्— प्राजापत्यं वा एतन्नक्षत्रम्० तिष्ये स्नायादित्येकम्- बार्हस्पत्यं वा एतन्नक्षत्रम्० उत्तरयोः फल्गुन्योः स्नायादित्येकम्— भग्यं वा एतन्नक्षत्रम्० हस्ते स्नायादित्येकम्- सावित्रं वा एतन्नक्षत्रम्० चित्रायां स्नायादित्येकम्- ऐन्द्रं वा एतन्नक्षत्रम्० विशाखयोः स्नायादित्येकम्- ऐन्द्राग्नं वा एतन्नक्षत्रम्० एतेषामेकस्मिन्ना-पूर्यमाणपक्ष " इत्यादिना रोहिणीतिष्योत्तराहस्तचित्राविशाखानक्षत्रेष्वापूर्यमाणपक्षे कुर्यादित्यपि विहितम् । प्रयोगतिलकेऽपि- " अधीत्य शाखाः शाखे वा शाखां वापि स्वशक्तितः । व्रतं समाप्य दत्वा च गुर्वर्थं तदनुज्ञया ॥ अथोदगयने कुर्यात्समावर्तन-मादृतः " इत्युक्तम् । तत्र नक्षत्रविशेषमाह श्रीधरः— " वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणीगोविन्देषु शशाङ्क-भानुगुरुविच्छुक्रांशवारादिषु । रिक्तां पर्व तथाष्टमीं प्रतिपदं मेषं च कीटं हरिं हित्वा शुद्धियुतेऽष्टमेऽह्नि विमले कुर्यात्समावर्तनम् "

इति ॥ वैद्यनाथीये— "स्नातस्तूपयमादर्वाग्मृतो याति न सद्गतिम्। तस्मादासन्नवैवाहः स्नानकर्म समाचरेत्। अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः। आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते तु सः" इति वचनेनासन्नविवाहस्यैव समावर्तनं प्रशंसितम् ॥ एतेनोदगयने विवाहात् पूर्वं पर्वप्रतिपदष्टमीरिक्तातिरिक्तासु तिथिषु भानुसोमगुरुशुक्रवारेषु रोहिणीमृगशिरःपुनर्वसुतिष्योत्तरात्रयहस्तानुराधाश्रवणरेवतीनक्षत्रेषु सूत्रोक्तचित्राविशाखयोश्चाष्टमशुद्धियुतेषु मेषसिंहवृश्चिकवर्जितेषु लग्नेषु समावर्तनं कुर्यादित्युक्तं भवति ॥

अथ प्रयोगः ॥ ब्रह्मचारी गुरुकुले वसन्वेदं वा व्रतं वोभयं वा पारं नीत्वा गुरुं दक्षिणादिना सन्तोष्य तेनाऽनुज्ञातः पूर्वोक्तेषु स्वानुकूले शुभदिने स्नास्यन्नेतान्सम्भारानुपकल्पयते—"एरकाश्चोपबर्हणं च नापितं च क्षुरश्च दारूणि चोपस्तरणं च वृकलांश्च दन्तधावनमुष्णाश्चाऽपः शीताश्च सर्वसुरभिपिष्टं चाञ्जनं च स्रजं चादर्शं चाहतं वासः प्रावारश्च वसनान्तरं बादरमणिं सुवर्णोपधानं सूत्रश्च प्रवर्तौ च दण्डश्चोपानहौ च छत्रमानडुहं चर्म सर्वलोहितम्" इत्युपकल्प्य सूर्योदयात्पूर्वं गृहं प्रविश्याऽन्तर्लोम्ना चर्मणा द्वारं पिदधाति यथा नैतदहरेनमादित्योऽभितपेत्। आमध्यंदिनं भिक्षां दद्यात् ॥ अथ प्रातः स्नानसन्ध्याऽग्निकार्यादि नित्यकर्म कृत्वा मध्यंदिने दर्भेषु प्राङ्मुख उपविश्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम स्नातकत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाऽऽख्यं कर्म करिष्ये" इति सङ्कल्प्य निर्विघ्नतासिध्यर्थं गणपतिपूजनं नान्दीसमाराधनं "श्रीः प्रीयताम्" इति पुण्याहवाचनञ्च क्रमेण कुर्यात् ॥ नान्दीसमाराधनमाद्यविवाहान्तं पित्रादिः कुर्यादित्युक्तमेव ॥ अथात्रविवाहदिनात्पूर्वं होत्रादिव्रतानां समावर्तनस्य च तन्त्रेणाऽनुष्ठानपक्षे, "अस्य कुमारकस्य होत्रादिव्रतसमावर्तनकर्मणी कर्तुमादौ नान्दीसमाराधनं करिष्ये" इति सङ्कल्पपूर्वकं नान्दीसमाराधनं कृत्वा "सवितृश्रियौ प्रीयेताम्" इति होत्रादिव्रतसमावर्तनयोः पुण्याहं

वाचयित्वा होत्रादिव्रतान्ते समावर्तनं कुर्यादिति विशेषः ॥ अथ देवयजनोल्लिखनादि लौकिकाऽग्निं प्रतिष्ठाप्य तत्र "उपावरोह" इति स्वाग्निं संयोज्य "मम स्नातकत्वसिध्यर्थं समावर्तनहोमं करिष्ये, परिवर्तो नामाऽग्निः, श्रीर्देवता, चरुर्हविः" इत्यादि सङ्कल्प्याऽन्वाधाय पात्रासादनकाले प्राकृतपात्राण्यासाद्य, एरकां चोपबर्हणं च क्षुरं चोपस्तरणं च दन्तधावनकाष्ठं चोष्णाश्चाऽपः शीताश्च सर्वसुरभिपिष्टं चाञ्जनं च स्रजं चादर्शं चाहतं वासः प्रावरणञ्च वसनान्तरं सुवर्णोपधानं बादरमणिं च सूत्रं च प्रवर्तौ च दण्डञ्चोपानहौ च छत्रं पालाशीं समिधं चेत्येतानि सकृदेवाऽऽसाद्य प्रोक्षणीसंस्काराद्यग्निमुखान्तं कृत्वा पालाशीं समिधमाज्येनाऽक्त्वाऽभ्यादधाति— "ॐ इमꣳ स्तोममर्हते जातवेदसे रथमिव सम्महे मा मनीषया । भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मारिषामा वयं तव स्वाहा" इति ॥ जातवेदसेऽग्नय इदं० ॥ अथाऽपरेणाऽग्निमुपस्तरणोपबर्हणयुतायामेरकायामुदीचीनशिरा निपद्यते— "त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषमृषीणां त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्" इति ॥ अथ ( आचार्येण क्रियमाणं ) गोदानमनुमन्त्रयते— "शिवा मे भवथ सꣳस्पृशे" इति ॥ क्षुरमभिमन्त्रयते— "क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः" इति ॥ क्षुरेणोप्यमानमनुमन्त्रयते— "यत्क्षुरेण वर्चयसि वप्त्रा वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीः" इति ॥ श्मश्रूण्येवाग्रे वपते अथोपपक्षावथ केशान्यथोपपादमितराण्यङ्गानि वापयित्वा नखानि निकृन्तयीत ॥ अथैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाह— 'इमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्तात्' इति तानि स तत्र निदधाति ॥ अपरेणाऽग्निं प्राङ्मुख उपविश्य मेखलां विस्रंसयति— "इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि" इति ॥ तां मित्रस्य पुत्राय वान्तेवासिने

वा प्रयच्छन्नाह– 'इमां हत्वा न्यग्रोधमूले वा उदुम्बरमूले वा निधत्तात्' इति ॥ तां स तत्र निदधाति—"इदमहं हरिशर्मणो वासिष्ठगोत्रस्य शुचा पाप्मानमवगूहाम्युत्तरस्य द्विषद्भ्यः" इति तत्तन्नामगोत्रे निर्दिशेत् ॥ अत्रैव दण्डमजिनं वासश्च विसृज्याऽप उपस्पृशेत् ॥ एवं ब्रह्मचारिधर्मान् परित्यज्य वृकलकाष्ठेन दन्तान्विधावयते—"अन्नाद्याय व्यपोहध्वं भगो राजायमागमत् । स मे मुखं प्रसर्पतु वर्चसे च भगाय च" इति ॥ अप. उपस्पृश्योभयीरपस्सन्निषिञ्चति—'उष्णास्तु शीता आनयति देवमनुष्यस्य व्यावृत्य' इति ॥ ता अपोऽञ्जलिनोपहत्याऽस्य मूर्ध्न्यभिषिञ्चति— "आपो हि ष्ठा" इति तिसृभिः, "हिरण्यवर्णाः शुचयः" इति तिसृभिरेवं षड्भिर्ऋग्भिर्मार्जितो विमलजलैर्मङ्गलस्नानं कृत्वाऽऽचम्य सर्वसुरभिपिष्टं समुदायुत्याऽङ्गेषु त्रिः प्रसिञ्चति—"नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः" इति ॥ तेन सर्वाण्यङ्गान्यनुलिम्पेत्—"अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धः स मा माविशत्विह" इति ॥ अहतं वासः परिधत्ते—"स्वामा तनूराविश शिवा मा तनूराविश" इति ॥ एवमेवोत्तरीयम् ॥ अत्रैव द्वितीययज्ञोपवीतं धृत्वाऽऽचम्याऽथैतं सुवर्णोपधानं बादरमाणिं सूत्रे प्रोत्य दर्व्यामाधाय सूत्रेण दर्वीदण्डमावेष्ट्याज्याहुतिं जुहोति—"ॐ इयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा" इति ॥ ओषधय इदं०॥ अथैनं मणिमुदपात्रे परिप्लावयति—"विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहे महि द्विषः" इति ॥ "अपाशोऽसि" इत्युक्त्वा तं सूत्रप्रोतं बादरमाणिमुपवीतवदक्षिणया कण्ठे धारयेत् ॥ अथैतौ प्रवर्तौ (सुवर्णकुण्डले) सूत्रे प्रोत्य दर्व्यामाधाय दर्वी-दण्डे सूत्रेण पर्यस्य दर्व्या पञ्चाज्याहुतीरुपजुहोति—"ॐ आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिद्यम् । इदꣳ हिरण्यं वर्चसे जैत्र्याया

विशतामिदꣳ रयिꣳ स्वाहा ॥ हिरण्यायेदं० ॥ शुनिमिवाहꣳ हिरण्यस्य पितुरिव नामाग्रभैषम् । तन्मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा ॥ हिरण्यायेदं० ॥ उच्चैर्वाजिपृतनासहꣳ सभासाहं धनंजयम् । सर्वाः समृद्धीर्ऋद्धयो हिरण्ये थाः समाहिताः स्वाहा ॥ हिरण्यायेदं० ॥ पविराजञ्च स्वराजञ्चाऽभिष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि स्वाहा ॥ लक्ष्म्या इदं० ॥ यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मि यशस्तव स्वाहा ॥ लक्ष्म्या इदं० " इति ॥ अथैतावुदपात्रेऽनुप्लावयति— " विश्वा उत त्वया वयं धारा उदन्या इव । अति गाहे महि द्विषः " इति ॥ एतयोः कुण्डलयोरन्यतरदादाय दक्षिणे कर्णे बध्नाति—" आयुष्यं वर्चस्यं " इत्येतैः पञ्चभिर्मन्त्रैः ॥ अथैनदनुपरिवर्तयति— "ऋतुभिस्त्वार्तवैः संवत्सरस्य धायसा । तैस्त्वा सहानुकरोमि" इति ॥ एवमेवोत्तरे कर्णेऽन्यत्कुण्डलमाबध्य शिरसि स्रजं प्रतिमुञ्चति— " शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखꣳ हि मम शोभय भूयाꣳसं च भगं कुरु ॥ यान्त्वा जहार जमदग्निः श्रद्धायै कामायान्यै । तां त्वेमां प्रतिमुञ्चामि वर्चसे च भगाय च " इति ॥ अथ त्रैककुदेनाऽञ्जनेनाऽङ्क्ते[1]— " यदाञ्जनं त्रैककुदं जातꣳ हिमवत उपरि । तेन वामाञ्जे मयि पर्वत वर्चसमस्तु " इति ॥ आदर्शे मुखं परिपश्यति— " यन्मे मनः परागतमादर्शे परिपश्यतः । इदं तन्मयि पश्याम्यायुष्यं वर्चस्यं मे अस्तु " इति ॥ अथोपानहौ प्रतिमुञ्चते— " द्यौरसि " इति दक्षिणपादे " पृथिव्यसि " इत्युत्तरे ॥ अथ दण्डमादत्ते— " सखा मा गोपाय " इति ॥ छत्रमादत्ते— " दिव्योऽसि सुपर्णोऽन्तरि-

१. " दक्षिणे लोचने वामे पञ्चकृत्वो मुहुर्मुहुः " इति कारिकान्तरे ॥

क्षान्मा पाहि" इति ॥ अथ "वरुणोऽसि धृतव्रतो वारुणमसि" इति कमण्डलुं चादाय गुरुं प्रणम्याऽनुज्ञाप्योदङ्मुखस्तीर्थं गच्छेत् । सप्तपदानि गत्वा सुहृद्भिर्निवारितश्छत्रोपानहौ कमण्डलुञ्च विसृज्याऽचम्याऽपरेणाऽग्निमुपविश्य पक्वाज्जुहोति— "ॐ आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनः । वासा सि मम गावश्चाऽन्नपाने च सर्वदा ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा" इति ॥ श्रिया इदं० ॥ ततः स्विष्टकृतमवदायाऽन्त:परिधौ निधायाऽज्याहुतीरुपजुहोति— "ॐ आमा यन्तु ब्रह्मचारिणः स्वाहा ॥ ॐ विमा यन्तु ब्रह्मचारिणः स्वाहा ॥ ॐ प्रमा यन्तु ब्रह्मचारिणः स्वाहा ॥ ॐ दमा यन्तु ब्रह्मचारिणः स्वाहा ॥ ॐ शमा यन्तु० चारिणः स्वाहा ॥ ॐ उन्मा यन्तु० स्वाहा ॥ (एतेषु षट्सु ब्रह्मचारिभ्य इदं० इति त्यागः) ॐ यशो जनेऽसानि स्वाहा ॥ यशस इदं० ॥ ॐ श्रेयान्वस्यसोऽसानि स्वाहा ॥ श्रेयस इदं० ॥ ॐ तन्त्वा भग प्रविशानि स्वाहा ॥ भगायेदं० ॥ ॐ समा भग प्रविश स्वाहा ॥ भगायेदं० ॥ इति दशभिः ॥ ततः स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निं विल्वशाखायां हुतशेषं निदधाति— "तस्मिन्सहस्र शाखे । निभगाहं त्वयि मृजे स्वाहा" इति ॥ अथ पक्वाद्धस्ते उपस्तीर्णाऽभिघारितं हविरादाय

१. "कुण्डिकां वरुणोऽसीति गृहीत्वोदङ्मुखो गुरून् । प्रणम्य तैरनुमतस्तीर्थं गच्छेदुदङ्मुखः ॥ पदानि सप्तानुगतास्सुहृदो वारयन्ति तम्" इति प्र० तिलके ॥ २. "आवहन्ती वितन्वाना ततो मे श्रियमित्यृचौ । व्याहृति प्रणवान् वापि पुरोनूच्य यजेद्धविः ॥ आवहन्त्यादिकेनैव स्वाहान्तेन तु कृत्स्नशः" इति गृ० सङ्ग्रहे ॥ ३. "आमायन्तु विमायन्तु प्रमायन्तु ततःपरम् । दमायन्तु शमायन्तु तुन्मायन्त्विति तत्परम् ॥ यशः श्रेयांश्च तन्त्वा च समा भग इति क्रमात् । दशोपहोमे मन्त्रास्स्युः समावर्तनकर्मणि" इति प्र० चिन्तामणौ ॥ "आमायन्तु द्विपञ्चभिः" इति गृ० सङ्ग्रहे ॥

प्राश्नाति— " यथापः प्रवता यन्ति । यथामासा अहर्जरम् ॥ एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा " इति ॥ प्राश्याऽप आचम्योरः प्रत्यभिमृशते— प्रतिवेशोऽसि प्रमा भाहि प्रमा पद्यस्व " इति ॥ अथाऽप उपस्पृश्योत्तरपरिषेकादि होमशेषं समाप्य नक्षत्रोदयपर्यन्तमत्रैव स्थित्वोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठते— " देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम् " " मा हास्म हि प्रजया मा तनूभिर्मारधाम द्विषते सोम राजन् " इति ॥ चन्द्रमसमुपतिष्ठते— " सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृचः" इति ॥ इदं दिगाद्युपस्थानमुक्तकाले कर्तुमसम्भवे तदानीमेव वा कृत्वा " या ते अग्ने" इत्यात्मन्यग्निं समारोपयेत् ॥ विवाहपर्यन्तं सायं प्रातरग्निकार्यमाज्येन कुर्यात् ॥ ॥ इति समावर्तनप्रयोगः ॥

जडबधिरादीनां समावर्तनम् ॥ ( बो. गृ. प. सू. १.१४ ) " अथ व्रतस्नातकस्य वेदमनधीयानस्य तूष्णीं समावर्तनम् । तीर्थे स्नात्वाऽग्निमुपसमाधाय सम्परिस्तीर्य मध्याह्ने पालाशीं समिधमाज्येनाक्त्वाऽभ्यादधाति— ' इमꣳ स्तोमम् ' इत्येतया । तूष्णीं वपनं तूष्णीं संभारग्रहणं च कृत्वा रथस्य दक्षिणं चक्रमभिमृशाति— ' रथन्तरमसि ' इति । सव्यं— ' बृहदसि ' इति । रथस्य मध्यमभिमृशाति— ' वामदेव्यमसि ' इति । रथं प्रवर्तमानमभिमन्त्रयते— ' रथं वामाश्विना रथो मा दुःखे मा सुखे रिषत् ' इति । रथाऽभावेऽप उपस्पृश्य भूमिमभिमृशाति— ' इह धृतिरिह विधृतिरिह रन्तिरिह रमतिः ' इति । अथाप उपस्पृश्य हृदयमभि-मृशाति— ' मयीन्द्रियं वीर्यम् ' इति । अपो व्रीहिभिर्यवैर्वा समुदायुत्य शिष्याय प्रयच्छति । तत्प्रतिगृह्णाति— ' आ म आगाद्वर्च-सा यशसा ' इति । ब्राह्मणः— ' आ म आगाद्वर्चसा यशसा सꣳ सृज प्रियः पशूनामधिपतिः प्रजानाम् ' इति तदुपस्पृश्य वदेत् । प्राक्सिक्तं तज्जलं पुरस्तात्सिञ्चति । अथ दधिमध्वाज्योदकमिश्रं वा दधिमध्वाज्योदकक्षीरमिश्रं वा ' अर्घ्यं ' इति निवेदयेत् ।

शिष्योऽर्घ्यमभिमन्त्रयते—'स माऽवतु स माऽवन्तु स मा जुषताम्' इति। अथ द्वाभ्यां हस्ताभ्यां प्रतिगृह्णाति—'आ म आगाद्वर्चसा' इति। तस्मिंश्चित् किञ्चिदापतितं स्यात्तदङ्गुष्ठेन महानाम्न्या च सङ्गृह्येमां दिशं निरस्यति—'नेष्ट्रा विंद्रिम्' इति। अथाप उपस्पृश्य सर्वाभिरङ्गुलीभिस्समुदायुत्य प्राश्नाति— 'इदं ते बलं हरामि' इति प्रथमम्। 'श्रेष्ठं माधिपतिं कुरु' इति द्वितीयम्। 'सोमोसि सोमपं मा कुरु' इति तृतीयम्। 'अन्नमस्यन्नं मा कुरु' इति चतुर्थम्। एवं चतुष्कृत्वः प्राश्य त्रिरनुपिबेन्न सर्वं न तृप्तिं गच्छेत्॥ यमात्मनः श्रेयांसमिच्छेत्तस्मै शेषं दद्यादिति। अथ कर्णे दाम्ना बद्धां गामनुमन्त्रयते—'जहि मे पाप्मानमुपवेत्तुः' इति। अथ गामुत्सृजेत् — 'गौर्धेनुर्भव्या' इति। अथौदनमाहृतं प्राश्नाति — 'ब्रह्मन् त्वाऽश्नामि' इति। अथोदकमिश्रं सक्तु-माहृतमश्नाति—'ब्रह्मन् त्वाऽश्नामि' इति। एवमेव जडबधिरमूकान्धकुब्जादीनामशक्तस्तूष्णीं समिधमाधाय शेषं तूष्णीमाचरेत्"।

अथ प्रयोगः॥ तत्र तूष्णीं समावर्तनं करिष्ये, इति सङ्कल्प्य पित्रादिद्वारा नान्दीसमाराधनं पुण्याहं च कृत्वाऽग्निमुपसमाधाय सम्परिस्तीर्य परिषिच्य पालाशीं समिधमाज्येनाऽक्त्वा "इमꣳ स्तोमम्" इति मन्त्रेणाऽभ्याधाय तूष्णीमेव वपनं मेखलादिविस्रं-सनं दन्तधावनं स्नानञ्च कृत्वा सर्वसुरभिगन्धैरङ्गान्यनुलिप्य तूष्णीमहते वाससी परिधायोपवीतद्वयं च धृत्वा मणिकुण्डल-स्रग्धारणमञ्जनं दर्पणावलोकनं पादुकादण्डछत्रकमण्डलुधारणञ्च सर्वं तूष्णीं कृत्वा "इह धृतिरिह विधृतिरिह रन्तिरिह रमतिः" इति भूमिमभिमृश्योत्तरपरिषेकादि समापयेत्॥ नात्र पक्वहोमादिकं विद्यते॥ अथैनमाचार्यो मधुपर्केणार्हयति॥ मधुपर्कविधिरग्रे समग्रो वक्ष्यते॥ तत्रायं विशेषः॥ कूर्चपाद्यार्हणीयोपस्तरणीयान्ते मधुपर्कं प्रोक्तमनुमन्त्रयते—"स मावतु स मावन्तु स मा जुषताम्" इति॥ उभाभ्यां प्रतिगृह्णाति—आम् आगाद्वर्चसा० पशूनाम्" इति॥ अथ "नेष्ट्रा विद्धि० द्रिप्मः" इति

तस्मिन् पतितं तृणादिकं निरस्याप उपस्पृश्य सर्वाभिरङ्गुलीभिः समुदायुत्य चतुः प्राश्नाति— " प्राणेदं ते बलिँ हरामि " इति प्रथमम् । " श्रेष्ठं माधिपतिं कुरु " इति द्वितीयम् । " सोमोऽसि सोमपम्मा कुरु " इति । तृतीयम् " अन्नमस्यन्नादं मा कुरु " इति चतुर्थम् । शेषमात्मनः प्रियाय दद्यात् ॥ अथ गामनुमन्त्रयते— " जहि मे पाप्मानमुपवेत्तुः " इति ॥ तामुत्सृजति— "गौर्धेनु० ओमुत्सृजत" इति ॥ अथास्मा ओदनं उदकमिश्रं सक्तुश्च प्रत्येकमश्नाति—"ब्रह्मन्त्वाऽश्नामि. ब्रह्मन्त्वाऽश्नामि" इति ॥ इति जडबधिरादीनां समावर्तनम् ॥

अथ स्नातकधर्माः ॥ ( बो. गृ. प. सू. १·१५ ) " अथैतेषामत ऊर्ध्वं नित्यानि भवन्ति—' औपासनो दण्डः कमण्डलुरुपानहौ छत्रं द्वे वाससी द्वे यज्ञोपवीते उष्णीषमजिनमन्तर्वासः ' इति ॥ पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि च वाग्यत उत्तरेण वा ॥ बहिर्वाचं विसृजेत् । प्रश्नमनुवाकं वाऽधीयीत । ब्रह्मपरो ब्रह्मनित्यो देवेभ्य ऋषिभ्यः पितृभ्यस्तर्पणानि कृत्वाऽश्नीयात् । दिवा नोष्णीषी नक्तमुष्णीषी मूत्रपुरीषोत्सर्गेषु च निवीती नित्ययज्ञोपवीती । तिष्ठन्नाचामेत्प्रह्वो वा । सन्ध्ययोश्च बहिर्ग्रामादासनं वाग्यतश्च । आ जायासङ्गमात्स्नातका भवन्त्यत ऊर्ध्वं गृहस्थाः । अविच्छेदाय वेदव्रतैर्व्यवहरेत् । कौमारेण माहेश्वरेण धान्वन्तरेणेति " ॥

( बो ध. सू. २. ५–६ ) " अथ स्नातकव्रतानि ॥ सायं प्रातर्यदशनीयं स्यात्तेनाऽन्नेन वैश्वदेवं बलिमुपहृत्य ब्राह्मणक्षत्रियविट्शूद्रानभ्यागतान्यथाशक्ति पूजयेत् ॥ यदि बहूनां न शक्नुयादेकस्मै गुणवते दद्यात् ॥ यो वा प्रथममुपागतस्स्यात् ॥ शूद्रश्चेदागतस्तं कर्माणि नियुञ्ज्यात् ॥ श्रोत्रियाय वाऽग्रं दद्यात् ॥ ये नित्या भक्तिकास्स्युस्तेषामनुपरोधेन संविभागो विहितः ॥ न त्वेव कदाचिददत्वा भुञ्जीत ॥ अथाऽप्यत्राऽन्नगीतौ श्लोकावुदाहरन्ति— ' यो मामदत्वा पितृदेवताभ्यो भृत्याऽतिथीनाञ्च सुहृज्जनस्य । सम्पन्नमश्नन्विषमत्ति मोहात्तमद्म्यहं तस्य च मृत्युरस्मि ॥ हुताऽग्निहोत्रः कृतवैश्वदेवः पूज्याऽतिथीन्भृत्यजनाव-

शिष्टम् । तुष्टश्शुचिश्श्रद्दधद्त्ति यो मां तस्याऽमृतं स्यां स च मां भुनक्ति ' इति ॥ सुब्राह्मणश्रोत्रियवेदपारगेभ्यो गुर्वर्थनिवेशौषधार्थ-वृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो यथाशक्ति कार्यो बहिर्वेदि भिक्षमाणेषु ॥ कृतान्नमितरेषु ॥ सुप्रक्षालितपादपाणिराचान्तश्शुचौ संवृते देशेऽन्नमुपहृतमुपसङ्गृह्य कामक्रोधद्रोहलोभमोहानपहृत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन् प्राश्नीयात् ॥ न पिण्डशेषं पात्र्यामुत्सृजेत् ॥ मांसमत्स्यतिलसंसृष्टप्राशनेऽप उपस्पृश्याऽग्निमभिमृशेत् ॥ अस्तमिते च स्नानम् ॥ पालाशमासनं पादुके दन्तधावनमिति वर्जयेत् ॥ नोत्सङ्गेऽन्नं भक्षयेत् ॥ आसन्द्यां न भुञ्जीत ॥ वैणवं दण्डं धारयेद्रुक्मकुण्डले च ॥ पदा पादस्य प्रक्षालनमधिष्ठानञ्च वर्जयेत् ॥ न बहिर्मालां धारयेत् ॥ सूर्यमुदयास्तमये न निरीक्षेत ॥ नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥ यदि ब्रूयान्मणिधनुरित्येव ब्रूयात् ॥ पुरद्वारीन्द्रकीलपरिधावन्तरेण नाऽतीयात् ॥ प्रेङ्खयोरन्तरेण न गच्छेत् ॥ वत्सतन्तीञ्च नोपरि गच्छेत् ॥ भस्माऽस्थिरोमतुषकपालाऽपस्नानानि नाऽधितिष्ठेत् ॥ गां धयन्तीं न परस्मै प्रब्रूयात् ॥ नाऽधेनुमधेनुरिति ब्रूयात् ॥ यदि ब्रूयात् धेनुर्भव्येत्येव ब्रूयात् ॥ शुक्ता रूक्षाः परुषा वाचो न ब्रूयात् ॥ नैकोऽध्वानं व्रजेत् ॥ न पतितैर्न स्त्रिया न शूद्रेण ॥ न प्रतिसायं व्रजेत् ॥ न नग्नस्स्नायात् ॥ न नक्तं स्नायात् ॥ न नदीं बाहुकस्तरेत् ॥ न कूपमवेक्षेत ॥ न गर्तमवेक्षेत ॥ न तत्रोपविशेद्यत एनमन्य उत्थापयेत् ॥ पन्था देयो ब्राह्मणाय गवे राज्ञे ह्यचक्षुषे वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ प्रभूतैधोदकयवससमित्कुशमाल्योपनिष्क्रमणमाढ्यजनाकुलमनलससमृद्धमार्यजनभूयिष्ठमदस्युप्रवेश्यं ग्राममावसितुं यतेत धार्मिकः ॥ उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः उषित्वा द्वादश समाः शूद्रसाधर्म्यमृच्छति ॥ पुररेणुगुण्ठितशरीरस्तत्परिपूर्णनेत्रवदनश्च । नगरे वसन्सुनियतात्मा सिद्धिमवाप्स्यतीति न तदस्ति ॥ रथाश्वगजधान्यानां गवाञ्चैव रजश्शुभम् । अप्रशस्तं समूहन्याः श्वाऽजाविखरवाससाम् ॥ पूज्यान्पूजयेत् ॥ ऋषिविद्वन्नृपवरमातुलश्वशुरर्त्विजः । एतेऽर्घ्यांश्शास्त्रविहिताः

स्मृताः कालविभागशः ॥ ऋषिविद्वन्नृपाः प्राप्ताः क्रियारम्भे वरर्त्विजौ। मातुलश्वशुरौ पूज्यौ सम्वत्सरगताऽऽगताविति ॥ अग्न्यगारे गवां मध्ये ब्राह्मणानाञ्च सन्निधौ। स्वाध्याये भोजने चैव दक्षिणं बाहुमुद्धरेत् ॥ उत्तरं वासः कर्तव्यं पञ्चस्वेतेषु कर्मसु। स्वाध्यायोत्सर्गदानेषु भोजनाऽऽचमनयोस्तथा ॥ हवनं भोजनं दानमुपहारः प्रतिग्रहः। बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥ अन्ने श्रितानि भूतानि अन्नं प्राणमिति श्रुतिः। तस्मादन्नं प्रदातव्यमन्नं हि परमं हविः ॥ हुतेन शाम्यते पापं हुतमन्नेन शाम्यति। अन्नं दक्षिणया शान्तिमुपयातीति नश्श्रुतिरिति ॥ ॥ इति स्नातकधर्माः ॥

## ॥ अथ कन्यासंस्कारः ॥

(बो. गृ. सू. ३. १३. ८) "कन्यानां चैव जन्मादि कर्तव्यं कर्ममङ्गलम्। क्रियामयं हि ब्राह्मण्यं नाक्रियं ब्रह्मोच्यते" ॥ तच्छेषेऽपि (बो. गृ. शे. सू. १. १२) "पुत्राय च दुहित्रे च समानी ब्राह्मणक्रिया। मन्त्रवद्गर्भ आजन्म जन्माद्या आवृतं स्त्रियै ॥ वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः" इति ॥ याज्ञवल्क्योऽपि— "तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः" इति जन्मादिचौलान्तानाममन्त्रकत्वं विवाहस्य समन्त्रकत्वं चाह ॥ स्मृत्यन्तरेऽपि तथैवोक्तम्— "स्त्रीणां जन्मादिचौलान्तं सर्वं कुर्यादमन्त्रकम्। पाणिग्रहणमारभ्य समन्त्रेण पतिश्चरेत्। कौतुकाङ्कुरनान्द्यादि ग्रहयज्ञं च मन्त्रवत्" इति ॥ वेदव्यासस्मृतौ तु— "नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः ॥ विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश" इति स्त्रिया विवाहात्पूर्वं नवैव संस्कारास्ते चामन्त्रकाश्चौलन्तु न भवत्येवेति विशेषोऽभिहितः ॥ इदं च जननोत्तरमेव गर्भाधानादीनां तन्त्रेण करणे संघटते तत्पूर्वं स्त्रीत्वस्याज्ञानात् ॥ जननात्पूर्वं क्रियमाणा गर्भाधानादिविष्णुबल्यन्ताः संस्कारास्तूक्तबोधायनवचनेन समन्त्रका एव कार्या इत्यवगन्तव्यम् ॥

अथेदानीं कन्याया विवाहसमय एव सर्वे संस्काराः समानतन्त्रेण प्रायोऽनुष्ठीयन्त इति तदनुसारं तत्संस्कारप्रयोग-क्रमो लिख्यते ॥ कर्ता सपत्नीकः कन्यया सह मङ्गलस्नानादि यथोक्तं निर्वर्त्य " अस्याः कुमार्या गर्भाधानपुंसवनसीमन्तोन्नयम-विष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलसंस्कारान् विवाहं च कर्तुमादौ नान्दीसमाराधनं करिष्ये " इत्यादि सङ्कल्प्य नान्द्यङ्गपुण्याहं नान्दीसमाराधनमुदकशान्तिप्रतिसरबन्धावङ्कुरारोपणं च यथानुकूलं पूर्वेद्युः सद्यो वा कृत्वाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यास्याः कुमार्या गर्भाधानादिचौलान्तसंकारान् कर्तुमादौ शान्त्यर्थं० अभ्युदयार्थं चैभिर्ब्राह्मणैः सह स्वस्तिपुण्याहवाचनं करिष्ये. इति सङ्कल्प्य " वेधाः प्रजापतिर्धाता सविता मृत्युः सविता सविता सविता श्रोत्रं केशिनः प्रीयन्ताम् " इति पुण्याहं वाचयित्वा कुलदेवतास्थापनं च कृत्वास्याः कुमार्या गर्भाधानादिचौलान्तसंस्काराणां मुख्य-कालातिपत्तिदोषपरिहारार्थं स्मृत्युक्तकृच्छ्रत्रयप्रत्याम्नायगोनिष्क्रयभूतं हिरण्यं रजतं वा दातुमहमुत्सृजे, इति सङ्कल्प्य कृच्छ्र-प्रत्याम्नायं हिरण्यं रजतं वा यथाशक्ति दद्यात् । अत्र प्रायश्चित्तहोमो विहितः प्रयोगमालायाम् । तत्करणपक्षे " अस्याः कुमार्या गर्भा-धानादिचौलान्तसंस्काराणां मुख्यकालातिपत्तिदोषपरिहारार्थं प्रायश्चित्तहोमं करिष्ये " इति सङ्कल्प्यापूर्वतन्त्रेण स्थण्डिलोल्लेखनादि चित्तिनामानमग्निं प्रतिष्ठाप्याज्यसंस्कारान्तं कृत्वाग्निमलंकृत्य— ततं म आपः, यत्पाकत्रा, मनो ज्योतिः, यन्म आत्मनः, पुनराग्निः, महाव्याहृतयः, व्याहृतयः, व्याहृतयः, यन्म आत्मनः, पुनराग्निः, चित्तं चेत्यादि रुद्राहुत्यन्तं चेत्येतैराज्याहुतीर्हुत्वोत्तरपरिषेकादि समापयेत् ॥ ततोऽतीतानां गर्भाधानादिविष्णुबल्यन्तसंस्काराणां प्रधानमन्त्रान्पठित्वा जातकर्मादितन्त्रान् कुर्यात् ॥ " अस्याः कुमार्या बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्मनामकरणोपनिष्क्रमणान्न-प्राशनकर्णवेधनचौळकर्माणि समानतन्त्रेण करिष्ये " इति सङ्कल्प्य तूष्णीं कुमारीं दृष्ट्वा तूष्णीमेव षड्वारं स्नापयित्वा स्वाङ्के

उपवेश्य तत्तन्नाक्षत्रनामधेयं सम्बुद्धयन्तं निर्दिश्य मूर्ध्न्यभिजिघ्रेत्— " अश्वयुक्, अपभरणि, कृत्तिके, रोहिणि, मार्गशीर्षि, आर्द्रिके, पुनर्वसो, तिष्ये, आश्लेषे, माघि, फाल्गुनि, हस्ते, चित्रे, स्वाते, विशाखे, अनूराधे, ज्येष्ठे, मूलके, आषाढे, श्रवणे, श्रविष्ठे, शातभिषाजि, प्रोष्ठपदि, रेवति " इति ॥ अथास्याः कर्णयोः ' आयुष्मती भव ' इति जपित्वा दधि मधु घृतमिति समुदायुत्य हिरण्येन दशवारं तूष्णीं प्राशयित्वा मुखं प्रक्षाल्यातिशिष्टं गोपदे निनीयाथैनां मातुरङ्के उपवेश्य स्तनं धयन्तीं स्मृत्वोदकुम्भमुच्छिरसि तूष्णीं निदधाति ॥ इति जातकर्म ॥ ॥ अथ नामकरणम् ॥ " अस्याः कुमार्या आयुःश्री-बलवृद्धिपूर्वकं व्यवहारासिद्धये नाम धास्यावहे " इति सङ्कल्प्य यथाचारं तण्डुलपूर्णे सुवर्णाद्यन्यतमे पात्रे सुवर्णशलाकया हरिद्राखण्डेन वा नामचतुष्टयं विलिखेत्— " गणपतिभक्ता " इत्यादि तत्तत्कुलदेवतानाम । " लक्ष्मीः श्रीः कमला भद्रा सीता सत्या च रुक्मिणी । माधवी चैत्रिका भूमिस्तुलसी जाह्नवी तथा " इति मार्गशीर्षादि क्रमेण तत्तन्मासनाम ॥ " अश्वयुक्, आश्वयुजीति वा । अपभरणी, आपभरणीति वा । कृत्तिका । रोहिणी । मार्गशीर्षी ॥ आर्द्रिका । पुनर्वसू । तिष्या । आश्लेषा । माघी । पूर्वाफाल्गुनी । उत्तराफाल्गुनी । हस्ता । चित्रा । स्वाती । विशाखा । अनूराधा । ज्येष्ठा । मूलका । पूर्वाषाढा । उत्तराषाढा । श्रवणा, श्रावणीति वा । श्रविष्ठा । शतभिषजी, शातभिषगिति वा । पूर्वाप्रोष्ठपदी । उत्तराप्रोष्ठपदी । रेवती " इति तत्तन्नाक्षत्रनाम ॥ " लक्ष्मीः " इत्याद्यभिमतं तत्तद्व्यावहारिकनाम चेत्येवं नामचतुष्टयं विलिख्य " नामचतुष्टय-देवताभ्यो नमः " इति नाममन्त्रेण षोडशोपचारैरभ्यर्च्य ब्राह्मणान् यथानुकूलं सम्पूज्य " प्रजापतिः प्रीयताम् " इति पुण्याहं वाचयित्वा " कुलदेवतानाम्ना गणपतिभक्तायै स्वस्ति भवन्तो ब्रुवन्तु " इति ब्राह्मणान्प्रार्थयेत् ॥ " गणपतिभक्तायै स्वस्ति " इति ते प्रत्यूचुः ॥ एवमेव मासनाम्ना नाक्षत्रनाम्ना व्यावहारिकनाम्ना च अमुकायै स्वस्ति भवन्तो ब्रुवन्तु, इति पृथक्पृथक्

तत्तन्नाम निर्दिशन् प्रार्थयेत् ॥ तथैवामुकायै स्वस्ति, इति ब्राह्मणाः प्रतिब्रुयुः ॥ अथ कुमार्या दक्षिणे कर्णे त्वममुकासि, इति नामचतुष्टयं पृथक्पृथगुपांशु त्रिस्त्रिरुक्त्वा कृताञ्जलिरुपोत्थाय ब्राह्मणान्प्रवदेत्— "कुलदेवतानाम्ना गणपतिभक्तेयं भवतः सर्वान् ब्राह्मणानभिवादयते" इति ॥ 'आयुष्मती भवतु गणपतिभक्ता' इति ते प्रत्यूचुः ॥ एवमेव मासनाम्ना नाक्षत्रनाम्ना व्यावहारिकनाम्ना चामुकेयं भवतस्सर्वान् ब्राह्मणानभिवादयते, इति तत्तन्नामनिर्देशपूर्वकं पृथक् पृथग्वदेत् ॥ तथैवायुष्मती भवत्वमुका, इति ते प्रतिब्रूयुः ॥ इति नामकरणम् ॥ ॥ अथोपनिष्क्रमणम् ॥ मङ्गलघोषपुरस्सरं कुमार्या सह बहिरुपनिष्क्रम्य बाह्यानि चित्रियदैवतानि "चित्रियेभ्यो नमः" इति गन्धपुष्पाक्षतैरभ्यर्च्य "चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च। निक्षेपार्थमिमां दद्मि तेऽमुं रक्षन्तु सर्वदा ॥ अप्रमत्तां प्रमत्तां वा दिवा रात्रमथापि वा। रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः" इति सम्प्रार्थ्य ब्राह्मणान्सम्पूज्य "चित्रियाणि प्रीयन्ताम्" इति पुण्याहं वाचयित्वा कुमारीं गृहमानयेत् ॥ इत्युपनिष्क्रमणम् ॥

॥ अथान्नप्राशनम् ॥ सुवर्णादिपात्रे दधिमधुघृतजलैरोदनं समुदायुत्य हिरण्येन मातुरङ्कोपविष्टां कुमारीं षड्वारं तूष्णीं प्राशयित्वा मुखं प्रक्षाल्य हस्तं प्रक्षालयेत् ॥ इत्यन्नप्राशनम् ॥ ॥ अथ कर्णवेधनम् ॥ ब्राह्मणान् सम्पूज्य "प्रजापतिः प्रीयताम्" इति पुण्याहं वाचयित्वा लोहितसूच्या कण्टकेन वा कुमार्या दक्षिणवामकर्णौ क्रमेण तूष्णीं विध्वा लोहितसूत्रेण वा शणसूत्रेण वा कर्णौ प्रबध्य श्वोभूते विस्रंसयेत् ॥ इति कर्णवेधनम् ॥ ॥ अथ चौलम् ॥ उष्णासु शीता आनयतीत्यादि सर्वं तूष्णीं कुर्यादित्येके ॥ चौलकर्मसाङ्गतासिद्ध्यर्थं गां हिरण्यं वा दद्यात् इत्यन्ये ॥ तद्यथाचारं कृत्वाशिषो वाचयेत् ॥

॥ इति कन्यासंस्कारः ॥

# ॥ अथ विवाहविधिः ॥ ( हुतः )

॥ श्रीः ॥ अथ विधिवच्चीर्णब्रह्मचर्येण ब्रह्मचारिणा ऋष्यृणाऽपाकरणाऽनन्तरं क्रमप्राप्तदेवपित्र्णोऽपाकरणस्य अवश्य-कर्तव्यत्वात् तत्राऽधिकारपरिप्रापको विवाहविधिरभिधीयते ॥

( बो. गृ. प. सू. १. २ ) "अथ वै भवति—'सर्वेण वै यज्ञेन देवास्सुवर्गं लोकमायन्' इति स एष हुतादिरासहस्रसंवत्स-रान्तस्सर्वो यज्ञो यो हि यद्वेद स्वाध्यायजपकर्ममानसेषु तेनेवास्य तद्गुणेनेष्टं भवतीति ॥ तदेतन्मन्त्रब्राह्मणं व्याख्यातम् ॥ अथ वै भवति— 'देवा वै पुष्टिं नाविन्दन्तां मिथुनेऽपश्यन्' इत्येतद्विज्ञाय दारानाहृत्य सर्वयज्ञभाजो भवन्तीति व्याख्यातो यज्ञः ॥ 'प्रजया पितृभ्यः' इति ॥ अथास्य प्रजा भवन्ति — 'यानुत्पादयते यानुपनयते यानध्यापयते यान्याजयते' इति सर्वाऽस्यैषा प्रजा भवतीति प्रजा व्याख्याता ॥ 'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इत्याहिताग्निरित्येवैष उक्तो भवति ॥ अथाप्युदाहरन्ति— 'पुदिति नरकस्याख्या दुःखञ्च नरकं विदुः । पुदि त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥ न मांसपेशलः पुत्रो नाऽविद्वान्नाप्यकर्मकृत् ॥ स्वयं न याति यस्स्वर्गं किं पुनः पितरन्तरेत्' इति ॥ विज्ञायते— 'अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः' इति ॥ एतस्माद्गार्हपत्य उक्तो भवति ॥ गार्हपत्यादाहवनीयस्तस्मादग्न्याधेयेनाऽनृण आहवनीयादतिप्रणीतस्तस्मात् पशुबन्धयाज्यनृणश्शालामुखीयादाग्नीध्रीय आग्नीध्रीयादपरे धिष्ण्याः ॥ 'विभूरसि प्रवाहण' इत्येते विहरणोपस्थानीयाः ॥ 'एषाऽस्य दैवी प्रजा भवति' इति तस्मात्सोमया-ज्यनृणः ॥ तस्माद्गृहस्थस्य सर्व एवैते यज्ञास्तस्माद्गृहाश्श्रेय इति ॥ अथाऽस्य श्रेयोऽवातिरापूर्यमाणपक्ष इति पूर्वपक्ष एवैष

उक्तो भवति सोमेनाऽऽपूर्यमाणेन व्याख्यातः ॥ अहोरात्राणि वा वृद्धिमन्ति ह्रासवन्ति च भवन्ति। यत्राऽह्नां वृद्धिर्भवति स एवैष उक्तो भवतीति ॥ अथ हैकेषां विज्ञायतेऽह्नः पञ्चसु कालेषु कुर्वीतेत्युदगयन इत्येवैतदुक्तं भवति ॥ संवत्सरो वै देवानामहोरात्रं तस्यैतदुदगयनमहः दक्षिणायनं रात्रिस्तस्याऽह्नः पञ्चसु कालेषु कुर्वीतेति तस्य प्रातस्सङ्गवौ शिशिरवसन्तौ मध्यन्दिनं ग्रीष्मोऽपराह्णसायाह्ने वर्षाशरदौ प्रातस्सङ्गवे सायमिति विवाहं न कुर्वन्ति। काममितराणि ॥ अथाऽन्यत्राऽपि कुर्वन्भवति पुण्ये नक्षत्र इति ॥ 'देवनक्षत्राणि वा अन्यानि। यमनक्षत्राण्यन्यानि। यानि देवनक्षत्राणि। तेषु कुर्वीत यत्कारी स्यात्' इत्येवैतदुक्तं भवति" ॥

(बो. गृ. प. सू. १. ६) "यथा सुभूमिजो वृक्षः सुमूलः सुप्रतिष्ठितः। बहुशाखः सुपुष्पश्च फलवानुपयुज्यते॥ देवदानवगन्धर्वैर्ऋषिभिः पितृभिस्तथा। पक्षिभिः षट्पदैश्चापि मशकैश्च पिपीलकैः॥ एवं हि पाकयज्ञेषु सर्वमेतत्प्रतिष्ठितम्। हुतः सुभूमिर्विज्ञेया मूलं प्रहुत उच्यते॥ आहुतोऽत्र प्रतिष्ठानं यज्ञवृक्षो महोच्छ्रयः। बह्वयस्तस्य स्मृताः शाखाः सुपुष्पाः सुफलोपगाः॥ मन्त्रब्राह्मणतत्वज्ञैः सुदृष्टास्ता उपासकैः। एवं हि यज्ञवृक्षस्य योऽभिज्ञः श्रोत्रियः स्मृतः॥ दारस्याहरणं कुर्यात्कर्मेत्येवं विपश्चितः। सुभूमिं च सुमूलं च सुप्रतिष्ठानमेव च॥ वृक्षं पुष्पफलोपेतं बहुशाखं स पश्यति। ज्ञानं सुभूमिराचारो मूलं श्रद्धा प्रतिष्ठितिः॥ क्षमाऽहिंसा दमः शाखाः सत्यं पुष्पफलोपगम्। ज्ञानोपभोग्यं बुद्धानां गृहिणां यज्ञपादपम् ॥ अकामहतया बुध्या त्यक्ताहंकारलोभया। निश्चयाध्यवसायाभ्यां चक्षुर्भ्यां स तु पश्यति॥ तस्यैको वज्रसङ्काशः क्रोधः परशुरुच्यते। तेनैवमाच्छिनन्मोहात्त्याज्यः क्रोधो गृहेष्वतः ॥ गृहा मूलं हि यज्ञानां गृहा ह्यानृण्यकारणम्। गृहा ह्याश्रमपूजार्थं स्थित्यर्थं च गृहाः स्मृताः॥ पाकयज्ञा हविर्यज्ञा सोमयज्ञाश्च ते त्रयः। स्थिता मूलेषु वृक्षेषु प्रमादी तेषु सीदति" ॥

( बो. गृ. शे. सू. २. ३ ) " आव्रतः स्त्रीभ्यः प्रतीयेरान्निन्वकाभिः प्रसृता वरैः प्रसज्यन्ते ते वराः प्रतिनन्दिताः ॥ 'यां कामयेत दुहितरं प्रिया स्यादिति। तां निष्ट्यायां दद्यात्। प्रियैव भवति। नेव तु पुनरागच्छति ' इति ब्राह्मणापेक्षो विधिः। इन्वकाशब्दो मृगशीर्षे निष्ट्याशब्दः स्वाताविति। सुप्तां रुदतीं निष्क्रान्तां वरणे परिवर्जयेत्। दत्तां गुप्तां द्योतामृषभां विनतां शरभां विकटां मुण्डां मण्डूषिकां साङ्कारिकां रातां पालीं मित्रां स्वानुजां वर्षकारीं च वर्जयेत्। नक्षत्रनामा नदीनामा वृक्षनामाः पर्वतनामाः प्रेष्यनामाः पक्षिनामाः पिशाचनामाश्च गर्हिताः सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत्। शक्तिविषये द्रव्याणि प्रतिच्छन्नान्युपनिधाय ब्रूयुः 'उपस्पृश ' इति नानाबीजानि संसृष्टानि, वेद्याः पांसून्, क्षेत्राल्लोष्टं, शकृत्, श्मशानलोष्टमिति पूर्वेषामुपस्पर्शने यथालिङ्गमृद्धिरुत्तमं परिचक्षते ॥ बन्धुशीललक्षणसंपन्नामरोगामुपयच्छेत ॥ बन्धुशीललक्षणसम्पन्नः श्रुतवानरोग इति वरसम्पत्। यस्यां मनश्चक्षुषोः निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके ॥ अथ यद्यसम्भवेप्सुः स्यात्तां परेषां स्थूलाढारिकाजीवचूर्णानि कारयित्वा सुप्तायां सम्बाध उपवपेत्– 'अवज्यामिव धन्वनो हृदो मन्युं तनोमि ते। इन्द्रापास्य पलिगमन्येभ्यः पुरुषेभ्योऽन्यत्र मत् ' इति। सिध्यर्थे बभ्रुमूत्रेण प्रक्षाळयीत " ॥

तत्र विशिष्टां स्त्रियमुद्वहेदिति विधत्ते मनुः— " गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् " इति ॥ याज्ञवल्क्योऽपि — " अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्। अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् " इति ॥ लक्षण्यां— " अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् " इत्यादि मनूक्तलक्षणसम्पन्नाम्। अनन्यपूर्विकाम्— दानेनोपभोगेन वा पुरुषान्तरागृहीतामित्यर्थः ॥ अनेन पुनर्भूर्व्यावर्त्यते ॥ तथा च पराशरीये बोधायनः— " वाग्दत्ता मनोदत्ताग्निपरिगता सप्तमं पदं नीता भुक्ता

गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न धर्मं विन्देत् " इति ॥ कान्तां— सौशील्यादिभिर्मनश्चक्षुषोरानन्दकारिणीम् । अत एवापस्तम्बः— यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः इति ॥ असपिण्डाम्— निवृत्तसापिण्ड्याम् । सापिण्ड्यमग्रे वक्ष्यते ॥ यवीयसीम्— वयसा वपुषा च न्यूनाम् । तथा च विष्णुपुराणम्— ' वर्षैरेकगुणां भार्यामुद्वहेत् त्रिगुणः स्वयम् ' इति ॥ अरोगिणीम्— अचिकित्स्यरोगरहिताम् । भ्रातृमतीम्— ज्येष्ठः कनिष्ठो वा भ्राता विद्यते यस्यास्ताम् । असमानार्षगोत्रजाम् — असमानप्रवरजामसमानगोत्रजां च । गोत्रप्रवरनिर्णयश्च वक्ष्यते । एतादृशीं कन्यामुद्वहेदित्यर्थः ॥

अथ सापिण्ड्यनिर्णयः ॥ तत्रेदं धर्मसूत्रम् (बो. ध. सू. १. ११) " सपिण्डता त्वासप्तमात्सपिण्डेषु " इति आत्मानमधिकृत्य प्रागूर्ध्वं च सप्तपुरुषेषु सापिण्ड्यमनुवर्तत इत्यर्थः ॥ मत्स्यपुराणे च— " लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् " इति ॥ याज्ञवल्क्यस्तु विशेषमाह— " पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा " इति ॥ मातृपक्षे पञ्चमात्पितृपक्षे सप्तमात्पुरुषादूर्ध्वं सापिण्ड्यं निवर्तत इति तदर्थः ॥ तथा चैतदुक्तं भवति— कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां वरवध्वोः पिता यदा सप्तमो भवेन्माता चेत्पञ्चमी वा स्यात्तदा तयोः सापिण्ड्यनिवृत्तेर्विवाहो न दुष्यतीति । एतदर्थप्रतिपादकः श्लोकोऽपि संगृहीतः संस्काररत्नमालायाम्— " वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः । पञ्चमी चेत्तयोर्माता सापिण्ड्यं विनिवर्तते " इति ॥ अयं मुख्यः कल्पः ॥ अथात्र केचित्— " आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव " इति ऋङ्मन्त्रार्थानुरोधेन " तस्माद्वा समानादेव पुरुषादत्ता चाद्यश्च जायते । उत तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै " इति वाजसनेयश्रुत्यर्थानुरोधेन च सापिण्ड्यं सङ्कोच्यापि तत्र तत्र विवाहमाचरन्युः ॥ यथा च सं० मालायां पैठिनसिः—" त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः " इति ॥ वैद्यनाथीये

नारदः—"तृतीयां मातृपक्षाच्च पञ्चमीं पितृतस्तथा। विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम्॥ चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमीमपि। षष्ठीं तु नोद्वहेत्कन्यां पञ्चमो न तु पञ्चमीम्॥ तृतीयो वरयेत्कन्यां चतुर्थीं पञ्चमीं तथा" इति॥ षट्त्रिंशन्मते—"तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा। विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः" इति॥ चतुर्विंशतिमतेऽपि—"तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि। विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः" इति॥ स्मृतिसारे च—"चतुर्थः पञ्चमीं कन्यां पञ्चमीं षष्ठ उद्वहेत्। चतुर्थीमुद्वहेत्कन्यां पञ्चमो न तु पञ्चमीम्" इति॥ 'पञ्चमो न तु पञ्चमीम्' इति निषेधस्य व्यवस्थामाह सं० मालायां शाकलः—"भवेतां पूर्वजातपुत्रौ तयोरपि च सन्ततिः॥ पञ्चमः पञ्चमीं कन्यां न तत्र वरयेद्द्विजः॥ कन्ये द्वे पूर्वजात्स्यातां सन्ततिः स्यात्तयोरपि। पञ्चमः पञ्चमीं तत्र वरः कन्यां समुद्वहेत्॥ कन्यापुत्रौ तु सम्भूतौ पूर्वजातसन्ततिस्तयोः। यदि स्याद्वरयेत्तत्र पञ्चमः पञ्चमीमपि" इति॥ वैद्यनाथीयेऽपि—"पञ्चमः पञ्चमीं कन्यां नोद्वहेदिति यद्वचः। पितृपक्षे निषेधोऽयं मातृपक्षे न तद्भवेत्" इति॥ अथ मातुलसुता पितृष्वसृसुता च देशविशेषेषु विवाह्या भवतीत्युक्तं वैद्यनाथीये—"मातुलस्य सुतां केचित्पितृष्वसृसुतामपि। विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम्" इति॥ यत्तु—"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत्" इति शातातपवचनेन, "पितृमातृष्वसृदुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यस्ता वर्जयेदिति विज्ञायते" इति पैठीनसिवचनेन, "पितृष्वसेयीं भगिनीं स्वस्रियां मातुरेव च। मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत्॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान्" इति मनुवचनेन, मातुलसुतापितृष्वसृसुतयोर्वर्ज्यता स्मर्यते तच्च—"ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्। भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया॥ गान्धर्वादिविवाहेषु पितृगोत्रेण

धर्मवत्" इति मार्कण्डेयपुराणवचनेन, गान्धर्वादिविधिनोढानां स्त्रीणां पितृगोत्रसापिण्ड्ययोरनिवृत्तेस्तादृशमातुर्भ्रातुः सुताया-स्तादृशपितृष्वसुः सुताया एव भगिनीत्वान्वयाद्विवाहो निषिध्यते न त्वितरस्याः इति पराशरीयमाधवसिद्धान्तेन, "आयाहीन्द्र" इति तदनुग्राहकश्रुत्या च परास्यते ॥ किञ्च "अब्रह्मचारिदाराद्यैः सार्धं भोजनकर्म च ॥ मातुलादिसुतायाश्च विवाहः शिष्टसम्मतः ॥ इत्येते दाक्षिणात्यानामविगीता उदाहृताः" इति वैद्यनाथीयस्मृतिरत्नवचनेन, "पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः । यानि दक्षिणतस्तानि व्याख्यास्यामः । यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनम्" इति धर्मसूत्रवचनेन ( बो. ध. सू. १. २ ) चायं मातुलपितृष्वसृसुतयोर्विवाहो दाक्षिणात्यानामेव शिष्टाचारपरिगृहीतत्वान्न निषिध्यते । उदीच्यानां तु शिष्टैरपरिगृहितत्वान्निषिद्ध एवेत्यवगन्तव्यम् ॥ मातृष्वसृसुताविवाहस्तु सर्वदेशेष्वपि वर्जनीयः ॥ "मातुर्भगिन्या या पुत्री स्वसेति परिगीयते । न विवाह्या सर्वदेशे कृत्वा नरकमश्नुते" इति स्मृतिसारे गोभिलोक्तेः शिष्टैरनाचरितत्वाच्च ॥ शिष्टाचारस्य प्रामाण्यमाह पराशरीये देवलः—"यस्मिन् देशे य आचारो न्यायदृष्टः सुकल्पितः । स तस्मिन्नेव कर्तव्यो न तु देशान्तरे स्मृतः" इति ॥ आपस्तम्बोऽपि—"येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारैर्नेतरे पुनः" इति ॥ ननु शिष्टाचारस्य प्रामाण्ये स्वदुहितृविवाहोऽपि प्रसज्येत प्रजापतिना तदाचरणात् तथा च श्रुतिः— 'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्' इति चेन्नैवम्— "न देवचरितं चरेत्" इति न्यायात्, "अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्" इति बोधायनस्मृतेश्च तत्प्रतिषेधात् ॥ तथा चैतैर्वचनैः सापिण्ड्यसङ्कोचमाश्रित्य निर्दिष्टाः कन्यका अप्यनुकल्पेन यथाचारं विवाह्या भवेयुरित्यवगम्यते ॥ अथोक्तास्वपि मातृत्वस्वसृत्वादिव्यपदेशभाजः काश्चन नियमेन वर्जनीयाः स्मर्यन्ते यथा हि निर्णयसिन्धौ बोधायनः- "पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत् । मातुः सपत्न्या भगिनीं तत्सुतां च

विवर्जयेत् " इति ॥ वैद्यनाथीयेऽपि " भ्रातुस्तु पत्नीभगिनीं तत्सुतां च विवर्जयेत् ॥ पितुस्तु पत्नीभगिनीं तत्सुतां च विवर्जयेत् " इति ॥ " वाङ्मात्रेण स्वसारं च मातरं च तथैव च । असपिण्डां मातरं च वर्जयेन्मातृवत्सदा " इति तत्रैव वसिष्ठः ॥ धर्मप्रवृत्तौ च— " तृतीयां वा चतुर्थीं वा पञ्चमीं पितृमातृतः । दक्षिणे तूद्वहेत्कन्यां स्वसारं मातरं विना " इति ॥ " पुत्रिकामुद्वहेद्विप्रः केचिदेवं वदन्ति हि । भगिनीं मातरं नैव यदि चेत्पतितो भवेत् " इति च ॥ सं० मालायाम्— " येन केनापि सम्प्राप्तां स्वसारं मातरं त्यजेत् । अज्ञानादुद्वहेत्तां वै स चण्डालो न संशयः " इति ॥

अथ सङ्क्षेपतो गोत्रप्रवरनिर्णयः ॥ तत्र बोधायनः ( प्रवरप्रश्ने ) — " विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गोतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः ॥ तेषां सप्तर्षीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते " इति ॥ ( अत्रापत्यपदं केवलपुत्रपरं न भवति किन्तु पौत्रादिपरमपि ) गोत्राणामवान्तरभेदास्त्वसङ्ख्याकाः सन्ति तेषां गणास्त्वेकोनपञ्चाशत् । तदाह बोधायनः— " गोत्राणां च सहस्राणि प्रयुतान्यर्बुदानि च । ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनात् " इति ॥ गोत्रप्रवर्तकऋषीणां व्यावर्तका ऋषिगणाः प्रवरा इत्यभिधीयन्ते । समानगोत्रत्वं समानप्रवरत्वं च पृथक्पृथक् विवाहप्रतिबन्धकम् । तत्र प्रवरसाम्यं द्विविधम्— एकप्रवरसाम्यं द्वित्रिप्रवरसाम्यं चेति । भृग्वङ्गिरोगणेतरेषु एकप्रवरसाम्यमपि विवाहप्रतिबन्धकम् । भृग्वङ्गिरोगणेषु तु त्रिप्रवरेषु द्विप्रवरसाम्यं पञ्चप्रवरेषु त्रिप्रवरसाम्यं च विवाहप्रतिबन्धकम् । तथा च बोधायनः— " द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणामसमानप्रवरैर्विवाहः ॥ एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात् ॥ पञ्चानां त्रिषुसामान्यादविवाहस्त्रिषु द्वयोः । भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् " इति ॥

अथ बोधायनोक्ता गोत्रप्रवराः ॥ तत्रादौ सप्त भृगुगणाः— वत्साः विदाः ( एतौ जामदग्न्यौ ), आर्ष्टिषेणाः यस्काः मित्रयुवः वैन्याः शुनकाः एते पञ्च केवलभृगवः, एवं सप्त ॥ तत्र वत्सानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येति पंचार्षेयः प्रवरो भवति ॥ १ ॥ विदानां भार्गवच्यावनाप्नवानौर्ववैदेति पंचार्षेयः प्रवरः ॥ २ ॥ एवं आर्ष्टिषेणानां भार्गवच्यावनार्ष्टिषेणानूपेति ॥ ३॥ एतेषां त्रयाणां परस्परं न विवाहः त्रिप्रवरसाम्यात् ॥ यस्कानां भार्गववैतहव्यसावेतसेति त्र्यार्षेयः प्रवरः ॥ ४ ॥ एवं मित्रयुवानां भार्गववाध्र्यश्वदैवोदासेति ॥ ५ ॥ वैन्यानां भार्गववैन्यपार्थेति ॥ ६ ॥ शुनकानां शौनकेत्येकार्षेयः प्रवरो भवति ॥ ७ ॥ यस्कादीनां चतुर्णां स्वं स्वं गणं हित्वा परस्परं पूर्वैर्जामदग्न्यवत्सादिभिश्च सह विवाहो भवत्येव द्वित्रिप्रवरसाम्याभावात् ॥

अथाङ्गिरोगणाः–ते त्रिविधाः गौतमाः भारद्वाजाः केवलाश्चेति ॥ तेषु गौतमाङ्गिरसः सप्त—आयास्याः शारद्वताः कौमण्डाः दीर्घतमसः औशनसाः कारेणुपालयः वामदेवाश्चेति ॥ तत्रायास्यानां आङ्गिरसायास्यगौतमेति त्र्यार्षेयः प्रवरो भवति ॥ १ ॥ शारद्वतानां आङ्गिरसगौतमशारद्वतेति त्र्यार्षेयः ॥ २ ॥ कौमण्डानां आङ्गिरसौचथ्यकाक्षीवतगौतमकौमण्डेति पञ्चार्षेयः ॥ ३ ॥ दीर्घतमसां आङ्गिरसौचथ्यकाक्षीवतगौतमदीर्घतमसेति पञ्चार्षेयः ॥ ४ ॥ औशनसानां आङ्गिरसगौतमौशनसेति त्र्यार्षेयः ॥ ५ ॥ कारेणुपालानां आङ्गिरसगौतमकारेणुपालेति त्र्यार्षेयः ॥ ६ ॥ वामदेवानां आङ्गिरसगौतमवामदेव्येति त्र्यार्षेयः प्रवरः ॥ ७ ॥ एतेषां सप्तानां गौतमानां परस्परं न विवाहः द्वित्रिप्रवरसाम्यात् ॥ अथ भारद्वाजाङ्गिरसस्त्रयः—भरद्वाजाः रौक्षायणाः गर्गाश्चेति । तत्र भरद्वाजानां आङ्गिरसबार्हस्पत्यभारद्वाजेति त्र्यार्षेयः प्रवरः ॥ १ ॥ रौक्षायणानां आङ्गिरसबार्हस्पत्यभारद्वाज—वान्दनमातवचसेति पञ्चार्षेयः ॥ २ ॥ गर्गाणां आङ्गिरसबार्हस्पत्यभारद्वाजशैन्यगार्ग्येति पञ्चार्षेयः, आङ्गिरसशैन्यगार्ग्येति त्र्यार्षेयो वा प्रवरो भवति ॥ ३ ॥ त्रयाणां भारद्वाजानां परस्परमविवाहः ॥ अथ केवलाङ्गिरसः सप्त—विष्णुवृद्धाः कण्वाः हरिताः

संकृतयः रथीतराः मुद्गलाः कपयश्चेति ॥ तत्र विष्णुवृद्धानां आङ्गिरसपौरुकुत्स्यत्रासदस्येति त्र्यार्षेयः प्रवरो भवति ॥ १ ॥ एवं कण्वानां आङ्गिरसाजमीढकाण्वेति ॥ २ ॥ हरितानां आङ्गिरसाम्बरीषयौवनाश्वेति ॥ ३ ॥ सङ्कृतीनां आङ्गिरससाङ्कृत्यगौरिवीतेति ॥ ४ ॥ रथीतराणां आङ्गिरसवैरूपराथीतरेति, आङ्गिरसवैरूपपार्षदश्वेति वा ॥ ५ ॥ मुद्गलानां आङ्गिरसभार्म्यश्वमौद्गल्येति ॥ ६ ॥ कपीनां आङ्गिरसामहय्यौरुक्षयेति ॥ ७ ॥ एतेषां सप्तानां केवलाङ्गिरसां स्वस्वगणं हित्वा परस्परं पूर्वैश्च सर्वैर्विवाहो भवति द्वित्रिप्रवरसाम्याभावात् ॥ एवमाङ्गिरसगणाः सप्तदश भवन्ति ॥

अथात्रयश्चत्वारः—अत्रयः वाद्भुतकाः गविष्ठिराः मुद्गलाश्चेति ॥ अत्रीणां आत्रेयार्चनानसश्यावाश्वेति त्र्यार्षेयः प्रवरः ॥ १ ॥ वाद्भुतकानां आत्रेयार्चनानसवाद्भुतकेति ॥ २ ॥ गविष्ठिराणां आत्रेयार्चनानसगाविष्ठिरेति ॥ ३ ॥ मुद्गलानां आत्रेयार्चनानसपौर्वातिथेति ॥ ४ ॥ एषां चतुर्णां परस्परमविवाहः ॥

अथ विश्वामित्रा दश—कुशिकाः ( विश्वामित्राः ) लोहिताः कामकायनाः रौक्षकाः कताः धनञ्जयाः अजाः अघमर्षणाः इन्द्रकौशिकाः पूरणाश्चेति ॥ तत्र विश्वामित्राणां वैश्वामित्रदैवरातऔदलेति त्र्यार्षेयः प्रवरो भवति ॥ १ ॥ एवं लोहितानां वैश्वामित्राष्टकलौहितेति ॥ २ ॥ कामकायनानां वैश्वामित्रदैवश्रवसदैवतरसेति ॥ ३ ॥ रौक्षकाणां वैश्वामित्ररौक्षकरैणवेति ॥ ४ ॥ कतानां वैश्वामित्रकात्यात्कीलेति ॥ ५ ॥ धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति ॥ ६ ॥ अजानां वैश्वामित्रमाधुच्छन्दसाजेति ॥ ७ ॥ अघमर्षणकौशिकानां वैश्वामित्राघमर्षणकौशिकेति ॥ ८ ॥ इन्द्रकौशिकानां वैश्वामित्रेन्द्रकौशिकेति ॥ ९ ॥ पूरणानां वैश्वामित्रपूरणेति द्व्यार्षेयः प्रवरो भवति ॥ १० ॥ एतेषां दशानां परस्परमविवाहः ॥

अथ काश्यपास्त्रयः—कश्यपाः रेभाः शण्डिलाश्चेति। तत्र कश्यपानां काश्यपावत्सारनैध्रुवेति त्र्यार्षेयः ॥ १ ॥ रेभाणां काश्यपावत्साररैभेति ॥ २ ॥ शण्डिलानां काश्यपावत्सारशाण्डिलेति, काश्यपावत्सारदैवलेति, काश्यपावत्सारासितेति, शाण्डिलासितदैवलेति वा त्र्यार्षेयो भवति॥ ३ ॥ एतेषां परस्परं न विवाहः ॥ अथ लौगाक्षयस्ते चाहर्वसिष्ठाः नक्तं कश्यपाः तेषां काश्यपावत्सारवासिष्ठेति काश्यपावत्सारासितेति वा त्र्यार्षेयः प्रवरो भवति॥ एतेषां सर्वैः काश्यपैर्वासिष्ठैश्चाविवाहः ॥

अथ वासिष्ठाश्चत्वारः— वसिष्ठाः कुण्डिनाः उपमन्यवः पराशराश्चेति ॥ तत्र वसिष्ठानां वासिष्ठेत्येकार्षेयः प्रवरो भवति ॥ १ ॥ कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति त्र्यार्षेयः ॥ २ ॥ उपमन्यूनां वासिष्ठेन्द्रप्रमदाभरद्वसवेति त्र्यार्षेयः ॥ ३ ॥ पराशराणां वासिष्ठशाक्त्यपाराशर्येति त्र्यार्षेयः प्रवरो भवति ॥ ४ ॥ एतेषां चतुर्णां परस्परमविवाहः ॥

अथागस्त्याश्चत्वारः— अगस्तयः साम्भवाहाः सोमवाहाः यज्ञवाहाश्चेति ॥ तत्र अगस्तीनां आगस्त्यदार्ढच्युतैध्मवाहेति त्र्यार्षेयः प्रवरः ॥ १ ॥ साम्भवाहानां आगस्त्यदार्ढच्युतसाम्भवाहेति ॥ २ ॥ सोमवाहानां आगस्त्यदार्ढच्युतसोमवाहेति ॥ ३ ॥ यज्ञवाहानां आगस्त्यदार्ढच्युतयज्ञवाहेति त्र्यार्षेयः प्रवरो भवति ॥ ४ ॥ एतेषां चतुर्णां परस्परमविवाहः ॥

एवं लौगाक्षिगणेन सह पञ्चाशत्प्रवरा आचार्यबोधायनेन प्रवराध्याये पठिताः । तेष्वसमानार्षगोत्रजयोः स्त्रीपुंसोरेव विवाहः कर्तव्यः ॥ अन्यथा प्रायश्चित्तादिस्मरणात् ॥ तथा च बोधायनः—"सगोत्रां चेदमत्योपयच्छेच्चान्द्रायणं चरेत् । व्रते परिनिष्ठिते ब्राह्मणीं न त्यजेन्मातृवद्भगिनीवदेनां बिभृयात् ॥ सगोत्रायाममत्योत्पादितो गर्भो न दुष्यति स च काश्यपगोत्रो भवतीति विज्ञायते॥ ज्ञानतश्चेदुत्पादितः स चाण्डालो भवति" इति॥ "आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः । सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः" इति यमस्मृतिश्च ॥

अथ दत्तकस्य विवाहाद्युपयोगिगोत्रादिनिर्णयः—परगोत्रोत्पन्नस्य दत्तकस्य जनकप्रतिग्रहीत्रोरुभयोरपि पुत्रत्वाभिसन्धाने द्व्यामुष्यायणत्वेनोभयगोत्रभागित्वम् । यश्च प्रतिग्रहीत्रा जातकर्मादिभिश्चूडादिभिर्वा संस्कृतः स प्रतिग्रहीतृगोत्रको भवति । एतदभिप्रेत्यैव "गोत्ररिक्थे जनयितुर्न भवेद्दत्त्रिमः सुतः" इति शास्त्रमपिप्रवृत्तम् ॥ एतदन्यस्तु प्रतिग्रहीत्रोपनयनमात्रसंस्कृतस्तदुत्तरं प्रतिगृहीतो वा देवरातवद्द्विगोत्र एवेति व्यवस्था निबन्धकारैरुक्ता ॥ तथाप्येषा व्यवस्था अभिवादनश्राद्धादिगतगोत्रनिर्देशार्था ॥ विवाहे तु दत्तकमात्रेण बीजप्रतिग्रहीत्रोरुभयोरपि पित्रोर्गोत्रप्रवरसम्बाधिनी कन्या वर्जनीया, प्रवरमञ्जर्यादिनिबन्धेषु तन्निषेधोक्तेरिति कौस्तुभे ॥ शुद्धदत्तकस्य पुत्रपौत्रादीनां तु "होमपूर्वं तु यो दत्तः स एव जनकस्य तु । गोत्रे न विवहेत्कन्यां पुत्रादौ न निषेधकृत्" इति वैद्यनाथीयवचनेन दातृगोत्रोद्भवापि कन्या परिणेया भवति ॥ तथापि दातुः सपिण्डसोदकसम्बन्धिनी कन्या वर्जनीयैव—"दातृगोत्रसमुद्भूता ग्रहीतृकुलसंभवा । उद्वहेद्दशमादूर्ध्वम्" इति तत्रैवोक्तेः ॥ ॥ दत्तकसापिण्ड्यन्तु जनकगोत्रेणोपनयने कृते जनकपितृकुले साप्तपूरुषं जनकमातृकुले पाञ्चपूरुषं सापिण्ड्यम् ॥ प्रतिग्रहीतृमातृपितृकुले निर्वाप्य पिण्डलक्षणं त्रिपूरुषं सापिण्ड्यम् ॥ ग्रहीतृगोत्रेणोपनयनमात्रे कृते उभयत्र पितृकुले पाञ्चपूरुषं मातृकुले त्रिपूरुषम् ॥ जातकर्माद्युपनयनान्तसंस्कारे ग्रहीत्रा कृते ग्रहीतृकुले पितृतः साप्तपूरुषं मातृतः पाञ्चपूरुषम् ॥ अतो न्यूनं जनककुले कल्प्यम् ॥ तथा च गौतमः—"ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्" इति ॥ पैठीनसिस्तु—"त्रीन्मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेदिति" इति ॥

अथ स्त्रीपुंसोर्विवाहकालः ॥ सं० रत्नमालायां नारदः—"युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् । एतत्पुंसामयुग्मेऽब्दे व्यत्यये नाशकृत्तयोः" इति ॥ पराशरीये मरीचिः—"जन्मतो गर्भाधानाद्वात्पञ्चमाब्दात् परं शुभम् । कुमारीवरणं दानं

मेखलाबन्धनं तथा " इति ॥ बोधायनोऽपि ( बो. ध. सू. ४. १ ) " दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे। अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् " इति ॥ वसिष्ठोऽपि—" प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता। ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति " इति ॥ वयोविशेषेण दातुः फलविशेषमाह तत्रैव मरीचिः—" गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददन्। कन्यां ददन्ब्रह्मलोकं रौरवन्तु रजस्वलाम् " इति ॥ एतीति शेषः ॥ गौर्यादिशब्दार्थमाह संवर्तः—" अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत्। दशमे कन्यका प्रोक्ता अत ऊर्ध्वं रजस्वला" इति ॥ कन्यकालक्षणं वायुपुराणेऽन्यदेवोक्तम् — " यावन्न लज्जयाङ्गानि कन्या पुरुषसन्निधौ। योन्यादीन्यवगूहेत तावद्भवति कन्यका " इति ॥ पुंसस्तु विशेष उक्तः प्र० पारिजाते—" प्राग्द्वादशाब्दात् पुंसस्तु दशाब्दादिति चापरे। विवाहं न प्रशंसन्ति पुत्रायुर्वृद्धिमिच्छवः " " पूर्वोक्तलक्षणोपेतां रोगदोषविवर्जिताम्। अष्टाब्दां विवहेत्तान्तु त्र्यष्टाब्दो वा वरः शुभाम् " इत्यादि ॥

अथ कन्यालक्षणम् ॥ तत्राह सं० मालायां बोधायनः— " वर्जयेत्सर्वथा कन्या अशुभा लक्षणैश्च याः। भर्तुरायुर्हरन्त्येता आलस्यादपरीक्षिताः " इति ॥ आपस्तम्बः— " बन्धुशीललक्षणसम्पन्नामरोगामुपयच्छेत " इति ॥ शौनकश्च— " लब्धाभ्यनुज्ञो गुरुतो द्विजो लक्षणसंयुताम् । बुद्धिशीलगुणोपेतां कन्यकामन्यगोत्रजाम् ॥ आत्मनोऽवरवर्षां च विवहेद्विधिपूर्वकम् " इति ॥ मनुरपि— " अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीं स्त्रियमुद्वहेत् " इति ॥ वर्ज्याश्चाह स एव— " नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम् ॥ नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्। न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् " इति ॥ अन्यत्रापि— " अनुकूलां विमलाङ्गीं कुशलां कुलजां सुशीलसम्पन्नाम्। पञ्चलकारां भार्यां पुरुषः पुण्याधिको लभते " इति ॥

अथ वरलक्षणम् ॥ सं० मालायां बोधायनः — "बन्धुशीललक्षणसम्पन्नः श्रुतवानरोगः" इति ॥ पराशरमाधवीये गौतमः — "विद्याचारित्र्यबन्धुलक्षणशीलसम्पन्नाय दद्यात्" इति ॥ यमोऽपि— "कुलं च शीलं च वपुर्वयश्च विद्यां च वित्तं च सनाथतां च । एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्" इति ॥ याज्ञवल्क्यः— "एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः । यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः" इति ॥ नारदश्च— "अपत्यार्थं स्त्रियः सृष्टाः स्त्रीः क्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति" इति ॥ पुंस्त्वपरीक्षोपायमप्याह स एव— "यस्याप्सु प्लवते वीर्यं ह्लादि मूत्रं च फेनिलम् । पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः" इति ॥

अथ परिवेत्रादिनिर्णयः ॥ तत्र मनुः— "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः" इति ॥ परिवेदने परिवेत्रादीनां दोषमाह स एव— "परिवित्तिः परिवेत्ता यया च परिविन्दति । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः" इति ॥ सं० मालायां गर्गोऽपि— "सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसङ्ग्रहम् । आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत्" इति ॥ अन्यत्र— "ज्येष्ठे तिष्ठत्यनूढे वा अग्निहोत्राधिकारिणि । अनुज्ञया विनाधानं विवाहं नैव कारयेत्" इति ॥ परिवेदने प्रायश्चित्तमाह यमः— "कृच्छ्रौ द्वयोः परिवेद्ये कन्यायाः कृच्छ्र एव च । अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत्" इति ॥ पितृव्यपुत्रादीनां परिवेदने न दोषः इत्याह सं० मालायां शातातपः— "पितृव्यपुत्रसापत्नपरनारीसुतेषु च । ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातॄणां तु कनीयसाम् । दाराग्निहोत्रसंयोगे न दोषः परिवेदने" इति ॥ गौतमोऽपि— "भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे । दाराऽग्निहोत्रसंयोगे न दोषः परिवेदने" ॥ सोदरभ्रातृविषयेऽपि क्वचिन्न दोष इत्याह तत्रैव कात्यायनः— "देशान्तरस्थान्क्लीबांश्च

शूद्रतुल्यान्सहोदरान् । वेश्यासक्तान्कुवृषणान् पतितानतिरोगिणः ॥ जडमूकान्धबधिरकुब्जवामनखेलकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥ धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा । कुहकोन्मत्तरोगांश्च परिविन्दन्न दुष्यति " इति ॥ देशान्तरगतस्य प्रतीक्षणमाह वसिष्ठः—" द्वादशाष्टौ वा वर्षाणि ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति " इति ॥ एवमेव भगिन्योर्विवाहव्यतिक्रमेऽप्यग्रेदिधिषूत्वादिदोषोऽवगन्तव्यः ॥ " ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा । या साग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता " इत्युक्त्वा तत्पत्योः कृच्छ्रातिकृच्छ्रादिप्रायश्चित्तविधानात् इति ॥

अथैकनक्षत्रादौ विशेष उक्तः प्र० पारिजाते—" रोहिण्यार्द्रा मघेन्द्राग्नी तिष्यश्रवणपौष्णभम् । उत्तराप्रोष्ठपाच्चैव नक्षत्रैक्येऽपि शोभनाः " इति ॥ " विशाखिकाऽऽर्द्राश्रवणप्रजेशातिष्याऽन्त्यतत्पूर्वमघाः प्रशस्ताः । स्त्रीपुंसतारैक्यपरिग्रहे तु शेषा विवर्ज्या इति सङ्गिरन्ते " इति तत्रैव कालनिर्णयवचनम् ॥ " अजैकपान्मित्रवसुद्विदैवप्रभञ्जनान्त्यार्कभुजङ्गभानि । मुकुन्दजीवान्तकशक्रभानि शुभानि योषिन्नरजन्मभैक्ये " इत्यपि वचनान्तरम् ॥ द्विनक्षत्रे च— " एकराशौ द्विनक्षत्रे पुन्तारा प्रथमा भवेत् । अतीव शोभना प्रोक्ता स्त्रीतारा चेद्विनश्यति ॥ भवनद्वययुक्तर्क्षे पूर्वं पुंसां शुभावहम् । पश्चाद्भागं तथा स्त्रीणां व्यत्ययस्तु विनाशकृत् " इति ॥ तत्राऽपवाद उक्तो ग्रन्थान्तरे— " वारुणाऽर्कमरुद्दस्र अग्निरापो विधिः पिता । एकराशौ तु विज्ञेयं स्त्रीपूर्वमपि शोभनम् " इति ॥ विद्यामाधवीये तु— "एकर्क्षेऽपि वरस्य पूर्वमपरं वध्वास्तु भं पूजितं त्याज्यं नेतरथाऽपि तत्परिहरेन्नक्षत्रमेकं द्वयोः । तच्चान्ये शुभमामनन्ति मुनयः शक्रप्रचेतोमघामूलाऽऽर्द्रावसुरोहिणीयमपयोहस्ताऽहिपुष्यैर्विना " इति ॥

१. नैष्ठिकब्रह्मचारिणः ॥ २. विवाहमनिच्छतः ॥ ३. अकृतविवाहम् ॥

अथ मूलादिदुष्टनक्षत्रजयोस्तयोः फलमुक्तं मुहूर्तमालायाम्— "अहिमूलाद्यान्त्यवर्जपादजौ श्वशुरौ क्रमात्। ज्येष्ठाद्रीशान्त्याङ्घ्रिजौ तु हतोऽन्योन्याग्रजाऽनुजौ" इति ॥ आश्लेषाया आद्यपादं मूलस्यान्त्यपादश्च वर्जयित्वा इतरपादजौ वधूवरौ क्रमाच्छ्वशुरौ हतः। श्वश्रूश्च श्वशुरश्च श्वशुरौ। आश्लेषान्त्यपादत्रयजातौ वधूवरौ श्वश्रूं मूलाऽऽद्यचरणत्रयजातौ श्वशुरञ्च नाशयतः इत्यर्थः॥ तथा ज्येष्ठान्त्यचरणोत्पन्नौ वधूवरौ अन्योन्यस्याऽग्रजं हतः— वधूः पत्यग्रजं हन्ति वरस्तु भार्याऽग्रजमित्यर्थः॥ तथा विशाखान्त्यपादजौ तौ परस्परस्याऽनुजं हतः इति ज्ञेयम्॥ अन्यत्राऽपि— "मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम्। माहेन्द्रजा पतिज्येष्ठं देवरन्तु द्विदैवजा" इति॥ जन्मनक्षत्राऽज्ञाने नामनक्षत्रादेव सर्वं विचारणीयम्— "अज्ञातजन्मभानान्तु व्यावहारिकनामभात्। विचारयेदिदं सर्वं सङ्करो मरणप्रदः" इति मुहूर्तमालोक्तेः॥ "अज्ञातजन्मभानां सर्वेषां नामभात्फलं भवति। सेवापरिणयनादौ ग्राह्यं तद्युधि विशेषतः फलदम्" इति विद्यामाधवोक्तेश्च॥ नामर्क्षन्त्ववकहडचक्रतोऽवगन्तव्यम्॥ एवं आदौ वधूवरयोर्नक्षत्रदोषादिकं विचार्य कूटगुणैर्विवाहघटने तारतम्यं परिकल्पनीयम्॥ तत्कल्पनाप्रकारश्चोक्तो मुहूर्तमालायाम्– "इत्थं मिथः स्याद्घटितार्थचिन्तने निन्द्यो गुणैः षोडशभिः करग्रहः। मध्यो नखैस्तत्त्वमितैस्तथोत्तमस्ततोऽधिकश्चेत्पुनरुत्तमोत्तमः" इति॥

अथ विवाहे मासादिनिर्णयः (बो. गृ. सू. १. १) "सर्वे मासा विवाहस्य॥ शुचितपस्तपस्यवर्ज्यमित्येके॥ रोहिणी मृगशीर्षमुत्तरे फल्गुनी स्वातीति विवाहस्य नक्षत्राणि॥ पुनर्वसू तिष्यो हस्तश्श्रोणा रेवतीत्यन्येषां भूतिकर्मणाम्॥ यानि चान्यानि पुण्योक्तानि नक्षत्राणि" इति॥ आश्वलायनोऽपि— "उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः सार्वकालमेके विवाहम्" इति॥ सं०मालायां नारदः—"माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः। कार्तिको मार्गशीर्षश्च

मध्यमावितरेऽधमाः ॥ न कदाचिद्दशर्क्षेषु भानोराद्राप्रवेशनात्। विवाहं देवतानाञ्च प्रतिष्ठाञ्चोपनायनम्" इति ॥ व्यासः—"माघ-फाल्गुनवैशाखे यचूढा मार्गशीर्षके। ज्येष्ठे चाऽऽषाढमासे च सुभगा वित्तसंयुता॥ श्रावणे वाऽपि पौषे वा कन्या भाद्रपदे तथा। चैत्राश्वयुक्कार्तिकेषु याति वैधव्यतां ध्रुवम्" इति ॥ निषिद्धेष्वपि केषुचिद्व्यवस्थामाह तत्रैव वसिष्ठः—"पौषेऽपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात्। प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्के" इति ॥ मुहूर्तमालायामपि—"कार्तिक-पौषमधुष्वपि वृश्चिकमकराऽजगो रविर्ग्राह्यः" इति ॥ यस्मिन्देशे पौषश्शून्यमासत्वेनाऽभिमतस्तत्र मकरपौषोऽपि त्याज्य एव ॥ "पौषो मासश्शून्य इति कैश्चिद्देशेषु केषुचित्। वर्ज्यते शुभकार्येषु विवाहे तु विशेषतः" इति विद्यामाधवोक्तेः ॥ आद्यगर्भजस्य विवाहादौ जन्ममासादीनां ज्येष्ठमासस्य च निषेधमाह प्र० पारिजाते श्रीपतिः—"जन्ममासि न तु जन्मभे तथा नैव जन्मदिवसेऽपि कारयेत्। आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न हि जातु मङ्गलम्" इति ॥ ज्येष्ठमासे विशेषमाह सं० मालायां मिहिरः—"ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते। तयोरन्यतरे ज्येष्ठे ज्येष्ठमासः प्रशस्यते॥ द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठं सुखावहम्। ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसम्मतम्" इति ॥ अथ विवाहे ग्राह्यं गोचरबलमाह सं० मालायां गर्गः—"चन्द्र-ताराबलं मुख्यं दम्पत्योः पाणिपीडने। मुख्यं गुरुबलं वध्वा वरस्येष्टं रवेर्बलम्" इति ॥ सिंहस्थे गुरौ विशेषमाह प्र० पारिजाते गौतमः—"कण्ठीरवस्थे धिषणे विवाहं कुर्यान्न यात्राव्रतबन्धदीक्षाः। गोदावरीं चोत्तरतो हि दोषो गोदावरी दक्षिणतो न दोषः" इति ॥ अथ तिथीराह प्र० पारिजाते वसिष्ठः—"शुक्लाद्द्वितीयाऽऽदित एव कृष्णपक्षे दशम्यन्तगताश्शुभास्स्युः। तास्वष्टमीस्कन्दगणेश-दुर्गाचतुर्दशी चाऽपि तिथिर्विवर्ज्या" इति ॥ नृसिंहोऽपि— "रिक्ता पर्वाऽष्टमी वर्ज्या पौर्णमासी शुभावहा" इति ॥ अन्यच्च—"हित्वोभयोश्च नवमीञ्च चतुर्दशीञ्च कृष्णस्थितामपि च पञ्चदशीञ्चतुर्थीम्। अन्येषु वै तिथिषु लग्नबलं

विलोक्य कन्याप्रदानमपि वृद्धिदमाहुरन्ये" इति ॥ अत्र विशेषमाह सं० मालायां व्यासः— "त्रयोदशादिने पक्षे विवाहादि न कारयेत्। गर्गादिमुनयः प्राहुः कृते मृत्युस्तदा भवेत्" इति ॥ अथ वारांशकादिकमाह तत्रैव नृसिंहः— "बुधशुक्रेन्दुजीवानां वारेषु शुभदं भवेत्। शुभानामांशकं श्रेष्ठं वर्गादि च विवाहके" इति ॥ लल्लोऽपि— "क्रूरग्रहदिनवारा न शोभनाः सौरमपहाय। व्यतिपातविष्टिवैधृतिवर्ज्यास्शुभदाः करणयोगाः" इति ॥ विद्यामाधवस्तु— "दर्शस्स्वपार्श्वसहितोऽह्नि कुजार्किवारौ" इति कुजशनिवारयोरहन्येव दोषित्वकथनेन रात्रौ ग्राह्यत्वं ज्ञापयति। अन्यत्राऽपि— "न वारदोषाः प्रभवन्ति रात्रौ" इत्युक्तम् ॥ अथ नक्षत्राण्याह श्रीपतिः—" मूलमैत्रमृगरोहिणीकरैः पौष्णमारुतमघोत्तरान्वितैः। निर्व्यथाभिरुडुभिर्मृगीदृशां पाणिपीडनविधिर्विधीयते" इति ॥ विद्यामाधवोऽपि— "ज्योतिश्शास्त्रविशारदैर्निगदिताः पाणिग्रहे रोहिणी स्वाती पौष्णनिशेशनैर्ऋतमघासावित्रमित्रोत्तराः। देशाचारबलेन नैर्ऋतमघे केचिद्विदुर्मध्यमे स्त्रीजन्मत्रयमाहुरत्र शुभदं पुंवत्परास्तारकाः" इति ॥ जन्मविपदादितारा़णां सामान्यतो वर्ज्यत्वं स एवाह-- "जन्मविपत्प्रत्यरवधजन्माष्टमराशितारका-स्त्याज्याः" इति ॥ एतेष्वपि पर्यायभेदेन पादभेदेन च ग्राह्यत्वमुक्तं तच्चौलप्रकरणे द्रष्टव्यम् ॥ आपदि विपदादितारेष्वप्यनि-ष्टपरिहाराय दानमुक्तं नि० सिन्धौ— "विपत्तारे गुडं दद्यान्निधने तिलकाञ्चनम्। प्रत्यरे लवणं दद्याच्छागं दद्यात्रिजन्मसु ॥ चन्द्रे च शङ्खं लवणं च तारे तिथौ विरुद्धे त्वथ तण्डुलांश्च। धान्यं च दद्यात्करणे च वारे योगे विरुद्धे कनकं प्रदे-यम्" इति ॥ अथ लग्नान्याह विद्यामाधवः—" कन्यातुलानृमिथुनान्यतिपूजितानि मध्याः कुळीरझषचापवृषा विवाहे। तेष्युत्तमाश्शुभयुतास्स्वगुरुश्च सिंहं कुम्भं मृगश्च ससितं शुभमाहुरेके" इति ॥ लग्नाद्विस्थानस्थितानां क्रूरग्रहाणां फलान्याह स एव—" मृत्युं निर्धनतां श्रियं सुखसुहृद्भङ्गं तनूजक्षयं वृद्धिं शत्रुभयेन भर्तृमरणं रोगञ्च धर्मच्युतिम्। दौश्शील्यं विभवं व्ययञ्च

भवनेष्वात्मादिषूग्रग्रहाः कुर्वन्ति क्रमतस्तमोऽर्कतनयावारोग्यमत्राष्टमे " इति ॥ अथ लग्नभङ्गयोगमाह मुहूर्तमालाकारः— " रविर्लग्ने चन्द्रस्तनुरिपुमृतिस्थः क्षितिसुतोऽष्टलग्नाब्जे ज्ञेज्यौ निधन उशनास्त्र्यष्टरिपुषु । शनिर्लग्नान्त्यस्थस्तनुपतिरथाऽ-ष्टमगृहे विवाहे स्युस्सर्वे मदनसदने नैव शुभदाः " इति ॥ अथाऽत्राऽन्येऽपि चौलप्रकरणोक्ताः पातगुलिकाऽस्तादयो महादोषाः, सङ्क्रातिग्रहणादयश्च परिवर्जनीया भवन्ति ॥ सङ्क्रान्तौ वर्ज्यघट्यादिकमाह प्र० पारिजाते नारदः— "त्याज्यास्सूर्यस्य सङ्क्रातेः पूर्वतः परतस्सदा । विवाहादिषु कार्येषु नाड्यः षोडश षोडश" इति ॥ वसिष्ठोऽपि—"विषुवदयनयोर्दिवसत्रयं हरिपदे षडशीति-मुखेऽपि च । पूर्वतोऽपि परतोऽपि सङ्क्रमात्पुण्यकालघटिकास्तु षोडश " इति ॥ विद्यामाधवोऽपि— " त्यजन्ति पूर्वञ्च परञ्च सङ्क्रमाद्दिनानि षड्विष्णुपदात्तथायनात् । शुभक्रियायां विषुवात्परं दिनं परं परेभ्यश्च दिनार्धमुत्सृजेत् " इति ॥ विष्णुपदादि सङ्क्रान्तिसंज्ञामाह स एव—" अर्के स्थिरान्विशति विष्णुपदाभिधानास्तेभ्यः पराश्च षडशीति मुखाश्चतस्रः । सङ्क्रान्तयस्त्वज-मृगास्यतुलाकुलीरा ज्ञेयाः क्रमादुदगवाग्विषुवायनाख्याः " इति ॥ खेर्वृषसिंहवृश्चिककुम्भराशिसङ्क्रमा विष्णुपदाख्याः । मिथुनकन्याधनुर्मीनसङ्क्रमाः षडशीतिमुखा । मेषतुलासङ्क्रमौ क्रमेणोत्तरदक्षिणविषुवाख्यौ । मकरकर्कसङ्क्रमावुत्तरदक्षिणा—यनाख्याविति ज्ञेयम् ॥ अथ ग्रहणे वर्ज्यदिनादिकमाह प्र० पारिजाते नारदः— " उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे । नाखिले त्रिदिनं नेष्टं नेष्टं तद्भमृतुत्रयम् ॥ ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा । संध्यायान्तु त्रित्रिदिनं निश्शेषे सप्तसप्त च " इति ॥ बृहस्पतिस्तु-" पश्चाद्देवोपरागे तु दोषस्स्यान्नैव पूर्वतः । गृहदाहादयो दोषा यथा स्युर्दहनात्परम् " इति ॥ अथ विवाहमारभ्य

१. " खण्डग्रासे त्रित्रिदिनम् " इति सं० मा० पाठः ॥

चतुर्थीकर्मपर्यन्तं मध्ये श्राद्धं दर्शतिथिं चाऽवश्यं वर्जयेत्--" विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात्। वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात् " इति ज्योतिर्निबधे तत्सन्निपातेऽनिष्टफलाभिधानात् ॥ अत्र श्राद्धयुक्तस्यैव श्राद्धतिथेर्दूषकत्वं न तु दर्शतिथिवत्केवलश्राद्धतिथेः "वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् " इति स्मृतिवचनेन तज्ज्ञापनात् ॥ " नान्दीश्राद्धे कृते पश्चाद्यावन्मातृविसर्जनम्। दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥ अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च। ब्रह्मयज्ञं चाध्ययनं नदीसीमाविलङ्घनम् ॥ उपवासव्रतं चैव श्राद्धभोजनमेव च। नैव कुर्युस्सपिण्डाश्च मण्डपोद्वासनावधि " इति सं० मालायां गार्ग्येण विवाहादिशुभकर्ममध्ये श्राद्धादीनां निषेधाच्च ॥ अथ चतुःपुरुषात्मकुले मृतस्य मासिकादिप्रेतकर्माण्यनिर्वर्त्य विवाहादिकं न कार्यम् ॥ तथा च निर्णयसिन्धौ मेधातिथिः- " प्रेतकर्माण्यनिर्वर्त्य चरेन्नाऽभ्युदयक्रियाम्। आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् " इति ॥ तत्र कर्तव्यमाह शाट्यायनिः- " प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा। अपकृष्याऽपि कुर्वीत कर्तुं नान्दीमुखं द्विजः " इति। स्मृत्यन्तरे च- " सपिण्डीकरणादर्वागपकृष्य कृतान्यपि। पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् " इति ॥

अथैकोदरादीनां समानक्रियादिनिर्णयः॥ सं० मालायां सारावलीवचनम्—" एकोदरप्रसूतानामेकस्मिन्वत्सरे सदा। विवाहं नैव कुर्वन्ति कुर्वन्ति तु ततोऽन्यथा " इति॥ मदनरत्ने नारदः- " एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः। न समानक्रियां कुर्यान्मातृभेदे विधीयते " इति॥ न समानक्रियामित्यनेनैकोदरयोश्चौले द्वयोर्व्रतबन्धौ द्वयोर्विवाहो न कुर्यादिति बोध्यते॥ अन्यच्चाह स एव- " पुत्रोद्वाहात्परं पुत्री विवाहो न ऋतुत्रये। न कार्यं व्रतमुद्वाहान्मङ्गले नाप्यमङ्गलम् ॥ विवाहश्चैव कन्यानां षण्मासाभ्यन्तरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥ नैकस्मिन्वत्सरे कार्यौ गेहोद्वाहौ कथञ्चन " इति॥ पारिजाते

गर्गः—"भ्रातृयुग्मे स्वसृयुग्मे भ्रातृस्वस्रोश्च युग्मके। न जातु मङ्गलं कार्यमेकस्मिन्मण्डपेऽहनि" इति॥ ज्योतिर्विवरणे—"एकोदरयोर्वरयोरेकदिनोद्वाहतो भवेन्नाशः। नद्यन्तर एकदिने केऽप्याहुः सङ्कटे च शुभम्" इति॥ प्र० पारिजाते—"गिरिर्वाऽपि महास्रोता यं देशं व्यवधास्यति। तं पृथग्देशमित्याहुर्विवाहादिर्न दुष्यति॥ नदीतटविभेदेन विवाहोपनयौ चरेत्। मासर्तुतिथिभेदांश्च तदुद्दिश्य न चिन्तयेत्" इति॥ भिन्नमातृकयोर्भगिन्योस्तु विशेषमाह सं०मालायां मेधातिथिः—"पृथङ्मातृजयोः कार्यो विवाहस्त्वेकवासरे। एकस्मिन्मण्डपे कार्यः पृथग्वेदिकयोस्तथा॥ पुष्पपट्टिकयोः कार्यं दर्शनं न शिरस्थयोः। भगिनीभ्यामुभाभ्याञ्च यावत्सप्तपदी भवेत्" इति॥ यमलयोश्चाह गार्ग्यः—"एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः। क्षौरञ्चैव विवाहञ्च मौञ्जीबन्धनमेव च" इति॥ भट्टकारिकायाम्—"एकस्मिन्वत्सरे चैकवसरे मण्डपे तथा। कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः" इति॥ अत्रैकदिनविवाहबोधकानि वचनान्यभ्यनुज्ञापराणि न तु विधायकानीति मन्तव्यम्॥ संहितासारावल्याम्—"न मण्डनान्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मण्डनमेकवर्षे। न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात्" इति॥ मदनरत्नेऽत्रिः—"कुले ऋतुत्रयादर्वाङ्मण्डनान्न तु मण्डनम्। प्रवेशान्निर्गमं चैव न कुर्यान्मङ्गलत्रयम्" इति॥ अत्र कुलं पुरुषत्रयपर्यन्तमेवेति ज्ञेयम्॥ यदाह मेधातिथिः—"पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम्। प्रवेशनिर्गमौ तद्वत्तथा मण्डनमुण्डने" इति॥ मुण्डनादिशब्दार्थमाह कात्यायनः—"मुण्डनञ्चौलमित्युक्तं व्रतोद्वाहौ तु मण्डनम्। पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः" इति॥ "न कुर्यान्मङ्गलत्रयम्" इत्यत्र मङ्गलपदेन मौञ्जीविवाहावेव ग्राह्यौ॥ "[1]नाग्निकार्यत्रयं भवेत्" इति वचनान्तरेणैकवाक्यतोपपत्तेः॥ केचित्तु यत्किञ्चिच्छुभकार्यत्रयमपि न शुभमित्याहुः॥ ज्योतिर्निबन्धे—"मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मङ्गलम्।

१, अभ्युत्पादककार्यत्रयम्।

ऋतुत्रयं पुनर्यावन्न कुर्याल्लघुमङ्गलम् " इति ॥ वर्षभेदे तूक्तनिषेधानामपवाद उक्तः सं० मालायाम्—" ऋतुत्रयस्य मध्ये चेदन्याऽब्दस्य प्रवेशनम् । तदा ह्येकोदरस्याऽपि विवाहस्तु प्रशस्यते " इति ॥ " फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने। भेदादब्दस्य कुर्वीत नर्तुत्रयविलङ्घनम् " इति च ॥ ॥ अथ सङ्कटे चतुर्दिनव्यवधानेन वा कार्यमित्याह तत्रैव गर्गः—" पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् । पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः " इति ॥ कर्पर्दिकारिका च—" उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाऽपि। यावच्चतुर्थं दिनमत्र सर्वं समाप्य चान्योद्वहनं विदध्यात् " इति ॥ कश्यपोऽपि—" मौञ्जीबन्धस्तथोद्वाहः षाण्मासाऽभ्यन्तरेऽपि वा। पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत् " इति ॥ ॥ अतिसङ्कटे—" न प्रतिषिद्धं लग्नं सम्प्राप्ते सङ्कटे महति। एकोदरसम्भवयोरेकाहे भिन्नमण्डपे काले " इति तत्रैव ज्योतिर्विवरणोक्तिः ॥ अथ प्रत्युद्वाहादिनिषेधमाह प्र० पारिजाते नारदः—"प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् । न चैकजातयोः पुंसोरेकजन्ये तु कन्यके" इति ॥ अन्यच्च—" नैकजन्ये तु कन्ये द्वे पुत्रयोरेकजन्ययोः। न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन " इति ॥ स्वस्य कन्या यस्य पुत्राय दत्ता तत्कन्यायाः स्वपुत्रेण परिणयनं प्रत्युद्वाहः स न कार्यः ॥ एकजन्ये द्वे कन्यके एकस्मै एकजन्ययोर्द्वयोरपि वा नोद्वाहयेदित्यर्थः ॥

अथ प्रतिकूलनिर्णयः ॥ निर्णयसिन्धौ मेधातिथिः—" वधूवरार्थे घटिते सुनिश्चिते वरस्य गेहेऽप्यथ कन्यकायाः ।

---

१. चान्द्रवत्सरभेदे। २. " सोदरयोः सोदरकन्यके वत्सरादिकालव्यवधाने महानद्यादिव्यवधाने वा देये। पूर्वदत्तायाः कन्याया सुतौ तस्यैव द्वितीयकन्यका देया। प्रत्युद्वाहश्च दारिद्र्यातिसङ्कटे कार्यः " इति धर्मसिन्धौ ॥

मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मङ्गलं बुधैः" इति ॥ भृगुः—"वाग्दानाऽनन्तरं यत्र कुलयोः कस्यचिन्मृतिः। तदोद्वाहो नैव कार्यः स्ववंशक्षयदोषतः" इति ॥ शौनकः—"वरवध्वोः पिता माता पितृव्यश्च सहोदरः। एतेषां प्रतिकूलश्च महाविघ्नप्रदं भवेत् ॥ पिता पितामहश्चैव माता चैव पितामही। पितृव्यः स्त्री सुतो भ्राता भगिनी चाऽविवाहिता ॥ एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतम्। अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत्" इति ॥ माण्डव्योऽपि—"वाग्दानानन्तरं माता पिता भ्राता विपद्यते। विवाहो नैव कर्तव्यः स्ववंशहितमिच्छता" इति ॥ अथ निश्चितवरस्य निश्चितवध्वा सह विवाहो न कार्य इत्यर्थोऽभिप्रेतः ॥ तेनाऽन्येन वरेण वाऽन्यथा वध्वा वा सह विवाहो न निषिध्यते इति ज्ञेयम् ॥ सङ्कटे तमप्यनुजानाति तत्रैव मेधातिथिः—"वाग्दानाऽनन्तरं यत्र कुलयोः कस्यचिन्मृतिः। तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत्। पुरुषत्रयपर्यन्तं प्रतिकूलं सगोत्रिणाम् ॥ प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम्। आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत्" इति ॥ अथाऽत्राऽऽशौचतारतम्यमुक्तं स्मृतिरत्नावल्याम्—"पितुरब्दमिहाशौचं तदर्धं मातुरेव च। मासत्रयन्तु भार्याया-स्तदर्धं भ्रातृपुत्रयोः ॥ अन्येषान्तु सपिण्डानामाशौचं मासमीरितम्। तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते" इति ॥ ज्योतिष्प्रकाशे—"प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परम्। शान्तिं विधाय गां दत्वा वाग्दानादि चरेत्पुनः" इति ॥ शान्तिं विनायकशान्तिम् इत्यर्थः ॥ तथा च मेधातिथिः—"सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिता। शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत" इति ॥ अथ सूतकप्राप्तौ निर्णयमाह सं० मालायां विष्णुः—"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्" इति ॥ प्रारम्भशब्दार्थमप्याह स एव—"प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः। नान्दीमुखं

विवाहादौ श्राद्धे पाकपरिक्रिया " इति ॥ अत्र वरणं मधुपर्कम् ॥ " गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः । पश्चादशौचे पतिते न भवेदिति निश्चयः " इति निर्णयसिन्धौ ब्रह्मोक्तेः ॥ आरम्भोत्तरं पतितमाशौचं समाप्तिपर्यन्तं न स्पृशति ॥ तदाह प्र० पारिजाते संवर्तः—" दीक्षान्तोऽवभृथो यज्ञे कङ्कणान्तं वधूवरौ । व्रते ब्रह्मौदनं यावद्बटोः पालाशदर्शनम् ॥ तावन्नाशौचमित्याहुः श्राद्धे विप्राऽङ्घ्रिशोधनात् " इति ॥ अनारब्धेऽपि कर्माणि मुहूर्तान्तराद्यलाभे सम्भृतसम्भारस्य सूतकिनोऽप्यधिकारप्राप्त्युपायमाह सं० मालायां विष्णुः—" अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् । गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी " इति ॥ ॥ अथ मातरि रजस्वलायामपि विवाहं न कार्यमित्याह सं० मालायां मेधातिथिः—" वध्वा वरस्य वा माता भवेद्यदि रजस्वला । तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥ उद्वाहव्रतचूडासु माता यदि रजस्वला । तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः " इति ॥ प्रारम्भोत्तरं रजस्सम्भवे प्रारम्भात्प्रागपि मुहूर्तान्तराऽलाभाद्यतिसङ्कटे चौलप्रकरणोक्तश्रीशान्तिं कृत्वा विवाहादिकं कुर्यात् ॥

कन्यादातृनिर्णयः ॥ तत्र याज्ञवल्क्यः—" पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥ गम्यं त्वभावे दातृणां कन्या कुर्यात्स्वयं वरम् " इति ॥ नारदोऽपि—" पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमतः पितुः । मातामहो मातुलश्च सकुल्या बान्धवास्तथा ॥ माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते । तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः " इति ॥ पुराणान्तरे—" आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् । धर्म्येण विधिना दातुमसगोत्रोऽपि युज्यते ॥ अनाथां कन्यकां दृष्ट्वा यो दद्यात्सदृशे वरे । द्विगुणं फलमाप्नोति कन्यादाने यदीरितम् " इति ॥ अथ कन्याया रजोदर्शनपर्यन्तं विवाहाऽकरणे

दोषमाह शात्यायनिः—" माता च जनकश्चैव ज्येष्ठो भ्राता तथैव च। त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् " इति ॥ हारीतोऽपि— " पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः " इति ॥ तत्र प्रायश्चित्त-पूर्वकं विवाहं कुर्यात् ॥ प्रायश्चित्तमाह हेमाद्रिः—" कन्यका तु विवाहात्प्राग्रजसा चेत्परिप्लुता। पादकृच्छ्रेण शुद्धा स्यात्पाणि-ग्रहणकर्मणि " इति ॥ शौनकस्तु कन्यापिता यावत्यो ऋतुसङ्ख्यास्तावतीर्गा दद्यात्, कन्या त्रिदिनमुपोष्य पञ्चगव्यं प्राश्नीयात्, उद्वोढा च कुष्माण्डैर्घृतं जुहुयादित्याह ॥ दृष्टेऽपि रजसि पित्रादयो यद्युपेक्षेरन्तदा स्वयमेव वरं वरयेदिति ॥ (बो. ध. सू. ४·१) " त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्। ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्। अविद्यमाने सदृशे गुणहीनमपि श्रयेत् " इति ॥ मनुरपि— " त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती। ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम्। नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति " इति ॥

अथ विवाहभेदाः ॥ ते च ब्राह्मप्रजापत्यार्षदैवगान्धर्वाऽसुरराक्षसपैशाचा इत्यष्टविधा भवन्ति। तेषामाद्याश्चत्वारो ब्राह्मणस्य विहितास्तेष्वपि पूर्वः पूर्वश्श्रेयान्। तथा च— ( बो.ध.सू. १·२०-२१ ) " अष्टौ विवाहाः ॥ श्रुतिशीले विज्ञाय ब्रह्मचारिणेऽर्थिने कन्या दीयते स ब्राह्मः ॥ आच्छाद्याऽलङ्कृत्य 'एषा सहधर्मं चर्यताम्' इति प्राजापत्यः ॥ पूर्वां लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दत्वा ग्रहणमार्षः ॥ दक्षिणासु नीयमानास्वन्तर्वेदि ऋत्विजे स दैवः ॥ सकामेन सकामायां मिथस्संयोगो गान्धर्वः ॥ धनेनोपतोष्याऽऽसुरः ॥ प्रसह्य हरणाद्राक्षसः ॥ सुप्तां मत्तां प्रमत्तां वोपयच्छेदिति पैशाचः ॥ तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वश्श्रेयान् ॥ उत्तरेषामुत्तरोत्तरः पापीयान् ॥ अत्राऽपि षष्ठसप्तमौ क्षत्रधर्मानुगतौ तत्प्रत्ययत्वात्क्षत्रस्येति ॥ पञ्चमाष्टमौ वैश्यशूद्राणाम् ॥ अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति ॥ कर्षणशुश्रुषाऽधिकृतत्वात् ॥ गान्धर्वमप्येके प्रशंसन्ति सर्वेषां

स्नेहानुगतत्वात् ॥ यथायुक्तो विवाहस्तथायुक्ता प्रजा भवतीति विज्ञायते ॥ अथाऽप्युदाहरन्ति—' साधवस्त्रिपुरुषमार्षाद्दश दैवाद्दश प्राजापत्याद्दश पूर्वान्दशाऽपरानात्मानञ्च ब्राह्मीपुत्र ' इति विज्ञायते ॥ वेदस्वीकरणशक्तिरप्येवंविधानामेव पुत्राणां भवतीति ॥ क्रीता द्रव्येण या नारी सा न पत्नी विधीयते । सा न दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् " इति ॥ कन्याविक्रयिणामपि दोषोऽभिहितः—" शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहितः । आत्मविक्रयिणः पापा महाकिल्बिषकारकाः ॥ पतन्ति नरके घोरे घ्नन्ति चाऽऽसप्तमं कुलम् । गमनागमनं चैव सर्वं शुल्को विधीयते " ॥

एतेन क्रयविक्रयौ ब्राह्मणेन सर्वथा न कार्यावित्युक्तं भवति ॥ नन्वेवमार्षविवाहोऽपि निन्द्यः स्यात्तत्राऽपि गोमिथुनदानस्य शुल्करूपस्य सत्त्वादिति चेन्नैवम्—" आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ॥ अल्पो वाऽपि महान्वाऽपि क्रियते तावतैव सः " इति मनुना गोमिथुनस्य शुल्कत्वं मतान्तरेणानूद्य निराकरणात् ॥ तथा " पूर्वं विवाहाश्चत्वारो धर्म्यास्तोयप्रदानिकाः । अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् " इति देवलेन ब्राह्मणादि चतुर्णामप्यविशेषेणाशुल्कतयैव ब्राह्मणार्हत्वेनोपपादनाच्च ॥

अथ मण्डपवेदिकयोर्निर्माणविधिः ॥ सं० मालायां वसिष्ठ :— " षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् । मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ॥ अष्टहस्तन्तु रचयेन्मण्डपं वा द्विषट्करम् " इति ॥ निर्णयसिन्धौ– " मङ्गलेषु च सर्वेषु मण्डपो

---

१. शुल्कं मूल्यपर्यायकम् । क्रयसाधनं हि मूल्यं देशकालाद्यपेक्षयाऽल्पं वा महद्वा भवति । प्रकृते तु परिमाणं नियतम् । स आर्षस्तावतैव नियतपरिमाणेन गोमिथुनेन सम्पद्यते तथा च क्रयविक्रयाभावाद्धर्म्य एवार्ष इति तात्पर्यम् ॥

गृहमानतः । कार्यः षोडशहस्तो वा द्विषड्ढस्तो दशावधि ॥ स्तम्भैश्चतुर्भिरेवात्र वेदिमध्ये प्रतिष्ठिता " इति ॥ वेदिकामाह नारदः—"हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः । स्तम्भैश्चतुर्भिस्सुश्लक्ष्णां वामभागे च सद्मनि ॥ समां तथा चतुर्दिक्षु सोपानैरतिशोभिताम् । प्रागुदक्प्रवणां रम्भास्तम्भैर्हंसशुकादिभिः ॥ विचित्रेणाङ्कितैः कुंभैर्विविधैस्तोरणाङ्कुरैः । शृङ्गारपुष्पनिकरैर्वर्णकैः समलङ्कृताम् ॥ विप्राशीर्वचनैः पुण्यैस्त्रिभिर्दीपैर्मनोरमाम् । वादित्रगीतनृत्ताद्यैर्हृदयानन्दिनीं शुभाम् ॥ एवं विधामारुरुक्षेन्मिथुनं साग्निवेदिकाम् " इति ॥

अथ लग्नघटीस्थापनाविधिमाह प्र० पारिजाते नारदः—" षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ॥ कुर्यात्कमलवत्ताम्रपात्रं तद्दशभिः पलैः ॥ माषत्रयत्र्यंशयुतस्वर्णवृत्तशलाकया । वेदाङ्गुलैः सम्मितया तया विद्धमतिस्फुटम् " इति ॥ ( चतुरङ्गुलशलाकावृत्तं कुर्यात्सुवर्णपादेन, इति ग्रन्थान्तरे ) । " ताम्रपात्रे जलैः पूर्णे गन्धपुष्पैरलङ्कृते । तण्डुलस्थे स्वर्णयुते वस्त्रयुग्मेन वेष्टिते ॥ मण्डलार्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत् । मन्त्रेणानेन पूर्वोक्तलक्षणं यन्त्रमुत्तमम् " इति ॥ मन्त्रस्तु— " मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा । भव भावाय दम्पत्योः कालसाधनकारणम् " इति ॥ " एवं सुलभे दम्पत्योः कारयेत्सम्यगीक्षणम् । दिवा वा यदि वा रात्रौ विवाहदिवसे शुभे " इति ॥ अयं विधिर्वधूगृहे आवश्यकस्तत्रैव विवाहक्रियानिर्वर्तनात् ॥

अथ विवाहे कर्तव्यविषयाः ॥ ( बो. गृ. सू. १. १ ) " उदगयन " इत्यादि गृह्यसूत्रेण वधूनिश्चयार्थं वरप्रेषणं, वाग्दानं, वधूगृहगतस्य वरस्य मधुपर्कार्हणं, कन्यादानं, वधूवरयोरन्योन्यनिरीक्षणम्, वध्वाः पाणिग्रहणं, सप्तपदी, वेद्यामानयनं, विवाहहोमादिकं चेत्येतान्युक्तानि भवन्ति ॥ अन्यान्यपि–सभापूजा, अक्षतारोपणं, कण्ठसूत्रबन्धनं, वधूवरवस्त्राञ्चलयो·

ग्रंथिबन्धनम्, विप्रार्चनमाशीर्ग्रहणं चेति स्मृत्यन्तरोक्तान्याचारात्परिगृह्यन्ते ॥ आचारं च विवाहे विशेषतः प्रमाणयत्याश्वलायनः "अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात्" इत्यादिना ॥ अतश्चात्र विवाहे आचारप्राप्तान्यादरणीयानि भवेयुः ॥

(बो. गृ. सू. १. १. २२–२४) "पूर्वेद्युरेवर्धिपूर्तेषु युग्मान्ब्राह्मणान् भोजयेत् । प्रदक्षिणमुपचारः । पुष्पफलाक्षतमिश्रैर्यवैस्तिलार्थमुपलिप्य दध्योदनं सम्प्रकीर्य दक्षिणं जानुं भूमौ निधाय सव्यमुद्धृत्य 'इडा देवहूः' इति जपित्वा 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वाचयित्वा 'अद्य विवाहः' इति ब्राह्मणानन्नेनपरिविष्य पुण्याहं स्वस्तिऋद्धिमित्योङ्कारपूर्वं त्रिस्त्रिरेकैकामाशिषो वाचयित्वा" ॥

अथ वरस्य वधूगृहगमनम् ॥ सं० मालायां शौनकः — "पुण्ये मुहूर्ते कुर्वीत विवाहं विधिवद्द्विजः । तत्राभ्युदयिकं कुर्यात्स्वस्तिमृद्धिं च वाचयेत् ॥ अपरेद्युः कृतस्नानो धृतधौताम्बरो वरः । भूषितो गन्धमाल्याद्यैः शकुनेन समन्वितः ॥ ब्राह्मणान् भोजयित्वान्ते कृतपुण्याहवाचनः । कृतकौतुकबन्धश्च मित्रबन्ध्वादिसंयुतः ॥ यानं यथार्हमारुह्य गन्तव्यं च वधूगृहम् । तस्य द्वाराद्बहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः ॥ गृहीतपूर्णकुम्भादिपाणिभिर्वनिताजनैः । कृताभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः" इति ॥ प्रयोगचिन्तामणौ— "कुर्यान्नान्दीश्राद्धमादौ तु पूर्वे घस्रे कृत्वान्नादिभिर्विप्रतृप्तिम् । अन्येद्युश्चाभ्यर्च्य विप्रान् यथावत्पुण्याहं तैर्वाचयेन्मङ्गलार्थी ॥ कन्यां वरो वरयितुं जलशान्तिमादौ कृत्वा निशि प्रतिसरं च करेऽथ बध्वा । स्नात्वा सुगन्धकुसुमाम्बरभूषणाढ्यः स्रग्वी गणेशकुलदेवगुरून् द्विजांश्च ॥ नत्वा सह स्वजनमित्रजनैश्च भुक्त्वा धृत्वा प्रतोदमथ बन्धुजनैः समेतः यायाद्वधूपितृगृहं ससुताप्रदाता तं पूजयेच्च विधिवन्मधुपर्कपूर्वम्" इति ॥

अथ विवाहप्रयोगः ॥ कर्ता सपत्नीकः पूर्वेद्युः कुमारेण सह प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा वैश्वदेवं हुत्वाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " मम कुमारकस्य विवाहं कर्तुमादौ शांत्यर्थं० अभ्युदयार्थं चैभिर्ब्राह्मणैः सह स्वस्तिपुण्याहवाचनपूर्वकं नान्दीश्राद्धं करिष्ये" इति सङ्कल्प्य " नादीमुखाः पितरः प्रीयन्ताम् " इति पुण्याहं वाचयित्वा नान्दीश्राद्धं कृत्वा कुलदेवतां सम्पूज्य प्रतिष्ठाप्य तस्यां रात्रावुदकशान्तिप्रतिसरबन्धौ यथाचारमङ्कुरार्पणं च कुर्यात् ॥ श्वोभूते कुमारः स्नानादि चतुष्टयं कृत्वा ब्राह्मणाननुज्ञाप्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम गृहस्थाश्रमसिध्यर्थं ब्राह्मेण विधिना स्त्रियमुद्वहे" इति सङ्कल्प्य गणपतिं सम्पूज्य " अग्निः प्रीयताम् " इति पुण्याहं वाचयित्वाऽहते मङ्गलवाससी परिधाय गन्धमाल्याभरणैरलंकृतो ब्राह्मणैः सह भुक्त्वा स्त्रीभिः कृतनीराजनादिमङ्गलसंविधानो हस्ते प्रतोदं फलं च गृहीत्वा ब्राह्मणैर्बन्धुभिश्च सहितो यथाविभवमश्वं यानं वा समारुह्य मङ्गलवाद्यानुघोषितो वधूगृहं गच्छेत् ॥ वधूपितापि सपत्नीकः कन्यया सह पूर्वेद्युः प्रातर्मङ्गलस्नानादि कृत्वा " अस्याः कुमार्या विवाहं कर्तुमादौ पुण्याहपूर्वकं नान्दीसमाराधनं करिष्ये " इत्यादि सङ्कल्प्य नान्दीसमाराधनं कुलदेवतास्थापनं रात्रावुदकशान्तिप्रतिसरबन्धावङ्कुरार्पणं च कृत्वा श्वः प्रातर्घटीयन्त्रस्थापनं कृत्वा " अग्निः प्रीयताम् " इति पुण्याहं वाचयित्वाश्र कन्यामहतवाससी परिधाप्य गन्धमाल्याभरणैरलङ्कृत्य यथावद्भोजयित्वा हस्ते फलमिषुं च दत्वा देवाग्रे प्राङ्मुखीमुपवेश्य गृहद्वारमागतं कन्यार्थिनं सपरिवारं वरं बन्धुजनैस्सह यथाविभवं प्रत्युद्गम्य पुरन्ध्रीभिर्यथाचारं नीराजनादिनोपचारितं वरं गृहं प्रवेश्य तत्र मङ्गलमण्डपे भद्रासने प्राङ्मुखमुपवेशयेत् ॥

---

१. दैवपित्र्यऋणापाकरणहेतुभूतधर्मप्रजोत्पादनसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मेण विधिना स्त्रियमुद्वहिष्ये इति वा संकल्पः। अयं पुण्याहोत्तरं वा कार्यः ॥

अथ सभापूजा ॥ तद्विधिर्ग्रन्थान्तरे निरूपितः— "पुत्रोत्सवे मौञ्जिबन्धे कन्यायाः प्रथमार्तवे। विवाहे यज्ञसमये विप्रहं पश्चसु स्मृतम् ॥ वराय वरवेषाय गुरूणां सुहृदामपि। उपचारस्तु कर्तव्यो मङ्गल्यो मङ्गलायने ॥ अर्चयेदृत्विगाचार्यनृप-विद्वत्सुहृद्वरान्। आगतान् स्वगृहं गेही यथाविभवमादरात् ॥ पूर्वं सभां नमस्कृत्य पश्चादासनपूर्वकम्। कृत्वोपचारं कालीनं सभां स्तोतुं समारभे" इति ॥ स्तवनमपि त्रिविधमुक्तम्— "आशीःपूर्वकमित्येके नमःपूर्वन्तु केचन। विप्रहं वेदपूर्वं स्यादिति सर्वैर्विनिश्चितम्" इति ॥ उपचाराश्च षोडशोक्ताः–"अभ्युत्थानं चासनं स्वागतोक्तिः पाद्यं चार्घ्यं मधुपर्काचमौ च ॥ स्नानं वासो भूषणं गन्धमाल्ये धूपो दीपः सोपहारः प्रणामः" इति ॥ तत्राशक्तः षडुपचारान्वा कुर्यादित्युक्तम्— "अभ्युत्थानं चासनदानं स्वागतसूक्तिः पाद्यविशेषः। वीजनमक्षतमर्घ्यविधानं षड्विधमुक्तं विप्रहसारे" इति ॥

अथ तद्विधानक्रमः ॥ कर्ता गन्धाक्षतपुष्पव्यजनताम्बूलादीनि संगृह्य प्रणामपूर्वकं सभ्यान्विज्ञापयेत्—"ब्राह्मणेभ्यो महद्भ्यश्च वेदविद्भ्यो विशेषतः। पुराणशास्त्रविद्भ्यश्च सर्वेभ्यो वै नमो नमः ॥ गाम्भीर्यं जलधौ स्थिरत्वमचले तेजोऽधिकं भास्करे शौर्यं शान्तनवे नयः सुरगुरौ त्यागस्तु सूर्यात्मजे। एकैको गुण एव तेषु निहितो युष्मासु सर्वे गुणास्तिष्ठन्त्येव धरा-भरान् हरिपरान् कः स्तोतुमीशः क्षितौ ॥ भवन्तः सर्वज्ञाः सकलभुवने रूढयशसो वयं तावद्बालाः सरसवचने नैव निपुणाः। तथापीयं वाणी विशतु भव तां कर्णकुहरे किशोरस्यालापः खलु भवति पित्रोरतिमुदे ॥ सर्वाशापरिपूरणक्षमकरं सर्वोपकारोदयं सन्मार्गाभिरतं समस्ततमसः प्रध्वंसि सत्यास्पदम्। ब्रह्मावासमशेषवेदनिलयं विद्याधराराधितं प्रख्यातं भुवि भानवीयमिव वो वन्दे सभामण्डलम् ॥ महत्यागदयायुक्तां सत्यभामासमन्विताम्। सुदर्शनधरां वन्दे सभां विष्णोरिवाकृतिम् ॥

विद्वद्वृन्दव्रातसहस्रपूर्णं तथा सहस्रप्रभुरत्नपूर्णम् । वेदान्तवाक्यार्थतरङ्गलोलं सभासमुद्रं प्रणमामि मूर्ध्ना ॥ ॐ यूयं गावो मेदयथा कृशंचित् ॥ अश्लीलं चित्कृणुथा सुप्रतीकम् ॥ भद्रं गृहं कृणुथ भद्रवाचः ॥ बृहद्वो वय उच्यते सभासु ॥ नमः सदसे ॥ नमः सदसस्पतये ॥ नमः सखीनां पुरोगाणां चक्षुषे ॥ नमो दिवे ॥ नमः पृथिव्यै ॥ सप्रथ सभां मे गोपाय ॥ ये च सभ्याः सभासदः ॥ तानिन्द्रियावतः कुरु ॥ सर्वमायुरुपासताम् ॥ अहेर्बुध्निय मन्त्रं मे गोपाय ॥ यमृषयस्त्रयिविदा विदुः ॥ ऋचः सामानि यजूꣳषि ॥ सा हि श्रीरमृतासताम् ॥ नास्ति सत्यात्परो धर्मः सन्तुष्टिर्नात्मजात्परा । नान्नदानात्परं दानं वन्दनान्नोपचारकम् " इत्यादि-यथाचारं विज्ञाप्य नमस्कृत्वा वरपूर्वान् सभ्यान् गन्धादिभिर्यथोपपादमभ्यर्चयेत् ॥ ॥ इति सभापूजा ॥

## ॥ अथ वाग्दानम् ॥

वाग्दानम् ॥ ( बो. गृ. सू. १. १. १४–१७ ) " उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे युग्मान् ब्राह्मणान्वरान्प्रहिणोति— 'प्रसुग्मन्ता० बुबोधति ' इति । यतोऽनुमन्त्रयते— ' अनृक्षरा० देवाः ' इति । अथ यदि दक्षिणाभिः सह दत्ता स्यात् नात्र वरान् प्रहिणुयात् । तां प्रतिगृह्णीयात्— ' प्रजापतिः स्त्रियां यशः ' इत्येताभिः षड्भिरनुच्छन्दसम् " ॥

प्रयोगचिन्तामणौ—" ततः स कन्यावरणाय युग्मानभ्यर्च्य विप्रान् विधिवद्विशिष्टान् । प्रसुग्मपूर्वं समुदीर्य मंत्रं सम्प्रेषयेत्तज्जनकं प्रतिप्राक् ॥ अनृक्षरेति प्रजपेच्च यातान् ते तस्य गोत्रप्रवरानुदीर्य । वरर्क्षयोगादिगणानुकूलां वृणीमहे त्वत्त-नुज्ञां वदेयुः ॥ कन्याप्रदस्तज्जननर्क्षकूटगोत्रादिकं चानुगुणं विचार्य । त्रिपूरुषोद्देश्यमुदीर्य कन्यां वृणीध्वमित्येव वदेत्स तेभ्यः"

इति ॥ अत्र शचीपूजामाह सं० मालायां कश्यपः—" आदौ कृत्वा शचीपूजां पश्चात्सर्वं समाचरेत् " इति ॥ अयं वाग्दानविधिः सूत्रे विवाहारम्भात्पूर्वमेवोक्तः ॥ प्रयोगचिन्तामणौ तिलके च वधूगृहे वरगमनानन्तरं प्रोक्तस्तस्मादयं यथाचारं यथानुकूलं कार्यः ॥ विवाहात्प्राक्करणपक्षे मासर्क्षादिकं विचारणीयम् ॥ तच्चोक्तं सं० मालायाम्—" विश्वर्क्षपूर्वात्रयकर्णयुग्माश्विन्यग्निमैत्रैश्च विवाहभैर्वा । प्रत्यङ्मुखस्तां वरयेत्कुमारीं फलादिभिः प्राग्वदनां सुवेषाम् " इति ॥ स्मृत्यन्तरे च—" कुर्याद्वैवाहिके मासि वाग्दानं द्विजसत्तमः । धिष्ण्ये वैवाहिके चैव मण्डपादि समाचरेत् " इति ॥ धिष्ण्ये नक्षत्रे इत्यर्थः ॥

अथ प्रयोगः ॥ वरः शुभे मुहूर्ते कन्यां वरयितुं प्रशस्तान् युग्मान् ब्राह्मणान् सम्पूज्य प्रहिणोति– " प्रसुग्मन्ता धियसानस्य सक्षणिं वरेभिर्वराꣳ अभिषु प्रसीदत । अस्माकमिन्द्र उभयं जुजोषति यत्सौम्यस्यान्धसो बुबोधति" इति ॥ गच्छतस्ताननुमंत्रयते— " अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् । समर्यमा संभगो नो निनीयात्सञ्जास्पत्यꣳ सुयममस्तु देवाः " इति ॥ अथ ते ब्राह्मणा वरबन्धुभिः पुरन्ध्रीभिः सह मङ्गलवस्त्राभरणफलताम्बूलादीनि गृहीत्वा शकुनदर्शनपूर्वकं वधूगृहं गत्वासनेषूपविश्य कन्यादातारं ब्रूयुः—" अमुकप्रवरान्वितामुकगोत्रोद्भवायामुकशर्मणः प्रपौत्रायामुकशर्मणः पौत्रायामुकशर्मणः पुत्रायामुकनक्षत्रजनितायामुकशर्मणे वराय, अमुकप्रवरान्वितामुकगोत्रोद्भवाममुकशर्मणः प्रपौत्रीममुकशर्मणः पौत्रीममुकशर्मणः पुत्रीममुकनक्षत्रोत्पन्नाममुकनाम्नीं कन्यां भार्यात्वाय वृणीमहे " इति ॥ अथ दाता भार्याज्ञातिबन्ध्वाद्यनुमतिं प्राप्य " वृणीध्वम् " इति प्रतिब्रूयात् ॥ एवं पुनर्द्विः प्रयुज्य दाता " प्रदास्यामि " इति चोच्चैस्त्रिर्वदेत् ॥ ततो वरपित्रादिः कन्यां प्राङ्मुखीमुपवेश्य हस्ते फलताम्बूलादि दत्वा गन्धाक्षतमङ्गलवस्त्राभरणादिभिर्यथाचारमभ्यर्चयेत् ॥ ब्राह्मणाश्च " सुमङ्गलीरियं

वधूरिमाᳬसमेत पश्यत । सौभाग्यमस्यै दत्वा याथास्तं विपरेतन ॥ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ अहेर्बुध्निय मन्त्रं० सताम् " इत्याद्याशिषः प्रयुञ्जीरन् ॥ अथ दाता कन्यावामतः प्राङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य अस्याः कुमार्याः करिष्यमाणविवाहाङ्गभूतं वाग्दानं करिष्ये, इति सङ्कल्प्य निर्विघ्नतासिध्यर्थं गणपतिं सम्पूज्य स्वस्थाने कन्यावरयितारं ( वरपित्रादिं ) प्राङ्मुखमुपवेश्य स्वयं तत्पुरतः प्राङ्मुख उपविश्य तं गन्धाक्षतपुष्पताम्बूलादिभिः पूजयेत् ॥ स चैवमेव दातारं पूजयेत् ॥ ततो दाता यथाचारं हरिद्राखण्डपूगीफलताम्बूलानि गन्धाक्षतालंकृतानि गृहीत्वा " अमुकप्रवरान्वितामुकगोत्रोद्भवायामुकशर्मणः प्रपौत्रायामुकशर्मणः पौत्रायामुकशर्मणः पुत्रायामुकशर्मणे वराय, अमुकप्रवरान्वितामुकगोत्रोद्भवाममुकशर्मणः प्रपौत्रीममुकशर्मणः पौत्रीममुकशर्मणः पुत्रीममुकनाम्नीं कन्यां ज्योतिर्विदादिष्टे सुमुहूर्ते दास्ये, वाचा सम्प्रददे " इत्युक्त्वा " अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते । इमां कन्यां प्रदास्यामि देवाग्निद्विजसान्निधौ " इति कन्यावरयितुर्वस्त्रप्रान्ते तानि हरिद्राखण्डादीनि निक्षिप्य बध्वा—" नयँ प्रजां मे गोपाय " इत्यादिप्रतिष्ठामन्त्रैः प्रतिष्ठाप्य ग्रन्थिं गन्धादिभिरभ्यर्चयेत् ॥ अथ वरयिताप्येवमेव हरिद्राखण्डादीनि गृहीत्वा " अमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशर्मवरविषये भवन्तो निश्चिता भवन्तु " इत्युक्त्वा कन्यादातुर्वस्त्रप्रान्ते निक्षिप्य बध्वा तथैव ग्रन्थिं गन्धादिभिरभ्यर्चयेत् ॥ ततो दाता " वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया । कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव " इति कन्यावरयितारं प्रतिवदेत् ॥ वरयितापि " वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया । वरावलोकनविधौ निश्चितस्त्वं सुखी भव " इति दातारं प्रतिवदेत् ॥ ( भ्रात्रादौ वरयितरि भ्रात्रर्थं मित्रार्थमित्याद्यूहः कार्यः ) ॥ ततो ब्राह्मणाः—

"शिवा आपः सन्तु। सौमनस्यमस्तु। अक्षतं चारिष्टं चास्तु। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु। एतद्वः सत्यमस्तु" इत्युक्त्वा "आयुराशास्ते। सुप्रजास्त्वमाशास्ते। सजातवनस्यामाशास्ते। उत्तरां देवयज्यामाशास्ते। भूयो हविष्करणमाशास्ते। दिव्यं धामाशास्ते। विश्वं प्रियमाशास्ते। यदनेन हविषाशास्ते। तदस्यात्तदृध्यात्। तदस्मै देवा रासन्ताम्। तदग्निर्देवो देवेभ्यो वनते। वयमग्नेर्मानुषाः। इष्टं च वीतं च। उभे च नो द्यावापृथिवी अꣳहसस्पाताम्। इह गतिर्वामस्येदं च। नमो देवेभ्यः" इति मन्त्रं "अग्निरायुष्मान्" इति पंच मन्त्रांश्च पठेयुः॥ ततो दाता विवाहसौभाग्याभिवृध्यर्थं शचीपूजां कुर्यात्॥ पात्रस्थसिततण्डुल-पुञ्जे "सुवर्णवर्णां कञ्जाक्षीं दिव्यस्रग्वस्त्रशोभिताम्। सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम्॥ अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम्। विलासिनीं सहस्रौघैः सेव्यमानामहर्निशम्" इति शचीं ध्यात्वाऽवाह्य षोडशोपचारैरभ्यर्चयेत्। वधूश्च तामेवं प्रार्थयेत्—"देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि। वैवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे" इति॥ ततः पुरन्ध्र्यो नीरा-जनादिमाङ्गलिकं कुर्युर्विप्राश्च गन्धादिभिरर्चिता आशीर्मन्त्रान्पठेयुः॥ दाता "अनेन वाग्दानकर्मणा श्रीपरमेश्वरः प्रीयताम्" इति कर्म समापयेत् इति॥ ॥ इति वाग्दानप्रयोगः॥

अथ यक्षितमीबलिः॥ (बौ. गृ. सू. ३.११) "अथेमे देवते प्रबाधिन्यावुद्वाहकाले यक्षितम्यौ भवतस्तयोस्तदुप-कृतं भवति यत्सर्पबलौ। अपां समीपे द्वे स्त्रीप्रतिकृतीकृत्य गन्धैर्माल्येन चालङ्कृत्यैवमेवाभ्यर्चयति॥ तयोरर्चनमन्त्रः—'ते सूनवस्व-पसस्सुदंससो मही जज्ञुर्मातरापूर्वचित्तये। स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः॥ ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा। नव्यं नव्यं तन्तुमातन्वते दिवि समुद्रे अन्तः कवयः सुदीतयः' इति॥

अथैते उपसङ्गृह्य पार्श्वे दत्वा प्रत्राह्य त्रिवृताग्नेन ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा व्याख्यातो यक्षीबलिः" ॥

अथ प्रयोगः ॥ विवाहे विघ्नोपशान्त्यर्थं वरो जलसमीपे द्वे स्त्रीप्रतिकृती कृत्वा "ते सूनवः, ते मायिनः" इति द्वाभ्यां क्रमेण यक्षिं तमां चावाह्य गन्धादिभिरभ्यर्च्य ॥ ताभ्यामेव मन्त्राभ्यां बलिं दत्वा "यक्षितमे प्रीयेताम्" इति पुण्याहं वाचयेत्, इति गृह्ये यक्षितमीबलिर्विहितः स च वाग्दानात्पूर्वमनन्तरं वा कार्यः ॥ ॥ इति यक्षितमीबलिः ॥

## ॥ अथ मधुपर्कः ॥

( बो. गृ. सू. १·२ ) "आवेद्यार्घ्यं कुर्यात्। मध्येऽगारस्योदीचीनप्रतिषवणा एरका उपस्तृणाति। तास्वहतानि बहुगुणान्युत्तरदशानि वासांस्यास्तीर्य तेष्वृत्विजः प्राङ्मुखा उपविशन्ति। उत्तरपूर्वे देशेऽगारस्य प्राक्कूलान्दर्भान् संस्तीर्य तेष्वर्घ्यद्रव्याणि संसादयति। यावन्त ऋत्विजस्तावन्ति कांस्यानि पात्राणि सापिधानानि तावतः कूर्चान्। द्वावन्यौ परिग्रहणीयौ कूर्चौ। दधि मधु घृतमापः पयो वस्त्रयुगानि कुण्डलयुगानि। यस्यै गोः पयश्चमसः स्रगलङ्करणीयं चेति पवित्रे कृत्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य कूर्चे कांस्यं निधाय तिरः पवित्रं मध्वानयति। दधि पयो वा द्वितीयं स द्विवृत्। घृतं तृतीयं स त्रिवृत्। यद्द्वितीयं तच्चतुर्थं स चतुर्वृत्। आपः पञ्चमीः स पाङ्क्तः। वर्षीयसा तेजोमयेनापिधाय नानापुरुषा अर्घ्यद्रव्याण्याददते अन्वगनुसंव्रजंतः। 'कूर्चः' इति कूर्चं प्राह। तत् 'सुकूर्चः' इतीतरः प्रतिगृह्णाति। तं प्रदक्षिणं पर्यस्योदगावृत्त उपविशति। पुरस्ताद्वैनं प्रत्यञ्चमुपोहते—'राष्ट्रभृत० द्योषम्' इति। अथास्मा उदपात्रमादाय कूर्चाभ्यां परिगृह्य 'पाद्या आपः' इति प्राह। ता अभिमन्त्रयते—'आपः पादा० सानि' इति। दक्षिणं पादं पूर्वं ब्राह्मणाय प्रसारयति। सव्यं शूद्राय। स्त्री प्रक्षाळयति पुमान-

भिषिञ्चति। विपरीतमित्येके। नियमात् पत्नीयजमानौ जङ्घ धावयतः। अवनेक्तुः पाणी सम्मृशति—'मयि महो० यशः' इति। अथाप उपस्पृश्य 'मयीन्द्रियं वीर्यम्' इत्युरः प्रत्यात्मानं प्रत्यभिमृशते॥ अपो व्रीहिभिर्यवैर्वा समुदायुत्य तथैव कूर्चाभ्यां परिगृह्य 'अर्हणीया आपः' इति प्राह। ता अभिमन्त्रयते—'आ म आगात्० पशूनाम्' इति। एकदेशमञ्जलावानीयमानमनुमन्त्रयते—'विराजोसि० विराजः' इति। अतिशिष्टाः पराचीर्नीयमाना अनुमन्त्रयते—'समुद्रं वः० चिमत्पयः' इति। अथ तथैव कूर्चाभ्यां परिगृह्य 'उपस्तरणीया आपः' इति प्राह। ताः पिबति—'अमृतोपस्तरणमसि' इति। त्रिराचामेत् त्रिः परिमृजेत्। द्विरित्येके॥ आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्य 'अर्घ्यः' इति प्राह 'मधुपर्कः' इति वा। मधुपर्कं प्रोक्तमनुमन्त्रयते—'त्रय्यै विद्यायै० पशूनाम्' इति। तमुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति—'देवस्य त्वा० प्रतिगृह्णामि' इति। तस्मिंश्चित् किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति—'नेष्टा० वयं द्विष्मः' इति। अथाप उपस्पृश्य सर्वाभिरङ्गुलीभिस्समुदायुत्य प्राश्नाति—'यन्मधुनो०' इति। त्रिः प्राश्य त्रिरनुपिबेच्छेषं च कुर्यात्। यमात्मनः श्रेयांसमिच्छेत्तस्मै शेषं दद्यादिति। आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्य 'अपिधानीया आपः' इति प्राह। ताः पिबति—'अमृतापिधानमसि' इति। त्रिराचामेत् त्रिः परिमृजेत्। द्विरित्येके। आचान्तायापावृत्ताय 'गौः' इति गां प्राह। तामनुमन्त्रयते-'गौरस्यपहतपाप्माऽप पाप्मानं नुद मम चामुष्य च' इत्युपवेत्तुर्नाम गृह्णाति॥ नाना मर्त्विग्भ्यो गाः प्राह। एकां होतृकेभ्यः। सर्वेभ्यो वैकामविभवत्वात्॥ यः प्राह तस्मा उपाकरोत्येकदेशं वपायै जुहोति- 'अग्निः प्रथमः प्राश्नातु० चर्षणिः' इति। एकदेशमुपहरति तत्प्राश्नाति—'अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः। अरिष्टमस्माकं कृणोत्वसौ ब्राह्मणो ब्राह्मणेषु' इति। अथ यदुत्स्रक्ष्यन् भवति तामनुमन्त्रयते-'गौर्धेनुर्भव्या० ओमुत्सृजत' इति। तस्यामुत्सृष्टायां मेषमजं वाऽऽलभते। आरण्येन वा मांसेन। नत्वेवामांसोऽर्घ्यः

स्यात् । अशक्तौ पिष्टान्नं संसिध्येत् । सिद्धे 'भूतम्' इति प्राह ॥ तत् 'सुभूतम्' इति वरः प्राह ॥ तदभिमन्त्रयते–'भूतं सुभूतं० ओंकल्पयत' इति । 'चतुरो नानागोत्रान्ब्राह्मणान्भोजयत' इत्येव ब्रूयात् । तेषु भुक्तवत्स्वन्नमस्मा उपहरति । तत्प्राश्नाति–' विराड-सि० धेहि' इति । भुक्तवद्भ्यो वस्त्रयुगानि कुण्डलयुगानि यस्यै गोः पयश्चमसः स्रगलङ्करणीयमिति च दद्यात् ॥ एकधनं पष्ठौहीं दद्यादित्येके ॥ प्राङ्मधुपर्कादलङ्करणमेके समामनन्ति । महयेदृत्विजमाचार्यं चात्मानं वा । एष महयति यस्त्वमृत्विजमाचार्यं च महयत्येवमेवंव्रता वा आत्यन्तिकास्स्युः पतितोऽननूचान इति निमित्तानि । वरणेऽग्न्याधेयप्रभृतिषु चैषामृत्विजं स्मरेत् । तथैते अर्घ्या ऋत्विक् श्वशुरः पितृव्यो मातुल आचार्यो राजा वा स्नातकः प्रियो वरोऽतिथिरिति । संवत्सरपर्यागतेभ्य एवं कुर्यात् विवाहे वराय । अथर्त्विग्भ्यः कर्मणिकर्मणि ददाति" ॥

मधुपर्को वरशाखया कर्तव्य इत्युक्तमाश्वलायनेन—" वरस्य या भवेच्छाखा तच्छाखा गृह्यचोदितः । मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि" इति ॥ अत्र वर इत्यर्घ्यस्योपलक्षणम् ॥ मधुपर्के विनियोजकः श्लोकः संगृहीतो विष्णुभट्टेन— "कूर्चपाद्यार्हणीयोपस्तरणीयाः क्रमेण तु । मधुपर्कोऽपिधानीयं गौर्भूतं वस्त्रकुण्डले" इति ॥ अत्र विनियोज्यकूर्चमाह सिङ्गाभट्टः— "कूर्चं तु त्रिविधं प्रोक्तमुत्तमाधममध्यमम् । नवभिः पञ्चभिर्दर्भैः सप्तभिर्ग्रन्थिसंयुतम्" इति ॥

अथ प्रयोगः ॥ कन्यादाता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य कन्यार्थिनमागतमिमं स्नातकं[1] वरं मधुपर्केणार्हयिष्ये, इति सङ्कल्प्यागारस्योत्तरपूर्वे देशे प्रागग्रान् दर्भानास्तीर्य तेष्वर्घ्यद्रव्याण्यासादयति--कांस्यपात्रं सापिधानमासनार्थमेकं कूर्चं द्वावन्यौ परिग्रहणीयौ कूर्चौ दधि मधु घृतमापः पयो वस्त्रयुगं कुण्डलयुगं स्रगलङ्करणीयं चेति ॥ अथ पवित्रे कृत्वा तूष्णीं

१ द्वितीयादिविवाहे तु स्नातकपदं वर्जनीयम् ॥

संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा त्रिः प्रोक्ष्य कूर्चे कांस्यपात्रं निधाय तस्मिंस्तिरः पवित्रं मध्वानयति। दधि पयो वा द्वितीयं स द्विवृत्। घृतं तृतीयं स त्रिवृत्। यद्द्वितीयं तच्चतुर्थं स चतुर्वृत्। दिवा दधि पयो नक्तं द्वितीयन्तु निनीय च। आपः पञ्चमीस्स पाङ्क्तः॥ एवं मध्वादीनि संयोज्य वर्षीयसा तेजोमयेन पात्रेणापिधाय वरसमीपं गच्छति॥ नानापुरुषा अर्घ्यद्रव्याण्यादाय कर्तारमनुगच्छेयुः। अथ कर्ता वरायासनार्थं "कूर्चः" इति कूर्चं ददाति। वरो द्विराचम्य "सुकूर्चः" इति तं प्रतिगृह्य प्रदक्षिणं परिभ्राम्योदगग्रमासने निधायोपविशति— "राष्ट्रभृदस्याचार्यासन्दीमात्वद्योषम्" इति॥ अथ कर्तोदपात्रं कूर्चाभ्यामधस्ताच्चोपरिष्टाच्च संगृह्य "पाद्या आपः" इति प्राह॥ ता वरोऽभिमन्त्रयते— "आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे। अस्मिन् कुले ब्रह्मवर्चस्यसानि" इति॥ दक्षिणं पादं पूर्वं प्रसारयति। तं स्त्री प्रक्षालयति पुमानभिषिञ्चति॥ विपरीतमित्येके॥ नियमात्पत्नीयजमानौ जङ्घे धावयतः॥ वरोऽवनेजकस्य पाणी सम्मृशति— "मयि महो मयि भगो मयि भर्गो मयि यशः" इति॥ अप उपस्पृश्यात्मन उरोऽभिमृशति—"मयीन्द्रियं वीर्यम्" इति॥ अत्रोभाभ्यामप्याचमनं कार्यम्॥ अथ कर्ता व्रीहिभिर्यवैर्वाऽपः समुदायुत्य तथैव कूर्चाभ्यां परिगृह्य "अर्हणीया आपः" इति प्राह॥ वरस्ता अभिमन्त्रयते— "आम आगाद्वर्चसा यशसा स ँ सृज पयसा तेजसा च। तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्" इति॥ तदेकदेशमञ्जलावानीयमानमनुमन्त्रयते— "विराजोऽसि विराजो दोहमशीय मम पद्याय विराजः" इति॥ अतिशिष्टाः पराचीर्निनीयमाना अनुमन्त्रयते—"समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत। अच्छिद्रः प्रजया भूयासं मापरासिचिमत्पयः" इति॥ ततः कर्ता तथैवोदपात्रं कूर्चाभ्यां परिगृह्य "उपस्तरणीया आपः" इति प्राह॥ वरस्ताः पिबति— "अमृतोपस्तरणमसि" इति॥

त्रिराचम्य मुखं त्रिः परिमृजेद्द्विरित्येके ॥ अथ कर्ता मधुपर्कपात्रं तथैव कूर्चाभ्यां परिगृह्य "अर्घ्यः" इति प्राह "मधुपर्कः" इति वा ॥ वरो मधुपर्कं प्रोक्तमनुमन्त्रयते—"त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि ॥ तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्" इति ॥ तमुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि" इति ॥ तस्मिन्यत्किञ्चित्पतितं तृणादिकमङ्गुष्ठानामिकाभ्यामुपसंगृह्य नैर्ऋत्यां दिशि निरस्यति—"नेष्टा विद्धि कृन्तामि या ते घोरा तनूस्तया तमाविश योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः" इति ॥ अथाप उपस्पृश्य सर्वाभिरङ्गुलीभिः समुदायुत्य प्राश्नाति—"यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम्। तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादो मधव्योऽसानि" इति सकृन्मन्त्रेण द्विस्तूष्णीं प्राश्य पुनः पात्रेण त्रिस्तूष्णीं पीत्वा शेषमात्मनः प्रियाय दद्यात् ॥ ततः कर्तोदपात्रं तथैव कूर्चाभ्यां परिगृह्य "अपिधानीया आपः" इति प्राह ॥ वरस्ताः पिबति—"अमृतापिधानमसि" इति ॥ तथैव त्रिराचम्य त्रिर्द्विर्वा मुखं परिमृजेत् ॥ अथ कर्ता "गौः" इति गां दर्शयति। वरस्तामनुमन्त्रयते—"गौरस्यपहतपाप्मापपाप्मानं नुद मम च अमुष्य च" इति दातुर्नाम षष्ठ्यन्तं गृह्णाति ॥ ततस्तामुत्सृजति—"गौर्धेनुर्भव्या माता रुद्राणां दुहिता वसूनाꣳ स्वसादित्यानाममृतस्य नाभिः। प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ पिबतूदकं तृणान्यत्तु। ओमुत्सृजत" इति ॥ अथ कर्तास्मै सिद्धं पिण्डान्नं "भूतम्" इति प्राह ॥ वरः "सुभूतम्" इत्युक्त्वा तदभिमन्त्रयते—"भूतꣳ सा विराट् तन्माक्षायि तन्मेऽशीय तन्म ऊर्जं धाः। ओं कल्पयत" इत्यभिमन्त्र्य "चतुरो नानागोत्रान् ब्राह्मणान् भोजयत" इति ब्रूयात् ॥ तेषु भुक्तवत्सु तदन्नशेषमस्मै वरायोपहरति ॥ वरस्तत्प्राश्नाति—"विराडसि विराडन्नं विराड्विराजो मयि धेहि" इति ॥ ततः कर्ता वराय वस्त्रयुगं कुण्डल-

युगं यस्या गोः पयस्तां गां चमसं स्रजमलङ्करणीयमुपवीतं फलं चेति यथासम्भवं दत्वा कर्मेश्वराय समर्पयेत् ॥ ॥ इति मधुपर्कः ॥

## ॥ अथ निरीक्षणम् ॥

(बो. गृ. सू. १. १. २४-२७) "स्नातोऽहतवासोगन्धानुलिप्तः स्रग्वी भुक्तवान् प्रतोदपाणिरपदातिर्गत्वा वधूज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससां गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां दत्तां वधूं समीक्षते— 'अभ्रातृघ्नीं०' इति ॥ तयेक्ष्यमाणो जपति—'अघोरचक्षुः०' इति। अथैनामन्तरेण भ्रूमुखे दर्भेण सम्मार्ष्टि—'इदमहं०' इति ॥ दर्भं निरस्याप उपस्पृश्य"॥

तत्र विशेष उक्तः प्र० पारिजाते—"स्नातालंकृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः। ईक्षेत तण्डुलस्थाया वरस्तस्य मुखं च सा ॥ मुहूर्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः। सगुडं जीरकं कन्यां वृणुयादथ तां वरः" इति ॥ तण्डुलमानमाह तत्रैव यमः—"आरुह्य तण्डुलप्रस्थमीक्षेत्प्रत्यङ्मुखो वधूम्" इति ॥ स्मृत्यन्तरे तु—"द्रोणप्रमाणे सिततण्डुलानां चारुह्य राशौ वरयेत्कुमारीम्" इत्युक्तम् ॥

अथ प्रयोगः ॥ यथाचारमलंकृते मण्डपे पूर्वापरभागयोर्हस्तान्तरालौ द्वौ सिततण्डुलराशी कृत्वा मध्ये कुङ्कुमादिकृतस्वस्तिकाङ्कितमन्तःपटमुदग्दशं धारयेयुः ॥ तत्र पूर्वराशौ तण्डुलगुडजीरकप्रतोदहस्तो वरः प्रत्यङ्मुखस्तिष्ठेत् ॥ अथ कन्यादाता पत्नीसहितोऽलंकृतां तण्डुलगुडजीरकेषुहस्तां कन्यां "देवीं वाचमजनयन्त० ॥ ध्रुवं ते राजा० ॥ स्वस्ति नो मिमीतां०" इत्यादि मङ्गलमन्त्रगीततूर्यादिनिर्घोषपुरस्सरं मण्डपमानीय पश्चिमतण्डुलराशौ प्राङ्मुखीमवस्थापयति ॥ तौ वधूवरौ मनसेष्टदेवतां ध्यायन्तौ

---

१. "उपवीतं फलं पुष्पं वासांसि विविधानि च। देयं वराय वरणे कन्याभ्रात्रा द्विजेन वा" इति निर्णयसिन्धौ चण्डेश्वरः ॥

समाहितौ तिष्ठेताम् ॥ तदानीं ब्राह्मणा मङ्गलसूक्तं पठेयुर्ज्योतिर्विदो[1] मङ्गलाष्टकपठनपूर्वकं तदेव लग्नं सुदिनमिति सुमुहूर्तं ब्रूयुः ॥ अथ ज्योतिर्विदादिष्टे सुमुहूर्तेऽन्तःपटमुदगपसार्य कन्यावरौ परस्परं कण्ठे पुष्पमालां[2] प्रतिमुच्य तण्डुलगुडजीरकाश्चावकिरेताम् ॥ ततो वरः कन्यामीक्षते—"अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पते। इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितुः सुव" इति ॥ तया वध्वा वीक्ष्यमाणो जपति— "अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः। जीवसूर्देवकामाः स्योना शं नो भव द्विपदे शं चतुष्पदे" इति ॥ अथास्या भ्रुवोर्मध्यं दर्भेण सम्मार्ष्टि—"इदमहं या त्वयि पतिघ्न्यलक्ष्मीस्तां निर्दिशामि" इति ॥ दर्भं निरस्याप उपस्पृश्य प्रदक्षिणमावृत्य पश्चिमतण्डुलराशिस्थपीठे प्राङ्मुख उपविशति ॥ एवमेव वधूः पूर्वराशिस्थपीठे प्रत्यङ्मुख्युपविशति, दक्षिणतः पुरोधाः इति ॥ ॥ इति निरीक्षणम् ॥

अथ मङ्गलाष्टकम् ॥ देवो विघ्नविनाशनो गणपतिर्ध्यातश्च चित्तापहृद्यन्नत्या हृतविघ्नका अपि सुरा जाता हराजादयः। योऽत्राविघ्नसुसंज्ञया च कलशे संस्थापितो मण्डपे सिध्याश्लेषणहर्षितः स उभयोः कुर्यात्सदा मङ्गलम् ॥ १ ॥ वात्सल्यात्पितरौ कपोलयुगलं स्वस्याऽऽगतौ चुम्बितुं दृष्ट्वाऽऽकुञ्चितमास्यपद्ममलं सेषत्स्मितं सत्वरम्। अन्योन्यं शिवयोस्ततः सुवदने युक्ते अभूतां तयोरित्थं येन विनोदितौ स भगवान्कुर्यात्सदा मङ्गलम् ॥ २ ॥ विघ्नेशो विबुधर्षिभिर्गणपतिर्दैतेयजोपद्रवाद्भीतैः प्रार्थित ईश्वरोऽपि कुतुकाद्धृत्वा वपुः शैशवम्। पार्वत्योकसि शैशवानि चरितान्यत्युत्कटान्याचरन्देवो हर्षयतीश्वरौ स भगवान्कुर्यात्सदा मङ्गलम् ॥ ३ ॥ योऽपर्णाङ्कसुतल्पके स्थित उभौ पीत्वा स्तनौ सत्वरं शुण्डाग्रेण मुखेन चाऽऽशु युगपद्बालो विभुर्विघ्नराट्।

---

१. वधूवरयोः पित्रादिः पूर्वमेव वाग्दानकाले ज्योतिर्विदं वस्त्रादिभिरभ्यर्च्य मुहूर्तं गृह्णीयादित्याचारः ॥ २. "कण्ठे मिथः शुभां मालां दम्पती प्रतिमुञ्चतः" इति प्र० पारिजाते ॥

स्मेरास्यः कुतुकाद्धिमाचलसुतोत्सङ्गाद्धरोत्सङ्गके गच्छन्नाशु हरन्मनः स शिवयोः कुर्यात्सदा मङ्गलम् ॥ ४ ॥ यो देवस्य शिवस्य ताण्डवविधौ हर्षामदायाऽऽगतैः कूजद्भिर्भ्रमरैर्युतं कममलं स्वीयं धुनानो विभुः । कुर्वन्वल्गु सुभाषणं स्खलदथो हास्यं तनोतीश्वरो नाट्यं चैव मुदावहं स भगवान्कुर्यात्सदा मङ्गलम् ॥ ५ ॥ यो विघ्नोऽङुपनायनाभिधविधौ दत्तेऽद्रिपुत्र्या शुभे पात्रे भिक्षितुमाहृतेषु विबुधैर्ब्रह्मारविन्द्रादिभिः । नानोपायनकेषु तत्र सुरराड्दर्पं वि( द्य ) पास्य क्रमाद्धर्मान्वर्णिन आचरत्यहरहः कुर्यात्सदा मङ्गलम् ॥ ६ ॥

श्रीमान्काश्यपगोत्रजोऽरुणरुचिर्यः सिंहराशीश्वरः षट्त्र्याशास्थसुशोभनो गुरुकुजाब्जानां च मित्रं रविः । दैत्येणमन्द-रिपुः कलिङ्गजननश्चाग्नीश्वरौ देवते मध्ये वर्तुलगैन्द्रिकास्युवदनः कुर्यात्सदा मङ्गलम् ॥ १ ॥ चंद्रः कर्कटकप्रभुः सितरुचिश्चात्रेय-गोत्रोद्भवश्चाग्नेय्यां चतुरस्रगोऽप्पतिदिशास्यश्चावुमादैवतः । षट्सप्ताग्निदशैकशोभनकलो ज्ञारिः कुजार्कप्रियः कालिन्दीतटदेशजो हिमकरः कुर्यात्सदा मङ्गलम् ॥ २ ॥ भौमो याम्यमुखोऽरुणो यमदिशि त्र्यस्रे स्थितोऽवन्तिजः स्वामी वृश्चिकमेषयोः सुरगुरोरर्कस्य चेन्दोः प्रियः । ज्ञारिः षट्त्रिफलप्रदश्च वसुधास्कन्दौ क्रमाद्दैवते भारद्वाजकुलोद्भवः क्षितिसुतः कुर्यात्सदा मङ्गलम् ॥ ३ ॥ ज्ञः पीतो मगधेश उत्तरमुखश्चात्रियगोत्रोद्भवो बाणस्थोत्तरगः प्रियौ रविसितौ शत्रुः स वै शीतगोः । कन्यायुग्मपतिर्दशाष्टगचतुःषण्नेत्रगः शोभनो विष्णू द्वावधिदेवते च शशिजः कुर्यात्सदा मङ्गलम् ॥ ४ ॥ जीवः सिन्धुपतिर्विधिः सुरपतिर्देवौ धनुर्मीनयोः स्वामी त्वाङ्गिरसस्तथोत्तरमुखो दीर्घे स्थितश्चोत्तरे । सूर्येन्दुक्षितिजप्रियौ बुधसितौ शत्रू च पीतप्रभो बाणद्व्यद्रिषु चाङ्कके च शुभदः कुर्यात्सदा मङ्गलम् ॥ ५ ॥ शुक्रो भार्गवगोत्रजः सितरुचिः प्राचीमुखः पूर्वतः पञ्चास्रे वणिजो वृषस्य च पतिर्भोजाख्यदेशोद्भवः । इन्द्राणीन्द्रसुदैवतो ज्ञरविजौ राती अरातिः शशी सूर्यः सप्तदशार्तुके च शुभदः कुर्यात्सदा मङ्गलम् ॥ ६ ॥ मन्दः कृष्णरुचिश्च

वारुणिमुखः सौराष्ट्रजः काश्यपः स्वामी वै मृगकुम्भयोर्भृगुबुधौ मित्रे रविन्दू रिपू। स्थानं पश्चिमदिक्प्रजापतियमौ देवौ स्थितः कार्मुके षट्त्रिस्थः शुभकृच्छनी रविसुतः कुर्यात्सदा मङ्गलम् ॥ ७ ॥ राहू राठिनपूर्भवोऽथ दितिजः कृष्णश्च शूर्पासनो यः काला- हिसुदैवतो यमदिशावक्रश्च नीलप्रभः । रक्षोदिक्स्थकरालरुक्कुटिलहृत्पैठीनसेर्वंशजः षट्त्रिस्थश्शुभकृच्च वर्बरपतिः कुर्यात्सदा मङ्गलम् ॥ ८ ॥ केतुर्जैमिनिगोत्रजोऽनिलदिशासंस्थाः कुजेन्दुप्रियश्चित्रत्विड्ध्वजपीठगो यमदिशावक्रः करालास्यकः । ब्रह्मा चैव तु चित्रगुप्तसहितो यस्याधिदेवः कदः षट्त्रिस्थश्च सुवेदिदेशजननः कुर्यात्सदा मङ्गलम् ॥ ९ ॥

## ॥ अथ कन्यादानम् ॥

तत्र नियमविशेष उक्तः सं० मालायाम्—" भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ॥ उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥ कन्यादानं निशीथे चेद्दिवा भोजनमिष्यते ॥ काले स्नानं प्रकुर्वीत कन्यां दद्याद्वराय तु " इति " वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् । नाम सङ्कीर्तयेद्विद्वान् कन्यायाश्चैवमेव हि " इति च ॥ तद्विधिरुक्तः गृ० संग्रहे—" ततः कन्याप्रदातृभ्यां द्विः प्रक्षाळितपादयोः । क्षीराज्याभ्यां च तूर्ष्णीं वा तत आचान्तयोस्तयोः ॥ कृताञ्जली द्वयोर्हस्तौ तण्डुलैर्द्विः प्रपूरयेत् । ससुवर्णे वधूहस्ते वरहस्तोपरिस्थिते ॥ इडादि जप्त्वोदकुम्भधरः कृत्वा प्रदक्षिणम् । प्रदाता सन्ततां धारामों कन्या तारयत्विति ॥ प्रदद्यात् त्रिस्तथैवान्ते सह धर्मः प्रचर्यताम् । इति द्वयोः करासक्ततण्डुलारोपणे कृते । पितरौ तौ वरायैनां वधूमर्पयतस्तथा " इति ॥ कारिकान्तरे—" वरस्तु प्राङ्मुखस्तिष्ठेद्वधूः प्रत्यङ्मुखी भवेत् । उदङ्मुखी च जननी कन्यादाने त्वयं विधिः ॥ तिष्ठन् दाता हिरण्याद्भिः सह दद्याद्वराय ताम् " इति ॥

अथ प्रयोगः ॥ कन्यादाता वधूवरयोर्दक्षिणतस्सपत्नीकः उदङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "अमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशर्माहं मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादि कन्यादानकल्पोक्तफलप्राप्तये अनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान् द्वादशपरांश्च पुरुषान्पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना यथाशक्त्यलङ्कृतकन्यादानमहं करिष्ये" इति कुशाक्षतजलहस्तः सङ्कल्प्य तत्र जलशुध्यर्थं प्रागग्रानुदगग्रान् वा दर्भानास्तीर्य तेषु तैजसं जलपूर्णं कलशं निधाय व्रीहियवानोप्य गन्धपुष्पादिभिरलङ्कृत्य दूर्वापल्लवैर्मुखमवस्तीर्य "आपो हि ष्ठा" इति त्रिभिरभिमंत्र्य "गङ्गे च यमुने चैव" इति प्रार्थयेदिति शिष्टाचारः ॥ अथ दाता वधूवरौ लक्ष्मीनारायणस्वरूपिणौ भावयित्वा पयसा घृतेनाद्भिरिति प्रत्येकं तयोः पादौ प्रक्षालयति—"अस्मिन् राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रतिपश्याम्यापः । दक्षिणं पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रियं दधामि ॥ सव्यं पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रियं वर्धयामि । पूर्वमन्यमपरमन्यं पादाववनेनिजे ॥ देवा राष्ट्रस्य गुप्त्या अभयस्यावरुध्यै । आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे" इति वा तूष्णीं वा ॥ उभावप्याचामेताम् ॥ अथ गन्धमाल्यादिभिर्वधूवरौ समभ्यर्च्य तैजसपात्रे आज्यमिश्रं क्षीरं पात्रान्तरे क्षालितसिततण्डुलांश्च निदधाति ॥ ततो वरः प्रक्षालितपाणिः प्रक्षालितवध्वञ्जलौ स्वहस्तद्वयमध्यमानामिकाङ्गुलिभिस्तैजसपात्रस्थसाज्यक्षीरेण द्विरुपस्तीर्य द्विवारं पात्रान्तरस्थतण्डुलानोप्य तथैव द्विरभिघारयति ॥ अथ दाता वराञ्जलिमप्येवमेव पूरयित्वा वराञ्जल्युपरि कन्याञ्जलिं कृत्वा कन्याञ्जलौ सुवर्णं निधाय तयोरञ्जल्योरधः कांस्यपात्रं च निधाय पूर्वमभ्यर्चितं कलशं "इडा देवहूः" इति मन्त्रेणादाय स्वदक्षिणस्थितभार्याहस्ते दत्वा "कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ विश्वम्भरः सर्वभूताः साक्षिणः सर्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥ श्रीरूपैषा मया दत्ता तुभ्यं श्रीधररूपिणे" ॥

"नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे । भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरति दीर्घमायुः" इत्युक्त्वा कन्याञ्जलौ कलशोदकधारामविच्छिन्नां प्रवर्तयन् वदेत्—"ॐ कन्या तारयतु । पुण्याहं दीर्घमायुरस्तु । शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । पुण्यं वर्धताम् । शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवं कर्मास्तु । ॐ पुण्याहं भवन्तो ब्रुवन्तु । ॐ स्वस्ति भवन्तो ब्रुवन्तु । ॐ ऋद्धिं भवन्तो ब्रुवन्तु । ॐ श्रीरस्त्विति भवन्तो ब्रुवन्तु । अमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशर्माहं मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादि कन्यादानकल्पोक्तफलप्राप्तये अनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान्द्वादशपरांश्च पुरुषान्पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये, अमुकप्रवरान्वितामुकगोत्रोद्भवायामुकशर्मणः प्रपौत्रायामुकशर्मणः पौत्रायामुकशर्मणः पुत्रायामुकशर्मणे श्रीधररूपिणे कन्यार्थिने वराय, अमुकप्रवरान्वितामुकगोत्रोद्भवाममुकशर्मणः प्रपौत्रीममुकशर्मणः पौत्रीममुकशर्मणः पुत्रीममुकनाम्नीं श्रीरूपिणीं प्रजापतिदैवत्यां कन्यां प्रजासहत्वकर्मभ्यः ( प्रजोत्पादनार्थं ) तुभ्यमहं संप्रददे श्रियै " इत्येवं त्रिवारमुक्त्वा " कन्यां प्रतिगृह्णातु भवान् " इति वरहस्ते सकुशाक्षतजलं क्षिपन् 'प्रजापतिः प्रीयताम्' इति मनसा स्मरेत् ॥ वरः "ॐ स्वस्ति " इति ब्रूयात् ॥ अथ वधूवरावञ्जलिस्थानक्षतानन्योन्यं शिरस्यारोपयतः ॥ ततो वरो दक्षिणेंऽसे कन्यामभिमृश्य "देवस्य त्वा० हस्ताभ्यां प्रतिगृह्णामि ॥ राजा त्वा वरुणो नयतु देवि दक्षिणे ॥ प्रजापतये कन्याम् ॥ तयामृतत्वमश्याम् ॥ वयो दात्रे ॥ मयो मह्यमस्तु प्रतिग्रहीत्रे ॥ क इदं कस्मा अदात् ॥ कामः कामाय ॥ कामो दाता ॥ कामः प्रतिग्रहीता ॥ कामꣳ समुद्रमाविश ॥ कामेन त्वा प्रतिगृह्णामि ॥ कामैतत्ते ॥ एषा ते कामदक्षिणा ॥ उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु ॥ धर्मप्रजासिद्ध्यर्थमिमां

कन्यां प्रतिगृह्णामि " इति प्रतिगृह्णाति ॥ ततो दाता " गौरीं कन्यामिमां विप्र यथाशक्तिविभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्रसमाश्रय ॥ कन्ये ममाग्रतो भूयाः कन्ये मे देवि पृष्ठतः । कन्ये मे पार्श्वयोर्भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ मम वंशकुले जाता पालिता वत्सराष्टकम् । तुभ्यं विप्र मया दत्ता पुत्रपौत्रप्रवर्धिनी ॥ ( न्यूनवयस्कायां 'पालिता वर्षसप्तकम्' इत्याद्यूहः कार्यः ) धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम् " इति वदेत् ॥ वरो " नातिचरामि " इति प्रतिवदेत् ॥ दाता " सह धर्मश्चर्यताम् " इति वदेत् ॥ " चरिष्यामि " इति वरः ॥ ततो दाता 'कृतस्य कन्यादानस्य प्रतिष्ठासिध्यर्थमिदं हिरण्यमग्निदैवत्यं लक्ष्मीनारायणस्वरूपिणे तुभ्यमहं सम्प्रददे ' इति सुवर्णं दत्वा ' न मम ' इति वदेत् । एवं भोजनपात्रमुदपात्रं दोहनपात्रं गोमहिषी दासदासीं गृहभूवाहनादि यथाविभवं वराय दद्यात् ॥ वरो देवस्य त्वेत्यादिना तत्तत्प्रतिग्रहमन्त्रेण ' उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु ' इति मन्त्रेण वा प्रतिगृह्णीयात् ॥ दाता कन्यादानकर्मणः साङ्गतासिध्यर्थं ब्राह्मणेभ्यः सुवासिनीभ्यश्च ( यथावकाशं भोजनं ) भूयसीं दक्षिणां च दत्वा अनेन कन्यादानकर्मणा श्रीपरमेश्वरः प्रीयताम्, इति कर्मेश्वराय समर्पयेत्, इति ॥ ॥ इति कन्यादानम् ॥

अथाऽक्षताऽऽरोपणम् ॥ वरः स्वाञ्जलिना वध्वञ्जलौ साज्यक्षीरेण द्विरुपस्तीर्य द्विवारं तण्डुलानोप्य द्विरभिघारयति ॥ दाता वराञ्जलावेवमेव कृत्वा तयोरञ्जल्योः सुवर्णं निधाय कन्याञ्जल्युपरि वराञ्जलिं कृत्वा कलशोदकधारां सिञ्चन्वदेत्—" ॐ शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु ॥ प्रजापतिः स्त्रियां यशः । मुष्कयोरदधात्सपम् । कामस्य तृप्तिमानन्दम् । तस्याग्ने भाजयेह मा । मोदः प्रमोद आनन्दः । मुष्कयोर्निहितः सपः । सृत्वेव कामस्य तृप्याणि । दक्षिणानां प्रतिग्रहे । मनसश्चित्तमाकूतिम् । वाचस्सत्यमशीमहि । पशूनां रूपमन्नस्य ॥ यशः श्रीः श्रयतां

१. इदं प्रयोगमालायामुल्लिखितम् ।

मयि । यथाहमस्या अतृप२ स्त्रियै पुमान् । यथास्त्री तृप्यति पुंसि प्रिये प्रिया ॥ एवं भगस्य तृप्याणि ॥ यज्ञस्य काम्यः प्रियः ॥ ददामीत्यग्निर्वदति । तथेति वायुराह तत् । हन्तेति सत्यं चन्द्रमाः । आदित्यः सत्यमोमिति ॥ आपस्तत्सत्यमाभरन् । यशो यज्ञस्य दक्षिणाम् ॥ प्रजा मे कामः समृध्यताम् " इत्युक्त्वा वरः स्वाञ्जलिस्थतण्डुलान् वधूशिरस्यावपेत् ॥ पुनः पूर्ववदञ्जलिं पूरयित्वैवमेव शान्तिरस्तु इत्यादि यशो यज्ञस्य दक्षिणाम्, इत्यन्ते पशवो मे कामः समृध्यताम्, इत्युक्त्वा वधूपूर्वकं तण्डुलानावपेताम् ॥ तृतीयपर्याये एवमेव कृत्वा यज्ञो मे कामः समृध्यताम्, इत्युक्त्वा वरपूर्वकमावपेताम् ॥ चतुर्थपर्यायेऽपि सर्वो मे कामः समृध्यताम्, इत्युक्त्वा वधूपूर्वकमन्योन्यं शिरसि तण्डुलानावपेताम् ॥ ॥ इत्यक्षताऽऽरोपणम् ॥

अथ मङ्गलसूत्रबन्धनादि ॥ तदुक्तं सं० मालायां स्मृतिसङ्ग्रहे— " वस्त्रद्वयं कञ्चुकं च सूत्रं मङ्गलसंज्ञकम् । अर्पयेयुः सुवासिन्यो वध्वै तां च वधूं वरः ॥ कृतवस्त्रपरीधानां संस्मरन्निष्टदेवताम् । सूत्रेण मङ्गलाख्येन कण्ठदेशे विभूषयेत् ॥ माङ्गल्यतन्तुनेत्येष मन्त्रोऽत्र कथितो बुधैः । इतरैर्भूषणैः पश्चात्तत्तदङ्गेषु भूषयेत् ॥ वधूवरौ प्रकुर्यातां गणेशस्य तु पूजनम् । सौभाग्याद्यभिवृध्यर्थं महालक्ष्म्यास्तथैव च ॥ पार्वत्याश्च तथा शच्याः पूजनं तु समाचरेत् । सौभाग्यार्थं वायनानि प्रदद्यात्सुसमाहिता ॥ दिनत्रयं प्रकुर्यातां व्रतस्याचरणं ततः " इति ॥

अथ तद्विधानक्रमः ॥ वरो मङ्गलसूत्रं गन्धपुष्पादिभिरभ्यर्च्येष्टदेवतां स्मरन् वधूकण्ठे बध्नाति— " माङ्गल्यतन्तुनानेन भर्तृ ( मम )·जीवनहेतुना । कण्ठे बन्धामि सुभगे त्वं जीव शरदां शतम् " इति ॥ अन्यैरपि भूषणैर्यथाविभवं भूषयित्वा यथाचारं

१ " ब्रह्माविष्णवीशरूपं तु रन्ध्रवच्च त्रितन्तुकम् । त्रिरत्नं रुक्मजं स्त्रीणां माङ्गल्याभरणं विदुः ॥ निष्कं हेम तदर्धं वा तदर्धं वा तदर्धतः । मङ्गल्याख्या मणिं कुर्यात्तन्न्यूनं चेदशोभनम् " ॥

गुडजीरकाक्षतहरिद्राखण्डयुतानि पञ्च पञ्च पूगीफलानि पात्रे निधाय मम विवाहव्रतस्य निर्विघ्नतासिध्यर्थं गणेश पूजनं करिष्ये, इति सङ्कल्प्य "गणानां त्वा, आ तू न इन्द्र" इति मन्त्राभ्यां गणेशमावाह्य गन्धादिभिरभ्यर्चयेत् ॥ ततः पुरोधास्ताभ्यामेव मन्त्राभ्यां पूगीफलादीनि पृथक्पृथग्वधूवरयोरुत्तरीयवस्त्रप्रान्तयोर्बध्वा "नीललोहिते भवतः कृत्यासक्तिर्व्यज्यते । एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यते" इति मन्त्रेण तयोरुत्तरीयवस्त्रान्तावपि मिथो बध्नीयात् । तद्ग्रंथिं व्रतसमाप्तिपर्यन्तं न विसृजेत् ॥ ततः सभार्यो दाता वृद्धाः पुरन्ध्र्यो ज्ञातयो बान्धवाश्च यथाचारं मङ्गलाशीर्भिरार्द्राक्षतारोपणं कुर्युः ॥ अथ वधूवरौ सौभाग्याद्यभिवृध्यर्थं तण्डुलपुञ्जेषु नाममन्त्रैर्महालक्ष्मीं गौरीं शचीं चावाह्य षोडशोपचारैरर्चयित्वा सुवासिनीभ्यो वायनानि (सौभाग्यद्रव्ययुतफलानि) दद्याताम् ॥ पुरन्ध्र्यो मङ्गळार्तिक्यं कुर्युर्ब्राह्मणा मन्त्राक्षतान् दद्युः ॥ ॥ इति मङ्गलसूत्रबन्धनादि ॥

## ॥ पाणिग्रहणम् ॥

(बो. गृ. सू. १. १. २७–२८) "अथैनां दक्षिणे हस्ते गृह्णाति— 'मित्रोऽसि' इति । अथैनां देवयजनमुदानयति— 'एकमिषे विष्णुस्त्वान्वेतु० सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु' इति । सप्तमं पदमुपसङ्गृह्य जपति — 'सखायः० मा योष्ठाः' इति" । अत्र प्र० चिन्तामणिः — "तामर्पयेतां पितरौ सुलग्ने वराय धर्मस्त्वनया सहैव । प्रचर्यतां चेति ततः स बध्वा मित्रोऽसि गृह्णाति च दक्षहस्तम् ॥ उदानयेदेकमिषेति कन्यां वरः क्रमात्साक्षतमण्डलेषु । सखासि जप्त्वा पदसप्तकान्ते स्पृशेच्च भूमिं विसृजेत् करं च ॥ उदग्दशास्तीर्णवराम्बराढ्ये वरासने होमभुवः प्रतीच्याम् । उदग्वरो दक्षिणतश्च कन्या निषीदतः प्राग्वदनौ प्रहृष्टौ" इति ॥

अथ प्रयोगः ॥ वरः सुलग्ने पितृभ्यामर्पितामिनां वधूं दक्षिणे हस्ते गृह्णाति— "मित्रोऽसि" इति॥ अथैनां देवयजनमुदानयन् प्राक्संस्थेषूदक्संस्थेषु वा हरिद्राखण्डपूगीफलहिरण्यादियुतेषु सप्तस्वक्षतपुञ्जेषु वध्वा दक्षिणपादं क्रमेण निधापयति— "एकमिषे विष्णुस्त्वान्वेतु ॥ १ ॥ द्वे ऊर्जे विष्णुस्त्वान्वेतु ॥ २ ॥ त्रीणि व्रताय विष्णुस्त्वान्वेतु ॥ ३ ॥ चत्वारि मायो भवाय विष्णुस्त्वान्वेतु ॥४॥ पञ्च पशुभ्यो विष्णुस्त्वान्वेतु ॥५॥ षड्रायस्पोषाय विष्णुस्त्वान्वेतु ॥ ६ ॥ सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु ॥ ७ ॥" इति ॥ सप्तमं पदमुपसङ्गृह्य जपति—" सखायः सप्तपदा अभूम । सख्यं ते गमेयम् ॥ सख्यात्ते मा योषम् । सख्यान्मे मा योष्ठाः" इति ॥ अथ मङ्गलघोषपुरस्सरं देवयजनं गत्वा देवयजनस्य पश्चादुदग्दशेन वाससास्तीर्णे शुभासने उत्तरतो वरो दक्षिणतो वधूरिति क्रमेण प्राङ्मुखावुपविशेताम् ॥ ॥ इति पाणिग्रहणम् ॥

## ॥ अथ विवाहहोमः ॥

(बो. गृ. सू. १. ४) "अथास्या उपोत्थाय दक्षिणेन हस्तेन दक्षिणमंसं प्रतिबाहुमन्ववहृत्य हृदयदेशमभिमृशति— 'मम हृदये हृदयं ते अस्तु०' इति। अथास्यै दक्षिणे कर्णे जपति —' मां ते मनः प्रविशतु०' इति (सप्तभिः)॥ अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं साङ्गुष्ठमभीव लोमानि गृह्णाति – ' गृभ्णामि ते० देवाः ' इति। अथैनां प्रदक्षिणमग्निं पर्याणयति— 'परि त्वाग्ने०भङ्गुरावतः' इति॥ अथ तथोपविश्यान्वारब्धायामुपयमनीर्जुहोति–' अग्ने शर्ध० पाशं स्वाहा' (इत्येकादशभिः) इति ॥ अथैनामुत्थाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति—' आतिष्ठेमं० पृतनायतः ' इति। अथास्या अञ्जलावुपस्तीर्य तस्या-स्सोदर्यो द्विर्लाजानावपति। तानभिघार्य जुहोति– ' इयं नार्युप० शतं स्वाहा '। अथैनां प्रदक्षिणमग्निं पर्याणयति– 'तुभ्यमग्ने०

सह ' इति ॥ तथाऽऽस्थापयति तथा जुहोति । अथैनां पुनः प्रदक्षिणमग्निपर्याणयति – 'पुनः पत्नी० शतम्' इति । तथैवाऽऽस्थापयति तथा जुहोति । अथैनां पुनरेवं पर्याणयति–'विश्वा उत० द्विषः' इति । अथ तथोपविश्यान्वारब्धायां जयानभ्यातानान् राष्ट्रभृत इति हुत्वा अथामात्यहोमान्जुहोति ॥ अथ प्राजापत्यान् जुहोति–'प्रजापते०' इति ॥ अथ सौविष्टकृतं जुहोति – 'यदस्य०' इति । अथ स्रुवेण परिधीननक्ति । अथ परिस्तरात् समुलिप्याज्यस्थाल्यां प्रस्तरवत् बर्हिरक्त्वा तृणं प्रच्छाद्याग्नावनुप्रहरति । अथ शम्या अपोह्य तथैव परिषिञ्चति । 'अन्वमंस्थाः, प्रासावीः,' इति मन्त्रान्तान्सन्नमयति । अथ प्रणीताभ्यो दिशो व्युन्नीय ब्रह्मणे वरं ददामीति गां ब्राह्मणेभ्यः" ॥

( बो. गृ. शे. सू. ५. २. ६–९ ) "लाजमाज्यं स्रुवं चैव प्रणीताश्मानमेव च। सर्वमभ्यन्तरं कृत्वा ब्रह्मैवैको बहिर्भवेत् ॥ दक्षिणां दिशमाश्रित्य यमो मृत्युश्च तिष्ठति । दम्पत्यो रक्षणार्थाय ब्रह्मैवैको बहिर्भवेत् ॥ अङ्गुल्यग्रैर्न होतव्यं न कृत्वाऽञ्जलिभेदनम् । अञ्जलेर्वामभागेन लाजहोम इति स्मृतः ॥ आद्यं प्रदक्षिणं कुर्याद्ब्रह्मणा सह मानवः । प्रदक्षिणत्रयं पश्चाद्विना तमिति केचन" ॥

अथ प्रयोगः ॥ वरः शुचौ समे देशे स्थण्डिलोल्लेखनादि कृत्वा काष्ठान्मथितं श्रोत्रियागारादाहृतं वाग्निं प्रतिष्ठाप्य तस्मिन्नात्मसमारोपितमग्निं "उपावरोह जातवेदः" इत्यवरोह्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "प्रतिगृहीतायामस्यां भार्यात्वसिद्ध्ये गृह्याग्निसिद्ध्ये च विवाहहोमं करिष्ये, विवाहहोमः कर्म, आघारवत्तन्त्रम्, पञ्चदश दार्वरिध्मः, अग्नीषोमावाज्यभागौ, योजको नामाग्निः, अग्निर्देवता, लाजा हविः, अग्निः स्विष्टकृत्" इत्यादि सङ्कल्प्यान्वाधाय पात्रासादनकाले आज्यस्थालीं स्रुवं प्रणीतां प्रोक्षणीं शूर्पमिध्माबर्हिरिध्मप्रव्रश्चनानि स्फ्यं मेक्षणमश्मानं चेत्यासाद्य पवित्रकरणादि प्रणीतासादनान्तं कृत्वाग्नेः पश्चाच्छूर्पे प्रागग्रे पवित्रे निधाय लाजान्निर्वपति— "दे॒वस्य॑ त्वा० हस्ता॑भ्याम॒ग्नये॑ जुष्टं॒ निर्व॑पामि" इति त्रिर्यजुषा सकृत्तूष्णीं निरुप्य "दे॒वस्य॑ त्वा०

हस्ताभ्यामग्नये वो जुष्टं प्रोक्षामि" इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्याज्यनिर्वापादि परिधानान्तं कृत्वान्वारब्धायां वध्वां प्रदक्षिणमग्निं परिषिञ्चति— "अदितेऽनुमन्यस्व" इत्यादि ॥ अथाग्निमुखान्तं कृत्वोपोत्थायोत्थिताया वध्वा दक्षिणेंऽसे स्वदक्षिणबाहुं निधायाश्लिष्यन्निव दक्षिणेन हस्तेन तस्या हृदयमभिमृशति —"मम हृदये हृदयन्ते अस्तु मम चित्ते चित्तमस्तु ते । मम वाचमेकमनाः शृणु मामेवानुव्रता । सहचर्या मया भव" इति ॥ अप उपस्पृश्यास्या दक्षिणे कर्णे जपति — "मां ते मनः प्रविशतु मां चक्षुर्मामुते भगः । मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ॥ मधुहे मध्वगाहे जिह्वा मे मधुवादिनी । मुखे मे सारघं मधु दत्सु संवननं कृतम् ॥ चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् । यद्वित्तौ देवगन्धर्वौ तेन संवनिनौ स्वः ॥ स्पृशामि तेऽहमङ्गानि वायुरापश्च मा परः । मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सरस्वति प्रेदमव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः" इति ॥ अथास्या दक्षिणमुत्तानं हस्तं साङ्गुष्ठं स्वस्य दक्षिणेन नीचा हस्तेन लोमाभिमुखं गृह्णाति —"गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः" इति ॥ अथैनां प्रदक्षिणमग्निं पर्याणयति —"परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवे दिवे भेत्तारं भङ्गुरावतः" इति ॥ अथ यथापूर्वमुपविश्यान्वारब्धायां पत्न्यामाज्यस्थाल्याः

१ "लाजमाज्यं स्रुवं चैव प्रणीताश्मानमेव च । सर्वमभ्यन्तरं कृत्वा ब्रह्मैवैको बहिर्भवेत् ॥ आद्यं प्रदक्षिणं कुर्याद्ब्रह्मणा सह मानवः । प्रदक्षिणत्रयं पश्चाद्विना तमिति केचन" इति गृह्यशेषे ॥

स्रुवेणोपहत्योपयमनीर्जुहोति— " ॐ अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु। सञ्जास्पत्यꣳ सुयममा कृणुष्व शत्रूयतामभितिष्ठा महाꣳसि स्वाहा॥ अग्नये शर्धायेदं० ॥१॥ ॐ सोमाय जनिविदे स्वाहा॥ सोमाय जनिविद इदं० ॥२॥ ॐ गन्धर्वाय जनिविदे स्वाहा॥ गन्धर्वाय जनिविद इदं० ॥३॥ ॐ अग्नये जनिविदे स्वाहा॥ अग्नये जनिविद इदं० ॥४॥ ॐ कन्यला पितृभ्यो यती पतिलोकमव दीक्षामदास्थ स्वाहा॥ अग्नय इदं ० ॥५॥ ॐ प्रेतो मुञ्चाति नामुतः सुबद्धाममुतस्करत्। यथेयमिन्द्र मीढ्वस्सुपुत्रा सुभगा सती स्वाहा॥ इन्द्राय मीढुष इदं० ॥६॥ ॐ इमान्त्वमिन्द्र मीढ्वस्सुपुत्राꣳ सुभगां कृणु। दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि स्वाहा॥ इन्द्राय मीढुष इदं० ॥७॥ ॐ अग्निरैतु प्रथमो देवतानाꣳ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयꣳ राजा वरुणोऽनुमन्यतां यथेयꣳ स्त्रीपौत्रमघं न रोदात्स्वाहा॥ अग्नये वरुणाय राज्ञ इदं० ॥८॥ ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियꣳ स्वाहा॥ अग्नये गार्हपत्यायेदं० ॥९॥ ॐ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु। मा त्वं विकेश्युर आवधिष्ठा जीव पत्नी पतिलोके विराज पश्यन्ती प्रजाꣳ सुमनस्यमानाꣳ स्वाहा॥ प्रजापतय इदं० ॥१०॥ ॐ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम्। शीर्ष्णस्स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशꣳ स्वाहा ॥ अग्नय इदं० ॥११॥ " इत्येकादशभिर्हुत्वाथैनां वधूमुत्थाप्यात्माग्न्योः पश्चान्नीत्वोत्तरेणाग्निं दक्षिणेन पदाश्मानमास्थापयति— आतिष्ठेममश्मानमश्मेव त्वꣳ स्थिरा भव। अभितिष्ठ पृतन्यतः सहस्व पृतना यतः " इति॥ यथेतमानीय यथास्थानं तिष्ठन्त्या अस्या अञ्जलावुपस्तृणीते। तस्मिंस्तस्याः सोदर्यो भ्राता भ्रातृस्थानीयो वा गन्धवस्त्रादिभिरभ्यर्चितः शूर्पस्थांल्लाजान् पूर्वार्धादपरार्धाच्च क्रमेण द्विरावपति

(पश्चाद्वर्त्तिनां तु मध्यात्पूर्वार्धादपरार्धादिति त्रिरावपेत्) ॥ वरस्तानभिघार्यावत्तशेषान्प्रत्यज्य पुरस्तात्स्रुवाहुतिं हुत्वा तदञ्जलिं हस्ताभ्यां गृहीत्वाञ्जलिवामपार्श्वेन दर्व्येव जुहोति— "ॐ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिर्जीवातु शरदः शतो ३ मियं नार्युप० शत॑ स्वाहा" इति ॥ अग्नय इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वाथैनां प्रदक्षिणमग्निं पर्याणयति— "तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतुना सह । पुनः पतिभ्यो जायान्दा अग्ने प्रजया सह" इति ॥ अथैनां पूर्ववदश्मानमास्थापयति— "आतिष्ठेमं० पृतनायतः" इति ॥ पुनस्तथैव यथास्थानं तिष्ठन्त्या अञ्जलावुपस्तृणाति । तथैव सोदर्योऽपरार्धात्पूर्वार्धाच्चेति क्रमेण द्विर्लाजानावपति । वरस्तथैवाऽभिघार्य प्रत्यज्य पुरस्तात्स्रुवाहुतिं हुत्वा जुहोति– "ॐ इयं नार्युप० शतो ३ मियं नार्युप० शत॑ स्वाहा" इति ॥ अग्नय इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा तथैव प्रदक्षिणमग्निं पर्याणयति – "पुनः पत्नीमग्नि-रदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिस्स एतु शरदश्शतम्" इति ॥ पुनः पूर्ववदेनामश्मानमास्थापयति — "आतिष्ठेमं० यतः" इति ॥ तथैवोपस्तरणादि कृत्वा लाजानवदाय जुहोति—"ॐ इयं नार्युप० शतो ३ मियं नार्युप० शत॑ स्वाहा" इति ॥ अग्नय इदं० ॥ तथैवोपरिष्टात्स्रुवाहुतिं हुत्वा प्रदक्षिणमग्निं पर्याणयति—"ॐ विश्वा उत त्वया वयं धारा उदन्या इव । अति-गाहेमहि द्विषः" इति ॥ अथ तथैवोपस्तीर्णे वध्वञ्जलौ सोदर्य उत्तरार्धात्सकृल्लाजानावपति । वरस्तान्द्विरभिघारयति । (पश्चा-द्वर्त्ती चेद्द्विरवदाय द्विरभिघारयेत् सकृदवदाय वा त्रिरभिघारयेत्) न प्रत्यनक्ति ॥ व्याहृतिभिराज्याहुतीरुपहुत्य पुरस्तात्

१. "निर्वपणसंस्रवणलाजहोमनित्यहोमान्कायतीर्थेन कुर्यात्" इति सं० मालायां बोधायनः । अंगुल्यग्रैर्न होतव्यं तथा नाञ्जलिभेदतः । अञ्जलेर्वामपार्श्वेन लाजहोमो विधीयते । वामभागस्तु नारीणां देवभाग इति स्मृतः" इति तत्रैव मैत्रायणीयपरिशिष्टोक्तिः ॥ २. "पक्वादेव स्विष्टवतीभ्यां सौविष्टकृतं जुहोति लाजैरितरत्र" इति सूत्रम् ॥ "केचित्स्विष्टवतीभ्यां तु लाजाञ्जुह्वति नापरे" इति गृ० संग्रहे ॥

स्रुवाहुतिं हुत्वा स्विष्टकृतमुत्तरार्धपूर्वार्धे जुहोति — "ॐ हव्यवाहमभि० हुवेमों३स्विष्टमग्ने ० आयुः स्वाहा" इति ॥ अग्नये स्विष्टकृत इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा मेक्षणमग्नौ प्रहृत्य वध्वञ्जलावुदकं पूरयित्वान्तःपरिधि बहिःपरिधि निनीयानूयाजसमिधमभ्याधायेध्मसन्नहनेन परिधीनग्निं च सकृत्सकृत्सम्मृज्येध्मसन्नहनं विस्रस्याद्भिः सꣳस्पृश्याग्नावनुप्रहृत्य तथैवान्वारब्धायां पत्न्यां जयप्रभृति ब्रह्मोद्वासनान्तं कृत्वाग्निमुपस्थाय, अनेन विवाहहोमकर्मणा श्रीपरमेश्वरः प्रीयतामिति कर्मेश्वराय समर्पयेत् ॥ ॥ इति विवाहहोमः ॥

## ॥ अथ गृहप्रवेशविधिः ॥

( बो. गृ. सू. १. ५ ) " अनुनयन्त्येतमग्निम् । अथैनां पितुरङ्काद्दुह्रहति गुरोर्वा— 'ये वध्वः० आगताः' इति । अथैनां दक्षिणे हस्ते गृहीत्वा स्वरथमारोप्य स्वान् गृहानानयति — 'पूषा त्वेतो० मावदासि' इति। पन्थानमनुमन्त्रयते — 'सुगं पन्थानं० वसु' इति। ओषधिवनस्पतयो नद्यो वनान्यनुमन्त्रयते — 'या ओषधयः० अꣳहसः' इति। अथ जायामानीय स्वान् गृहान् प्रपादयति - 'भद्रान् गृहान्० संविशानि' इति। अथैनामानडुहे चर्मण्युपवेशयति — 'इह गावः० निषीदतु' इति। अत्राभ्याममात्यास्स्तोक्माण्यारोपयन्ते। अथ वाचं यच्छतः आनक्षत्राणामुदयात् ॥ अथाहोरात्रयोः सन्धिमनुमन्त्रयते— 'नीललोहिते० बध्यताम्' इति। अथोदितेषु नक्षत्रेषूपनिष्क्रम्य ध्रुवमरुन्धतीं च दर्शयति—'ध्रुवोऽसि० पृतन्यतः' इति ध्रुवम्। 'सप्त ऋषयः० अरुन्धती' इत्यरुन्धतीम्"। गृ० संग्रहे च-"अथासीनां वधूमङ्के पितृभ्रात्रादिकस्य तु। हस्ते गृहीत्वा निष्क्रामेद्वे वध्वश्चन्द्रमीरयन्॥ अथ कश्चित्तमग्निं तु प्रत्यक्षं सन्तमाहितम्। आदाय वरवध्वोस्तु पृष्ठतोऽनुव्रजेत्सह"॥ अनेन विवाहदिन एव विवाहहोमानन्तरं

स्वगृहं प्रविश्य व्रतचर्यादिकं सर्वं स्वगृहे कार्यमिति विहितं भवति ॥ शिष्टास्त्विदानीं क्रमप्राप्तं गृहप्रवेशं केवलमन्त्रपठनेन सम्पाद्य व्रतचर्यादि पञ्चमेऽह्नि स्थालीपाकपर्यन्तं प्रायः श्वशुरगृह एव कृत्वा स्मृत्यन्तरोक्तपञ्चमादिदिनेषु स्वगृहप्रवेशमाचरन्ति ॥

अथ प्रयोगः ॥ वरः प्राणानायम्य देशकालौ सङ्कीर्त्यानया नवोढया वध्वा सह गृहप्रवेशनं करिष्ये, इति सङ्कल्प्य पित्राद्यङ्कस्थितां वधूं दक्षिणे हस्ते गृह्णन्नुद्वहति — "ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाꣳ अनु । पुनस्तान्यज्ञिया देवा नयन्तु यत आगताः" इति ॥ अथैनां यानमारोप्य स्वान् गृहानानयति — "पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहताꣳ रथेन । गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि" इति ॥ पन्थानमनुमन्त्रयते— "सुगं पन्थानमारुक्षमरिष्टꣳ स्वस्ति वाहनम् । यस्मिन् वीरो नरिष्यत्यन्येषां विन्दते वसु" इति ॥ ओषधिवनस्पतिनदीवनान्यनुमन्त्रयते— "या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना । ते त्वा वधु प्रजावतीं प्र त्वे मुञ्चन्त्वꣳहसः" इति ॥ अथ जायां दक्षिणपादनिधापनपूर्वकं स्वगृहान् प्रवेशयति— "भद्रान् गृहान्सुमनसः प्रपद्येऽवीरघ्नी वीरवतस्सुवीरान् । इरां वहतो घृतमुक्षमाणास्तेष्वहꣳ सुमनाः संविशानि" इति ॥ अथैनां कल्याणीं वाचं वाचयति— "प्रजावती पशुमती रयिमती पुष्टिमती तेजस्विनी गृहमेधिनी यशस्विनी ब्रह्मवर्चस्विनी भूयासम्" इति ॥ अथागारस्य मध्ये लोहितमानडुहं चर्म प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन् वधूमुपवेशयति— "इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो रायस्पोषो निषीदतु" इति ॥ अत्रामात्याः

---

१. इदानीं गृहगमनपक्षे विवाहाग्निमप्यनयोः पश्चादव्यवधानेन कश्चिन्नयेत् । २. "गत्वा गृहान् प्रजेत्यादि कल्याणीं वाचयेद्वधूम्" इति गृ० संग्रहे ॥

(पित्रादयः) दम्पतीभ्यामङ्कुरार्पणकृतान् व्रीह्यङ्कुराण्यारोपयन्ते। ततस्तौ नक्षत्रोदयपर्यन्तं वाचं यच्छतः। अथाहोरात्रयोः सन्धिमनुमन्त्रयेत—"नीललोहिते भवतः ० बध्यताम्" इति॥ अथोदितेषु नक्षत्रेषु वाचं विसृज्य प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य नक्षत्राणि ध्रुवमरुन्धतीं च बध्वा दर्शयन्नुपतिष्ठते—"उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु" इति नक्षत्राणि। "ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवमसि ध्रुवतः स्थितः। त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः" इति ध्रुवम्॥ "सप्त ऋषयः प्रथमां कृत्तिकानामरुन्धतीं यद्ध्रुवताꣳह निन्युः। षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकमेधत्वष्टम्यरुन्धतीम्" इत्यरुन्धतीं चोपस्थाय[1] व्रतं चरेत्॥ ॥ इति गृहप्रवेशविधिः॥

## ॥ अथ व्रतचर्या ॥

(बो. गृ. सू. १. ५) "अथ विवाहस्यारुन्धत्युपस्थानात्कृत्वा व्रतमुपैति—'अग्ने व्रतपत उपयमनं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्। वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपत उपयमनं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्' इति। उभौ जायापती व्रतचारिणौ ब्रह्मचारिणौ भवतोऽधश्शयाते। तयोः शय्यामन्तरेणोदुंबरदण्डो गन्धानुलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठत्यापक्वहोमात्"[2]॥

(बो. गृ. सू. १. ७. १–२१) "ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते। उपनीतमात्रो व्रतानुचारी

---

१. "उदायुषेति ताराणां ध्रुवोसीति ध्रुवस्य च। उपस्थानमरुन्धत्याः सप्तर्षय इति क्रमात्" इति प्र०रत्ने। २. प्रयोगरत्ने सायमौपासनं हुत्वा व्रतमुपेयादित्युक्तम्॥

वेदानां किञ्चिदधीत्य ब्राह्मणः। एकां शाखामधीत्य श्रोत्रियः। अङ्गाध्याय्यनूचानः। कल्पाध्यायी ऋषिकल्पः। सूत्रप्रवचनाध्यायी भ्रूणः। चतुर्वेदादृषिः। अत ऊर्ध्वं देवः। अथ यदि कामयेत श्रोत्रियं जनयेयमित्याऽरुंधत्योपस्थानात्कृत्वा त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणावासाते। अहतानां च वाससां परिधानं सायंप्रातश्चालङ्करणमिषुप्रतोदयोश्च धारणमग्निपरिचर्या च। चतुर्थ्यां पक्वहोम उपसंवेशनं च। अथ यदि कामयेतानूचानं जनयेयमिति द्वादशरात्रमेतद्व्रतं चरेत्। व्रतान्ते पक्वहोम उपसंवेशनं च। अथ यदि कामयते ऋषिकल्पं जनयेयमिति मासमेतद्व्रतं चरेत्। व्रतांते पक्वहोम उपसंवेशनं च। अथ यदि कामयेत भ्रूणं जनयेयमिति चतुरो मासानेतद्व्रतं चरेत्। व्रतांते पक्वहोम उपसंवेशनं च। अथ यदि कामयते ऋषिं जनयेयमिति षण्मासानेतद्व्रतं चरेत्। व्रतांते पक्वहोम उपसंवेशनं च। अथ यदि कामयेत देवं जनयेयमिति संवत्सरमेतद्व्रतं चरेत्। व्रतांते पक्वहोम उपसंवेशनं च"॥

अथ व्रतचर्याप्रयोगः॥ जघनेनाऽग्निमुपविश्य प्राणानायम्य देशकालौ सङ्कीर्त्याऽनया नवोढया वध्वा सह विवाहव्रतग्रहणं करिष्ये, इति सङ्कल्प्याऽन्वारब्धायां पत्न्यामाग्निं परिषिच्याऽलङ्कृत्य चतस्रो यज्ञियवृक्षसमिधो घृतान्वक्ता अभ्यादधाति—" ॐ अग्ने व्रतपत उपयमनं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताᳪं स्वाहा॥ अग्नये व्रतपतय इदं०॥ ॐ वायो व्रतपत उपयमनं० राध्यताᳪं स्वाहा॥ वायवे व्रतपतय इदं०॥ ॐ आदित्य व्रतपत उपयमनं० राध्यताᳪं स्वाहा॥ आदित्याय व्रतपत इदं०॥ ॐ व्रतानां व्रतपत उपयमनं० राध्यताᳪं स्वाहा॥ व्रतानां व्रतपतय इदं०" इत्यभ्याधाय पुनः परिषिञ्चेत्॥ केवलं मन्त्रान् वा जपेत्॥ अथोभौ जायापती त्रिरात्रं व्रतं चरतः॥ (गृह्ये तु १. ७. ९) "अथ यदि कामयेत श्रोत्रियं जनयेयम्"

१. " वदेद्व्रतस्याऽचरणाय मन्त्रान् हुनेच तैर्वा समिधश्चतस्रः" इति प्र० चिन्तामणौ॥

इत्यादिना कामनाभेदेन त्रिरात्रं द्वादशरात्रं मासं चतुरो मासान्षण्मासान्संवत्सरं वा व्रतं चरेद्व्रतान्ते पक्वहोम उपसंवेशनञ्चेत्युक्तम् ॥ तदानीमक्षारलवणाशनमधश्शयनं ब्रह्मचर्यमहतानाञ्च वाससां परिधानं सायं प्रातश्च गन्धमाल्यादिभिरलङ्करणमिषुप्रतोदयोश्च धारणमग्निपरिचर्या चेति कर्तव्यानि भवन्ति ॥ स्नानमपि वर्जनीयमित्युक्तं गृ० सङ्ग्रहे– "तौ दम्पती स्नानहीनावक्षारलवणाशिनौ । अधश्शय्यौ ब्रह्मचर्ययुक्तौ स्यातां चतुर्दिनम्" इति ॥ अथ तयोश्शय्यामन्तरेण पुरुषमात्रमरत्निमात्रं वौदुम्बरं दण्डं वाससा सूत्रेण वा परिवेष्ट्य गन्धादिभिरभ्यर्च्य स्थापयेत्तं व्रतविसर्जनपर्यन्तं नोद्धरेत् ॥ ॥ इति व्रतचर्या ॥

अथौपासनारम्भः ॥ 'अग्निहोत्रहविषामन्यतमेन जुहुयात्' इति ॥ अग्निहोत्रहर्वींषि चोक्तानि प्रायश्चित्तचन्द्रिकायाम्– "पयो दधि यवागूश्च सर्पिरोदनतण्डुलः । सोमो मांसं तैलमापो दशैतान्यग्निहोत्रके" इति ॥ अथौपासनारम्भे कालनिर्णय उक्तः प्र० पारिजाते षट्त्रिंशन्मते–" त्रिधा विभक्ते निशिपूर्वभागे भवेद्विवाहो यदि तत्र कुर्यात् । औपासनं तत्परतो यदि स्याच्छ्वः सायमौपासनहोम इष्टः ॥ दिवा विवाहो यदि चेत्तदानीं विवाहहोमं दिवसे तदैव । कृत्वाऽबलाया निशि दर्शयित्वा ध्रुवर्क्षमौपासनमारभेत" इति ॥ एतेन बोधायनानां दिवा विवाहे तदानीं गृहप्रवेशान्तं कृत्वा सूर्यास्तकालेऽहोरात्रयोः सन्धिमनुमन्त्र्य रात्रौ नक्षत्रोदये ध्रुवमरुन्धतीञ्चोपस्थाय व्रताचरणपूर्वकमौपासनारम्भं कुर्यात् ॥ रात्रौ विवाहे त्रिधा विभक्तरात्रेः पूर्वभागेऽरुन्धत्युपस्थानान्तं कृत्वा व्रताचरणपूर्वकमौपासनारम्भसम्भवे तद्दिन एवौपासनमारभेत, तदसम्भवे परेद्यू रात्रौ व्रताचरणपूर्वकमौपासनारम्भं कुर्यादित्युक्तं भवति ॥ धर्मप्रवृत्तौ त्वग्निपरिचर्यामधिकृत्य– "रात्रिं त्रिभागां कुर्वीत द्वौ भागौ पूर्ववासरे । अपरस्मिंस्तृतीयस्स्याद्विवाहे सूतके ऋतौ" इति रात्रेर्द्वितीयभागोऽप्युक्तः ॥ लघ्वाश्वलायनस्मृतौ च–" नित्यहोमे तु कालस्स्याद्रात्रौ नाडीनवात्मकः । द्विगुणः स्याद्विवाहे तु प्रवदन्ति महर्षयः" इति रात्रावष्टादशघटीपर्यन्तमौपासनारम्भकालः प्रोक्तः इति ॥

अथ प्रयोगः ॥ रात्रावुक्तकाले वरस्सपत्नीको जघनेनाऽग्निं प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "श्रीपरमेश्वरप्रीत्यर्थं सत्यधिकारे यावज्जीवं सायंप्रातरौपासनहोमौ होष्यामि" इति सङ्कल्प्य गणपतिं सम्पूज्य "अग्निसूर्यप्रजापतयः प्रीयन्ताम्" इति पुण्याहं वाचयित्वा। अग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं संस्कृत्य स्रुक्स्रुवौ सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा दशहोतारं मनसाऽनुद्रुत्य जुहोति — "ॐ चित्तिः स्रुक्० आस्मासु नृम्णं धात्स्वाहा" इति ॥ वाचस्पतये ब्रह्मण इदं० ॥ अथाऽऽज्यस्थाल्याः स्रुवेणोपहत्य कूष्माण्डैः — "यद्देवा देवहेळनम्, यददीव्यन्नृणमहं बभूव, आयुष्टे विश्वतो दधत्" इति त्रिभिरनुवाकैः प्रतिमन्त्रं स्रुवाहुतीर्हुत्वा "वैश्वानराय प्रतिवेदयामः" इत्यनुवाकेनोपस्थाय वरं दद्यात् ॥ ततः आह्निककाण्डोक्तप्रकारेण सायमौपासनं, प्रातः प्रातरौपासनञ्च जुहुयात् ॥ ॥ इत्यौपासनारम्भः ॥

# १. अथ कूष्माण्डहोमविधिः ॥

निर्णयसिन्धौ आश्वलायनः — "दद्यात्तद्दतुसङ्ख्या गाश्शक्तः कन्यापिता यदि। दातव्यैकाऽपि निस्स्वेन दाने तस्या यथाविधि ॥ दद्याद्वा ब्राह्मणेष्वन्नमतिनिस्स्वस्सदक्षिणम्। तस्याऽतीतर्तुसङ्ख्येषु वराय प्रतिपादयेत् ॥ उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः। अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥ तामुद्वहन्वरश्चाऽपि कूष्माण्डैर्जुहुयाद्द्विजः" इति ॥

---

१. दशहोत्रा कूष्माण्डैश्च हवनं श्रुतिसूत्रयोः सम्मतत्वाद्युक्तत्वाच्चात्रोल्लिखितम् ॥ तथा च सूत्रम् (बो. गृ. प. सू. २. १. ४६) 'सायंप्रातर्दशहोतारं जुहुयात्' ॥ (बो. ध. सू. ३. ७. १६) 'विज्ञायते कर्मादिष्वेतैर्जुहुयात्' इति। सायंप्रातरिति शब्देन सायंप्रातः क्रियमाणमौपासनमुपलक्ष्यते, तदारम्भे दशहोतारं जुहुयादित्यर्थः ॥

अथ प्रयोगः ॥ कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्याऽस्याः कुमार्या विवाहात्प्राक्सम्भावितरजोदर्शनजनित-समस्तदोषनिबर्हणद्वारा पाणिग्रहणयोग्यतासिध्यर्थं मम च वृषलीपतित्वादि समस्तदोषपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थं कूष्माण्डहोमं करिष्ये, इति सङ्कल्प्य शरीरशुध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि कृत्वा गणपतिं सम्पूज्य 'सविता प्रीयताम्' इति पुण्याहं वाचयित्वा, देवयजनोल्लेखनप्रभृत्याग्निं प्रतिष्ठाप्य, अन्वाधाने- कूष्माण्डहोमः कर्म, आघारवत्तन्त्रं, चित्तिर्नामाग्निः, सविता देवता, चरुर्हविः उपहोमश्च-कूष्माण्डमन्त्रैराज्येन यक्ष्ये, अग्निस्स्विष्टकृत, इत्यादि सङ्कल्प्याऽन्वाधायाऽपरिधानात्कृत्वा पूर्वेणाऽग्निं अष्टदलपद्मोपरि कलशं प्रतिष्ठाप्य महीद्यौरित्यादि वरुणपूजान्तं कृत्वा 'तत्सवितुः' इति गायत्र्या सवितारमावाह्य षोडशोपचारैस्सम्पूजयेत् । परिधानप्रभृत्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति— "ॐ भूर्भुवस्सुवरोम् ३ तत्सवितुर्वरेण्यं० प्रचोदयात् स्वाहा ॥ सवित्र इदं० ॥ इति हुत्वा । स्विष्टकृतमवदायान्तःपरिधौ निधायाऽज्याहुतीरुपजुहोति आदौ "ॐ नमो ब्रह्मणे० करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः" इति शान्तिं पठित्वा— ॐ यद्देवा देव हेळनं देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा मुञ्चतर्तस्यर्तेन मामित स्वाहा ॥ देवेभ्य आदित्येभ्य इदं० ॥ १ ॥ ॐ देवा जीवनकाम्या यद्वाचाऽनृतमूदिम । तस्मान्न इह मुञ्चत विश्वेदेवाः सजोषसः स्वाहा ॥ विश्वेभ्यो देवेभ्य इदं० ॥ २ ॥ ॐ ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति । कृतान्नः पाह्येनसो यत्किञ्चाऽनृतमूदिम स्वाहा ॥ द्यावापृथिवीभ्याꣳ सरस्वत्या इदं० ॥ ३ ॥ ॐ इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः । तेनो मुञ्चत्वेनसो यदन्यकृतमारिम स्वाहा ॥ इन्द्राग्निभ्यां मित्रावरुणाभ्याꣳ सोमाय धात्रे बृहस्पतय इदं० ॥ ४ ॥ ॐ सजातशꣳसादुत जामिशꣳसाज्ज्यायसः शꣳसादुत वा कनीयसः । अनाधृष्टं देवकृतं यदेनस्तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि स्वाहा ॥

जातवेदस इदं० ॥५॥ ॐ यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्याᳪं शिश्नैर्यदनृतं चकृमा वयम्। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ ६ ॥ ॐ येन त्रितो अर्णवान्निर्बभूव येन सूर्यं तमसो निर्मुमोच । येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आक्षि स्वाहा ॥ ज्योतिष इदं० ॥७॥ ॐ यत्कुसीदमप्रतीत्तं मयेह येन यमस्य निधिना चरामि। एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रतितत्ते दधामि स्वाहा ॥ अग्नय इदं० ॥८॥ ॐ यन्मयि माता गर्भे सत्येनश्चकार यत्पिता। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसᳪं स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ ९ ॥ यदा पिपेष मातरं पितरं पुत्रः प्रमुदितो धयन्। अहिᳪंसितौ पितरौ मया तत्तदग्ने अनृणो भवामि स्वाहा ॥ अग्नय इदं० ॥ १० ॥ ॐ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिᳪं-सिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसᳪं स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ ११ ॥ ॐ यदाशसा निशसा यत्पराशसा यदेनश्चकृमा नूतनं यत्पुराणम् । अग्निर्मा ० नेनसᳪं स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ १२ ॥ ॐ अतिक्रामामि दुरितं यदेनो जहामि रिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नाऽपि दुष्कृतस्तमारोहामि सुकृताम्नु लोकᳪं स्वाहा ॥ अग्नय इदं ० ॥१३॥ ॐ त्रिते देवा अमृजतैतदेनस्त्रित एतन्मनुष्येषु मामृजे । ततो मा यदि किञ्चिदानशेऽग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसᳪं स्वाहा ॥ अग्नये गार्हपत्यायेदं ० ॥ १४ ॥ ॐ दिवि जाता अप्सु जाता या जाता ओषधीभ्यः । अथो या अग्निजा आपस्ता नः शुन्धन्तु शुन्धनीः स्वाहा ॥ अद्भ्यः शुन्धनीभ्य इदं ० ॥ १५ ॥ ॐ यदापो नक्तं दुरितं चराम यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णा-

स्तत उत्पुनीत न स्वाहा ॥ अद्भ्यो हिरण्यवर्णाभ्य इदं ० ॥ १६ ॥ ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके स्वाहा ॥ वरुणायेदं० ॥ १७ ॥ ॐ तत्वा यामि० आयुः प्रमोषीः स्वाहा ॥ वरुणायेदं० ॥ १८ ॥ ॐ त्वन्नो अग्ने वरुणस्य० प्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ १९ ॥ ॐ स त्वन्नो अग्नेऽवमोभवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ २० ॥ ॐ त्वमग्ने अयास्य० धेहि भेषजꣳ स्वाहा ॥ अयसेऽग्नय इदं० ॥ २१ ॥ ॐ यद्दीव्यं नृणमहं बभूवाऽदित्सन्वासञ्जगर जनेभ्यः । अग्निर्मा तस्मादिन्द्रश्च संविदानौ प्रमुञ्चताꣳ स्वाहा ॥ अग्नय इन्द्रायेदं० ॥ २२ ॥ ॐ यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः । उग्रंपश्या च राष्ट्रभृच्च तान्यप्सरसावनुदत्तामृणानि स्वाहा ॥ उग्रंपश्यायै राष्ट्रभृतेऽप्सरोभ्यामिदं० ॥ २३ ॥ ॐ उग्रंपश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत् । नेन्न ऋणाऽनृणव इत्समानो यमस्य लोके अधिरज्जुराय स्वाहा ॥ उग्रंपश्यायै राष्ट्रभृते यमायेदं० ॥ २४ ॥ ॐ अवते हेडो ० कृतानि स्वाहा ॥ वरुणायेदं० ॥ २५ ॥ ॐ उदुत्तमं वरुणपाश० अदितये स्याम स्वाहा ॥ वरुणायेदं० ॥ २६ ॥ ॐ इमम्मे वरुण० राचके स्वाहा ॥ वरुणायेदं० ॥ २७ ॥ ॐ तत्त्वा यामि० प्रमोषीः स्वाहा ॥ वरुणायेदं० ॥ २८ ॥ ॐ त्वन्नो अग्ने० प्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ २९ ॥ ॐ स त्वन्नो ० एधि स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ३० ॥ ॐ सङ्कुसुको विकुसुको निर्ऋथो यश्च निस्स्वनः । ते येऽस्मद्यक्ष्ममनागसो दूराद्दूरमचीचतꣳ स्वाहा ॥ सङ्कुसुकाय विकुसुकाय निर्ऋथाय निस्स्वनायेदं० ॥ ३१ ॥ ॐ निर्यक्ष्ममचीचते कृत्यां निर्ऋतिञ्च । तेन यो १ स्मत्समृच्छातै तमस्मै प्रसुवामसि स्वाहा ॥ कृत्यायै निर्ऋतय इदं० ॥ ३२ ॥ ॐ दुश्शꣳसानुशꣳसाभ्यां घणेनाऽनुघणेन च । तेनाऽन्यो१स्मत्समृच्छातै तमस्मै प्रसुवामसि स्वाहा ॥ दुश्शꣳ-

सायाऽनुशꣳसाय घणायाऽनुघणायेदं० ॥ ३३ ॥ ॐ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन। त्वष्टा नो अत्र विदधातु रायोऽनुमार्ष्टु तन्वो३ यद्विलिष्टꣳ स्वाहा ॥ त्वष्ट्र इदं० ॥ ३४ ॥ ॐ आयुष्टे विश्वतो ० सुवासिते स्वाहा ॥ आयुर्देऽग्नय० ॥ ३५ ॥ ॐ आयुर्दा अग्ने० रक्षतादिमꣳ स्वाहा ॥ आयुर्देऽग्नय इदं० ॥ ३६ ॥ ॐ इममग्न० जरदष्टिर्यथासत्स्वाहा ॥ अग्नये वरुणाया-ऽदितये विश्वेभ्यो देवेभ्य इदं० ॥ ३७ ॥ ॐ अग्न आयूꣳषि० दुच्छुनाꣳ स्वाहा ॥ अग्नये पवमानायेदं० ॥ ३८ ॥ ॐ अग्ने पवस्व० मयि पोषꣳ स्वाहा ॥ अग्नये पवमानायेदं० ॥ ३९ ॥ ॐ अग्निर्ऋषिः ० महागयꣳ स्वाहा ॥ अग्नये पवमानायेदं० ॥ ४० ॥ ॐ अग्ने जातान्प्रणुदा नः सपत्नान्प्रत्यजातान्जातवेदो नुदस्व। अस्मे दीदिहि सुमना अहेळञ्छर्मन्ते स्याम त्रिवरूथ उद्भौ स्वाहा ॥ अग्नये जातवेदस इदं० ॥ ४१ ॥ ॐ सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदा नस्सपत्नान्त्स्वाहा ॥ अग्नये जातवेदस इदं० ॥ ४२ ॥ ॐ अग्ने यो नोऽभितो जनो वृको वारो जिघाꣳसति। ताꣳ स्त्वं वृत्रहञ्जहि वस्वस्मभ्यमाभर स्वाहा ॥ अग्नये वृत्रघ्न इदं० ॥ ४३ ॥ ॐ अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः। तं वयꣳ समिधं कृत्वा तुभ्यमग्नेऽपिदध्मसि स्वाहा ॥ अग्नय इदं० ॥ ४४ ॥ ॐ यो नः शपादशपतो यश्च नः शपतः शपात्। उषाश्च तस्मै नि-म्रुक्च सर्वं पापꣳ समूहताꣳ स्वाहा ॥ उषसे निम्रुच इदं ० ॥ ४५ ॥ ॐ यो नस्सपत्नो यो रणो मर्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन स्वाहा ॥ देवेभ्य इदं० ॥४६॥ ॐ यो मां द्वेष्टि जातवेदो यं चाऽहं द्वेष्मि यश्च माम्। सर्वाꣳ स्तानग्ने सन्दह याꣳश्चाऽहं द्वेष्मि ये च माꣳ स्वाहा ॥ जातवेदसेऽग्नय इदं० ॥ ४७ ॥ ॐ यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मान्दिप्साच्च सर्वाꣳ स्तान्मष्मषा कुरु स्वाहा ॥ अग्नय इदं० ॥ ४८ ॥ ॐ सꣳशितं मे ब्रह्म सꣳशितं वीर्य३

बलम् । स ॅ शितं क्षत्रं मे जिष्णु यस्याऽहमस्मि पुरोहितः स्वाहा ॥ ब्रह्मण इदं० ॥ ४९ ॥ ॐ उदेषां बाहू अतिरमुद्वर्चो अथो बलम् । क्षिणोमि ब्रह्मणा मित्रा नुन्नयामि स्वाँ अह ॅ स्वाहा ॥ ब्रह्मण इदं० ॥ ५० ॥ पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनः श्रोत्रं म आगात्पुनः प्राणः पुनराकूतं म आगात्पुनश्चित्तं पुनराधीतं म आगात् । वैश्वानरो मेऽदब्धस्तनूपा अवं बाधतां दुरितानि विश्वा स्वाहा ॥ अग्नये वैश्वानरायेदं० ॥ ५१ ॥ ॐ सि ॅ हे व्याघ्र उत या पृदाकौ । त्विषिरग्नौ ब्राह्मणे सूर्ये या ॥ इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना स्वाहा ॥ इन्द्राण्या इदं० ॥ ५२ ॥ ॐ या राजन्ये दुन्दुभावायतायाम् । अश्वस्य क्रन्द्ये पुरुषस्य मायौ ॥ इन्द्रं या० । सा न आग० दाना स्वाहा ॥ इन्द्राण्या इदं० ॥ ५३॥ ॐ या हस्तिनि द्वीपिनि या हिरण्ये । त्विषिरश्वेषु पुरुषेषु गोषु ॥ इन्द्रं० संविदाना स्वाहा ॥ इन्द्राण्या इदं० ॥ ५४ ॥ ॐ रथे अक्षेषु वृषभस्य वाजे । वाते पर्जन्ये वरुणस्य शुष्मे ॥ इन्द्रं० संविदाना स्वाहा ॥ इन्द्राण्या इदं० ॥ ५५ ॥ ॐ अग्नेऽभ्यावर्तिन्नभि न आवर्त स्वायुषा वर्चसा सन्या मेधया प्रजया धनेन स्वाहा ॥ अभ्यावर्तिनेऽग्नय इदं० ॥ ५६ ॥ ॐ अग्ने अङ्गिरः शतन्ते सन्त्वावृतः सहस्रं त उपावृतः । तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि स्वाहा ॥ अभ्यावर्तिनेऽग्नय इदं० ॥ ५७ ॥ ॐ पुनरूर्जा निवर्तस्व पुनरग्न इषा-युषा । पुनर्नः पाहि विश्वतः स्वाहा ॥ अभ्यावर्तिनेऽग्नय इदं० ॥ ५८ ॥ ॐ सहरय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि स्वाहा ॥ अभ्यावर्तिनेऽग्नय इदं० ॥५९॥ ततश्चतस्रो व्याहृतीर्हुत्वा समित्पाणिर्यजमानायतनेऽवस्थाय- " वैश्वानराय प्रतिवेदयामो यदी नृण ॅ संङ्गरो देवतासु । स एतान्पाशान्प्रमुचन्प्रवेद स नो मुञ्चातु दुरितादवद्यात् ॥ वैश्वानरः पवयान्नः पवि-त्रैर्यत्सङ्गरमभिधावाम्याशाम् । अनां जानन्मनसा याचमानो यदत्रैनो अवतत्सुवामि ॥ अमी ये सुभगे दिवि विचृतो नाम तारके ।

प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम् ॥ विजिहीर्ष्व लोकान्कृधि बन्धान्मुञ्चासि बद्धकम् । योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्व ॥ स प्रजानन्प्रतिगृभ्णीत विद्वान्प्रजापतिः प्रथमजा ऋतस्य । अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनुसञ्चरेम ॥ ततन्तन्तुमन्वेके अनुसञ्चरन्ति येषान्दत्तं पित्र्यमायनवत् । अबन्ध्येके ददतः प्रयच्छाद्दातुञ्चेच्छक्नवाꣳसः स्वर्ग एषाम् ॥ आरभेथामनुसꣳरभेथाꣳ समानं पन्थामवथो घृतेन । यद्वां पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती सꣳरभेथाम् ॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्य उन्नो नेषद्दुरिता यानि चकृम ॥ भूमिर्माताऽदितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्य एनः । द्यौर्नः पिता पितृयाच्छम्भवासि जामि मित्वा मा विवित्सि लोकात् ॥ यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वꣳ स्वायाम् । अश्लोणाङ्गैरहुताः स्वर्गे तत्र पश्येम पितरञ्च पुत्रम् ॥ यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन् । यद्देवानाञ्चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु ॥ यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम् । यद्देवानाञ्चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु " इति द्वादशर्चेन सूक्तेनोपस्थाय उपविश्य — यन्मया मनसा वाचा कृतमेनः कदाचन । सर्वस्मात्तस्मान्मेळितो मोग्धि त्वꣳ हि वेत्थ यथातथꣳ स्वाहा ॥ अग्नये वैश्वानरायेदं० ॥ ततस्स्विष्टकृत्प्रभृति उत्तरपरिषेकात्प्राक्कृत्वाऽग्रेणाऽग्निमश्वत्थपर्णेषु हुतशेषं निदधाति — ' ॐ तत्सवितुर्वरेण्यं० ' इति ॥ उत्तरपरिषेकादि होमशेषं समापयेत् ॥ ॥ इति कूष्माण्डहोमः ॥ अशक्तौ — अपूर्वविधिना आज्यं संस्कृत्य कूष्माण्डहोमोपस्थानवरदानानि कुर्यात् ॥

# ॥ अथ चतुर्थीदिनकृत्यम् ॥

( बो. गृ. सू. १. ६ ) "अथ देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा पक्वमोदनं पायसं वा याचति। तमभ्युक्ष्याग्नावधिश्रयति। आज्यं निर्वपति। अथाज्यमधिश्रयति। उभयं पर्यग्नि कृत्वा मेक्षणं स्रुवं च सम्मार्ष्टि। अथैतं चरुं श्रपयित्वाऽभिघार्योदश्चमुद्वास्य प्रतिष्ठितमभिघारयति। परिधानप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति। स एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः। 'यस्त्वा हृदा' इति पुरोनुवाक्यामनूच्य 'यस्मै त्वं' इति याज्यया जुहोति। अथाज्याहुतीरुपजुहोति–' अग्ने प्रायश्चित्ते० कृणोमि स्वाहा। वायो प्रायश्चित्ते०। आदित्य प्रायश्चित्ते०। प्रजापते प्रायश्चित्ते०'। पक्वादेव स्विष्टवतीभ्यां सौविष्टकृतं जुहोति। लाजैरितरत्र। ("यत्रैकाम्नाता स्यात्तां द्विरभ्यावर्तयेत् तथा लाजेष्विति 'तत्सवितुर्वरेण्यम्' इत्यनुद्रुत्याऽऽम्नातया जुहोति" पुस्तकान्तरे अधिकः पाठः ) 'हव्यवाहं० आहुवेमॊ३ स्विष्टमग्ने० आयुः स्वाहा' इति। जयप्रभृति सिद्धमाधेनुवरप्रदानात्॥ अथाज्यशेषेण हिरण्यमन्तर्धाय मूर्ध्नि संस्रावं जुहोति—'भूः स्वाहा, भुवः०, सुवः०, भूर्भुवः सुवः०' इति। अथैनां प्रदक्षिणमग्निं पर्याणयति— 'अर्यम्णो अग्निं० देवराश्च' इति"॥

( बो. गृ. सू. १. ५ ) "चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य दण्डमुत्थापयति — 'ऊर्जः० मदेम' इति। अथैनं वध्वै प्रयच्छति– 'प्रजया त्वा०' इति। तं वधूः प्रतिगृह्णाति– 'प्रजावती भूयासम्' इति। अथैनं वराय प्रयच्छति — 'प्रजया त्वा पशुभिः०' इति। तं वरः प्रतिगृह्णाति — 'प्रजावान्पशुमान्भूयासम्' इति। अथैनं स्थूणादेशे निधायान्तिकन प्रतिपद्यते। प्रसिद्धमुपसंवेशनम्। श्वोभूते दण्डमादाय पुण्याहं वाचयित्वाऽप्सु विसर्जयति॥ अथास्तमित आदित्येऽ-

न्योन्यमलङ्कृत्योपरिशय्यां शयाते ॥ अथ वधूमभिमन्त्रयते — 'सुमङ्गलीरियं० विपरेतन' इति ॥ अथैनां सर्वसुरभिगन्धया मालया युनक्ति— 'सन्नौ मनः संहृदयानि नौ सन्नाऽभिः सं तनु त्वचः । सं त्वा कामस्य योक्त्रेण युञ्जत्यविमोचनाय' इति " ॥

(बो. गृ. सू. १. ६) "अथ श्रीमन्तमगारं सम्मृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं तल्पवन्तं साधिवासं दिक्षु सर्पिस्सूत्रेन्धनप्रद्योतितमुदकुम्भादर्शोच्छिरसं प्रपाद्य तस्मिन्नेनां संवेश्य तस्या अन्तिके जपति — 'उदीर्ष्वातो० विद्धि' इति । अथैनामुपसंवेशयति — 'प्रजापतिः स्त्रियां यशः' इत्येतया । अथास्यास्स्तोकोर्तिं विवृणोति— 'प्रजायै त्वा' इति । सा यद्यश्रु कुर्यात्तामनुमन्त्रयते— 'जीवां० परिष्वजे' इति " ॥

अथ प्रयोगः ॥ अथ चतुर्थ्यां पक्वहोमादि ॥ एवं त्रिरात्रमग्निपरिचर्याक्षारलवणाशनब्रह्मचर्यादि व्रतं चरित्वा चतुर्थ्यां सायमौपासनं हुत्वा रात्रेरपरभागे[१] सपत्नीको वरो हस्तपादं प्रक्षाल्यासने प्राङ्मुख उपविश्याचम्य देवयजनोल्लेखनादि तमेव विवाहाग्निं प्रतिष्ठाप्य देशकालौ संकीर्त्य "श्रीपरमेश्वरप्रीत्यर्थमनया नवोढया वध्वा सह पक्वहोमं करिष्ये" ॥ पक्वहोमः कर्म ॥ आघारवत्तंत्रम् ॥ पंचदश दारुरिध्मः ॥ अग्नीषोमावाज्यभागौ ॥ जातवेदा नामाग्निः ॥ पक्वमोदनं (पायसं वा) हविः ॥ जातवेदोऽग्निर्देवता ॥ अग्निः स्विष्टकृत्, इत्यादि संकल्प्यान्वाधायाप्रणीताभ्यः कृत्वा पक्वमोदनं पायसं वा निर्वपति ॥ "दे॒वस्य॑ त्वा॰ हस्ता॑भ्या॒म॒ग्नये॑ जा॒तवे॑दसे जु॒ष्टं निर्व॑पामि" इति त्रिर्यजुषा सकृत्तूष्णीं निरुप्य "दे॒वस्य॑ त्वा॰ हस्ता॑भ्याम॒ग्नये॑ जा॒तवे॑दसे वो॒ जु॒ष्टं प्रोक्षा॑मि" इति सकृन्मंत्रेण द्विस्तूष्णीं प्रोक्ष्याज्यसंस्काराद्यग्निमुखांतं कृत्वा पक्वाज्जुहोति—

१. "निशायाः पश्चिमे भागे पूर्वभागेऽथवा हुनेत् । जायापती दिवोपोष्य कुर्यातां शेषहोमकम्" इति कारिकांतरे रात्रिपूर्वभागेऽपि पक्वहोमोऽभिहितः ॥

"ॐ यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ॥ जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां ३ यस्मै त्व९ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ॥ अश्विन९ स पुत्रिणं वीरवंतं गोमंत९ रयिं नशते स्वस्ति स्वाहा" इति ॥ जातवेदसेऽग्नय इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा स्विष्टकृतमवदायांतःपरिधौ निधायाज्याहुतीरुपजुहोति— "ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये यास्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यैतां कृणोमि स्वाहा॥ अग्नये प्रायश्चित्तय इदं० ॥ ॐ वायो प्रायश्चित्ते त्वं देवानां० कृणोमि स्वाहा ॥ वायवे प्रायश्चित्तय इदं० ॥ ॐ आदित्य प्रायश्चित्ते त्वं देवानां० कृणोमि स्वाहा ॥ आदित्याय प्रायश्चित्तय इदं० ॥ ॐ प्रजापते प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये यास्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यैतां कृणोमि स्वाहा ॥ प्रजापतये प्रायश्चित्तय इदं० " ॥ व्याहृतीश्च हुत्वा पुरस्तात्स्रुवाहुतिं हुत्वा स्विष्टकृतमुत्तरार्धे पूर्वार्धे जुहोति — "ॐ हव्यवाहमभि० माहुवेमों ३ स्विष्टमग्ने० आयुः स्वाहा " इति ॥ अग्नये स्विष्टकृत इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा मेक्षणमग्नौ प्रहृत्य संक्षाळननिनयनादि प्रागुत्तरपरिषेकात्कृत्वा वधूमूर्ध्नि हिरण्यमंतर्धायाज्यशेषेण स९स्रावं जुहोति — "ॐ भूः स्वाहा ॥ अग्नय इदं० ॥ भुवः स्वाहा ॥ वायव इदं० ॥ सुवः स्वाहा ॥ सूर्यायेदं० ॥ भूर्भुवः सुवः स्वाहा ॥ प्रजापतय इदं० ॥ ॐ ओ९ स्वाहा ॥ ब्रह्मण इदं०" ॥ अथैनां प्रदक्षिणमग्निं पर्याणयति — "अर्यम्णो अग्निं परियंतु क्षिप्रं प्रतीक्षंता९ श्वश्र्वो देवराश्च " इति ॥ अथोत्तर-

---

१ " आज्यशेषेण जुहुयाद्व्याहृतिप्रणवैः क्रमात् ॥ हिरण्यमंतर्धायैव मूर्ध्नि वध्वा अथोत्थितः " इति गृ० संग्रहे ॥

परिषेकादि होमशेषं समापयेत् ॥ ॥ अथात्र व्रतविसर्जनं कुर्यात् ॥ प्राणानायम्य देशकालौ संकीर्त्यानया नवोढया वध्वा सहाचरितविवाहव्रतविसर्जनं करिष्ये, इति संकल्प्याग्निं परिषिच्य " ॐ अग्ने व्रतपत उपयमनं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ वायो व्रतपते० ॥ आदित्य व्रतपते० ॥ व्रतानां व्रतपत उपयमनं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा " इति चतस्रो घृतान्वक्ताः समिधोऽभ्याधाय पुनः परिषिंचेत् ॥ केवलं मन्त्रान्वा जपेत् ॥ अथैनं शय्यांतर्हितमौदुंबरं दंडमुत्थापयति–"ऊर्जः पृथिव्या अध्युत्थितोऽसि ॥ वनस्पते शतवल्शो विरोह ॥ त्वया वयमिषमूर्जं मदंतः ॥ रायस्पोषेण समिषा मदेम " इति ॥ अथैनं वध्वै प्रयच्छति— " प्रजया त्वा सꣳसृजामि मासरेण सुरामिव " इति ॥ तं वधूः प्रतिगृह्णाति—" प्रजावती भूयासम् " इति ॥ अथैनं वराय प्रयच्छति—" प्रजया त्वा पशुभिः सꣳसृजामि मासरेण सुरामिव " इति ॥ तं वरः प्रतिगृह्णाति—" प्रजावान्पशुमान् भूयासम् " इति ॥ अथैनं स्थूणादेशे सुरक्षितं निदध्यात् ॥ ॥ अथोपसंवेशनम् ॥ चतुर्थ्यां रात्रौ व्रतविसर्जनांते ब्राह्मणसुवासिनीर्गंधादिभिः सम्पूज्य फलहिरण्याद्युपायनानि दत्वा ताम्बूलचर्वणयोग्यतासिध्यर्थं " तांबूलं श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम् ॥ तस्मादस्य प्रदानेन अतः शान्तिं प्रयच्छ मे " इति ताम्बूलानि च दत्वा तेभ्यश्चाशिषो गृहीत्वाथ वरः सम्मृष्टोपलिप्तं गंधपुष्पधूपादिभिः सुवासितं तल्पवंतं साधिवासं वृतदीपदीपितमुदकुम्भादर्शोच्छ्रितरसं श्रीमंतमगारं वध्वा सह प्रविश्य तस्मिन्नेनां वधूं शय्यायां संवेश्य तदंतिके स्वयमुपविश्य जपति —" उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा ॥ अन्यामिच्छ प्रफर्व्यꣳ सं जायां पत्या सृज ॥ उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीट्टे ॥ अन्यामिच्छ पितृषदं व्यक्ताꣳस ते भागो जनुषा तस्य विद्धि " इति ॥ अथास्यास्तोकोर्तिं ( योनिं ) विवृणोति—" प्रजायै त्वा " इति ॥ अथैनामुपसंवेशयति—" प्रजापतिः स्त्रियां यशः ॥ मुष्कयोरदधात्सपम् ॥

कामस्य तृप्तिमानंदम् ॥ तस्याग्ने भाजयेह मा " इति ॥ सा यद्यश्रु कुर्यात्तामनुमन्त्रयते—" जीवा२ रुदन्ति विमयंते अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः । वामं पितृभ्यो य इद२ समेरिरे मयः पतिभ्यो जनयः परिष्वजे" इति ॥ ततः पुरन्ध्र्यो मंगलार्तिक्यं कुर्युः ॥ शिष्टास्त्विदानीमुपसंवेशनं केवलमन्त्रजपेनैव निर्वर्तयंति ॥ तथा प्रयोगरत्नेऽपि—" जपेदुदीर्ष्वात इति प्रजापतिः स्त्रियां च जीवानिति च क्रमादृचः " इति जपमात्रं विहितम् ॥ ॥ इति चतुर्थीविधिः ॥

## ॥ अथ उदुम्बरपूजा ॥

( बो. गृ. सू. १. ८ ) " अथाभ्यां पञ्चमेऽहनि नापितं कर्म कुर्वन्ति । ( एवं पत्नीकेशवर्जं ) नापिताय पयोदनं दत्त्वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रैकमुदुम्बरमूलं पश्यन्ति तं प्रदक्षिणं परिसमूह्य प्रदक्षिणं गन्धैरनुलिम्पन्जपति—'यथा त्वं वनस्पते० रुहेम ' इति । सुमनोभिः प्रच्छादयति—' यथा त्वं वनस्पते० भवानि ' इति । अत्रैव त्रिवृताऽन्नेन बलिमुपहरति । मन्त्रं चोदाहरन्ति—' ऊर्जस्वान्० वृत्स्व ' इति । अन्नं संस्कृत्य ब्राह्मणान्संपूज्याशिषो वाचयित्वा जानुदघ्नमुदकमवतीर्य प्राचीनदशेनाहतेन वाससा मत्स्यान्गृह्णते ब्रह्मचारिणं पृच्छतः—' ब्रह्मचारिन् किं पश्यसि ' इति । स पृष्टः प्रतिब्रूयात्—' पुत्रांश्च पशूंश्च ' इति । अथैनान्मत्स्यानुदुम्बरमूले बकानां बलिमुपहरति—' दीर्घायुत्वाय वर्चसे ' इति । अत्रैव निर्माल्यानि परिभुक्तानि वासांसि प्रतिसरांश्च प्रतिमुच्योदुम्बरशाखायां संसृज्याथावगाह्यान्योन्यस्य पृष्ठे धावयित्वोदकान्तं प्रतियौति—' प्रतियुतो० पाशः ' इति । अन्योन्यमलङ्कृत्य रक्तानि वासांसि परिधायाहतेन वाससावैति । यानेन पद्भ्यां वा गृहं गत्वा प्रक्षाळितपाणिपादावप आचम्य वाग्यतौ शयनमारभेते" ॥

अथ प्रयोगः ॥ सपत्नीको वरः पञ्चमेऽह्नि प्रातरौपासनं हुत्वा ( केशश्मश्रुलोमनखानि वापयित्वा स्नात्वाऽलङ्कृत्य ) औदुम्बरं दण्डं गन्धपुष्पाक्षतादिकञ्चादाय ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्योदुम्बरतरुमूलं गत्वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य विवाहाङ्गतया विहितमुदुम्बरपूजनादि करिष्ये, इति सङ्कल्प्य गणपतिं सम्पूज्योदुम्बरतरुमीशान्यमारभ्य प्रदक्षिणं परिसमूह्यासनाद्युपचारैरभ्यर्च्य प्रदक्षिणं गंधैरनुलिंपति—" यथा त्वं वनस्पत ऊर्जाभ्युत्थितः शतवल्शो विरोहस्येवमहं पुत्रैश्च पशुभिश्च सहस्रवल्शा विवय॑ रुहेम " इति ॥ सुमनोभिः प्रच्छादयति—" यथा त्वं वनस्पते फलवानस्येवमहं पुत्रैश्च पशुभिश्च फलवान् भवानि " इति ॥ त्रिवृतान्नेन बलिमुपहरति—( भक्ष्यं भोज्यं च पेयं चेत्येतत्समुदितं त्रिवृत ) " ऊर्जस्वान्पयस्वान्पयसा पिन्वमानोऽस्मान्वनस्पते पयसाभ्यावंवृत्स्व " इति ॥ अथ ब्राह्मणान्संपूज्य " उदुंबरः प्रीयताम् " इति पुण्याहं वाचयित्वा [1]—अथाचारादुदुम्बरमूलेऽष्टदलपद्मं विलिख्य तत्र हरिद्राकुंकुमोदकपूर्णं कलशं निधाय " कनकारुणमासुरं प्रपन्नं हयवक्त्रं मदनस्य साहचर्यम् ॥ द्विभुजं धृतपल्लवप्रसूनं भजतामिष्टदमर्चयेद्वसंतम् " इति कलशे वसन्तं ध्यात्वावाह्य—" वसन्ताय नमः " इत्यासनाद्युपचारैरभ्यर्च्य तत्कलशजलं बन्धुभिः सहान्योन्यं जायापती अभिषेकं कुरुतः —[1] ॥ अथोदुम्बरं प्रदक्षिणीकृत्य जलसमीपं गत्वा औदुंबरं दंडमप्सु प्रास्योभौ दम्पती जानुदघ्ने जले स्थित्वा प्राचीनदशेनाहतेन वाससा मत्स्यान् गृह्णीतः ॥ अथ ब्रह्मचारिणं पृच्छेताम्—" ब्रह्मचारिन् किं पश्यसि " इति ॥ अथैवं पृष्टो ब्रह्मचारी

---

१—१. इदं शौनकोक्तमिति प्र० मालायां ॥ २. " गृह्णीतः पैष्टिकानत्र मत्स्यान् प्राग्दशवाससा " इति कुमारस्वामिकारिका ॥

" पुत्रांश्च पशूंश्च पश्यामि " इति प्रतिब्रूयात् ॥ अथैतान्मस्यानुदुम्बरमूले बकानां बलिमुपहरति—" दीर्घायुत्वाय वर्चसे " इति ॥ अत्रैव निर्माल्यानि परिभुक्तानि वासांसि प्रतिसरांश्च प्रतिमुच्यौदुम्बरशाखायां संसृज्य जलमवगाह्यान्योन्यस्य पृष्ठे धावयित्वा स्नात्वोदकांतं प्रतियौति—" प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः " इति ॥ अथाहतवाससी परिधायान्योन्यमलंकृत्य यानेन पद्भ्यां वा गृहं गत्वा हस्तपादं प्रक्षाल्याचम्य स्थालीपाकं कुर्यात् ॥ ॥ इत्युदुम्बरपूजा ॥

## ॥ अथाग्नेयस्थालीपाकः ॥

(बौ. गृ. सू. १. ५) " अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति— 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम्। स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात्। स एष पार्वणो भवति " ॥

अथ प्रयोगः ॥ सपत्नीको वरो दर्भेष्वासीनः प्राणानायम्य देशकालौ सङ्कीर्त्य " पञ्चमेऽहन्याग्नेयस्थालीपाकं करिष्ये " इति सङ्कल्प्य गणपतिं सम्पूज्य " अग्निः प्रीयताम् " इति पुण्याहं वाचयित्वा स्थंडिलोल्लेखनाद्यौपासनाग्निं प्रतिष्ठाप्यान्वादध्यात् ॥ तत्र अग्निर्मूर्धा नामाग्निः, अग्निर्देवता, चरुर्हविः, अग्निः स्विष्टकृत्, इति संकल्पे विशेषः ॥ आप्रणीताभ्यः कृत्वा तण्डुलान्निर्वपति—" देवस्य त्वा० हस्ताभ्यामग्नये जुष्टं निर्वपामि " इति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ अथ " देवस्य त्वा० हस्ताभ्यामग्नये वो जुष्टं प्रोक्षामि" इति सकृन्मंत्रेण द्विस्तूष्णीं प्रोक्ष्य त्रिः प्रक्षाळ्य स्थाल्यां तिरः पवित्रमप पयो वा निनीयाग्नावधिश्रित्य तिरः पवित्रं तण्डुलानावपेत् ॥ अथाज्यसंस्काराद्यग्निमुखांतं कृत्वा पक्वाज्जुहोति—" अग्निमूर्धा दिवः ० जिन्वतो३ भुवो यज्ञस्य० हव्यवाह१ स्वाहा " इति ॥ अग्नय इदं० ॥ अथ स्विष्टकृतमवदायांतःपरिधौ निधाय व्याहृतीरुपहुत्य स्विष्टकृदादि होमशेषं समापयेत् ॥ ॥

अथ समारोपणम् ॥ पालाशीमाश्वत्थीमौदुम्बरीं खादिरीं वा समिधमादाय पत्न्यान्वारब्धोऽग्नौ प्रतापयति—" अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ॥ तं जानन्नग्न आरोहाथा नो वर्धया रयिम् " इत्येवं समिध्यग्निं समारोप्य तां समिधं पुनरौपासनकाले—" आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमासीद साध्या ॥ अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳ सृजेथामयं च ॥ पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसी त्वयि तंतुमेतम् " इति द्वाभ्यां लौकिकाग्नावभ्याधाय तत्रौपासनं हुत्वा पुनस्तथैव समारोपयेत् ॥

अथ पंचमेऽहनि सायमौपासनहोमान्ते वधूवरावन्योन्यमलंकृत्य शय्यामधिरोहतः ॥ तत्र वरो वधूमभिमंत्रयते—"सुमंगलीरियं वधूरिमाꣳ समेत पश्यत ॥ सौभाग्यमस्यै दत्वा याथास्तं विपरेतन" इति ॥ अथैनां सर्वसुरभिगंधया मालया युनक्ति—" सन्नाग्नः सꣳ हृदयानि सन्नाभिः सन्तनु त्वचः ॥ सन्त्वा कामस्य योक्त्रेण युंजाम्यविमोचनाय " इति ॥ ॥ इति पंचमेऽहनि कर्तव्यविधिः ॥

## ॥ अथ वधूप्रवेशः ॥

तत्र कालनिर्णय उक्तः सं० मालायाम् — " विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तात् । तदूर्ध्वमासेषु च पञ्चमांतात्ततः परस्तान्नियमो न चाऽस्ति " इति ॥ तत्र विशेषमाह नारदः— " समे वर्षे समे मासि यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुस्सा नारी मृतिमाप्नुयात् " इति ॥ वृद्धवसिष्ठः— " षष्ठेऽष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः । पञ्चाङ्गसंशु-द्धिदिनं विनाऽपि विधावसद्गोचरगेऽपि कार्यः " इति ॥ स्मृत्यन्तरे तु — " वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमकेऽथवाऽह्नि ।

द्वितीयके वाऽथ चतुर्थके वा षष्ठे वियोगाऽऽमयदुःखदस्स्यात् " इति ॥ ज्योतिर्निबन्धे — " वधूप्रवेशस्तु निशि प्रशस्तो नवप्रवेशस्तु दिवा प्रशस्तः । रात्रौ दिवा सज्जगृहप्रवेशः प्रोक्तो भरद्वाजमुनीन्द्रमुख्यैः " इति ॥ एतेन विवाहदिनादारभ्य षोडशदिनाभ्यन्तरे प्रथमतृतीयपञ्चमेष्वयुग्मदिवसेषु षष्ठाष्टमदशमादियुग्मदिनेषु चन्द्रतारादिबलरहितेऽपि वधूप्रवेशः शुभदस्तत्राऽपि रात्रावतिप्रशस्तः ॥ षोडशदिनाऽनन्तरं चेद्विषममासे विषमाब्दे पञ्चाङ्गशुद्धिं विचार्यैव वधूप्रवेशः कार्य इत्यवगम्यते ॥ तत्र नक्षत्रादिकमाह मुहूर्तमाधवीयव्याख्याने बादरायणः — " नीहारांशुवसूत्तरादितिगुरुब्रह्माऽनुराधाऽश्विनीपूषाभास्करवायुवारुणहरित्वाष्ट्रेषु शस्ते तिथौ । कुम्भाऽजाऽळिगते रवौ शुभकरे प्राग्गोदये भार्गवे जीवज्ञास्फुजितां दिने नववधूवेश्मप्रवेशः शुभः " इति ॥ ज्योतिष्प्रकाशे— " वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे । धनं धान्यञ्च पृष्ठस्थे सर्वनाशः पुरः स्थिते " इति ॥

अथ प्रयोगः ॥ विवाहदिने गृहप्रवेशाकरणपक्षे पंचमदिनेऽन्यस्मिन्वा पूर्वोक्तशुभदिने नववधूसहितो वरो बन्धुजनैः सहौपासनाग्निमादाय मंगलघोषपुरःसरं श्वशुरगृहान्निष्क्रम्य यानादिकमारुह्य स्वगृहं गत्वा तत्र यथाचारमभ्यर्चितो देहल्या बहिर्मंगलासने उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य " समस्तमांगल्यप्राप्त्यर्थमनया नवोढया वध्वा सह गृहप्रवेशं करिष्ये, तदंगत्वेनादौ गणपतिदुर्गाक्षेत्रपालवास्तोष्पतिपूजनं करिष्ये " इति संकल्प्य गणपतिं संपूज्य " जातवेदसे " इति दुर्गां, " क्षेत्रस्य पतिना " इति क्षेत्रपालं " वास्तोष्पते प्रतिजानीहि, वास्तोष्पते शग्मया " इति द्वाभ्यां वास्तोष्पतिं च देहल्यां सम्पूज्य वधूं दक्षिणपादनिधापनपूर्वकं गृहं प्रवेशयति— " भद्रान् गृहान्० संविशानि " इति ॥ अथैनां कल्याणीं वाचं वाचयति—" प्रजावती पशुमती० भूयासम् " इति ॥ अथैनामानडुहे चर्मण्युपवेशयति— " इह गावः० निषीदतु " इति ॥ ततो गणपतिस्मरणपूर्वकं

लक्ष्मीं गृहदेवतां च सम्पूज्य प्राणानायम्य देशकालौ संकीर्त्यानया नवोढया वध्वा सह गृहप्रवेशांगभूतं स्वस्तिपुण्याहवाचनं करिष्ये, इति संकल्प्य गणपतिं सम्पूज्य "कृतस्यास्य गृहप्रवेशकर्मणः ॐ पुण्याहं, स्वस्ति, ऋद्धिं भवंतो ब्रुवन्तु, प्रजापतिः प्रीयताम्" इति पुण्याहं वाचयित्वा ब्राह्मणेभ्यः सुवासिनीभ्यश्च फलहिरण्यादिकं दद्यात् ॥ ततः पुरंध्र्यो मंगलार्तिक्यं कुर्युः, ब्राह्मणा मंत्राक्षतान् दद्युः ॥ इति ॥

## ॥ अथ वैश्वदेवारम्भः ॥

(बो. गृ. प. सू. १. ८. २) "अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति –'विश्वेदेवाः, विश्वेदेवा' इति द्वाभ्याम्" ॥ गृ० सङ्ग्रहे–"दशमेऽहानि सम्प्राप्ते वैश्वदेवन्तु नैत्यकम्। आरभेत तथा श्राद्धं मत्स्यस्यानन्तरेऽह्नि वा ॥ षष्ठेऽह्नि वैश्वदेवं चेत्कृष्णपक्षे पितृक्रिया" इति ॥ पञ्चमदिनकृत्यान्ते (बो. गृ. सू १. ८) "श्वोभूते वैश्वदेवेन प्रतिपद्यते ॥ मासि श्राद्धेन चापरपक्षे" इत्युक्तम् ॥ प्र० चिन्तामणौ तु–"षष्ठेऽष्टमे वा दशमेऽह्नि विप्रान् निमन्त्र्य योग्यानथ वैश्वदेवम्। कुर्याद्वरो वह्निमुखञ्च विश्वेदेवादिकाभ्यां जुहुयाच्च पक्वम्" इति षष्ठाऽष्टमदशमदिनेष्वन्यतमे कार्यमित्यभिहितम् ॥ अनेन दशदिनात्परं स्वगृहप्रवेशकरणे श्वशुरगृहेऽपि वा वैश्वदेवं कुर्यादिति प्रतीयते ॥

अथ प्रयोगः ॥ उक्तदिने सपत्नीको वरः प्रातरौपासनादि नित्यकर्म कृत्वा दर्भेषु प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य वैश्वदेवारम्भं कर्तुमादौ शान्त्यर्थं० स्वस्तिपुण्याहवाचनं करिष्ये, इति सङ्कल्प्य गणपतिं सम्पूज्य "विश्वेदेवाः प्रीयन्ताम्" इति पुण्याहं वाचयित्वा स्थण्डिलोल्लेखनाद्यौपासनाग्निं प्रतिष्ठाप्य प्राणानायम्य देशकालौ

सङ्कीर्त्य " अनया नवोढया वध्वा सह वैश्वदेवारम्भहोमं करिष्ये, आवसथ्यो नामाऽग्निः, विश्वेदेवा देवता, चरुर्हविः, अग्निः स्विष्टकृत् " इत्यादि संकल्प्यान्वाधायाग्निमुखांतं कृत्वा पक्वाज्जुहोति— " विश्वेदेवा ऋतावृध ऋतुभिर्हवनः श्रुतः ॥ जुषन्तां युज्यं पयो ३ विश्वेदेवाः शृणुतेमᳫं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ॥ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्व ᳫं स्वाहा " इति ॥ विश्वेभ्यो देवेभ्य इदं० ॥ अथ स्विष्टकृतमवदायांतःपरिधौ निधाय वैश्वदेवादि पंचयज्ञं कुर्यात् ॥ सर्वेष्वायतनेषु पाणिना परिसमूह्योभयतः परिषेकं गंधादिभिरलंकरणं च कुर्यात् ॥ ( पत्नी वालंकुर्यादिति कारिकाकाराः ) अथ चरुशेषं पात्रान्तरे कृत्वा तस्मिन्प्रभूतमाज्यमानीय हस्तेनावग्राहशोऽग्नौ जुहोति— " ॐ अग्नये स्वाहा ॥ ( अग्नय इदं०, इत्यादि यथालिंगं त्यागः ) सोमाय स्वाहा ॥ ध्रुवाय स्वाहा ॥ ध्रुवाय भूमाय स्वाहा ॥ ध्रुवाक्षितये स्वाहा ॥ अच्युतक्षितये स्वाहा ॥ ईशानाय स्वाहा ॥ जयंताय स्वाहा ॥ धर्माय स्वाहा ॥ धर्मरुचये स्वाहा ॥ धन्वंतरये स्वाहा ॥ विद्यायै स्वाहा ॥ अम्बिकायै स्वाहा ॥ हरये स्वाहा ॥ गणेभ्यः स्वाहा ॥ गणपतिभ्यः स्वाहा ॥ परिषद्भ्यः स्वाहा ॥ विश्वेभ्यो देवेभ्यः स्वाहा ॥ साध्येभ्यो देवेभ्यः स्वाहा ॥ सर्वेभ्यो

---

१. " स्विष्टं तदन्तःपरिधौ निधाय कृत्वा ततः पंचमखान्यथावत् ॥ इष्टेभ्य इत्यष्टभिराज्यमग्नौ हुनेत्ततः स्विष्टकृतं च सिद्धम् ॥ पूर्वं च पश्चात्परिषिच्य वह्निं देवेभ्य उक्त्वा हविषा च वह्नौ ॥ कृतोऽग्निपूर्वैरिह पंचविंशन्मन्त्रैश्च होमः सुरयज्ञ उक्तः ॥ भूतेभ्य उक्त्वा परिषिच्य पूर्वं वह्नेरुदग्दर्भयुते स्थलेऽग्नेः ॥ एकत्र वा पश्चिमतस्तदग्नेः क्षिप्तो बलिर्भूतमखः स उक्तः ॥ धर्मादिकानां च ततः पितॄणां ततो दिशां चेह बलिक्रियायाम् ॥ सप्तोत्तराशीतिमिताश्च मंत्रास्तत्तत्प्रदेशे बलिमाहुरेतैः " इत्यादिना प्र० चिन्तामणौ वैश्वदेवबलिहरणैस्त्रयो महायज्ञा उक्ताः । धर्मसूत्राख्याने‍ऽपि एते देवपितृभूतयज्ञास्त्रयो वैश्वदेवबलिहरणैरेव सम्पादिताः केचित्तु पृथक्कर्तव्या इत्याहुः इत्युक्तम् ॥

देवेभ्यः स्वाहा ॥ सर्वाभ्यो देवताभ्यः स्वाहा ॥ भूः स्वाहा ॥ भुवः स्वाहा ॥ सुवः स्वाहा ॥ भूर्भुवः सुवः स्वाहा " इति पंचविंशत्याहुतीर्हुत्वा तथैव " ॐ अग्नये स्विष्टकृते स्वाहा " इत्युत्तरार्धपूर्वार्धे जुहोति ॥ अथाग्नेः पश्चाद्भूमौ चतुरश्रमंडलं कृत्वा प्रागादिचतुर्दिक्षु क्रमेण चतुरो बलीन् दद्यात्—" धर्माय स्वाहा ॥ अधर्माय स्वाहा ॥ कद्रुवे नागमात्रे स्वाहा ॥ सर्पेभ्यः स्वाहा " इति ॥ अथ तत्रैवेशानमारभ्य प्रदक्षिणाकारेणैकविंशतिं — " अचलायै देव्यै स्वाहा ॥ वास्तुपाल्यै सगणायै स्वाहा ॥ अद्भ्यः स्वाहा ॥ वरुणाय स्वाहा ॥ प्रजापतये स्वाहा ॥ परमेष्ठिने स्वाहा ॥ ऋषभाय स्वाहा ॥ रुद्राय स्वाहा ॥ रुद्राण्यै स्वाहा ॥ ओषधिवनस्पतिभ्यः स्वाहा ॥ रक्षोदेवजनेभ्यः स्वाहा ॥ कामाय स्वाहा ॥ भगाय स्वाहा ॥ श्रियै स्वाहा ॥ विष्णवे स्वाहा ॥ गृहाय स्वाहा ॥ गृहराजाय स्वाहा ॥ धनधान्याभ्याꣳ स्वाहा ॥ वैश्रवणाय स्वाहा ॥ श्रियै स्वाहा ॥ पुष्ट्यै स्वाहा " इति ॥ पुनरीशानादि पूर्ववत्पंचदश—" उलूखलमुसलाभ्याꣳ स्वाहा ॥ दृषदुपलाभ्याꣳ स्वाहा ॥ समूहन्यै देव्यै स्वाहा ॥ गृह्याभ्यः स्वाहा ॥ अवसानेभ्यः स्वाहा ॥ अवसानपतिभ्यः स्वाहा ॥ सर्पदेवजनेभ्यः स्वाहा ॥ सर्वभूतेभ्यः स्वाहा ॥ अंतरिक्षाय स्वाहा ॥ अवान्तरिक्षाय स्वाहा ॥ धात्रे स्वाहा ॥ विधात्रे स्वाहा ॥ भूत्यै स्वाहा ॥ प्रभूत्यै स्वाहा ॥ यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा " ॥ इति ॥ अथ मण्डलमध्ये प्रागपवर्गाश्चतुस्त्रिंशत्—" ज्येष्ठाभ्याꣳ स्वाहा ॥ करस्कराभ्याꣳ स्वाहा ॥ श्रियै स्वाहा ॥ विष्णवे स्वाहा ॥ रुद्राय स्वाहा ॥ पशुभ्यः स्वाहा ॥ पशुपतये स्वाहा ॥ वास्तोष्पतये स्वाहा ॥ पृथिव्यै स्वाहा ॥ अंतरिक्षाय स्वाहा ॥ दिवे

---

१. सूत्रे पृथक्पृथक्स्थानेषु बलिहरणान्युक्तानि ॥ अत्रानुष्ठानसौकर्यार्थमेव कारिकोक्तः पक्षः समादृतः ॥

स्वाहा ॥ सूर्याय स्वाहा ॥ चंद्रमसे स्वाहा ॥ नक्षत्रेभ्यः स्वाहा ॥ अद्भ्यः स्वाहा ॥ ओषधीभ्यः स्वाहा ॥ वनस्पतिभ्यः स्वाहा ॥ चराचरेभ्यः स्वाहा ॥ परिप्लवेभ्यः स्वाहा ॥ सरीसृपेभ्यः स्वाहा ॥ देशेभ्यः स्वाहा ॥ कालेभ्यः स्वाहा ॥ लोकेभ्यः स्वाहा ॥ वेदेभ्य स्वाहा ॥ देवेभ्यः स्वाहा ॥ ऋषिभ्यः स्वाहा ॥ वसुभ्यः स्वाहा ॥ रुद्रेभ्यः स्वाहा ॥ आदित्येभ्यः स्वाहा ॥ इंद्राय स्वाहा ॥ बृहस्पतये स्वाहा ॥ प्रजापतये स्वाहा ॥ ब्रह्मणे स्वाहा ॥ आयतनवते स्वाहा " इति ॥ अथ दक्षिणतः प्राचीनावीती—" पितृभ्यः स्वधा नमः स्वाहा ॥ पितामहेभ्यः स्वधा नमः स्वाहा ॥ प्रपितामहेभ्यः स्वधा नमः स्वाहा ॥ मातृभ्यः स्वधा नमः स्वाहा ॥ पितामही-भ्यः स्वधा नमः स्वाहा ॥ प्रपितामहीभ्यः स्वधा नमः स्वाहा ॥ मातामहेभ्यः स्वधा नमः स्वाहा ॥ मातुः पितामहेभ्यः स्वधा नमः स्वाहा ॥ मातुः प्रपितामहेभ्यः स्वधा नमः स्वाहा ॥ मातामहीभ्यः स्वधा नमः स्वाहा ॥ मातुः पितामहीभ्यः स्वधा नमः स्वाहा ॥ मातुः प्रपितामहीभ्यः स्वधा नमः स्वाहा " इति ॥ अथाप उपस्पृश्योत्तरतो यज्ञोपवीती—" नमो रुद्राय पशुपतये स्वाहा " इति ॥ अथ दिक्षु— " प्राच्यै दिशे स्वाहा ॥ दक्षिणायै दिशे स्वाहा ॥ प्रतीच्यै दिशे स्वाहा ॥ उदीच्यै दिशे स्वाहा ॥ ऊर्ध्वायै दिशे स्वाहा ॥ अधरायै दिशे स्वाहा " इति ॥ अथावान्तरदिक्षु— " अग्नये स्वाहा ॥ निर्ऋतये स्वाहा ॥ वायवे स्वाहा ॥ ईशानाय स्वाहा " इति ॥ अथाकाशे उत्क्षिपति— ॐ ये भूताः प्रचरंति दिवा बलिमिच्छंतो वितुदस्य प्रेष्याः ॥ तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा " इति ॥ ( रात्रौ चेद्दिवा स्थाने नक्तं उभयोस्तंत्रैक्ये दिवानक्तं इति च योज्यम् ) ततः संक्षाळनं प्रागुदीच्यां दिशि निनयति— " नमो

---

१. मात्रादीनां बलिदानं कारिकान्तरोक्तम् ॥

रुद्राय भौमाय स्वाहा " इति ॥ एवं वैश्वदेवबलिहरणानि कृत्वातिथिमाकांक्षेदागोदोहनकालम् ॥ आगतमातिथिं भोजयेत् ॥ अग्रं वोद्धृत्य दद्यात् ॥ ॥ अथ प्रक्षालितपाणिपादोऽप आचम्याग्नेः पश्चाद्दर्भेष्वासीनो दर्भान्धारयमाणस्त्रीन्प्राणायामान्धारयित्वा सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वो दशवारं वा ॥ अथ वेदादींश्छन्दांसि कूष्माण्डानि चाधीयीत— " अग्निमीळे पुरोहितम् " इति ऋग्वेदस्य ॥ " इषे त्वोर्जे त्वा " इति यजुर्वेदस्य ॥ " अग्न आ याहि वीतये " इति सामवेदस्य ॥ " शन्नो देवीरभिष्टये " इत्यथर्ववेदस्य ॥ " अग्निर्मूर्धा दिवः " इति च्छंदांसि ॥ " यद्देवा देवहेडनम् " इति कूष्माण्ड्यः ॥ " नमो ब्रह्मणे " इति त्रिरनूच्याप उपस्पृशेत् ॥ एतैः पंच महायज्ञाः संपद्यंते इत्येकः पक्षः ॥ अथवा देवयज्ञेन यक्ष्ये, इति संकल्प्य " विद्युदसि " इत्यपः स्पृष्ट्वाग्निं परिसमूह्य परिषिच्य " देवेभ्यः स्वाहा " इत्यन्नं समिधं वा हुत्वा पुनः परिषिच्य " वृष्टिरसि " इत्यपः स्पृशेत्, स देवयज्ञः ॥ अथ प्राचीनावीती पितृयज्ञेन यक्ष्ये, इति संकल्प्य " विद्युदसि " इत्यपः स्पृष्ट्वाग्नेर्दक्षिणतोऽपसव्यं परिषिच्य दर्भेषु " पितृभ्यः स्वधास्तु " इति पिंडमपो वा दत्वा पुनः परिषिच्य " वृष्टिरसि " इत्यपः स्पृशेत्, स पितृयज्ञः ॥ अथ यज्ञोपवीती भूतयज्ञेन यक्ष्ये, इति संकल्प्य " विद्युदसि " इत्यपः स्पृष्ट्वाग्नेरुत्तरतः परिषिच्य दर्भेषु " भूतेभ्यो नमः " इत्यन्नं फलं पुष्पं वा दत्वा पुनः परिषिच्य " वृष्टिरसि " इत्यपः स्पृशेत्, स भूतयज्ञः ॥ अथ मनुष्ययज्ञेन यक्ष्ये, इति संकल्प्य " विद्युदसि " ० स्पृष्ट्वा " मनुष्येभ्यो हन्ता " इत्यतिथयेऽन्नं दद्यादभावे भूमौ वा परिषिच्य दत्वा " वृष्टिरसि " इत्यपः स्पृशेत्, स मनुष्ययज्ञः ॥ अथ ब्रह्मयज्ञेन यक्ष्ये, इति संकल्प्य " विद्युदसि " इत्यपः स्पृष्ट्वा पूर्वोक्तप्रकारेणाधीत्यैकामृचं वा पठित्वा " नमो ब्रह्मणे " इति त्रिरनूच्य " वृष्टिरसि " इत्यपः स्पृशेत्, स ब्रह्मयज्ञः ॥ एवमेते पंच महायज्ञा वैश्वदेवबलिहरणांते पृथगेव कर्तव्या

इति पक्षान्तरम् ॥ एवं पंचयज्ञान्समाप्य "इष्टेभ्यः स्वाहा" इत्यष्टभिराज्याहुतीरुपहुत्य स्विष्टकृदादि होमशेषं समाप्य "अनेन वैश्वदेवारम्भहोमकर्मणा श्रीपरमेश्वरः प्रीयताम्" इति कर्मेश्वराय समर्पयेत् ॥ ( दशमेऽह्नि वैश्वदेवारम्भः कृतश्चेद्धोमान्ते श्राद्धं च कुर्यात् ॥ षष्ठेऽह्नि वैश्वदेवारम्भे श्राद्धमपरपक्षे कुर्यात् ॥ कुमारस्वामिकारिकायान्तु— "श्राद्धं कुर्वीत वा न वा" इति श्राद्धमेव विकल्पितम् ) ततो ग्रामाधिदेवताः सम्पूज्य ब्राह्मणान्भोजनादिना सन्तोष्य प्रतोदमिषुं च दत्वा प्रणम्याशिषो गृह्णीयात् ॥ इति वैश्वदेवप्रकरणम् ॥

## ॥ अथ कन्यासमर्पणम् ॥

अथाचारप्राप्तं कन्यासमर्पणम् ॥ तदुक्तं ग्रन्थान्तरे— "कन्यासमर्पणं कुर्याद्विवाहदिवसेऽपि वा ॥ षष्ठे वाप्यष्टमे वापि दशमेऽहनि मङ्गले" इति ॥ अथाचार्यः सभायां वधूवरौ प्राङ्मुखावुपवेश्य लक्ष्मीविवाहसम्बंधं क्षीराब्धिमथनादिकथानकं यथाचारं कथयित्वा "एष ब्रह्मातिवृद्धस्त्रिदशपतिरसौ गर्वितः क्षीयतेऽब्जो दिग्वासा नीलकण्ठस्तपति दिनकरश्चञ्चलो मातरिश्वा ॥ इत्थं संचिन्त्य लक्ष्म्या भ्रमरकलकलारावगीतप्रफुल्ला माला दत्ता मुरारेः सुरतरुकुसुमालंकृता पातु युष्मान् ॥ उत्तुंगस्तनमंडलोपरिलसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारद्युति ॥ लज्जाव्याजमुपेत्य नम्रवदनाऽस्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे" इत्याशिषं प्रयुज्य "कुलं च शीलं च वपुर्वयश्च वित्तं च विद्यां च सनाथतां च ॥ एतान्गुणान्सप्त परीक्ष्य कन्या देया बुधैः शेषमचिंतनीयम्" इति वरगुणान्, "अनुकूलां विमलांगीं कुलजां कुशलां सुशीलसंपन्नाम् ॥ पंचलकारां भार्यां पुरुषः पुण्याधिको लभते ॥ कार्येषु मन्त्री करणेषु दासी भोज्येषु माता

शयनेषु वेश्या ॥ शुचीषु गंगा क्षमया धरित्री षट्कर्मयुक्ता च कुलांगना स्यात् " इति वधूगुणान्, "कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ॥ बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ययोरेव समं वित्तं ययोरेव समं बलम् ॥ विवाहश्च विवादश्च तयोरेव प्रशस्यते " इति मात्रादिगुणांश्चोक्त्वा कन्यापितृभ्यां, "अनया सहधर्मचर्यया पुरुषार्थत्रयसाधनार्हया ॥ मुदमाप्नुहि शाश्वतीः समा भज धर्मं त्वमनन्यमानसः ॥ वसनाभरणान्नदानपानैर्भरणीयानुदिनं सुरक्षणीया ॥ मृदुभिर्वचनैः सुभाषणीया गृहकृत्येष्वखिलेषु योजनीया ॥ मम बाला न जानाति व्यापारं सर्वमेव वा ॥ काले काले तु सन्देशं वक्तुमर्हसि मानव " इति वरमादेश्य "अष्टवर्षा त्वियं कन्या पुत्रवत्पालिता मया ॥ इदानीं तव पुत्राय दत्ता स्नेहेन पाल्यताम् " इति कन्यां वरपित्रोर्हस्ते दापयेत् ॥ अथ वधूवरयोः पितरावाचार्यं वस्त्रादिना सम्पूज्य तोषयित्वाशिषो गृह्णीयाताम् ॥ ततः पुरन्ध्र्यो मंगलार्तिक्यं कुर्युः ॥ इति ॥ ॥ इति कन्यासमर्पणम् ॥

अथ देवकोत्थापनमण्डपोद्वासनयोर्विधिः ॥ तत्र काल उक्तः सं० मालायाम्— "समे च दिवसे कुर्याद्देवकोत्थापनं बुधः । षष्ठन्तु विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ " इति समेषु षष्ठं दिनं विषमेषु पञ्चमसप्तमाऽतिरिक्तदिनानि च नेष्टानीत्यर्थः ॥ ज्योतिर्निबन्धेऽपि— "प्रतिष्ठादिनमारभ्य यावत्षोडश वासराः । देवकोत्थापनं कार्यमुद्वाहे च व्रते दश " इति ॥

अथ प्रयोगः ॥ "सपत्नीकः कर्ता प्राङ्मुख उपविश्य प्राणानायम्य देशकालौ संकीर्त्य " विवाहांगत्वेन स्थापितकुलदेवताया उत्थापनं मण्डपोद्वासनं च करिष्ये" इति संकल्प्य गणपतिं संपूज्य पुण्याहं वाचयित्वा कुलदेवतां मण्डपदेवताश्च सम्पूज्य प्रणम्य " उत्तिष्ठ ब्रह्मणस्पते० सचा ॥ यान्तु देवगणाः० पुनरागमनाय च " इत्युद्वास्य ब्राह्मणान्नमस्कृत्याशिषो गृह्णीयात् ॥ इति ॥

# ॥ वैवाहिकं श्राद्धम् ॥

( बो. गृ. प. सू. १. ८. १, १०–३६ ) " अथ दशमेऽहन्ययुग्मा ब्राह्मणाः श्राविता भवन्ति । अथापरः—आपरिधानात्कृत्वा विश्वेभ्यो देवेभ्यो ब्राह्मणावुपवेश्य गन्धपुष्पधूपदीपैरभ्यर्च्य वैश्वदेवेन चरणानुद्दिश्य 'विश्वेभ्यो देवेभ्यः स्वाहा' इति । अथ प्राचीनावीतं कृत्वा सौवर्णं राजतं ताम्रायसं कांस्यं मृन्मयं वा पात्रं याचति । तद्दाक्षिणाग्रेषु दर्भेषु सादयित्वा तूष्णीं संस्कृताभिरद्भिरुत्तानं पात्रं कृत्वा प्रोक्ष्य तस्मिन् तिरः पवित्रमप आनयन्नाह—'आ म आगन्तु पितरो० पितृभ्यो वो गृह्णामि पितामहेभ्यो वो गृह्णामि प्रपितामहेभ्यो वो गृह्णामि' इति । अथोद्धृत्य पवित्रं तिलानावपति—'तिलोऽसि०' इति । अथ तिरः पवित्रं मध्वानयति—'मधु वाता ऋतायते' इति तिसृभिरनुच्छंदसम् । अथैनत्सर्वाभिरङ्गुलीभिः समुदायुत्याभिमृशति—'सोमस्य त्विषिरसि०' इति । तस्मिश्चित् किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति—'अवेष्टाः०' इति । अथाप उपस्पृश्य पुनरेवाभिमृशति— 'शं नो देवीः०' इति । अथैनद्गन्धपुष्पधूपदीपैरभ्यर्च्य दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्य भोजनस्थानेष्वासनेषु च तिलान्सिकताश्च संप्रकिरति—'अपहता असुराः०' इति । अथैनदद्भिरवोक्षति—'उदीरतामवरे०' इति । अथ पितॄनावाहयति—'आ यात पितरः०' इति । अथ ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषूपवेश्य प्रसिद्धमग्नौ कृत्वा श्राद्धं पञ्च स्रुवाहुतीर्जुहोति—'याः प्राचीः०, अन्तर्दधे पर्वतैः०, अन्तर्दध ऋतुभिः०, यन्मे माता०, यद्वः क्रव्याद०' इति । त्रेधा वपां विभज्य औदुम्बर्या दर्व्या जुहोति—'सोमाय पितृमते०, अङ्गिरस्वन्तमूतये०, यदग्ने कव्यवाहन०' इति । अथापूपमष्टधा विभज्य त्रीण्यवदानानि वपायाः कल्पेन हुत्वाऽथेतराणि ब्राह्मणेभ्यो दत्वाऽत्रैतान्यवदानानीडसूने प्रच्छिद्यौदनं मांसं यूषमित्याज्येन समुदायुत्यौदुम्बर्या दर्व्योपघातं दक्षिणार्धे

जुहोति—'पितृभ्यः स्वधा नमः स्वाहा' इत्यादि 'सर्वाभ्यः स्वधा नमः स्वाहा' इत्यन्तो मन्त्र ऊह्यः। 'अग्नये कव्यवाहनाय स्वधा नमः स्वाहा' इति। परिवेष्य भुक्तवतोऽनुव्रज्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्यान्नशेषेण तिस्र आहुतीर्जुहोति—'यन्मे माता०, यन्मे पितामही०, यन्मे प्रपितामही०' इति। दक्षिणेनाग्निं दक्षिणाग्रान्दर्भान्संस्तीर्य तेष्वन्नशेषैः त्रीन् पिण्डान् ददाति--'एतत्ते ततासौ ये ते मातामहा ये त आचार्या ये ते गुरवो ये ते सखायो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्च पत्नयस्तेभ्यस्ताभ्यश्च स्वधा नमः' इति। द्वितीयं ददाति—'एतत्ते पितामहासौ०' इति। तृतीयं ददाति—'एतत्ते प्रपितामहासौ०' इति। अत्र भूमौ लेपं निमार्ष्टि—'येनः पतिताः०, य आमा ये पक्वाः०, ये कुमाराः०' इति। अथैनान्संक्षाळनेनाभिषिञ्चति—'ये समानाः, ये सजाताः' इति द्वाभ्याम्। अथ ये बर्हिषि पिण्डास्तेषां तथैव संक्षाळनेन त्रिरपसलैः परिषिञ्चति–'ऊर्जं वहन्तीः' इति। जयप्रभृति सिद्धमत ऊर्ध्वम्" ॥

(बो. गृ. प. सू. १·९) "अथ वै भवति किञ्चिद्यज्ञस्य वातिवेलं वा श्रद्धायुक्तस्य तत्त्वविदः। पात्रमासाद्य नक्षत्रे वा ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषूपवेश्यामन्त्रयते—'भवत्स्वेवाग्नौ करणं पिण्डाश्च' इत्येव ब्रूयात्। तथेत्युक्तः तेषां सपवित्रेषु पाणिषु तिलोदकं ददाति। तथाऽलङ्कृत्य ददाति तथैव भुक्तवत्सु च ददाति। नोच्छिष्टं परिसमूहति। अत्र त्रीन्पिण्डान्ददाति ब्राह्मणेभ्यो दक्षिणतः। विज्ञायते च—'ब्राह्मणो वै सर्वा देवताः, एष वा अग्निर्वैश्वानरो यद्ब्राह्मणः' इति। हुतमेवास्य भवति। अथ यद्यग्नौ कुर्यादौपासने पचने वाऽन्नस्य तिस्र आहुतीर्जुहोति—'सोमाय पितृपीताय स्वधा नमः स्वाहा। यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहा। अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा' इति। हुतमेवास्य भवति॥ अपि वा सङ्कल्पेन ब्राह्मणान्भोजयेत्–'सङ्कल्पसिद्धिरस्तु' इति वाचयित्वा॥ एवमापत्सु कुर्वीत न च नित्यं तु कारयेत्। ये नित्या उपासते श्राद्धानि

च हवींषि च ॥ गामत्रकुर्यादिति बोधायनः। आमिक्षया वैतत्क्रियत इति शालीकिः। अपूपेनेत्यौपमन्यवः। चरुणा वेत्यौपमन्यवीपुत्रः। 'पितृणामनृणो भवति' इति विज्ञायते। अथोपनिष्क्रम्य बाह्यानि चित्रियाण्यभ्यर्च्य त्रिवृतान्नेन ब्राह्मणान्संपूज्याशिषो वाचयित्वा प्रतोदमिषुं च ब्राह्मणेभ्यो दत्वा प्रदक्षिणीकृत्य गृहानेत्य अध्वर्युं वृणीते अकुनखिनमांगिरसमिति॥ इति विवाहो व्याख्यातः"॥

अथ प्रयोगः॥ पूर्वेद्युः सायमौपासनं हुत्वा प्राचीनावीती 'श्वः वैवाहिकश्राद्धं कर्तास्मि' इति मनसा संकल्प्य 'श्वः वैवाहिकश्राद्धं भविता तत्र भवद्भिः विश्वेदेवार्थे प्रसादः करणीयः' इति द्वौ विप्रौ 'श्वः वैवाहिक० तत्र भवद्भिः पितृपितामह-प्रपितामहार्थे प्रसादः करणीयः' इति त्रीन् विप्रांश्च निमंत्र्य श्वः स्नानादि नित्यकर्मान्ते विप्रान् गृहमानीय पुनर्निमंत्र्य श्मश्रुकर्मादिभिस्तान्यथोपपादमभ्यर्च्य श्राद्धारंभकाले स्नात्वा मध्याह्नसंध्यां समाप्य समस्तपितृणामक्षयतृप्त्यर्थं सपिण्डं साग्नौकरणं वैवाहिकश्राद्धमन्नेन हविषा पार्वणविधानेन कुर्यात्। अग्नौकरणे पञ्च स्रुवाहुतीनामंते 'सोमाय पितृमते शुष्मिणे जुहुमो हविः०' इत्यादि त्रिभिर्मंत्रैरन्नेनापूपभागत्रयेण च होमः। ततः 'पितृभ्यः स्वधा नमः स्वाहा' इत्यादि चतुर्विंशति-होमांते 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा' इति स्विष्टकृतं च जुहुयात्। ब्राह्मणभोजनान्ते अन्नशेषेण 'यन्मे माता प्रलुलो०, यन्मे पितामही प्र०, यन्मे प्रपितामही०' इति तिस्र आहुतीर्हुत्वा 'एतत्ते ततासौ ये ते मातामहा० ताभ्यश्च स्वधा नमः, एतत्ते पितामहासौ ये ते मातामहा०, एतत्ते प्रपितामहासौ ये ते मातामहा०' इति त्रीन्पिण्डान्दद्यात्। अन्यत्सर्वं सांवत्सारिकश्राद्धवत्। सर्वत्र प्रतिसांवत्सरिकश्राद्धपदस्थाने वैवाहिकश्राद्धपदं योज्यम्॥ ॥ अशक्तः अग्नौकरणेन विना श्राद्धं कुर्यात्। आपत्सु केवल-ब्राह्मणभोजनेन वास्य सिद्धिर्भवति। श्राद्धान्ते बाह्यानि चित्रियाणि संपूज्य ब्राह्मणान्संपूज्य दक्षिणासहितं प्रतोदमिषुं च दत्वाऽऽशिषोगृह्णीयात्॥ ॥

## ॥ अथ विवाहे संभाव्यानि प्रायश्चित्तानि ॥

विवाहहोमानन्तरमौपासनाऽऽरम्भात्प्रागग्निरुद्वातश्चेत्पुनर्विवाहः कार्यः ॥ विवाहव्रतमध्येऽग्निरुद्वातश्चेदुपनयनप्रकरणोक्तमग्न्युद्वातप्रायश्चित्तं कुर्यात् ॥ ॥ (बो. गृ. सू. ४. १) अथ यदि कन्योपसाद्यमाना वोह्यमाना वा पतेत्तामुत्थापयेयुः— "उदस्थाद्देव्यदितिर्विश्वरूपी। आयुर्यज्ञपतावधात् ॥ इन्द्राय कृण्वती भागम्। मित्राय वरुणाय च" इति ॥ ॥ अथ यदि कन्योपसाद्यमाना वोह्यमाना वाऽश्रु कुर्यात्तामनुमन्त्रयते— "जीवां रुदन्ति विमयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे" इति ॥ ॥ अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयते— "पुमाꣳसौ मित्रावरुणौ पुमाꣳसावश्विनावुभौ। पुमानिन्द्रश्च सूर्यश्च पुमाꣳसं वर्धयताम्" इति ॥ (बो. गृ. शे. सू. ५·२) अथ विवाह्य कन्यारजस्वलाप्रायश्चित्तादिविधिं व्याख्यास्यामः—" विवाहे वितते यज्ञे होमकाल उपस्थिते। कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥ यजुः पवित्रैस्सावित्र्या प्रोक्षयेत्पूतवारिभिः। अनेन चानुवाकेन पवमानस्सुवादिना ॥ स्नापयित्वाऽथ विद्वद्भिरन्यवस्त्रादलङ्कृताम्। पूर्णाहुत्यथ मिन्दाभ्यां महाव्याहृतिभिस्सह ॥ हुत्वा तन्तुमतीं चैव व्याहृतीभिस्तथैव च। अनाज्ञातं च विद्वद्भिश्शेषं कार्यं समाचरेत् ॥ प्रधानहोमे निर्वृत्ते मलवद्वाससी भवेत्। त्रियहे पर्यवेतेऽथ शेषकार्यं समाचरेत्" इति ॥ अत्र विशेष उक्तः प्र० तिलके—" पाणिग्रहणतः पश्चाद्धोमकाल उपस्थिते। यदि पुष्पवती नारी कर्म कुर्यात्कथं बुधः ॥ वस्त्रपूतेन तोयेन स्नापयित्वोदके स्थिताम्। वस्त्रमन्यत्परीधाय स्नापयेयुः पुनर्बुधाः ॥ यजुः पवित्रैरखिल-

ह्रैस्साविन्या पूतवारिणा। पावमान्या च तां शुद्धां वासोभूषाद्यलङ्कृताम्॥ निवेश्य कक्ष्याऽन्तरे तां शेषं कर्म समापयेत्। रजोदोषादिदुष्टायां पत्न्यां कर्म पतिश्चरेत्॥ पूर्णाहुत्या तु होमस्स्यान्महाव्याहृतिभिस्तथा। श्रद्धापत्नीति वचनात्तया कार्यं पतिश्चरेत्॥ अग्निस्थापनतः पूर्वं पत्नी यदि रजस्वला। तथैव वर्तमानं तत्कर्म संस्थाप्यतां बहिः॥ निस्सार्य काले शुद्धायां तदारभ्य पुनश्चरेत्। लाजहोमात्परं पत्नी यदि पुष्पवती भवेत्॥ तदा संस्थाप्य तत्कर्म निर्गमय्य च तां बहिः। सायंप्रातर्हुनेद्विद्वा- नौपासनविधानतः॥ तस्यां काले विशुद्धायां कर्म कुर्यात्तदादितः" इति॥ ॥ शय्यास्थापितदण्डनाशे प्रायश्चित्तमुक्तं स्मृतिसङ्ग्रहे—"शरसङ्ख्यादिनादन्तः कटमध्ये स्थितेन्धनम्। नश्यते दह्यते चैव भज्यते यदि वा परैः॥ तत्र कर्म कथं कुर्यात्तस्मिन्नग्नौ वरस्स्वयम्। प्रायश्चित्ताहुतिं दद्यान्मन्त्रैरेतैः स्रुवाज्यतः॥ आभिर्गीर्भिरनाज्ञातं यत्पाकत्रा मनस्वती। पाहिनस्तन्तुमत्याद्या महाव्याहृतिभिः परम्॥ मिन्दाद्वयादिभिर्मन्त्रैर्यजेदष्टादशाहुतीः॥ यज्ञाङ्गमिन्धनं चान्यं नवं पूर्वोक्तलक्षणम्॥ कार्पाससूत्रेणावेष्ट्य कटमध्ये क्षिपेत्पुनः। तद्दण्डन्तु समादाय कर्म कुर्याद्यथाविधि" इति॥ ॥ धृतमङ्गलवस्त्रादीनां दाहादौ प्रायश्चित्तमुक्तं तत्रैव—"व्रतमध्ये तु दम्पत्योरुष्णीयं युग्मचैलकम्। शुभिकं चेन्धनं वासः परिधानीयवाससी॥ छेदे नाशे प्रदग्धे च दुःखं शोको मृतिर्भवेत्। तद्दोषशमनार्थाय लाजाऽज्यक्षीरदूर्वकान्॥ श्रीसूक्तेन हुनेद्विद्वान् यावत्पञ्चदशाहुतीः। स्वर्णगोभू- तिलान्दद्यात्कांस्यं वस्त्रमथाऽपि वा॥ अन्यानि पूर्ववद्धृत्वा शेषं कर्म समाचरेत्" इति॥

व्रतमध्ये सूतकप्राप्ते विशेष उक्तो विश्वामित्रकारिकायाम्—"विवाहव्रतमध्ये तु मातापित्रोर्मृतिं विना। अन्यस्मिन् सूतके प्राप्ते चतुर्थ्यवभृतात्पुरा॥ दम्पत्योः सूतकं नास्ति शुभकर्म समाचरेत्" इति॥ वरपित्रोर्मरणे—"मातापित्रोर्मृतौ यद्यद्व्रत-

मोक्षादधो वरः। तत्र कर्म कथं कुर्यात्तस्मिन्नग्नौ तथा पुनः॥ पूर्ववस्त्रादि सन्त्यज्य परिधायान्यवाससी। होमयेदसगोत्रैस्तु सायं प्रातर्यथाविधि॥ तदानीमेव सर्वाङ्गं वापयित्वा समाहितः। दहनादि तयोः कार्यं वरः कुर्यान्न संशयः॥ दीक्षाव्रतसमाप्तेः प्राग्व्रतमोक्षं न कारयेत्। वह्निं संरक्ष्य तत्रान्यैर्दशाहं होमयेत्स तु॥ ततः स्वयं प्रकुर्वीत नित्यमौपासनाहुतीः। पित्रोरब्दान्त-पर्यन्तं दीक्षां सम्यक्समापयेत्॥ ततस्तद्वह्निमादाय व्रतशेषं समापयेत्। प्रायश्चित्तं प्रकुर्वीत पुण्याहं वाचयेत्ततः॥ पूर्ववस्त्रं परीधाय कालातिक्रमणं हुनेत्। मम नामादिमन्त्रैस्तु हुनेन्नव घृताहुतीः॥ यः पावमानीरित्यादि हुनेदष्ट घृताहुतीः। मिन्दा-हुतीर्व्याहृतीश्च महाव्याहृतिभिस्तथा॥ पाद्यादिपञ्चभिर्मन्त्रैर्हुनेत्स्विष्टकृतं ततः। व्रतशेषं चरेद्विद्वांश्चतुर्थ्यन्तं विधिं ततः॥ पञ्चमेऽहनि होमश्च परेद्युः क्रियतामिति। वैश्वदेवविधानञ्च होमं कुर्याद्यथाविधि॥ ब्राह्मणेभ्यो यथाशक्ति गोभूतिलहिरण्यकम्। कांस्यं वस्त्रं च दद्यात्तु सर्वदोषोपशान्तये" इति॥ कन्यापित्रोर्मरणे— "कन्यापित्रोर्मृतिस्स्याच्चेत्तत्र कर्म कथं भवेत्॥ सायं प्रातश्च होमन्तु पतिः कुर्यादसंशयः॥ तच्छावान्ते शुचिर्भूत्वा सा कन्या स्वगृहं व्रजेत्। अतिक्रान्तविधिं कुर्यात्प्रायश्चित्तन्तु पूर्ववत्" इति॥

अथ पुनर्विवाहः॥ (बो. गृ. शे. सू. २. १२) "यथो एतद्ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणामेवं विवाहं कुर्वन्त्यपरपक्षेऽशुभे दिने वाऽशुचिना विवाहं कुर्वन्ति विवाहेन नर्ध्नोतीति मन्येत वाऽऽवसथात्पुनर्विवाहं कुर्वीत॥ अथ चेदौपासनाऽऽरम्भा-

१ सपिण्डीकरणान्तं कुर्यादिति ज्ञेयम्॥ स्मृ० सङ्ग्रहे— "निर्हृत्य द्वादशाहे तु सपिण्डीकरणं तथा। त्रयोदश दिने दीक्षां समाप्य ब्राह्मणाज्ञया॥ चतुर्दशदिने प्रातः कृत्वा च स्वस्तिवाचनम्। माङ्गल्यसूक्तं श्रीसूक्तं प्रायश्चित्तं हुनेत्तथा॥ चर्वाज्यसमिधश्चैव अष्टोत्तरशतं हुनेत्। पूर्णाहुतिं ततः कृत्वा शेषं कर्म समाचरेत्" इति॥

त्प्राग्ज्वलनस्य नाशः पुनर्विवाहं कुर्वीत " इति ॥ प्र० पारिजाते नृसिंहोऽपि— " पुनर्विवाहं वक्ष्यामि दम्पत्योः शुभवृद्धिदम् । लग्नेन्दुलग्नयोर्दोषे ग्रहताराादिसम्भवे ॥ अन्येष्वशुभकालेषु दुष्टयोगादिसम्भवे । विवाहे त्वथ दम्पत्योराशौचादिसमुद्भवे ॥ तस्य दोषस्य शान्त्यर्थं पुनर्वैवाहमिष्यते " ॥ अत्राऽऽशौचादिशब्देन तद्गृहे मृताशौचोत्पाता गृह्यन्ते, वरेणाऽऽचरितगुरुमृताशौच-विषयं वा, अन्यत्र सामान्याऽऽशौचे नान्दीश्राद्धादूर्ध्वमाशौचाऽभावात् इति ॥ तत्र कालमप्याह स एव— " अयनं चोत्तरं श्रेष्ठं वर्धयेत्तु विशेषतः । आषाढमार्गशीर्षौ द्वौ वर्ज्यौ शेषाः शुभावहाः ॥ विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गकाः । करणं योगसंज्ञानि ग्रहगोचरयोगकाः ॥ तस्मिन्विवाहसमये शुभदाश्च तथैव च । पूर्वाह्णे पूर्वरात्रौ च विवाहः शुभदो भवेत् " इति ॥ (बो. गृ. शे. सू. २. १२) " अथ पुनर्विवाहं व्याख्यास्यामः ॥ उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे पूर्वेद्युर्नान्दीमुखं कृत्वोपवसति ॥ अथ श्वोभूते ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वोभौ शुची स्नातौ शुक्लवाससावलङ्कृत्य ( सर्वाऽनिष्टनिरसनपूर्वकं सर्वाभीष्टसिद्धिद्वारा आवयोः स्थिरदाम्पत्यप्राप्त्यर्थं पुनर्विवाहं करिष्ये, इति सङ्कल्प्य ) वरो जायां समीक्षते— " अभ्रातृघ्नीम् " इति प्रतिपद्य सप्तपदान्तं कृत्वाऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वाऽथाऽस्या उपोत्थाय हृदयदेशमभिमृशतीति सिद्धमा-धेनुवरप्रदानादत ऊर्ध्वं नाद्रियेत ॥ अथ पुनर्विवाहेष्वेतानुत्सीदन्ति– प्रतिसरं स्नानं वासः प्रतोदमिषुञ्च पूर्वं भोजनमर्घ्यं व्रतं त्रिरात्रमित्यादि विवाहशेषान् वर्जयेत् " इति ॥

अथ द्वितीयादिविवाहः ॥ (तै. सं. ६.५.१) " तस्मादेको बह्वीर्जाया विन्दत " इति ॥ श्रुत्यन्तरमपि— " तस्मादेकस्य बह्वो जाया भवन्ति नैकस्यै बहवः सहपतयः " इति ॥ तस्य नियममाह प्र० पारिजाते आपस्तम्बः—" धर्मप्रजासम्पन्ने दारे नान्यां पत्नीं

१. कन्याया दानप्रतिग्रहौ न स्तः " अङ्कुरञ्च प्रतिसरं वरणञ्च प्रतिग्रहम् । वाससा परिधानञ्च कर्माण्येतानि वर्जयेत् " इति वै० नाथीये ॥

कुर्वीताऽन्यतराऽभावे कार्या प्रागग्न्याधानात्" इति ॥ (बो. गृ. शे. सू. ४. ११) "अथ वै भवति 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति 'प्रजातन्तुं मा व्यवच्छेत्सीः' इत्येतस्माद्ब्राह्मणादाहिताग्नेर्दशवर्षाणामूर्ध्वं यदि प्रजा नोत्पद्येत कथं तत्र कुर्यादिति ॥ पुनरेव कुमारीं संस्कृत्य दशमेऽहन्येकादशाहे वाऽरण्योरग्नीन्समारोप्योदवसाय मथित्वाग्नीन् विहृत्योद्वासन्येष्येद्वा ॥ तदानीमेवारण्योरग्नीन् समारोप्यौपासने ब्रह्मौदनं श्रपयित्वोपवसथहविःप्रभृति सिद्धमग्न्याधेयं कुर्वन्ति ॥ तस्मिन्संस्थिते पवित्रेष्ट्या यजेत तस्यां संस्थितायां तन्तुमतीं निर्वपेत् ॥ तस्यां संस्थितायां त्रैधातवीयां निर्वपेत् ॥ अपि वैन्द्राग्नेन पशुना यजेत पुनराधेयं वा कुर्यात् ॥ अथ यद्येको बह्वीर्जायाः प्रयुञ्जान एवमेवैतत्कुर्यात् 'तस्मादेको बह्वीर्जाया विन्दते' इति ब्राह्मणम्" ॥

निमित्तान्तराण्याह याज्ञवल्क्यः— "सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा । स्त्रीप्रसूश्चाऽधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ अधिविन्नाऽपि भर्तव्या महदेनोऽन्यथा भवेत्" इति ॥ (अधिवेदनं-भार्यान्तरपरिग्रहः) अधिवेदने प्रतीक्षाकालमप्याह मनुः— "वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा । एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी" इति ॥ (बो. ध. सू. २. ४. ६) सूत्रे तु— "अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् । मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्" इति ॥ रत्यर्थं विवाहान्तरकरणे विशेष उक्तः प्र० पारिजाते—"एकामुत्क्रम्य कामार्थमन्यां वोढुं य इच्छति । समर्थस्तोषयित्वार्थैः पूर्वोढामपरां वहेत्" इति ॥ याज्ञवल्क्योऽप्याह—"आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन्दाप्यस्तृतीयांशमद्रव्योभरणं स्त्रियै" इति ॥ मृतभार्यस्य द्वितीयविवाहे कालविशेष उक्तः सङ्ग्रहे—"प्रमदामृतिवत्सरादितः पुनरुद्वाहविधिर्वरस्य च । विषमे परिवत्सरे

शुभो युगले चेत्तु मृतिप्रदो भवेत् " इति ॥ तृतीयमानुषीविवाहनिषेधमाह प्र० पारिजाते काश्यपः —" एकान्तु पितृदेवार्थं रत्यर्थमपरान्तु वा । तृतीयां मानुषीं नैव चतुर्थीन्तु समुद्वहेत् " इति ॥ सङ्ग्रहे च— " यद्युद्वहेत्तृतीयान्तु तर्हि सा विधवा भवेत् ॥ चतुर्थादि विवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥ आदित्यदिवसे वाऽपि हस्तर्क्षे वा शनैश्चरे । शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम् " इति ॥

अथोक्तनिमित्तेषु केनाऽपि निमित्तेन सत्यामप्याद्यायां जायायां यदि द्वितीयां परिणयेत्तदा लौकिकाग्नौ विवाहहोमं कृत्वा विवाहकर्म सर्वमपि यथोक्तं निर्वर्त्यैकादशे द्वादशे वा दिवसेऽग्निद्वयसंसर्गं कुर्यात् ॥ ॥ तद्विधिः—( बो. गृ. शे. सू. ४. १० ) " अथ गृहस्थस्तु द्वे भार्ये विन्देत कथं तत्र कुर्यादिति ॥ यस्मिन्काले विन्देतोभावग्नी परिचरेत् ॥ अपराग्निमुपसमाधाय सम्परिस्तीर्याऽज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वारब्धायां ( नवोढायां ) यजमानो जुहोति— " ॐ नमस्त ऋषे गद । अव्यथायै त्वा स्वधायै त्वा ॥ मा न इन्द्राभितस्त्वदृष्वारिष्टासः । एवा ब्रह्मन्तवेदस्तु स्वाहा " इति ॥ ऋषय इन्द्राय ब्रह्मण इदं० ॥ अथ समारोपयति— " अयं ते योनिर्ऋत्वियः " इति समिधि समारोप्य पूर्वाग्निमुपसमाधाय 'आजुह्वानः, उद्बुध्यस्वाग्ने ' इति द्वाभ्यां समिधमाधाय सम्परिस्तीर्याऽज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा द्वयोर्भार्ययोरन्वारब्धयोर्यजमानो जुहोति— " ॐ यो ब्रह्मा ब्रह्मणः " इत्येतेन सूक्तेनैकैकं चतुर्गृहीतं गृहीत्वा जुहुयात् ॥ ( ततो गृह्याग्निसाध्यानां कर्मणां तन्त्रेणानुष्ठानासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृह्याग्निद्वयसंसर्गहोमं करिष्ये, बलवर्धनो नामाग्निः, पुरीष्याग्निर्देवता, चरुर्हविः, अग्निः स्विष्टकृत् इत्यादि सङ्कल्पपूर्वकमन्वाधाय ) प्रसिद्धमाग्निमुखात्कृत्वा पक्वाज्जु-

होति—" समितꣳ सङ्कल्पेथाꣳ सं प्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसानौ सं वां मनाꣳसि सं व्रता समुचित्तान्याकरो-३ मग्ने पुरीष्याधिपा भवा त्वन्नः । इषमूर्जं यजमानाय धेहि स्वाहा " इति ॥ अग्नये पुरीष्यायेदं० ॥ अथ स्विष्टकृतमवदायान्तः-परिधौ निधायाज्याहुतीरुपजुहोति—" ॐ पुरीष्यस्त्वमग्ने रयिमान्पुष्टिमाꣳ असि । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः स्वाहा ॥ पुरीष्याग्नय इदं० ॥ ॐ भवतं नस्समनसौ समोकसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः स्वाहा ॥ जातवेदोभ्यामिदं० ॥ ॐ मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु स्वाहा ॥ पृथिव्यादिभ्य इदं० ॥ ॐ यदस्य पारे रजसः शुक्रं ज्योतिरजायत । तन्नः पर्षदतिद्विषोऽग्ने वैश्वानर स्वाहा ॥ अग्नये वैश्वानरायेदं० ॥ ॐ नमः सु ते निर्ऋते विश्वरूपेऽयस्मयं विचृता बन्धमेतम् । यमेन त्वं यम्या संविदानोत्तमं नाकमधि रोहयेमꣳ स्वाहा ॥ निर्ऋतय इदं० ॥ ॐ यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् । इदन्ते तद्विष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः स्वाहा ॥ निर्ऋतय इदं० ॥ ॐ यस्यास्ते अस्याः क्रूर आसं जुहोम्येषां बन्धानामवसर्जनाय । भूमिरिति त्वा जना विदुर्निर्ऋतिरिति त्वाहं परि वेद विश्वतः स्वाहा ॥ निर्ऋतय इदं० ॥ ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि । अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु स्वाहा ॥ निर्ऋतय इदं० ॥ ॐ देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचोभिः । विश्वस्य या जायमानस्य वेद शिरःशिरः प्रतिसूरी विचष्टे स्वाहा ॥ निर्ऋतय इदं० ॥ ॐ निवेशनस्सङ्गमनो वसूनां विश्वा रूपाऽभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाꣳ स्वाहा ॥ इन्द्रायेदं० ॥ ॐ संवरत्रा दधातन निराहावान्कृणोतन । सिञ्चामहा

अवटमुद्रिणं वयं विश्वाहादस्तमक्षितꣳ स्वाहा ॥ अग्नय इदं० ॥ ॐ निष्कृताहावमवटꣳ सुवरत्रꣳ सुषेचनम् । उद्रिणꣳ सिञ्चे अक्षितꣳ स्वाहा ॥ अग्नय इदं० ॥ ॐ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया स्वाहा ॥ अग्नय इदं० ॥ ॐ युनक्त सीरा वियुगा तनोत कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यां पक्वमायत्स्वाहा ॥ अग्नय इदं० ॥ ॐ लाङ्गलं पवीरवꣳ सुशेवꣳ सुमतित्सरु । उदित्कृषति गामविं प्रफर्व्यं च पीवरीम् । प्रस्थावद्रथवाहनꣳ स्वाहा ॥ अग्नय इदं० ॥ ॐ शुनं नः फाला वितुदन्तु भूमिꣳ शुनं कीनाशा अभियन्तु वाहान् । शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तꣳ स्वाहा ॥ अग्नय इदं० ॥ ॐ कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः स्वाहा ॥ कामदुह इदं० ॥ ॐ घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः । ऊर्जस्वती पयसा पिन्वमानास्मान्सीते पयसाभ्याववृत्स्व स्वाहा ॥ सीताया इदं० '' इत्यष्टादशभिरुपहुत्य स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाग्रेणाग्निं दर्भस्तम्बेषु हुतशेषं निदधाति— 'ब्रह्मजज्ञानं, पिता विराजाम्' इति द्वाभ्याम् ॥ ( अथोत्तरपरिषेकादिहोमशेषं समाप्य तमग्निं समिधि समारोपयेत ) प्रसिद्धमौपासने पार्वणानि कुर्यात्सन्तिष्ठत औपासनतन्त्रम् '' ॥ ॥

## ॥ अथार्कविवाहः ॥

( बो. गृ. शे. सू. ५·५ ) "अथातोऽर्कोद्वाहं व्याख्यास्यामः । मूकान्धबधिरादीनां जडानाञ्च तृतीयविवाहितानाञ्च ॥ पूर्वपक्षे पुण्ये नक्षत्रे पूर्वाह्णे ब्रह्मसमूहे ( तार्तीयविवाहकस्यार्कार्किवारे हस्तर्क्षे वा शुभेऽहनि क्रियेत ) ग्रामात्प्राचीं वोदीचीं वा

दिशमुपनिष्क्रम्य यत्रैका बालोऽर्को भवति तस्योत्तरत उपलिप्य स्वयं स्नात्वाऽर्कञ्च स्नापयित्वा पादौ प्रक्षाल्याऽऽचम्यालङ्कृत्य तन्त्रेण नान्दीमुखं कृत्वा स्वस्तिसूक्तं वाचयित्वा यत्किञ्चिद्धिरण्यं गृहीत्वा 'आसत्येन' इति जपित्वा तं ब्राह्मणेभ्यो दत्वा पुरस्तात्प्रत्यङ्मुखोऽर्कं प्रार्थयते — "त्रिलोकवासिन्सप्ताश्व छायया सहितो रवे। तृतीयोद्वाहजं दोषं निवारय सुखं कुरु" इति ॥ ततोऽलङ्कृत्याऽर्कं स्पृष्ट्वाऽऽदित्यमुपतिष्ठते — "सूर्यो देवीमुषस॒ꣳ रोच॑मानाम॒र्यः। न योषा॑म॒भ्येति प॒श्चात्। यत्रा॒ नरो॑ देव॒यन्तो॑ युगानि॑। वितन्वते प्रति॑भ॒द्राय॑ भ॒द्रम् ॥ १ ॥ भ॒द्रा अश्वा॑ ह॒रित॒ः सूर्य॑स्य। चि॒त्रा एत॑ग्वा अनु॒माद्या॑सः ॥ न॒मस्यन्तो॑ दिव आ पृ॒ष्ठम॑स्थुः। परि॒द्यावा॑पृथि॒वी य॑न्ति स॒द्यः ॥ २ ॥ तत्सूर्य॑स्य देव॒त्वं तन्म॑हि॒त्वम्। म॒ध्या कर्तो॒र्वित॑त॒ꣳ सञ्ज॑भार ॥ य॒देद॑युक्त ह॒रित॒ः स॒धस्था॑त्। आद्रात्री॒ वास॑स्तनुते सि॒मस्मै॑ ॥ ३ ॥ तन्मि॒त्रस्य॒ वरु॑णस्याभि॒चक्षे॑। सूर्यो॑ रू॒पं कृ॑णुते॒ द्यौरु॒पस्थे॑ ॥ अ॒न॒न्तम॒न्यद्रुश॑दस्य॒ पाज॑ः। कृ॒ष्णम॒न्यद्धरि॑त॒ः सम्भ॑रन्ति ॥ ४ ॥ अ॒द्यो दे॑वा॒ उदि॑ता॒ सूर्य॑स्य। निर॒ꣳहस॑ः पिपृ॒तां निर॑व॒द्यात् ॥ तन्नो॑ मि॒त्रो वरु॑णो मामहन्ताम्। अदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः ॥ ५ ॥" इति पञ्चभिः ॥ अथ वस्त्रं माङ्गल्यसूत्रं चार्के बध्वा—'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयेदादित्योऽत्र देवता ॥ पूर्वोक्तविधिनाऽग्निमुपसमाधाय सम्परिस्तीर्याज्यं संस्कृत्य स्रुक्स्रुवं सम्मृज्यादित्यं ध्यायन्नर्कं गृह्णाति—"ह॒स्तः प्र॒यच्छ॒त्वमृ॒तं वसी॑यः। दक्षि॑णेन॒ प्रति॑गृभ्णीमि॒ एन॑त् ॥ दा॒तार॑म॒द्य स॑वि॒ता वि॑देय। यो नो॒ ह॒स्ता॑य प्रसु॒वाति॑ य॒ज्ञम्" इति ॥ अथाग्निं प्रदक्षिणं करोति—"परि त्वाग्ने पुरं वयम्" इति ॥ अथार्कमूलं स्पृष्ट्वाऽऽदित्यमुदीक्षते—"अभी॑वृतं॒ कृश॑नैर्वि॒श्वरू॑पम्। हिर॑ण्यशम्यं यज॒तं बृ॒हन्त॑म् ॥ आस्था॒द्रथ॒ꣳ स॑वि॒ता चि॒त्रभा॑नुः। कृ॒ष्णा रजा॒ꣳसि तवि॑षी॒ं दधा॑नः" इति ॥ अथ व्याहृतीर्हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा विग्राहं जुहोति—"उद्वयं, उदुत्यं, चित्रं देवानाम्" इति ॥ अपरं चतुर्गृहीतं गृहीत्वा

मनस्वतीं जुहोति—"मनो ज्योतिः" इति ॥ अपरं चतुर्गृहीतं गृहीत्वा लाजमन्त्रेण ('इयं नार्युप') द्विरावर्त्य जुहोति ॥ अथ व्याहृतीर्हुत्वा (ततः स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥) अथादित्यं व्रतकृग्भ्यामुपतिष्ठते– "अदाभ्यो भुवनानि प्रचाकशद्व्रतानि देवः सविताऽभिरक्षते। प्रास्ताग्बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो अज्मस्य राजसि ॥ त्रिरन्तरिक्षꣳ सविता महित्वना त्री रजाꣳसि परिभूस्त्रीणि रोचना। तिस्रो दिवः पृथिवीस्तिस्र इन्वति त्रिभिर्व्रतैरभि नो रक्षति त्मना" इति द्वाभ्याम् ॥ अथ गोक्षीरमर्के स्पृष्ट्वा आयुष्यसूक्तमुक्त्वा प्राश्याऽऽचम्य पुनरादित्यमुपतिष्ठते—"अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता। देवेषु च सवितर्मानुषेषु च त्वन्नो अत्र सुवतादनागसः" इति ॥ अथार्काधिदैवतमुद्रास्यार्कमुत्पाट्य व्याहृतीभिरग्नौ दग्ध्वा स्नात्वा यत्किञ्चिद्दत्वा शुद्धो भवति सद्यः ॥ एवं कदलीविवाहं कुर्यात् ॥ कदलीं छित्वा त्रिरात्रमशुचिर्भवति ॥ अथाप्युदाहरन्ति—"अर्कोद्वाहो जडादीनामुच्यते तु यवीयसः। विवाहार्थं मुनिश्रेष्ठैस्तमुत्पाट्य दहेत्तदा ॥ व्याहृतीभिस्तदा दत्वा यथाशक्ति हिरण्यकम्। स्नात्वा सद्यश्शुचिर्भूयादुद्वाहे च तृतीयके ॥ तृतीया स्त्री म्रियेच्छीघ्रं तस्मादेवं चरेद्बुधः। रम्भोद्वाहं तथा कुर्याच्छित्वा तत्रैव मानवः ॥ त्रिरात्रं सूतकं भूयादिति बोधायनोऽब्रवीत्" इति ॥ ॥ इति विवाहः ॥

## ॥ अथ पार्वणस्थालीपाकविधिः ॥

तत्रेदं गृह्यम् (बो. गृ. शे. सू. ४. ८) "पर्वणि पर्वणि चाऽऽग्नेयस्थालीपाकेन यजेत ॥ उपवास एव कालान्तरे भोजनमतृप्तिश्चाऽन्नस्य च" ॥ (बो. गृ. शे. सू. ४. ९) "कथमु खल्वनाहिताग्नेर्दर्शपूर्णमासौ भवत इति ॥ अथ श्वोभूतेऽग्निमुपसमाधाय

सम्परिस्तीर्य दक्षिणतो ब्राह्मणमुपवेशयति ॥ उत्तरत उदपात्रमिति निधाय जघनेऽग्नि कृष्णाजिने व्रीहीन्निर्वपति ॥ प्रथमे स्थालीपाक आज्यं संस्कृत्य कूष्माण्डैर्जुहुयात् — 'कर्मादिष्वेतैर्जुहुयात्पूतो देवलोकान्त्समश्नुते' इति ब्राह्मणम् " ॥ ( बो. गृ. सू. २·१० ) "स एष आधारवान्स्यादाग्निहोत्रिको वाऽप्यापूर्विको वा " ॥

तदारम्भकालमाह प्र० पारिजाते शौनकः— " पौर्णमासी तु सम्प्राप्ता या विवाहादनन्तरम् । ततः प्रक्रम्य कुर्वीत स्थालीपाकं तु पर्वसु ॥ तत्र यद्यप्यमावास्या विवाहानन्तरं पतेत् । तथापि पौर्णमास्यादि स्थालीपाकक्रिया स्मृता " इति ॥ बोधायनोऽपि-- " सायं प्रातः क्रियाणां तु सायमारम्भ इष्यते । पूर्णमासस्य दर्शस्य प्रारम्भः पूर्णमासतः ॥ चतुर्थीहोममध्ये तु प्राप्यते यदि पूर्णिमा । प्रक्रम्य यागः कर्तव्यस्त्वन्वाधानपुरस्सरः " इति ॥ तेन विवाहात्परंभाविप्रथमपौर्णमास्यां स्थाली-पाकारम्भः कार्यो न तु दर्शे इत्युक्तं भवति ॥ तत्र मलमासपौषमासगुरुशुक्रास्तादिसत्त्वेऽप्यारम्भः कार्यः । " उपरागोऽधिमासश्च यदि प्रथमपर्वणि । तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते ॥ गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा " इत्यादि सङ्ग्रहवचनानि तु आलस्यादिना स्वकालानुपक्रान्तस्थालीपाकादिप्रारम्भनिषेधविषयाणि— " नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् । अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे " इति गर्गोक्तेरित्येवं प्रयोगपारिजातादिषूक्तम् ॥ त्रिकाण्डमण्डने तु याज्ञिकसम्प्रदाय-मनूद्य उक्तसङ्ग्रहवचनैर्वचनान्तरैश्च मलमासादिदोषरहितपौर्णमास्यामेव दर्शपूर्णमासाद्यारब्धव्यमिति सिद्धान्तितम् ॥ तत्र यागकालमाह प्र० पारिजाते वृद्धशातातपः—" पर्वणो यश्चतुर्थोऽश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः " इति । अत्र प्रातरिति विशेषणात्सूर्योदयादुपरि मुहूर्तत्रयं मुख्यकाल इत्युक्तं भवति ॥ निर्णयसिन्धौ गोभिलोऽपि— "पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः" इति । उपवासश्चान्वाधानम् ॥ अनेन पर्वण्यन्वाधानं प्रतिपदि यागः इत्यवसीयते ॥

तत्र तिथिद्वैधे पर्वप्रतिपदोः सन्धिमनुलक्ष्य यागकालो निर्णेतव्यः ॥ तद्विवेकमाह पारिजाते गोभिलः—" आवर्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् । तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥ पर्वप्रतिपदोः सन्धिरर्वागावर्तनाद्यदि । तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥ आवर्तनात्परः सन्धिर्यदि तस्मिन्नुपक्रमः । परेद्युरिष्टिरित्येष पर्वद्वयविनिर्णयः " इति ॥ आवर्तन शब्देनाह्नो मध्यतनसन्धिरूपः काल उच्यते " आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः । मध्याह्नस्तु तयोः सन्धिर्यदावर्तनमुच्यते " इति वचनात् ॥ लौगाक्षिरपि —" पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥ अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते " इति ॥ अत्रापराह्णशब्देनाऽवर्तनादुपरितनकालो विवक्षितः ॥ सन्धिनिर्णये तिथिह्रास-वृद्ध्योः समीकरणमाह सं० मालायां माधवः–"वृद्धिः प्रतिपदो यास्ति तदर्धं पर्वणि क्षिपेत् । क्षयस्यार्धं तथा त्यक्त्वा सन्धिर्निर्णीयतां सदा" इति ॥ पौर्णमास्यां विशेषमाह तत्रैव कात्यायनः–"सधिः चेत्सङ्गवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्काल-विधौ तिथिः " इति ॥ सङ्गवावर्तनयोरन्तरा सन्धिश्चेत्तद्दिन एव सद्योऽन्वाधानं कृत्वा यागं कुर्यान्न पूर्वेद्युरन्वाधानमित्यभिप्रायः ॥ अमावास्यायां विशेषमाह बोधायनः — " द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी ॥ अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् " इति ॥ प्रतिपद्यस्तमयात्पूर्वं त्रिमुहूर्तद्वितीयाप्रवेशे चन्द्रदर्शनसम्भवात्तत्पूर्वदिने यागं चतुर्दश्यामन्वाधानं च कुर्यादिति तदर्थो ज्ञेयः ॥ कात्यायनश्च — " यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्विजातये" इति ॥ यागदिने चन्द्र-दर्शनराहित्यमेवाभिप्रेत्य बोधायनकारिकामुदाजहार विष्णुभट्टः — " इष्टेरलं सा प्रतिपत्स्वनाड्यः सप्ताष्ट यस्या दिवसे भवन्ति । क्षीणासु तत्कर्म तिथेरिहाद्यः कल्पोऽथ वृद्धासु भवेद्द्वितीयः " इति ॥ एतदर्थप्रतिपादकश्लोकान्तरमपि सञ्जग्राह — " प्रतिपत्पर्व-योगार्धे हीने वा पर्वणोऽधिके । सप्ताष्टावरनाड्याह्णि प्रतिपच्चेदलं यजेत् " इति ॥ एवं चन्द्रदर्शनदोषसम्भावनायां प्रतिपद्युतामा-

वास्यायामिष्टिकरणे विशेषमाह निर्णयसिन्धौ गार्ग्यः— "प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते। पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः" इति ॥ गृह्याग्नेर्नायं नियम इति मदनपारिजातः ॥

एवमुक्तप्रकारेण निर्णीते यागदिने पार्वणस्थालीपाकमारभमाणः प्रथमप्रयोगे पूर्वेद्युरन्वारम्भणीयहोमं कुर्यात् ॥ अन्वारम्भणीयविधिरुक्तः प्र० चिंतामणौ— "इष्टिं यदैवारभते तदान्वारम्भेष्टिहोमं विधिवद्विदध्यात्। कृत्वा तदौपासनकर्म पश्चात्सङ्कल्प्य कृत्वाऽऽप्रणिधानतश्च ॥ संस्कृत्य सर्पिः पृथिवीति होत्रा चतुर्गृहीतं मनसा जुहोतु। पूर्णा च पश्चादनुद्रुत्य चाग्नीषोमादिकाभ्याम-परं तथैव ॥ निवेशनी सङ्गमनी च यत्ते देवादिकाभ्यां च हुनेत्तृतीयम्। ततो हविर्निर्वपणादिकर्म हुताशनास्यान्तमथ प्रकुर्यात् ॥ पक्वं कृशानौ जुहुयादथाग्नाविष्णवादिकाभ्यां प्रथमं मनुभ्याम्। ततः पुरोऽनूच्य मनुं प्रणो देव्यानो दिवश्चेति हुनेद्द्वितीयम् ॥ अन्यच्च पक्वं त्विह पीपिवांसं ये ते सरस्वेति मनुद्वयेन। ततो घृतं व्याहृतिभिश्च हुत्वा स्विष्टं वरान्तं सकलं विधाय ॥ इध्मानि सन्नह्य दिने च तस्मिन् श्वो यक्ष्य इत्यागुरमप्युदीर्य। वह्लेर्व्रती चोपवसेत्समीपे श्वः प्रातरिष्टिं विधिवद्विदध्यात्" इति ॥

अथान्वारम्भणीयपार्वणस्थालीपाकयोः प्रयोगः ॥ कर्ता पौर्णमास्यां प्रातरौपासनान्तं नित्यकर्म कृत्वा कृतस्नानादिचतुष्टय आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "श्रीपरमेश्वरप्रीत्यर्थं सत्यधिकारे यावज्जीवं दर्शपूर्णमासस्थालीपाकाभ्यां यक्ष्ये" इति सङ्कल्प्य गणपतिं सम्पूज्य नान्दीसमाराधनं कृत्वा "अग्निः प्रीयताम्" इति पुण्याहं वाचयित्वा पुनः प्राणानायम्य देशकालौ सङ्कीर्त्य "दर्शपूर्णमासावारप्स्यमाणोऽन्वारम्भणीयस्थालीपाकहोमं करिष्ये" इति सङ्कल्प्य अन्वारम्भणीयस्थालीपाकहोमः कर्म, आघारवत्तन्त्रम्, पञ्चदश दारुरिध्मः, अग्नीषोमावाज्यभागौ, पचनो नामाग्निः, अग्नाविष्णू सरस्वती सरस्वांश्च प्रधानदेवताः,

१ "अथान्वारम्भमादध्यात्पौर्णमास्यां विधानतः। नान्दीमुखं तु पूर्वेद्युरपरेद्युस्तथाशिषः" इति प्र० तिलके ॥

चरुर्हविः, अग्निः स्विष्टकृत, इत्याद्यन्वाधायाऽप्रणीताभ्यः कृत्वाऽऽज्यं संस्कृत्य स्रुक्स्रुवौ सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा तूष्णीं समिधमाधाय चतुर्होतारं मनसानुद्रुत्य जुहोति—" ॐ पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता । वाचस्पते वाचो वीर्येण । सम्भृततमेनाऽयक्ष्यसे । यजमानाय वार्यम् । आसुवस्करस्मै । वाचस्पतिस्सोमम्पिबति । जजनदिन्द्रमिन्द्रियाय स्वाहा " इति ॥ वाचस्पतये ब्रह्मण इदं० ॥ अथ स्रुवेण कूष्माण्डैर्हुत्वा " वैश्वानराय " इत्युपस्थाय वरं दत्वा पुनस्स्रुचि चतुर्गृहीतं गृहीत्वा सारस्वतहोमौ जुहोति —" ॐ पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधिसंवसन्त उत्तमेनाक इह मादयन्तो२मग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्यानिह जिन्वतम् । माध्य२ हि पौर्णमासं जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथाऽस्मभ्य२ सहवीरा२ रयिं नियच्छत२ स्वाहा " इति ॥ पौर्णमास्या इदं० ॥ अथापरं चतुर्गृहीतं गृहीत्वा जुहोति — " ॐ निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती । सहस्रपोष२ सुभगा रराणा सा न आगन्वर्चसा संविदाना२येत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा । सा नो यज्ञं पिपृहि विश्ववारे रयिन्नो धेहि सुभगे सुवीर२ स्वाहा " इति ॥ अमावास्याया इदं० ॥ अथ शूर्पे प्रागग्रे पवित्रे निधाय तण्डुलान्निर्वपति — " देवस्य त्वा० हस्ताभ्या-मग्नाविष्णुभ्यां जुष्टं निर्वपामि " इति त्रिर्यजुषा सकृत्तूष्णीम् " सरस्वत्यै जुष्टं निर्वपामि, सरस्वते जुष्टं निर्वपामि " इति निरुप्य " देवस्य त्वा० हस्ताभ्यामग्नाविष्णुभ्यां वो जुष्टं प्रोक्षामि सरस्वत्यै सरस्वते " इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य त्रिः प्रक्षाल्यै-कस्यां स्थाल्यां तिरः पवित्रमप आनीय तण्डुलान्प्रास्य चरुश्रपणाद्यग्निमुखान्तं कृत्वा " अग्नाविष्णुभ्यां त्वा, सरस्वत्यै त्वा, सरस्वते त्वा " इति ॥ चरुं विभज्य पक्वादवदानधर्मेणावदाय जुहोति— " ॐ अग्नाविष्णू महितद्वां महित्वं वीतं घृतस्य

गुह्यानि नाम । दमे दमे सप्तरत्ना दधाना प्रति वां जिह्वा घृतमाचरण्यो३मग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा। दमे दमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत्स्वाहा " इति ॥ अग्नाविष्णुभ्यामिदं० ॥ अथ द्वितीयपक्वमवदानधर्मेणावदाय जुहोति —" ॐ प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतो३मा नो दिवो बृहतः पर्वतादा सरस्वती यजतागन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्माङ्गो वाचमुशती शृणोतु स्वाहा " इति ॥ सरस्वत्या इदं० ॥ पुनस्तथैवाऽवदाय तृतीयपक्वं जुहोति — " ॐ पीपिवा२ँसᳲ सरस्वतस्तनं यो विश्वदर्शतः । धुक्षीमहि प्रजामिषो३ ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषान्ते सुम्नमीमहे स्वाहा " इति ॥ सरस्वत इदं० ॥ अथ स्विष्टकृतं त्रयाणामप्युत्तरार्धात्सकृत्सकृदवदाय द्विरभिघार्य व्याहृतीरुपहुत्य पुरस्तात्स्रुवाहुतिं हुत्वा " हव्यवाहं, स्विष्टमग्ने " इति द्वाभ्यां स्विष्टकृतं हुत्वा, मेक्षणप्रहरणादि होमशेषं समापयेत् ॥

अथ तदानीमेव प्राणानायम्य देशकालौ सङ्कीर्त्य "श्रीपरमेश्वरप्रीत्यर्थं पौर्णमासस्थालीपाकहोमं करिष्ये, पचनो नामाऽग्निः, अग्निर्देवता, चरुर्हविः, अग्निस्स्विष्टकृत् " इत्यादि " एवं साङ्गेन कर्मणा श्वो यक्ष्ये " इति सङ्कल्प्य व्याहृतीभिस्तिस्रस्स-मिधोऽन्वाधायेध्माबर्हिषी सन्नह्य दम्पती तस्मिन्नहन्यक्षारलवणाऽशनादिव्रतचारिणावुपवसेताम् ॥ अथ श्वोभूते प्रातरौपासनं हुत्वा " जुष्टो दमूनाः " इत्यग्निमुपस्थाय प्रदक्षिणं परिसमूह्य पर्युक्ष्य परिस्तीर्य शूर्पेण सह प्राकृतपात्राण्यासाद्याऽऽप्रणीताभ्यः कृत्वा "देवस्य त्वा० अग्नये जुष्टं निर्वपामि " इति तण्डुलान्निरुप्य प्रोक्ष्य चरुं श्रपयित्वाऽऽज्यसंस्काराद्यभिमुखान्तं कृत्वा पक्वाज्जुहोति— " ॐ अग्निर्मूर्धा० जिन्वतो३ भुवो यज्ञस्य० हव्यवाह२ँ स्वाहा " इति ॥ अग्नय इदं० ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय

स्रुवेणाऽऽज्याहुतिमुपजुहोति — "ॐ ऋषभं वाजिनं वयम्। पूर्णमासं यजामहे। स नो दोहताᳫं सुवीर्यम्। रायस्पोषᳫं सहस्रिणम्। प्राणाय सुराधसे। पूर्णमासाय स्वाहा" इति॥ पूर्णमासायेदं०॥ अथ स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वा हुतशेषादामलकप्रमाणमुपस्तीर्णाऽभिघारितं हविरुपादाय प्राश्नाति— "आयुरसि विश्वायुरसि। सर्वायुरसि सर्वमायुरसि॥ सर्वं म आयुर्भूयात्। सर्वमायुर्गेषम्" इति॥ प्राश्याऽऽचम्य जठरमभिमृशति— "यत इन्द्र, स्वस्तिदा" इति द्वाभ्याम्॥ अथोत्तरपरिषेकादि होमशेषं समापयेत्॥ ॥अथाऽमावास्यायां 'दर्शस्थालीपाकहोमं करिष्ये' इति सङ्कल्प्य सर्वं पूर्ववत्कुर्यात्। स्विष्टकृदवदानान्ते— "ॐ अमावास्या सुभगा सुशेवा। धेनुरिव भूय आप्यायमाना। सा नो दोहताᳫं सुवीर्यम्। रायस्पोषᳫं सहस्रिणम्। अपानाय सुराधसे। अमावास्यायै स्वाहा"॥ अमावास्याया इदं०॥ इति स्रुवाहुतिमुपजुहुयादिति विशेषः॥

अथ दैवाद्दर्शपूर्णमासस्थालीपाकयोरतिपाते प्रायश्चित्तम्॥ गृ० सङ्ग्रहे — "दर्शे च पूर्णमास्याञ्च स्थालीपाकव्यतिक्रमे। अग्ने नयेत्यादेवानामित्याभ्यां स्रुचि सर्पिषा॥ चतुर्गृहीतमाज्यञ्च जुहुयात्पक्ववद्बुधः। दर्शव्यतिक्रमे पूर्णमास्यां वैश्वानरादिना॥ पृष्टो दिवीति जुहुयात्पार्वणाऽतिक्रमे विधिः। द्वयोरतिक्रमे स्थालीपाकयोः स्यादयं विधिः॥ स्थालीपाकत्रयाऽतीते प्रारम्भः स्यात्पुनर्ध्रुवम्" इति॥ अत्र मुख्यकालाऽतिपत्तिर्गौणकालाऽतिपत्तिरिति द्विविधा ह्यतिपत्तिः. अनापदि मुख्यकालाऽतिक्रमेऽपि प्रायश्चित्तं कार्यम्। आपदि गौणकालस्याऽप्यतिपत्तौ प्रायश्चित्तं कार्यं नाऽन्यथा। तदाह गोपालः—"आपत्सु गौणकाले स्यादिष्टिर्नैव त्वनापदि। गौणकालेऽप्यतिक्रान्ते प्रायश्चित्तानि मन्वते" इति॥ गौणकालश्चाऽऽह — "गौणा अर्वाक्तु पर्वणः" इति आगामिपर्वणः प्रागित्यर्थः॥

अथ तद्विधानक्रमः ॥ दर्शेऽतिपन्ने “ दर्शकालाऽतिक्रमणप्रायश्चित्तपूर्वकं दशस्थालीपाकहोमं करिष्ये” इति सङ्कल्प्याऽग्निमुखान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा पथिकृत्प्रधानमन्त्राभ्यां जुहुयात् — “ ॐ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमउक्तिं विधेमो ३ मा देवानामपिपन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् । अग्निर्विद्वान्त्स यजात्सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति स्वाहा ” इति ॥ अग्नये पथिकृत इदं० ॥ अथ पक्वहोमादि सर्वं कुर्यात् ॥

अथ पौर्णमास्यामतिपन्नायां “ पौर्णमासकालाऽतिक्रमप्रायश्चित्तपूर्वकं पौर्णमासस्थालीपाकहोमं करिष्ये ” इति सङ्कल्प्याऽग्निमुखान्ते स्रुचि चतुर्गृहीतं गृहीत्वा ॐ वैश्वानरीप्रधानमन्त्राभ्यां जुहुयात्—“ वैश्वानरो न० वाहसा ३ पृष्टो दिवि० नक्त२ स्वाहा” इति ॥ अग्नये वैश्वनरायेदं० इति ॥ उभयोरप्यतिपन्नयोः पथिकृद्वैश्वानर्यौ कृत्वाऽन्तिमस्थालीपाकमेव कुर्यात् । आदिमस्य तु गौणकालस्याऽप्यतीतत्वाल्लोप एव ॥ ॥ त्र्यादिष्वतीतेषु पुनरन्वारम्भणीयपूर्वकं स्थालीपाकं कुर्यात् ॥ अथोक्तपार्वणव्रतलोपे ‘व्रतलोपप्रायश्चित्तं करिष्ये ’ इति सङ्कल्प्य पूर्ववदग्निमुखान्ते स्रुचि चतुर्गृहीतं गृहीत्वा—“ ॐ त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यो ३ यद्वो वयं प्रमिनामव्रतानि विदुषां देवा अविदुष्टरासः । अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवा२ ऋतुभिः कल्पयाति स्वाहा ॥ अग्नये व्रतपतय इदं० ॥ इति जुहुयात् ॥ ॥ अथ ग्रहणसन्निपाते प्रायश्चित्तमुक्तं प्र० तिलके—“ प्रायश्चित्तन्तु जुहुयाद्ग्रहणे चन्द्रसूर्ययोः । उद्वयञ्च तथोदुत्यं चित्रञ्च व्याहृतीरपि ॥ नवो नवो यमादित्या मिन्दा व्याहृतिभिस्तथा । सोमोऽपरागे जुहुयादिति केचिद्वदन्ति च ” इति ॥ ॥ अथ भार्यायां रजस्वलायां विशेषमाह कात्यायनः—“ प्रक्रान्तमग्निहोत्रादि

कर्म यच्छ्रुतिचोदितम्। आर्तवाऽभिप्लुतां नारीं विहाय कुरुते द्विजः" इति॥ आरम्भोत्तरं रजस्वलायां स्थालीपाकादिकं तां विहायैव कुर्यादित्यर्थः॥ ॥ एवं जायामवाप्य दौर्ब्राह्मण्यपरिहारायाऽनुकूले सत्यग्न्याधेयञ्च कुर्यात्। तथा चेयं गृह्यपरिभाषा (बो. गृ. प. सू. १. १०) "यथाश्रद्धमत ऊर्ध्वं जीवति पितर्यग्नीनादधीतेति बोधायनः॥ जीवति मृते वा जायामवाप्य दशमेऽहनीति शालिकिः॥ मा दुर्ब्राह्मणो भवति॥ अथाप्युदाहरन्ति—'यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्। स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः' इति॥ औपासनो वा नित्यो धार्य इति न दुर्ब्राह्मणो भवति" इति॥ एतेनाऽशक्तस्यौपासनेनाऽप्यजस्रधृतेन दौर्ब्राह्मण्यपरिहारो भवतीत्यवगम्यते॥

## ॥ अथौपासनोपयोगिविषयाः ॥

तत्र (बो. गृ. प. सू. १·१०) 'औपासनो वा नित्यो धार्यः' इत्यनेन औपासनाग्नेः कुण्डेऽजस्रधारणं मुख्यः कल्पः। प्रत्यहं समारोपणाऽवरोपणाभ्यां समिधि धारणमनुकल्पः॥ होमकालश्च— "उदितेऽनुदिते चैव समयाध्युषिते तथा। सर्वथा वर्तते होम इतीयं वैदिकी श्रुतिः" इति मनूक्तेषु उदिताऽनुदितसमयाऽध्युषितकालेष्वन्यतमः कालो मुख्यः। गौणस्तु— "प्रदोषान्तो होमकालः सायं सङ्गवान्तः प्रातः" इत्याश्वलायनादिभिरुक्तः॥ "आसायं कर्मणः प्रातराप्रातः सायं कर्मण आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरम्" इति बोधायनोक्तगौणकालस्तु महापद्विषयो ज्ञेयः॥ ॥ अथ होमद्रव्याण्याह बोधायनः (बो. गृ. शे. सू. ४·१३) "अथाऽग्निं परिचरति व्रीहिभिर्यवैर्वा॥ यवैर्ग्रामकामस्य तण्डुलैरोजस्कामस्य पयसा पशुकामस्य दध्नेन्द्रियकामस्याज्येन तेजस्कामस्य" इति॥ होमस्य च सायमुपक्रमः प्रातरपवर्गो ज्ञेयः। अत एव सायंप्रातरेकजातीयमेव द्रव्यं ग्राह्यं

होताप्येक एव भवेत्। तथा च सं० मालायां मण्डनः—"सायं होमे तु यद्द्रव्यं तदेव प्रातरिष्यते" इति॥ मदनरत्ने—"एक एव हुनेदग्निं सायंप्रातर्द्विजोत्तमः। सायमन्यः प्रातरन्यो जुहुयाल्लौकिको भवेत्" इति॥ यजमानविषये विशेष उक्तस्तत्रैव गदाधरभाष्ये-"यजमानं विना नान्यो जुहुयात्प्रातराहुतिम्" इति॥ होमश्च स्वयमेव कुर्यात्, आशौचादिप्रतिबन्धे ऋत्विगादिभिः कारयेत्। ऋत्विगादीनाह दक्षः—"ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः। एतैरेव हुतं यत्तु तद्धुतं स्वयमेव तु" इति॥ विट्पति-र्जामाता॥ ऋत्विगादिभिः करणे त्वयं विशेषः—"असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना। द्वयोरप्यसमक्षं चेद्भवेद्धुतमनर्थकम्" इति॥ अथापदि समस्यहोमो विहितस्त्रिकाण्डमण्डने—"सायंप्रातस्तनौ होमावुभौ सायं समस्य तु। आपन्नो जुहुयात्तत्र समिदेकाथवा द्वयम्॥ सायं होमस्य मुख्यत्वात्तदर्थं तन्त्रमिष्यते। चतस्र आहुतीः कुर्यात्तत्र द्वे सायमाहुती॥ द्वे प्रातराहुती सायं होमे चैका समिद्यदि। समित्कृता द्वितीया चेत्सा भवेत्प्रातराहुतौ" इत्यादि॥ अत्र प्रयोगक्रमः स्फुटं ज्ञायत एव॥ ॥अथ पक्षहोमः शेषहोमश्चोक्तस्तत्रैव—"आमयाव्यार्तिमानापद्गतो वाध्वगतोऽपि वा। राष्ट्रभ्रंशे धनाभावे गुरुगेहे वसन्नपि॥ अन्येष्वेवं-प्रकारेषु निमित्तेष्वागतेषु च। समासमग्निहोत्राणां यथासम्भवमाचरेत्॥ निमित्तानामिहैतेषां निर्दिश्यैकं यदुच्यते। तत्सर्वेषु निमित्तेषु जानीयात्प्रतिपादितम्॥ पक्षहोमानशेषान्वा शेषहोमानथाऽपि वा॥ समस्य जुहुयात्तत्र प्रयोगोऽयं निरूप्यते" इत्यादि॥

अथ पक्षहोमप्रयोगक्रमः॥ पक्षहोमकरणे प्रतिपदि सायमौपासनकाले 'आपन्निमित्तं प्रतिपत्सायंकालमारभ्य चतुर्दशी-सायंकालपर्यन्तं अमुकसङ्ख्याकान् सायमौपासनहोमानपकृष्य तन्त्रेण करिष्ये' इति सङ्कल्प्य तावत्परिमितं होमद्रव्यं संस्कृत्य

---

१. कारिकान्तरे तु—"सायं प्रातस्तु तन्त्रेण यदि होमौ समाचरेत्। उभयोः स्विष्टकृत्स्थाने प्राजापत्यां सकृद्धुनेत्" इति प्रातरपि पूर्वतनसायंहोमेन सह समस्याहुतित्रयं विहितम्॥

"अग्नये स्वाहा" इति समिध्यपरार्धे प्रथमाहुतिं सकृदेव हुत्वा "प्रजापतये स्वाहा" इति द्वितीयामप्याहुतिं पूर्वार्धे समिधि सकृद्धुत्वा होमशेषं समापयेत् ॥ एवं द्वितीयाप्रातरौपासनकाले 'आपन्निमित्तं द्वितीयाप्रातःकालमारभ्य पौर्णमासीप्रातःकालपर्यन्तं (कृष्णपक्षे चेदमावास्याप्रातःकालपर्यन्तं) अमुकसङ्ख्याकान् प्रातरौपासनहोमानपकृष्य तन्त्रेण करिष्ये' इति सङ्कल्प्य "सूर्याय स्वाहा, प्रजापतये स्वाहा" इति द्वे आहुती सकृत्सकृज्जुहुयात् ॥ 'अत्यापदि सायमेव अमुकसङ्ख्याकान् सायन्तनान् प्रातस्तनांश्च होमानपकृष्य तन्त्रेण करिष्ये' इति सङ्कल्प्य सायमाहुतिद्वयं हुत्वा किञ्चिद्विरम्य प्रातराहुतिद्वयञ्च जुहुयात् ॥ यदा त्वनिवार्यसङ्कटेन प्रातरेवापकर्षणप्रसङ्गस्तदानीं सङ्कल्पे होमे च पूर्वं प्रातस्तनमनन्तरं सायन्तनं प्रयुञ्ज्यात् ॥ शेषहोमकरणे तु पक्षमध्ये यस्मिन्दिने सङ्कटसन्निपातस्तद्दिनमारभ्य पर्वपर्यन्तं सायंहोमान्प्रातर्होमांश्चापकृष्य पूर्वोक्तप्रकारेण सायन्तनहोमान् सायङ्काले प्रातस्तनान् प्रातःकाले अतिसङ्कटे सर्वानप्येकदैव वा कुर्यात् ॥ पक्षद्वयेऽपि पर्वदिने सायंहोमः यागदिने प्रातर्होमश्च पृथगेव भवेन्न समासेन, इति त्रिकाण्डमण्डनः ॥ गोपालस्तु — "अमावास्यास्तिथेरर्वाक्समासः कृष्णपक्षके । कृष्णपक्षे समासस्स्यात्प्रतिपत्प्रातरन्तकः" इत्याह ॥ ॥

अथ प्रवासनियमस्त्रिकाण्डमण्डने सङ्गृहीतः— "निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा । प्रवसेत्कार्यवान्विप्रो वृथैव न चिरं वसेत् ॥ रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा । प्रवसन्नग्निमान् विप्रः पुनराधानमर्हति ॥ नाग्निकार्यस्य वेलायां प्रवसन्न च पर्वणि । विवाहाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ॥ होमकालात्यये तस्य पुनराधानमिष्यते । यदोभावप्यतिक्रम्य सीमां प्रत्यागतौ पुनः ॥ उदयास्तमयात्पूर्वं न नाशोऽग्नेरिति केचन । भार्यायां प्रोषितायाश्चेदुदेत्यर्कोऽस्तमेति वा ॥ तत्र स्यात्पुनराधेयमन्ये

१. "तत्राग्निर्यत्र भार्या स्यात्सा प्रधाना हि तं प्रति" इति गृ० सङ्ग्रहे ॥

प्राहुरिहान्यथा। होमकालेऽग्निसम्प्राप्ता न सा दोषेण युज्यते॥ ज्येष्ठा चेदग्निसंयुक्ता गच्छन्त्यन्या यथारुचि। यजमानेन सहिता यत्रा ता एव केवलाः॥ सहाग्निश्चेत्सपत्नीको गच्छेत्तीर्थानि मानवः" इत्यादि॥

अथ प्रवासविधिः॥ प्रवत्स्यन्यजमानः स्वायतने तिष्ठन् "मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे। तत्त्वं बिभृहि पुनरामदैतोस्तवाहं नाम बिभराण्यग्ने" इत्यग्निमुपस्थाय "भूर्भुवस्सुवः" इति वाचं नियम्य गच्छेत्। अग्नेरसकाशे वाचं विसृजेत्। प्रवासादागच्छन् प्रपथे समिधं गृहीत्वा वाचंयमोऽग्निसकाशमेत्य व्याहृतिभिर्वाचं विसृज्याग्नौ समिधमाधाय "मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः। आयुषे त्वं जीवसे वयं यथायथं विपरिदधावहे पुनस्ते॥ अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः॥ अस्मा अस्तु सुवीर्यम्" इति द्वाभ्यामुपतिष्ठेत्॥ प्रवासकाले यजमानः प्रत्यहं सायं प्रातर्होममन्त्रान् पर्वणि स्थालीपाकमन्त्रांश्च पठेत्॥ यद्यग्निमनुपस्थाय प्रवसेत्तदा प्रत्यहं होममन्त्रपठनान्ते "इहैव सन्तत्र सन्तन्त्वाग्ने। प्राणेन वाचा मनसा बिभर्मि॥ तिरोमासन्तमायुर्मा प्रहासीत्॥ ज्योतिषा त्वा वैश्वानरेणोपतिष्ठे" इत्युदङ्मुख उपतिष्ठेत् इति विशेषः॥ पत्नीत्वग्निसमीपे वर्तमाना नित्यहोमस्थालीपाकादीनवसरप्राप्तानेव ऋत्विगादिद्वारा कुर्यात्॥

औपासने सम्भाव्यानि प्रायश्चित्तानि॥ प्र० तिलके अन्याग्निसंस्पर्शे— "प्रत्यक्षधारितो वह्निस्संस्पृष्टोऽन्येन वह्निना। उभौ विविच्य जुहुयादुभयत्र स्रुवाहुतीः॥ विते त्वामादिमन्त्राभ्यां मनो मिन्दा च व्याहृतीः। अरण्योस्समिधोश्चैव मिथः स्पर्शेऽप्ययं विधिः॥ एकदेशयुतस्याग्नेर्विभागो नोपपद्यते। पूर्वोक्तैर्जुहुयात्तत्र मन्त्रैरेतैस्स्रुवाहुतीः॥ लौकिकाग्नियुतस्यापि वह्नेरेवं विधिः स्मृतः" इति॥ ॥ अथ वह्नेर्नद्युत्तारणे— "नदीसन्तरणे वह्नेस्समुद्रायादिना हुनेत्। जातवेदा मनो मिन्दा व्याहृतीश्च

महादिकाः " इति ॥ ॥ अथ जले समारोपितसमित्पतने—" समारूढोऽग्निररणिस्समिद्वा पतिता यदि। जले वा जलसिक्ते वा तमादायाग्निना विना ॥ संशोष्य लौकिकाग्नौ तामभ्याधाय विधानतः। जातवेदादिपश्चाग्न आद्याः षट् च मनस्वती ॥ मिन्दाहुती व्याहृतीश्च जुहुयाच्च स्रुवेण तु " इति ॥ ॥ अथाग्नेरुच्छिष्टस्पर्शे — " उच्छिष्टन्तु शकृन्मूत्रमलमन्यच्छरीरजम्। स्पृष्टश्चेन्नाशमेत्याभ्यां पवमानादिभिस्तथा ॥ चतुर्भिर्जुहुयाद्विद्वान्प्रायश्चित्तार्थमादरात् " इति ॥ ॥ अथौपासनाग्नावनुगते — (बो. गृ. प. सू. १. १६) " उपवासश्चानुगतेऽन्यतरस्य भार्यायाः पत्युर्वा ॥ अपि वैकां जुहुयात् 'अयाश्चाग्ने' इति ॥ एकाहं मनस्वतीं द्व्यहं वारुणीं त्र्यहं तन्तुमतीं चतस्रोऽभ्यावर्तिनीराद्वादशाहात्। द्वादशाहं विच्छिन्नः पुनराधेयः " ॥ (बो. गृ. शे. सू. ४. १३. ९) " अथाऽतिपन्नाः प्रतिजुहोति " इति ॥ उपवासविषये विशेष उक्तश्चिन्तामणौ —" दशाहतः प्रागिह चैकभुक्तिमात्रिंशतोऽग्नावुपवासमेकम्। आषष्टिरात्रात् त्रिदिनोपवासं परश्च कृच्छ्रादि चरेद्विनष्टे " इति ॥ ॥ तथा चाग्नावनुगते तद्दिन एव यथोक्तं लौकिकाग्निं प्रतिष्ठाप्याऽऽज्यं संस्कृत्य " अयाश्चाग्ने " इति स्रुवाहुतिं जुहुयात् ॥ यद्येकाहं विच्छिद्येत तदा द्वितीयदिने एवमेवाग्निं प्रतिष्ठाप्य " अयाश्चाग्ने " इति हुत्वा मनस्वतीं जुहुयात् ॥ द्व्यहविच्छेदे — मनस्वतीं वारुणीं ( " इमम्मे वरुण, तत्त्वा यामि " इति ) च जुहुयात् ॥ त्र्यहविच्छेदे — मनस्वतीं वारुणीं तन्तुमतीं ( "तन्तुन्तन्वन्, उद्बुध्यस्वाग्ने, त्रयस्त्रिꣳशत्तन्तवः " इति ) च जुहुयात् ॥ चतुरहाद्येकादशाहपर्यन्तं विच्छेदे–तन्तुमत्यन्तं हुत्वा " अग्नेऽभ्यावर्तिन्, अग्ने अङ्गिरः, पुनरूर्जा, सहरय्या " इति चतस्रोऽभ्यावर्तिनीर्जुहुयात् ॥ एवं विच्छिन्नाग्निं सन्धाय तत्तदतीतहोमांश्च कुर्यात् ॥ द्वादशाहप्रभृत्यग्नेर्विच्छेदे यथोक्तकृच्छ्रमुपवासमतिपन्नहोमद्रव्यदानञ्च कृत्वा वक्ष्यमाणपुनराधानविधिं कुर्यादित्यवसीयते ॥ अथात्र सत्यग्नौ होमाऽभावेऽपि अयसाहुत्यन्तं वर्जयित्वैतदेव प्रायश्चित्तमतिदिश्यते ॥ गृ०सङ्ग्रहे — " एकाहहोमातिपत्तौ मनस्वत्याहुतिं हुनेत्। इमम्मे वरुणेत्याभ्यां द्व्यहे

चाऽपि त्र्यहे तथा ॥ आभ्यान्तन्तुमतीभिश्च चतूरात्रव्यतिक्रमे । एभिः पूर्वादिकैश्चाग्नेऽभ्यावर्तिनी चतुष्टयैः । ऊर्ध्वं चतुरहादर्वाग्द्वादशाहादयं विधिः । अतो होमे व्यतीतेऽग्नेः पुनराधानमिष्यते " इति ॥ एकाहमेककालं वा होमविच्छेदे सायंप्रातर्होमयोः कालातिक्रमणे द्रव्यभेदे कर्तृभेदे च मनस्वतीं जुहुयात् ॥ त्र्यहप्रभृत्याद्वादशाहाद्धोमविच्छिदे मनस्वत्या सह वारुण्यादिकं जुहुयात् ॥ द्वादशाहप्रभृत्याषण्मासाद्धोमविच्छित्तौ पूर्वोक्तकृच्छ्रादिकं कृत्वा पुनराधानं कार्यम् ॥ षण्मासादूर्ध्वं होमातिक्रमे पुनराधानं कुर्यात् ॥ ॥

## ॥ पुनराधानम् ॥

( बो. गृ. प. सू. १. १६ ) " अथ यदि द्वादशाहं विच्छिन्नः पुनराधेयः स्यात् या प्रकृतिस्तत् आहरणं प्रणवेनाहरति । ब्रह्मा प्रणवेन प्रसौति । व्याहृतिभिः सिकतोपोप्ते यथोपपादमग्न्याधेयिकान्सम्भारानाहृत्य व्याहृतिभिर्निर्मथ्योपसमाधायोपतिष्ठते — ' जुष्टो दमूना ' इति । अथैनं प्रदक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्यग्नौ परिश्रिते पूर्णाहुतिं जुहोत्यपरिश्रिते वा ' सप्त ते अग्ने ' इति । पूर्णाहुतौ वरं ददाति - धेनुमृषभमनड्वाहं कंसं हिरण्यं वासो वेति । अपरं चतुर्गृहीतं गृहीत्वा तिस्रस्तन्तुमतीर्विग्राहं जुहोति । अपरं चतुर्गृहीतं गृहीत्वा चतस्रोऽभ्यावर्तिनीर्विग्राहं जुहोति । अपरं चतुर्गृहीतं गृहीत्वा मनस्वतीं जुहोति । अपरं चतुर्गृहीतं गृहीत्वा प्राजापत्यां जुहोति । अपरं चतुर्गृहीतं गृहीत्वाऽनुख्यां जुहोति । अपरं चतुर्गृहीतं गृहीत्वा प्रायश्चित्तं जुहोति — ' अयाश्चाग्ने ' इति । अपरं चतुर्गृहीतं गृहीत्वा ज्योतिष्मतीं जुहोति- ' उद्वयं तमसस्परि ' इति । अपरं चतुर्गृहीतं गृहीत्वाऽऽयुर्दां जुहोति — आयुर्दा अग्ने '

इति । अपरं चतुर्गृहीतं गृहीत्वा द्वे मिन्दाहुती जुहोति । अपरं चतुर्गृहीतं गृहीत्वा व्याहृतीर्व्यस्ताः समस्ताश्च जुहोति "। कारिकायाम् — " द्वादशाहप्रभृत्यग्नेर्नाशो यस्य भवेत्तदा । प्राजापत्यं चरेत्कृच्छ्रं होमद्रव्यं त्यजेद्बुधः । कृच्छ्रस्थाने हिरण्यादि दत्वा वाधेय उत्तमैः" ॥

अथ पुनराधानप्रयोगः ॥ शुचौ समे देशे गोमयेनोपलिप्योद्धृत्यावोक्ष्य व्याहृतिभिः सिकतान्युप्य स्थण्डिलं कृत्वा यथोपपादमग्न्याधेयिकान्साम्भारानाहृत्य व्याहृतीभिर्नियुप्य तत्र प्रणवेन लौकिकाग्निं प्रतिष्ठाप्य प्राणानायम्य देशकालौ सङ्कीर्त्य नष्टमग्निं पुनस्सन्धास्ये, पुनस्सन्धानहोमः कर्म, अपूर्वं तन्त्रं, मृडो नामाग्निः, अग्न्यादयो देवताः, आज्यं हविः, इत्यादि सद्यो यक्ष्ये, इति सङ्कल्प्यान्वाधाय " जुष्टो दमूनाः " इत्यग्निमुपस्थाय प्रदक्षिणं परिसमूह्य पर्युक्ष्य परिस्तीर्य आज्यस्थालीं स्रुवं स्रुचं प्रोक्षणीं बर्हिश्चेत्यासाद्याऽज्यसंस्कारस्रुक्स्रुवसम्मार्जनान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्निं परिषिच्य समिधमाधाय परिश्रितेऽग्नौ पूर्णाहुतिं जुहोत्यपरिश्रिते वा " सप्त ते अग्ने० घृतेन स्वाहा " इति । अग्नये सप्तवत इदं० ॥ अथ धेनुमृषममनड्वाहं कांस्यं हिरण्यं वासो वेति यथासम्भवं वरं दत्वा " आवयोरौपासनविच्छित्तिदोषपरिहारार्थं विच्छित्तिदिनादारभ्यैतावत्कालपर्यन्तमातिक्रान्तहोमानामाहुतिपरिमितद्रव्यं ब्राह्मणाय दातुमहमुत्सृजे " इति सङ्कल्पपूर्वकमतिपन्नहोमद्रव्यं तन्निष्क्रयहिरण्यं वा दत्वा 'औपासनविच्छित्तिदोषपरिहारोऽस्तु ' इति वाचयेत् ॥ अथापरं चतुर्गृहीतं गृहीत्वा तिस्रस्तन्तुमतीर्विग्राहं जुहोति — " ॐ तन्तुं तन्वन्० जनꣳ स्वाहा ॥ ॐ उद्बुध्यस्व० तन्तुमेतꣳ स्वाहा ॥ ॐ त्रयस्त्रिꣳ शत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं

१. ऊषाश्चाखूत्करो वल्मीकवपा सूदः पुष्करपर्णं वराहविहतं शर्करा अश्वत्थौदुम्बरपर्णशमीविकङ्कताश्चेत्यग्न्याधेयिकास्सम्भाराः ॥

प्रत्येतद्दधामि स्वाहा घर्मो देवा २ अप्येतु स्वाहा " इति ॥ अग्नये तन्तुमत इदं०, इति त्रयाणां त्यागः ॥ अपरं चतुर्गृहीतं गृहीत्वा चतस्रोऽभ्यावर्तिनीर्विग्राहं जुहोति — " ॐ अग्ने ऽभ्यावर्तिन्नभि न आवर्त स्वायुषा वर्चसा सन्या मेधया प्रजया धनेन स्वाहा ॥ ॐ अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः । तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि स्वाहा ॥ ॐ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा। पुनर्नः पाहि विश्वतः स्वाहा ॥ ॐ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि स्वाहा " इति ॥ अग्नयेऽभ्यावर्तिन इदं०, इति चतुर्णां त्यागः ॥ पुनश्चतुर्गृहीतं गृहीत्वा मनस्वतीं जुहोति — " ॐ मनो ज्योतिः० घृतेन स्वाहा " इति ॥ मनसे ज्योतिष इदं० ॥ अपरं चतुर्गृहीतं गृहीत्वा प्राजापत्यां जुहोति–" ॐ प्रजापते न० रयीणा२ स्वाहा " इति ॥ प्रजापतय इदं० ॥ अपरं चतुर्गृहीतं गृहीत्वाऽनुख्यां जुहोति– " ॐ अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननुद्यावापृथिवी आततनात स्वाहा " इति ॥ अनूख्याऽग्नय इदं० ॥ पुनश्चतुर्गृहीतेन प्रायश्चित्तं जुहोति–" ॐ अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽयानो धेहि भेषज २ स्वाहा " इति ॥ अग्नये अयस इदं० ॥ पुनश्चतुर्गृहीतेन ज्योतिष्मतीं जुहोति — " ॐ उद्वयं० रुत्तम२ स्वाहा " इति ॥ सूर्याय ज्योतिष इदं० ॥ पुनश्चतुर्गृहीतेनाऽऽयुर्दां जुहोति — " ॐ आयुर्दा अग्ने० रक्षतादिम२ स्वाहा " इति ॥ आयुर्दाग्नय इदं० ॥ अपरं चतुर्गृहीतं गृहीत्वा द्वे मिन्दाहुती विग्राहं जुहोति—" ॐ यन्म आत्मनः, पुनरग्निः " इति द्वाभ्याम् ॥ पुनः चतुर्गृहीतेन सावित्रीं जुहोति—" तत्सवितुर्वरेण्यम् " इति ॥ अपरं चतुर्गृहीतं गृहीत्वा व्याहृतीर्व्यस्ताः समस्ताश्च विग्राहं जुहोति— " ॐ

---

१. अत्र चतुर्गृहीतेन सावित्रीहवनं प्र० तिलके चिन्तामणौ चाधिकं लिखितम् ॥

भूः स्वाहा " इत्यादि चतसृभिः ॥ ततः स्रुवेण " ॐ अग्नये स्विष्टकृते स्वाहा " इति हुत्वोत्तरपरिषेकादि होमशेषं समापयेत् ॥ तत्रैव तद्दिनसायंप्रभृति यथापूर्वमौपासनहोमं कुर्यात् ॥ ॥ इति पुनराधानप्रयोगः ॥

अथ सद्यः सन्धानम् ॥ अथात्र ( बो. गृ. प. सू. १. १६. ४३ ) " एकाहुत्या वा प्रतिसन्धानम्–पुनस्त्वादित्याः इति " ॥ इत्येतद्गृह्यवचनेन विच्छिन्नाग्नेर्गृह्याग्निसाध्यकर्मणः सद्यःकरणप्रसङ्गे तात्कालिकाग्निसिद्ध्यै विधानान्तरमप्युक्तं प्रयोगमालायाम्– " अमुककर्म कर्तुं नष्टमग्निं सद्यः सन्धास्ये " इति संकल्प्य स्थण्डिलोल्लेखनादिलौकिकाऽग्निं प्रतिष्ठाप्याज्यसंस्कारादि ' सप्त ते अग्ने ' इति पूर्णाहुतिवरदानान्तं कृत्वा "पुनस्त्वादित्याः" इति समिधं हुत्वा पुनस्तथैव चतुर्गृहीतमाज्यं जुहुयात् ॥ ततो होमशेषं समाप्य तत्रैव ह्यस्तनसायमौपासनमद्यतनप्रातरौपासनञ्च तन्त्रेण हुत्वोद्दिष्टं कर्म कुर्यात् । अपवृत्ते कर्मण्यग्निर्लौकिकः सम्पद्यते ॥ अतो नास्य समारोपणादिकं विद्यत इति ॥

## ॥ अथ षाण्मासप्रायश्चित्तम् ॥

( बो. गृ. शे. सू. ४. ८. २ ) " अथ गृहस्थस्यौपासनम्–षण्मासान्नाजुहवुर्यथोपपादमाहृत्याग्निं प्रतिष्ठाप्य परिस्तीर्य द्वादशाह-प्रायश्चित्तं हुत्वा तदानीमेव संपरिस्तीर्याऽऽप्रणीताभ्यः कृत्वा चतुःशरावमोदनं श्रपयित्वाभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघार्य परिधानप्रभृत्याऽग्निमुखात्कृत्वा मेक्षणेनोपघातं पक्वाज्जुहोति—' अग्नये स्वाहा सोमाय स्वाहाऽग्नयेऽन्नवते स्वाहाऽग्नयेऽन्नादाय स्वाहाऽग्नयेऽन्नपतये स्वाहाऽग्नये पवमानाय स्वाहाऽग्नये पावकाय स्वाहाऽग्नये शुचये स्वाहाऽग्नये ज्योतिष्मते स्वाहाऽग्नये व्रतपतये स्वाहाऽग्नये पथिकृते स्वाहाऽग्नये तन्तुमते स्वाहाऽग्नये वैश्वानराय स्वाहा सूर्याय स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहा भूः

स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहा ॥ अग्नये स्विष्टकृते स्वाहा ' इत्युत्तरार्धपूर्वार्धे ॥ तूष्णीं मेक्षणमभ्याधाय जयप्रभृति सिद्धमाधेनुवरप्रदानात् " ॥

अथ प्रयोगः ॥ षाण्मासादूर्ध्वमौपासनविच्छेदे पूर्वोक्तप्रकारेण नष्टाग्नेः पुनस्सन्धानं कृत्वा तमेवाऽग्निमुपसमाधाय प्राणानायम्य देशकालौ सङ्कीर्त्य "आवयोः षाण्मासपर्यन्तमौपासनविच्छित्तिदोषपरिहारार्थं षाण्मासप्रायश्चित्तहोमं करिष्ये, प्रायश्चित्तहोमः कर्म, आघारमापूर्विकं वा तन्त्रं, चित्तिर्नामाग्निः, सविता अग्न्यादयश्च देवताः, चरुर्हविः " इत्यादि सङ्कल्प्यान्वाधानाद्यग्निमुखान्ते सावित्र्या पक्वं हुत्वा पक्वादेव मेक्षणेनोपहत्य ( हस्तेन ) जुहोति—" ॐ अग्नये स्वाहा ॥ ( अग्नय इदं० इत्यादि यथालिङ्गमुद्देशत्यागः ) ॐ सोमाय स्वाहा ॥ ॐ अग्नयेऽन्नवते स्वाहा ॥ ॐ अग्नयेऽन्नादाय स्वाहा ॥ ॐ अग्नयेऽन्नपतये स्वाहा ॥ ॐ अग्नये पवमानाय स्वाहा ॥ ॐ अग्नये पावकाय स्वाहा ॥ ॐ अग्नये शुचये स्वाहा ॥ ॐ अग्नये ज्योतिष्मते स्वाहा ॥ ॐ अग्नये व्रतपतये स्वाहा ॥ ॐ अग्नये पथिकृते स्वाहा ॥ ॐ अग्नये तन्तुमते स्वाहा ॥ ॐ अग्नये वैश्वानराय स्वाहा ॥ ॐ सूर्याय स्वाहा ॥ ॐ प्रजापतये स्वाहा ॥ ॐ ब्रह्मणे स्वाहा ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ सुवः स्वाहा ॥ ॐ भूर्भुवस्सुवः स्वाहा " इत्येकोनविंशत्याहुतीर्हुत्वा स्विष्टकृत्प्रभृति होमशेषं समापयेत् ॥ अथास्तमित आदित्ये तत्रैव सायमौपासनहोमं कुर्यात् ॥

## ॥ अथाग्निसमारोपणम् ॥

( बो. गृ. शे. सू. ४. १३ ) " अथ लौकिकौपासनग्रहणधारणोपावरोहणविधिं व्याख्यास्यामः— त्रिविधं समारोपणमात्मन्यरण्योस्समिधीति ॥ समिधि समारोपयति— पालाशीमाश्वत्थीं खादिरीमौदुम्बरीं शमीमयीं वा समिधमादाय समारोपयति—

'अयन्ते योनिर्ऋत्वियः' इति ॥ अरण्योर्वा समारोप्य मथित्वा जुहुयात् ॥ अपि वाऽऽत्मनि समारोपणं भवति— 'या ते अग्ने यज्ञिया तनूः' इति ॥ अथैनमुपावरोहयति— 'उपावरोह जातवेदः' इति ॥ यत्र गच्छेत्तत्र नो हरेत्तत्र प्राप्य लौकिकमग्निमाहृत्य न्युप्योपसमाधाय तां समिधमादधाति यस्याऽऽत्मनि समारूढो भवति 'आजुह्वानः, उद्बुध्यस्वाग्नेः' इति द्वाभ्याम्" ॥

(बौ. गृ. प. सू. १. १६) "अथाऽस्याऽध्वनि समारोपणम्— 'अयन्ते योनिर्ऋत्वियः' इति ॥ अरण्योर्वा समारोप्य मथित्वा जुहुयात् ॥ अपि वाऽऽत्मनि समारोपणं भवति— 'या ते अग्ने यज्ञिया तनूः' इत्यात्मनि समारोप्य 'उपावरोह जातवेदः' इति लौकिकेऽग्नावुपावरोह्य जुहुयात् ॥ अपि वा— 'अयन्ते योनिर्ऋत्वियः' इति समिधि समारोप्य 'आजुह्वानः, उद्बुध्यस्वाग्ने' इति द्वाभ्यां लौकिकेऽग्नौ समिधमभ्याधाय जुहुयात् ॥ आत्मनि समारूढेष्वग्निषु न खादेन्न पिबेन्नोपरि शय्यायां शयीत नाऽप्सु निमज्यान्न मैथुनं व्रजेत् ॥ कामं खादेत्कामं पिबेत्कामं त्वेवोपरि शय्यायां शयीत पालाशीमाश्वत्थीं खादिरीमौदुम्बरीं वा ॥ तेषामेतेन प्रसिद्धं समारोपणम्" ॥

## ॥ आग्रयणस्थालीपाकः ॥

(बौ. गृ. प. सू. २. १) "अथ व्रीहिभ्यो यवेभ्यश्च नवानामनिरुप्तं स्थालीपाकं श्रपयित्वाऽग्निमुपसमाधाय सम्परिस्तीर्याघारावाघार्याज्यभागाविष्ट्वाऽऽग्रयणदेवताभ्य इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां सोमाय स्विष्टकृच्चतुर्थीभ्यो जुहुयात् । कामं पुरस्तात्स्विष्टकृतोऽज्यानीरुपजुहोति । प्रसिद्धौ प्राशनमन्त्रौ । वैश्वदेवं कृत्वा ब्राह्मणेभ्यो दत्वा प्राशनम् । तेन सर्वासामोषधीनामाग्रयणं व्याख्यातमन्यत्र श्यामाकवेणुयवेभ्यश्च ॥ सौम्यः श्यामाकश्चरुराग्नीन्द्रो वेणुयवानां वैश्वदेवो वा । समानौ प्राशनमन्त्रौ । अथ फलानां मूलानां भक्षणानां ब्राह्मणेभ्यो दत्वा प्राशनमेव । पुष्पाणामन्येषां च नवानां ब्राह्मणेभ्यो दत्वोपयोगः" ॥

कथमु खल्वनाहिताग्निराग्रयणं भवतीति । अनिरुप्तं स्थालीपाकं श्रपयित्वाऽग्निमुपसमाधाय सम्परिस्तीर्याऽऽघारावाघार्याऽऽज्यभागाविष्ट्वाऽग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो जुहुयात् । कामं पुरस्तात्स्विष्टकृतोऽज्यानीरुपजुहुयात् । तस्यैतेनैव मन्त्रेण प्राश्नीयात् "भद्रान्नः श्रेयः समनैष्ट देवाः" इति ॥ अपि वा श्रुतवतो ब्राह्मणस्य हुतोच्छेषणाल्लिप्सेत । समानः प्राशनमन्त्रः ॥ आव्रीह्याग्रयणस्य कालाच्छ्यामाकाग्रयणस्य कालो नाऽतीयात् । आयवाग्रयणस्य कालाद्व्रीह्याग्रयणस्य । आश्यामाकाग्रयणाद्यवाग्रयणस्य ॥ अपि वा देवनक्षत्रे रेवत्यां वाऽऽग्रयणं कुर्वीत इति ॥

शरदि व्रीह्याग्रयणम् ॥ तस्य प्रयोगः ॥ आश्विने कार्तिके वा मासि पौर्णमास्यां वा शुभदिने देवनक्षत्रे रेवत्यां वा कर्ता सपत्नीकः प्रातरौपासनं हुत्वाऽग्नेः पश्चादुपविश्य स्नानादिचतुष्टयं कृत्वा गणपतिं सम्पूज्य 'इन्द्राग्नीविश्वेदेवाद्यावापृथिव्यः प्रीयन्ताम्' इति पुण्याहं वाचयित्वा आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम समस्तजरारोगनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं व्रीह्याग्रयणस्थालीपाकहोमं करिष्ये, होमः कर्म, पचनो नामाग्निः, इन्द्राग्नीविश्वेदेवाद्यावापृथिवीदेवताः, (व्रीहिमयः) चरुर्हविः, अग्निः स्विष्टकृत्" इत्यादि सङ्कल्प्याऽन्वाधायाऽऽप्रणीताभ्यः कृत्वा तण्डुलान्निर्वपति—'देवस्य त्वा० हस्ताभ्यामिन्द्राग्निभ्यां जुष्टं निर्वपामि, देवस्य त्वा० विश्वेभ्यो देवेभ्यः०, देवस्य त्वा० द्यावापृथिवीभ्यां० निर्वपामि' इति निरुप्य 'देवस्य त्वा० इन्द्राग्निभ्यां वो जुष्टं प्रोक्षामि विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां' इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य तण्डुलान् त्रिः प्रक्षाळ्य चरुस्थाल्यां तिरःपवित्रमप आनीयाऽग्नावधिश्रित्य तिरःपवित्रं तण्डुलानोप्य श्रपयति ॥ अथाऽऽज्यनिर्वापाद्यग्निमुखान्तेऽथैतं चरुं त्रेधा विभज्य "इन्द्राग्निभ्यां त्वा, विश्वेभ्यो देवेभ्यस्त्वा, द्यावापृथिवीभ्यां त्वा" इत्युदगपवर्गमभिमृश्यावदानधर्मेण पक्वत्रयं जुहोति — ॐ इन्द्राग्नी रोचना दिवः परिवाजेषु भूषथः । तद्वां चेति प्रवीर्यं॥ श्नथद्वृत्रमुत सनोति वाजमिन्द्रायो अग्नी सहुरी सपर्यात् । इरज्यन्ता

वसव्यस्य भूरेस्सहस्तमा सहसा वाजयन्ता स्वाहा ॥ इन्द्राग्निभ्यामिदं० ॥ ॐ विश्वेदेवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयोँ३ विश्वे देवाः शृणुतेमꣳ हवम्मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्याऽस्मिन्बर्हिषि मादयध्वꣳ स्वाहा ॥ विश्वेभ्यो देवेभ्य इदं० ॥ ॐ द्यावा नः पृथिवी इमꣳ सिध्रमद्य दिवि स्पृशम् । यज्ञं देवेषु यच्छतोँ३ प्रपूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वꣳ सदने ऋतस्य । आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथꣳ स्वाहा ॥ द्यावापृथिवीभ्यामिदं० " ॥ इति पक्वत्रयं हुत्वा स्विष्टकृतमवदायाऽन्तःपरिधौ निधायाऽज्याहुतीरुपजुहोति—" ॐ शतायुधाय० विश्वा स्वाहा ॥ इन्द्रायेदं० ॥ ॐ ये चत्वारः० सर्वे स्वाहा ॥ देवेभ्य इदं० ॥ ॐ ग्रीष्मो हेमन्तः० स्याम स्वाहा ॥ ग्रीष्महेमन्तवसन्तशरद्वर्षाभ्य इदं० ॥ ॐ इदुवत्सराय० स्याम स्वाहा ॥ इदुवत्सरपरिवत्सरसंवत्सरेभ्य इदं० ॥ ॐ भद्रान्नः० स्योनः स्वाहा ॥ देवेभ्य इदं० " ॥ स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा हविश्शेषं प्राश्नाति — " ॐ भद्रान्नः श्रेयः० स्योनः" इति ॥ अथोत्तरपरिषेकादि कर्मशेषं समाप्याऽचार्याय गां दत्वा दशावरान्ब्राह्मणान्भोजयेत् ॥ इति व्रीह्याग्रयणस्थालीपाकः ॥

अथ वसन्ते यवाग्रयणस्थालीपाकं कुर्यात् ॥ तत्र विशेषः—पचनो नामाऽग्निः, इन्द्राग्नीविश्वेदेवाद्यावापृथिवीदेवताः' यवमयश्चरुर्हविः, इत्यादि समानं यथा व्रीह्याग्रयणस्य ॥ तत्र प्राशनमन्त्रः—" एतमुत्यं मधुना संयुतं यवम् । सरस्वत्या अधिमनावचर्कृषुः ॥ इन्द्र आसीत्सीरपतिः शतक्रतुः । कीनाशा असन्मरुतः सुदानवः " इति ॥ आचार्याय गां दत्वा दशावरान्ब्राह्मणान् भोजयेत् ॥ इति यवाग्रयणस्थालीपाकः ॥

एवमेव वर्षर्तौ श्यामाकाग्रयणस्थालीपाकः ॥ तत्र विशेषः— 'सोमः प्रीयताम्' इति पुण्याहं वाचयित्वा ॥ पचनो नामाऽग्निः, सोमो देवता, ( श्यामाकः पयसि ) चरुर्हविः, अग्निः स्विष्टकृत्, इत्यादि समानमाग्निमुखात् ॥ 'सोमाय त्वा' इति चरुमभिमृश्य पक्वाज्जुहोति— "ॐ आप्यायस्व० सङ्गथो ३ सन्ते० धिष्व स्वाहा" ॥ सोमायेदं० ॥ स्विष्टकृतमवदायान्तःपरिधौ निधाय पञ्चाज्यानीरुपहुत्य स्विष्टकृत्प्रभृति सिद्धमत ऊर्ध्वम् ॥ प्राशनमन्त्रस्तु—"अग्निः प्रथमः प्राश्नातु । स हि वेद यथा हविः ॥ शिवा अस्मभ्यमोषधीः । कृणोतु विश्वचर्षणिः" इति ॥ आचार्याय वासो दत्वा दशावरान् ब्राह्मणान् भोजयेत् ॥ इत्याग्रयणस्थालीपाकप्रयोगः ॥

अशक्तौ नूतनश्यामाकान् गवे दत्वा तस्याः क्षीरेण सायंप्रातरौपासनहोमौ होतव्यौ । तेनैव तत्सिद्धिः । व्रीह्याग्रयण-स्थालीपाककरणाऽशक्तौ नवैर्व्रीहिभिरेव पार्वणस्थालीपाकौ कार्यौ । अथवा नवान्व्रीहीन् गवे दत्वा तस्याः क्षीरेण सायंप्रातरौपासन-होमौ होतव्यौ ॥ अनुकल्पान्तरमप्याह मण्डनः— "गृह्ये बोधायनेनोक्तं नवेष्टिश्चेन्न सम्भवेत् । ब्राह्मणे भोजनं दद्यात्कुर्याद्वा वैश्वदेविकम्" इति ॥ इदञ्च सूत्रोक्ताऽनुकल्पाऽसम्भवे ज्ञेयम् । आग्रयणं मलमासाऽस्तादिषु न भवति । शुद्धकालस्य सम्भवात् । पुरातनधान्याऽभावे त्वत्राऽपि भवति । यदि दैवान्मानुषाद्वा प्रतिबन्धाच्छरत्काल आग्रयणं न जायेत तदा हेमन्ते शिशिरे वाऽती-तमाग्रयणं कुर्यात् ॥

## ॥ अथ प्रत्यवरोहणम् ॥

( बो. गृ. सू. २. १० ) "वसन्तादौ— 'मधुश्च माधवश्च' इति हुत्वा वासन्तिकैरलङ्कारैरलङ्कृत्य वासन्तिकान्यन्नानि

ब्राह्मणेभ्यो दत्वाऽन्नशेषान्सगणः प्राश्नाति ॥ अथ ग्रीष्मादौ— 'शुक्रश्च शुचिश्च' इति हुत्वा ग्रैष्मिकैरलङ्कारैरलङ्कृत्य ग्रैष्मिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान्सगणः प्राश्नाति ॥ अथ वर्षादौ— 'नभश्च नभस्यश्च' इति हुत्वा वार्षिकैरलङ्कारैरलङ्कृत्य वार्षिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान्सगणः प्राश्नाति ॥ अथ शरदादौ—'इषश्चोर्जश्च' इति हुत्वा शारदिकैरलङ्कारैरलङ्कृत्य शारदिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान्सगणः प्राश्नाति । अथ हेमन्तादौ— 'सहश्च सहस्यश्च' इति हुत्वा हैमन्तिकैरलङ्कारैरलङ्कृत्य हैमन्तिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान्सगणः प्राश्नाति । अथ शिशिरादौ— 'तपश्च तपस्यश्च' इति हुत्वा शैशिरिकैरलङ्कारैरलङ्कृत्य शैशिरिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान्सगणः प्राश्नाति ॥ अथाधिमासे— 'सꣳ सर्पोऽस्यꣳहस्पत्याय त्वा' इति हुत्वा चैत्रिकैरलङ्कारैरलङ्कृत्य चैत्रिकान्यन्नानि ब्राह्मणेभ्यो दत्वाऽन्नशेषान्सगणः प्राश्नाति । स एष आधारवान्वा स्यादाग्निहोत्रिको वाऽप्यापूर्विको वा" ॥

अथ प्रयोगः ॥ वसन्तादौ ( चैत्रशुक्लप्रतिपदि ) कर्ता सपत्नीकः कृतस्नानादिचतुष्टयो गणपतिं सम्पूज्य 'सविता प्रीयताम्' इति पुण्याहं वाचयित्वा देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, देशकालौ सङ्कीर्त्य मम समस्तजरारोगनिवारणद्वारा श्रीपरमेश्वरप्रीत्यर्थं वासन्तिकं प्रत्यवरोहणं करिष्ये, प्रत्यवरोहणहोमः कर्म, पचनो नामाऽग्निः, सविता देवता, चरुर्हविः, अग्निः स्विष्टकृत, इत्यादि सङ्कल्प्याऽग्निमुखान्ते सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽज्याहुती उपजुहोति— "मधुश्च स्वाहा ॥ मधव इदं० ॥ माधवश्च स्वाहा ॥ माधवायेदं०" इति हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथ वसन्तोद्भवैः पुष्पादिभिरलङ्कृत्य कालोद्भवफलपक्वादीनि ब्राह्मणेभ्यो दत्वा हविश्शेषान्त्सगणः प्राश्नीयात् ॥ ॥ ग्रीष्मादौ ( ज्येष्ठशुक्लप्रतिपदि )

ग्रैष्मं प्रत्यवरोहणं कुर्यात् ॥ तत्र विशेषः — " शुक्रश्च स्वाहा ॥ शुक्रायेदं० ॥ शुचिश्च स्वाहा ॥ शुचय इदं० " इति ॥ अथ ग्रैष्मोद्भवैः पुष्पादिभिरलङ्कृत्य कालोद्भवफलपक्वादीनि ब्राह्मणेभ्यो दत्वा हविश्शेषान्सगणः प्राश्नीयात् ॥ ॥ वर्षादौ ( श्रावणशुक्लप्रतिपदि ) वार्षिकं प्रत्यवरोहणं कुर्यात् ॥ तत्र विशेषः— " नभश्च स्वाहा ॥ नभस इदं० ॥ नभस्यश्च स्वाहा ॥ नभस्यायेदं० " इति ॥ अथ वर्षोद्भवैः पुष्पादिभिरलङ्कृत्य कालोद्भवफलपक्वादीनि ब्राह्मणेभ्यो दत्वा हविश्शेषान्सगणः प्राश्नीयात् ॥ ॥ शरदादौ ( आश्विनशुक्लप्रतिपदि ) शारदिकप्रत्यवरोहणं कुर्यात् ॥ तत्र विशेषः — " इषश्च स्वाहा ॥ इषायेदं० । ऊर्जश्च स्वाहा ॥ ऊर्जायेदं० " इति ॥ अथ शारदिकैः पुष्पादिभिरलङ्कृत्य कालोद्भवफलपक्वादीनि ब्राह्मणेभ्यो दत्वा हुतशेषान्सगणः प्राश्नीयात् ॥ ॥ अथ हेमन्ते ( मार्गशीर्षशुक्लप्रतिपदि ) हैमन्तिकप्रत्यवरोहणं कुर्यात् ॥ तत्र विशेषः – सहश्च स्वाहा ॥ सहायेदं० ॥ सहस्यश्च स्वाहा ॥ सहस्यायेदं० " इति ॥ अथ हेमन्तोद्भवैः पुष्पादिभिरलङ्कृत्य कालोद्भवफलपक्वादीनि ब्राह्मणेभ्यो दत्वा हुतशेषान्सगणः प्राश्नीयात् ॥ ॥ अथ शिशिरे ( माघशुक्लप्रतिपदि ) शैशिरिकप्रत्यवरोहणं कुर्यात् ॥ तत्र विशेषः – " तपश्च स्वाहा ॥ तपायेदं० ॥ तपस्यश्च स्वाहा ॥ तपस्यायेदं० " इति ॥ अथ शिशिरोद्भवैः पुष्पादिभिरलङ्कृत्य कालोद्भवफलपक्वादीनि ब्राह्मणेभ्यो दत्वा हुतशेषान्सगणः प्राश्नीयात् ॥ ॥ अधिमासे ( शुक्लप्रतिपदि ) अधिमासप्रत्यवरोहणं कुर्यात् ॥ तत्र विशेषः — " सꣳसर्पोऽस्यꣳहस्पत्याय त्वा स्वाहा ॥ सꣳसर्पायाꣳऽहस्पत्यायेदं० " इति ॥ अथ चैत्रिकैः पुष्पादिभिरलङ्कृत्य चैत्रिकान्यन्नानि ब्राह्मणेभ्यो दत्वा हुतशेषान्सगणः प्राश्नीयात् ॥

## ॥ नक्षत्रहोमः ॥

( बो. गृ. शे. सू. १. १३ ) " अथ संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु ऋतावृतौ मासि मासि वा कुमारस्य जन्मनक्षत्रे क्रियेत। ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धि' मिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति— 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम्। अथ नक्षत्रदेवताभ्यो जुहोति यथानक्षत्रम्। 'अनु नोऽद्यानुमतिः, अन्विदनुमते' इति तृतीयम्। अथाज्याहुतीरुपजुहोति नक्षत्रदेवताभ्यो यथानक्षत्रम्। 'चन्द्रमसे स्वाहा, प्रतीद्दश्यायै० अहोरात्रेभ्यः०, अर्धमासेभ्यः०, मासेभ्यः०' इति मासिमासि। 'ऋतुभ्यः स्वाहा' इत्यृतावृतौ। 'संवत्सराय स्वाहा' इति संवत्सरे। स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात्॥ अन्नशेषं सगणः प्राश्नाति। अथ संवत्सरे पर्यवेते प्रसिद्धमाग्निमुखात्कृत्वा पक्वाज्जुहोत्याग्नेयं प्रधानदेवत्यम्। यथानक्षत्रं द्वितीयम्। 'अनु नोऽद्यानुमतिरन्विदनुमते त्वम्' इति तृतीयम्। 'नवोनवो भवति जायमानो, यमादित्या अꣳशुमाप्याययन्ति' इत्यान्तादनुवाकस्य। अथ पूर्ववदाज्याहुतीरुपजुहोति नक्षत्रदेवताभ्यो यथानक्षत्रम्। 'चन्द्रमसे स्वाहा। प्रतीद्दश्यायै स्वाहा' इत्येतैः स्वाहाकारैरान्तादनुवाकस्य। स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात्। नक्षत्रहोमो व्याख्यातः" ॥ संग्रहे—" जन्मनक्षत्रघटिकासंगवस्पृग्यदा भवेत् ॥ वृद्धौ षण्नाडिकाः प्रोक्ताः क्षये तिस्रः समे चतुः" ॥

नक्षत्रहोमः ॥ संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु ऋतावृतौ मासि मासि वा कुमारस्य जन्मनक्षत्रे — कर्ता सपत्नीकः कुमारेण सहोपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " मम कुमारकस्य आयुष्याभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नक्षत्रहोमं करिष्ये" इति सङ्कल्प्य गणपतिं सम्पूज्य 'अग्निः अग्निः[1] कृत्तिकाः अनुमतिश्च प्रीयन्ताम्' इति पुण्याहं वाचयित्वा

---

१. जन्मनक्षत्रस्थाने कृत्तिकानक्षत्रमाश्रित्य प्रयोगो लिखितः। रोहिण्यादिषु यथायथं 'प्रजापती रोहिणी' इत्याद्यूह्यम् ॥

देवयजनोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य बलवर्धनो नामाऽग्निः, अग्निः अग्निः कृत्तिकाः, ( प्रजापती रोहिणी, सोमो मृगशीर्षः, रुद्र आर्द्रा, अदितिः पुनर्वसू , बृहस्पतिस्तिष्यः, सर्पा आश्रेषाः, पितरो मघाः, अर्यमा फल्गुनी, भगः फल्गुनी, सविता हस्तः, त्वष्टा चित्रा, वायुर्निष्ट्या, इन्द्राग्नी विशाखे, मित्रोऽनूराधः, इन्द्रो ज्येष्ठा, प्रजापतिर्मूलं, आपोऽषाढाः, विश्वेदेवा अषाढाः, विष्णुः श्रोणा, वसवः श्रविष्ठाः, वरुणः शतभिषक्, अज एकपात्प्रोष्ठपदाः, अहिर्बुध्नियः प्रोष्ठपदाः, पूषा रेवती, अश्विनावश्वयुजौ, यमोऽपभरणीः, इत्येतासु नक्षत्रदेवतासु अग्न्यनुमत्योर्मध्ये कुमारकस्य नक्षत्रदेवता ग्राह्या ) अनुमतिश्च देवताः, चरुर्हविः, अग्निस्स्विष्टकृत् ' इत्यादि सङ्कल्प्यान्वाधाय निर्वापे 'देवस्य त्वा० अग्नये जुष्टं निर्वपामि० अग्नये कृत्तिकाभ्यः ० अनुमत्यै० ' इति निरुप्य प्रोक्षणाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति—'अग्निर्मूर्धा०, भुवो यज्ञस्य०' इति द्वाभ्याम् ॥ अग्नय इदं० ॥ 'अग्निर्नः पातु०, यस्य भान्ति० ' इति द्वाभ्याम् ॥ अग्नये कृत्तिकाभ्य इदं० ॥ ' अनु नोऽद्यानुमतिः०, अन्विदनुमते०' इति द्वाभ्याम् ॥ अनुमत्या इदं० ॥ इति ॥ ततः स्विष्टकृतमवदायान्तःपरिधि सादयित्वाऽऽज्याहुतीरुपजुहोति—" अग्नये स्वाहा ॥ कृतिकाभ्यः० ॥ अम्बायै० ॥ दुलायै० ॥ नितत्न्यै० ॥ अभ्रयन्त्यै० ॥ मेघयन्त्यै० ॥ वर्षयन्त्यै० ॥ चुपुणीकायै० " इति ॥ ( यथालिङ्गं त्यागः ) ॥

मासिमासि करणपक्षे—नक्षत्रदेवताभ्य उपहुत्य " चन्द्रमसे स्वाहा ॥ प्रतीदृश्यायै० ॥ अहोरात्रेभ्यः० ॥ अर्धमासेभ्यः० ॥ मासेभ्यः० " इति ॥ ( यथालिङ्गं त्यागः ) इति जुहुयात् ॥ ऋतावृतौ करणपक्षे— पूर्ववदुपहुत्य ' ऋतुभ्यः स्वाहा ' ॥ ऋतुभ्य इदं० ॥ इति च जुहुयात् ॥ संवत्सरे संवत्सरे करणपक्षे- पूर्ववध्दुत्वा ' संवत्सराय स्वाहा ' ॥ संवत्सरायेदं० ॥ इति जुहुयात् ॥ संवत्सरान्ते—वक्ष्यमाणदशप्रधानदेवता उद्दिश्य होमः कार्यः ॥ अग्निः, अग्निः कृत्तिकाः ( जन्मनक्षत्रदेवता ), चन्द्रमाः प्रतीदृश्या, अहोरात्रे,

उषाः, नक्षत्रं, सूर्यो नक्षत्राणि, अदितिः, विष्णुः, अनुमतिः, इति दशप्रधानदेवताः॥ तेषां पक्षमन्त्राः—'अग्निर्मूर्धा०, भुवो यज्ञस्य०' इत्यग्नेः। 'अग्निर्नः पातु कृत्तिकाः०, यस्य भान्ति०' इत्यग्नेः कृत्तिकानाम्। 'नवोनवः०, यमादित्या०' इति चन्द्रमसः प्रतीहृश्यायाः। 'ये विरूपे०, वयं देवी०' इत्यहोरात्रयोः। 'प्रत्युवहृश्या०, उदुस्त्रियाः०' इत्युषसः। 'तन्नो नक्षत्रं०, प्रनक्षत्राय०' इति नक्षत्रस्य। 'उदु त्यं०, चित्रं देवानां०' इति सूर्यस्य नक्षत्राणाम्। 'अदितिर्नः०, महीमूषु०' इत्यदित्याः। 'इदं विष्णुः०, प्र तद्विष्णुः०' इति विष्णोः। 'अनु नो द्याऽनुमतिः०, अन्विदनुमते त्वं०' इत्यनुमत्याः॥ उपहोमेऽपि—'अग्नये स्वाहा, कृतिकाभ्यः स्वाहा' इत्यादि स्वनक्षत्रदेवताभ्यो हुत्वा, 'चन्द्रमसे स्वाहा, प्रतीहृश्यायै स्वाहा' इत्यादि 'प्रतिष्ठायै स्वाहा' इत्यन्तैस्त्रयस्त्रिंशन्मन्त्रैर्जुहुयात्॥ ततः स्विष्टकृदादि होमशेषं समाप्य अन्नशेषं सगणः प्राश्नाति। ततो ब्राह्मणान्सम्पूज्य साङ्गतासिध्यर्थं हिरण्यं वासश्च दत्वा यावच्छक्ति ब्राह्मणान् संभोज्याऽऽशिषो गृह्णीयात्॥ ॥

## ॥ अथ शूलगवः ॥

( बो. गृ. सू. २·७ ) "अथ शूलगवः संवत्सरे संवत्सरे मार्गशीर्ष्यां पौर्णमास्यां क्रियेत। अपि वाऽऽर्द्रायाम्। गोषु वोपतप्तासु गोषु गुप्तासु। अरण्येऽग्निमुपसमाधाय सम्परिस्तीर्याप्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति— 'ईशानाय त्वा जुष्टामुपाकरोमि' इति। तूष्णीमित्येके। अथैनामद्भिः प्रोक्षति—'ईशानाय त्वा जुष्टां प्रोक्षामि' इति। तूष्णीमित्येके। तामत्रैव प्रतीचीनशिरसीमुदीचीनपदीं संज्ञपयन्ति। तस्यै संज्ञप्ताया अद्भिरभिषेकम्। प्राणानाप्याययति तूष्णीम्॥ तूष्णीं वपामुत्खिद्य हृदयमुद्धरति।

प्रज्ञातानि चावदानानि। तान्येतेष्वेव शूलेषूपनिक्षिप्य तस्मिन्नेवाग्नौ श्रपयन्ति। अथैतानि शूलेभ्य उपनिक्षिप्य पुनः कुम्भ्यां श्रपयन्ति। अथैतान्यभिघारितान्युद्वास्य प्रतिष्ठितमभिघारयति। परिधानप्रभृत्याग्निमुखात्कृत्वा दैवतमावाहयति— 'आ त्वा वहन्तु० शर्वाम्' इति। अथ स्रुवेणोपस्तीर्णां अभिघारितां वपां जुहोति—'सहस्राणि सहस्रशः' इति पुरोनुवाक्यामनूच्य 'ईशानं त्वा भुवनानामभिश्रियम्' इति याज्यया जुहोति। अत्रैतान्यवदानानीडासूने प्रच्छिद्यौदनं मांसं यूषमित्याज्येन समुदायुत्य मेक्षणेनोपघातं पूर्वार्धे जुहोति—'भवाय देवाय स्वाहा, शर्वाय०, ईशानाय०, पशुपतये०, रुद्राय०, उग्राय०, भीमाय०, महते०' इति। अथ मध्ये जुहोति—'भवस्य देवस्य पत्न्यै०' (इत्याद्यष्टभिः)। अथापरार्धे जुहोति—'भवस्य देवस्य सुताय०' (इत्याद्यष्टभिः)। अथाज्याहुतीरुपजुहोति—'नमस्ते रुद्र मन्यवे' इत्यान्तादनुवाकस्य। स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात्। अथाग्रेणाग्निमर्कपर्णेषु हुतशेषं निदधाति—'यो रुद्रो अग्नौ० अस्तु' इति। स्थालीसंक्षालनमाज्यशेषमुदकशेषं च पात्र्यां समानीय वेतसशाखयाऽवोक्षन् सर्वतस्त्रिः प्रदक्षिणं गाः पर्येति—'आ गावो अग्मन्' इत्येतेन सूक्तेन। महत्स्वस्त्ययनमित्याचक्षते। अथ यदि गां न लभते मेषमजं वाऽऽलभते। ईशानाय स्थालीपाकं वा श्रपयन्ति तस्मादेतत्सर्वं करोति यद्गवा कार्यम्। शूलगवो व्याख्यातः। एवमेवाष्टम्यां प्रदोषे क्रियेतैतावदेव नाना। नात्रोपाकरणं पशोः" ॥

अथ प्रयोगः ॥ संवत्सरे संवत्सरे मार्गशीर्षस्य पौर्णमास्यां सम्मार्जनोपलेपनतोरणादिभिर्गृहमलङ्कृत्य पत्नीपुत्रादिभिः सह स्नात्वाऽहतं वासः परिधाय सन्ध्योपासनादि नित्यकर्म निर्वर्त्य गृह्याग्नेः पश्चाद्दर्भेषूपविश्य दर्भान्धारयमाण आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं शूलगवप्रतिनिधिभूतमीशानस्थालीपाकं करिष्ये, इति सङ्कल्प्य।

गणपतिपूजनं 'ईशानः प्रीयताम्' इति पुण्याहवाचनञ्च कृत्वा। समित्त्रयमादाय देशकालौ सङ्कीर्त्य० शूलगवप्रतिनिधिभूतमीशानस्थालीपाकहोमं करिष्ये, ईशानस्थालीपाकहोमः कर्म, ० पचनो नामाऽग्निः, ईशानो देवता, चरुर्हविः, अग्निः स्विष्टकृत्, इत्याद्यन्वाधाय निर्वापकाले 'देवस्य त्वा० ईशानाय जुष्टं निर्वपामि' इति निरुप्य, तण्डुलप्रोक्षणाद्यग्निमुखान्तं कृत्वा, स्थण्डिलस्येशानदिग्भागे अष्टदलपद्मं विलिख्य तदुपरि तण्डुलैः स्थण्डिलं कृत्वा 'मही द्यौः' इत्यादिविधिना कलशं प्रतिष्ठाप्य वरुणमावाह्य षोडशोपचारैः सम्पूज्य, उपोत्थाय गन्धपुष्पाक्षतानञ्जलौ गृहीत्वा देवतामावाहयति— "ॐ आ त्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः। वाताजवैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोमीशानं सपत्नीकं ससुतं सगणं सपार्षत्कमावाहयामि" इति॥ अथ स्वागतेनाऽभिनन्दयति—"स्वागतमधुना भगवत ईशानस्य सपत्नीकस्य ससुतस्य सगणस्य सपार्षत्कस्य"॥ अथासनं ददाति — "भगवत ईशानाय सपत्नीकाय ससुताय सगणाय सपार्षत्कायैतदासनमुपक्लृप्तमत्रास्तां भगवानीशानः सपत्नीकः ससुतः सगणः सपार्षत्कः" इति॥ अथ कूर्चं ददाति—"भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णमयस्तं जुषस्व' इति 'प्रतिगृह्णातु भगवानीशानः० सपार्षत्कः' इति॥ एवमेव पाद्याऽर्घ्यादिभिरुपचारैर्यथोपपादमभ्यर्चयेत्॥ ततः पत्नीपुत्रादिभिर्गृह्यैरन्वारब्धः अवदानधर्मेण पक्वस्यावदाय— "ॐ सहस्राणि सहस्रशः० तन्मसो३ (इति पुरोनुवाक्यामनूच्य) मीशानन्त्वा भुवनानामभिश्रियꣳ स्तौम्यग्न उरुकृतꣳ सुवीरम्। हविर्जुषाणः सपत्नाꣳ अभिभूरसि जहि शत्रूꣳरपमृधो नुदस्व स्वाहा" इति याज्यया जुहोति॥ ईशानायेदं०॥ अथ पक्वावशिष्टं चरुं मेक्षणेनोपहत्य जुहोति — "भवाय देवाय स्वाहा। शर्वाय देवाय०। ईशानाय०। पशुपतये०। रुद्राय०। उग्राय०। भीमाय०। महते०" इति॥ तथा मध्ये जुहोति—"भवस्य देवस्य पत्न्यै

स्वाहा। शर्वस्य देवस्य०। ईशानस्य देवस्य०। पशुपतेर्देवस्य०। रुद्रस्य देवस्य०। उग्रस्य देवस्य०। भीमस्य देवस्य०। महतो देवस्य०" इति ॥ तथैवाऽपरार्धे जुहोति—"भवस्य देवस्य सुताय स्वाहा। शर्वस्य देवस्य०। ईशानस्य देवस्य०। पशुपतेर्देवस्य०। रुद्रस्य देवस्य०। उग्रस्य देवस्य०। भीमस्य देवस्य०। महतो देवस्य०" इति ॥ सर्वत्र यथालिङ्गं त्यागः ॥ स्विष्टकृतमवदायाऽन्तः-परिधौ निधायाऽज्याहुतीरुपजुहोति— "नमस्ते रुद्रमन्यवे" इत्यान्तादनुवाकस्य प्रत्यृचम् ॥ सर्वत्र रुद्रायेदं० इति त्यागः ॥ स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निमर्कपर्णेषु हुतशेषं निदधाति — 'यो रुद्रो अग्नौ० नमो अस्तु' इति ॥ अथोत्तर-परिषेकादि होमशेषं समाप्य स्थालीसङ्क्षालनमाज्यशेषमुदकशेषञ्च पात्र्यां समानीय वेतसशाखया सर्वतः प्रोक्षन्गोष्ठं त्रिः प्रदक्षिणं पर्येति — 'आ गावो अग्मन्नुत भद्रमक्रन्' इत्येतेन सूक्तेन ॥ आवाहितमीशानं पुनः सम्पूज्य रौद्रीभिर्ऋग्यजुःसामाऽथर्वभिः स्तुतिभिस्स्तुन्वन्त्यार्षैः स्तोत्रैश्च ॥ ततः 'प्रयातु भगवानीशानः सपत्नीकः ससुतः सगणः सपार्षत्कः'॥ "ईशानः सर्वलोकानां सर्वलोकनमस्कृतः। अनेन हविषा तृप्तः पुनरागमनं प्रति" इत्युद्वास्य कलशं सोपस्करं आचार्याय दद्यात् ॥ ततः कर्मेश्वराय समर्प्य यथाशक्ति ब्राह्मणान्सम्भोज्य भूयसीं दद्यात् ॥ महत्स्वस्त्ययनमित्याचक्षते ॥ ॥ इति शूलगवः ॥

## ॥ अथाष्टकाहोमः ॥

(बो. गृ. सू. २. ११) "तैषे मास्यपरपक्षस्याष्टम्यां क्रियेत। एवं माघ एवं फाल्गुने यदि विहृतः। यद्यु वै समस्त उपरिष्टान्माघ्याः पौर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यामिति क्रियेतापि वाऽष्टम्यामेव। श्वः करिष्यामीति ब्राह्मणान्निमन्त्रयते।

योनिगोत्रश्रुतवृत्तसंपन्नानसम्बन्धानित्येके । कामं सम्बन्धानपि श्रुतवृत्तसम्पन्नान् 'श्रुतवृत्तयोर्हि स्वधा निधीयते' इत्युपदिशन्ति । तान् श्वोभूते श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं सम्पूज्य स्वयमाप्लुत्य शुचौ समे देशे देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा बर्हिरादाय गामुपाकरोति— 'पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमि' इति । तूष्णीमित्येके । अथैनामद्भिः प्रोक्षति— 'पितृभ्यस्त्वा० प्रोक्षामि' इति । तूष्णीमित्येके । तामत्रैव प्रतीचीनशिरसीं दक्षिणापदीं संज्ञपयन्ति । तस्यै संज्ञप्ताया अद्भिरभिषेकम् । प्राणानाप्याययति तूष्णीम् । तूष्णीं वपामुत्खिद्य हृदयमुद्धरति । प्रज्ञातानि चावदानानि । तान्येतेष्वेव शूलेषूप-निक्षिप्यैतस्मिन्नेवाग्नौ श्रपयन्ति । पृथङ्मांसं चोदनं चापूपांश्च श्रपयन्त्यन्यांश्च भक्ष्यविशेषान्त्सर्वं सिद्धं समानीयायुग्मान्ब्राह्मणान् सुप्रक्षाळितपाणिपादानप आचमय्य सदर्भोपक्लृप्तेष्वासनेषु द्वौ दैवे त्रीन्पित्र्ये एकैकमुभयत्र वा प्राङ्मुखानुपवेशयत्युद-ङ्मुखान् वा । स यदि प्राङ्मुखान् दक्षिणापवर्गः । यद्युदङ्मुखान् प्रागपवर्गः । तेषामेवोदकं निनीय सप्रणवेन क्षणं ग्राहयति— अष्टकाश्राद्धे क्षणः क्रियतामित्योंतथेति प्रतिवचनम् । 'प्राप्नोतु भवान्, प्राप्नोतु भवान्' इति । 'प्राप्नवानि, प्राप्नवानि' इतीतरे प्रत्याहुः । अथैनान् तिलमिश्रा अपः प्रतिग्राहयति— 'अमुष्मै स्वधा नमोऽमुष्मै स्वधा नमः' इति । त्रिस्तिलोदकमेके समामनन्ति । पुरोऽन्नं द्विस्तिलोदकं दद्यात् भुक्तवत्सु च तृतीयमिति । अथैनान्वस्त्र-गन्धपुष्पधूपदीपमाल्यैर्यथोपपादं सम्पूज्य पृच्छति— 'उध्द्रियतामग्नौ च क्रियताम्' 'काममुध्द्रियतां काममग्नौ च क्रियताम्' इतीतरे प्रत्याहुः । अपि वा— 'अग्नौ करिष्यामि' इति, 'कुरुष्व' इतीतरे प्रत्याहुः ॥ अथाभ्यनुज्ञातः परिधान-प्रभृत्याग्निमुखात्कृत्वा शृतायां वपायां पञ्च स्रुवाहुतीर्जुहोति— 'याः प्राचीः०' इति । त्रेधा वपां विच्छिद्यौदुम्बर्या

दर्व्या जुहोति— 'सोमाय पितृमते०, अङ्गिरस्वन्तमूतये०, यदग्ने कव्यवाहन०' इति (तिसृभिः)। अथाष्टकाहोमं जुहोति— 'इयमेव सा या प्रथमा व्यौच्छत्' इति पञ्चदश, 'ईयुष्टे ये पूर्वतरामपश्यन्' इत्येकां, 'संवत्सरस्य प्रतिमाम्' इत्येकां, ताः सप्तदश। अथापूपमष्टधा विच्छिद्य त्रीण्यवदानानि वपायाः कल्पेन हुत्वाऽथेतराणि ब्राह्मणेभ्यो दत्वाऽत्रैतान्यवदानानीडासूने प्रतिच्छाद्यौदनं मांसं यूषमित्याज्येन समुदायुत्यौदुम्बर्या दर्व्योपघातं दक्षिणार्धे जुहोति— "पितृभ्यः स्वधा नमः स्वाहा०" इति॥ (चतुर्विंशतिभिः)॥ 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा' इति दक्षिणार्धपूर्वार्धे। मांसौदनं पात्रेषूद्धृत्य विशेषानुपनिक्षिप्य हुतशेषेण संसृज्य दक्षिणाग्रेषु दर्भेषु सादयित्वा दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्याभिमृशति—'पृथिवी ते पात्रं०' इति। अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य ब्राह्मणानामङ्गुष्ठेनाऽनखेनानुदिशति —'अमुष्मै स्वधा नमोऽमुष्मै स्वधा नमः" इति। भुञ्जानान्समीक्षते—'प्राणे निविष्टोऽमृतं जुहोमि' इति पञ्चभिः। 'ब्रह्मणि म आत्माऽमृतत्वाय' इत्यात्मानम्। न चात ऊर्ध्वं निरीक्षते— 'ह्रीका हि पितरः' इति विज्ञायते। सर्वैः कामैस्तर्पयन्स्वधायुक्तानि ब्रह्माण्यभिश्रावयन् राक्षोघ्नानि च नैर्ऋतानि च तृप्यन्ते तृप्ताः स्थेत्युक्त्वा तृप्ताः स्म इति प्रतिवचनम्। तृप्तानप आचमय्याशयेष्वन्नशेषान्संप्रकिरति— 'ये अग्निदग्धा जाता जीवा०' इति। अथैनान्संक्षालनेन विषिञ्चन्नवकीर्य 'स्वदितम्' इति वाचयित्वा दक्षिणाभिराराधयति। सुवर्णहिरण्यप्राणिवस्त्रलोहभूमिभाण्डैर्गवाश्वाजाविकहस्तिदासपुरुषव्रीहियवमाषतिलदण्डोपानच्छत्रकमण्डलुयानासनशयनोपधानैः सर्वोपकरणैर्यथोपपादं सम्पूज्याक्षय्यं वाचयित्वोपसंगृह्य स्वधां वाचयित्वोत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्यान्नशेषान्निवेदयते। यथा ब्रूयुस्तथा कुर्यात्तैस्त्वभ्यनुज्ञेयम्॥ अथाऽभ्यनुज्ञातो दक्षिणेनाग्निं दक्षिणाग्रान्दर्भान्सं-

स्तीर्य तेष्वन्नशेषैः पिण्डं ददाति—' पितृभ्यः स्वधा नमः ' इति चतुर्विंशतिः ॥ अथैनान्संक्षाळनेन त्रिरपसलैः परिषिञ्चति—' ऊर्जं-वहन्तीः०' इति ॥ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ॥ आचमने चाग्निमुखे चाभिश्रावणे चोपसंग्रहणे च पश्चाद्धोमेषु च यज्ञोपवीतम् । अथेतरत्र प्राचीनावीतम् । एवमेव श्वोभूते मांसशेषेणैवमेव श्वोभूते यदि त्र्यहम् । अथ यदि गां न लभते मेषमजं वा लभते । आरण्येन वा मांसेन यथोपपन्नेन खड्गमृगमहिषमेषवराहपृषतशशरोहितशार्ङ्गतित्तिरिकपोतकपिञ्जलवार्ध्राणसानामक्षय्यं तिलमधुसंसृष्टम् ॥ तथा मत्स्यस्य शतवलैः क्षीरोदनेन वा सूपोदनेन वा । यद्वा भवत्यामैर्वा मूलफलैः प्रदानमात्रम् । हिरण्येन वा प्रदानमात्रम् । अपि वा गोग्रासमाहरेत् ॥ अपि वाऽनूचानेभ्य उदकुम्भानाहरेत् ॥ अपि वा श्राद्धमन्त्रानधीयीत । अपि वाऽरण्येऽग्निना कक्ष-मुपोषेदेषामेकाष्टकेति ॥ नत्वेवानष्टकस्स्यात् । सिकताः श्राद्धे पवित्रं यद्यध्यवसानाय यद्यन्ववकिरणाय । कुशाः कुतपो दूर्वा इति श्राद्धे पवित्रं यद्यासनाय यदि परिस्तरणाय यद्युत्पवनाय ॥ तिलाश्श्राद्धे पवित्रं यदि दानाय यदि भोजनाय यद्यपां संसर्जनाय ॥ खड्गः श्राद्धे पवित्रं यदि मांसं यद्यस्थिमयं पात्रम् । दौहित्रः श्राद्धे पवित्रं यदि भोक्ता यदि परिवेष्टा यद्यभिश्रावयिता । इत्यष्टकाहोमो व्याख्यातः ॥ एवमेव मासि श्राद्धमपरपक्षस्यान्यतमेऽहनि क्रियेत । एतावदेव नाना नात्राष्टकाहोमो भवति ॥ इत्यष्टका व्याख्याता " ॥

अष्टकाश्राद्धप्रयोगः ॥ विहृतपक्षे-पुष्यमाघफाल्गुनमासेषु अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यां च कार्यम् ॥ समस्तपक्षे-माघस्यापरपक्षे सप्तम्यामष्टम्यां नवम्यां च कार्यम् ॥ अपि वा माघस्यापरपक्षस्याष्टम्यामेव । कर्ता पूर्वेद्युः सायंहोमांते प्राचीनावीती

'श्वः अष्टकाश्राद्धं कर्तास्मि' इति मनसा संकल्प्य 'श्वः अष्टकाश्राद्धं भविता तत्र भवद्भिः प्रसादः करणीयः' इति विश्वेदेवार्थं द्वौ विप्रौ पित्रर्थं त्रीन्विप्रांश्च निमंत्र्यापरेद्युः प्रातः नित्यकर्मनिवर्तनांते 'अद्य श्राद्धं भविष्यति' इति पुनर्निमंत्र्य श्राद्धकाले पुनः स्नात्वा "मम समस्तपितृणामक्षयतृप्त्यर्थं सपिण्डं साग्नौकरणमष्टकाश्राद्धमन्नेन हविषा पार्वणविधानेन करिष्ये" इति संकल्पः। अग्नौकरणे पञ्चस्रुवाहुत्यंते "सोमाय पितृमते शुष्मिणे जुहुमो हविः। वाजिन्निदं जुषस्व नः" इत्यादि त्रिभिर्मंत्रैः पैतृकं चरुं हुत्वाऽऽज्येनाष्टकाहोमं जुहोति—"ॐ इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा। वधूर्जजान नवगज्जनित्री त्रय एनां महिमा नः सचन्ते स्वाहा॥ अेकाष्टकाया उषस इदं० इति सर्वत्र त्यागः॥ छन्दस्वती उषसा पेपिशाने समानं योनिमनु संचरन्ती। सूर्यपत्नी वि चरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा स्वाहा॥ ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषाऽऽगुः। प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाꣳ स्वाहा॥ चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती। गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराऽभरन्निदꣳ स्वाहा॥ पञ्चभिर्धाता वि दधाविदं यत् तासाꣳ स्वसॄरजनयत् पंचपंच। तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः स्वाहा॥ त्रिꣳशत् स्वसार उप यन्ति निष्कृतꣳ समानं केतुं प्रति मुञ्चमानाः। ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परि यन्ति भास्वतीः स्वाहा॥ ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि। वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा॥ एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्। तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः स्वाहा॥ अनानुजामनुजां मामकर्त

सत्यं वदन्त्यन्विच्छ एतत् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त स्वाहा ॥ अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त स्वाहा ॥ पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकꣳ स्वाहा ॥ ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नि यच्छति स्वाहा ॥ या प्रथमा व्यौच्छत् सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाꣳ स्वाहा ॥ शुक्रर्षभा नभसा ज्योतिषाऽऽगाद्विश्वरूपा शबलीरग्निकेतुः । समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आऽगाः स्वाहा ॥ ऋतूनां पत्नी प्रथमेयमाऽगादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत् स्वाहा ॥ ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान् स्वाहा ॥ संवत्सरस्य प्रतिमां यां त्वा रात्र्युपासते । प्रजाꣳ सुवीरां कृत्वा विश्वमायुर्व्यश्नवत् स्वाहा " इति ॥ ततोऽपूपं 'सोमाय पितृमते शुष्मिणे०' इति त्रिभिर्हुत्वा 'पितृभ्यः स्वधा नमः स्वाहा' इत्यादि चतुर्विंशत्यन्नाहुतीर्हुत्वा स्विष्टकृतं हुत्वा ब्राह्मणान्संभोज्य तान् सुवर्णहिरण्यवस्त्रलोह-भूमिभाण्डव्रीहियवमाषतिलदण्डोपानच्छत्रकमंडलुयानासनशय्योपबर्हणगवादिभिः यथोपपादं संपूजयेत् । पिण्डदाने — "पितृभ्यः स्वधा नमः" इत्यादि चतुर्विंशति पिण्डान्दद्यात् । अन्यत्सर्वं सांवत्सरिकश्राद्धवत् ॥ ॥ अशक्तः — आममूल-फलहिरण्योदकुंभाद्यन्यतमदानेन गोग्रासमर्पणेन वा केवलं श्राद्धमंत्रपठनेन वाऽष्टकाश्राद्धफलं प्राप्नोति । अत्यंताशक्तः— अरण्ये लौकिकाग्निमुपसमाधाय बर्हिरुपोष्य श्राद्धफलं प्राप्नुयात् । नत्वेवाऽनष्टकः स्यात् ॥ ॥

# * अथ सङ्कीर्णकाण्डम् *

## अथ मङ्गलाचरणम्

यो निर्ममे विश्वमिदं श्रुतिभ्यो निश्वासभूता निगमाश्च यस्य ।
यः कर्मिणामिष्टफलप्रदाता तस्मै नमः श्रीपरमेश्वराय ॥
बोधायनं सूत्रकृतं प्रणम्य सङ्कीर्णसंज्ञेऽत्र तृतीयकाण्डे ।
केषांचिदिष्टार्थदकाम्यकर्मणां नैमित्तिकानामपि संग्रहः कृतः ॥

## ॥ अथ विनायककल्पः ॥

( बो. गृ. शे. सू. ३·१० ) अथातो विनायककल्पं व्याख्यास्यामः — मासिमासि चतुर्थ्यां शुक्लपक्षस्य पञ्चम्यां वाऽभ्युदयादौ सिद्धिकामः ऋद्धिकामः पशुकामो वा भगवतो विनायकस्य बलिं हरेत् ॥ पूर्वेद्युः कृतैकभुक्तश्शुचिराचम्याथ देवयजनोल्लेखन-प्रभृत्याऽऽग्निमुखात्कृत्वा दक्षिणामुखं हस्तिमुखं दक्षिणतो ब्राह्मणमुपवेश्योपोत्थाय दैवतमावाहयति — ' विघ्न विघ्नेश्वरागच्छ विघ्नेत्येव नमस्कृत । अविघ्नाय भवान् सम्यक्सदाऽस्माकं भव प्रभो ' इति ॥ अथ दूर्वाक्षतसुमनोमिश्रमर्घ्यं ददाति — " इमा

आपश्शिवाश्शिवतमाश्शान्ताश्शान्ततमाः पूताः पूततमाः पुण्याः पुण्यतमा मेध्या मेध्यतमा जुष्टा जुष्टतमा अमृता अमृतरसाः पाद्या अर्घ्या अर्हणीया अभिषेचनीया आचमनीया मार्जनीयाश्च प्रतिगृह्यन्तां प्रतिगृह्णातु भगवान्विनायको विनायकाय नमः ” इति ॥ अथ तूष्णीं वा गन्धपुष्पधूपदीपैरभ्यर्च्योपतिष्ठते— ‘ भूपतये नमो भुवनपतये नमो भूतानां पतये नमः ’ इति ॥ उपस्थाय तिस्रो विनायकाहुतीर्जुहोति— ‘ विनायकाय भूपतये नमो विनायकाय स्वाहा । विनायकाय भुवनपतये नमो विनायकाय स्वाहा । विनायकाय भूतानां पतये नमो विनायकाय स्वाहा ’ इति । जयप्रभृतिसिद्धमाधेनुवरप्रदानात् ॥ अपूपं करम्भमोदकं सक्तून्पायसमित्यथास्मा उपहरति—‘ विघ्नाय स्वाहा, विनायकाय०, वीराय०, शूराय०, उग्राय०, भीमाय०, हस्तिमुखाय०, वरदाय०, विघ्नपार्षदेभ्यः०, विघ्नपार्षदीभ्यस्स्वाहा ’ इति ॥ अथ भूतेभ्यो बलिमुपहरेत्— ‘ ये भूताः प्रचरन्ति ’ इति ॥ अथ पञ्चसूत्रं कङ्कणं हस्ते व्याहृतिभिर्बध्नाति—‘ विनायक महाबाहो विघ्नेश भवदाज्ञया । कामा मे साधितास्सर्वे इदं बध्नामि कङ्कणम् ’ इति ॥ अथ साग्निकं विनायकं प्रदक्षिणं कृत्वा प्रणम्याऽभिवाद्य विनायकं विसर्जयति— ‘ कृतं यदि मया प्राप्तं श्रद्धया वा गणेश्वर । उत्तिष्ठ सगणस्साधो याहि भद्र प्रसीदतोम् ’ इति ॥ तस्मिन्याते द्वादशेध्मसमिद्धेनोपरि मध्यमं चैव दक्षिणोर्ध्वं समिधं तथा दधि मधु पय आज्यं सम्मिश्र्य परिषेचनं विसर्जनं कल्पयति ॥

मेधातिथिः—सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥ अकृत्वा शान्तिकं यस्तु निषिद्धे सति दारुणे । प्रकरोति शुभं कर्म विघ्नस्तस्य पदे पदे ॥ ज्योतिःप्रकाशे—प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परम् । शान्तिं ( विनायकशान्तिं ) विधाय गां दत्वा वाग्दानादि चरेत्पुनः ॥ विष्णुधर्मे—हस्तपुष्याश्वयुक्सौम्यवैष्णवान्यतमे शुभे ॥ नक्षत्रे च मुहूर्ते च मैत्रे वा ब्रह्मदैवते ॥

अथ प्रयोगः ॥ ऋद्धिसिध्यादिकामो मासिमासि शुक्लपक्षस्य चतुर्थ्यां पञ्चम्यां वा विवाहाद्यभ्युदयकर्मसु दारुणे सङ्कटे प्राप्ते तन्निवृत्तिकामश्च विनायकशान्तिं कुर्यात् ॥ कर्ता पूर्वेद्युः कृतैकभुक्तोऽपरेद्युर्नित्यकर्म कृत्वा देशकालौ सङ्कीर्त्य समस्त-मनोरथसिध्यर्थं ( अमुककर्मणि निर्विघ्नतासिध्यर्थं ) श्रीविनायकप्रीत्यर्थं विनायकशान्तिं करिष्ये, इति सङ्कल्प्य । तदङ्गतया गणेशपूजन-नान्दीसमाराधन-पुण्याहवाचनानि कुर्यात् । पुण्याहवाचने ' विनायकः प्रीयताम् ' इति विशेषः ॥ देवयजनोल्लेखन-प्रभृत्यग्निं प्रतिष्ठाप्य, विनायकशान्तिहोमः कर्म, वरदो नामाऽग्निः, सविता देवता, चरुर्हविः, इत्याद्यन्वाधाय प्रोक्षणीसंस्कारादि सवित्रे सिद्धमोदनं निरुप्य प्रोक्ष्य प्रतिष्ठिताभिधारणान्तं कुर्यात् ॥ अग्रेणाऽग्निमश्वदलोपरि स्वस्तिके कलशं प्रतिष्ठाप्य, तस्मिन् ( बिल्वसार ) सुवर्णादिनिर्मितां दक्षिणावर्तशुण्डलयुतां विनायकप्रतिमां, पूर्णपात्रे—सूत्रपञ्चकनिर्मितं कङ्कणञ्च विन्यस्योपोत्थाय " विघ्न विघ्नेश्वरागच्छ विघ्नेत्येव नमस्कृत । अविघ्नाय भवान्सम्यक्सदाऽस्माकं भव प्रभो ॥ ॐ भूर्भुवः सुवः विनायक-मावाहयामि " इत्यावाह्य ॥ ' इमा आपः शिवाः शिवतमाः शान्ताः शान्ततमाः पूताः पूततमाः पुण्याः पुण्यतमा मेध्या मेध्यतमा जुष्टा जुष्टतमा अमृता अमृतरसाः पाद्याः प्रतिगृह्यंतां प्रतिगृह्णातु भगवान्विनायको विनायकाय नमः ' इति पाद्यं० ॥ ' इमा आपः० अमृतरसा अर्घ्याः प्रतिगृह्यंतां० नमः ' इत्यर्घ्यं० ॥ एवमेव ' अर्हणीयाः०, अभिषेचनीयाः०, आचमनीयाः०, मार्जनीयाः० ' दत्वाऽथ ' विनायकाय नमः ' इति मन्त्रेण गन्ध-पुष्प-धूप-दीपांश्च तूष्णीं वा दद्यात् ॥ अथ विनायकमुपतिष्ठते—" भूपतये नमो भुवनपतये नमो भूतानां पतये नमः " इति ॥ अथ ' जुषस्व नः ' इत्याद्यग्निमुखान्तं कृत्वा सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तः-परिधौ निधाय स्रुवेणोपघातमाज्यस्य तिस्रो विनायकाहुतीरुपजुहोति—" ॐविनायकाय भूपतये नमो विनायकाय स्वाहा, विनायकाय भुवनपतये नमो विनायकाय स्वाहा, विनायकाय भूतानां पतये नमो विनायकाय स्वाहा " ( सर्वत्र यथालिङ्गं त्यागः ) ॥

स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा, अपूप–करम्भ–मोदक-सक्तु-पायसानेकीकृत्याऽग्नेरुत्तरतो बलिमुपहरति—" विघ्नाय स्वाहा, विनायकाय०, वीराय०, शूराय०, उग्राय०, भीमाय०, हस्तिमुखाय०, वरदाय०, विघ्नपार्षदेभ्यः०, विघ्नपार्षदीभ्यः० " इति ॥ अथ भूतेभ्यो बलिं दद्यात्—" ये भूताः प्रचरन्ति० दधातु स्वाहा " इति ॥ अथाऽऽचार्यः—" ॐभूर्भुवः सुवः, विनायक महाबाहो विघ्नेश भवदाज्ञया । कामा मे साधिताः सर्वे इदं बध्नामि कङ्कणम् " इति यजमानस्य दक्षिणहस्ते बध्नीयात् ॥ अथ पयोदधिमध्वाज्यानि सम्मिश्र्योत्तरपरिषेकादि होमशेषं समाप्याऽऽवाहितं विनायकं पुनः सम्पूज्य साग्निकं विनायकं प्रदक्षिणीकृत्य प्रणमेत्—" कृतं यदि मया प्राप्तं श्रद्धया वा गणेश्वर । उत्तिष्ठ सगणः साधो याहि भद्रं प्रसीदतोऽम् " इति ॥ अथ विनायकमुद्वास्याऽऽचार्यः कलशोदकेन सपरिवारं यजमानमभिषिञ्चेत् । आचार्याय प्रतिमायुतं कलशं गोदानं, ऋत्विग्भ्यो यथाशक्ति दक्षिणाश्च दत्वा ब्राह्मणान्सम्भोज्याऽऽशिषो गृह्णीयात् ॥ ॥

## ॥ अथ श्रीकल्पः ॥

( बो. गृ. शे. सू. ३–५ ) अथातश्श्रीकल्पं व्याख्यास्यामः—शुक्लपक्षस्य पञ्चम्यां पौर्णमास्यामपि वा श्रियं कदम्बमयीं बिल्वसारमयीं स्थण्डिले वा निधायाऽहोरात्रोपोषितश्शुचिः कृतशौचस्समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य गन्धसुमनसस्सम्प्रकीर्य हिरण्मयेन पात्रेणोदकं पूरयित्वा गन्धान् सुमनसः, तस्मिन् 'हिरण्यवर्णां हरिणीम्' इति द्वाभ्यां 'ॐ भूः श्रियमावाहयामि, ॐ भुवः श्रियमावाहयामि, ॐ सुवः श्रियमावाहयामि, ॐ भूर्भुवस्सुवः श्रियमावाहयामि' इत्यावाह्य 'कर्दमेन' इति द्वाभ्यां प्रसिद्धं प्रोक्ष्य 'अश्वपूर्वाम्' इति स्नापयित्वा 'गन्धद्वाराम्' इति गन्धं ददाति 'कां सोऽस्मिताम्' इति

पुष्पं ददाति 'उपैतु मां' इति धूपं ददाति 'चन्द्रां हिरण्मयीम्' इति दीपं ददाति 'चन्द्रां प्रभासाम्' इति नैवेद्यं ददाति ॥ अथ देव्या दक्षिणतोऽग्निमुपसमाधाय सम्परिस्तीर्य महाव्रीहिभिस्तण्डुलैः पायसं चरुं श्रपयित्वा हविर्द्विधा कृत्वा 'मनसः कामम्' इत्यभिप्रेत्य काममन्नं वाऽऽज्यमिश्रं श्रीसूक्तेन पञ्चदशर्चेन हविर्जुहोति ॥ तेन सूक्तेन 'श्रियै नमः पुष्ट्यै नमो धात्र्यै नमस्सरस्वत्यै नमः' इति बलिमुपहरति ॥ पद्मपुष्पाणि यथालाभं गृहीत्वा प्रत्यङ्गं निमार्ष्टि— 'क्षुत्पिपासाम्' इत्यलक्ष्मीं निर्णुदति ॥ एवमेवाऽहरहर्मासिमासि वा महान्तं पोषं पुष्यति धन्यं यशस्यमारोग्यमायुष्यं पुत्र्यं पशव्यं तस्य महत्स्वस्त्ययनमित्याह भगवान् बोधायनः ॥

संस्कारकौस्तुभे–चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥ (आपदि) श्रियं सम्पूज्य विधिवत्ततो मङ्गलमारभेत् ॥ अलाभे सुमुहूर्तस्य रजोदोष उपस्थिते । श्रियं सम्पूज्य तत्कुर्यात्पाणिग्रहणमङ्गलम् ॥ हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् । प्रत्यृचं पायसं हुत्वाऽभिषिच्य शुभमाचरेत् ॥

अथ प्रयोगः ॥ पुष्टिकामो धनकामो यशस्काम आरोग्यकाम आयुष्यकामः पुत्रकामः पशुकामः स्वस्तिकामो वा मासि-मासि शुक्लपक्षस्य पञ्चम्यामपि वा पौर्णमास्यां चौलोपनयनविवाहयज्ञकर्मस्वारम्भात्पूर्वं मध्ये वा पत्न्यां रजस्वलायां रजोदोष-सूचितसकलाऽनिष्टनिरसनपूर्वकशुभफलप्राप्तिकामो वा श्रीशान्तिं कुर्यात् ॥ कर्ता पूर्वेद्युरहोरात्रोपोषितोऽपरेद्युः प्रातस्स्नानादि नित्यकर्म कृत्वाऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य कुमारकस्योपनयने (कन्याया विवाहे वा) संस्कारात्पूर्वं (मध्ये वा) मातृरजोदोषोपस्थितिसूचितसकलाऽनिष्टनिरसनद्वारा शुभफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं श्रीशान्तिं करिष्ये, इति सङ्कल्प्य । आदौ निर्विघ्नतासिध्यर्थं गणपतिं सम्पूज्य 'श्रीः प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यं वृणुयात् ॥ अथाऽऽचार्यः समे देशे

गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्य तत्र गन्धसुमनसः सम्प्रकीर्य व्रीह्यादिनिर्मिते स्थण्डिले 'मही द्यौः' इत्यादि हिरण्मयं कलशं प्रतिष्ठाप्य, तस्मिन्गन्धपुष्पाणि निक्षिप्य वरुणपूजान्तं कृत्वा, अग्न्युत्तारणपूर्वकं सौवर्णप्रतिमायां 'हिरण्यवर्णां०, ताम्म आवह०' इति द्वाभ्यां 'ॐ भूः श्रियै नमः श्रियमावाहयामि, ॐ भुवः श्रियै नमः श्रियमावाहयामि, ओ३ं सुवः० श्रियमावाहयामि, ॐ भूर्भुवः सुवः० श्रियमावाहयामि' इत्यावाह्य, 'कर्दमेन०, आपस्स्रजन्तु०' इति द्वाभ्यां शुद्धोदकेन प्रोक्ष्य, 'अश्वपूर्वां०' इति स्नापयित्वा, 'गन्धद्वारां०' इति गन्धं ददाति। 'कां सोस्मितां०' इति पुष्पं, 'उपैतु मां०' धूपं०, 'आर्द्रां यः करिणीं० चन्द्रां हिरण्मयीं०' दीपं, 'चन्द्रां प्रभासां०' इति नैवेद्यं ददाति॥ अथ देवीदक्षिणतः स्थण्डिलोल्लेखनाऽद्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्याऽस्य कुमारकस्य उपनयने० श्रीपरमेश्वरप्रीत्यर्थं श्रीशान्तिहोमं करिष्ये, श्रीशान्तिहोमः कर्म, वरदो नामाग्निः, श्रीर्देवता, पायसश्चरुर्हविः, इत्याद्यन्वाधाय, प्रोक्षणीसंस्कारादि प्रणीताप्रणयने 'ब्रह्मन्पयः प्रणेष्यामि' इति पयः प्रणीय देवस्य त्वेत्यादिना महाव्रीहितण्डुलान् 'श्रियै जुष्टं निर्वपामि' इति निरुप्य प्रोक्ष्य पयसि चरुं श्रपयेत्। अथाऽऽज्यसंस्कारादि प्रतिष्ठिताभिघारणान्तं कृत्वा 'जुषस्व नः' इत्याद्यग्निमुखान्तं कृत्वा, चरुं द्विधा कृत्वाऽवदानधर्मेणावदाय 'मनसः काममाकूतिं०, कर्दमेन०' इति द्वाभ्यां पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय, चरौ प्रभूतमाज्यमानीय मेक्षणेनोपहत्य जुहोति—हिरण्यवर्णां० आवह स्वाहा ॥ १ ॥ ( सर्वत्र, श्रिया इदं० इति त्यागः ) ताम्म आवह० पुरुषानहं स्वाहा ॥ २ ॥ अश्वपूर्वां० जुषतां स्वाहा ॥ ३ ॥ कां सोस्मितां० श्रियं स्वाहा ॥ ४ ॥ चन्द्रां प्रभासां० त्वां वृणे स्वाहा ॥ ५ ॥ आदित्यवर्णे० अलक्ष्मीः स्वाहा ॥ ६ ॥ उपैतु मां० ददातु मे स्वाहा ॥ ७ ॥ क्षुत्पिपासामलां० गृहात्स्वाहा ॥ ८ ॥ गन्धद्वारां० श्रियं स्वाहा ॥ ९ ॥ मनसः० यशः स्वाहा ॥ १० ॥ कर्दमेन० पद्ममालिनीं स्वाहा ॥ ११ ॥ आपः स्रजन्तु० मे कुले स्वाहा ॥ १२ ॥ आर्द्रां पुष्करिणीं० चन्द्रां० आ वह स्वाहा ॥ १३ ॥

आर्द्रां यः० सुवर्णां हेम० सूर्यां० आ वह स्वाहा ॥१४॥ ताम्म आ वह० यस्यां हिरण्यं प्रभूतं० पुरुषानहं स्वाहा ॥ १५ ॥ अथ स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा, 'हिरण्यवर्णां० विन्देयं पुरुषानहं' इति श्रीसूक्तं पठित्वा 'श्रियै नमः' इति प्रथमं बलिमुपहरति। पुनः श्रीसूक्तं पठित्वा 'पुष्ट्यै नमः' इति द्वितीयं, पुनः श्रीसूक्तं पठित्वा 'धात्र्यै नमः' इति तृतीयं, पुनः श्रीसूक्तं पठित्वा। 'सरस्वत्यै नमः' इति चतुर्थम्॥ ततो यजमानः पञ्चपुष्पाणि हस्ते गृहीत्वा 'क्षुत्पिपासां०' इति मन्त्रेण शिरःप्रभृति सर्वाण्यङ्गानि निमार्ष्टि, प्रत्यङ्गं मन्त्रावृत्तिः॥ अथोत्तरपरिषेकादि होमशेषं समाप्य आवाहितदेवतां श्रीसूक्तेन पुनः सम्पूज्याऽऽचार्यः कलशोदकेन सकुटुम्बं यजमानमभिषिञ्चेत्। देवतामुद्रास्याचार्याय सपीठं कलशं गां यथाशक्ति दक्षिणाञ्च दत्वा कर्मेश्वरार्पणं कृत्वा यथाशक्ति ब्राह्मणान्भोजयेत्, तेभ्य आशिषो गृह्णीयात्॥

## ॥ बृहस्पतिशान्तिविधिः ॥

मदनरत्ने — कन्याविवाहकाले तु शुद्धिर्यस्या न विद्यते। ब्राह्मणस्योपनयने यस्य स्याद्दुःस्थितो गुरुः॥ एभिः पूजा गुरोः कार्या विधिवद्भक्तिभावितैः। मदन्ती( यूथिका )काम( दमनं )पुष्पाणि पत्रं पालाशसर्षपाः॥ गुडूची वान्यपामार्गं विडङ्गी शंखिनी वचा। सहदेवी विष्णुक्रान्ता सर्वौषध्यः शतावरी॥ कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम्। वचाकचोरमुस्ताश्च सर्वौषध्यः प्रकीर्तिताः॥ तथैवाऽश्वत्थभङ्गाश्च पञ्चगव्यं जलन्तथा। नूतनं सोदकुम्भञ्च पीतवस्त्रसमन्वितम्॥ पञ्चरत्नैः समायुक्तमीशान्यां स्थापितेऽनलात्। या ओषधी इति मन्त्रेण सर्वास्त्वास्मिन्विनिक्षिपेत्॥ कुम्भस्योपरिभागे तु स्थापयित्वा बृहस्पतिम्। सुवर्णपात्रे सौवर्णीं प्रतिमान्तु युधिष्ठिर॥ कारयेत्तु यथाशक्त्या वित्तशाठ्यविवर्जितः। पीतवस्त्रयुगच्छन्नां पीतयज्ञोपवीतिनीम्॥

पूजयेद्गन्धपुष्पाद्यैस्ततो होमं समाचरेत् । सामिधोऽश्वत्थवृक्षस्य होतव्याऽष्टोतरं शतम् ॥ तिलैर्व्रीहियवैर्मिश्रं होतव्यञ्च यथाक्रमम् । ब्रह्मस्पतेति मन्त्रेण ऋषिच्छन्दसमन्वितम् ॥ मन्त्रेणानेन जुहुयाद्धान्यपूर्वञ्च यत्नतः । ततो होमावसाने तु पूजयेच्च बृहस्पतिम् ॥ पीतगन्धैस्तथा पुष्पैर्धूपदीपैश्च भक्तितः । दध्योदनञ्च नैवेद्यं फलं ताम्बूलसंयुतम् ॥ मन्त्रेणानेन कौन्तेय नमितव्यः पुनः पुनः ॥ नमस्ते गिरिजानाथ वाक्पतेऽथ बृहस्पते । क्रूरग्रहैः पीडितानाममृताय नमो नमः ॥ पूजयित्वा सुराचार्यं पश्चादर्घ्यं निवेदयेत् ॥ गम्भीरदृढरूपाङ्ग देवेज्य सुमते प्रभो । नमस्ते वाक्पते शान्त गृहाणार्घ्यं नमोऽस्तुते ॥ अर्घ्यं दत्त्वा सुरेज्यस्य जपहोमं समापयेत् । भक्त्या यत्ते सुराचार्य होमपूजादिसत्कृतम् । तत् त्वं गृहाण शान्त्यर्थं बृहस्पते नमो नमः ॥ मन्त्रेणानेन सङ्कल्प्य पश्चात्सम्प्रार्थयेत्पुनः ॥ जीवो बृहस्पतिस्सूरिराचार्यो गुरुरङ्गिराः । वाचस्पतिर्देवमन्त्री शुभं कुर्यात्सदा मम ॥ एवं सम्प्रार्थयेद्देवमाचार्यञ्च प्रपूजयेत् ॥ सर्वोपचारसंयुक्तां प्रतिमां तां युधिष्ठिर । प्रणम्य च गवायुक्तामाचार्याय निवेदयेत् ॥ अथाचार्यस्तु नियतो वेदवेदाङ्गपारगः । यजमानं सपत्नीकं शान्तचित्तं जितेन्द्रियम् ॥ कुम्भोदकं गृहीत्वा तु मन्त्रैरेतैः प्रसिञ्चयेत् । इदमापोऽयमन्त्रेण तामग्निमित्यृचा तथा ॥ या ओषधीरश्वावतीकूष्माण्डैश्चाभिषेचयेत् । पश्चात्सम्भोजयेद्विप्रान्यथाशक्त्या युधिष्ठिर ॥ एवं कृत्वा गुरोः पूजां सर्वान् कामानवाप्नुयात् ॥ सङ्क्रान्तावपि कौन्तेय तथा स्वाभ्युदयेषु च । कुर्वन्बृहस्पतेः पूजामभीष्टं फलमश्नुयात् ॥

अथ प्रयोगः ॥ यजमानः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्याऽस्य कुमारकस्योपनयनकाले ( कन्याया विवाहकाले वा ) बृहस्पत्यानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां बृहस्पतिशान्तिं करिष्ये, इति सङ्कल्प्य, गणपतिं सम्पूज्य पुण्याहं वाचयित्वाऽऽचार्यादीन्वृणुयात् ॥ अथाचार्यः स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य यजमानेन वृतोऽहमस्य कुमारकस्योपनयनकाले बृहस्पत्यानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां गुरुशान्तिं करिष्ये, 'शान्तिहोमः कर्म' इत्यादि

नवग्रहकीर्तनान्ते, बृहस्पतिशान्तिहोमे-शिखी नामाऽग्निः, बृहस्पतिर्देवता, चरुर्हविः, उपहोमे–अश्वत्थसमिदाज्य–सर्पिर्मिश्रपायस-साज्ययवव्रीहितिलद्रव्यैः 'बृहस्पते' इति मन्त्रेण प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः, अधिदेवतां प्रत्यधिदेवताञ्च तैरेव द्रव्यै-रष्टाष्टसङ्ख्याकाहुतिभिश्च, स्विष्टकृतः अर्यमादयो देवता इत्याद्यन्वाधाय, परिसमूहनादि प्रतिष्ठिताभिघारणान्तं कृत्वा अग्ने-रीशानदिग्भागे ग्रहमण्डले 'मही द्यौः' इत्यादि वरुणपूजान्ते आदित्यादिनवग्रहानावाह्य। उत्तरे–हरिताक्षतनिर्मितचतुरस्रपीठे विधिवत्कलशं प्रतिष्ठाप्य, पञ्चगव्यं पञ्चामृतं पञ्चरत्नं सर्वौषधीश्च निक्षिप्य पीतवस्त्रेणावेष्ट्य पूर्णपात्रं निधाय वरुणमावाह्य, हैमीं बृहस्पतिप्रतिमामग्न्युत्तारणपूर्वकं प्रतिष्ठाप्य बृहस्पतिमावाह्य षोडशोपचारैः पूजयेत्॥ (पूजने विशेषः—पीतवस्त्रयुग्मं, पीतयज्ञोपवीतं, पीतचन्दनं, चम्पकादिपीतपुष्पं, विल्वमज्जाधूपो, घृतदीपो, नैवेद्यार्थं दध्योदनं, माणिक्यं सुवर्णं वा दक्षिणा) अथ सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिश्च कलशमभिमन्त्रयेत्॥ ततः परिधानप्रभृत्यग्नि-मुखान्ते ग्रहाणां बृहस्पतेश्च पक्वं हुत्वाऽन्वाधानक्रमेणोपहोमं कुर्यात्। ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा, होमशेषेण बलिमुपहृत्योत्तरपरिषेकादि होमशेषं समापयेत्॥ आवाहितदेवताः पुनः सम्पूज्य 'गम्भीरदृढरूपाङ्ग देवेज्य सुमते प्रभो। नमस्ते वाक्पते शान्त गृहाणाऽर्घ्यं नमोऽस्तु ते' इति पीतगन्धाक्षतपुष्पयुतताम्रपात्रस्थजलेनार्घ्यं दत्वा—'नमस्ते गिरिजानाथ वाक्पतेऽथ बृहस्पते। क्रूरग्रहैः पीडितानाममृताय नमो नमः' इति नमस्कृत्य प्रार्थयेत्—'भक्त्या यत्ते सुराचार्य होमपूजादि-सत्कृतम्। तत् त्वं गृहाण शान्त्यर्थं बृहस्पते नमो नमः॥ जीवो बृहस्पतिः सूरिराचार्यो गुरुरङ्गिराः। वाचस्पतिर्देवमन्त्री शुभं कुर्यात्सदा मम॥ धर्मशास्त्रार्थतत्त्वज्ञ ज्ञानविज्ञानपारग। विबुधार्तिहराऽचिन्त्य देवाचार्य नमोऽस्तु ते' इति॥ तत आचार्यादयः कलशोदकेन सकुटुम्बं सपरिवारं यजमानं 'आपो हि ष्ठा' इति तिसृभिः "तत्त्वा यामि० प्र मोषीः॥ तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं

केतो हृद आ वि चष्टे । शुनःशेपो यमह्वद्गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु ॥ शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः । अवैनं राजा वरुणः स सृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् " इति तिसृभिः, " स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् " इति तिसृभिः, " समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः । इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥ या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयञ्जाः । समुद्रार्था याः शुचयः पावकास्ता आपो० ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता आपो० ॥ यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति । वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो० " इति चतसृभिः, " इदमापः प्रवहत यत्किञ्च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्, तामग्निवर्णां तपसा० तरसे नमः, या ओषधीः०, अश्वावतीर्गोमतीः० " इति चतसृभिः, ' यद्देवा देवहेळनं ' इति त्रिभिरनुवाकैश्चाऽभिषिञ्चेयुः ॥ यजमान आचार्याय गां प्रतिमां सपीठं कलशं, ऋत्विग्भ्यश्च ग्रहोक्तदक्षिणां दत्वा कर्मेश्वराय समर्प्य यथाशक्ति ब्राह्मणान्सम्भोज्य तेभ्य आशिषो गृह्णीयात् ॥

## ॥ अथ प्रजार्थिहोमः ॥

( बो. गृ. शे. सू. २·४ ) पूर्वपक्षे पुण्ये नक्षत्रेऽमावास्यायां विषुवेऽयने वा नदीतीरेऽश्वत्थच्छायायां वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा ब्राह्मणानन्नेन परिविष्य ' पुण्याहं स्वस्त्यृद्धिम् ' इति वाचयित्वा प्राच्यां दिशि ब्रह्माणं प्रतिष्ठाप्य पार्श्वयोर्धातारं विधातारम् । दक्षिणतो धातारमुत्तरतो विधातारम् ॥ ततस्तानर्चयेत्पूर्वं ' ब्रह्माणं प्रजापतिं परमेष्ठिनं हिरण्यगर्भ-

मावाहयामि ' इत्यावाह्य सावित्र्या पाद्यं ददाति सावित्र्या निवेदयेदेतैरेव नामधेयैश्शुक्लान्नं ब्रह्मणे मुद्गान्नं धातुः पीतान्नं विधातुः ॥ ततस्सावित्र्या अप आचम्य प्रणवेनाष्टशतं हुत्वा ब्रह्माणमुपतिष्ठते—"नमो वाचे नमो वाचस्पतये नमो ब्रह्मणे बृहते करोमि " इत्येवं " नमो धात्रे नमो विधात्रे " इति । अग्निमुपतिष्ठते—' नमोऽग्नये सप्तार्चिः सप्तजिह्वः सप्तधाऽग्निः प्रतिष्ठितः । सप्तैव विश्वा भूतानि को ह्यग्निः प्रतितिष्ठति । तत्त्वमसि विश्वमसि योनिरसि ' इति ॥ अथ स्त्रियमाहूय सावित्र्या पलाशपर्णैरष्टोत्तरसहस्रैः स्नापयित्वा पुरुषसूक्तेन जुहुयात्तत्सम्पातेन मूर्ध्नि जुहुयात्प्रणवेन नमस्कुर्यात् ॥ अध्वर्युं वस्त्रकुण्डलाभ्यामलङ्करोति ॥ ततस्सा गर्भिणी भवतीत्याह भगवान्बोधायनः ॥

अथ प्रयोगः ॥ पूर्वपक्षे पुण्यनक्षत्रे वाऽमायां विषुवदिने दक्षिणोत्तरायणारम्भदिने वा कुर्यात् ॥ ॥ कर्ता स्नानादिनित्यकर्म निर्वर्त्य सपत्नीको नदीतीरमश्वत्थमूलं वा प्राप्य गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्य, प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, ' ममाऽपुत्रत्वदोषनिवृत्त्याऽस्यां भार्यायामायुष्मत्सुरूपसुगुणसम्पन्नसुपुत्रप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं प्रजार्थिहोमं करिष्ये ' इति सङ्कल्प्य, तदङ्गं गणपतिपूजनं, नान्दीसमाराधनं, ' ब्रह्मा प्रीयताम् ' इति पुण्याहवाचनञ्च कुर्यात् ॥ अथ स्थण्डिलोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममाऽपुत्रत्वदोषनिवृत्त्या० सुपुत्रप्राप्त्यर्थं प्रजार्थिहोमं करिष्ये, होमः कर्म, बलवर्धनो नामाऽग्निः, ब्रह्मा देवता, चरुर्हविः, उपहोमश्च प्रणवेनाऽष्टोत्तरशतवारमाज्येन पुरुषसूक्तेन च प्रत्यृचमाज्येन यक्ष्ये, अग्निः स्विष्टकृदित्याद्यन्वाधाय, प्रतिष्ठिताऽभिघारणान्तं कृत्वाऽग्रेणाऽग्निं व्रीहिभिस्स्थण्डिलं कृत्वा, तत्र मध्यदक्षिणोत्तरक्रमेण सुदृढमव्रणं तन्तुवेष्टितं कलशत्रयं प्रतिष्ठाप्य, ' मही द्यौः ' इत्यादि वरुणपूजान्तं कृत्वा, तदुपरि सुवर्णनिर्मितं प्रतिमात्रयमग्न्युत्तारणपूर्वकं संस्थाप्य देवता आवाहयेत्—मध्यमे कलशे—' ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणमा-

वाहयामि, ॐभूर्भुवः स्वः प्रजापतये नमः०, ॐभूर्भुवः स्वः परमेष्ठिने नमः० ॐ भूर्भुवः स्वः हिरण्यगर्भाय नमः० ' इत्यावाह्य, दक्षिणे कलशे–' ॐभूर्भुवः स्वः धात्रे नमः धातारमावाहयामि ' उत्तरे कलशे—' ॐ भूर्भुवः स्वः विधात्रे नमः विधातारमावाहयामि ' इत्यावाह्य षोडशोपचारैः सम्पूजयेत् । ( पूजने विशेषः— ' तत्सवितुः ' इति गायत्र्या पाद्यं दद्यात् । सावित्र्या ' ब्रह्मणे नमः, प्रजापतये०, परमेष्ठिने०, हिरण्यगर्भाय नमः ' इति शुद्धोदनं, ' धात्रे नमः ' इति मुद्गोदनं, ' विधात्रे नमः ' इति हरिद्रौदनञ्च निवेदयेत् ) ततः परिधानप्रभृत्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति—' ब्रह्म जज्ञानं०, पिता विराजां० ' इति द्वाभ्यां ( ब्रह्मण इदं० ) स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽज्याहुतीरुपजुहोति—प्रणवेनाष्टोत्तरशतवारमाज्यं ( ब्रह्मण इदं० इति त्यागः ) पुरुषसूक्तेन प्रत्यृचमाज्येन ( सर्वत्र, पुरुषाय नारायणायेदं० इति त्यागः ) जुहुयात् । होमकाले पात्रान्तरे सम्पातमाज्यं गृह्णीयात् ॥ स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वा देवता उपतिष्ठते—' नमो वाचे नमो वाचस्पतये नमो ब्रह्मणे बृहते करोमि ' इति ब्रह्माणं, ' नमो वाचे नमो वाचस्पतये नमो धात्रे बृहते करोमि ' इति धातारं, ' नमो वाचे नमो वाचस्पतये नमो विधात्रे बृहते करोमि ' इति विधातारञ्च । ततोऽग्निमुपतिष्ठते—" नमोऽग्नये सप्तार्चिः सप्तजिह्वः सप्तधाऽग्निः प्रतिष्ठितः । सप्तैव विश्वा भूतानि को ह्यग्निः प्रतितिष्ठति । तत्त्वमसि विश्वमसि योनिरसि " इति ॥ अथ पत्नीं सावित्र्याष्टोत्तरसहस्रैः पालाशपर्णैरद्भिर्मार्जयित्वा सम्पाताज्येन ' ॐ स्वाहा ' इति तस्या मूर्ध्नि जुहुयात् ॥ अथोत्तरपरिषेकादि होमशेषं समाप्य देवताः पुनः सम्पूज्य नमस्कृत्य, आचार्याय स्वर्चितप्रतिमायुतं कलशं वस्त्रकुण्डले च दत्वा कर्मेश्वराय समर्प्य यथाशक्ति ब्राह्मणान् सम्भोज्याशिषो गृह्णीयात् । ततः सा गर्भिणी भवति ॥

# ॥ अथ पुत्रार्थिहोमः ॥

( बो. गृ. प. सू. २·७ ) षष्ठेऽहनि शुची स्नातौ शुक्लवस्त्रौ स्वलङ्कृतौ । हविष्यमन्नमादाय ब्राह्मणान्सुसमाहितान् ॥ भोजयित्वोपसङ्गृह्य सुसन्तृतेषु तेष्वथ । पुण्याहं वाचयित्वा तानभिवाद्य प्रणम्य च ॥ श्वेतायाश्श्वेतवत्सायाः स्थालीपाकन्तु पाचयेत् । गायत्र्याष्टसहस्रन्तु सम्पाताऽभिहुतो भवेत् ॥ उभौ तु तद्धुतं प्राश्य कुर्वीत प्रतिमन्त्रणम् । जघन्ये रात्रिपर्याये सर्वत्रोपगमस्स्मृतः ॥ प्रागग्रेषु तु दर्भेषु प्राक्शिरान्तु निपातयेत् । चतुर्होतारं मनसाऽनुद्रुत्य प्रणवेनाहुतिर्भवेत् ॥ एवमुत्पादिताः पुत्रा न लुप्यन्ते कदाचन ॥ न लुप्यन्ते कदाचनेति ॥

अथ प्रयोगः ॥ कृतेऽपि गर्भाधाने—अपुत्रत्वं मृतपुत्रत्वं स्त्रीप्रजात्वं वा तदा प्रतिबन्धनिवृत्त्याऽऽयुष्मत्सुपुत्रप्राप्त्यर्थं पुत्रार्थिहोमं कुर्यात् ॥ ॥ पत्न्या रजोदर्शनात्षष्ठेऽह्नि कर्ता प्रातर्नित्यकर्म कृत्वा, पत्न्या सह स्नात्वा श्वेतवाससी परिधायाऽलङ्कृत्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, आवयोरपुत्रत्व-मृतपुत्रत्व-स्त्रीप्रजात्वेत्यादि समस्तदोषनिवृत्त्याऽऽयुष्मत्सुपुत्रप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सावित्रस्थालीपाकं करिष्ये, इति सङ्कल्प्य गणपतिं सम्पूज्य ब्राह्मणानन्नेन परिविष्य 'सविता प्रीयताम्' इति पुण्याहं वाचयित्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, आवयोरपुत्रत्व० सावित्रस्थालीपाकहोमं करिष्ये, बलवर्धनो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमश्च–सावित्र्याष्टसहस्रमाज्येन, अग्निः स्विष्टकृत्, इत्यादि सङ्कल्प्याऽन्वाधाय प्रोक्षणीः संस्कृत्य, पयः प्रणयनं कृत्वा, 'देवस्य त्वा० सवित्रे जुष्टं निर्वपामि' इति निरुप्य, 'देवस्य त्वा० सवित्रे वो जुष्टं प्रोक्षामि' इति त्रिः प्रोक्ष्य, श्वेतायाः श्वेतवत्सायाः पयसि स्थालीपाकं श्रपयित्वा प्रतिष्ठिताभिघारणाद्यग्निमुखान्तं कृत्वा,

'सावित्र्या' पक्कं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय, अग्निश्चाज्यस्थालीश्चान्तरेण चरुस्थालीं निधायाऽन्वाधानोक्तक्रमेण जुहुयात् ॥ (अष्टसहस्रसम्पाताभिहुतं करोति) स्विष्टकृदाद्युत्तरपरिषेकात्प्राक्कृत्वाऽग्रेणाऽग्निं दर्भस्तम्बेषु सावित्र्या हुतशेषं निधायाऽपरेणाऽग्निं दम्पती प्राङ्मुखावुपविश्य वाग्यतौ हविः शेषं प्राश्नीयाताम् ॥ उत्तरपरिषेकादि होमशेषं समाप्य, आचार्याय गोदानं यथाशक्ति दक्षिणाश्च दत्वा ब्राह्मणान्भोजयित्वाऽऽशिषो गृह्णीयात् ॥ ततस्त्रेधाविभक्तनिशाया अन्तिमे भागे प्रागग्रेषु दर्भेषु शय्यायां — ऋतुसंवेशनवत् 'विष्णुर्योनिं कल्पयतु' इति प्रतिमन्त्रणादि कृत्वा "पृथिवी होता० इन्द्रियाय स्वाहा ॐ" इत्युपगच्छेत् ॥ शेषं समानम् ॥ ॥

# आयुष्यचरुशान्तिः (हुतानुकृतिः)

(बो. गृ. सू. ३·७) अथायुष्यचरुः ॥ संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु ऋतावृतौ मासिमासि वा कुमारस्य जन्मनक्षत्रे क्रियेत ॥ अथ देवयजनोल्लिखनप्रभृत्याप्रणीताभ्यः कृत्वा व्रीहीन्निर्वपति — 'अग्नय आयुष्मते वो जुष्टं निर्वपामि' इति । तूष्णीं वा ॥ धान्यान्निर्वपति — 'प्राणाय वो जुष्टं निर्वपामि' इति । तूष्णीं वा ॥ तानभ्युक्ष्यावहत्य त्रिष्फलीकृत्य त्रिःप्रक्षाळ्य निदधाति ॥ तण्डुलान्वा निर्वपति ॥ तानभ्युक्ष्य त्रिः प्रक्षाळ्यैव निदधातीति ॥ अथ तिरःपवित्रं स्थाल्यामपः पयो वाऽऽनीयाधिश्रित्य तिरःपवित्रं तण्डुलानावपति ॥ अथाज्यं निर्वपत्यथाज्यमधिश्रयत्युभयं पर्यग्नि कृत्वा मेक्षणं स्रुवञ्च सम्मार्ष्टि ॥ अथैतं चरुं श्रपयित्वाऽभिघार्योदश्चमुद्वास्य प्रतिष्ठितमभिघारयति ॥ एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः ॥ परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति — 'आयुष्टे विश्वतो दधत्' इति पुरोनुवाक्यामनूच्य 'आयुर्दा अग्ने हविषो जुषाणः' इति याज्यया

जुहोति॥ अथाज्याहुतीरुपजुहोति॥ अथान्तरेणाग्निं चाज्यस्थालीं च पाकस्थालीं निधाय तत्सम्पाताभिहुतं करोति॥ 'यो ब्रह्मा ब्रह्मण' इत्यष्टभिर्मन्त्रैः षड्विंशतिशतकृत्वस्तदाहुतीनां अष्टसहस्रं सम्पद्यते॥ इतरस्मात्पक्वात्सौविष्टकृतं जुहोति॥ जयप्रभृति सिद्धमाधेनुवरप्रदानात्॥ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति — "मा नो महान्तं, मा नस्तोके" इति द्वाभ्याम्॥ अपरेणाग्निं प्राङ्मुख उपविश्य वाग्यतः स्थालीपाकं सगणः प्राश्नाति। तस्य प्राशनमन्त्रः— 'आयुरसिविश्वायुरसि। सर्वायुरसि सर्वमायुरसि। सर्वं म आयुर्भूयात्। सर्वमायुर्गेषम्' इति प्राश्याप आचम्य जठरमभिमृशति— "यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः" इति द्वाभ्याम्॥ कुमाराणां ग्रहगृहीतानां ज्वरगृहीतानां भूतोपसृष्टानां आयुष्येण घृतसूक्तेनाऽहरहस्स्वस्त्ययनार्थं स्वाध्यायमधीयीतैतैरेव मन्त्रैराहुतीर्जुहुयादेतैतैरेव मन्त्रैर्बलीन् हरेदगदो हैव भवति॥ तदेतद्ध्रुमयनं भूतोपसृष्टानां राष्ट्रभृतः पञ्चचोडास्सर्पाहुतिर्गन्धर्वाहुतिरहरहस्स्वस्त्ययनार्थं स्वाध्यायमधीयीतैतैरेव मन्त्रैराहुतीर्जुहुयात्। एतैरेव मन्त्रैर्बलीन् हरेदगदो हैव भवति॥ तदेतद्ध्रुमयनं हुतप्रहुतानुकृतयोऽन्ये होमाः बलिहरणानुकृतीन्यभ्यर्चनान्याश्रमानुकृतयस्संश्रया इति॥

अथ प्रयोगः॥ संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु ऋतावृतौ मासिमासि वा कुमारकस्य जन्मनक्षत्रे कुर्यात्॥ कर्ता सपत्नीकः कृतस्नानादिचतुष्टयो दर्भेष्वासीनो दर्भान्धारयमाण आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'अस्य कुमारकस्य ग्रहचारपीडापरिहारार्थं समस्तभूतोपसर्गनिवारणार्थं समस्तज्वरपीडापरिहारद्वारा दीर्घायुष्याभिवृध्यर्थं श्रीपमेश्वरप्रीत्यर्थं आयुष्यचरुहोमं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य 'अग्निरायुष्मान्प्रीयताम्, प्राणः प्रीयताम्' इति पुण्याहं वाचयित्वा, देवयजनोल्लिखनाद्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'कुमारकस्य० दीर्घायुष्याभिवृध्यर्थं आयुष्यचरुहोमं करिष्ये, आयुष्यचरुहोमः कर्म, बलवर्धनो नामाग्निः, अग्निरायुष्मान्देवता, प्राणो देवता, चरुपायसे हविषी, उपहोमे—घृतसूक्तेन

षड्विंशत्युत्तरशतावृत्तेनाष्टसहस्रसङ्ख्याहुतिभिराज्येन, राष्ट्रभृत्पञ्चचोडासर्पाहुतिगन्धर्वाहुतिमन्त्रैराज्येन, अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधाय, पात्रासादनकाले चरुस्थालीद्वयमासाद्याऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं विधिवत्कलशं प्रतिष्ठाप्य वरुणं सम्पूज्य, 'आयुष्टे०, आयुर्दा अग्ने०' इति द्वाभ्यां 'ॐ भूर्भुवः स्वः अग्नय आयुष्मते नमः अग्निमायुष्मन्तमावाहयामि' इत्यावाह्य षोडशोपचारैरभ्यर्चयेत् ॥ अथ चरुं निर्वपति— 'देवस्य त्वा० अग्नय आयुष्मते० निर्वपामि, प्राणाय० निर्वपामि' इति पायसञ्च निरुप्य प्रोक्ष्य अग्नावधिश्रयति। अथाऽऽज्यनिर्वापाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति— 'आयुष्टे विश्वतो दधत्०' इति पुरोनुवाक्यामनूच्य 'आयुर्दा अग्ने हविषो जुषाणः०' इति याज्यया जुहोति (अग्नय आयुष्मत इदं० इति त्यागः) ततः स्विष्टकृतमवदायान्तःपरिधौ निधायाऽन्तरेणाग्निश्चाज्यस्थालीं पायसं निधायाज्याहुतीरुपजुहोति (सहस्रसम्पाताभिहुतं करोति) —यो ब्रह्मा० घृतेन स्वाहा, (ईशानाय देवायेदं०) ॥ १ ॥ विभ्राजमानः० देवः स्वाहा, (ईशानाय देवायेदं०) ॥ २ ॥ ब्रह्मज्योतिः० घृतेन स्वाहा, (ईशानाय देवायेदं०) ॥ ३ ॥ श्रियं लक्ष्मीं० घृतेन स्वाहा, (विद्यायै ब्रह्मयोन्यै सरूपाया इदं०) ॥ ४ ॥ दाक्षायण्यः० जुषन्ताꣳ स्वाहा, (दाक्षायणीभ्य इदं०) ॥ ५ ॥ दिव्या गणा० वीरान्स्वाहा, (दिव्येभ्यो गणेभ्य इदं०) ॥ ६ ॥ एकः पुरस्तात्० देवः स्वाहा, (देवायेदं०) ॥ ७ ॥ वसून्रुद्रान्० शश्वत्स्वाहा, (वसुभ्यो रुद्रेभ्य आदित्येभ्यो मरुद्भ्यः साध्येभ्य ऋभुभ्यो यक्षेभ्यो गन्धर्वेभ्यः पितृभ्यो विश्वेभ्यो भृगुभ्यः सर्पेभ्योऽङ्गिरोभ्यः सर्वेभ्य इदं०) एवं षड्विंशत्युत्तरशतकृत्वस्तदाहुतीनामष्टसहस्रं सम्पद्यते ॥ अथ राष्ट्रभृतो जुहोति— 'ऋताषाड्ऋतधामा' इत्यादि द्वाविंशत्याहुतीः ॥ अथ पञ्चचोडाहुतीर्जुहोति—अयं पुरो हरिकेशः० दधामि स्वाहा (हरिकेशादिभ्य इदं०) ॥ १ ॥ अयं दक्षिणा विश्वकर्मा० दधामि स्वाहा (विश्वकर्मादिभ्य इदं०) ॥ २ ॥ अयं पश्चाद्विश्वव्यचाः० दधामि स्वाहा (विश्वव्यचादिभ्य इदं०) ॥ ३ ॥ अयमुत्तरात्संयद्वसुः० दधामि स्वाहा (संयद्वस्वादिभ्य इदं०)

॥ ४ ॥ अयमुपर्यर्वाग्वसुः० दधामि स्वाहा ( अर्वाग्वस्वादिभ्य इदं० ) ॥ ५ ॥ अथ सर्पाहुतीर्जुहोति— समीची नामासि० ( अग्नय इदं० ) ॥ १ ॥ ओजस्विनी नामासि० ( इन्द्रायेदं० ) ॥ २ ॥ प्राची नामासि० ( सोमायेदं० ) ॥ ३ ॥ अवस्थावा नामासि० ( वरुणायेदं० ) ॥ ४ ॥ अधिपत्नी नामासि० ( बृहस्पतय इदं० ) ॥ ५ ॥ वशिनी नामासि० ( यमायेदं० ) ॥ ६ ॥ अथ गन्धर्वाहुतीर्जुहोति — हेतयो नाम स्थ० ( हेतिभ्य इदं० ) ॥ १ ॥ निलिम्पा नाम स्थ० ( निलिम्पेभ्य इदं० ) ॥ २ ॥ वज्रिणो नाम स्थ० ( वज्रिभ्य इदं० ) ॥ ३ ॥ अवस्थावानो नाम स्थ० ( अवस्थावभ्य इदं० ) ॥ ४ ॥ अधिपतयो नाम स्थ० ( अधिपतिभ्य इदं० ) ॥ ५ ॥ क्रव्या नाम स्थ० ( क्रव्येभ्यः पार्थिवेभ्य इदं० ) ॥ ६ ॥ इति ॥ स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति — 'मा नो महान्तं०, मा नस्तोके०' इति द्वाभ्यां, राष्ट्रभृत्पञ्चचोडासर्पाहुतिगन्धर्वाहुतिमन्त्रैश्च ॥ अथापरेणाग्निं प्राङ्मुख उपविश्य वाग्यतः सम्पाताऽभिहुतं पायसं सगणः प्राश्नाति — 'आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । सर्वम्म आयुर्भूयात् । सर्वमायुर्गेषम्' इति प्राश्याप आचम्य जठरमभिमृशति — 'यत इन्द्र भयामहे०, स्वस्तिदा विशस्पतिः०' इति द्वाभ्याम् ॥ अथोत्तरपरिषेकादि होमशेषं समाप्य, आवाहितदेवताः पुनः सम्पूज्य ऋत्विजः कलशोदकेन यजमानं सगणं प्रोक्षयेयुः । यजमान आचार्याय कलशं सपीठं गां ऋत्विग्भ्यो यथाशक्ति दक्षिणाश्च दत्वा कर्मेश्वराय समर्प्य ब्राह्मणान्भोजयेत्, तेभ्यश्चाशिषो गृह्णीयात् ॥

## ॥ अहरहः प्रातः पठनीया मन्त्राः ॥

( कौषीतकी गृ. सू. १. ४ ) उत्थाय प्रातराचम्याऽहरहः स्वाध्यायमधीयीताऽद्या नो देव सवितरिति द्वे, अपेहि मनसस्पत इति सूक्तम्, ऋतञ्च सत्यञ्चेति सूक्तमादित्या अव हि ख्यतेति सूक्तशेषः, इन्द्र श्रेष्ठानि इत्येका, हंसः शुचिषदित्येका, यत इन्द्र भयामह इत्येकाऽधस्वप्नस्येत्येका, यो मे राजन्नित्येका, ममाग्ने इति सूक्तं, स्वस्ति नो मिमीतामिति च पञ्च ॥

अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुःष्वप्न्यं सुव ॥ १ ॥ विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्म आ सुव ॥ २ ॥ अपेहि मनसस्पतेऽप क्राम परश्चर । परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥ ३ ॥ भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम् । भद्रं वैवस्वते चक्षुर्बहुधा जीवतो मनः ॥ ४ ॥ यदाशसा निःशसाभिशसोपारिम जाग्रतो यत्स्वपन्तः । अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु ॥ ५ ॥ यदिन्द्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि । प्रचेता न आङ्गिरसो द्विषतां पात्वंहसः ॥ ६ ॥ अजैष्माद्यासनाम चाभूमानागसो वयम् । जाग्रत्स्वप्नः संकल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥ ७ ॥ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ ८ ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ ९ ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ १० ॥ आदित्या अव हि ख्यताधि कूलादिव स्पशः । सुतीर्थमर्वतो यथा नु नो नेषथा सुगमनेहसो व ऊतयः सुऊतयो व ऊतयः ॥ ११ ॥ नेह भद्रं रक्षस्विने नावयै नोपया उत । गवे च भद्रं धेनवे वीराय च श्रवस्यतेऽनेहसो व ऊतयः० ॥ १२ ॥ यदाविर्यदपीच्यं [१] देवासो अस्ति दुष्कृतम् । त्रिते तद्विश्वमाप्त्य आरे अस्मद्दधातनानेहसो व० ॥ १३ ॥ यच्च गोषु दुष्ष्वप्न्यं यच्चास्मे दुहितर्दिवः । त्रिताय तद्विभावर्याप्त्याय परा वहानेहसो व० ॥ १४ ॥ निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः । त्रिते दुष्ष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व० ॥ १५ ॥ तदन्नाय तदपसे तं भागमुपसेदुषे । त्रिताय च द्विताय चोषो दुष्ष्वप्न्यं वहानेहसो व० ॥ १६ ॥ यथा कलां यथा शफं यथ ऋणं सन्नयामसि । एवा दुष्ष्वप्न्यं सर्वमाप्त्ये सन्नयामस्यनेहसो व० ॥ १७ ॥ अजैष्माद्यासनाम चाभूमानागसो वयम् । उषो यस्माद्दुष्ष्वप्न्यादभैष्माप तदुच्छत्वनेहसो व० ॥ १८ ॥ इन्द्र श्रेष्ठानि द्रविणानि

धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥ १९ ॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ २० ॥ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥ २१ ॥ यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि ॥ २२ ॥ अध स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः । उभा ता बस्रि नश्यतः ॥ २३ ॥ यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह । स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥ २४ ॥ ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ २५ ॥ मम देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः । ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥ २६ ॥ मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः । दैव्या होतारो वनुषन्त पूर्वेऽरिष्टाः स्याम तन्वा सुवीराः ॥ २७ ॥ मह्यं यजन्तु मम यानि हव्याऽऽकूतिः सत्या मनसो मे अस्तु । एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता नः ॥ २८ ॥ देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ २९ ॥ अग्ने मन्युं प्रतिनुदन्परेषामदब्धो गोपाः परि पाहि नस्त्वम् । प्रत्यञ्चो यन्तु निगुतः पुनस्ते ऽमैषां चित्तं प्रबुधां वि नेशत् ॥ ३० ॥ धाता धातॄणां भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहम् । इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् ॥ ३१ ॥ उरुव्यचा नो महिषः शर्म यंसदस्मिन्हवे पुरुहूतः पुरुक्षुः । स नः प्रजायै हर्यश्व मृळयेन्द्र मा नो रीरिषो मा परादाः ॥ ३२ ॥ ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । वसवो

रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥ ३३॥ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ ३४ ॥ स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ ३५ ॥ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ ३६ ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति स्वस्ति न इन्द्रश्चाऽग्निश्च स्वस्ति नो अदिते कृधि ॥ ३७ ॥ स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव । पुनर्ददताऽघ्नता जानता सङ्गमेमहि ॥ ३८ ॥

## ॥ कूष्माण्डहोमविधिः ॥

( बो. ध. सू. ३. ७. १-१३ ) अथ कूश्माण्डैर्जुहुयाद्योऽपूत इव मन्येत ॥ यथा स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतस्सिञ्चति ॥ यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यत इति ॥ अयोनौ रेतस्सिक्त्वाऽन्यत्र स्वप्नात् ॥ अरेपा वा पवित्र कामो वा ॥ अमावास्यायां पौर्णमास्यां वा केशश्मश्रुलोमनखानि वापयित्वा ब्रह्मचारिकल्पेन व्रतमुपैति ॥ संवत्सरं मासं चतुर्विंश- त्यहो द्वादश रात्रीः षट् तिस्रो वा ॥ न मांसमश्नीयान्न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेताऽनृतात् ॥ पयो भक्ष इति प्रथमः कल्पः ॥ यावकं वोपयुञ्जानः कृच्छ्रं द्वादशरात्रं चरेद्भिक्षेद्वा तद्विधेषु यवागूं राजन्यो वैश्य आमिक्षाम् ॥ पूर्वाह्णे पाकयज्ञिकधर्मेणाऽग्नि- मुपसमाधाय सम्परिस्तीर्याऽऽग्निमुखात् कृत्वा "यद्देवा देवहेळनं" । "यददीव्यन्नृणमहं बभूव" । "आयुष्टे विश्वतोदधत्" इत्येतैस्त्रिभिरनुवाकैः प्रत्यृचमाज्यस्य हुत्वा "सिंहे व्याघ्र उत या पृदाकौ" इति चतस्रः स्रुवाहुतीः जुहोति । "अग्नेऽभ्यावर्तिन्, अग्ने अङ्गिरः, पुनरूर्जा, सहरय्या" इति चतस्रोऽभ्यावर्तिनीर्हुत्वा समित्पाणिर्यजमानलोकेऽवस्थाय "वैश्वानराय प्रतिवेदयाम"

इति द्वादशर्चेन सूक्तेनोपस्थाय "यन्मे मनसा वाचा कृतमेनः कदाचन। सर्वस्मात्तस्मान्मेळितो मोग्धि त्वं हि वेत्थ यथातथ॰ स्वाहा" इति समिधमाधाय वरं ददाति॥ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ॥ विज्ञायते कर्मादिष्वेतैर्जुहुयात् पूतो देवलोकान् समश्नुते इति हि ब्राह्मणमिति हि ब्राह्मणम्॥

अथ प्रयोगः॥ अमावास्यायां पौर्णमास्यां वा केशश्मश्रुनखलोमानि वापयित्वा, मधु-मांसादिभक्षण-अनृतवदन-खट्वारोहण-स्त्रीगमनादिवर्जनरूपं (पयोभक्षो भैक्षाहारो वा॥ अशक्तश्चेत्- ओदन-धाना-सक्तु-घृतान्युपभुञ्जीयात्) संवत्सरं मासं चतुर्विंशत्यहो द्वादश रात्रीः षट् तिस्रो वा पापतारतम्येन व्रतं चरित्वा प्रतिदिनं कूष्माण्डैर्जुहुयात्॥ कर्ता स्नानादिनित्यकर्म कृत्वा पूर्वाह्णे आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, "ब्रह्महत्या-सुरापान-स्वर्णस्तेय-गुरुतल्पगमन-तत्संसर्गरूपमहापातकानां, गुर्वधिक्षेप-वेदनिन्दा-सुहृद्वध-कौटसाक्ष्य-अधीतवेदविस्मरण - भुञ्जानेषुपात्रपरित्याग - रजस्वलान्तर्वत्न्यात्रेयी- अविज्ञातगर्भशरणागतादिहनन-अयोनौरेतस्सेक-वृषलीपतित्वेतिब्रह्महत्यासमरूपपातकानां निवृत्तिद्वारा शरीरशुध्यर्थं श्रीपमेश्वरप्रीत्यर्थं. कूष्माण्डहोमं करिष्ये" इति सङ्कल्प्य विवाहप्रकरणोक्तप्रकारेण सर्वं कुर्यात्। द्वादशर्चेन वैश्वानरसूक्तेनोपस्थाय समिधमाधायाऽऽचार्याय वरं (चतुर्वर्षां गां) ददाति। ततो यावच्छक्ति ब्राह्मणान्भोजयेत्॥ यः सन्दिग्धेन पापिनाऽत्मानमपूतमिति मनसि शङ्कते सोऽपि कूष्माण्डैर्जुहुयात्॥

## ॥ गणहवनविधिः ॥

(बो. ध. सू. ४. ७, ८) निवृत्तः पापकर्मभ्यः प्रवृत्तः पुण्यकर्मसु॥ यो विप्रस्तस्य सिध्यन्ति विना यन्त्रैरपि क्रियाः॥ ब्राह्मणा ऋजवस्तस्माद्यद्यदिच्छन्ति चेतसा ॥ तत्तदा साधयन्त्याशु संशुद्धा ऋजुकर्मभिः॥ एवमेतानि यन्त्राणि तावत्कार्याणि धीमता। कालेन यावतोपैति विग्रहं शुद्धिमात्मनः॥ एभिर्यन्त्रैर्विशुद्धात्मा त्रिरात्रोपोषितस्ततः॥ तदारभेत येनर्द्धिं कर्मणा प्राप्तुमिच्छति॥

क्षापवित्रं सहस्राक्षो मृगारोंऽहोमुचौ गणौ ॥ पावमान्यश्च कूश्माण्ड्यो वैश्वानर्य ऋचश्च याः ॥ घृतौदनेन ता जुह्वत्सप्ताहं सवन-त्रयम् ॥ मौनव्रती हविष्याशी निगृहीतेन्द्रियक्रियः ॥ " सिंहे म " इत्यपां पूर्णे पात्रेऽवेक्ष्य चतुष्पथे ॥ मुच्यते सर्व पापेभ्यो महतः पातकादपि ॥ वृद्धत्वे यौवने बाल्ये यः कृतः पापसञ्चयः ॥ पूर्वजन्मसु वाऽज्ञानात्तस्मादपि विमुच्यते ॥ भोजयित्वा द्विजा-नन्ते पायसेन सुसर्पिषा ॥ गोभूमितिलहेमानि भुक्तवद्भ्यः प्रदाय च ॥ विप्रो भवति पूतात्मा निर्दग्धवृजिनेन्धनः ॥ काम्यानां कर्मणां योग्यः तथाऽधानादि कर्मणाम् ॥ अतिलोभात्प्रमादाद्वा यः करोति क्रियामिमाम् ॥ अन्यस्य सोंऽहसाऽऽविष्टो गरगीरिव सीदति ॥ आचार्यस्य पितुर्मातुरात्मनश्च क्रियामिमाम् ॥ कुर्वन्भात्यर्कवह्निप्रस्सा कार्यैषामतः क्रिया ॥ क एतेन सहस्राक्षं पवित्रेणाऽ-करोच्छुचिम् ॥ अग्निं वायुं रविं सोमं यमादींश्च सुरेश्वरान् ॥ यत्किञ्चित्पुण्यनामेह त्रिषु लोकेषु विश्रुतम् ॥ विप्रादितत्कृतं केन पवित्रक्रियायाऽनया ॥ प्राजापत्यमिदं गुह्यं पापघ्नं प्रथमोद्भवम् ॥ समुत्पन्नान्यतः पश्चात्पवित्राणि सहस्रशः ॥ योऽब्दायनर्तुपक्षा-हान् जुहोत्यष्टौ गणानिमान् ॥ पुनाति चाऽऽत्मनो वंश्यान् दश पूर्वान् दशाऽपरान् ॥ एतानष्टौ गणान् होतुं न शक्नोति यदि द्विजः ॥ एकोऽपि तेन होतव्यो रजस्तेनाऽस्य नश्यति ॥ सूनवो यस्य शिष्या वा जुह्वत्यष्टौ गणानिमान् ॥ अध्यापनपरिक्रीतैरंहसस्सोऽपि मुच्यते ॥ धनेनाऽपि परिक्रीतैरात्मपापजिघांसया ॥ हावनीया ह्यशक्तेन नाऽवसाद्यश्शरीरधृक् ॥ धनस्य क्रियते त्यागः कर्मणां सुकृतामपि ॥ पुंसोऽनृणस्य पापस्य विमोक्षः क्रियते क्वचित् ॥ मुक्तो यो विधिनैतेन सर्वपापार्णसागरात् ॥ आत्मानं मन्यते शुद्धं समर्थं कर्म साधने ॥ ज्ञायते चाऽमरैः द्युस्थैः पुण्यकर्मेति भूस्थितः ॥ देववन्मोदते भूयस्स्वर्गलोकेऽपि पुण्यकृत् ॥ सर्व-पापार्णमुक्तात्मा क्रिया आरभते तु याः ॥ अयत्नेनैव तास्सिद्धिं यान्ति शुद्धशरीरिणः ॥ प्राजापत्यमिदं पुण्यमृषीणां समु-दीरितम् ॥ इदमध्यापयेन्नित्यं धारयेच्छृणुतेऽपि वा ॥ ॥ मुच्यते सर्वपापेभ्यो ब्रह्मलोके महीयते ॥

( बो. गृ. शे. सू. ५. ६. २२–२६ ) परानपहरेद्यस्तु बालवृक्षान्छिनत्ति यः । भक्षयन्नण्डशिशुकान्गुरून्वा सर्वदा द्विषन् ॥ परपुत्रांश्च यो द्वेष्टि क्रीडन्बद्धमृगादिभिः । निर्दयः सर्वभूतेषु पितृपूजां विलोपयन् ॥ स वंध्यो मृतपुत्रो वा भवेत्तेषां तु निष्कृतिः । मौनी व्रती हविष्याशी हूयते नियतेन्द्रियः ॥ जुह्वन्घृतेन कूश्माण्डैर्गणानष्टौ घृतोदनैः । जपन्वा पौरुषं सूक्तं हेमगोभूतिलान्ददत् ॥ कृच्छ्रातिकृच्छ्रैर्जपकृन्मुच्यते सोंहसः क्षणात् ॥

( बौ. श्रौ. सू. २. ५ ) सिꣳहे मे मन्युः ॥ व्याघ्रे मेऽन्तरामयः ॥ वृके मे क्षुत् ॥ अश्वे मे घसिः ॥ धन्वनि मे पिपासा ॥ राजगृहे मेऽशनया ॥ अश्मनि मे तन्द्रिः ॥ गर्दभे मेऽर्शः ॥ शल्यके मे ह्रीः ॥ अश्वत्थे मे वेपथुः ॥ कूर्मे मेऽङ्गरोगः ॥ वस्ते मेऽपसर्या ॥ अप्रिये मे मृत्युः ॥ भ्रातृव्ये मे पाप्मा ॥ सपत्ने मे निर्ऋतिः ॥ दुष्कीर्तौ मे व्यृद्धिः ॥ परस्वति मेऽसमृद्धिः ॥ खड्गे म आर्तिः ॥ गवये म आन्ध्यम् ॥ गौरे मे बाधिर्यम् ॥ ऋक्षे मे शोकः ॥ गोधायां मे स्वेदः ॥ जरायां मे हिमः ॥ कृष्णशकुनौ मे भीरुता ॥ कशे मे पापो गन्धः ॥ उलूके मे श्वभ्यशः ॥ श्लोके म ईर्ष्या ॥ मर्कटे मे दुर्ऋद्धिः ॥ कुलले मे मꣳस्था ॥ उलले मे प्रध्या ॥ उष्ट्रे मे तृष्णा ॥ अर्शे म श्रमः ॥ अव्यां म आव्यम् ॥ कोशे मे गन्धः ॥ कुमार्यां मेऽलङ्कारः ॥ सूकरे मे क्रदथुः ॥ पृदाखुनि मे स्वप्नः ॥ अजगरे मे दुस्वप्नः ॥ विद्युति मे स्मयशः ॥ लोभायां मे क्लेदः ॥ शलभे मे पाप्मालक्ष्मी ॥ स्त्रीषु मेऽनृतम् ॥ अजासु मे कर्कशः ॥ व्रात्ये म ईर्ष्या ॥ शूद्रे मे स्तेयम् ॥ वैश्ये मेऽकार्मकृत्यम् ॥ राजन्यबन्धुनि मेऽज्ञानम् ॥ नैषादे मे ब्रह्महत्या ॥ कुलिङ्गे मे क्षवथुः ॥ उलले मे विलासः ॥ उद्रिणि मे वमतिः ॥ किम्पुरुषे मे रोदः ॥ द्वीपिनि मे निष्टपत् ॥ हास्तिनि मे किलासः ॥ शुनि मे दुरिप्रस्ना ॥ वन्येषु मे स्लेच्छुः ॥ विदेहेषु मे शीपथः ॥ महावर्षेषु मे ग्लौः ॥ मूजवत्सु मे तप्ना ॥ दुन्दुभौ मे कासिका ॥ इक्ष्वाकुषु मे पित्तम् ॥ कलिङ्गेषु मेऽमेध्यम् ॥ अश्वतर्यां मेऽप्रजस्ता ॥ पुꣳश्चल्यां मे दुश्चरितम् ॥ अखुनि मे दन्तरोगः ॥ मक्षिकायां मे श्वलकशः ॥ शुके मे

हरिमा ॥ मयूरे मे जल्प्या ॥ वृषे मे जरा ॥ चाषे मे पापवादः ॥ अप्सु मे श्रमः ॥ ब्रह्मोज्झे मे किल्बिषम् ॥ अपेहि पाप्मन्पुनरपनाशितो भवा नः पाप्मन्सुकृतस्य लोके पाप्मन्धेह्यविहृतो यो नः पाप्पन्न जहाति तमु त्वा जहिमो वयमन्यत्रास्मान्निविशताꣳ सहस्राक्षो अमर्त्यो यो नो द्वेष्टि स रिष्यतु यमु द्विष्मस्तमु जहीत्यथाऽञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति ॥ तां दिशमेता अप उत्सिञ्चति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इत्यथाप उपस्पृश्य यथेतं प्रविशन्ति ॥

अथ प्रयोगः ॥ अमावास्यां पौर्णमास्यां वा नित्यकर्मान्ते केशश्मश्रुनखलामानि वापयित्वा, स्नात्वाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, " ममेहजन्मनि पूर्वजन्मसु वा बाल्य-कौमार-यौवन-वार्धक्यावस्थासु मनोवाक्कायकर्मभिर्ज्ञानतोऽज्ञानतश्च कृत-परद्रव्यापहरण-बालवृक्षच्छेदन-मृगशावहननाऽण्डभक्षण—मातृ-पितृ-गुरुद्वेषान्यपुत्रेषुविद्वेषण-बद्धमृगादिभिः क्रीडन-सर्वभूतद्रोहाऽष्टकापर्वसङ्क्रांत्यादौ विहितपितृकर्मराहित्येत्यादि समस्तदोषनिवृत्त्या शरीरशुध्यर्थं ( करिष्यमाण-अमुककर्मणः, आधानादि-कर्मणो वा अधिकारसिध्यर्थं ) श्रीपमेश्वरप्रीत्यर्थं गणहवनं करिष्ये " इति सङ्कल्प्य । गणपतिं सम्पूज्य 'अग्न्यादयः प्रीयन्ताम्' इति पुण्याहं वाचयित्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, देशकालौ सङ्कीर्त्य ममेहजन्मनि० गणहवनं करिष्ये, चित्तिर्नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे—अग्ने नयेत्यादि गणाष्टकमन्त्रैः प्रत्यृचं घृताक्तेनान्नेन, अग्निः स्विष्टकृत्, इत्यादि सङ्कल्प्यान्वाधायाऽऽ-प्रणीताभ्यः कृत्वा, अग्रेणाऽग्निं विधिवत्कलशं प्रतिष्ठाप्य वरुणपूजान्तं कृत्वा, तत्र सवितारमावाह्य षोडशोपचारैरभ्यर्च्य, चरुनिर्वापाद्यग्निमुखान्तं कृत्वा, सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय, चरुमध्ये गर्तं कृत्वा प्रभूतमाज्यमानीय मेक्षणेनो-

पहत्य जुहोति — ॐ अग्ने नयं सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा ॥ अग्नय इदं० ॥ १ ॥ प्र वः शुक्राय० जिगाति स्वाहा ॥ अग्नय इदं० ॥ २ ॥ अच्छा गिरो मतयो देवयंतीः ॥ अग्निं यंति द्रविणं भिक्षमाणाः ॥ सुसंदृशꣳ सुप्रतीकꣳ स्वंचम् ॥ हव्यवाहमरतिं मानुषाणाꣳ स्वाहा ॥ अग्नय इदं० ॥ ३ ॥ अग्ने त्वमस्मद्युयोध्यमीवाः ॥ अनग्नित्रा अभ्यमन्त कृष्टीः ॥ पुनरस्मभ्यꣳ सुविताय देव ॥ क्षां विश्वेभिरजरेभिर्यजत्र स्वाहा ॥ अग्नय इदं० ॥ ४ ॥ अग्ने त्वं पारया नव्यो० शं योः स्वाहा ॥ अग्नय इदं० ॥ ५ ॥ प्रकारवो मनना वच्यमानाः ॥ देवद्रीचीन्नयथ देवयन्तः ॥ दक्षिणावाड्वाजिनी प्राच्येति ॥ हविर्भरंत्यग्नये घृताची स्वाहा ॥ अग्नय इदं० ॥६॥ ॐ सहस्रशीर्षा० दशांगुलꣳ स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ १ ॥ पुरुष एवे० तिरोहति स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ २ ॥ एतावानस्य० दिवि स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ ३ ॥ त्रिपादूर्ध्व० अभि स्वाहा ॥ पुरुषाय नारायणायेदं० ॥४॥ तस्माद्विरा० पुरः स्वाहा ॥ पुरुषाय नारायणायेदं० ॥५॥ यत्पुरुषेण० शरद्धविः स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ ६ ॥ सप्तास्या० पशुꣳ स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ ७ ॥ तं यज्ञं० ऋषयश्च ये स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ ८ ॥ तस्माद्यज्ञात्सर्वः हुतः संभृतं० श्च ये स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ ९ ॥ तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि० दजायत स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ १० ॥ तस्मादश्वा अजा० वयः स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ ११ ॥ यत्पुरुषं व्य० वुच्येते स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ १२ ॥ ब्राह्मणोस्य० अजायत स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ १३ ॥ चन्द्रमा मनसो० रजायत स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ १४ ॥ नाभ्या आ० कल्पयन्स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ १५ ॥ वेदाहमेतं० न्यदास्ते स्वाहा ॥ पुरुषाय नारायणायेदं० ॥ १६ ॥ धाता पुरस्ता० विद्यते स्वाहा ॥ पुरुषाय

नारायणायेदं० ॥१७॥ यज्ञेन यज्ञं० सन्ति देवाः स्वाहा ॥ पुरुषाय नारायणायेदं० ॥१८॥ ॐ अग्नेर्मन्वे प्रथमस्य० स नो मुंचत्वꣳ हसः स्वाहा ॥ अग्नयेꣳहोमुच इदं० ॥ १ ॥ यस्येदं प्राणं निमिष० स नो मुंचत्वꣳहसः स्वाहा ॥ अग्नयेꣳहोमुच इदं० ॥ २ ॥ इंद्रस्य मन्ये प्रथमस्य० स नो मुंचत्वꣳ हसः स्वाहा ॥ इन्द्रायाꣳ होमुच इदं० ॥३॥ यस्संग्रामन्नयति सं० स नो मुंचत्वꣳ हसः स्वाहा ॥ इंद्रायाꣳ-होमुच इदं० ॥४॥ मन्वे वां मित्रावरुणा त० ता नो मुंचतमागसः स्वाहा ॥ मित्रावरुणाभ्यामागोमुग्भ्यामिदं० ॥५॥ यो वाꣳरथ ऋजु-रश्मिस्स० तौ नो मुञ्चतमागसः स्वाहा ॥ मित्रावरुणाभ्यामागोमुग्भ्यामिदं० ॥६॥ वायोः सवितुर्विदथानि० स्तौ नो मुञ्चतमागसः स्वाहा ॥ वायुसवितृभ्यामागोमुग्भ्यामिदं० ॥७॥ उप श्रेष्ठा न आशिषो दे० तौ नो मुञ्चतमागसः स्वाहा ॥ वायुसवितृभ्यामागोमुग्भ्या-मिदं० ॥ ८ ॥ रथीतमौ रथीनामह्व ऊतये० स्तौ नोमुञ्चतमागसः स्वाहा ॥ अश्विभ्यामागोमुग्भ्यामिदं० ॥ ९ ॥ यदयातं० तौ नो मुंचतमागसः स्वाहा ॥ अश्विभ्यामागोमुग्भ्यामिदं० ॥ १० ॥ मरुतां मन्वे अधि नो ब्रुवन्तु० ते नो मुञ्चंत्वेनसः स्वाहा ॥ मरुद्भ्य एनोमुग्भ्य इदं० ॥ ११ ॥ तिग्ममायुधं वीडितं० ते नो मुञ्चंत्वेनसः स्वाहा ॥ मरुद्भ्य एनोमुग्भ्य इदं० ॥ १२ ॥ देवानां मन्वे अधिनो ब्रुवन्तु० ते नो मुञ्चंत्वेनसः स्वाहा ॥ विश्वेभ्यो देवेभ्य एनोमुग्भ्य इदं० ॥ १३ ॥ यदिदं माभिशोचति० ते नो मुञ्चंत्वेनसः स्वाहा ॥ विश्वेभ्यो देवेभ्य एनोमुग्भ्य इदं० ॥ १४ ॥ अनु नो द्यानुमतिर्यज्ञं० दाशुषे मयः स्वाहा ॥ अनुमत्या इदं० ॥ १५ ॥ अन्विदनुमते त्वं मन्यासैशं० तारिषः स्वाहा ॥ अनुमत्या इदं० ॥ १६ ॥ वैश्वानरो न ऊत्या० न वाहसा स्वाहा ॥ अग्नये वैश्वानरायेदं० ॥ १७ ॥ पृष्ठो दिवि पृष्ठो अग्निः पृथिव्यां० पातु नक्तꣳस्वाहा ॥ अग्नये वैश्वानरायेदं० ॥१८॥ ये अप्रथेताममिते-भिरोजोभिः० ते नो मुञ्चतमꣳहसः स्वाहा ॥ द्यावापृथिवभ्यामꣳ होमुग्भ्यामिदं० ॥ १९ ॥ उर्वी रोदसी वरिवः कृणोतं० ते नो मुञ्चतमꣳहसः स्वाहा ॥ द्यावापृथिवभ्यामꣳहोमुग्भ्यामिदं० ॥ २० ॥ यत्ते वयं पुरुष० विष्वगग्ने स्वाहा ॥ अग्नय इदं० ॥ २१ ॥

यथा ह तद्वसवो गौर्यं चि० आयुः स्वाहा ॥ अग्नय इदं० ॥२२॥ ॐ या वामिन्द्रावरुणा यतव्या तनूस्तयेमम१हसो मुञ्चतं स्वाहा ॥ इन्द्रावरुणाभ्यामिदं०॥१॥ या वामिन्द्रावरुणा सहस्या तनूस्त० तं स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥२॥ या वामिन्द्रावरुणा रक्षस्या तनूस्त० तं स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥३॥ या वामिन्द्रावरुणा तेजस्या तनूस्त० तं स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥४॥ ॐ यो वामिन्द्रावरुणावग्नौ स्रामस्तंवामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥१॥ यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥ २ ॥ यो वामिन्द्रावरुणा चतुष्पात्सु पशुषु स्रामस्तं वामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥ ३ ॥ यो वामिन्द्रावरुणा गोष्ठे स्रामस्तं वामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥ ४ ॥ यो वामिन्द्रावरुणा गृहेषु स्रामस्तं वामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥५॥ यो वामिन्द्रावरुणाप्सु स्रामस्तं वामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥६॥ यो वामिन्द्रावरुणौषधीषु स्रामस्तं वामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥ ७ ॥ यो वामिन्द्रावरुणा वनस्पतिषु स्रामस्तं वामेतेनावयजे स्वाहा ॥ इन्द्रावरुणाभ्यामिदं० ॥८॥ ॐ पवमानः सुवर्जनः० पुनातु मा स्वाहा ॥ पवमानायेदं० ॥ १ ॥ पुनन्तु मा० आयवः स्वाहा ॥ देवजनमनुविश्वायुभ्य इदं० ॥२॥ जातवेदः० क्रतू१रनु स्वाहा ॥ जातवेदसेऽग्नय इदं० ॥ ३ ॥ यत्ते पवित्रमर्चिषि० पुनीमहे स्वाहा ॥ अग्नय इदं० ॥ ४ ॥ उभाभ्यां देव सवितः० पुनीमहे स्वाहा ॥ देवाय सवित्र इदं० ॥५॥ वैश्वदेवी पुनती० रयीणा१ स्वाहा ॥ वैश्वदेव्यै देव्या इदं० ॥ ६ ॥ वैश्वानरो० पुनीता१ स्वाहा ॥ वैश्वानरवातेषिरद्यावापृथिवीऋतावरीभ्य इदं० ॥ ७ ॥ बृहद्भिः सावितस्तृभिः० पुनाहि मा स्वाहा ॥ सवित्रेऽग्नय इदं० ॥८॥ येन देवा अपुनत० पुनीमहे स्वाहा ॥ देवेभ्योऽद्भ्य इदं० ॥९॥ यः पावमानी० मातरिश्वना स्वाहा ॥ पावमानीभ्य इदं० ॥१०॥ पावमानीर्यो० मधूदकं स्वाहा ॥ पावमा-

नीभ्य इदं० ॥११॥ पावमानीः स्व०हितᳫ स्वाहा ॥ पावमानीभ्य इदं० ॥१२॥ पावमानीर्दिशंतु० समाभृताः स्वाहा ॥ पावमानीभ्य इदं० ॥ १३ ॥ पावमानीः स्वस्त्ययनीः० हितᳫ स्वाहा ॥ पावमानीभ्य इदं० ॥ १४ ॥ येन देवाः पवित्रेण० पुनंतु मा स्वाहा ॥ देवेभ्यः पावमानीभ्य इदं० ॥ १५ ॥ प्राजापत्यं० पुनीमहे स्वाहा ॥ ब्रह्मण इदं० ॥ १६ ॥ इन्द्रः सुनीती० पुनातु स्वाहा ॥ इन्द्राय सुनीत्या सहिताय सोमाय स्वस्त्या सहिताय वरुणाय समीच्या सहिताय यमाय राज्ञे प्रमृणाभिः सहिताय जातवेदस ऊर्जयन्त्या सहितायेदं० ॥१७॥ ॐ यद्देवा देवहेडनं० मामुत स्वाहा ॥ देवेभ्य आदित्येभ्य इदं० ॥१॥ देवा जीवनकाम्या यत्० मृदिम ॥ अग्निर्मा तस्मादेनसः० स ᳫ स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥२॥ ऋतेन द्यावा० कृतमारिम स्वाहा ॥ द्यावापृथिवीभ्याᳫ सरस्वत्या इदं० ॥३॥ सजातशᳫसादुत वा० अनाज्ञातं देव० मुमुग्धि स्वाहा ॥ अग्नये जातवेदस इदं० ॥ ४ ॥ यद्वाचा यन्मनसा० नेनसᳫ स्वाहा ॥ अग्नये गार्हपत्यायेदं०॥५॥ यद्धस्ताभ्यां चकर किल्बिषाणि० मृणानि स्वाहा ॥ दूरेपश्यायै राष्ट्रभृतेऽप्सरोभ्यामिदं० ॥ ६ ॥ अदीव्यन्नृणं० अग्निर्मा० स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ ७ ॥ यन्मयि माता गर्भे० सᳫ स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ ८ ॥ यदापिपेष० भवामि स्वाहा ॥ अग्नय इदं० ॥९॥ यदन्तरिक्षं पृथिवीं० नेनसᳫ स्वाहा ॥ अग्नये गार्हपत्यायेदं०॥१०॥ यदाशसानिशसा० नेनसᳫ स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥११॥ अतिक्रामामि० सुकृतान्नु लोकᳫ स्वाहा ॥ अग्नय इदं० ॥१२॥ त्रिते देवा अमृजतैतदेनः० नेनसᳫ स्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥१३॥ दिविजाता अप्सुजाताः० शुंधनीः स्वाहा ॥ अद्भ्यः शुंधनीभ्य इदं० ॥१४॥ यदापो नक्तं० उत्पुनीत नः स्वाहा ॥ अद्भ्यो हिरण्यवर्णाभ्य इदं० ॥१५॥ इमम्मे वरुण० राचके स्वाहा ॥ वरुणायेदं० ॥१६॥ तत्वा यामि० स्वाहा ॥ वरुणायेदं०॥१७॥ त्वन्नो अग्ने० स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥१८॥ सत्वन्नो अग्ने० स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ १९ ॥ त्वमग्ने अयास्य० भेषजᳫ स्वाहा ॥ अग्नये अयस इदं० ॥ २० ॥ ॐ वैश्वानरो न ऊत्या प्रयातु परावतः । अग्निरुक्थेन वाहसा स्वाहा ॥ अग्नये

वैश्वानरायेदं० ॥ १ ॥ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे स्वाहा ॥ सर्वत्र, अग्नये वैश्वानरायेदं० ॥२॥ वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः । उभा पितरा महयन्न जायताग्निर्द्यावापृथिवी भूरि रेतसा स्वाहा ॥ ३ ॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश । वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तꣳ स्वाहा ॥४॥ जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा । वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः स्वाहा ॥ ५ ॥ त्वमग्ने शोचिषा शोशुचान आरोदसी अपृणा जायमानः । त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा स्वाहा ॥ ६ ॥ अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरꣳ सुवीर्यम् । वयं जयेम शतिनꣳ सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः स्वाहा ॥ ॥ ७ ॥ वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण स्वाहा ॥ इत्येतैर्मन्त्रैः प्रतिमन्त्रं हुत्वा स्विष्टकृदादि होमशेषं समापयेत् ॥ ततो नैर्ऋत्यां दिशि चतुष्पथं गत्वोपाविश्य, पुरतो गोमयेनोपलिप्य तत्र सिकताः सम्प्रकीर्य जलपूर्णं शरावं निधाय परिस्तीर्य तज्जले आत्मनः प्रतिबिम्बमवेक्षमाणो जपति—" सिꣳहे मे मन्युः० यमु द्विष्मस्तमु जहि" इति । अथाऽञ्जलिनाऽप उपहन्ति—'सुमित्रा न आप ओषधयः सन्तु' इति ॥ नैर्ऋत्यां दिशि, स्ववैरिणो यस्यां दिशि निवसन्ति तस्यां वा दिशि निनयति—' दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः ' इति ॥ उदशरावं नैर्ऋत्यां दिशि परास्याप उपस्पृश्य पृष्ठतोऽनवेक्षमाणो यथागतमागत्य हस्तपादान्प्रक्षाल्याऽऽचामेत् ॥ एवमेकाहं, त्र्यहं, सप्ताहं, पञ्चदश दिनानि, एकं मासं, मासद्वयं, षण्मासं, संवत्सरं वा पापानुरूपं गणहोमं कुर्यात् । प्रतिदिनं कालत्रयेऽनुष्ठानम् ॥ कर्मान्ते सर्पिर्मिश्रेण पायसान्नेन यथाशक्ति ब्राह्मणान्भोजयित्वा, गो-भू-तिल-हिरण्यानि यथाशक्ति दक्षिणाञ्च दत्वाऽऽशिषो गृह्णीयात् ॥

# ॥ अथोग्ररथशान्तिः ॥



( बो. गृ. शे. सू. ५. ८ ) ब्राह्मणराजन्यवैश्यानां जन्मदिनादारभ्य षष्टितमसंवत्सरे जन्मदिने जन्मनक्षत्रे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा तस्याऽग्नेयदिग्भागे निष्कद्वयेन मृत्युप्रतिमां कृत्वा धान्यानामुपरि यथाविधि कलशस्थापनं कृत्वा कलशस्योपरि प्रतिमां पूजयेत्—'अपैतु मृत्युः, परं मृत्यो, मा नस्तोके, त्रियम्बकं' इत्यष्टोत्तरशतवारं जपित्वाऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति— 'मा नो महान्तं, मा नस्तोके' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति– घृतसूक्तेन प्रत्यृचम् ॥ स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् ॥ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति ॥ अपरेणाग्निं प्राङ्मुख उपविश्य मृत्युसूक्तायुष्यसूक्तपुराणमन्त्रैः कलशोदकेनात्मानमभिषिच्याचार्यं सम्पूज्य ऋत्विग्भ्यो यथाशक्ति दक्षिणां दत्वा ब्राह्मणान्भोजयेदित्याह भगवान् बोधायनः ॥

अथ प्रयोगः ॥ कर्ता जन्मदिनादारभ्य षष्टितमसंवत्सरे जन्ममासे जन्मनक्षत्रे ( असम्भवे तद्वर्षान्तर्गतजन्मर्क्षे वा चन्द्रतारादिबलान्वितशुभे काले ) सपत्नीकः प्रातर्मङ्गलस्नानं विधाय, शान्त्युपयोगिसम्भारान्सम्भृत्य भद्रासने प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "अमुकगोत्रस्य, अमुकनक्षत्रजातस्य, अमुकशर्मणो मम जन्मनः सकाशात् षष्टितमाब्दप्राप्त्या भविष्यत्वेन सूचितानामपमृत्यु-घोरमृत्यु-दुःस्वप्नदर्शन-मातापितृमृति-भार्यापुत्रवियोग-राजभय-ज्वरादिविविधरोगबाधा-मतिवैकल्येन्द्रियवैकल्य–छायाविकृति- दृष्टिदन्ताद्यवयवशैथिल्याद्यनेकाऽध्यात्मिकबाधानां प्रशमनार्थं, ग्रहपीडाऽग्निबाधा–स्फुटध्रुवनक्षत्रज्योतिषामदर्शन – यक्षराक्षसभूतप्रेतपिशाचशाकिनीडाकिन्यादिविविधदर्शनाद्याधिदैविकबाधापरिहारार्थं, सर्पवृश्चिकदुष्टकीट-

कदंश–व्याघ्रसिंहशृगालव्यालबाधाद्याधिभौतिकपीडानिवारणार्थं, अन्येषाञ्च महोत्पातानामरिष्टरूपाणां परिहारपूर्वकदीर्घायुरारोग्यादिसुखसम्पत्समृध्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं, सग्रहमखामुग्ररथशान्तिं करिष्ये " इति सङ्कल्प्य । गणपतिं सम्पूज्य, मातृकापूजनं नान्दीश्राद्धञ्च विधाय, 'मृत्युः प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादीनृत्विजो वृत्वा तान्यथाविभवमभ्यर्चयेत् ॥ अथाचार्यो गोमयेन गोचर्ममात्रञ्चतुरस्रं स्थण्डिलमुपलिप्य, तस्याग्नेयादिग्भागे व्रीहिभिर्यवैर्वा दक्षिणोत्तरक्रमेण स्थण्डिलद्वयं कृत्वा, दक्षिणे स्थण्डिले ग्रहानावाह्य सम्पूज्य, उत्तरे स्थण्डिले कलशं प्रतिष्ठाप्य तस्मिञ्छुद्धजलं सप्तमृत्तिकाः पञ्चपल्लवान्पञ्चत्वचः पञ्चगव्यं पञ्चामृतं पञ्चरत्नानि सर्वौषधीश्च निक्षिप्य वस्त्रद्वयेनावेष्ट्य पूर्णपात्रं निधाय वरुणं संपूज्य, निष्कद्वयसुवर्णनिर्मितां मृत्युप्रतिमामग्युत्तारणपूर्वकं पूर्णपात्रे निधाय, " मा नो महान्तं०, मा नस्तोके० " इति द्वाभ्यां मृत्युमावाह्य षोडशोपचारैः सम्पूज्य, " अपैतु मृत्युः०, परं मृत्यो०, मा नो महान्तं०, मा नस्तोके०, त्र्यम्बकं यजामहे० " इति मन्त्रपञ्चकमष्टोत्तरवारं कलशं स्पृष्ट्वा जपेत् ॥ ( श्रीसूक्तं, पुरुषसूक्तं, रुद्रैकादशिनीं, सम्भवे ऋगादिवेदांश्च ) अथाऽऽचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्याऽमुकगोत्रस्य यजमानस्य जन्मनः सकाशात्० श्रीपरमेश्वरप्रीत्यर्थं ग्रहमखपूर्वकमुग्ररथशान्तिहोमं करिष्ये० ग्रहान्वाधानमुक्त्वा, उग्ररथशान्तिहोमः कर्म, वरदो नामाऽग्निः, मृत्युर्देवता, चरुर्हविः, उपहोमश्च–यो ब्रह्मा ब्रह्मणः० इत्यष्टर्चेन घृतसूक्तेन ईशानादि देवताः केवलाज्येन एकैकवारं यक्ष्ये, स्विष्टकृतः अर्यमादयो देवताः, इत्यादि सङ्कल्प्यान्वाधायाऽऽप्रणीताभ्यः कृत्वा, आदित्यादिग्रहेभ्यो मृत्यवे च सिद्धमोदनं निरुप्य प्रोक्ष्याऽग्नावुत्तरतोऽधिश्रित्याऽऽज्यसंस्काराद्यभिमुखान्तं कृत्वा, ग्रहाणां पक्वं हुत्वा व्याहृतीर्मिन्द्राहुती च हुत्वा । 'मा नो महान्तं०, मा नस्तोके०' इति द्वाभ्यां मृत्यवे पक्वं जुहुयात् ( मृत्यव इदं० ) अथ स्विष्टकृतमवदायान्तःपरिधौ निधायाऽन्वाधानोक्तक्रमेणोपहुत्य, स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निं

दूर्वास्तम्बेषु हुतशेषं निदधाति 'मा नो महान्तं०, मा नस्तोके' इति द्वाभ्याम्। तत उत्तरपरिषेकादि होमशेषं समाप्यावाहितदेवताः पुनः सम्पूज्य, लाजाऽपूपपृथुकपायसादीन्निवेद्य 'अपैतु मृत्युः०' इत्यादि मन्त्रैः सम्प्रार्थ्य देवता उद्वासयेत्॥ अथर्त्विजः– अपरेणाऽग्निं यजमानं सपरिवारं प्राङ्मुखमुपवेश्य, मृत्युसूक्तेनाऽऽयुष्यसूक्तेन (पुरुषसूक्तेन शान्तिसूक्तेन पवमानसूक्तेन सुरास्त्वां० इत्यादिभिः शिवसङ्कल्पमन्त्रैश्च) प्रोक्षेयुः॥ ततो यजमानः पूर्वधृतवासो विसृज्यान्यदहतं वस्त्रं परिधायाऽऽचम्य, (पुरतो दीपं, फलं, दूर्वाः, गन्धं, पुष्पं, गोरोचनं, सिद्धार्थान्, दर्पणं, दधि, आज्यं, कज्जलं, शतमानं हिरण्यञ्चासाद्याऽऽयुष्य-सूक्तेनाभिमन्त्र्याथाचार्यः षष्टिग्रन्थियुतं मङ्गलवस्त्रमायुष्यसूक्तेन यजमानस्य दक्षिणहस्ते बध्नाति॥ अथ यजमानः 'स्योना पृथिवि०' इति भूमिं प्रार्थ्य, 'अग्ने त्वन्नो अन्तमः। उत त्राता शिवो भव वरूथ्यः' इति दीपं दृष्ट्वा, 'याः फलिनीः०' इति हस्ते फलं गृहीत्वा, 'काण्डात्काण्डात्०' इति दूर्वाः शिरसि निधाय, 'गन्धद्वारां०' इति गन्धं ललाटेऽनुलिप्य, 'आयने ते०' इति पुष्पं शिरसि धृत्वा, 'युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः। रोचन्ते रोचना दिवि' इति गोरोचनेन ललाटे तिलकं कृत्वा, 'दधिक्राव्णो०' इति सिद्धार्थान् शिरसि निधाय, "युञ्जते मन उत युञ्जते धियः॥ विप्रा विप्रस्य बृहतो विपश्चितः॥ वि होत्रा दधे वयुना विदेक इत्। मही देवस्य सवितुः परिष्टुतिः" इति दर्पणे मुखमवलोक्य, 'उदु त्यं जातवेदसं०' इति दध्ना ललाटे तिलकं कृत्वा, 'सहस्राक्षेण०' इत्याज्येन मुखप्रभृत्यनुलोममापादमभ्यज्य, 'वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि' इत्यक्षिणी अञ्जयित्वा, 'शतं जीव शरदो वर्धमानः०' इति दक्षिणहस्तस्थं वस्त्रग्रन्थिं प्रार्थयेत्॥) आचार्यादीन्सम्पूज्य, दशदानं, कुण्डले, हारं, अङ्गुलीयकं, दीपं, निरीक्षिताज्यं, "शतमान शतायुष्य शतवीर्य शतप्रिय। अतस्त्वां सम्प्रयच्छामि शतायुस्त्वं प्रयच्छ मे"

इति शतमानं हिरण्यञ्च दद्यात् । अथाचार्याय सपीठं कलशं, ऋत्विग्भ्यो यथाशक्ति भूयसीं दक्षिणां च दद्यात् । पुरन्ध्र्यो यथाचारं मङ्गलार्तिक्यं कुर्युः ॥ ततः स्वेष्टदेवता आचार्यं मातरं पितरं ब्राह्मणान् सुवासिनीश्च नमस्कृत्य, सहस्रं शतं वा ब्राह्मणान् सुवासिनीश्च सम्भोज्य आशिषो गृह्णीयात् ॥

## ॥ अथ मृत्युञ्जयकल्पः ॥

(बो. गृ. शे. सू. ३. ११) जन्मनक्षत्रे पुण्ये नक्षत्रे त्रिजन्मनि वा ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वाऽथदेवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा 'सावित्र्या' पक्वं हुत्वा प्रादेशमात्रास्तिस्रस्तिस्रो दूर्वा एकां समिधमाहृत्य अष्टसहस्रमष्टशतमष्टाविंशतिर्वा दधिमधुघृतपयांसि समुदायुत्याऽभ्यज्याऽऽदधाति — 'अपैतु मृत्युः, परं मृत्यो, मा नो महान्तम्, मा नस्तोके, त्रियम्बकम्, ये ते सहस्रम्' इत्यष्टषष्टिशतकृत्व आवर्तयेत्तदानीं अष्टसहस्रं सम्पद्यते ॥ अथाऽऽज्याहुतीरुपजुहोति — 'मृत्युर्नश्यत्वायुर्वर्धतां भूस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां भुवस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां सुवस्स्वाहा । मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवस्सुवस्स्वाहा' इति ॥ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाग्रेणाऽग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति —'तच्छं योरावृणीमहे' इति ॥ अथ दक्षिणां ददाति—धेनुमृषभमनड्वाहं कंसं हिरण्यं वासो वेत्वपपुनर्मृत्युं जयतीति ह स्माह भगवान् बोधायनः ॥

अथ प्रयोगः ॥ (देवालये, नदीतीरे, गोष्ठे, पुण्यतमे स्थले, स्वगृहे वा) कर्ता स्वजन्मनक्षत्रे, पुण्यनक्षत्रे त्रिजन्मनि वा प्रातर्नित्यकर्म कृत्वा आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम समस्तापमृत्युनिवृत्त्या दीर्घायुष्याभिवृद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं

मृत्युञ्जयशान्तिं करिष्ये" इति सङ्कल्प्य गणपतिं सम्पूज्य ब्राह्मणानन्नेन परिविष्य "मृत्युञ्जयः प्रीयताम्" इति पुण्याहं वाचयित्वाऽऽचार्यादीन्वृत्वा देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मम समस्त० (शक्तौ–सग्रहमखां) मृत्युञ्जयशान्तिहोमं करिष्ये० वरदो नामाग्निः, सविता देवता, चरुर्हविः, उपहोमश्च पयोदधिमधुघृताक्तश्वेतदूर्वात्रययुतपलाशसमिद्भिः (अपैतु मृत्युः०, परं मृत्यो०, मा नो महान्तं०, मा नस्तोके० त्र्यम्बकं०, ये ते सहस्रं०' इति षडर्चेन) मृत्युसूक्तेन अष्टषष्ट्यधिकशतावृत्त्याष्टोत्तरसहस्रसंख्याकाहुतिभिः, मृत्युर्नश्यत्वित्यादि चतुर्भिर्मन्त्रैराज्येन, अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं व्रीहिभिर्यवैर्वा निर्मिते स्थण्डिले कलशं प्रतिष्ठाप्य वरुणं सम्पूज्य कलशे प्रतिमां विन्यस्य मृत्युसूक्तेन मृत्युञ्जयमावाह्य षोडशोपचारैः सम्पूज्य देवस्य त्वेत्यादि सवित्रे चरुं निरुप्य प्रोक्षयाज्यसंस्काराद्यग्निमुखान्तं कृत्वा सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधाय दधि-मधु-घृत-पयांसि समुदायुत्य प्रादेशमात्राभिः तिसृभिस्तिसृभिः श्वेतदूर्वाभिः सहैकैकां पालाशीं समिधमभ्यज्यान्वाधानोक्तक्रमेण हुत्वाऽऽज्याहुतीरुपजुहोति–मृत्युर्नश्यत्वायुर्वर्धतां भूः स्वाहा, मृत्युर्नश्यत्वायुर्वर्धतां भुवः स्वाहा, मृत्युर्नश्यत्वायुर्वर्धतां सुवः स्वाहा, मृत्युर्नश्यत्वायुर्वर्धतां भूर्भुवः सुवः स्वाहा, इति॥ सर्वत्र, मृत्युञ्जयायेदं०॥ स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाग्निं दूर्वास्तम्बेषु "तच्छं योरावृणीमहे० शं चतुष्पदे" इति हुतशेषं निधायोत्तरपरिषेकादि होमशेषं समाप्यावाहितदेवतां पुनः सम्पूज्योद्वासयेत् ॥ आचार्यादयः कलशोदकेन मृत्युसूक्तादिभिः सपरिवारं यजमानं प्रोक्षेयुः ॥ आचार्याय कलशदानं, गोदानं, वस्त्रयुग्मदानमृत्विग्भ्यो यथाशक्ति दक्षिणादानं च कृत्वा ब्राह्मणान्सम्भोज्याऽऽशिषो गृह्णीयात् ॥

---

१. "अमुकनक्षत्रे अमुकराशौ जातस्यामुकशर्मणः" इत्यादि सूत्रान्तरे विशेष उक्तः ॥

## ॥ अथ पुत्रप्रतिग्रहविधिः ॥

( बो. गृ. शे. सू. २·६ ) अथातः पुत्रप्रतिग्रहकल्पं व्याख्यास्यामः — शोणितशुक्लसम्भवो मातृपितृनिमित्तकस्तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ कर्तारौ प्रभवतो न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषाम् ॥ न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्राऽनुज्ञानाद्भर्तुः ॥ पुत्रं प्रतिग्रहीष्यन्नुपकल्पयते — द्वे वाससी द्वे कुण्डले अङ्गुलीयकं चाऽऽचार्यञ्च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममिति ॥ अथ बन्धूनां मध्ये राजनि चावेद्य परिषदि वाऽगारमध्ये ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्त्यृद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्याऽऽप्रणीताभ्यः कृत्वा दातुस्समीपं गत्वा 'पुत्रं मे देहि' इति भिक्षेत। 'ददामि' इतीतर आह ॥ तं पुत्रं प्रतिगृह्णाति — 'धर्माय त्वा गृह्णामि सन्तत्यै त्वा गृह्णामि' इति ॥ अथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चाऽलङ्कृत्य परिधानप्रभृत्याऽऽग्निमुखात् कृत्वा पक्वाज्जुहोति — 'यस्त्वा हृदा कीरिणा मन्यमानः' इति पुरोनुवाक्यामनूच्य 'यस्मै त्वं सुकृते जातवेदः' इति याज्यया जुहोति ॥ अथ व्याहृतीभिर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथ दक्षिणां ददात्येते एव वाससी एते एव कुण्डले एतच्चाङ्गुलीयकम् ॥ यद्येवं कृते औरसः पुत्र उत्पद्यते तुरीयभागेष भवतीति ह स्माह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ पुत्रप्रतिग्रहीता पूर्वमेव बन्धूनां राज्ञां शिष्टानां सन्निधौ वा निवेद्याऽनुमतिं लब्ध्वा, शुक्लपक्षे शुभनक्षत्रे चन्द्रताराबलान्विते शुभे दिने; प्रातर्नित्यकर्म कृत्वा, गृहमध्य उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'ममाऽप्रजत्वप्रयुक्तपैतृकर्णाऽपाकरणार्थं पुन्नामनरकत्राणार्थञ्च श्रीपरमेश्वरप्रीत्यर्थं पुत्रप्रतिग्रहं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य

मातृकापूजनं नान्दीश्राद्धञ्च विधाय 'जातवेदोऽग्निः प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यं वृत्वा मधुपर्केणाऽर्हयित्वा, विष्णुं सम्पूज्य बान्धवान्ब्राह्मणांश्च सम्भोजयेत् ॥ अथ देवयजनोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, ममाप्रजत्व० पुत्रप्रतिग्रहहोमं करिष्ये० बलवर्धनो नामाऽग्निः जातवेदोऽग्निर्देवता, चरुर्हविः, अग्निः स्विष्टकृदित्यादि सङ्कल्प्या-न्वाधाय, पात्राऽऽसादने प्राकृतपात्राण्यासाद्य, पर्णमयमिध्मं, कुशमयं बर्हिः, द्वे वाससी, द्वे कुण्डले, अङ्गुलीयकञ्चासादयेदिति विशेषः ॥ पवित्रकरणाद्याप्रणीताभ्यः कृत्वा, पुत्रप्रतिग्रहीता ब्राह्मणैर्बन्धुवर्गैश्च सह दातुः समीपं गत्वा, 'पुत्रं मे देहि' इति भिक्षेत। ततो दाता 'ददामि' इत्युक्त्वाऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'प्रतिग्रहीतुः पैतृकर्णाऽपाकरणार्थं पुन्नामनरकत्राणार्थञ्च आत्मनः श्रीपरमेश्वरप्रीत्यर्थं पुत्रदानं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, प्रतिग्रहीतारं यथाविभवं सम्पूज्य "इमं पुत्रं तव पैतृकर्णाऽपाकरणार्थं पुन्नामनरकत्राणार्थञ्च आत्मनः श्रीपरमेश्वरप्रीत्यर्थं तुभ्यमहं सम्प्रददे, न मम, पुत्रं प्रतिगृह्णातु भवान्" इति पत्न्याऽन्वारब्धो दद्यात् ॥ प्रतिग्रहीता पत्न्या सह प्रतिगृह्णाति—"देवस्य त्वा० हस्ताभ्यां प्रतिगृह्णामि राजा त्वा वरुणो नयतु० प्रजापतये पुरुषं, तेनाऽमृतत्वमश्यां० उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु, धर्माय त्वा गृह्णामि, सन्तत्यै त्वा गृह्णामि" इति ॥ ततः कुमारं पूर्वासादितवस्त्रकुण्डलाऽङ्गुलीयकैरलङ्कृत्य, मङ्गलमन्त्रघोषपुरस्सरं देवयजनमानीयाऽग्नेः पश्चाद्भार्योत्सङ्ग उपवेशयेत् ॥ ततो देवस्य त्वेत्यादि जातवेदसेऽग्नये चरुं निरुप्य प्रोक्ष्याऽऽज्यसंस्काराद्यग्निमुखान्तं कृत्वा पक्वा-ज्जुहोति—'यस्त्वा हृदा०, यस्मै त्वं०' इति द्वाभ्याम्। (जातवेदसेऽग्नय इदं०) स्विष्टकृतमवदायान्तःपरिधौ निधाय व्याहृतीभि-राज्येनोपहुत्य, स्विष्टकृदादि होमशेषं समापयेत् ॥ तत आचार्याय धेनुं, पुत्रधृते वाससी, कुण्डले, पुत्रधृतमङ्गुलीयकञ्च दत्वा, दश सङ्ख्याकान् ब्राह्मणान् भोजयित्वाऽऽशिषो गृह्णीयात् ॥

## ॥ अथ सरस्वतीकल्पः ॥

( बो. गृ. शे. सू. ३. ९ ) अथातस्सरस्वतीकल्पं व्याख्यास्यामः ॥ शुक्लपक्षे त्रयोदश्यां वोत्तरयोः फाल्गुन्योर्वा पुण्ये नक्षत्रेऽथ देवयजनोल्लेखनप्रभृत्याऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं सरस्वतीमावाहयति—' आयातु वरदा देवी अक्षरं ब्रह्मसम्मितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व नः ॥ सरस्वतीमावाहयामि ' इत्यावाह्यात्र स्थानानि कल्पयति—' वाग्देव्यै कल्पयामि, गीर्देव्यै क०, सरस्वत्यै क०, ब्राह्म्यै कल्पयामि ' इति ॥ अथैनास्स्नापयति–'आपो हि ष्ठा. हिरण्यवर्णाः, पवमानः ' इत्येतेनानुवाकेन मार्जयित्वाऽद्भिरतर्पयित्वैतैरेव नामधेयैर्गन्धपुष्पधूपदीपैः ' अमुष्यै नमोऽमुष्यै नमः ' इति । परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति पायसं वा--' चोदयित्री सूनृतानां, पावीरवी कन्या ' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति--' प्र णो देवी, आ नो दिवः, ये ते सरस्व ऊर्मयः, उत नः प्रिया प्रियासु, इमा जुह्वाना, यस्ते स्तनश्शशयः, देवीं वाचमजनयन्त, यद्वाग्वदन्ति ' इत्येतेन सूक्तेन ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाग्रेणाऽग्निं पलाशपर्णेषु हुतशेषं निवेदयित्वा बाह्यबलिं दत्वोदेत्यापरेणाग्निं प्राङ्मुखं कुमारमुपवेश्य विद्यारम्भं कुरुते अनन्तरं देवीमुद्वासयेत्— ' उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्यो ह्यनुज्ञातं गच्छ देवि यथासुखम् ' इति पुनरागमनाय पुनर्दर्शनाय ॥ एवमेव मासिमासि विद्याकांक्षी सरस्वतीमाराधयेदित्याह भगवान्बोधायनः ॥

अथ प्रयोगः ॥ शुक्लपक्षे त्रयोदश्यामुत्तराफल्गुनीनक्षत्रे चन्द्रताराबलान्विते शुभनक्षत्रे वा, पिता कुमारेण सह प्रातर्नित्यकर्म कृत्वा, स्नानादिचतुष्टयं विधायाऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, ' अस्य कुमारकस्य निर्विघ्नेन समस्तविद्याप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सरस्वत्याराधनं करिष्ये ' इति सङ्कल्प्य, गणपतिं सम्पूज्य ' वाग्देव्यादिसरस्वती प्रीयताम् ' इति पुण्याहं वाचयित्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यास्य

कुमारकस्य० सरस्वती होमं करिष्ये० बलवर्धनो नामाऽग्निः, सरस्वती देवता, चरुर्हविः ( पायसं वा ) उपहोमश्च—प्र णो देवी० इत्येतेनाऽष्टर्चेन सूक्तेनाज्येन, अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निमष्टदलोपरि तण्डुलैस्स्थ-ण्डिलं कृत्वा, विधिवत्कलशं प्रतिष्ठाप्य वरुणपूजान्तं कृत्वा, "आयातु वरदा देवी अक्षरं ब्रह्म सम्मितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व नः" इत्युक्त्वा 'ॐ भूः सरस्वतीमावाहयामि । ॐ भुवः सरस्वती० । ॐ सुवः सरस्वती० । ॐ भूर्भुवः सुवः सरस्वती०' इत्यावाह्य, ततोऽक्षतपुञ्जेषु पूर्वादि प्रादक्षिण्येन — "ॐ वाग्देव्यै कल्पयामि। गीर्देव्यै कल्प०। सरस्वत्यै कल्प० । ब्राह्म्यै कल्प०" इति दर्भत्रयनिर्मितं कूर्चं प्रत्येकं निधाय, स्थानानि कल्पयित्वा, "ॐ भूर्भुवः सुवः वाग्देव्यै नमः वाग्देवीमावाहयामि" एवमेव "गीर्देवीमावाहयामि, सरस्वतीमावाहयामि, ब्राह्मीमावाहयामि" इति क्रमे-णावाह्य षोडशोपचारैः पूजयेत् ॥ 'आपो हि ष्ठा०' इति तिसृभिः 'हिरण्यवर्णाः०' इति चतसृभिः 'पवमानः सुवर्जनः०' इत्येतेनानुवाकेन स्नापयित्वा 'ॐ सरस्वतीं तर्पयामि, वाग्देवीं०, गीर्देवीं०, सरस्वतीं०, ब्राह्मीं०' इत्यद्भिस्तर्पयित्वा, 'सरस्वत्यै नमः, वाग्देव्यै नमः, गीर्देव्यै०, सरस्वत्यै०, ब्राह्म्यै०' इत्येतैर्नामधेयैर्गन्ध-पुष्प-धूप-दीपैरभ्यर्च्य । देवस्य त्वेत्यादि सरस्वत्यै चरुं निरुप्य प्रोक्ष्याऽऽज्यसंस्काराद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति — 'चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती३म्पावीर-वी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् । ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षं गृणते शर्म यꣳसत्स्वाहा' ( सरस्वत्या इदं० ) अथ स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽज्याहुतीरुपजुहोति — प्र णो देवी० ॥ आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मान्नो वाचमुशती शृणोतु स्वाहा ॥ ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः ।

तेषान्ते सुम्नमीमहे स्वाहा ॥ उत नः प्रिया प्रियासु ॥ सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भूत्स्वाहा ॥ इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमꣳ सरस्वति जुषस्व । तव शर्मन्प्रियतमे दधानाः ॥ उप स्थेयामं शरणं न वृक्षꣳ स्वाहा ॥ यस्ते स्तनः० ॥ देवीं वाचमजनयन्त० ॥ यद्वाग्वदन्ति० ॥ इति ॥ (सर्वत्र, सरस्वत्या इदं०) स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निं पलाश-पर्णेषु— मध्ये " सरस्वत्यै स्वाहा नमः " तद्बहिः पूर्वादि चतुर्दिक्षु " वाग्देव्यै स्वाहा नमः, गीर्देव्यै०, सरस्वत्यै०, ब्राह्म्यै० " इति हुतशेषं निधाय बहिर्गत्वा, " ये भूताः प्रचरन्ति० पुष्टिपतिर्दधातु स्वाहा " इति हुतशेषेण बलिं दद्यात् ॥ अथ हस्तपादान्प्रक्षाल्याचम्य, यथागतमागत्योत्तरपरिषेकादि होमशेषं समाप्यावाहितदेवताः पुनः सम्पूज्य " सरस्वति नमस्तुभ्यं वरदे कामरूपिणि । विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा " इति सम्प्रार्थ्य, स्वविद्यासूत्रकारादीन्प्रणम्यापरेणाऽग्निं कुमारं प्राङ्मुखमुपवेश्य विद्यारम्भं कुर्यात् ॥ " उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्यो ह्यनुज्ञातं गच्छ देवि यथासुखम् ॥ ॐ भूः सरस्वतीमुद्वासयामि, ॐ भुवः सर०, ॐ सुवः०, ॐ भूर्भुवः सुवः० " एवं क्रमेण 'वाग्देवीं०, गीर्देवीं०, सरस्वतीं०, ब्राह्मीमुद्वासयामि, प्रयातु भगवति सरस्वति पुनरागमनाय पुनर्दर्शनाय " इत्युद्वासयेत् ॥ ततः कलशोदकेनाभिषेकः ॥ ब्राह्मणान्सम्पूज्य कलशदानं यथाशक्ति दक्षिणादानञ्च कृत्वा ब्राह्मणान्भोजयित्वाऽऽशिषो गृह्णीयात् ॥ एवमेव विद्याकामो मासिमासि सरस्वतीमाराधयेत् ॥

## ॥ अथ रविकल्पः ॥

( बो. गृ. शे. सू. ३. ८ ) अथातो रविकल्पं व्याख्यास्यामः—मण्डलं चतुरश्रं वा गोमयेन गोचर्ममात्रं स्थण्डिलं कृत्वाऽष्टाचत्वारिंशत्कृत्वो रविवारे ताम्रपात्रे रक्तगन्धं रक्तपुष्पं वा ' घृणिस्सूर्य आदित्यः ' इत्यावाह्य ' आसत्येन ' इत्यर्घ्यं दद्यात् ' हंसश्शु-

चिषत्' इति पाद्यं 'अग्निर्मूर्धा' इत्याचमनीयं 'आपो हि ष्ठा' 'हिरण्यवर्णाः' 'पवमानः' इत्येतेनानुवाकेन मार्जयित्वाऽद्भिस्तर्पयति—'धातारं तर्पयामि, विधातारं०, अर्यमणं०, मित्रं०, वरुणं०, भगवन्तं०, हंसं०, पूषणं०, पर्जन्यं०, विवस्वन्तं०, इन्द्रं०, रविं तर्पयामि' इत्येतैरेव नामधेयैर्गन्धपुष्पधूपदीपैः 'अमुष्मै नमोऽमुष्मै नमः' इति ॥ व्याहृतीभिः 'पुरुषमुद्वासयामि' इत्युद्वास्याऽथाऽपूपं दद्यादष्टाचत्वारिंशत् ॥ एकवारमर्चयित्वा कुष्ठरोगी क्षयरोगी ॥ बन्धाद्विमुच्यते बद्धो रोगी रोगाद्विमुच्यते ॥ इत्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ कर्ता रविवासरे प्रातर्नित्यकर्म कृत्वा शुचौ देशे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य, तन्मध्ये सिकताभिर्वर्तुलं चतुरश्रं वा रविमण्डलं विलिख्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, "ममेह जन्मनि जन्मान्तरे वा कृतकायिक-वाचिक-मानसिकादि-समस्तपातकवशादिहे समुत्पन्नोत्पत्स्यमान-कुष्ठ-क्षय-राजयक्ष्मापस्मार-अर्धाङ्ग-सर्वाङ्गसन्धि-धनुर्वात-हृद्रोगादि समस्ताऽसह्यरोगनिवृत्त्या दीर्घायुरारोग्यप्राप्त्यर्थं (कारागारवासादिप्राप्तबन्धननिवृत्त्यर्थं) श्रीपरमेश्वरप्रीत्यर्थं रविपरिचर्यां करिष्ये" इति सङ्कल्प्य, गणपतिं सम्पूज्य, रविमण्डले 'रवये नमः आसनं कल्पयामि' इति दर्भत्रयकृतं प्रागग्रं कूर्चं निधाय, "घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम्। मधु क्षरन्ति तद्रसम्। सत्यं वै तद्रसमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्" इति रविमावाह्य। ताम्रपात्रे—शुद्धजलं प्रपूर्य, रक्तगन्धं रक्तपुष्पं रक्ताक्षतान्निक्षिप्य, 'इमम्मे गङ्गे० मया' इत्यभिमन्त्र्य, तासामेकदेशं पात्रान्तरेणादाय "हꣳसः शुचिषत्०" इति पाद्यं दत्वा, "आसत्येन० विपश्यन्" इत्यष्टाचत्वारिंशद्वारमर्घ्यं दद्यात् ॥ "अग्निर्मूर्धा०" इत्याचमनीयम्० ॥ "आपो हि ष्ठा०" इति तिसृभिः, "हिरण्यवर्णाः०" इति चतसृभिः, "पवमानः सुवर्जनः०" इत्येतेनानुवाकेन मार्ज-

यित्वाऽद्भिस्तर्पयति — ॐ धातारं तर्पयामि। विधातारं०। अर्यमणं०। मित्रं०। वरुणं०। भगवन्तं०। हंसं०। पूषणं०। पर्जन्यं०। विवस्वन्तं०। इन्द्रं०। रविं तर्पयामि ॥ इति तर्पयित्वा, ॐ धात्रे नमः। विधात्रे०। अर्यम्णे०। मित्राय०। वरुणाय०। भगवते०। हंसाय०। पूष्णे०। पर्जन्याय०। विवस्वते०। इन्द्राय०। रवये नमः॥ इति द्वादश नाममन्त्रैरभ्यर्च्य, "युवं वस्त्राणि०" इति वस्त्रं, "यज्ञोपवीतं०" इति यज्ञोपवीतं, "गन्धद्वारां०" इति गन्धं, "आयने ते०" इति रक्तपुष्पाणि, 'वनस्पतिरसोत्पन्नो०' इति धूपं, "ज्योतिश्शुक्रश्च०" इति दीपञ्च समर्प्य "देवस्य त्वा०" इति अपूपं निवेद्य, पानीयमाचमनीयञ्च दत्वा,'पूगीफलसमायुक्तं० इति ताम्बूलं, हिरण्यगर्भगर्भस्थं० इति दक्षिणां, विश्वतश्चक्षुः० इति नीराजनं, "भास्कराय विद्महे महद्युतिकराय धीमहि। तन्नो आदित्यः प्रचोदयात्" इति मन्त्रपुष्पं०॥ यानि कानि च० इति प्रदक्षिणाः॥ 'धात्रे नमः' इत्यादि नाममन्त्रैर्द्वादश नमस्कारान्कृत्वा, उद्यन्नद्य मित्रमहः। सपत्नान्मे अनीनशः। दिवैनान्विद्युता जहि। निम्रोचन्नधरान्कृधि॥ १॥ उद्यन्नद्य वि नो भज। पिता पुत्रेभ्यो यथा। दीर्घायुत्वस्य हेशिषे। तस्य नो देहि सूर्य॥ २॥ उद्यन्नद्य मित्रमहः। आरोहन्०॥ ३॥ शुकेषु मे०॥ ४॥ उदगादयमादित्यः०॥ ५॥ इत्येतैर्मन्त्रैः प्रार्थयेत्॥ यस्य स्मृत्येति विष्णुं स्मृत्वा अनेन पूजनेन भगवान् श्रीरविः प्रीयताम्॥ इति समर्प्य, "ओं भूर्भुवः सुवः पुरुषं रविमुद्वासयामि" इत्यावाहितदेवतामुद्वास्य ब्राह्मणं सम्पूज्य, अष्टाचत्वारिंशत्सङ्ख्याकानपूपान् दक्षिणाञ्च दत्वाऽऽशिषो गृह्णीयात्॥ एवमेव अष्टाचत्वारिंशद्रविवारेषु कुर्यात्॥ ॥

## ॥ अथ सहस्रभोजनविधिः ॥

(बो. गृ. शे. सू. ३. १७) अथातस्सहस्रभोजनविधिं व्याख्यास्यामः—उदगयने पूर्वपक्षे पुण्ये नक्षत्रे त्रिजन्मनि दक्षिणायने

वा कुर्यात् ॥ स्वगृहे देवगृहे वा यत्र शुचिदेशः स्यात्तत्र शुचिर्भूत्वा युग्मान् ब्राह्मणान् सुप्रक्षाळितपाणिपादानप आचमय्य आसनं कल्पयित्वा गन्धपुष्पधूपदीपैरभ्यर्च्य ' सङ्कल्पसिद्धिरस्तु ' इति वाचयित्वा त्रिवृताऽन्नेन ब्राह्मणान्सम्पूज्याशिषो वाचयित्वा प्रदक्षिणनमस्कारं विदधीत ॥ सहस्रात्मानमीश्वरं सहस्रभोजनेन सम्पूज्य ' एकस्मै स्वाहा द्वाभ्यां स्वाहा ' इति दशानुवाकान् भोजनान्ते द्वादश ब्राह्मणाश्श्राविता भवन्ति षड् वा ॥ ब्राह्मणानन्नेन परिविष्य ' पुण्याहं स्वस्ति ऋद्धिम् ' इति वाचयित्वाथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति–' विष्णोर्नुकम् ' इति पुरोनुवाक्यामनूच्य ' विष्णो ररटमसि ' इति याज्यया जुहोति ॥ अथाज्याहुतीरुपजुहोति—' केशवाय स्वाहा ' इत्यादि द्वादशनामधेयैः स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदात् ॥ अथ विप्रेभ्यः पयोदनेन मुद्गोदनेन दध्योदनेन वा भोजयित्वा गुळपायसं घृतमिश्रमित्यन्नस्य बलिमुपहरति—' अमुष्मै स्वाहाऽमुष्मै स्वाहा ' इति द्वादशनामधेयैः ॥ अथ ब्राह्मणे निवेदयित्वा वस्त्रयुगानि कुण्डलयुगान्यङ्गुलीयकमुपानहौ छत्रं कमण्डलुमिति च दद्यात् ॥ अन्नशेषमाज्यशेषं पक्वशेषं चोभौ जायापती प्राश्नीयाताम् ॥ सर्वान्कामानवाप्नोति सर्वकल्मषैर्महापातकैः प्रमुच्यते षष्टिवर्षसहस्राणि ब्रह्मलोकमतीत्य विष्णुलोके महीयत इत्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ उत्तरायणे शुक्लपक्षे पुण्यनक्षत्रे जन्मानुजन्मत्रिजन्मनि दक्षिणायने वा गृहे देवालये वा शुचौ देशे यजमानः कृतनित्यक्रियो द्वादश ब्राह्मणानाहूय, प्रक्षाळितपाणिपादानप आचमय्याऽऽसनेषूपवेश्य, गन्धपुष्पधूपदीपैरभ्यर्च्य प्रदक्षिणीकृत्य प्रणम्य, ' सङ्कल्पसिद्धिरस्तु ' इति वाचयित्वा, पत्न्या सह दर्भेष्वासीनो दर्भान्धारयमाणः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, ' ममाऽशेषपातकोपपातकमहापातकनिवृत्तिद्वारा षष्टिसहस्रवर्षपर्यन्तं विष्णुलोकनिवाससिध्यर्थं श्रीपमेश्वरप्रीत्यर्थं सहस्रात्मानमीश्वरं सहस्रभोजनेन सम्पूजयिष्ये ' इति सङ्कल्प्य, गणपतिं सम्पूज्य, मातृकापूजनं नान्दीश्राद्धं विधाय,

ब्राह्मणान् त्रिवृतान्नेन परिविष्य ' सहस्रात्मा ईश्वरः प्रीयताम् ' इति पुण्याहं वाचयित्वा आचार्यादीन् वृणुयात् । ।ततः सहस्रसङ्ख्याकान् ब्राह्मणानाहूय सुप्रक्षाळितपाणिपादानप आचमय्याऽऽसनेषूपवेश्य, विष्णुरूपं ध्यात्वा, विष्णुसहस्रनामभिरेकैकं ब्राह्मणं ' विश्वस्मै नमः विश्वमावाहयामि ' एवमेव ' विष्णवे नमः विष्णुमावाहयामि ' इत्याद्यावाह्य, पादप्रक्षाळनपूर्वकं प्रदक्षिणनमस्कारान्तैः षोडशोपचारैः पूजयेत् । एवं सहस्रनामभिः सहस्रब्राह्मणान्सम्पूज्य, भोजनस्थानं रङ्गवल्यादिना सुशोभितं कृत्वा, पृथक्पृथक् चतुरस्रमण्डलेषु पृथक्पृथक्पात्राणि प्रकल्प्य, यथोपपादमिष्टमन्नं परिविष्य, गायत्र्या प्रोक्ष्य परिषिच्य, ' विश्वस्मै नमः इदमन्नं, विष्णवे नमः इदमन्नं ' इत्यादिक्रमेण निर्दिश्य ' अमृतोपस्तरणमसि ' इत्यपोशनं दत्वा ' प्रजापते न त्वत्० ' इति मन्त्रं जपित्वा ' एको विष्णुर्महद्भूतं० भुगव्ययः ॥ अनेन सहस्रब्राह्मणभोजनेन सहस्रात्मा ईश्वरः प्रीयताम् ' इति भूमौ साक्षतजलं विसृजेत् ॥ भोजनकाले पुरुषसूक्त–विष्णुसूक्त–नारायणोपनिषत्—विष्णुसहस्रनामादीञ्छ्रावयेत् ॥ सहस्रभोजनान्ते ' सहस्रात्मा ईश्वरः प्रीयताम् ' इति पुण्याहं वाचयेत् ॥

अथाऽऽचार्यो देवयजनोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य० देशकालौ सङ्कीर्त्य, यजमानस्याऽशेषदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सहस्रभोजनहोमं करिष्ये० बलवर्धनो नामाऽग्निः, विष्णुर्देवता, चरुर्हविः, उपहोमश्च— केशवादि द्वादशनाममन्त्रैः प्रतिमन्त्रमाज्येन, ' एकस्मै स्वाहा ' इत्यादि दशानुवाकमन्त्रैः प्रतिमन्त्रमाज्येन. अग्निः स्विष्टकृत्, इत्याद्यन्वाधायाऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निं—अष्टदलपद्मोपरि व्रीहिभिर्यवैर्वा स्थण्डिलं कृत्वा, ' मही द्यौः ' इत्यादि विधिना कलशं प्रतिष्ठाप्य, वस्त्रयुग्मेनाऽऽवेष्ट्य वरुणपूजान्तं कृत्वा, सुवर्णादिनिर्मितां विष्णुप्रतिमामग्न्युत्तारणपूर्वकं कलशोपरि निधाय ' विष्णोर्नु कं०, विष्णो रराटमसि०' इति मन्त्राभ्यां व्याहृतिभिश्च विष्णुमावाह्य, परितोऽक्षतपुञ्जेषु पूर्वादिप्रादक्षिण्येन केशवादि द्वादशदेवतानाममन्त्रैरावाह्य,

अब्लिङ्गाभिर्हिरण्यवर्णाभिः पावमानीभिः पुरुषसूक्तेन च स्नापयित्वा, यथाविभवं षोडशोपचारैः सम्पूजयेत् ॥ अथ देवस्य त्वेत्यादि विष्णवे चरुनिर्वापाद्यग्निमुखान्तं कृत्वा, 'विष्णोर्नु कं०, विष्णो रराटमसि०' इति द्वाभ्यां विष्णवे पक्वं हुत्वा (विष्णव इदं०) स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽथाऽऽज्याहुतीरुपजुहोति — 'केशवाय स्वाहा' इत्यादि द्वादशनाममन्त्रैः ॥ एकस्मै स्वाहा। द्वाभ्याꣳ स्वाहा। त्रिभ्यः स्वाहा। चतुर्भ्यः स्वाहा। पञ्चभ्यः स्वाहा। षड्भ्यः स्वाहा। सप्तभ्यः स्वाहा। अष्टाभ्यः स्वाहा। नवभ्यः स्वाहा। दशभ्यः स्वाहा। एकादशभ्यः स्वाहा। द्वादशभ्यः स्वाहा। त्रयोदशभ्यः स्वाहा। चतुर्दशभ्यः स्वाहा। पञ्चदशभ्यः स्वाहा। षोडशभ्यः स्वाहा। सप्तदशभ्यः स्वाहा। अष्टादशभ्यः स्वाहा। एकान्नविꣳशत्यै स्वाहा। नवविꣳशत्यै स्वाहा। एकान्नचत्वारिꣳशते स्वाहा। नवचत्वारिꣳशते स्वाहा। एकान्नषष्ट्यै०। नवषष्ट्यै०। एकान्नाऽशीत्यै०। नवाऽशीत्यै०। एकान्नशताय०। शताय०। द्वाभ्याꣳ शताभ्याꣳ स्वाहा। सर्वस्मै० ॥ एकस्मै०। त्रिभ्य०। पञ्चभ्यः०। सप्तभ्यः०। नवभ्यः०। एकादशभ्यः०। त्रयोदशभ्यः०। पञ्चदशभ्यः०। सप्तदशभ्यः०। एकान्नविꣳशत्यै०। नवविꣳशत्यै०। एकान्नचत्वारिꣳशते०। नवचत्वारिꣳशते०। एकान्नषष्ट्यै०। नवषष्ट्यै०। एकान्नाऽशीत्यै०। नवाऽशीत्यै०। एकान्नशताय०। शताय०। सर्वस्मै० ॥ द्वाभ्याꣳ स्वाहा। चतुर्भ्यः०। षड्भ्यः०। अष्टाभ्यः०। दशभ्यः०। द्वादशभ्यः०। चतुर्दशभ्यः०। षोडशभ्यः०। अष्टादशभ्यः०। विꣳशत्यै०। अष्टानवत्यै०। शताय०। सर्वस्मै० ॥ त्रिभ्यः०। पञ्चभ्यः०। सप्तभ्यः०। नवभ्यः०। एकादशभ्यः०। त्रयोदशभ्यः०। पञ्चदशभ्यः०। सप्तदशभ्यः०। एकान्नविꣳशत्यै०। नवविꣳशत्यै०। एकान्नचत्वारिꣳशते०। नवचत्वारिꣳशते०। एकान्नषष्ट्यै०। नवषष्ट्यै०। एकान्नाशीत्यै०। नवाऽशीत्यै०। एकान्नशताय०। शताय०। सर्वस्मै०॥ चतुर्भ्यः०। अष्टाभ्यः०। द्वादशभ्यः०। षोडशभ्य०ः। विꣳशत्यै०।

षण्णवत्यै० । शताय० । सर्वस्मै० ॥ पञ्चभ्यः० । दशभ्यः० । पञ्चदशभ्यः० । विꣳशत्यै० । पञ्चनवत्यै० । शताय० । सर्वस्मै० ॥ दशभ्यः० । विꣳशत्यै० । त्रिꣳशते० । चत्वारिꣳशते० । पञ्चाशते० । षष्ट्यै० । सप्तत्यै० । अशीत्यै० । नवत्यै० । शताय० । सर्वस्मै० ॥ विꣳशत्यै० । चत्वारिꣳशते० । षष्ट्यै० । अशीत्यै० । शताय० । सर्वस्मै० ॥ पञ्चाशते० । शताय० । द्वाभ्याꣳ शताभ्याꣳ स्वाहा । त्रिभ्यः शतेभ्यः० । चतुर्भ्यः शतेभ्यः० । पञ्चभ्यः शतेभ्यः० । षड्भ्यः शतेभ्यः० । सप्तभ्यः शतेभ्यः० । अष्टाभ्यः शतेभ्यः० । नवभ्यः शतेभ्यः० । सहस्राय० । सर्वस्मै० ॥ शताय० । सहस्राय० । अयुताय० । नियुताय० । प्रयुताय० । अर्बुदाय० । न्यर्बुदाय० । समुद्राय० । मध्याय० । अन्ताय० । परार्धाय० । उषसे० । व्युष्ट्यै० । उदेष्यते० । उद्यते० । उदिताय० । सुवर्गाय० । लोकाय० । सर्वस्मै स्वाहा इति दशानुवानुवाकमन्त्रैश्च ॥ ( सर्वत्र — यथालिङ्गं त्यागः ) स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्निं विष्णवे गुडपायसं घृतमिश्र-मन्नञ्च 'केशवाय स्वाहा' इति द्वादशनामभिः बलिमुपहृत्य 'केशवं तर्पयामि' इत्यादि द्वादशभिस्तर्पयित्वा, वैष्णवीभी ऋग्यजुः-सामाथर्वभिः स्तोत्रैश्च स्तुत्वोत्तरपरिषेकादि होमशेषं समापयेत् ॥ आवाहितदेवताः पुनः सम्पूज्य कलशोदकेन सपरिवारं यजमान-मभिषिञ्चेत् । यजमानोऽभिषेकाप्लुतं वस्त्रमाचार्याय दत्वाऽन्यद्हतं वासः परिधायाऽऽचम्य, ब्राह्मणान्सम्पूज्य, आचार्याय सवत्सां गां कलशदानं, ऋत्विग्भ्यो यथाशक्ति दक्षिणादानञ्च कृत्वा, पूर्वमाहूतान्ब्राह्मणान् केशवादि द्वादशनामभिः सम्पूज्य, तेभ्यः प्रत्येकं वस्त्रयुगानि, कुण्डलयुगानि, अङ्गुलीयकं, छत्रं, कमण्डलुञ्च यथाविभवं दद्यात् ॥ ततो ब्राह्मणान् पयोदन-मुद्गोदन-दध्योदनादिभिः सम्भोज्याऽऽशिषो गृहीत्वा, अन्नशेषमाज्यशेषञ्चोभौ जायापती प्राश्नीयात् ॥ ॥ एवमेव गणपति–शिव–इत्यादि स्वेष्टदेवतासह-स्रनामभिः सहस्रभोजनं कार्यम् ॥

# ॥ गृहशान्ति–गोशान्तिविधिः ॥

( बो. गृ. शे. सू. १. १८ ) अथातो गृहकर्मणां गृहवृद्धिमिच्छन् मासिमासि, ऋतावृतौ संवत्सरेसंवत्सरे वाऽऽपूर्यमाणपक्षे पुण्ये नक्षत्रे गृहशान्तिमारभेत । अपामार्गपलाशशिरीषोदुम्बरसदाभद्रामृततृणमिन्द्रवल्या बध्वा गृहं सम्मार्ष्टि — मा नो महान्तं. मा नस्तोके ' इति द्वाभ्याम् । पञ्चगव्यैर्दर्भमुष्टिना च संप्रोक्षति—' यत इन्द्र भयामहे, स्वस्तिदा ' इति द्वाभ्याम् । ' कृणुष्व पाजः ' इत्येतेनानुवाकेन सिद्धार्थान्सम्प्रकीर्य वास्तुमध्येऽथ देवयजनोल्लेखनप्रभृत्याऽऽग्निमुखात्कृत्वा पक्वाज्जुहोति— ' वास्तोष्पते, वास्तोष्पते ' इति द्वाभ्याम् । अथाज्याहुतीरुपजुहोति —' वास्तोष्पते ध्रुवा स्थूणां ' इति षड्भिरनुच्छंदसम् । सावित्र्या सहस्रं जुहुयात् । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् । ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वैवं प्रयुञ्जानो महान्तं पोषं पुष्यति बहवः पुत्रा भवन्ति न च बालाः प्रमीयन्ते न गृहव्याधयो भवन्ति न दंष्ट्रिणो घातयेयुर्न तस्करसर्पराक्षसपिशाचा बाधन्ते ॥ यदि गावः प्रतप्येरन् गवां मध्ये आहुतिसहस्रं जुहुयात् ॥ गवां शान्तिरित्याचक्षते ॥ द्विपदां चतुष्पदां चैतदेव व्याख्यातं वासो दक्षिणेति ॥

अथ प्रयोगः — शुक्लपक्षे आत्मानुकूलदिवसे पुण्ये नक्षत्रे—कर्ता प्रातः स्नानादि नित्यकर्म निर्वर्त्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " मम गृहे पिशाच-राक्षस-सर्प-तस्करादिबाधानिवारणार्थं दंष्ट्रिपीडा-अग्निबाधापरिहारार्थं बालमरणादि सर्वानिष्टनिरसनपूर्वकं श्रीबलपुष्टितुष्टिधनधान्यपशुपुत्रपौत्राद्यभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं गृहशान्तिं करिष्ये " इति सङ्कल्प्य, गणपतिं सम्पूज्य ' वास्तोष्पतिः प्रीयताम् ' इति पुण्याहं वाचयित्वा, आचार्यादृत्विजो वृणुयात् ॥ अपामार्गपलाश-

शिरीषोदुम्बरसदाभद्राऽमृततृणानीन्द्रवल्या बध्वा " मा नो महान्तं०, मा नस्तोके० " इति द्वाभ्यां सर्वतो गृहं सम्मृज्य, " यत इन्द्र भयामहे०, स्वस्तिदा विशस्पतिः० " इति द्वाभ्यां दर्भमुष्टिना पञ्चगव्यैर्गृहं सम्प्रोक्ष्य, " कृणुष्व पाजः० " इत्येतेनाऽनुवाकेन गृहमध्ये सर्वत्र गौरसर्षपान्विकिरति ॥ वास्तुमध्ये—देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य० प्राणानायम्य 'मम गृहे० वृद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं गृहशान्तिहोमं करिष्ये० वरदो नामाग्निः, वास्तोष्पतिर्देवता, चरुर्हविः, उपहोमे—' वास्तोष्पते ध्रुवा स्थूणां० ' इति षडृचेन वास्तुसूक्तेन प्रत्यृचमाज्येन, सावित्र्या आज्येन सहस्रसङ्ख्याकाहुतिभिः, अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निं विधिवत्कलशं प्रतिष्ठाप्य, वरुणपूजान्ते — ' वास्तोष्पते प्रतिजानीहि०, वास्तोष्पते शग्मया०, इति द्वाभ्यां वास्तोष्पतिमावाह्य षोडशोपचारैः सम्पूजयेत् ॥ ततो देवस्य त्वेत्यादि वास्तोष्पतये चरुं निरूप्य प्रोक्ष्याऽऽज्यसंस्काराद्यग्निमुखान्ते — ' वास्तोष्पते प्रतिजानीहि०, वास्तोष्पते शग्मया० ' इति द्वाभ्यां पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽज्याहुतीरुपजुहोति — वास्तुसूक्तेन प्रत्यृचं, ( सर्वत्र, वास्तोष्पतय इदं० ) ततः साविञ्याऽऽज्येन सहस्रं जुहुयात् ( सवित्र इदं० ) स्विष्टकृदादि होमशेषं समाप्य ' प्रजापतिः प्रीयताम् ' इति पुण्याहं वाचयित्वा, आचार्याय कलशदानं, गोदानं, वस्त्रदानं, ऋत्विग्भ्यो यथाशक्ति दक्षिणाश्च दत्वा कर्मेश्वराय समर्प्य ब्राह्मणान् भोजयित्वाऽऽशिषो गृह्णीयात् ॥ ॥ एवमेव मासिमासि ऋतावृतौ संवत्सरेसंवत्सरे वा गृहशान्तिं कुर्यात् ॥ ॥ गवां, पिशाचराक्षससर्पादिपीडापरिहारार्थं समस्तरोगोपशमनार्थं पुष्ट्यर्थञ्च गोष्ठमध्ये एवमेव गोशान्तिं कुर्यात् ॥

## ॥ अथ शताभिषेकविधिः ॥ ( सहस्रचन्द्रदर्शनशान्तिः )

( बो. गृ. शे. सू. १. २४ ) अथातश्शताभिषेकं व्याख्यास्यामः — शतसंवत्सरं जीवतस्सहस्रचन्द्रदर्शिनो वोदगयन

आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽथ देवयजनोल्लेखनप्रभृत्याऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं व्रीहिभिर्यवैर्वा चतुरश्रं स्थण्डिलं करोति ॥ तत्र सुवर्णरजतताम्रमृण्मयैर्वा कलशैस्तन्तुना परिवृतैः प्रक्षाल्य मध्ये प्रधानकलशं निधाय गन्धपुष्पधूपदीपैः फलैरत्नैरवकीर्यैन्द्रादि-क्रमेण दक्षिणापरोत्तरान्कलशान्स्थापयित्वा तिरः पवित्रं निधाय शुद्धोदकेन पूरयित्वा मध्ये प्रधानकलशे नवरत्नैरवकीर्याऽहतेन वाससा प्रतिच्छाद्य गन्धपुष्पधूपदीपैरलङ्कृत्य मध्ये प्रधानकलशे ब्रह्माणमावाहयति । ऐन्द्रादिक्रमेण 'प्रजापतिं, परमेष्ठिनं, चतुर्मुखं, हिरण्यगर्भमावाहयामि' इत्यावाह्य परिधानप्रभृत्याग्निमुखात्कृत्वा दैवतमर्चयति — 'आपो हि ष्ठा मयो भुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वाऽथैनान् गन्धपुष्पधूपदीपैः 'अमुष्मै नमोऽमुष्मै नमः' इति । अन्नेन 'अमुष्मै स्वाहाऽमुष्मै स्वाहा' इति ॥ अथ पक्वाज्जुहोति — 'आयुष्टे विश्वतो दधत्' इति पुरोनु-वाक्यामनूच्य 'आयुर्दा अग्ने' इति याज्यया जुहोति ॥ अथाज्याहुतीरुपजुहोति — 'ब्रह्म जज्ञानं' इति षड्भिः 'अग्निरायुष्मान्' इति पञ्चभिः पर्यायैः स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाग्रेणाग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति— 'आयुष्टे, आयुर्दा अग्ने' इति द्वाभ्याम् ॥ अथैनमद्भिरभिषेकं करोति— 'यास्सुगन्धा रसा वर्णाः' इति चतसृभिः प्रत्यृचं प्रधानकलशेनाभिषिञ्चति । ऐन्द्रादि-क्रमेण— 'याः प्राची' इति चतसृभिरनुच्छन्दसमाभिषेकं करोति । 'या ऊर्ध्वाः' इति प्रधानकलशशेषेणाऽभिषिञ्चति ॥ अहतानि वासांसि परिधायाप आचम्यालङ्कृत्य तत आदित्यमुदीक्षयति— 'उद्वयं तमसस्परि, उदु त्यं, चित्रं, तच्चक्षुर्देवहितं, य उदगात्' इति । अथैतेनैव यथेतमेत्यैरकां साधिवासामास्तीर्य तस्यां प्राङ्मुख उपवेश्य सुवर्णरजतताम्रकांस्ये वा पात्रे हविराज्यं हिरण्यं निधाय निमील्यावेक्ष्य ब्राह्मणाय प्रयच्छति ॥ अथ रथमारुह्य ग्रामं प्रदक्षिणीकृत्य दुन्दुभिशब्देन स्वस्तिसूक्तेन गृहं प्रविश्य गुरवे वरं दत्वा

ब्राह्मणान् सम्पूज्याशिषो वाचयित्वा दशपूर्वान्दशापरानात्मानञ्चैकविंशतिं पङ्क्तिं च पुनाति पुत्रपौत्रैश्च षष्टिर्वर्षसहस्राणि स्वर्गलोकमतीत्य ब्रह्मणस्सायुज्यं सलोकतामाप्नोतीत्याह भगवान् बोधायनः ॥

शौनकः–प्राप्ते शततमे वर्षे अपमृत्युर्भवेद्ध्रुवम् । भार्यापुत्रवियोगश्च मातापित्रोर्मृतिस्तथा ॥१॥ महापीडा राजबाधा वह्निबाधा च तस्करैः । दुःस्वप्नादीनि जायन्ते रोगाश्च विविधा अपि ॥ २ ॥ नक्षत्राणि न दृश्यन्ते ध्रुवादीनि स्फुटान्यपि । भूतप्रेतपिशाचाद्या दृश्यन्ते विविधा अपि ॥ ३ ॥ दन्तबाधा दृष्टिमान्द्यं छायादिविकृतिस्तथा । एते चाऽन्ये महोत्पाता जायन्ते नाऽत्रसंशयः ॥ ४ ॥ तदाऽनिष्टनिवृत्त्यर्थं क्षेमायुष्यविवृद्धये । मृत्युनाशाय च क्षिप्रं प्राप्तेऽथ शतवत्सरे ॥ ५ ॥ सहस्रेन्दोर्दर्शने च कुर्याच्छान्तिं विधानतः । लोभादनादराद्यस्तु शान्तिन्नैव सामाचरेत् ॥ ६ ॥ तस्मिन्वर्षे भवेन्मृत्युः सत्यमेव न संशयः । प्राप्ते शततमे वष पुनर्जन्म तदुच्यते ॥ ७ ॥ जन्मर्क्षे तु त्रिजन्मर्क्षे ह्यन्यस्मिन्वा शुभे दिने । शुभवारेऽनुकूलर्क्षे शान्तिकर्म समाचरेत् ॥ ८ ॥ स्नानं मङ्गलकं कृत्वा नित्यकर्म समाप्य च । सङ्गृह्य मङ्गलद्रव्यं प्रणम्य ब्राह्मणोत्तमान् ॥ ९ ॥ गणेशं पूजयेदादौ पञ्चगव्यपुरःसरम् । नान्दीश्राद्धञ्च पुण्याहं ग्रहयज्ञं ततः परम् ॥ १० ॥ होमं शताभिषेकस्य गृह्योक्तविधिना ततः । वेदपारायणञ्चैव कर्तव्यं हि विशेषतः ॥ ११ ॥ रुद्राभिषेकं रुद्रञ्च सङ्ख्यारुद्रजपेन च । जप्त्वा पुरुषसूक्तञ्च रुद्रसूक्तं ततः परम् ॥ १२ ॥ आयुष्यसूक्तं श्रीसूक्तं यक्ष्मसूक्तं त्रियम्बकम् । कलशस्य जलेनैव यजमानस्य मूर्धनि ॥ १३ ॥ ध्रुवासुत्वेति मन्त्रेण ह्यब्लिङ्गैश्च पवित्रकैः । पावमानैर्वारुणैश्च पठन्तमभिषेचयेत् ॥ १४ ॥ अभिषेकाप्लुतं वस्त्रमाचार्याय प्रदापयेत् । नववस्त्रधरः कर्ता कृत्वा मङ्गलदर्शनम् ॥ १५ ॥ शतमानहिरण्यञ्च दद्याद्दक्षिणसंयुतम् । स्पृशेन्मङ्गलवस्तूनि यो ब्रह्मेति च सूक्ततः ॥ १६ ॥ तीर्थं क्षीरञ्च सम्प्राश्य शतनिष्कं प्रदापयेत् । दशदानानि दत्वाऽथ दीपदानं ततः परम् ॥ १७ ॥ नवधान्यानि दत्वाऽथ हारं कुण्डलमेव च । वस्त्रञ्च भूषणं कन्यां दत्वा ब्राह्मणभोजनम् ॥ १८ ॥ उपायनं षोडशञ्च

दम्पतीनां प्रदापयेत् । सहस्रं वा तदर्धं वा तदर्धं वाऽथ भोजनम् ॥ १९ ॥ द्विशतं शतसङ्ख्याकं ब्राह्मणान्भोजयेत्ततः । ऋत्विग्भ्यो दक्षिणां दत्वा वस्त्राद्यैः पूजयेद्गुरुम् ॥ २० ॥ शतमान शतायुष्य शतवीर्य शतेन्द्रिय । अतस्त्वां सम्प्रयच्छामि शतायुष्यं प्रयच्छ मे ॥ इति शतमानहिरण्यदानमन्त्रः ॥

अथ प्रयोगः ॥ उदगयन आपूर्यमाणपक्षे जन्मनक्षत्रेऽनुजन्मनि त्रिजन्मनिवाऽन्यस्मिन्वाऽऽत्मानुकूलशुभतिथिवारनक्षत्रे, पत्न्यासह प्रातर्मङ्गलस्नानं विधाय सन्ध्यादिनित्यकर्म निर्वर्त्य शान्त्युक्तमङ्गलसम्भारान्सङ्गृह्य, पवित्रपाणिराचम्य प्राणानायम्य देश कालौ सङ्कीर्त्य, " मम जन्मनः सकाशात् (प्राप्तशताब्दसूचित)–सहस्रचन्द्रदर्शननिमित्तसूचित-भार्यापुत्रवियोग-पितृमातृमृति-विविध-रोग-समस्तग्रहपीडा-राजाऽग्नितस्करबाधा-दन्तबाधा–दृष्टिमान्द्य-छायाविकृति-स्फुटध्रुवनक्षत्राद्यदर्शनादिसमस्तानिष्टनिवृत्त्यर्थं, भूत-प्रेत-पिशाच-ब्रह्मराक्षस-यक्ष-यमदूत-शाकिनी-डाकिन्यादिभ्यो जनितजनिष्यमाणसर्वोपद्रवनिवारणार्थं, भौमाऽन्तरिक्षदिव्यमहो-त्पात-दुस्स्वप्न-दुःशकुनादि नानाविधाऽरिष्टसूचितापमृत्यु-ध्रुवमृत्यु-कालमृत्युपीडापरिहारार्थं, क्षेमाऽभयाऽऽयुरारोग्याभिवृद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं, सग्रहमखां सहस्रचन्द्रदर्शनशान्तिं करिष्ये" इति सङ्कल्प्य, पञ्चगव्यं प्राश्य, स्नानादिचतुष्टयं विधाय, गणपतिं सपूज्य, मातृकापूजनं नान्दीश्राद्धञ्च कृत्वा " आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, आयुष्मानाग्निः प्रीयताम् " इति पुण्याहं वाच-यित्वा उदकशान्तिप्रतिसरबन्धौ कुर्यात् ॥ अथाऽऽयुष्यसूक्तादिजपार्थमेकं शतरुद्रजपार्थमेकादश वेदपारायणार्थं चतुरः श्रोत्रियान् विप्रानाचार्यादींश्च वृणुयात् ॥ देवयजनोल्लेखनाद्याग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, मम जन्मनः सकाशात्० ग्रहमखपूर्वकसहस्रचन्द्रदर्शनशान्तिहोमं करिष्ये० ग्रहान्वाधानान्ते — वरदो नामाऽग्निः, अग्निरायुष्मान् देवता, चरुर्हविः, उपहोमश्च, — ब्रह्मसूक्तेन प्रत्यृचमाज्येन, अग्निरायुष्मानिति पञ्चभिराज्येन, अर्यमादयः स्विष्टकृतः, इत्याद्यन्वाधायाऽऽप्रणीताभ्यः

कृत्वाऽग्रेणाग्निं ग्रहमण्डलं विलिख्य तण्डुलैः स्थण्डिलं कृत्वा ग्रहानावाह्य सम्पूज्य, तदुत्तरतोऽष्टदलपद्मं विलिख्य व्रीहितण्डुलै-रुपर्युपरि तदर्धयवैस्तदर्धतिलैश्च चतुरस्रं स्थण्डिलं कृत्वा, पुष्पैः फलैरवकीर्य, सुवर्णाद्यन्यतमं कलशपञ्चकं तन्तुना परिवेष्ट्य प्रक्षाल्य, " मही द्यौः " इत्यादिविधिना मध्ये-प्रधानकलशं, पूर्वादिचतुर्दिक्ष्वेकैकमिति कलशचतुष्टयं स्थापयित्वा, तिरः पवित्रं निधाय, शुद्धोदकेन पूरयित्वा, गन्धद्वारामिति गन्धं, काण्डात्काण्डात्० इति दूर्वाः, अश्वत्थे वः० इति पल्लवान्, याः फलिनीः० इति फलं०, बृहस्पते जुषस्व नः० इति नवरत्नानि, अग्ने रेतः० इति हिरण्यं, युवा सुवासाः० इति वस्त्रं, पूर्णा दर्वि० इति तण्डुलपूर्णपात्रं कूर्चञ्च निक्षिप्य, वरुणं सम्पूज्य देवता आवाहयेत्–मध्ये प्रधानकलशे ' ॐ भूर्भुवस्सुवः ब्रह्मणे नमः ब्रह्माणमावाहयामि ' एवमेव पूर्वकलशे-प्रजापतिं०, दक्षिणे–परमेष्ठिनं०, पश्चिमे-चतुर्मुखं०, उत्तरे-हिरण्यगर्भं०, इत्यावाह्य पाद्याद्युपचारैः पूजयेत् ॥ ततो ब्राह्मणाः आयुष्यसूक्त-पुरुषसूक्त – रुद्रसूक्त - पवमानसूक्त-श्रीसूक्त-शन्नसूक्त-महाशान्तिसूक्त – यक्ष्मसूक्त-त्र्यम्बकमन्त्र-शतरुद्रजप-स्वशाखा-वेदपारायणञ्च कुर्युः ॥ ततः ग्रहाणां चरुनिर्वापानन्तरं अग्नय आयुष्मते चरुनिर्वापाद्यग्निमुखान्तं कृत्वा दैवतमभ्यर्चयति–आपो हि ष्ठा० इति तिसृभिः, हिरण्यवर्णाः० इति चतसृभिः, पवमानः सुवर्जनः०, इत्येतेनानुवाकेन मार्जयित्वा " ॐ ब्रह्मणे नमः, प्रजापतये०, परमेष्ठिने०, चतुर्मुखाय नमः, हिरण्यगर्भाय नमः " इत्येतैर्नाममन्त्रैर्गन्ध-पुष्प-धूप-दीपैरभ्यर्च्य, पक्वाज्जुहोति-'आयुष्टे विश्वतो दधत्०, आयुर्दा अग्ने० " इति द्वाभ्याम् ( अग्नय आयुष्मत इदं० ) ॥ स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽज्याहुतीरुपजुहोति–' ब्रह्म जज्ञानं० ' इति षड्भिः । ( सर्वत्र, ब्रह्मण इदं० ) अग्निरायुष्मान्० करोमि स्वाहा, ( अग्नय आयुष्मत इदं० ) सोम आयुष्मान्० करोमि स्वाहा, ( सोमायाऽऽयुष्मत इदं० ) यज्ञ आयुष्मान्० करोमि स्वाहा, ( यज्ञायायुष्मत इदं० ) ब्रह्माऽऽयुष्मत्० करोमि स्वाहा, ( ब्रह्मण आयुष्मत इदं० ) देवा आयुष्मन्तः० करोमि स्वाहा, ( देवेभ्य आयुष्मद्भ्य इदं० ) स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्

कृत्वाऽग्रेणाऽग्निं दूर्वास्तम्बेषु हुतशेषं निदधाति— " आयुष्टे०, आयुर्दा अग्ने० " इति द्वाभ्याम् । ॐ ब्रह्मणे स्वाहा नमः, प्रजापतये०, परमेष्ठिने०, चतुर्मुखाय०, हिरण्यगर्भाय० " इत्यन्नेन बलिमुपहृत्य, ॐ ब्रह्माणं तर्पयामि, प्रजापतिं०, परमेष्ठिनं०, चतुर्मुखं०, हिरण्यगर्भं० ' इति तर्पयित्वा, ताम्बूल–दक्षिणा–नीराजनाद्युपचारान्कृत्वा, मन्त्रपुष्पं समर्प्य, प्रदक्षिणीकृत्य नमस्कुर्यात् ॥ उत्तरपरिषेकादि होमशेषं समाप्याऽऽवाहितदेवताः पुनः सम्पूज्य, लाजापूपपृथुकपायसादीन्निवेद्य, " तेजोसि । तत्ते प्रयच्छामि० विश्वेदेवा जरदष्टिर्यथासत् " इति सम्प्रार्थ्य देवता उद्वासयेत् ॥ ततः सर्त्विगाचार्यः अग्नेः पश्चात्सपरिवारं यजमानं प्राङ्मुखमुपवेश्य, कलशोदकेन " आपो हि ष्ठाः०, हिरण्यवर्णाः०, पवमानः सुवर्जनः०, वरुणसूक्त–श्रीसूक्त–शान्तसूक्त-महाशान्तिसूक्त-यक्ष्मसूक्त-त्र्यम्बकमन्त्रैरन्यैश्च पुण्यसूक्तमन्त्रैश्च " प्रोक्ष्य, आचार्यो मध्यकलशोदकेन यजमानमभिषिञ्चति—" याः सुगन्धा रसा वर्णा बलञ्च निहिते उभे । ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ या ऊर्जमभिषिञ्चन्ति देवप्रेषिता महीम् । ता म आपः० प्रवहन्तु मे ॥ यासां निष्क्रमणे सर्वमिदं जायते जगत् ॥ ता म आपः० प्रवहन्तु मे ॥ यासामिमे त्रयो लोकास्तेजसा यशसावृताः । ता म आपः० प्रवहन्तु मे " इति चतसृभिः ॥ पूर्वकलशेनाभिषिञ्चति —" याः प्राची रेवतीर्मधुमतीरापः स्रवन्ति शुक्राः । ता म आपः० प्रवहन्तु मे " इति ॥ दक्षिणकलशोदकेन —" या दक्षिणा रेवतीर्मधुमतीः० प्रवहन्तु मे " इति ॥ पश्चिमकलशोदकेन —" याः प्रतीची रेवतीः० प्रवहन्तु मे " इति ॥ उत्तरकलशोदकेन " या उदीची रेवतीः० प्रवहन्तु मे " इति ॥ पुनः प्रधानकलशोदकशेषेण —" या ऊर्ध्वा रेवतीः० प्रवहन्तु मे " इत्यभिषिञ्चेत् ॥ अथ यजमानः पूर्वधृतं वासो विसृज्याचार्याय दत्वाऽन्यान्यहतानि वासांसि परिधायाचम्यालङ्कृत्य ( उग्ररथशान्त्युक्तक्रमेण पुरतो मङ्गलद्रव्यासादनादिकं कुर्यात । तत्र शतग्रन्थियुतं मङ्गलवस्त्रमिति विशेषः । ग्रन्थिप्रार्थनान्तं कुर्यात् ) उपनिष्क्रम्य " उद्वयन्तमसस्परि०, उदु त्यं०, चित्रं०, तच्चक्षुर्देवहितं०, य

उदगान्महतोऽर्णवात्०, इत्यादित्यमुदीक्षयति । यथागतमागत्य, आचार्यादीन्सम्पूज्याऽऽचार्याय सपीठं कलशं शतमानञ्च हिरण्यं दत्वा ऋत्विग्भ्यो दशदानं दीपदानं नवधान्यदानं हार-कुण्डल-वस्त्रदानं, भूषणदानं, वायनदानञ्च कुर्यात् ॥ एरकां साधिवासामास्तीर्य तस्यां प्राङ्मुखमुपविश्य, सुवर्ण-रजत-ताम्र-कांस्याद्यन्यतमपात्रमाज्यशेषेण पूरयित्वा, तत्र "इन्द्राय त्वा तेजस्वते तेजस्वन्त५ श्रीणामि । इन्द्राय त्वौजस्वते० । इन्द्राय त्वा पयस्वते० । इन्द्राय त्वाऽऽयुष्मते०" इत्येभिर्मन्त्रैर्हिरण्यं निधायाऽऽज्यशेषे— "इममग्न आयुषे० प्रियश्रेतो वरुण० यथा सत्" इत्यनेनाऽऽत्मनः प्रतिच्छायां निमील्यावेक्ष्य सहिरण्यं ब्राह्मणाय दद्यात् । ततो यजमानो रथमारुह्य, दुन्दुभिघोषपुरस्सरं ग्रामं प्रदक्षिणीकृत्य, 'स्वस्ति नो मिमीतां०' इति स्वस्तिसूक्तं पठन् गृहं प्रविश्य, त्रिवृतान्नेन हिरण्येन वा ब्राह्मणान्सम्पूज्य 'ब्रह्मा प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्याय गां दद्यात् ॥ सहस्रं, तदर्धं, तदर्धं, द्विशतं, शतं वा ब्राह्मणान्भोजयित्वाऽऽचार्यं वस्त्रादिभिः सम्पूज्य, भुक्तवद्भ्यो भूयसीं दक्षिणां दद्यात्, ब्राह्मणाश्च "आयुरसि विश्वायुरसि० आयुषे दीर्घायुत्वाय गृह्णामि, आयुष्मे०, आयुर्दा०" इत्येतैर्मन्त्रैराशिषो दद्युः ॥ ॥ केचन पूर्वमेव यथानुकूलं मृत्तिकास्नान-ब्रह्मकूर्च-कूष्माण्ड-गणहोम-कृच्छ्रादिभिर्देहशुद्धिं सम्पाद्य, मण्डपसंस्कारपूर्वकं वास्तु–राक्षोघ्न—होमं, कुण्डसंस्कार-पूर्वकमग्निजननञ्च कृत्वा शान्तिहोमं कुर्वन्ति ॥

## ॥ अथ शिथिलीकल्पः ॥

(बो. गृ. शे. सू. ३· १३. १–१६) अथातश्शिथिलीकल्पं व्याख्यास्यामः— गृहसीमान्तचतुरश्रदिग्विधानेनान्तश्श्रोत्तरविधिः॥ गृहमध्ये शिथिली जायेत सप्ताहात् शुभकरं भवत्यत ऊर्ध्वं व्याधिपीडनं करोति 'यत इन्द्र भयामहे' इति पलाशसमिद्भिरष्टोत्तरशतं

जुहुयात् हविष्यमाज्यञ्च दोषमाहरति ॥ इन्द्रदिग्भागे शिथिली जायते सकुटुम्बस्य महद्भयं भवति 'सदसस्पतिम्' इति मन्त्रेण खादिरसमिद्भिर्जुहुयात् ॥ अग्निदिग्भागे शिथिली जायेत सप्ताहात्सुहृदागमनमत ऊर्ध्वं राजक्षोभं करोति 'अयमु ते समुतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे स्वाहा' इत्युदुम्बरसमिद्भिर्जुहुयात् ॥ यमदिग्भागे शिथिली जायतेऽष्टाहादर्थलाभमाप्नोति तत ऊर्ध्वं भार्यामरणं करोति प्लक्षसमिद्भिस्त्रियम्बकेन जुहोति ॥ निर्ऋतिदिग्भागे शिथिली जायते त्र्यहाद्वृष्टिं करोति अत ऊर्ध्वं भार्यानाशं करोत्यपामार्गसमिद्भिः 'प्रजापते न त्वत्' इति मन्त्रेण जुहोति ॥ वरुणदिग्भागे शिथिली जायते गर्भलाभं करोत्यत ऊर्ध्वं चोरभयं कुर्याद्दूर्वासमिद्भिः 'गणानां त्वा' इति जुहोति ॥ वायुदिग्भागे शिथिली जायते कन्यादोषमुपजायते दूर्वासमिद्भिः 'सप्त ते अग्ने' इति जुहोति ॥ सोमदिग्भागे शिथिली जायते शत्रुखादनं करोत्यत ऊर्ध्वं धान्यनाशं करोति वटसमिद्भिरघोरमन्त्रेण जुहोति ॥ ईशानदिग्भागे शिथिली जायते गृहपतेर्व्याधिपीडनं करोति 'येषामीशे' इति शमीसमिद्भिर्जुहोति ॥ द्वारदेशे शिथिली जायते गृहिणीनाशं करोति बिल्वसमिद्भिस्त्रियम्बकेन जुहोति ॥ शयनप्रदेशे शिथिली जायते गृहपतेर्मरणं व्याहृतीभिर्यवैर्जुहोति ॥ गोमहिषस्थाने० प्रजानां चक्षुर्नाशं० — व्याहृतीभिर्यवैर्जुहुयात् ॥ जलभाण्डस्थाने० दासवर्गनाशं० व्याहृतीभिर्यवैः० ॥ देवालये० ग्रामेऽग्निभयं० बिल्वसमिद्भिस्त्र्यम्बकमन्त्रेण० ॥ सभास्थाने० ग्रामस्य सकुटुम्बस्याऽध्रुवं कुर्यादात्वा हार्षसूक्तेन दूर्वाभिर्जुहोति ॥

नारदसंहितायाम् — उत्पाता निखिला नृणामगम्याऽशुभसूचकाः । तथाऽपि सद्यः फलदं शिथिलीजननं महत् ॥ १ ॥ शिथिलीजननं ग्रामे सेतौ वा देवतालये । तत्फलं ग्रामपस्यैव सीम्नि सीमाधिपस्य च ॥ २ ॥ शिथिलीजनने हानिः सर्वस्थानेषु दिक्षु च । तद्दोषशमनायैव शान्तिकर्म समाचरेत् ॥ ३ ॥ स्वर्णेन मृत्युप्रतिमां कृत्वा वित्तानुसारतः । रक्तवर्णं चर्मदण्डधरं महिषवाहनम् ॥ ४ ॥ नववस्त्रञ्च संवेष्ट्य तण्डुलोपरि पूजयेत् । तल्लिङ्गेन च मन्त्रेण नैवेद्यञ्च यथाविधि ॥ ५ ॥ पूर्णकुम्भं

तदीशान्यां रक्तवस्त्रेण वेष्टितम् । पञ्चत्वकपल्लवैर्युक्तं जलं मन्त्रैः समर्चयेत् ॥ ६ ॥ अग्निसंस्थापनं प्राच्यां स्वगृह्योक्तविधानतः । प्रत्येकमष्टोत्तरशतमघोरेणैव होमयेत् ॥ ७ ॥ मन्त्रेण समिदाज्यान्नैः शेषं पूर्ववदाचरेत् । द्विजाय प्रतिमां दद्यात्सर्वदोषापनुत्तये ॥ ८ ॥ जलमन्त्रेण संप्रोक्ष्य तत्स्थानं कुम्भवारिभिः । एवं यः कुरुते सम्यक्स तु दोषात्प्रमुच्यते ॥ ९ ॥ ( इति नारदीयसंहितायां शिथिलीजननशान्तिः ॥ अध्यायः ३५ ) ॥

शौनकः — शौनकोऽहं प्रवक्ष्यामि शिथिलीशान्तिमुत्तमाम् । आयुर्वृद्धिकरं नृणामपमृत्युविनाशनम् ॥ १ ॥ शिथिली-संज्ञको मृत्युर्नव दिक्ष्वपि जायते । चतुरस्त्रं गेहसीमां मध्यादीशानकं क्रमात् ॥ २ ॥ शुभाऽशुभ फलश्चैव ज्ञातव्यश्च क्रमेण तु । गृहमध्ये तु शिथिली सप्ताहाज्जायते ध्रुवम् ॥ ३ ॥ अत ऊर्ध्वं प्रजानां च पीडनं भवति ध्रुवम् । ऐन्द्रे तु शिथिलीजाते ह्यष्टाहे स्यान्महद्भयम् ॥ ४ ॥ अत ऊर्ध्वं भवत्येव व्याधिजं स्यान्महद्भयम् । जायते वह्निदिग्भागे पञ्चाहात्सुहृदा-गमम् ॥ ५ ॥ अत ऊर्ध्वं राजभयं भवत्येव न संशयः । उत्पन्ने याम्यदिग्भागे दशाहादर्थनाशनम् ॥ ६ ॥ अत ऊर्ध्वं मृत्युभयं भवत्येव न संशयः । अत ऊर्ध्वं नैर्ऋत्यां ( दिशि ह्युत्पन्ने ) दशाहात्सर्पपीडनम् ॥ ७ ॥ अत ऊर्ध्वं कीर्तिसिद्धिर्भवत्येव न संशयः । वारुण्यां धान्यनाशः स्याद्द्वादशाहान्न संशयः ॥ ८ ॥ अत ऊर्ध्वं त्वोर्ध्वमुखाद्भयं भवति नित्यशः । वायव्यां कन्यकादोषो दशाहाच्छत्रपातनम् ॥ ९ ॥ अत ऊर्ध्वं मृत्युभयं स्वगृहे सर्वथा भवेत् । सौम्ये तु तद्गृहपतेर्दशाहे मरणं भवेत् ॥ १० ॥ अत ऊर्ध्वं धान्यलाभं प्राप्तवान्मानवोऽचिरात् । ईशे गृहपतेर्व्याधिपीडनं भवति ध्रुवम् ॥ ११ ॥ एकादशाहाद्भवति धननाशं ततः परम् । द्वारदेशे द्वादशाहे गृहिणीमरणं भवेत् ॥ १२ ॥ अत ऊर्ध्वं निर्गमनं भवत्येव न संशयः । शयने विंशतिदिने गृहेशस्य मृतिर्भवेत् ॥ १३ ॥ तथाऽऽज्यतैलभाण्डानां स्थानेशा जायते यदा । चतुष्पदानां सर्वेषां तदा नाशं भवेद्ध्रुवम् ॥ १४ ॥ जलभाण्डप्रदेशे तु

प्रजानां नाशनं भवेत्। गृहमध्ये सभामध्ये देवानामालये तथा ॥ १५ ॥ तत्तत्स्थाने समुत्पन्ने मासार्धाद्गृहनाशनम्। तटाके वापिकूपाद्ये द्विमासात्सेतुबन्धने ॥ १६ ॥ आरामे मुख्यपुंसश्च त्रिमासान्मरणं भवेत्। अन्यस्थानेषु जातेषु अरिष्टं भवति ध्रुवम् ॥ १७ ॥ मृत्युप्रशमनार्थञ्च शान्तिं कुर्यात्प्रयत्नतः। एवं कृतेषु शिथिलीजातदोषो न विद्यते ॥ १८ ॥ उत्पातदिवसेऽन्यस्मिन्ननुकूले शुभे दिने। शान्तिं प्रकुर्वीत शुचिः प्रयतात्मा प्रयत्नतः ॥ १९ ॥ स्वर्णेन मृत्युप्रतिमां कृत्वा वित्तानुसारतः। रक्तवर्णमयीं दण्डधरां महिषवाहनाम् ॥ २० ॥ मुकुटेन समायुक्तां कङ्कणेन च शोभिताम्। कटकेन विराजन्तीमर्चयेत्सुसमाहितः ॥ २१ ॥ पिपीलिकान्सुवर्णेन कारयेत् सप्त पञ्च वा। स्थूलं वृत्तमुखं पृष्ठं द्वादशो दशमाप्नुयात् ॥ २२ ॥ कृशमध्यं मृत्युरूपं शिथिलीरूपमुच्यते। गोमयेनोपलिप्याथ रङ्गवल्लिकया सह ॥ २३ ॥ ब्राह्मणान् सम्यगाहूय पुण्याहं वाचयेत्ततः। आचार्यं वरयेदादावृत्विजो वृणुयात्ततः ॥ २४ ॥ सदाचारान्स्वधर्मज्ञान्कुलीनान्सकुटुम्बिनः। श्रुताध्यायसुसम्पन्नान्मन्त्रतन्त्रेषु कोविदान् ॥ २५ ॥ एवं लक्षणसम्पन्नानाचार्यप्रमुखान् द्विजान्। आचार्यं सम्यगभ्यर्च्य वस्त्रहेमाङ्गुलीयकैः ॥ २६ ॥ तथा सम्पूज्य चान्यांश्च स्वशक्त्या विभवान्वितः। पूजास्थानं समागत्य कारयेद्विधिवत्ततः ॥ २७ ॥ द्रोणत्रयान्वितं धान्यं तदर्धं श्वेततण्डुलम्। तदर्धं तिलराशिञ्च मध्ये पद्मं सकर्णिकम् ॥ २८ ॥ तन्मध्ये स्थापयेत्कुम्भमव्रणं सुमनोहरम्। तत्पूर्वादि चतुर्दिक्षु प्रागादि क्रमतो न्यसेत् ॥ २९ ॥ आकलशेष्वित्यनया कुम्भान्संस्थाप्य पूर्य च। इमम्मे गङ्गे मन्त्रेण पूरयेत्तीर्थवारिणा ॥ ३० ॥ स्योना पृथिवीति मन्त्रेण पञ्चत्वक्पञ्चपल्लवान्। पञ्चामृतं पञ्चगव्यं तत्तन्मन्त्रेण योजयेत् ॥ ३१ ॥ या ओषधीति मन्त्रेण ओषधीनि विनिक्षिपेत्। सहिरत्नानि मन्त्रेण कुम्भे रत्नानि निक्षिपेत् ॥ ३२ ॥ तस्योपरि न्यसेत् पात्रं सुवर्णादि विनिर्मितम्। तिलपूरितकांस्यं

वा रक्तवस्त्रं प्रसार्य च ॥ ३३ ॥ पूर्वोक्तलक्षणोपेतां प्रतिमां स्थापयेत् त्क्रमात् । मृत्युमृत्युपतीभ्याञ्च मध्ये कुम्भौ तु निक्षिपेत् ॥ ३४ ॥ मृत्युरूपमथावाह्य यमरूपमतः परम् । देवतापूजनार्थाय पञ्चामृतपुरस्सरम् ॥ ३५ ॥ स्नपनं कारयित्वाऽथ तत्तन्मन्त्रेण पूजयेत् । परं मृत्यो इति मन्त्रेण यमाय सोमं मन्त्रतः ॥ ३६ ॥ गन्धपुष्पैः समभ्यर्च्य धूपदीपैस्तथैव च । पृषोदनं निवेद्याथ मृत्युमन्त्रेण पूजयेत् ॥ ३७ ॥ सर्वोपचारैः शिथिलीं पूजयेत्सुसमाहितः । स्पृशन्नष्टसहस्रं वा शतमष्टोत्तरन्तु वा ॥ ३८ ॥ यत इन्द्र च राक्षोघ्नं पूर्वकुम्भेऽर्चयेज्जपन् । यमाय सोमं मन्त्रेण दक्षिणे च प्रपूजयेत् ॥ ३९ ॥ प्रशुन्ध्युवं वामनञ्च वरुणे चार्चयेज्जपेत् । सोमो धेनुं पौरुषञ्च उत्तरे पूजयेज्जपेत् ॥ ४० ॥ गृहस्य पूर्वदिग्भागे स्थण्डिलं परिकल्पयेत् । उल्लेखनादिकं कुर्यादग्निं संस्थाप्य तत्परम् ॥ ४१ ॥ स्वगृह्योक्तविधानेन चक्षुष्यन्तञ्च कारयेत् । ग्रहयज्ञं प्रकुर्वीत शान्तिहोमं ततः परम् ॥ ४२ ॥ अग्नेश्च पूर्वदिग्भागे धान्यराशिं प्रकल्पयेत् । तस्योपरि न्यसेत्पात्रमाचार्यः पूजयेत्ततः ॥ ४३ ॥ पूर्वोक्तेनैव यद्द्रव्यं गन्धपुष्पाक्षतादिभिः । प्रधानदेवताहोममष्टोत्तरशतानि च ॥ ४४ ॥ परं मृत्यो तु मन्त्रेण यमाय सोममन्त्रतः । पक्वान्नसमिदाज्याद्यैर्हुनेच्चैव यथाविधि ॥ ४५ ॥ ततो होमं प्रकुर्वीत समिदाज्यचरून्क्रमात् । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ ४६ ॥ ततः पुष्पाञ्जलिं दत्वा यजमानः समाहितः । ततः कुम्भस्थतोयेन कारयेदभिषेचनम् ॥ ४७ ॥ भद्रासनोपविष्टस्य सकुटुम्बञ्च प्रोक्षयेत् । यजमानस्य शिरसि मन्त्रपूतजलेन तु ॥ ४८ ॥ आपो हि ष्ठा पावमानीः स्वस्तिदा विश एकया । यमाय सोमं कद्रुद्रा वामनञ्च प्रशुन्ध्युवम् ॥ ४९ ॥ सोमो धेनुं पौरुषञ्च महेन्द्राद्यैश्च मन्त्रतः । मुञ्चामि त्वेति मन्त्रेण समुद्रज्येष्ठेति सूक्ततः ॥ ५० ॥ ततः पौराणमन्त्रैश्च अभिषेकं समाचरेत् । सर्वैश्च कलशैः स्नाप्य आर्द्रवस्त्रं विसर्जयेत् ॥ ५१ ॥ धौतमाल्याम्बरधरो गन्धाभरणभूषितः । विप्रानभ्यर्च्य विधिवद्गन्धपुष्पाक्षतादिभिः ॥ ५२ ॥ आचार्यं समलङ्कृत्य प्रतिमादानमाचरेत् । धेनुं पयस्वतीं दद्यादाचार्याय

प्रदापयेत् ॥ ५३ ॥ ऋत्विग्भ्यो दक्षिणां दद्याज्जापकेभ्यस्तथैव च । आज्यावलोकनं कुर्यात्तत्तद्दोषोपशान्तये ॥ ५४ ॥ ब्राह्मणैराशिषो भूत्वा ब्राह्मणैः सहबान्धवः । एवङ्कृते न सन्देहो न दोषः शिथिलीभवः ॥ ५५ ॥

तत्रोक्ताः पौराणमन्त्राः — सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसिताऽर्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयो मुनयो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥ इति पौराणमन्त्राः ॥

अथ प्रयोगः — उत्पातदिवसेऽन्यस्मिन् वा शुभतिथि-वार-नक्षत्रयुक्ताऽऽत्मानुकूलदिवसे — सपत्नीको यजमानः प्रातर्नित्यकर्मान्ते, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, "मम सपरिवारस्य गृहसीमान्तचतुरस्रास्थितगृहमध्ये मृत्युरूपशिथिलीसमुत्पत्तिसूचित-व्याधिपीडा-महद्भय-राजक्षोभ-भार्यामरण-चोरभय-कन्यादोष-धान्यनाश-अक्षिनाश-दासवर्गनाश-अग्निभय-ग्रामनाशादि सर्वानिष्टनिवृत्तिपूर्वकक्षेमायुरारोग्याभयप्राप्त्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं, सग्रहमखां शिथिलीशान्तिं करिष्ये" इति सङ्कल्प्य, गणपतिं सम्पूज्य 'आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, सविता प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादि-ऋत्विजो वरयित्वा,

देवयजनोल्लिखनप्रभृत्यग्निं प्रतिष्ठाप्य, प्राणानायम्य देशकालौ सङ्कीर्त्य, मम सपरिवारस्य० ग्रहमखपूर्वक-शिथिलीशान्तिहोमं करिष्ये० ग्रहान्वाधानान्ते, वरदो नामाग्निः, सविता देवता, चरुर्हविः, उपहोमे —'यत इन्द्र भयामहे०' इति मन्त्रेण पलाशसमिच्चर्वाज्यद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः, [ पूर्वे शिथिलीजाते- 'सदसस्पतिं०' इति मन्त्रेण खादिरसमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, ( सदसस्पतय इदं० ) आग्नेय्यां— 'अयमु ते समुतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे' इति मन्त्रेणौदुम्बरसमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, ( इन्द्रायेदं० ) दक्षिणे— 'त्र्यम्बकं०' इति मन्त्रेण प्लक्षसमिद्भिरष्टोत्तरशतसङ्ख्याहुतिभिः, निर्ऋत्यां—'प्रजापते न त्वत्०' इति मन्त्रेणाऽपामार्गसमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, पश्चिमे— 'गणानां त्वा०' इति मन्त्रेण दूर्वासमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, वायव्यां — 'सप्त ते अग्ने०' इति मन्त्रेण दूर्वासमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, उत्तरे —'अघोरेभ्योऽथ०' इति मन्त्रेण वटसमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, ऐशान्यां — येषामीशे०' इति मन्त्रेण शमीसमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, द्वारप्रदेशे —'त्र्यम्बकं०' इति मन्त्रेण बिल्वसमिद्भिरष्टोत्तरशतसङ्ख्याकाहुतिभिः, शयनप्रदेशे — व्याहृतिभिः प्रत्येकं यवैरष्टोत्तरशतसङ्ख्याकाहुतिभिः, गोष्ठे–व्याहृतिभिः प्रत्येकं यवैः १०८ आहुतिभिः, जलभाण्डस्थाने — सप्तव्याहृतिभिः ( ॐ भूः स्वाहा, अग्नय इदं० ॥ भुवः स्वाहा, वायव इदं० ॥ सुवः स्वाहा, सूर्यायेदं० ॥ महः स्वाहा, बृहस्पतय इदं० ॥ जनः स्वाहा, वरुणायेदं० ॥ तपः स्वाहा, इन्द्रायेदं० ॥ सत्यꣳ स्वाहा, विश्वेभ्यो देवेभ्य इदं० इति ) प्रत्येकं यवैः १०८ आहुतिभिः, देवतायतने — बिल्वसमिद्भिः १०८ आहुतिभिः, सभास्थाने —'आ त्वाऽहार्ष०' इत्यादि पञ्चमन्त्रैर्दूर्वासमिद्भिः प्रत्येकं १०८ आहुतिभिः, ( आ त्वाऽहार्षमन्तरभूः । ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु । मा त्वद्राष्ट्रमधिभ्रशत्स्वाहा ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् । ध्रुवा ह पर्वता इमे । ध्रुवो राजा विशामयꣳ स्वाहा ॥ इहैवैधि मा

व्यथिष्ठाः । पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठ । इह राष्ट्रमु धारय स्वाहा ॥ अभितिष्ठ पृतन्यतः । अधरे सन्तु शत्रवः । इन्द्र इव वृत्रहातिष्ठ । अपः क्षेत्राणि सञ्जयन्स्वाहा ॥ इन्द्र एणमदीधरत् । ध्रुवं ध्रुवेण हविषा । तस्मै देवा अधिब्रुवन् । अयञ्च ब्रह्मणस्पतिः स्वाहा ॥ सर्वत्र, इन्द्रायेदं०, इति ] अर्यमादयः स्विष्टकृतः, इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाग्रेणाऽग्निं ग्रहवेद्यां ग्रहानावाह्य सम्पूज्य, तदुत्तरेऽष्टदळपद्मे धान्योपरि कलशं प्रतिष्ठाप्य वरुणपूजान्ते गायत्र्या सवितारमावाह्य षोडशोपचारैः सम्पूजयेत् ॥ ग्रहचरुनिर्वापान्ते सवित्रे चरुं निरुप्य प्रोक्ष्याज्यसंस्काराद्यग्निमुखान्तं कृत्वा, ग्रहहोमान्ते सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधायाऽन्वाधानोक्तक्रमेणोपहुत्य, स्विष्टकृदादि होमशेषं समापयेत् ॥ आवाहितदेवताः पुनः सम्पूज्य, सर्त्विगाचार्यः कलशोदकेन शिथिलयुद्धवस्थानं प्रोक्ष्य, सपरिवारं यजमानं 'आपो हि ष्ठा०' इति तिसृभिः 'हिरण्यवर्णाः०' इति चतसृभिः 'पवमानः सुवर्जनः०' इत्येतेनाऽनुवाकेन, व्याहृतिभिः 'अपैतु०' इति मृत्युसूक्तेन, 'यत इन्द्र०, स्वस्तिदा०, सदसस्पतिं०, गणानान्त्वा०, सप्त ते अग्ने०, अघोरेभ्यः०, येषामीशे०, आ त्वाहार्ष०' इत्यादिभिरायुष्यसूक्तेनाभिषिञ्चति । ततो ब्राह्मणान्सम्पूज्य सपीठं कलशदानं गोदानं यथाशक्ति दक्षिणाप्रदानञ्च कुर्यात् कर्मेश्वराय समर्प्य ब्राह्मणान्सम्भोज्याशिषो गृह्णीयात् ॥ ॥ केचन कारिकोक्तप्रकारेण मृत्युप्रतिमां शिथिलप्रतिमां वा सम्पूज्य जयहोमादि कुर्वन्ति ॥ ॥

## ॥ अद्भुतशान्तिविधिः ॥

( बो. गृ. सू. ३ ६ ) अथ यद्यगारे स्थूणा विरोहेत्, कपोतो वाऽगारमध्येऽधिपतेत्, वायसो वा गृहं प्रविशेत्, गौर्वा गां धयेत्, गौरात्मानं प्रति धयेत्, अनड्वान्वा दिवमुल्लिखेत्, अनग्नौ वा धूमो जायेत, अनग्नौ वा दीप्येत, मधु वा जायेत,

वल्मीकं वोपजायेत, निर्यासं वोपजायेत, छत्राकं वोपजायेत, मण्डूको वाऽम्भ्रणे वाशयेत, श्वानप्रसूतो वा, श्वानो गृहमारोहेत, सर्पो वा गृहपतिं जायां वोपतपद्विन्देतान्येषु वाऽद्भुतोत्पातेषु॥ अथ देवयजनोल्लेखनप्रभृत्याऽऽग्निमुखात्कृत्वा पक्वाज्जुहोति- ' यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः ' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति-' वास्तोष्पते, वास्तोष्पते, शन्नो देवीः, इन्द्राग्नी रोचना, कया नश्चित्र आभुवत, को अद्य युङ्क्ते, भवतं नस्समनसौ ' इति ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाऽग्रेणाऽग्निं शमीपर्णेषु हुतशेषं निदधाति—'शन्नो देवीरभिष्टये' इति ॥ स्थालीसद्क्षालनमाज्यशेषमुदकशेषञ्च पात्र्यां समानीय तेषूत्पातेषु निनयेत् प्रोक्षेद्वा- 'तच्छंयोरा वृणीमहे' इति ॥ अन्नं संस्कृत्य ब्राह्मणान्सम्पूज्याऽऽशिषो वाचयति ' शिवं शिवम् ' इति ॥ अद्भुतो व्याख्यातः ॥

शौनकः — अद्भुतानाञ्च सर्वेषां शान्तिं वक्ष्यामि शौनकः । दिव्यानि चान्तरिक्षाणि भौमानि विविधानि च ॥१॥ रश्मिहीनं यदा सूर्यं मण्डलस्य च भेदनम् । नक्षत्रचन्द्रसूर्याणां महोल्कापातनं तथा ॥ २ ॥ दिवोल्कापातनं तद्वद्दिवा नक्षत्रदर्शनम् । प्रतिसूर्यं चतुर्दिक्षु परिवेषत्रयं युतम् ॥३॥ त्रिकोणं चतुरस्रं वा विपरीताकृतिं तथा । प्रतिचन्द्रं तथा रात्रौ चन्द्रस्याप्येवमेव तु ॥ ४ ॥ अमेघे विद्युतं पश्येन्न च मेघे च विद्युतम् । अनग्निधूममाकाशे पतन्तीं दीपिकां तथा ॥५॥ गन्धर्वगानं शृणुयाद्दिव्यान् घोषांश्च दीर्घकान् । गन्धर्वनगरस्याऽपि गन्धर्वाणाञ्च दर्शनम् ॥ ६ ॥ पद्मादीनाञ्च दिव्यानि ह्यद्भुतानि निबोधत । गगनं लोहितं पश्येत्पश्येद्वा काकमैथु- नम् ॥ ७ ॥ काकदुर्गन्धिपतनं वह्नौ शिरसि वा यदि । शिरस्युपविशेत्काकस्ताडयेद्वा ह्यकारणात् ॥८॥ वायसः कृष्णशाकुनकपोतोलूक- टिट्टिभाः । सुवर्णक्षीरपक्षी च चाषाद्याः प्रविशेद्गृहम् ॥ ९ ॥ देवालयानि कम्पन्ते दृश्यन्ते प्रतिरूपकाः । कलशा किङ्कलेत्किञ्चिद्

ध्वजप्रपतनं तथा ॥ १० ॥ स्विद्यन्ते देवताः सर्वा भिद्यन्ते वै ह्यकारणात् । उन्मीलन्ति विरोदन्ति निमीलन्ति हसन्त्यनु ॥ ११ ॥ गायन्त्यकस्मान्नृत्यन्ति चलन्ति निजपीठतः । पीठदेशे प्रजायन्ते मधु-छत्र-पिपीलिकाः ॥ १२ ॥ रात्राविन्द्रधनुं पश्यन् दिवा श्वेतञ्च वायसम् । एवमादीन्यद्भुतानि ह्यन्तरिक्षाणि कथ्यते ॥१३॥ अथ भौमानि वक्ष्यामि निदर्शनमिव क्षयात् । भूमिकम्पं षड्विधञ्च निर्घातं कम्पनं स्मृतम् ॥१४॥ पातनं पतनञ्चाऽपि ज्वलनञ्च निरिन्धनम् । छत्राकं मधुवल्मीकं गृहे यत्र प्रजायते ॥१५॥ गृहे तृणानि दारूणि प्ररोहन्ति गृहान्तरे । शुष्कवृक्षाः प्ररोहन्ति लीयन्ते तैलतोयकौ ॥ १६ ॥ पिपीलिकाः पक्षयुताः शिथिलीश्च पिपीलिकाः । जायन्ते चोद्भिजाः सर्वे प्राणिनो बहुधा तथा ॥ १७ ॥ अरण्यस्य मृगाः सर्वे ह्यभीताश्चाप्यकारणात् । प्रविशन्ति गृहे यस्य गृहमारोहयेद्यदि ॥ १८ ॥ सर्वे मृगाश्च गावो वा अश्वोष्ट्रमहिषादयः । प्रविशन्ति गृहद्वारं सर्वे वा स्वयमेव हि ॥ १९ ॥ मण्डूकसर्पनकुला स्वयमग्नौ विशेद्यदि । कदलीपूगवृक्षादि ह्येकगर्भे फलद्वयम् ॥ २० ॥ उद्यानस्थापिता रम्भा दक्षिणाभिमुखे फले । क्षेत्रादिष्वद्भुते जाते प्रदेशञ्च प्रदापयेत् ॥ २१ ॥ गोशृङ्गे धूमजनने दुग्धे गौरुधिरं यदि । तद्ग्रामस्य च राष्ट्रस्य बाधकं तत्प्रजायते ॥ २२ ॥ तद्गृहान्निर्गमं श्रेयो मासं न प्रविशेद्गृहम् । मासाऽतीते तथा सम्यग्गृहशुद्धिञ्च कारयेत् ॥२३॥ तस्मिन्नहनि वा कुर्याच्छान्तिहोमं यथाविधि । शान्तिहोमं ततः कुर्यात्स्वशाखोक्तविधानतः ॥ २४ ॥ अद्भुतोत्पत्तिदेशे वा दक्षिणे वा गृहोत्तरे । कुण्डे वा स्थण्डिले वाऽपि गोमयेन सवारिणा ॥ २५ ॥ उपलिप्य स्थण्डिलञ्च रङ्गवल्यादिभिः सह । आचार्यं वरयेत्पश्चाद्ब्राह्मणं वेदपारगम् ॥ २६ ॥ सर्वावयवसम्पूर्णं कुलीनञ्च कुटुम्बिनम् । आचारवन्तं धर्मज्ञं सर्वप्राणिहितैषिणम् ॥ २७ ॥ शीललक्षणसम्पन्नं रूपौदार्यगुणान्वितम् । सदा सन्तुष्टमनसं रोगदूषणवर्जितम् ॥ २८ ॥ होमान्तेऽभिषेकञ्च कुर्याच्च कलशोदकैः । अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च ॥ २९ ॥ आपो हि ष्ठेति सूक्तेन तरत्समन्दीति सूक्ततः । आनोभद्रेति सूक्तेन शन्नसूक्तेन चैव हि ॥ ३० ॥ आशुः शिशानसूक्तेन

आयुष्यमिति सूक्ततः । अथ होमोक्तमन्त्रैश्च सुरास्त्वामभिषिञ्चयेत् ॥ ३१ ॥ समुद्रज्येष्ठा इत्यादि त्रायन्तामित्यृचेन च । इमा आपस्तृचेनैव देवस्य त्वेति मन्त्रतः ॥ ३२ ॥ अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् । नवं वस्त्रान्तरं धृत्वा आज्यावेक्षणमाचरेत् ॥ ३३ ॥ सहिरण्यं सवस्त्रञ्च सर्वभूषणभूषिताम् । धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम् ॥ ३४ ॥ जापकेभ्यश्च विप्रेभ्यस्तथा हेमं प्रदापयेत् । गृह्याशीर्वचनं तेभ्यः प्रणिपत्य क्षमापयेत् ॥ ३५ ॥ सहस्रं भोजयेद्विप्रान् शतं वा दशकं तथा । बन्धुभिः सह भुञ्जीयाद्यथा वित्तानुसारतः ॥ ३६ ॥ एवं यः कुरुते शान्तिं तस्यायुर्वर्धते सदा । अद्भुतोद्भवदोषाश्च प्रणश्यन्ति न संशयः ॥

अथ प्रयोगः ॥ अगारे स्थूणाविरोहण, शुष्कवृक्षप्ररोहण, मर्कट-वायस-कपोत-वन्यविहङ्गशशमृगादिप्रवेश, गोभिरन्यगवानां स्तनपान, स्वस्यस्तनपान, अनडुद्भिर्द्यौरुल्लेखन, अनग्नौ धूमजनन, अनग्नौ उद्दीपन, मधुमक्षिकाभिः कोटरानिर्माण, वल्मीकनिर्यास, छत्राक-दूर्वाद्युत्पत्ति, अम्भृणे मण्डूकशयन, अग्नौ मण्डूकपतन, मूर्ध्नि पल्लीसरठपतन, गोमृग-श्वान-शशक-ग्रहारोहण, सर्पाद्युपताप, कनकरजतवस्त्रवैडूर्यमणिमौक्तिकानां नाश, पात्रसहितप्रज्वलद्दीपपतन, अरिष्टपक्षिदर्शन, काकमैथुनदर्शनाद्यद्भुतेषु तद्दोषशमनार्थमद्भुतशान्तिं कुर्यात् ॥ कर्ता प्रातः स्नानादि नित्यकर्म निर्वर्त्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'ममाऽस्मिन्गृहे अमुकप्रवेशोत्पत्त्याद्यद्भुतसूचित-भाविसर्वारिष्टनिरसनद्वारा क्षेमाऽभयाऽऽयुरारोग्यप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं (सत्यनुकूले-सग्रहमखां) अद्भुतशान्तिं करिष्ये' इति सङ्कल्प्य । गणेशं सम्पूज्य "अभयङ्करेन्द्रः प्रीयताम्" इति पुण्याहं वाचयित्वा, देवयजनोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य 'ममाऽस्मिन्गृहे अमुकप्रवेश० श्रीपरमेश्वरप्रीत्यर्थमद्भुतशान्तिहोमं करिष्ये, अद्भुतशान्तिहोमः कर्म० वरदो नामाऽग्निः, अभयङ्करेन्द्रो देवता, चरुर्हविः, उपहोमे-वास्तोष्पते इत्यादि सप्तमन्त्रैराज्येन, अग्निः स्विष्टकृत् इत्यादि सङ्कल्प्यान्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निं व्रीह्यादिनिर्मिते स्थण्डिले कलशं प्रतिष्ठाप्य 'यत इन्द्र

भयामहे०, स्वस्तिदा विशस्पतिः०' इति द्वाभ्यामभयङ्करेन्द्रमावाह्य, षोडशोपचारैरभ्यर्च्य देवस्य त्वेत्यादि अभयङ्करेन्द्राय चरुं निरुप्य प्रोक्ष्याऽऽज्यसंस्काराद्यग्निमुखान्तं कृत्वा, 'यत इन्द्र०, स्वस्तिदा०' इति द्वाभ्यां पक्वं जुहुयात् ( अभयङ्करेन्द्रायेदं० ) ततः स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति– वास्तोष्पते प्रतिजानीहि०, वास्तोष्पते शग्मया० ( द्वयोः–वास्तोष्पतय इदं० ) शन्नो देवीः० (अद्भ्य इदं०) इन्द्राग्नी रोचना दिवः परिव्राजेषु भूषथः । तद्वां चेति प्रवीर्यं स्वाहा ( इन्द्राग्निभ्यामिदं० ) कयानश्चित्र आ भुवत्० ॥ को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् । आसन्निषून्हृत्स्वसोम यो भून्य एषां भृत्यामृणधत्स जीवात्स्वाहा ( द्वयोः, कायेदं० ) भवतन्नः समनसौ समोकसावरेपसौ । मा यज्ञं हिं सिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः स्वाहा ( जातवेदोभ्यामग्निभ्यामिदं० ) इति ॥ स्विष्टकृदादिप्रागुत्तरपरिषेकात्कृत्वा "शन्नो देवी०" इति शमापर्णेषु हुतशेषं निधायोत्तरपरिषेकादि होमशेषं समाप्यावाहितदेवतां पुनः सम्पूज्य, स्थालीसङ्क्षालनमुदकशेषमाज्यशेषं कलशोदकञ्च पात्र्यां समानीय, 'तच्छंयोरा वृणीमहे' इति तत्तदद्भुतस्थानानि प्रोक्ष्य, ब्राह्मणान्सम्भोज्य 'प्रजापतिः प्रीयताम्' इति पुण्याहं वाचयित्वा "शिवं शिवं शिवम्" इति त्रिर्वाचयेत् ॥ आवाहितदेवतामुद्वास्याऽऽचार्याय कलशदानं, गोदानं, ऋत्विग्भ्यो दक्षिणाप्रदानञ्च कृत्वा यावच्छक्ति ब्राह्मणान्भोजयित्वाऽऽशिषो गृह्णीयात् ॥

## ॥ रक्तवल्मीकशान्तिविधिः ॥

( बो. गृ. शे. सू. ३. १३. १७–२१ ) देवालये सभास्थाने तटाके गृह एव वा । उत्पन्ने रक्तवल्मीके कुर्यात्तस्य प्रतिक्रियाम् ॥ समिद्भिस्सर्पिषा चैव हविषा तिलसर्षपैः । कुर्याद्व्याहृतिमन्त्रेण होममष्टशतं पृथक् ॥ धर्माऽऽस्थाने तु वल्मीके जाते मरणमादिशेत् ।

इन्द्रस्थाने श्रियं ब्रूयादाग्नेये च तथाऽश्रियम् ॥ याम्ये बन्धुविनाशस्स्याद्राक्षसे गृहिणीं हरेत् । वारुणे बन्धुलाभस्स्याद्वायव्ये दूर आगतिः ॥ सौम्ये सुखं तथा रौद्रे दुर्वाक्यं मरणं भवेत् ॥ इत्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ शुभतिथि-वार-नक्षत्रयुक्ताऽऽत्मानुकूलदिवसे — सपत्नीको यजमानः प्रातर्नित्यकर्म कृत्वाऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम सपरिवारस्य गृहसीमान्त-चतुरस्रस्थित-देवयजन-तटाक-सभागृह-गृहमध्ये पूर्वादिचतुर्दिक्षु रक्तवल्मीकोत्पत्तिसूचिताऽपमृत्यु-दारिद्र्य-बन्धुविनाश–कलत्रवियोग-जन्मभूमिवियोग-अक्षेम–दुर्वाक्यश्रवणादि-सकलानिष्टनिरसन-द्वारा क्षेमोऽभयशुभाऽऽयुष्यारोग्यैश्वर्यादि सर्वाभीष्टफलसिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां रक्तवल्मीकशान्तिं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, 'सविता प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादीन्वृणुयात् । अथ देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, ग्रहान्वाधानान्ते—वरदो नामाग्निः, सविता देवता, चरुर्हविः, उपहोमे—समस्तव्याहृतिमन्त्रेण समिच्चर्वाज्यतिलसर्षप-द्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः, अर्यमादयः स्विष्टकृतः, इत्याद्यन्वाधायाग्रेणाऽग्निं स्थण्डिलद्वये ग्रहान्सवितारञ्च सम्पूज्य, निर्वापादि ग्रहहोमान्ते सावित्र्या पक्वं हुत्वाऽन्वाधानोक्तक्रमेणोपहुत्य स्विष्टकृदादिहोमशेषं समापयेत् ॥ कलशोदकेन वल्मीकोत्पत्तिस्थानं प्रोक्ष्य, यजमानं सपरिवारमभिषिञ्चेत् । आचार्यादीन्सम्पूज्य, कलशदानादिकं कुर्यात् । यथाशक्ति ब्राह्मणान् सम्भोज्याऽऽशिषो गृह्णीयात् ॥

## ॥ अथाशनिपातशान्तिविधिः ॥

(बो. गृ. शे. सू. ४·२१) अशनिपाते भूमिं जानुदघ्नमुद्धृत्याद्भिः प्रोक्ष्य शीपालपत्रमवकां च संस्थाप्य ब्राह्मणानन्नेन

परिविष्य पुण्याहं वाचयित्वा खननात्पश्चात् स्थण्डिलं कृत्वा परिधानप्रभृत्यग्निमुखपर्यन्तं कृत्वा 'शन्न इन्द्राग्नी' इति त्रिभिर्मन्त्रैराज्याहुतीर्हुत्वा 'सप्रत्नथा सहसा जायमानः' इति सूक्तेन चरुणा जुहोति ॥ 'स्वस्ति नो मिमीताम्' इति प्रतिपद्य 'स्वस्ति नो बृहस्पतिर्दधातु' इति स्वस्त्यात्रेयं जपित्वा ब्राह्मणान्सम्पूज्याशिषो वाचयित्वाऽऽचार्याय दक्षिणां ददाति ॥ चरुं विद्यावन्तं ब्राह्मणं भोजयेत् ॥ दग्धभूमिसमं ब्राह्मणाय दद्यात् जीवनागन्धर्मियादिति स्वर्णं ददातीत्याह भगवान् बोधायनः ॥

शौनकः— वेश्मक्षेत्रादिदग्धेषु वैद्युतेनाऽग्निना यदि । तेषां शान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ॥ तस्मिन्देशे जानुमात्रं गर्तं कृत्वा ह्यवोक्ष्य तम् । शीपालमवकाञ्चैव निधाय स्वस्ति वाचयेत् ॥ कर्ताऽस्य पश्चिमे देशे होमं कुर्याद्विचक्षणः । इध्माधानादिपर्यन्तं यज्ञतन्त्रं प्रकल्पयेत् ॥ उपलेपादिकं सर्वमिध्माधानाज्यभागयोः । आज्याहुतीः शंवतीभिर्जुहुयादग्निमग्रतः ॥ सप्रत्नथेति सूक्तेन जुहुयाच्च चरुं ततः ॥ ततः स्विष्टकृत्प्रभृति होमशेषं समापयेत् ॥ अग्नेरुत्तरतः स्विष्टात्स्वस्त्यात्रेयं जपेत्ततः । ब्राह्मणान्भोजयेत्तत्र यथाशक्ति च दक्षिणा ॥ तदग्निदग्धं वपुषे प्रदद्याद्ब्राह्मणाय च । प्राणदग्धेषु सर्वेषु हिरण्यं दक्षिणा भवेत् ॥

अथ प्रयोगः ॥ स्वगृहक्षेत्रादिष्वशनिपाते — आत्मानुकूलशुभतिथि-वार-नक्षत्रदिवसे, कर्ता प्रातर्नित्यकर्म कृत्वाऽशनिदग्धभूमिं जानुमात्रं खात्वा, मृदमुद्धृत्याऽद्भिः प्रोक्ष्य तत्र शीपालपत्रमवकाञ्च निधाय, गर्तस्य पश्चिमे देशे उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'मम स्वगृहक्षेत्रादिष्वशनिपातजनितसर्वानिष्टनिरसनद्वारा क्षेमस्थैर्यशुभाऽभयाऽऽयुष्याऽऽरोग्यप्राप्त्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखामशनिपातशान्तिं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, 'आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, सविता प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादीन्वृणुयात् ॥ अथ देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, प्राणानायम्य० मम स्वगृह० ग्रहमखपूर्वकमशनिपातशान्तिहोमं करिष्ये० ग्रहान्वाधानान्ते, वरदो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे —

‘शन्न इन्द्राग्नी’ इति त्रिभिर्मन्त्रैराज्येन ‘स प्रत्नथा सहसा०’ इति नवर्चेन सूक्तेन प्रतिमन्त्रं चरुद्रव्येण, अर्यमादयः स्विष्टकृतः, इत्यादि सङ्कल्प्यान्वाधायाऽग्रेणाऽग्निं स्थण्डिलद्वये — ग्रहान् सवितारञ्च सम्पूज्य, निर्वापादि ग्रहहोमान्ते सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति — ‘शन्न इन्द्राग्नी०, शन्नो भगः०, शन्नो धाता०’ इति त्रिभिः (सर्वत्र, विश्वेभ्यो देवेभ्य इदं०)॥ अथ पक्वावशिष्टं चरुं मेक्षणेनोपहत्य जुहोति — स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा। आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदां स्वाहा॥ स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम्। विवस्वता चक्षसा द्यामपश्च देवा अग्निं०॥ तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृञ्जसानम्। ऊर्जः पुत्रम्भरतं सृप्रदानुं देवा अग्निं०॥ स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित्। विशां गोपा जनिता रोदस्योर्देवा अग्निं०॥ नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची। द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं०॥ रायो बुध्नः सङ्गमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः। अमृतत्वं रक्षमाणास एनं देवा अग्निं०॥ नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम्। सतश्च गोपां भवतश्च भूरेर्देवा अग्निं०॥ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्रयंसत्। द्रविणोदा वीरवती-मिषन्नो द्रविणोदा रासते दीर्घमायुः स्वाहा॥ एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे विभाहि। तन्नो मित्रो वरुणो मामह-न्तामदितिः सिन्धुः पृथिवी उत द्यौः स्वाहा॥ (सर्वत्र, अग्नय इदं०)॥ ततः स्विष्टकृदादि होमशेषं समाप्य, ‘स्वस्ति नो मिमीतां’ इति दशर्चं स्वस्त्यात्रेयसूक्तं जपित्वा, कलशोदकेनाऽशनिदग्धभूमिं प्रोक्ष्य, सपरिवारं यजमानमभिषिञ्चेत्॥ ब्राह्मणान्सम्पूज्य ‘प्रजापतिः प्रीयताम्’ इति पुण्याहं वाचयित्वा, कलशदानं, दग्धभूमिपरिमितभूदानं, सुवर्णदानञ्च कुर्यात्। ब्राह्मणान्भोजयित्वाऽऽ-शिषो गृह्णीयात्॥ ॥ एवमेव द्विपात्सु चतुष्पात्सु वाऽशनिदग्धेषु शान्तिं कृत्वा, सुवर्णं दक्षिणाञ्च दद्यात्॥

# ॥ अथ ग्रामस्योत्पातशान्तिविधिः ॥

( बो. गृ. शे. सू. ४. २० ) अग्निदाहे, व्याघ्रादिभिरभिभूते, सृगालपीडने, ग्रामादन्तश्चाण्डालाध्यवसिते, ग्रामस्य स्थूणावरोहणे, मधुन उपवेशने, वल्मीकपुष्करोत्पन्ने, देवगात्रस्वेदकम्पने, ज्वराभिभूते, बहुब्राह्मणमरणे, ग्राममध्ये स्मशाने वा दस्युभिश्चापि पीडिते, रात्रौ तटाकसेतुभङ्गे, जले विवर्णे वा स्वन्तस्थेऽशनिपाते, चिरकालशून्यग्रामप्रवेशे, तेष्वन्येषु चोत्पातेषु शान्तिं कुर्यात् ॥ शुभवारे शुभनक्षत्रे शुभलग्ने विष्णोस्स्नापनार्थं महादेवाभिषेकार्थं द्वौ द्वौ ब्राह्मणौ कल्पयित्वा नवग्रहशान्त्यर्थं चतुरो ब्राह्मणांस्तथैव संख्यया ग्रामशान्तिहोमार्थं कल्पयित्वाऽथ ग्रामशान्तिहोमे ग्रामस्योत्तरपूर्वदेशे देवागारे चतुष्पथे वा शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य तिलसर्षपलाजैर्गन्धपुष्पाक्षतैरवकीर्य स्थण्डिलं कल्पयित्वा कुम्भस्थापनं कृत्वाऽग्निमुपसमाधाय सम्परिस्तीर्याप्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं देवताश्चावाहयति—व्याहृतीभिः 'यज्ञपुरुषमावाहयामि' देवस्य दक्षिणतः 'ब्रह्माणमावाहयामि' उत्तरतः 'त्रियम्बकमावाहयामि' देवस्याग्रे 'वास्तुपुरुषमावाहयामि' इत्यावाह्य पुरुषसूक्तेन विष्णुमभ्यर्च्य ब्रह्मसूक्तेन चतुर्मुखं रुद्रसूक्तेन त्रियम्बकं चाभ्यर्च्यान्येषां देवानामावाहनादिक्रमेण स्वैस्वैर्नामभिरभ्यर्च्यापरेणाग्निं प्राङ्मुख उपविश्याग्निमुखात्कृत्वा पक्वाज्जुहोति—' वास्तोष्पते ' ' वास्तोष्पते ' इति द्वाभ्याम् ॥ तेनैव मन्त्रेण शमीमयीं समिधमष्टोत्तरसहस्रं जुहुयात् ॥ ' वास्तोष्पते प्रतरणो न एधि ' इत्यष्टोत्तरसहस्रमन्नाहुतीर्जुहुयात् ॥ ' अमीवहा वास्तोष्पते ' इत्यष्टोत्तरसहस्रमाज्याहुतीर्जुहुयात् ॥ मृगारेष्विव 'अंहोमुचे ' इत्यभिर्न्नैः प्रत्यृचमाज्याहुतीर्हुत्वा 'या वामिन्द्रावरुणा' इति द्वादशभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन पुरुषसूक्तेन, ब्रह्मसूक्तेन, रुद्रसूक्तेन, इति प्रत्यृचं 'यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः'

इति द्वाभ्याम्, ' अग्निरायुष्मान् ' इति पञ्चभिः ' अग्ने नय सुपथा ' इति षड्भिः ' योऽस्य कौष्ठ्य ' इति ' एष ते निर्ऋते भागः ' इति ' इमं मे वरुण, तत्त्वा यामि ' इति द्वाभ्याम् ' समुद्राय त्वा वाताय स्वाहा ' इति त्रयोदशाहुतीः ' आ प्यायस्व, सन्ते पयांसि ' इति द्वाभ्यां ' ईशानस्सर्वविद्यानां ' इति ' त्रियम्बकं ' इति ' आ सत्येन ' इत्यादि ' केतुं कृण्वन्नकेतवे ' इत्यन्तं नवग्रहमन्त्रेण चाज्याहुतीर्जुहुयात् ॥ अथ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाग्रेणाग्निं शमीपत्रेषु हुतशेषं निदधाति —' यो रुद्रो अग्नौ ' इति ॥ अथ देवताभ्यो हविर्निवेदयेत् ॥ अथोपतिष्ठते— ' हेतयो नाम स्थ ' इति ॥ यथाक्रमं दिश उपस्थाय पुण्याहं वाचयित्वा उदकुम्भं चान्वारभ्य पञ्चशान्तिश्च जपित्वा हुतशेषमाज्यशेषञ्च पूर्णकुम्भे निक्षिप्य उदुम्बरशाखया शमीशाखया दर्भमुष्टिना वा ' शिवं शिवं, शन्नो देवीरभिष्टये ' इति च शाकुनेन सूक्तेन ग्रामं त्रिः प्रदक्षिणं परिषिच्य ब्राह्मणेभ्यो भूरिदक्षिणां दत्वैवं सप्ताहं द्वादशाहं वा कुर्यात्समस्तोत्पातशान्तिरित्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ यजमानः अनुकूलशुभवार-तिथि-नक्षत्रदिवसे शुभलग्ने ग्रामस्थैः सह प्रातर्नित्यकर्म कृत्वा, ग्रामस्येशानदिग्भागे, देवालये, चतुष्पथे वा– सपत्नीकः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, " अस्मिन् ग्रामे स्थितानां सर्वेषां सहकुटुम्बानां सपरिवाराणां द्विपदचतुष्पदसहितानां मम च सकुटुम्बस्य सपरिवारस्य द्विपच्चतुष्पदसहितस्य अग्निदाह–व्याघ्र-शृगालपीडा, ग्राममध्ये चण्डालाधिवास, शुष्कवृक्षविरोहण, मधु–वल्मीक–पुष्करोत्पत्ति, देवगात्रस्वेद–कम्पन, ज्वरबाधा, बहुब्राह्मणमरण, सर्प–श्वापद–दस्यु–तस्करादिभिः पीडन, रात्रौ तटाकसेतुभङ्ग, जलवैवर्ण्य, अशनिपात, षड्विधभूकम्प, ग्रामे निर्भयमारण्यकमृगपक्षिसञ्चार, गोशृङ्गे धूमजनन, गोरुधिरदोहन, रात्राविन्द्रधनुर्दर्शन, अमेघे विद्युद्दर्शन, चन्द्रसूर्ययोर्विपरीताकृतिदर्शन, रश्मिहीनसूर्यदर्शन, प्रतिदिक्षु प्रतिसूर्यदर्शन, रात्रौ प्रतिचन्द्रदर्शन, दिवा नक्षत्रदर्शनोल्कापातधूमकेतुदर्शनेत्यादि

भौमान्तरिक्षदिव्यमहोत्पातसूचितसर्वारिष्टशान्तिद्वारा क्षेमस्थैर्याऽभयाऽऽयुरारोग्यप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां ग्रामस्योत्पातशान्तिं करिष्ये " इति सङ्कल्प्य, गणपतिपूजनं, मातृकापूजनं, नान्दीश्राद्धञ्च विधाय, उदकशान्तिं प्रतिसरबन्धञ्च कृत्वा, 'आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, वास्तोष्पतिः प्रीयताम्' इति पुण्याहं वाचयित्वा, आचार्यं, विष्णुपूजार्थं द्वौ महादेवपूजार्थं द्वौ, इति चतुरः, नवग्रहशान्त्यर्थं चतुरः, ग्रामशान्तिहोमार्थं चतुरः, ब्रह्माणं, सदस्यमिति पञ्चदश सङ्ख्यानृत्विजो वृत्वा मधुपर्केण पूजयेत् ॥ तत आचार्यो देवयजनोल्लिखनाद्यग्निं प्रतिष्ठाप्य० देशकालौ सङ्कीर्त्य, अस्मिन् ग्रामे स्थितानां० ग्रहमखपूर्वकं ग्रामस्योत्पातशान्तिहोमं करिष्ये० ग्रहान्वाधानान्ते, वरदो नामाऽग्निः, वास्तोष्पतिर्देवता, चरुर्हविः, उपहोमे — 'वास्तोष्पते शग्मया०' इति मन्त्रेण शमीसमिद्भिरष्टोत्तरसहस्रसङ्ख्याकाहुतिभिः, 'वास्तोष्पते प्रतरणो न एधि०' इति मन्त्रेणाऽन्नेनाऽष्टोत्तरसहस्रसङ्ख्याकाहुतिभिः, 'अमीवहा वास्तोष्पते०' इति मन्त्रेणाऽऽज्येनाऽष्टोत्तरसहस्रसङ्ख्याकाहुतिभिः, 'अग्नेर्मन्वे०' इत्यनुवाकेन प्रत्यृचमाज्येन 'या वामिन्द्रावरुणा०' इति द्वादशभिराज्येन, 'पवमानः सुवर्जनः' इत्यनुवाकेन प्रत्यृचमाज्येन, पुरुषसूक्तेन, ब्रह्मसूक्तेन, रुद्रसूक्तेन च प्रत्यृचमाज्येन, 'यत इन्द्र०, स्वस्तिदा०' इति द्वाभ्यां, 'अग्निरायुष्मान्०' इति पञ्चभिः 'अग्ने नय सुपथा०' इति षड्भि, 'योऽस्य कौष्ठ्य०' इति मन्त्रेण, 'एष ते निर्ऋते भागः०' इति मन्त्रेण 'इमम्मे वरुण०, तत्त्वा यामि०' इति द्वाभ्यां, 'समुद्राय त्वा वाताय स्वाहा' इति त्रयोदशभिः, 'आ प्यायस्व समेतु ते०, सन्ते पयाꣳसि०' इति द्वाभ्यां, 'ईशानः सर्वविद्यानां०, त्र्यम्बकं यजामहे०' इति द्वाभ्यां, 'आ सत्येन०' इत्यादिनवग्रहमन्त्रैश्चाज्येन, अर्यमादयः स्विष्टकृतः, इत्यादि सङ्कल्प्यान्वाधायाऽग्रेणाग्निं — शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य, पञ्चगव्येन प्रोक्ष्य, तिल-सर्षप-लाज-गन्ध-पुष्पाक्षतैरवकीर्य, व्रीहिभिर्यवैर्वा स्थण्डिलं कृत्वा, दक्षिणस्थण्डिले

ग्रहानावाह्य सम्पूज्य, उत्तरस्थण्डिले ' मही द्यौः ' इत्यादिविधिना मध्यदक्षिणपश्चिमोत्तरक्रमेण कलशचतुष्टयं प्रतिष्ठाप्य वरुण-पूजान्तं कृत्वा, कलशोपरि विष्णु-ब्रह्म-रुद्र-वास्तोष्पतिप्रतिमा विन्यस्य, मध्ये —' सहस्रशीर्षा० ॐभूर्भुवस्सुवः यज्ञपुरुषाय नमः यज्ञपुरुषमावाहयामि ' इति विष्णुं, दक्षिणे —' ब्रह्म जज्ञानं० ' इति ब्रह्माणं, उत्तरे — ' परि णो रुद्रस्य० ' इति त्र्यम्बकं रुद्रं, पश्चिमे —' वास्तोष्पते प्रतिजानीहि०, वास्तोष्पते शग्मया० ' इति द्वाभ्यां वास्तोष्पतिं, इन्द्राद्यष्टदिक्षु– इन्द्रादिदेवताश्च क्रमेणाऽऽ-वाह्य, पुरुषसूक्तेन विष्णुं, ब्रह्मसूक्तेन ब्रह्माणं, रुद्रसूक्तेन त्र्यम्बकं, ' वास्तोष्पते०, वास्तोष्पते०' इति द्वाभ्यां वास्तोष्पतिं, इन्द्रादि-देवतानामसन्त्रैश्च क्रमेण षोडशोपचारैरभ्यर्चयेत् ॥ एतस्मिन्काले पूजार्थं वृता ब्राह्मणाः कल्पोक्तप्रकारेण विष्णोर्महादेवस्य च पुरुषसूक्तमहान्यासपूर्वकश्रीरुद्रादिभिरभिषेकादि कुर्युः ॥ ततो ग्रहचरुनिर्वापान्ते वास्तोष्पतये हविर्निरुप्य, ग्रहहोमान्तं कृत्वा, वास्तोष्पतये पक्वं जुहोति — ' वास्तोष्पते प्रतिजानीह्यस्मान्०, वास्तोष्पते शग्मया० ' इति द्वाभ्याम् । वास्तोष्पतय इदं० ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधायान्वाधानोक्तक्रमेणोपहोमादि प्रागुत्तरपरिषेकात्कुर्यात् ॥ ( उपहोमे पूर्वमनुक्तमन्त्राः— योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी । यमं भङ्ग्य श्रवो गाय यो राजान परोध्यः स्वाहा । यमायेदं० ॥ एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहा । निर्ऋत्या इदं० ॥ समुद्राय त्वा वाताय स्वाहा ॥ सलिलाय त्वा वाताय० ॥ अनाधृष्याय त्वा वाताय० ॥ अप्रतिधृष्याय त्वा वाताय० ॥ अवस्यवे त्वा वाताय० ॥ दुवस्वते त्वा वाताय० ॥ शिमिद्वते त्वा वाताय० ॥ अग्नये त्वा वसुमते० ॥ सोमाय त्वा रुद्रवते० ॥ वरुणायत्वाऽऽदित्यवते० ॥ बृहस्पतये त्वा विश्वदेव्यावते० ॥ सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते० ॥ यमाय त्वाऽङ्गिरस्वते पितृमते० ॥ सर्वत्र, समुद्राय वातायेदं० इत्यादि यथालिङ्गं त्यागः ) ॥ अथाऽ-

ग्रेणाऽग्निं ग्रहेभ्यो हुतशेषेण बलिमुपहृत्योत्तरतः शमीपत्रेषु 'यो रुद्रो अग्नौ०' इति हुतशेषं निदधाति। उत्तरपरिषेकादि होमशेषं समाप्याऽऽवाहितदेवताः पुनः सम्पूज्य हविर्निवेदयेत्॥ अथोपोत्थाय तत्तदभिमुखो दिशमुपतिष्ठते—'हेतयो नाम स्थ० जम्भे दधामि' इति प्राचीम्। 'निलिम्पा नाम स्थ० दधामि' इति दक्षिणाम्। 'वज्रिणो नाम स्थ० दधामि' इति प्रतीचीम्। 'अवस्थावानो नाम स्थ० दधामि' इत्युत्तराम्। 'अधिपतयो नाम स्थ० दधामि' इत्यूर्ध्वाम्। 'क्रव्या नाम स्थ० दधामि' इत्यधराम्॥ ततो ब्राह्मणान् सम्पूज्य 'प्रजापतिः प्रीयताम्' इति पुण्याहं वाचयेत्॥ अथ सर्त्विगाचार्यः पुण्याहकलशमन्वारभ्य 'भद्रं कर्णेभिः०' इत्यादि पञ्चशान्तिं जपित्वा, हुतशेषमाज्यशेषं कलशोदकञ्च पुण्याहकलशे निक्षिप्योदुम्बरशाखया शमीशाखया दर्भमुष्टिना वा 'शिवं शिवम्' इति 'शन्नो देवीरभिष्टये' इति मन्त्रेण, "कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम्। सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत्॥ मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता। पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह॥ अव क्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते। मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः॥ प्रदक्षिणिदभि गृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः। उभे वाचौ वदति सामगा इव गायत्रञ्च त्रैष्टुभञ्चानु राजति॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि। वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद विश्वतो नः शकुने पुण्यमा वद॥ आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः। यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः" इति शाकुनसूक्तेन च ग्रामं प्रदक्षिणं त्रिः परिषिच्य, ग्रामस्थजनैः सह सकुटुम्बं यजमानं पूर्वोक्त-'वास्तोष्पते' इत्यादिमन्त्रैरभिषिञ्चेत्॥ ततो यजमानोऽहतं वासः परिधायाऽऽचम्य

ब्राह्मणान्सम्पूज्य गोदानं कलशदानञ्च कृत्वा ऋत्विग्भ्यो भूरिदक्षिणां दत्वा यावच्छक्ति ब्राह्मणान्भोजयित्वाऽऽशिषो गृह्णीयात् ॥ एवमेव सप्ताहं द्वादशाहं वा कुर्यात् ॥ चिरकालशून्यग्रामप्रवेशादिनिमित्तेष्वेवमेव शान्तिं कुर्यात् ॥ ( केचन — मण्डपसंस्कार-वास्तुराक्षोघ्नपूर्वकं कुण्डे शान्तिं कुर्वन्ति ॥ )

## ॥ गोप्रसवशान्तिविधिः ॥

( बो. गृ. शे. सू. ६. १ ) अथातो गोप्रसवशान्तिं व्याख्यास्यामः । जननादिकादशे द्वादशे वा पुण्ये नक्षत्रे पुण्यनद्यादौ देवालये गोष्ठे वा अथवा गृहस्येशानभागे गोमयेनोपलिप्तभूमौ श्वेतरजोभिः कर्णिकायुक्तं पङ्कजं कृत्वा तत्र प्रस्थमात्रान्व्रीहीन्प्रक्षिप्य तेषु रक्तवस्त्रं प्रसारितं नवं वैणवं शूर्पं सꣳस्थाप्य तत्र तिलान्विकीर्य तस्मिन्शूर्पे प्राङ्मुखं शिशुं निधाय द्वितीयशूर्पेणाऽऽच्छाद्य रक्तसूत्रेण शूर्पद्वयं वेष्टयित्वा शूर्पसन्निधौ गामानीय गोमुखसान्निध्यं कृत्वा गोमुखात् प्रसवं विभाव्य । अथाऽऽचार्यः शिशुं प्रोक्षेत्– 'प्र तद्विष्णुः०, परो मात्रया०' इति द्वाभ्याम् । अथ शुद्धोदकेन च स्नापयित्वा–आपो हि ष्ठेति तिसृभिः इति । अथ गां वामाङ्गेषु सर्वाङ्गेषु वा स्पृशेत्– 'गोमाꣳअग्ने विमाꣳअश्वी०' इति । अथ पिता शिशुमादाय मात्रे दद्यात् । माता पित्रे पिता मात्रे वेत्येके । अथ पिता तूष्णीं पुत्रस्य मुखमीक्षते । अङ्गादङ्गादिति शिशुमूर्धनि त्रिरवघ्राय पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वाऽथ गामाचार्याय दद्यात् । अथ गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा श्रोत्रियागारादग्निमाहृत्य ( अग्निमुखान्ते ग्रहपूजां वा विधाय ) अथाग्नेः पूर्वतो व्रीहिमयं स्थण्डिलं कृत्वा मध्येऽष्टदलं कृत्वा विधिना कुम्भं सꣳस्थाप्य तस्मिꣳस्तिरः पवित्रमन्तर्धाय, आपो वा इदमित्युदक-मासिच्य सर्वौषधीः पञ्चरत्नकुशदूर्वागन्धाक्षतान्निक्षिप्य वस्त्रयुग्मेन संवेष्ट्य कुम्भमलङ्कृत्य कुम्भाभ्यन्तरे जलमध्य एव क्रमेण

देवता आवाहयेत्—सद्योजातमिति मध्ये, वामदेवाय नम इति पूर्वे, अघोरेभ्य इति दक्षिणे, तत्पुरुषायेति पश्चिमे, ईशानः सर्वविद्याना-मित्युत्तरे, पञ्चास्यरुद्रं सम्पूज्य, कुम्भमुखे बिल्वपल्लवनिर्मितं मण्डलाकारं कृत्वा, तदुपरि पूर्णपात्रं निधाय तत्राऽष्टदलं कृत्वा, सौवर्णकृता वरुणविष्णुयक्ष्मदेवता आवाह्य पूजयेत् । अथर्त्विज आचार्यश्च कुम्भमन्वारभ्य— 'नमस्ते रुद्र मन्यव' इति प्रश्नं, 'अग्नाविष्णू' इत्येकादशानुवाकान् शतायुधायेति पञ्चाज्यानीः, 'आशुः शिशान' इत्यनुवाकं, 'कृणुष्व पाज' इत्यनुवाकं, 'दधिक्राव्ण' इति सुरभिमतीं, 'आपो हि ष्ठा' इति तिसृभिः, 'हिरण्यवर्णाः' इति चतसृभिः, 'पवमानः सुवर्जनः' इत्यनुवाकं, 'ऋचां प्राची' मित्यनुवाकश्चाभिमृश्य जपेत् । आज्यभागान्ते प्रधानहोमः कार्यः । अथ ग्रहहोमं हुत्वाऽथ दधिमध्वाज्यानि संसृज्य प्रधानहोमः — अव ते हेडो वरुण०, उदुत्तमं वरुण०, यत्किञ्चेदं०, कितवासो०, इमम्मे वरुण०, तत्त्वा यामि० इति षडृचात्मकं वरुणसूक्तमष्टादशावृत्त्याऽष्टोत्तरशतसङ्ख्या भवन्ति । विष्णोर्नु कं०, तदस्य प्रियं०, प्र तद्विष्णुः०, परो मात्रया०, वि चक्रमे०, त्रिर्देवः०, इति षडृचात्मकं विष्णुसूक्तमस्य सूक्तस्याष्टादशावृत्त्याऽष्टोत्तरशतसङ्ख्या भवन्ति । अक्षीभ्यान्ते०, ग्रीवाभ्य०, आन्त्रेभ्यस्ते०, ऊरुभ्यान्ते०, मेहनाद्वनं०, अङ्गादङ्गाल्लोम्नो० इति षडृचात्मकयक्ष्मसूक्तमष्टादशावृत्त्याऽष्टोत्तरशतसङ्ख्या भवन्ति । अथ स्विष्टकृदादि (वरदानान्ते) बलिं पूर्णाहुतिमभिषेकं प्रणीताप्रणयनविमोकान्ते ब्रह्माणं सम्पूज्य विसृजते देवताः । मूलाऽऽश्लेषाज्येष्ठान्यतम-नक्षत्रेष्वतिगण्डे वैधृतौ पातेऽमाविष्टयुपरागेषु च जनने गोप्रसवशान्तिं विधाय तत्तच्छान्तिं कुर्यादित्याह भगवान्बोधायनः ॥ ॥

अथ प्रयोगः ॥ जननादेकादशेहनि द्वादशे वा पुण्ये नक्षत्रे आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यास्य शिशोः अमुक-नक्षत्रजननसूचितसकलाऽरिष्टनिरसनद्वारा दीर्घायुष्याभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां गोमुखप्रसवशान्तिं करिष्ये, इति सङ्कल्प्य, गणपतिं संपूज्य "सवितृवरुणविष्णुयक्ष्माणः प्रीयन्ताम्" इति पुण्याहं वाचयित्वा आचार्यादिऋत्विजो वृणुयात् ॥

अथ वृताचार्यो 'गोप्रसवशान्त्यङ्गतया विहितं कलशस्थापनपूर्वकदेवतावाहनं पूजनञ्च करिष्ये' इति सङ्कल्प्य भूशुध्यादि न्यासांश्च विधाय पुरुषसूक्तं जपित्वा, जलशुध्यर्थं कलशार्चनं, शङ्खार्चनं, आपो हि ष्ठेति तिसृभिर्मण्डपप्रोक्षणं कुर्यात् ॥ ततः 'यदत्र' इति सर्षपविकिरणादिप्रादेशकरणान्ते गृहस्येशानभागे गोमयेनोपलितभूमौ श्वेतरजोभिः कर्णिकायुतं पङ्कजं विलिख्य तत्र प्रस्थपरिमितव्रीहीन्प्रक्षिप्य तेषु नवं वैणवं शूर्पं संस्थाप्य तस्मिन् रक्तवस्त्रं प्रसार्य तत्र तिलान्विकीर्य शूर्पे प्राङ्मुखं शिशुं निधाय द्वितीयशूर्पेणाऽऽच्छाद्य रक्तसूत्रेण तच्छूर्पद्वयं वेष्टयित्वा शूर्पसन्निधौ गामानीय गोमुखसान्निध्यं कृत्वा यजमानो गोमुखात्प्रसवं विभाव्याऽऽचार्यः पूर्वकृतपञ्चगव्येन शिशुं 'प्र तद्विष्णुः०, परो मात्रया०' इति द्वाभ्यां प्रोक्ष्य पुनः शुद्धोदकेन "आपो हि ष्ठा०" इति तिसृभिः स्नापयेत् ॥ ततो गां सर्वाङ्गेषु उपस्पृशति — "गोमाँ२ऽअग्ने विमाँ२ऽअश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावाँ२ऽएषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान्" इति ॥ अथ पिता शिशुमादाय "विष्णो ररराटमसि० विष्णवे त्वा" इति मन्त्रेण मात्रे दद्यात्, माता पित्रे दद्यात्, पिता मात्रे दत्वा तूष्णीं पुत्रस्य मुखमीक्षेत ॥ अथैनं मूर्ध्नि त्रिरवजिघ्रति – "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामाऽसि स जीव शरदश्शतम्" इति ॥ "गोमुखप्रसवाख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॐ पुण्याहं, स्वस्ति० आयुष्मते स्वस्ति, ऋद्धिं० ॐ ऋध्यताम्" इति वाचयित्वा ततस्तां गां आचार्याय दद्यात् ॥ तत आचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, अस्य शिशोः अमुकनक्षत्रजननसूचितसर्वाऽरिष्टनिरसनद्वारादीर्घायुष्याभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं ग्रहशान्तिपूर्वकं गोप्रसवशान्तिहोमं करिष्ये,—ग्रहान्वाधानान्ते,— वरदो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे — वरुणसूक्तेन षण्मन्त्रेण, विष्णुसूक्तेन षण्मन्त्रेण, यक्ष्मसूक्तेन षण्मन्त्रेण च संसृष्टदधिमध्वाज्यद्रव्येण प्रत्यृचं अष्टादशाहुतिभिर्यक्ष्ये,

अग्निः स्विष्टकृत्, इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं ग्रहमंडलं विलिख्य ग्रहानावाह्य — सम्पूज्य तदुत्तरे व्रीहिमयं स्थण्डिल कृत्वा तत्र मध्ये प्रागादिचतुर्दिक्षु च ' मही द्यौः ' इत्यादिविधिना सुदृढांस्तन्तुवेष्टितानव्रणान्पञ्चकलशान्संस्थाप्य तेषु पवित्रमन्तर्धाय " ॐ आपो वा० सुवराप् ॐ " इत्यपः पूरयित्वा सर्वौषधीश्च निक्षिप्य वरुणमावाह्य सम्पूज्य प्रार्थयेत्— " देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विष्णुना विधृतः स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवास्सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वञ्च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवास्सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा " इति ॥ ततः सुवर्णनिर्मिताः सवितृवरुणविष्णुयक्ष्मरुद्रप्रतिमाः ( ' अग्नमन्नूर्जं ' इत्यनुवाकेन सन्ततधारयाऽग्न्युत्तारिताः ) गन्धादिभिरभ्यर्च्य पूर्णपात्रेषु निधाय क्रमेणावाहयेत् ॥ मध्यकलशे — " ॐतत्स-वितुर्वरेण्यं०प्रचोदयात्" ॐभूर्भुवस्सुवरों सवितारमावाहयामि ॥ पूर्वकलशे — "इमम्मे वरुण० चके" वरुणं० ॥ दक्षिणकलशे — " इदं विष्णुः० सुरे ' विष्णुं० ॥ पश्चिमकलशे — "अक्षीभ्यान्ते नासिकाभ्या०" यक्ष्माणं० ॥ उत्तरकलशे — " सद्यो जातं० " इत्यादिपञ्चभिः क्रमेण सद्योजातं०, वामदेवं०, अघोरं०, तत्पुरुषं०, ईशानं० इत्यावाह्य प्राणप्रतिष्ठां कृत्वा षोडशोपचारैः पूजयेत् ॥ ततः सऋत्विगाचार्य ईशानकलशमन्वारभ्य महान्यासपूर्वकं रुद्रैकादशिनीं लघुन्यासपूर्वकं रुद्रं वा, शतायुधायेत्यादि पञ्चमन्त्रान्, आशुः शिशानः, कृणुष्व पाजः इत्यनुवाकत्रयं, दधिक्राव्णः०, आपो हि ष्ठा इति त्रीन्, हिरण्यवर्णाः शुचयः इति सुरभिमतीं, पवमानः सुवर्जन०, ऋचां प्राची० इत्यनुवाकद्वयञ्च जपेत् ॥ ततो निर्वापाद्यग्निमुखान्ते सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तः-परिधौ निधाय एकस्मिन् पात्रे दधिमध्वाज्यानि संयुत्य अव ते हेडः०, उदुत्तमं०, अस्तभ्नाद्यां०, यत्किञ्चेदं०, कितवासः०, इमम्मे

वरुण०, तत्वा यामि० इति वरुणसूक्तं ( सर्वत्र, वरुणायेदं० ) विष्णोर्नु कं०, तदस्य प्रियं०, प्र तद्विष्णुः०, परो मात्रया०, वि चक्रमे०, त्रिर्देवः०, इति विष्णुसूक्तं ( सर्वत्र, विष्णव इदं० ) ॐ अक्षिभ्यान्ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्का-ज्जिह्वाया विवृहामि ते स्वाहा । ( यक्ष्मण इदं० इति, सर्वत्र त्यागः ) ॥ ॐ ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् । यक्ष्मं दोषण्य१मंसाभ्यां बाहुभ्यां विवृहामि ते स्वाहा ॥ ॐ आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि । यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि० ॥ ॐ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामि० ॥ ॐमेहनाद्वनंकर-णाल्लोमभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि० ॥ ॐ अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि । यक्ष्मं सर्वस्मात्०॥ इति यक्ष्मसूक्तम् । एवं सूक्तत्रयेण प्रतिमन्त्रमष्टादशाहुतीर्जुहुयात् ॥ ततः स्विष्टकृदाद्युत्तरपरिषेकात्प्राक्कृत्वा — हुतशेषेण बलिं दत्वोत्तरपरिषेकप्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाऽऽवाहितदेवतानामुत्तरपूजां कृत्वा कलशोदकेन सर्त्विगाचार्यः सपत्नीकं यजमानं शिशुञ्च 'आपो हि ष्ठा' इति तिसृभिः 'हिरण्यवर्णाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनाऽनुवाकेन वरुणविष्णु-यक्ष्मसूक्तैर्देवस्य त्वा इत्यादि मन्त्रैश्चाभिषिञ्चेत् ॥ कृतस्य गोप्रसवशान्तिकर्मणः साङ्गतासिध्यर्थं ब्राह्मणपूजनपूर्वकं आचार्याय गोदानं सपीठं कलशदानं ब्रह्मणे वृषदानं ऋत्विग्भ्यो दक्षिणाप्रदानञ्च कुर्यात् ॥ ततो यथाशक्ति ब्राह्मणान् भोजयित्वा भूयसीन् दक्षिणाञ्च दत्वाऽऽशिषो गृह्णीयात् ॥

## ॥ अग्न्युत्तारणम् ॥

देशकालौ स्मृत्वा अस्याः प्रतिमायाः अङ्गप्रत्यङ्गसन्धिसमुत्पन्नवास्याग्निकुद्दालाऽग्निटङ्काग्न्यातपनिरासार्थं अग्न्युत्तारणं

करिष्ये, इति सङ्कल्प्य 'अश्मन्नूर्जम्' इत्यनुवाकमष्टशतवारमष्टाविंशतिवारं वा पठित्वा सन्ततजलधारां कुर्यात् यथा — "ॐ अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे ॥ अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधिसम्भृतान्तान्न इषमूर्जं धत्त मरुतस्सꣳरराणाः ॥ अश्मꣳस्ते क्षुदमुन्ते शुगृच्छतु यं द्विष्मः । समुद्रस्य त्वा वाकयाऽग्ने परिव्ययामसि ॥ पावको अस्मभ्यꣳ शिवो भव ॥ हिमस्य त्वा जरायुणाऽग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव ॥ उपज्मन्नुपवेतसेऽवतरं नदीष्वा । अग्ने पित्तमपामसि ॥ मण्डूकिताभिरागहि सेमं नो यज्ञम् । पावकवर्णꣳ शिवङ्कृधि ॥ पावक आ चितयन्त्या कृपा ॥ क्षामन् रुरुच उषसो न भानुना ॥ तूर्वन्नयामन्नेतशस्य नूरण आ यो घृणे । न ततृषाणो अजरः ॥ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च ॥ स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽवह । उप यज्ञꣳ हविश्च नः ॥ अपामिदन्न्ययनꣳ समुद्रस्य निवेशनम् । अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ नृषदे वडप्सुषदे वड्वनसदे वड्बर्हिषदे वट् सुवर्विदे वट् । ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरीणमुपभागमासते ॥ अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं जुहुध्वं मधुनो घृतेन । ये देवा देवेष्वधिदेवत्वमायन्ये ब्रह्मणः पुर एतारो अस्य ॥ येभ्योऽनर्ते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधिस्नुषु । प्राणदा अपानदा व्यानदाश्चक्षुर्दावर्चोदा वरिवोदाः ॥ अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ अग्निस्तिग्मेन शोचिषा यꣳसद्विश्वं न्यत्रिणम् । अग्निर्नो वꣳसते रयिम् ॥ सैनानीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति । अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवाद्दिदीहि इति ॥

# ॥ मूलनक्षत्रजननशान्तिविधिः ॥

( बो गृ. शे सू. ६. २ ) अथातो मूलनक्षत्रजननशान्तिं व्याख्यास्यामः । अभुक्तमूलोत्पत्तौ वर्षाष्टकान्ते भुक्तमूलोत्पत्ताव-व्यवहितागामिमूलर्क्ष एकादशाहे द्वादशाहे वाऽन्यतमे वा शुभनक्षत्रे गोमुखप्रसवशान्तिं विधाय मूलशान्तिमारभेत । गोमयेन गोचर्ममात्रं स्थण्डिलं कृत्वा तन्मध्ये हस्तमात्रं स्थण्डिलं विधाय श्रोत्रियागारादग्निमाहृत्य प्रतिष्ठाप्य स्थण्डिलस्य पूर्वभागे वेदिद्वयं प्रकल्प्य तत्र दक्षिणवेद्यां ग्रहमखोक्तविधानेन ग्रहानावाह्य सम्पूज्य तदीशान्यां कलशं संस्थाप्य पूजयेत् । उत्तरवेद्यां चतुर्विंशतिदलान्वितं सकर्णिकं पङ्कजं निर्माय सितासितरक्तपीतरजोभी रञ्जितं कृत्वा मध्यकर्णिकायां द्रोणपरिमितान्व्रीहींस्त-दर्धतण्डुलांस्तदर्धतिलांश्चान्योन्योपरि प्रसार्य चतुरश्रं विधाय, तत्राऽव्रणं तन्तुवेष्टितं कलशं विधिना प्रतिष्ठाप्य मध्ये सद्यो-जातादीन् पञ्च रुद्रान् क्रमेण प्रस्थाप्य पूजयेत् । कुम्भमुखे शतौषधिपञ्चपल्लवनिर्मितं मण्डलाकारं कृत्वा पूर्णपात्रं निधाय तस्मिन्सौवर्णकृता निर्ऋतीन्द्राऽपोदेवताः प्रागादिचतुर्विंशतिभूमिस्थदलेषु प्रदक्षिणमुत्तराषाढाद्यनूराधान्ता नक्षत्रदेवताश्चावाह्य पूजयेत् । तदुत्तरतः शतच्छिद्रकलशं संस्थाप्य तत्र वरुणमावाह्य पूजयेत् । नात्र जलपूरणम् । अथर्त्विगाचार्याः कुम्भमन्वारभ्य जपेयुः — नमस्ते रुद्र इति प्रश्नं, अग्नाविष्णू इत्येकादशानुवाकान्, शतायुधायेति पञ्च, आशुः शिशान इत्यनुवाकं, कृणुष्व पाज इत्यनुवाकं, ममाग्ने इत्यनुवाकं, आपो हि ष्ठेति तिस्रः, हिरण्यवर्णा इति चतस्रः, पवमानः सुवर्जनः इत्यनुवाकं, श्रीसूक्तं, नारायण-मुत्तरनारायणञ्च । अथाऽग्निमुखात्कृत्वा ग्रहान्हुत्वाऽथ कृसरान्नेन मूलं प्रजामिति पुरोनुवाक्यामनूच्य, अहर्नो अद्येति याज्यया जुहोति । अथाऽष्टोत्तरसहस्रमष्टोत्तरशतं वा जुहुयात् । इन्द्रो ज्येष्ठामनु इति पुरोनुवाक्यामनूच्य, पुरन्दराय वृषभायेति याज्यया

जुहोति । अष्टोत्तरशतमष्टाविंशतिं वा । या दिव्या आपः पयसेति पुरोनुवाक्यामनूच्य, याश्च कूप्या याश्चेति याज्यया जुहोति । अष्टोत्तरशतमष्टाविंशतिं वा । अथाऽऽज्येनोपहोमाञ्जुहोति — प्रजापतये स्वाहा, मूलाय स्वाहा, प्रजायै स्वाहा, इन्द्राय स्वाहा, ज्येष्ठायै स्वाहा, ज्यैष्ठ्याय स्वाहाऽभिजित्यै स्वाहा, अद्भ्यः स्वाहाऽऽषाढाभ्यः स्वाहा, समुद्राय स्वाहा, कामाय स्वाहाऽभिजित्यै स्वाहेति । अथ हैके ब्रुवते तत्तत्सूक्तेन वा जुहोतीति । अथ स्विष्टकृदादि बलिं दत्वा पूर्णाहुतिं हुत्वाऽभिषिच्य (वरदानान्तं) सिद्धमाधेनुवरप्रदानात् । एवं ज्येष्ठाऽऽश्लेषैकनक्षत्रजनने च शान्तिं मूलवत्कुर्यादित्याह भगवान् बोधायनः ॥

स्मृत्यन्तरे— पिता म्रियेत मूलाऽऽद्ये पादे पुत्रजनिर्यदि । द्वितीये जननीनाशो धननाशस्तृतीयके ॥ चतुर्थे कुलनाशोऽतः शान्तिः कार्या प्रयत्नतः ॥ मूलजा श्वशुरं हन्ति श्वश्रूमाश्लेषजा सुता ॥ ज्येष्ठाऽन्ते घटिका चैका मूलादौ घटिकाद्वयम् ॥ अभुक्तमूलमथवा सन्धिनाडीचतुष्टयम् ॥ अभुक्तमूलसम्भवं समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् " इति ॥ ॥

अथ प्रयोगः ॥ अभुक्तमूलोत्पत्तौ वर्षाष्टकान्ते, भुक्तमूलजनने आगामिमूलनक्षत्रे एकादशे द्वादशेऽह्नि वाऽन्यस्मिन्वा शुभदिने गोमुखप्रसवशान्तिं विधाय, सपत्नीको यजमान आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, अस्य शिशोर्मूलनक्षत्रजननसूचितसर्वारिष्टनिरसनद्वारा सर्वेषां दीर्घायुष्याभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां मूलनक्षत्रशान्तिं करिष्ये, इति सङ्कल्प्य तदङ्गतया विहितं गणपतिपूजनं, पुण्याहवाचनं, मातृकापूजनं, नान्दीश्राद्धमाचार्यादिऋत्विग्वरणञ्च यथाक्रमं कुर्यात् ॥ पुण्याहे— 'आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, निर्ऋतीन्द्राऽऽपः प्रीयंताम्' इति विशेषः ॥ तत आचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्यान्वादध्यात्— सग्रहमखमूलनक्षत्रजननशान्तिहोमं करिष्ये. 'कपिलो नामाऽग्निः, आदित्यो देवता' इत्यादि ग्रहकीर्तनान्ते वरदो नामाऽग्निः निर्ऋतिरिन्द्र आपश्च देवता, कृसरान्नं हविः, उपहोमे— निर्ऋतिं-मूलं प्रजां०, अहर्नो अद्य० इति द्वाभ्यां प्रतिमन्त्रं चतुःपञ्चाशदावृत्त्याष्टोत्तर-

शतसंख्याकाहुतिभिः, इन्द्रं–इन्द्रो ज्येष्ठां०, पुरन्दराय० इति द्वाभ्याम्, अपः–या दिव्या०, याश्च कूप्याः० इति द्वाभ्यां कृसरान्नेन प्रतिमन्त्रं चतुर्दशावृत्त्याऽष्टाविंशतिसङ्ख्याकाहुतिभिः यक्ष्ये, ( अपि वा निर्ऋतीन्द्राऽप्सूक्तमन्त्रैः उत्तराषाढादिचतुर्विंशतिनक्षत्रदेवता-नाममन्त्रैश्चाज्येन यक्ष्ये ) स्विष्टकृतः, अर्यमादयो देवताः इत्यादि सद्यो यक्ष्ये इति सङ्कल्प्यान्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं नलिनमष्टदलमुल्लिख्य तत्र ' मही द्यौः ' इत्यादि विधिनाऽऽदित्यादिनवग्रहानावाह्य पूजयेत् । तदुत्तरतश्चतुर्विंशतिदलयुतं सकर्णिकं पङ्कजं विलिख्य सिताऽसितरक्तपीतवर्णैः क्रमेण पूरयित्वा तदुपरि द्रोणपरिमितव्रीहिभिस्तदर्धतण्डुलैस्तदर्धतिलैश्चोपर्युपरि चतुरस्रं स्थण्डिलं कृत्वा वस्त्रयुग्मेन वेष्टितं कलशत्रयं प्रतिष्ठाप्य, तेषु सर्वौषधीर्निक्षिप्य वरुणं सम्पूज्य सुवर्णनिर्मिता निर्ऋतीन्द्राऽपां प्रतिमा अग्न्युत्तारणादिना संस्कृत्य मध्यदक्षिणोत्तरकलशोपरि पूर्णपात्रे प्रतिष्ठाप्य देवता आवाहयेत् — मध्यकलशे–मूलं प्रजां०, अहर्नो अद्य० इति मन्त्राभ्यां निर्ऋतिं, तद्दक्षिणकलशे – इन्द्रो ज्येष्ठामनु०, पुरन्दराय० इति मन्त्राभ्याम् इन्द्रं, उत्तरकलशे — या दिव्या आपः०, याश्च कूप्याः० इति मन्त्राभ्याम् अपः, प्रागादिचतुर्विंशतिदलेषु प्रदक्षिणं अक्षतपुञ्जेषु उत्तराषाढाद्यनूराधान्त-नक्षत्रदेवताश्च तत्तन्मन्त्रेणाऽऽवाह्य प्राणप्रतिष्ठां कृत्वा यथाविभवं षोडशोपचारैः पूजयेत् ॥ ( आवाहनक्रमः — ॐभूर्भुवस्सुवः विश्वेभ्यो देवेभ्यो नमः विश्वान्देवानावाहयामि ॥ १ ॥ एवमेव — विष्णुं० ॥ २ ॥ वसून्० ॥ ३ ॥ वरुणं० ॥ ४ ॥ अजमेक-पादं० ॥ ५ ॥ अहिं बुध्नियं० ॥ ६ ॥ पूषणं० ॥ ७ ॥ अश्विनौ० ॥ ८ ॥ यमः० ॥ ९ ॥ अग्निं० ॥ १० ॥ प्रजापतिं० ॥ ११ ॥ सोमं० ॥ १२ ॥ रुद्रं० ॥ १३ ॥ अदितिं० ॥ १४ ॥ बृहस्पतिं० ॥ १५ ॥ सर्पान्० ॥ १६ ॥ पितॄन्० ॥ १७ ॥ अर्यमणं० ॥ १८ ॥ भगं० ॥ १९ ॥ सवितारं० ॥ २० ॥ त्वष्टारं० ॥ २१ ॥ वायुं० ॥ २२ ॥ इन्द्राग्नी० ॥ २३ ॥ मित्रं० ॥ २४ ॥ ) तदुत्तरतः— जलपूरितमेकं तण्डुला-दिधान्यपूरितशतच्छिद्रमेकं इति कलशद्वयं प्रतिष्ठाप्य वरुणं सम्पूज्य जलपूर्णकलशे ' सद्योजातं, वामदेवं, अघोरं, तत्पुरुषं,

ईशानञ्च तत्तन्मन्त्रैरावाह्य गन्धादिभिः पूजयेत् ॥ ततः सऋत्विगाचार्यः प्रधानकलशमन्वारभ्य वक्ष्यमाणमन्त्रान् जपेत्–रुद्रैकादशिनीं, शतायुधायेति पञ्चमन्त्रान्, आशुःशिशानः०, कृणुष्व पाजः०, ममाग्ने वर्चः०, आपो हि ष्ठेति तिस्रः, हिरण्यवर्णा इति चतस्रः, पवमानः सुवर्जनः० इत्यनुवाकं, पुरुषसूक्तमुत्तरनारायणं च, चक्षुषो हे ते इति नवर्चं निर्ऋतिसूक्तं, ॐ तिष्ठा हरी रथ आ युज्यमाना याहि। वायुर्न नियुतो नो अच्छ। पिबास्यन्धो अभिसृष्टो अस्मे। इन्द्र स्वाहा ररिमा ते मदाय ॥ १ ॥ कस्य वृषा सुते सचा। नियुत्वान् वृषभो रणत्। वृत्रहा सोमं पीतये ॥ २ ॥ इन्द्रं वयं महाधने। इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणम् ॥ ३ ॥ द्वितायो वृत्रहन्तमः। विद इन्द्रः शतक्रतुः। उप नो हरिभिस्सुतम् ॥ ४ ॥ स सूर आ जनयञ्ज्योतिरिन्द्रम्। अया धिया तरणिरद्रिबर्हाः। ऋतेन शुष्मीनवमा नो अर्कैः। व्युस्त्रिधो अस्रो अद्रिर्बिभेद ॥ ५ ॥ उत त्यदाश्वश्वियम्। यदिन्द्र नाहुषीष्वा। अग्रे विक्षु प्रतीदयत् ॥ ६ ॥ भरेष्विन्द्रꣳ सुहवꣳ हवामहे। अꣳहोमुचꣳ सुकृतं दैव्यञ्जनम्। अग्निं मित्रं वरुणꣳ सातये भगम्। द्यावापृथिवी मरुतः स्वस्तये ॥ ७ ॥ महि क्षेत्रं पुरुश्चन्द्रं विविद्वान्। आदित्सखिभ्यश्च रथꣳ समैरत्। इन्द्रो नृभिरजनद्दीद्यानः साकम्। सूर्यमुषसं गातुमग्निम् ॥ ८ ॥ उरुन्नो लोकमनुनेषि विद्वान्। सुवर्वज्ज्योतिरभयꣳ स्वस्ति। ऋष्वा त इन्द्र स्थविरस्य बाहू। उपस्थेयाम शरणा बृहन्ता ॥ ९ ॥ आ नो विश्वाभिरूतिभिः सजोषाः। ब्रह्म जुषाणो हर्यश्व याहि। वरीवृजत्स्थविरेभिः सुशिप्र। अस्मे दधद्वृषणꣳ शुष्ममिन्द्र ॥ १० ॥ इन्द्राय गाव आशिरम्। दुदुह्रे वज्रिणे मधु। यत्सीमुपह्वरेऽविदत् ॥ ११ ॥ तास्ते वज्रिन्धेनवो जोजयुर्नः। गभस्तयो नियुतो विश्ववाराः। अहरहर्भूय इज्जोगुवानाः। पूर्णा इन्द्र क्षुमतो भोजनस्य ॥ १२ ॥ इमां ते धियं प्रभरे महो महीम्। अस्य स्तोत्रे धिषणा यत्त आनजे। तमुत्सवे च प्रसवे च सासहिम्। इन्द्रं देवासः

शर्वसामद्म्भनु ॥ १३ ॥ इति त्रयोदशर्चमिन्द्रसूक्तम्, हिरण्यवर्णा इति नवर्चमप्सूक्तम् ॥ अथ निर्वापे विशेषः— आदित्यादिग्रहान्ते — "देवस्य त्वा० निर्ऋतये जुष्टं निर्वपामि, इन्द्राय०, अद्भ्यः०" इति । प्रोक्षणेऽप्येवमेव । आज्यनिर्वापाद्यग्निमुखान्तं कृत्वा 'आदित्याय त्वा' इत्यादि उदगपवर्गं यथाक्रमं चरुमभिमृश्याऽवदानधर्मेण ग्रहपक्कहोमान्ते "मूलं प्रजां०, अहर्नो अद्य०" इति द्वाभ्यां निर्ऋतये, "इन्द्रो ज्येष्ठां०, पुरन्दराय०" इति द्वाभ्यामिन्द्राय, "या दिव्या आपः०, याश्च कूप्या०" इति द्वाभ्याम् अद्भ्यः क्रमेण पक्कं जुहुयात् ॥ ततस्स्विष्टकृतमवदायाऽन्तःपरिधौ निधाय — "मूलं प्रजां० अहर्नो अद्य० इन्द्रो ज्येष्ठां० पुरन्दराय० या दिव्या आपः० याश्च कूप्याः० इति प्रतिमन्त्रमन्वाधानोक्तक्रमेण हुत्वाऽथाज्याहुतीरुपजुहोति — ॐ प्रजापतये स्वाहा ॥ मूलाय० ॥ प्रजायै० ॥ इन्द्राय० ॥ ज्येष्ठायै० ॥ ज्यैष्ठ्याय स्वाहा ॥ अभिजित्यै० ॥ अद्भ्यः० ॥ अषाढाभ्यः० ॥ समुद्राय० ॥ कामाय० ॥ अभिजित्यै० ॥ (यथालिङ्गं त्यागः) [ चक्षुषोहे ते० ॥ १ ॥ यो मा चक्षुषा० ॥ २ ॥ यत्किञ्चासौ०॥ ३ ॥ यातुधाना० ॥ ४ ॥ हन्मि तेऽहं० ॥ ५ ॥ अपनह्यामि० ॥ ६ ॥ पुरामुष्य० ॥ ७ ॥ अन्ति दूरे० ॥८॥ यो मा नक्तम्० ॥ ९ ॥ (सर्वत्र, निर्ऋतय इदं०) तिष्ठा हरी रथ० ॥ १ ॥ कस्य वृषा० ॥ २ ॥ इन्द्रं वयं महाधने० ॥ ३ ॥ द्वितीयो वृत० ॥ ४ ॥ स सूर आ जनयन्० ॥ ५ ॥ उत त्यदाश्व० ॥ ६ ॥ भरेष्विन्द्रं० ॥ ७॥ महि क्षेत्रं० ॥ ८ ॥ उरुन्नो लोकं० ॥ ९ ॥ आ नो विश्वाभिः० ॥ १० ॥ इन्द्राय गाव० ॥ ११ ॥ तास्ते वज्रिन्० ॥ १२ ॥ इमान्ते धियं० ॥ १३ ॥ (सर्वत्र, इन्द्रायेदं०) हिरण्यवर्णाः० ॥ १ ॥ यासाꣳराजा० ॥ २ ॥ यासां देवाः० ॥ ३ ॥ शिवेन मा चक्षुषाः० ॥ ४ ॥ आपो भद्राः० ॥ ५ ॥ आदित्पश्यामि० ॥ ६ ॥ आपो हि ष्ठा० ॥ ७॥ यो वः शिवतमो० ॥ ८॥ तस्मा अरङ्ग० ॥ ९ ॥ (सर्वत्र, अद्भ्य इदं०) विश्वेभ्यो देवेभ्यः स्वाहा ॥ विष्णवे० ॥ वसुभ्यः० ॥ वरुणाय० ॥ अजायैकपदे० ॥ अहये बुध्नियाय० ॥ पूष्णे० ॥ अश्विभ्यां० ॥ यमाय० ॥ अग्नये० ॥ प्रजापतये० ॥ सोमाय० ॥

रुद्राय० ॥ अदित्यै० ॥ बृहस्पतये० ॥ सर्पेभ्य० ॥ पितृभ्यः० ॥ अर्यम्णे० ॥ भगाय० ॥ सवित्रे० ॥ त्वष्ट्रे० ॥ वायवे० ॥ इन्द्राग्निभ्यां० ॥ मित्राय० ॥ ( यथालिङ्गं त्यागः ) इति ] ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा आदित्यादिनवग्रहदेवताभ्यः, इन्द्रादिलोकपालेभ्यः, निर्ऋतये, इन्द्राय, अद्भ्यः तत्तन्मन्त्रेण माषभक्तबलीन्दत्वा अन्ते क्षेत्रपालाय बलिं दद्यात् ॥ हस्तपादं प्रक्षाल्य उत्तरपरिषेकादि होमशेषं समापयेत् ॥ आवाहितदेवतानामुत्तरपूजान्ते कलशोदकं पात्रान्तरे गृहीत्वा सऋत्विगाचार्यः शतच्छिद्रकलशेन सकुटुम्बं यजमानमभिषिञ्चेदेभिर्मन्त्रैः— मूलं प्रजां० ( २ ) इन्द्रो ज्येष्ठामनु० ( १ ) या दिव्या आपः० ( २ ) चक्षुषो हेते० ( ९ ) तिष्ठा हरी० ( १३ ) हिरण्यवर्णा० ( ९ ) शतायुधाय० ( ५ ) भद्रं कर्णेभिः० नमो ब्रह्मणे० तच्छंयोरावृणीमहे० नमो वाचे० शन्नो वातः पवतां० सन्त्वा सिञ्चामि० शन्नो मित्रः शं वरुणः० सह नाववतु० सह नाववतु० सह नाववतु० ( इति दश शान्तिमन्त्रैः ) ॥ योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥ १ ॥ योऽसौ शक्तिधरो देवो हुतभुग्मेषवाहनः । सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु ॥ २ ॥ योऽसौ दण्डधरो देवो धर्मो महिषवाहनः । मूलजातशिशोर्दोषं व्यपोहतु यमो मम ॥ ३ ॥ योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः ॥ प्रशामयतु मूलोत्थं दोषं गण्डान्तसम्भवम् ॥ ४ ॥ योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः । नक्रवाहश्चेकितानो मूलदोषं व्यपोहतु ॥ ५ ॥ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः । मातापित्रोर्शिशोश्चैव मूलदोषं व्यपोहतु ॥ ६ ॥ योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः । प्रशामयतु मूलोत्थं दोषं बालस्य शान्तिदः ॥ ७ ॥ योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु ॥ ८ ॥ विघ्नेशो क्षेत्रपो दुर्गा क्षेत्रपाला नवग्रहाः । सर्वदोषप्रशमनं शीघ्रं कुर्वन्तु शान्तिदाः ॥ ९ ॥ देवस्य त्वा० अश्विनोर्भैषज्येन० सरस्वत्यै भैषज्येन० इन्द्रस्येन्द्रियेण० इति ॥ ततो यजमानः स्नात्वाऽहते वाससी परिधाया-

ऽऽचम्य भस्मधारणं कुर्यात् ॥ अनेन मूलशान्तिहवनकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ ततो ब्राह्मणान्सम्पूज्य साङ्गतासिध्यर्थं आचार्याय कृष्णां धेनुं ब्रह्मणे कृष्णमनड्वाहं ऋत्विग्भ्यो यथाशक्ति सुवर्णं दशदानानि च दद्यात् ॥ ततो यथाशक्ति ब्राह्मणान् भोजयित्वाऽऽशिषो गृह्णीयात् ॥ अस्मिन्नेव दिनेऽन्यस्मिन्वा शुभे दिने जातकर्मादि कुर्यात् ॥

## ॥ ज्येष्ठाजननशान्तिविधिः ॥

स्मृत्यन्तरे— घटिकैका च मैत्रान्ते ज्येष्ठादौ घटिकाद्वयम् । तयोस्सन्धिरिति ज्ञेयं शिशुगण्डं समीरितम् ॥ १ ॥ ज्येष्ठाया दशभागेषु आद्ये मातामहीमृतिः । मातामहं द्वितीये च तृतीये हन्ति मातुलम् ॥ २ ॥ तुर्ये जातो मातरञ्च हन्त्यात्मानन्तु पञ्चमे । गोत्रजान्षष्ठभागे च सप्तमे तूभयं कुलम् ॥ ३ ॥ अष्टमे स्वाग्रजं हन्ति नवमे श्वशुरं तथा । दशमांशकजातस्तु सर्वं हन्ति शिशुर्ध्रुवम् ॥ ४ ॥ ज्येष्ठर्क्षे तु पुमान्जातो ज्येष्ठभ्रातुर्विनाशकः । ज्येष्ठर्क्षे कन्यका जाता हन्ति शीघ्रं धवाऽग्रजम् ॥ ५ ॥ पादत्रये जातनरो ज्येष्ठोप्यत्र प्रजायते । ज्येष्ठान्त्यपादजातस्तु पितुः स्वस्य च नाशकः ॥ ६ ॥

अथ प्रयोगः ॥ शिशुजननादेकादशाहे द्वादशाहे वाऽव्यवहितजन्मनक्षत्रेऽन्यतमे वा शुभनक्षत्रे गोमुखप्रसवशान्तिं विधाय कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममाऽस्य शिशोर्ज्येष्ठानक्षत्रजननसूचितसकलारिष्टनिरसनद्वारा सर्वेषामायुरारोग्य-शुभतासिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां ज्येष्ठाजननशान्तिं करिष्ये, इति सङ्कल्प्य । तदङ्गं गणेशपूजनं मातृकापूजनं नान्दी-श्राद्धं 'आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, इन्द्रमित्रनिर्ऋतयश्च प्रीयन्ताम्' इति पुण्याहवाचनमाचार्यादि वरणं च कुर्यात् ॥ तत आचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य ग्रहमखपूर्वकज्येष्ठाजननशान्तिहोमं करिष्ये॰ ग्रहान्वाधानान्ते वरदो नामाऽग्निः,

इन्द्रमित्रनिर्ऋतयो देवताः, कृसरान्नं हविः, स्विष्टकृतः, अर्यमादयो देवताः, इत्यादि सङ्कल्प्याऽन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निं ग्रहानावाह्य सम्पूज्य तदुत्तरतो मूलशान्तिवच्चतुर्विंशतिदलान्वितं सकर्णिकं पङ्कजं विरच्य द्रोणपरिमितव्रीहिभिस्तदर्धपरिमिततण्डुलैस्तदर्धपरिमिततिलैश्चोपर्योपरि स्थण्डिलं कृत्वा तन्मध्ये वस्त्रयुग्मेन वेष्टितं कलशत्रयं मध्यदक्षिणोत्तरक्रमेण, तदुत्तरतः रुद्रकलशं, ईशान्यां-शतच्छिद्रकलशञ्च 'मही द्यौः' इत्यादि विधिना प्रतिष्ठाप्य, वरुणपूजान्तं कृत्वा कलशोपरि-अग्न्युत्तारणादिना संस्कृताः सुवर्णनिर्मिता इन्द्रमित्रनिर्ऋतिरुद्रवरुणप्रतिमा विन्यस्य, क्रमेण 'इन्द्रो ज्येष्ठां०, पुरन्दराय०' इति मन्त्राभ्यां इन्द्रं, 'ऋध्यास्म हव्यैः०, चित्रं नक्षत्रं०' इति मित्रं, 'मूलं प्रजां०, अहर्नो अद्य०' इति निर्ऋतिं, सद्योजातादिपञ्चमन्त्रैः सद्योजातवामदेवाघोरतत्पुरुषेशानान्, 'तत्त्वा यामि' इति वरुणञ्च, पङ्कजदलेषु प्रादक्षिण्येन-अपः० (१) विश्वान्देवान्० (२) विष्णुं० (३) वसून्० (४) वरुणं० (५) अजमेकपादं० (६) अहिं बुध्नियं० (७) पूषणं० (८) अश्विनौ० (९) यमं० (१०) अग्निं० (११) प्रजापतिं० (१२) सोमं० (१३) रुद्रं० (१४) अदितिं० (१५) बृहस्पतिं० (१६) सर्पान्० (१७) पितॄन्० (१८) अर्यमणं० (१९) भगं० (२०) सवितारं० (२१) त्वष्टारं० (२२) वायुं० (२३) इन्द्राग्नी० (२४) एताश्चतुर्विंशतिदेवतास्तत्तन्नाममन्त्रेणाऽवाह्य षोडशोपचारपूजान्तं कुर्यात् ॥ तत आचार्यादयः कुम्भमन्वारभ्य जपेयुः– रुद्रैकादशिनीं, शतायुधायेति पञ्चमन्त्रान्, 'आशुः शिशानः' 'कृणुष्व पाजः' 'ममाग्ने वर्चः' इति त्रीननुवाकान्, आपो हि ष्ठेति तिस्रः, हिरण्यवर्णा इति चतस्रः, पवमानः सुवर्जनः इत्यनुवाकं, श्रीसूक्तं, पुरुषसूक्तमुत्तरनारायणं 'तिष्ठा हरी०' इति इन्द्रसूक्तं (१३) मित्रो जनान्यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं

घृतवद्विधेम ॥१॥ प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात् ॥ २ ॥ अयं मित्रो नमस्यः सुशेवः । राजा सुक्षत्रो अजनिष्ट वेधाः । तस्य वयꣳसुमतौ यज्ञियस्य । अपि भद्रे सौमनसे स्याम ॥ ३ ॥ अनमीवास इडया मदन्तः । मितज्ञवो वरिमन्ना पृथिव्याः ॥ आदित्यस्य व्रतमुपक्ष्यन्तः । वयं मित्रस्य सुमतौ स्याम ॥ ४ ॥ मित्रस्त इꣳशिम्या गोषु गव्यवत् । स्वाधियो विदथे अप्स्वजीजनन् ॥ अरेजयताꣳ रोदसी पाजसा गिरा । पतिप्रियं यजतं जनुषामवः ॥ ५ ॥ महाꣳ आदित्यो नमसोपसद्यः । यातयज्जनो गृणते सुशेवः ॥ तस्मा एतत्पन्यतमाय जुष्टम् । अग्नौ मित्राय हविराजुहोत ॥ ६ ॥ इति मित्रसूक्तं, 'चक्षुषो हेते०' इति निर्ऋतिसूक्तं (९) चेति ॥ अथाऽऽदित्यादिग्रहाणां, 'इन्द्राय० मित्राय० निर्ऋतये०' च हविर्निरुप्य, प्रोक्षणादि ग्रहपक्वहोमान्ते —'इन्द्रो ज्येष्ठां०, पुरन्दराय०' इति द्वाभ्यां इन्द्राय, 'ऋध्यास्म हव्यैः०, चित्रं नक्षत्रं०' इति मित्राय, 'मूलं प्रजां०, अहर्नो अद्य०' इति निर्ऋतये, च पञ्च जुहुयात् ॥ ततः स्विष्टकृतमवदायाऽन्तःपरिधि सादयित्वा 'इन्द्रो ज्येष्ठां०, पुरन्दराय०' इति प्रतिमन्त्रं कृसरान्नेन चतुःपञ्चाशदाहुतीर्हुत्वा 'ऋध्यास्म हव्यैः० चित्रं नक्षत्रं० मूलं प्रजां० अहर्नो अद्य०' इति प्रतिमन्त्रं चरुणा चतुर्दशाहुतीर्हुत्वा, अथाज्याहुतीरुपजुहोति — इन्द्राय स्वाहा ॥१॥ ज्येष्ठायै० ॥२॥ ज्यैष्ठ्याय० ॥ ३ ॥ अभिजित्यै० ॥ ४ ॥ मित्राय० ॥ ५ ॥ अनूराधेभ्यः० ॥ ६ ॥ मित्रधेयाय० ॥ ७ ॥ आभिजित्यै० ॥८॥ प्रजापतये० ॥९॥ मूलाय० ॥१०॥ प्रजायै० ॥११॥ ( यथालिङ्गं त्यागः ) अपि वा 'तिष्ठा हरी रथ आयुज्यमाना' इतीन्द्रसूक्तेन ( १३ ) प्रत्यृचं ( इन्द्रायेदं० इति सर्वत्र त्यागः ) 'मित्रो जनान्यातयति' इति मित्रसूक्तेन ( ६ ) प्रत्यृचं ( मित्रायेदं० इति सर्वत्र त्यागः ) 'चक्षुषो हेते' इति निर्ऋतिसूक्तेन ( ९ ) प्रत्यृचं ( निर्ऋतय इदं० इति सर्वत्र त्यागः ) 'अद्भ्यः स्वाहा' इत्यादिचतुर्विंशतिनक्षत्रनाममन्त्रैः ( यथालिङ्गं त्यागः ) ॥ स्विष्टकृदादि शेषं सर्वं मूलशान्तिवत्कुर्यात् ॥ मूलशब्दस्थाने ज्येष्ठाशब्दः ॥

# ॥ आश्लेषाजननशान्तिविधिः ॥

( बो. गृ. शे. सू. ६. ३ ) आश्लेषायान्तु जातानां शान्तिं वक्ष्याम्यतः परम् । जातस्य द्वादशाहे च शान्तिहोमं समाचरेत् ॥ असम्भवे तु जन्मर्क्षे ह्यन्यस्मिन् वा शुभे दिने । स्नातोऽभ्यङ्गादिभिस्तस्मिन्वरयेत्तु द्विजोत्तमान् ॥ विभवे पञ्च कुम्भांस्तु द्वयं वा तदलाभतः । देवतास्थापने चैकमेकं रुद्राभिमन्त्रणे ॥ मूलर्क्षोक्तप्रकारेण कुम्भे निक्षिप्य पूजयेत् । गोमयालेपिते देशे वालुका-परिशोभिते ॥ पङ्कजं कारयेत्तत्र चतुर्विंशतिपत्रकैः । तण्डुलैः कारयेद्वा रक्तपीतासिताऽसितैः ॥ कर्णिकायां न्यसेद्व्रीहीन्स्थापयेत्तेषु कुम्भकम् । आ जिघ्रेति च मन्त्रेण कलशस्थापनं शुभम् ॥ इमं म इति मन्त्रेण पूरयेत्तीर्थवारिणा । कुम्भं सुवस्त्रगन्धाद्यैस्तत्तन्मन्त्रैश्च पूजयेत् ॥ याः फलिनीरित्यनया क्षिपेद्रत्नौषधादिकान् । कुम्भोपरिस्थपात्रेषु आश्लेषाप्रतिमां यजेत् ॥ निष्कनिष्कार्धपादैर्वा कारयित्वा स्वशक्तितः । तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेत् ॥ ऐन्द्रादीशानपर्यन्तमितरर्क्षाणि पूजयेत् । मूलोक्तेन विधानेन कुम्भयोरभिमन्त्रणम् ॥ रुद्रार्चा रुद्रकुम्भे तु पूर्ववच्छेषमाचरेत् । नमोऽस्तु सर्पेभ्य इति पूजामन्त्रः प्रचोदितः ॥ सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः । फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः ॥ एवं ध्यात्वा ततोऽभ्यर्च्य होमकर्म समारभेत् । कर्तुः शाखोक्त-मार्गेण आचार्यस्याथवाऽऽचरेत् ॥ मुखान्तं कर्म निर्माय हविरादाय शास्त्रतः । इदꣳ सर्पेभ्यो जुहुयात् साधिप्रत्यधिदैवतम् ॥ अष्टोत्तरशतं वाथ ह्यष्टाविꣳशतिमेव वा । मूलनक्षत्रवच्छेषहोमं तत्र समारभेत् ॥ पूर्णाहुत्यन्तकर्माणि कृत्वा सम्पातकं तथा । कुम्भाज्जलन्तु प्रक्षिप्य त्वभिषेकमथाऽऽरभेत् ॥ दारपुत्रसमेतस्य यजमानस्य पूर्ववत् । अभिषिञ्चेत्तदाऽऽचार्य ऋत्विग्भिः सहित-स्ततः ॥ अभिमन्त्रितकुम्भाऽद्भिरभिषेचनमाचरेत् । तथा पौराणमन्त्रैश्च पल्लवैरभिषेचयेत् ॥ आश्लेषाऋक्षजातस्य माता पित्रोर्धनस्य

च । भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥ योऽसौ वागीश्वरो नाम चाऽधिदेवो बृहस्पतिः । मातापित्रोश्शिशोश्चैव गण्डान्तञ्च व्यपोहतु ॥ त्रातारः सर्वभूतानां रक्षन्तु पितरः सदा । सर्पनक्षत्रजातस्य वित्तञ्च ज्ञातिबान्धवान् ॥ एवं कृतेऽभिषेके तु सर्पशान्तिर्भवेद्ध्रुवम् ॥ ततः शुक्लाम्बरधरो यजमानः सुभूषितः । दक्षिणाभिस्ततो विप्रान् मूलवच्च प्रतोषयेत् ॥ भुक्तवद्भ्यश्च विप्रेभ्यः स्वीकुर्यादाशिषं गृही । इत्युक्तेन विधानेन सर्वाऽरिष्टं व्यपोहति ॥ सर्वे कामाश्च सिध्यन्ति वेदोक्तायुर्भविष्यति । इत्युक्तं सर्पशान्त्यर्थसारमागमचोदितम् ॥ मानवानां हितार्थाय मनुना सर्वकामिकम् । सर्पाधीश नमस्तुभ्यं नागानाञ्च गणाधिप ॥ गृहाणार्घ्यं मया दत्तं सर्वारिष्टप्रशान्तये । मूलनक्षत्रवत्कुर्यात्सर्पगण्डे स्वनामतः ॥ सर्वदोषोपशान्तय इत्याह भगवान् बोधायनः ॥ ॥

धर्मसिन्धौ — आश्लेषासर्वपादेषु शान्तिः कार्या प्रयत्नतः । जातस्य द्वादशाहे तु शान्तिकर्म समाचरेत् ॥ असम्भवे तु जन्मर्क्षे अन्यस्मिन्वा शुभे दिने ॥ आश्लेषायाः क्रमेण पञ्चसप्तद्वित्रिचतुरष्टैकादशषण्नवपञ्चेति दशधाविभक्तनाडीषु क्रमेण–राज्यं, पितृनाशो, मातृनाशः, कामभोगः, पितृभक्तिः, बलं, हिंसकत्वं, त्यागो, भोगो, धनमिति फलानि ॥ अथ पादविभागेन फलम् — तत्राद्यः पादः शुभः । द्वितीये पादे धनस्य नाशः । तृतीये मातुः चतुर्थे पितुः आश्लेषान्त्यपादत्रयजाता कन्या श्वश्रूं हन्ति । एवमेव वरः अन्त्यपादत्रयजः श्वश्रूं हन्ति । अतः शान्तिः कार्या ॥

अथ प्रयोगः ॥ शिशुजननाद्द्वादशेऽन्यस्मिन्वा शुभदिवसे पूर्वोक्तप्रकारेण गोमुखप्रसवशान्तिं विधाय, कर्ता सपत्नीक आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममाऽस्य शिशोराश्लेषानक्षत्रजननसूचितसर्वाऽरिष्टनिरसनद्वारा सर्वेषां दीर्घायुष्याभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखामाश्लेषानक्षत्रजननशान्तिं करिष्ये, इति सङ्कल्प्य तदङ्गत्वेन गणपतिपूजनं नान्दीश्राद्धम् "आदित्यादि नवग्रहदेवताः प्रीयन्तां, सर्पबृहस्पतिपितरः प्रीयन्ताम्" इति पुण्याहवाचनं ऋत्विग्वरणञ्च कुर्यात् ॥ तत आचार्यो देवयजनोल्लेखनाद्यग्निं

प्रतिष्ठाप्य समित्त्रयमादाय ग्रहशान्तिपूर्वकमाश्लेषाजननशान्तिहोमं करिष्ये० ग्रहान्वाधानमुक्त्वा वरदो नामाग्निः, सर्पबृहस्पति-पितरः प्रधानदेवताः, कृसरान्नं हविः, उपहोमे–“ इदꣳसर्पेभ्यः० ये रोचने० इति प्रतिमन्त्रं चतुःपंचाशत्संख्याकाभिः, बृहस्पतिः प्रथमं० तिष्यः पुरस्तात्० उपहूताः पितरः० ये अग्निदग्धा०” इति प्रतिमन्त्रं चतुर्दशसङ्ख्याकाभिः कृसरान्नेन ‘ सर्पेभ्यः स्वाहा ’ इत्यादि नक्षत्रत्रयोपहोममन्त्रैरेकैकयाज्याहुत्या, ( अपि वा सर्पान्सप्तर्चेन सर्पसूक्तेन, बृहस्पतिं षडृचेन बृहस्पतिसूक्तेन, पितॄनष्टादशर्चेन पितृसूक्तेन अर्यमाद्या अदित्यन्ता नक्षत्रदेवताश्च नाममन्त्रेणैकैकयाज्याहुत्या यक्ष्ये )। स्विष्टकृतः अर्यमादयो देवताः इत्याद्यन्वाधाय प्रणीताप्रणयनान्तेऽग्रेणाऽग्निं ग्रहानावाह्य सकर्णिकं चतुर्विंशतिदळयुतं पद्मं विलिख्येत्यादि ज्येष्ठाशान्तिवत्पञ्चकलशान्प्रतिष्ठाप्य वरुणपूजान्तं कृत्वा सर्पबृहस्पतिपितृप्रतिमाः संस्थाप्य मध्ये— सर्पो रक्तस्त्रिनेत्रश्च० दिव्याभरणभूषितः, इति ध्यात्वा —‘ इदꣳ सर्पेभ्यः० ये रोचने० ’ इति मन्त्राभ्यां सर्पान्, दक्षिणे — ‘ बृहस्पतिः प्रथमं० तिष्यः पुरस्तात्० ’ इति मन्त्राभ्यां बृहस्पतिं, उत्तरे — ‘ उपहूताः पितरः० ये अग्निदग्धाः० ’ इति मन्त्राभ्यां पितॄंश्चावाह्य चतुर्विंशतिदलेषु — अर्यमणं० ( १ ) भगं० ( २ ) सवितारं० ( ३ ) त्वष्टारं० ( ४ ) वायुं० ( ५ ) इन्द्राग्नी० ( ६ ) मित्रं० ( ७ ) इन्द्रं० ( ८ ) निर्ऋतिं० ( ९ ) अपः० ( १० ) विश्वान्देवान्० ( ११ ) विष्णुं० ( १२ ) वसून्० ( १३ ) वरुणं० ( १४ ) अजमेकपादं० ( १५ ) अहिर्बुध्नियं० ( १६ ) पूषणं० ( १७ ) अश्विनौ० ( १८ ) यमं० ( १९ ) अग्निं० ( २० ) प्रजापतिं० ( २१ ) सोमं० ( २२ ) रुद्रं० ( २३ ) अदितिं० ( २४ ) इति नाममन्त्रैरावाह्य, उत्तरतः कलशद्वये –– सद्योजातादिपञ्चदेवताः, वरुणञ्चावाह्य षोडशोपचारैः पूजयेत्। आचार्यादयः कुम्भमन्वारभ्य पूर्ववद्रुद्रैकादशिन्यादि जपेयुः। प्रधानदेवतासूक्तस्थाने सर्पसूक्तम्––भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा। उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे

॥ १ ॥ आऽयं गौः पृश्निरक्रमीदसदन्मातरं पुनः । पितरञ्च प्रयन्त्सुवः ॥ २ ॥ त्रिꣳ शद्धाम विराजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वहद्युभिः ॥ ३ ॥ अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः ॥ ४ ॥ नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ ५ ॥ ये ऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सुसदः कृतं तेभ्यः सर्पेभ्यो नमः ॥ ६ ॥ या इषवो यातुधानानां ये वा वनस्पतीꣳ रनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ ७ ॥ इति ॥ अथ बृहस्पतिसूक्तम् आ वेधसं नीलपृष्ठं बृहन्तम् । बृहस्पतिꣳ सदने सादयध्वम् ॥ सादद्योनिं दम आ दीदिवाꣳसम् । हिरण्यवर्णमरुषꣳ सपेम ॥ १ ॥ स हि शुचिः शतपत्रः स शुन्ध्यूः । हिरण्यवाशी रिषिरः सुवर्षाः ॥ बृहस्पतिः स स्वावेश ऋष्वाः । पुरू सखिभ्य आसुतिं करिष्ठः ॥ २ ॥ बृहस्पतिः प्रथमं जायमानः । महो ज्योतिषः परमे व्योमन् ॥ सप्तास्यस्तुविजातो रवेण । विसप्तरश्मिरधमत्तमाꣳसि ॥ ३ ॥ बृहस्पतिः समजयद्वसूनि । महो व्रजान्गोमतो देव एषः ॥ अपः सिषासन्त्सुवरप्रतीत्तः । बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ४ ॥ बृहस्पते परिदीया रथेन रक्षोहा मित्राꣳ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधाजयन्नस्माकमेध्यविता रथानाम् ॥ ५ ॥ एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः । बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम् ॥ ६ ॥ इति ॥ अथ पितृसूक्तम् — उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आवह पितॄन्हविषे अत्तवे ॥ १ ॥ आनो अग्ने सुकेतुना । रयिं विश्वायु पोषसम् । मार्डिकं धेहि जीवसे ॥ २ ॥ त्वꣳ सोम महे भगम् । त्वं यून ऋतायते ॥ दक्षं दधासि जीवसे ॥ ३ ॥ त्वꣳ सोम प्रचिकितो मनीषा । त्वꣳ रजिष्ठमनु नेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ ४ ॥ त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ ५ ॥ त्वꣳ सोम

पितृभिः संविदानोऽनु द्यावापृथिवी आततन्थ । तस्मै त इन्द्रो हविषा विधेम वय ँ स्याम पतयो रयीणाम् ॥ ६ ॥ बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आगतावसा शन्तमेनाथास्मभ्य ँ शं योररपो दधात ॥ ७ ॥ आऽहं पितॄन्त्सुविदत्रा ँ अवित्सि नपातञ्च विक्रमणञ्च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः ॥ ८ ॥ उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान् ॥ ९ ॥ अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः । अत्ता हवी ँ षि प्रयतानि बर्हिष्यथा रयि ँ सर्ववीरं दधातन ॥ १० ॥ अग्निष्वात्तानृतुमतो हवामहे । नराश ँ से सोमपीथं य आशुः ॥ ते नो अर्वन्तः सुहवा भवन्तु । शन्नो भवन्तु द्विपदे शं चतुष्पदे ॥ ११ ॥ ये अग्निष्वात्ता येऽनग्निष्वात्ताः । अ ँ होमुचः पितरः सोम्यासः ॥ परेवदे मृतासो भवन्तः । अधि ब्रुवन्तु ते अवन्त्वस्मान् ॥ १२ ॥ वान्याये दुग्धे जुषमाणाः करम्भम् । उदीराणा अवरे परे च । अग्निष्वात्ता ऋतुभिः संविदानाः । इन्द्रवन्तो हविरिदं जुषन्ताम् ॥ १३ ॥ यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः । प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ ॥ १४ ॥ त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवी ँ षि ॥ १५ ॥ मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः । यांश्च देवा वावृधुर्ये च देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति ॥ १६ ॥ ये तातृपुर्देवत्रा जेहमानाः । होत्रा वृध स्तोमतष्टासो अर्कैः ॥ आग्ने याहि सुविदत्रेभिरर्वाङ् । सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥ १७ ॥ हव्यवाहमजरं पुरुप्रियम् । अग्निं घृतेन हविषा सपर्यन् ॥ उपासदं कव्यवाहं पितॄणाम् । स नः प्रजां वीरवती ँ समृण्वतु ॥ १८ ॥ इति ॥ सूक्तत्रयम् ॥ अथ ग्रहदेवताभ्यः सर्पेभ्यो बृहस्पतये पितृभ्यश्च चरुनिर्वापाद्यग्निमुखान्तं समानम् ॥

ग्रहपक्वहोमान्ते — 'इदꣳसर्पेभ्यः० ये रोचने०' इति मन्त्राभ्यां सर्पेभ्यः, 'बृहस्पतिः प्रथमं० तिष्यः पुरस्तात्०' इति द्वाभ्यां बृहस्पतये, 'उपहूताः पितरः० ये अग्निदग्धाः०' इति पितृभ्यश्च पक्वहोमः। स्विष्टकृदवदानान्ते अन्वाधानोक्तक्रमेण सर्प-बृहस्पति-पितृ-देवतामन्त्रैः कृसरान्नेन हुत्वाऽग्निश्चाज्यस्थालीश्चान्तरेण सम्पातार्थं पात्रं निधायाऽऽज्याहुतीरुपजुहोति–सर्पेभ्यः स्वाहा। आश्रेषाभ्यः०। दन्दशूकेभ्यः०। बृहस्पतये०। तिष्याय०। ब्रह्मवर्चसाय०। पितृभ्यः०। मघाभ्यः०। अनघाभ्यः०। अगदाभ्यः०। अरुन्धतीभ्यः०। सर्वत्र, यथालिङ्गं त्यागः॥ (सर्पसूक्तसप्तमन्त्रैः, बृहस्पतिसूक्तषण्मन्त्रैः, पितृसूक्ताष्टादशमन्त्रैः, 'अर्यम्णे स्वाहा' इत्यादि चतुर्विंशतिमन्त्रैश्च॥ सर्वत्र, यथालिङ्गं त्यागः) इत्युपहुत्य, स्विष्टकृदादि पूर्णाहुत्यन्ते — ग्रहदेवताभ्यो दिक्पाल-देवताभ्यः प्रधानदेवताभ्यश्च बलिं दत्वोत्तरपरिषेकादि होमशेषं समापयेत्॥ अथाऽऽवाहितदेवताः पुनः सम्पूज्य, 'सर्पाधीश नमस्तुभ्यं नागानाञ्च गणाधिप। गृहाणार्घ्यं मया दत्तं सर्वारिष्टप्रशान्तये' इत्यर्घ्यं दत्वा, सम्पाताज्यं कलशोदके निक्षिप्य, सकुटुम्बं सशिशुं यजमानमभिषिञ्चेत्—'इदꣳ सर्पेभ्यः०' इति मन्त्राभ्यां, 'बृहस्पतिः प्रथमं०' इति मन्त्राभ्यां, 'उपहूताः पितरः०' इति मन्त्राभ्यां, सर्पसूक्तेन, बृहस्पतिसूक्तेन, पितृसूक्तेन, 'शतायुधाय' इति पञ्चमन्त्रैः, 'आ सत्येन' इत्यादि ग्रहमन्त्रैः, "आश्लेषा ऋक्षजातस्य माता-पित्रोर्धनस्य च। भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु॥ योऽसौ वागीश्वरो नाम चाऽधिदेवो बृहस्पतिः। मातापित्रोः शिशोश्चैव गण्डान्तश्च व्यपोहतु॥ त्रातारः सर्वभूतानां रक्षन्तु पितरः सदा। सर्पनक्षत्रजातस्य वित्तञ्च ज्ञातिबान्धवाः॥ योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः। आश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु॥ विघ्नेशो क्षेत्रपो दुर्गा क्षेत्रपाला नवग्रहाः। सर्वदोषप्रशमनं शीघ्रं कुर्वन्तु शान्तिदाः" 'देवस्य त्वा' इत्येतैर्मन्त्रैः॥ ततः आवाहितदेवता उद्वास्य ब्राह्मणान्सम्पूज्य साङ्गतासिद्ध्यर्थमाचार्याय कृष्णां धेनुं सपीठं कलशं ब्रह्मणे कृष्णं वृषं ऋत्विग्भ्यः सुवर्णं च दत्वा ब्राह्मणान्भोजयित्वा भूयसीं दक्षिणां दत्वाऽऽशिषो गृह्णीयात्॥

# ॥ कृष्णचतुर्दशीजननशान्तिविधिः ॥

( बो. गृ. शे. सू. ६. ४ ) अथ कृष्णचतुर्दशीजननशान्तिं व्याख्यास्यामः — कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् । चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम् ॥ द्वितीये पितरं हन्ति तृतीये मातरन्तथा । चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ॥ षष्ठे तु धनहानिस्स्यादात्मनो वंशनाशनम् । तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ॥ आचार्यं वरयेद्धीमान्पुत्रदारसमन्वितम् । स्वकर्मनिरतं शान्तं श्रोत्रियं वेदपारगम् ॥ सर्वालङ्कारसंयुक्तं सर्वलक्षणसंयुतम् । ब्राह्मणानृत्विजश्चैव स्वस्तिवाचनपूर्वकम् ॥ रुद्रोऽधिदेवता तस्याः कर्षमात्रसुवर्णतः । तदर्धेन च वा कुर्याद्वित्तशाठ्येन वर्जितः ॥ प्रतिमां कारयेच्छम्भोः सर्वलक्षणसंयुताम् । वृषभेण समासीनं वरदाभयपाणिकम् ॥ शुद्धस्फटिकसङ्काशं श्वेतमाल्याम्बरान्वितम् । त्र्यम्बकेति च मन्त्रेण पूजां कुर्याद्विधानतः ॥ स्थापयेच्चतुरः कुम्भांश्चतुर्दिक्षु यथाक्रमम् । पुण्यतीर्थजलोपेतान्धान्यस्योपरि विन्यसेत् ॥ शतौषधानि निक्षिप्य श्वेतवस्त्रैश्च वेष्टयेत् । शुभानि चैव पुष्पाणि श्वेतानि परिवेष्टयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ आवाह्य वारुणैर्मन्त्रैरुक्तक्रमविधानतः । इमम्मे वरुणेत्यनया तत्वा यामीत्यृचा तथा ॥ त्वन्नो अग्ने च मन्त्रेण स त्वन्न इति च क्रमात् । आग्नेयकुम्भमारभ्य पूजां कुर्याद्यथाक्रमम् ॥ रुद्रप्रश्नं वसोर्धारामग्नेर्मन्वे शतायुधम् । हिरण्यवर्णापवमानी ऋचाम्प्राची यथाक्रमम् ॥ जप्त्वा पुरुषसूक्तञ्च पञ्चरुद्रं क्रमाज्जपेत् । ईश्वरस्याभिषेकञ्च ग्रहपूजाञ्च कारयेत् ॥ पूजाकर्म च निर्वर्त्य होमं कुर्याद्विधानतः । गृहस्येशानदिग्भागे कुण्डं कुर्याद्विधानतः ॥ विस्तारायामखातञ्च अरत्निद्वयसंयुतम् । कुण्डकण्ठं परित्यज्य समन्तादङ्गुलिक्रमात् ॥ मेखलोच्छ्रायविस्तारे चतुस्त्रिद्व्यङ्गुलिक्रमात् । पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः ॥ योनिं षडङ्गुलां तिर्यग्द्वादशा-

ङ्गुलदैर्घ्यकाम् । अश्वत्थदलसङ्काशां किञ्चिन्निम्नायतां शुभाम् ॥ कुर्यादाचारपर्यन्तं स्वगृह्योक्तविधानतः । समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः ॥ अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः । अष्टोत्तरसहस्रं वा ह्यष्टोत्तरशतन्तु वा ॥ अष्टाविंशतिभिस्तैश्च होमं कुर्यात् पृथक्पृथक् । त्र्यम्बकेति च मन्त्रेण तिलान् व्याहृतिभिः क्रमात् ॥ ग्रहहोमं ततः कृत्वा पूर्वोक्तेन विधानतः । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ सर्वालङ्कारयुक्तानां त्रयाणामभिषेचनम् । चतुर्भिः कलशैरद्भिर्बृहत्कुम्भसमन्वितम् ॥ धौताम्बराणि धृत्वाऽथ कुर्यादाज्यावलोकनम् । पूर्णाहुतिञ्च जुहुयाद्यजमानः समाहितः ॥ तत्सर्वं वरया भक्त्या हीश्वराय निवेदयेत् । सर्वालङ्कारसंयुक्तां सवत्सां गां पयस्विनीम् । प्रतिमां वस्त्रयुग्मञ्च आचार्याय निवेदयेत् । अन्येषाञ्चैव सर्वेषां कुर्याद्ब्राह्मणभोजनम् ॥ तस्मादनेन विधिना वित्तशाठ्यविवर्जितः । एवं यः कुरुते शान्तिं सर्वपापैः प्रमुच्यते । सर्वान्कामानवाप्नोति चिरञ्जीवी सुखी भवेत् ॥ इत्याह भगवान् बोधायनः ॥ ॥ अत्र द्वितीय-तृतीय-षष्ठांशजनने गोमुखप्रसवमादौ कुर्यादिति धर्मसिन्धौ ॥

अथ प्रयोगः ॥ शुभे दिने आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य अस्य शिशोः कृष्णचतुर्दश्या अमुकांऽशजननसूचितपित्रिरिष्टादि सर्वारिष्टनिरसनद्वारा क्षेमायुरारोग्यप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां कृष्णचतुर्दशीजननशान्तिं करिष्ये, इति सङ्कल्प्य तदङ्गत्वेन गणपतिं संपूज्य " आदित्यादिनवग्रहदेवताः प्रीयन्तां, त्र्यम्बकः प्रीयतां " इति पुण्याहं वाचयित्वा । देवयजनोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य 'ग्रहमखपूर्वककृष्णचतुर्दशीजननशान्तिहोमं करिष्ये-ग्रहमखपूर्वककृष्णचतुर्दशीजननशान्तिहोमः कर्म, ग्रहकीर्तनान्ते वरदो नामाऽग्निः, त्र्यम्बको देवता, चरुर्हविः, उपहोमे-त्र्यम्बकमन्त्रेण अश्वत्थप्लक्षपलाशखदिरसमिच्चर्वाज्यतिलमाषसर्षपद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः समस्तव्याहृतिभिराज्याक्ततिलद्रव्येणाष्टोत्तरशतसङ्ख्याकाहुतिभिः अर्यमादयः स्विष्टकृतः' इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं व्रीहिभिर्यवैर्वा दक्षिणोत्तरं स्थण्डिलद्वयं कृत्वा दक्षिणस्थण्डिले

ग्रहानावाह्य उत्तरस्थण्डिलमध्ये त्र्यम्बककलशं तस्याऽग्नेयादिविदिक्षु चतुरः कलशांश्च विधिना संस्थाप्य मध्यकलशे — 'स्योना पृथिवि०' इति सप्तमृदः, 'अश्वत्थे वः' इति पञ्चपल्लवान् पञ्चत्वचः पञ्चधान्यानि सर्वौषधीश्च निक्षिप्य श्वेतवस्त्रेण संवेष्ट्य वरुणपूजान्ते त्र्यम्बकप्रतिमां कर्षतदर्धतदर्धान्यतमपरिमितहेमनिर्मितां वराभयाङ्कितहस्तद्वयां वृषभारूढां स्थापयित्वा त्र्यम्बक-मन्त्रेण शुद्धस्फटिकसङ्काशं श्वेतमाल्यांबरावृतं ध्यात्वा त्र्यम्बकमावाह्य 'सद्योजातं प्रपद्यामि, आसनं समर्पयामि' इत्यादि रुद्रस्नानार्चनाभिषेकविध्यनुसारेण श्वेतपुष्पादिभिः पूजयेत् ॥ अथाऽग्नेयकलशे — 'इमम्मे वरुण०' इति वरुणमावाहयेत् । एवमेव नैर्ऋतकलशे — 'तत्त्वा यामि०' इति मन्त्रेण, वायव्यकलशे — 'त्वन्नो अग्ने०' इति मन्त्रेण, ऐशानकलशे — 'स त्वन्नो अग्ने०' इति मन्त्रेण क्रमेण वरुणमावाह्य षोडशोपचारैरभ्यर्चयेत् ॥ पूजान्ते 'सर्वे समुद्राः० देवदानव०' इति वरुणं प्रार्थयेत् ॥ ततः कलशमन्वारभ्य 'नमस्ते रुद्र मन्यवे०' इति प्रश्नं, 'अग्नाविष्णू०' इत्येकादशानुवाकान्, 'अग्नेर्मन्वे०' इत्यनुवाकं, 'शतायुधाय०' इति पञ्चाज्यानीः' 'हिरण्यवर्णाः०' इति चतुरो मन्त्रान्, 'पवमानः सुवर्जनः०' 'ऋचां प्राची०' इत्यनुवाक-द्वयम्, पुरुषसूक्तं, सद्योजातादि पञ्चानुवाकांश्च जपेयुः ॥ निर्वापकाले – ग्रहनिर्वापान्ते – त्र्यम्बकाय चरुं निरुप्य प्रोक्ष्याज्य संस्काराद्यग्निमुखान्तं कृत्वा, ग्रहाणां पक्वं हुत्वा त्र्यम्बकमन्त्रं द्विरभ्यस्य पक्वं जुहुयात् । (त्र्यम्बकायेदं०) ततः स्विष्टकृत-मवदायान्तःपरिधौ निधायाऽन्वाधानोक्तक्रमेणोपहोमं कृत्वा स्विष्टकृदादिपूर्णाहुत्यन्ते ग्रहदेवताभ्यस्त्र्यम्बकाय क्षेत्रपालाय च बलिं दद्यात् ॥ उत्तरपरिषेकादिहोमशेषं समाप्य कलशोदकेन दधिक्राव्ण इत्यादिभिः पूर्वोक्तमन्त्रैश्च सपत्नीकं यजमानं शिशुञ्चा-भिषिञ्चेत् ॥ ततो यजमानोऽहते वाससी परिधाय आज्यपूर्णपात्रे सकुटुम्ब आत्मनः प्रतिरूपं "यन्मे मनः० धारयामासि" इत्यवेक्ष्य दक्षिणासहितं तदाज्यं ब्राह्मणाय दद्यात् ॥ तत आचार्याय रुद्रपीठं ग्रहपीठं सोपस्करां गाञ्च ऋत्विग्भ्यो हिरण्यञ्च दत्वा

कृतस्य सग्रहमखकृष्णचतुर्दशीजननशान्तिकर्मणः साङ्गतासिध्यर्थं यथाशक्ति ब्राह्मणान्यथोपपन्नेनान्नेन यथावकाशेन भोजयिष्ये। तेभ्यश्च यथाशक्ति भूयसीं दक्षिणां दातुमहमुत्सृजे । तेन श्रीपरमेश्वरः प्रीयताम् इति कर्मेश्वराय समर्पयेत्। ततो 'प्रमादात्कुर्वतां' इति विष्णुं स्मृत्वा द्विराचामेत् ॥

## ॥ सिनीवालीकुह्वोर्जन्मनि शान्तिविधिः ॥

(बो. गृ. शे. सू. ६.५) अथातः सिनीवालीकुह्वोर्जन्मनि शान्तिं व्याख्यास्यामः — सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा । गवाश्वं महिषी चैव शक्रस्याऽपि श्रियं हरेत् ॥ ये च सन्ति द्विजाश्चान्ये स्वप्रसादोपजीविनः। वर्जयेत्तानशेषाँस्तु पशुपक्षिमृगादिकान् ॥ कुहूप्रसूतिरत्यन्तं सर्वदोषकरी नृणाम् । यस्य प्रसूतिरत्र स्यात्तस्याऽऽयुर्धननाशनम् ॥ सर्वगण्डसमस्तत्र दोषस्तु प्रबलो भवेत्। नारीं विनाऽवशेषाणां परित्यागो विधीयते॥ परित्यागात्तत्र शान्तिं कुर्याद्धीमान्विचक्षणः। तत्फलं तत्क्षणार्धेन पुनरेव विलीयते॥ न त्यजेत्पण्डितो मोहादर्थादज्ञानतोऽपि वा। तद्योगं नाशयेदाशु स्वयं वा नाशमृच्छति॥ कल्पोक्तशान्तिः कर्तव्या शीघ्रं दोषापनुत्तये। रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात् ॥ कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः। अथवा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः॥ प्रतिमां कारयेच्छम्भोश्चतुर्भुजसमन्विताम्। त्रिशूलखड्गवरदाभयहस्तां यथा-क्रमात् ॥ श्वेतवर्णां श्वेतपुष्पां श्वेताम्बरवृषस्थिताम्। त्र्यम्बकेति च मन्त्रेण पूजां कुर्याद्यथाविधि॥ इन्द्रश्चतुर्भुजो वज्राङ्कुशचापसु-सायकी। रक्तवर्णो गजारूढो यत इन्द्रेति मन्त्रतः॥ पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः । यष्ट्यक्षसूत्रकमण्डल्वभयानाश्च धारिणः॥ ये चेह इति मन्त्रेण पूजां कुर्यादनन्तरम्। आग्नेयीं दिशमारभ्य कुम्भान्कोणेषु विन्यसेत्॥ तन्मध्ये स्थापयेत्कुम्भं

शतच्छिद्रसमन्वितम् । तेष्वेव पञ्चगव्यादींस्तत्तन्मन्त्रैश्च निक्षिपेत् ॥ कल्पोक्तशान्तिः कर्तव्या शीघ्रमेव प्रयत्नतः । गोदानं वस्त्रदानञ्च सुवर्णञ्चौर्णकं शुभम् ॥ दशदानानि चोक्तानि क्षीरमाज्यं गुडस्तथा । आज्याऽवेक्षणमेतानि यजुर्मन्त्रेण कारयेत् ॥ समिदाज्यचरोर्होमं तिलमाषैश्च सर्षपैः । अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥ अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयाद्द्विजः । त्र्यम्बकेति च मन्त्रेण तिलान्व्याहृतिभिः पुनः ॥ चतुर्भिः कलशैर्युक्तं बृहत्कुम्भसमन्वितम् । शान्तिवत्कलशैः कार्यमभिषेकञ्च मन्त्रतः ॥ पितृमातृशिशूनाञ्च अभिषिञ्चेत्तु वारुणैः । शङ्करस्याभिषेकञ्च कुर्याद्ब्राह्मणभोजनम् ॥ अन्येषाञ्चैव सर्वेषां ब्राह्मणानाञ्च तर्पणम् । यथाशक्ति तदा कार्यं द्विजवाचनकं तथा ॥ इति ॥ ॥

तत्राऽमावास्यायाः प्रथमो यामः सिनीवाली । अन्त्योपान्त्ययामौ कुहूः । मध्यवर्तिपञ्च यामा दर्शः इति केचित् ॥ अपरे तु चतुर्दशीमात्रयुतेऽहोरात्रे वर्तमाना अमावास्या सिनीवाली । प्रतिपन्मात्रयुतेऽहोरात्रे वर्तमाना कुहूः ॥ इति ॥ कुहूप्रसूतिरत्यर्थं सर्वदोषकरी स्मृता । यस्य प्रसूतिरेतेषां तस्यायुर्धननाशकृत् ॥ शान्त्यभावेऽहति त्यागमत्र जातो न संशयः ॥

अथ प्रयोगः ॥ शिशुजननादेकादशे द्वादशे वा दिवसेन्यस्मिन् वा शुभे दिने कर्ता सपत्नीक आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्याऽस्य शिशोः सिनीवाली ( कुहू ) जननसूचितसर्वारिष्टनिरसनद्वारा दीर्घायुरारोग्यप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां सिनीवाली ( कुहू ) जननशान्तिं करिष्ये, इति सङ्कल्प्य गणेशपूजनाद्यृत्विग्वरणान्तं कुर्यात् ॥ पुण्याहे — 'आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, त्र्यम्बकः प्रीयताम्' इति विशेषः ॥ तत आचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, ग्रहमखपूर्वकासिनीवाली ( कुहू ) जननशान्तिहोमं करिष्ये०, ग्रहान्वाधानांते–वरदो नामाऽग्निः, त्र्यम्बको देवता, चरुर्हविः, उपहोमे-त्र्यम्बकमन्त्रेण अश्वत्थप्लक्षपलाशखदिरसमिच्चर्वाज्यसर्षपतिलमाषद्रव्यैः प्रतिद्रव्यं अष्टोत्तरशतसङ्ख्याकाहुतिभिः इन्द्रं पितॄंश्च

'यत इन्द्र० ये चेह पितर:०' इति मन्त्राभ्यां तैरेव द्रव्यैः प्रतिद्रव्यं अष्टाविंशातिसङ्ख्याकाहुतिभिः त्र्यम्बकमन्त्रेण समस्तव्याहृतिभिश्च आज्याक्ततिलद्रव्यैरष्टाविंशतिसङ्ख्याकाहुतिभिर्यक्ष्ये। अर्यमादयः स्विष्टकृतः इत्यादि सङ्कल्प्यान्वाधाय प्रणीताप्रणयनान्ते अग्रेणाऽग्निं व्रीहिभिर्यवैर्वा दक्षिणोत्तरं स्थण्डिलद्वयं कृत्वा दक्षिणस्थण्डिले ग्रहानावाह्य उत्तरस्थण्डिले मध्ये शतच्छिद्रकलशं दक्षिणे इन्द्रकलशं उत्तरे पितृकलशं प्रतिष्ठाप्य तेषु विष्युक्तप्रकारेण स्वर्णनिर्मितास्त्र्यंबकेन्द्रपितृप्रतिमाः क्रमेण विन्यस्य, 'त्र्यबकं यजामहे०, यत इन्द्र भयामहे०, ये चेह पितरा०' इति मन्त्रैस्तत्तद्देवता आवाह्य आग्नेय्यादिविदिक्षु चतुरः कुम्भान् प्रतिष्ठाप्य तेषु तत्सवितुरित्यादिना पञ्चगव्यानि ( गायत्र्याऽऽय गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि॥ तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम् ) 'स्योना पृथिवि' इति सप्तमृदः पञ्चत्वचः 'ओषधयः संवदन्ते' इति सप्तधान्यानि च प्रक्षिप्य 'इमं मे वरुण०, तत्त्वा यामि०, त्वं नो अग्ने०, सत्वं नो अग्ने०' इति क्रमेण वरुणमावाह्य षोडशोपचारैरभ्यर्चयेत्॥ त्र्यम्बकं श्वेतगन्धपुष्पादिभिः पूजयेत्॥ ततो भद्रं कर्णेभिः इत्यादि पञ्च शान्तिं पठित्वा हविर्निर्वापाद्यग्निमुखान्तं कृत्वा ग्रहपक्वान्ते 'त्र्यम्बकं' इति मन्त्रे द्विरभ्यस्य पक्वं जुहुयात्। त्र्यम्बकायेदं०। ततः स्विष्टकृदवदानान्ते ग्रहानुपहुत्य त्र्यम्बकमन्त्रेण अश्वत्थप्लक्षपलाशखदिरसमिच्चर्वाज्यसर्षपतिलमाषद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतवारं हुत्वा ( त्र्यम्बकायेदं० ) 'यत इन्द्र भयामहे' इति मन्त्रेण इन्द्रं ( इन्द्रायेदं० ) ये चेह पितरो ये च नेहयाꣳश्च विद्मयाꣳउ च न प्रविद्म। त्वं वेत्थ यदि ते जातवेदः स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व स्वाहा॥ इति मन्त्रेण पितॄंश्च ( पितृभ्य इदं० ) तैरेव द्रव्यैः प्रतिद्रव्यं अष्टाविंशत्यष्टाविंशतिसङ्ख्याकाहुतिभिर्हुत्वा। पुनस्त्र्यम्बकमन्त्रेण समस्तव्याहृतिभिश्चाऽऽज्याक्ततिलैः प्रत्येकमष्टाविंशत्यष्टाविंशतिवारं जुहुयात्॥ ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा ग्रहदेवताभ्यस्त्र्यम्बकायेन्द्राय पितृभ्यः क्षेत्रपालाय च

बलिं दद्यात् ॥ अथोत्तरपरिषेकादि होमशेषं समाप्याऽऽवाहितदेवताः पुनः सम्पूज्य ग्रहकलशजलसहितचतुःकुम्भजलयुतशत-च्छिद्रेण मातृपितृशिशूनामभिषेकः —ॐ इमम्मे वरुण० तत्वा यामि० त्वं नो अग्ने० स त्वं नो अग्ने० दधिक्राव्णो० आपो हि ष्ठा:० हिरण्यवर्णाः० पवमानः सुवर्जनः० देवस्य त्वा० इति ॥ ततो ब्राह्मणान्सम्पूज्याऽऽचार्याय सपीठं कलशदानं ऋत्विग्भ्यो यथाशक्ति दक्षिणां सप्तदशदानानि च दद्यात् ॥ 'गवामङ्गेषु०' इति गोदानम् । 'शरण्यं सर्वलोकानां लज्जया रक्षणं परम् । सुवेषधारि वस्त्र त्वमतः शान्ति प्रयच्छ मे' इति वस्त्रदानम् ॥ 'हिरण्यगर्भ०' इति स्वर्णदानम् ॥ 'ऊर्णावस्त्रं चारुचित्रं देवानां प्रीतिवर्धनम् । सुख-स्पर्शकरं यस्मादतः शान्तिं०' इत्यूर्णकदानम् ॥ ततो दशदानानि दद्यात् ॥ तत्र गां 'सर्वं भूताश्रया भूमिः०' इति भुवञ्च दत्वा तिलदानं —'महर्षेर्गोत्रसम्भूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहतु' इति ॥ उक्तमन्त्रेण हिरण्यं दत्वाऽऽ-ज्यदानं —'कामधेनुषु सम्भूतं सर्वक्रतुषु संस्थितम् । देवानामाज्यमाहार अतः शान्तिं०' इति ॥ उक्तमन्त्रेण वासो दत्वा धान्यदानं —'सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् । प्राणिनाञ्जीवनोपायमतः शान्तिं०' इति ॥ गुडदानम् —'यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः । सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥ प्रणवः सर्वमन्त्राणां नारीणां पार्वती तथा । तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥ मम तस्मात्परां शान्तिं ददस्व गुड सर्वदा' इति ॥ रौप्यदानं —'प्रीतिर्यतः पितॄणाञ्च विष्णुशङ्करयोः सदा । शिवनेत्रोद्भवं रूप्यमतः शान्तिं०' इति ॥ लवणदानं —'यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना । शम्भोः प्रीतिकरं नित्यमतः शान्तिं०' इति ॥ अथ क्षीरदानं —'क्षीरजातास्तथा शङ्खाः क्षीरादमृतसम्भवः । क्षीरात्क्षीरोदवत्कीर्तिः क्षीरे प्राणस्य सम्भवः ॥ तस्मात्क्षीरप्रदानेन ह्यतः शान्तिं०' इति ॥ आज्यगुडावुक्तमन्त्रेण दद्यात् ॥ अथाऽऽज्यपूर्णे कांस्यपात्रे पूर्वोक्तविधिना सकुटुम्बः प्रतिरूपं वीक्ष्य दद्यात् ॥ ततो रुद्राभिषेकादिना शंकरमाराध्य ब्राह्मणान्सम्भोज्याऽऽशिषो गृह्णीयात् ॥

# ॥ दर्शशान्तिविधिः ॥

( बो. गृ. शे. सू. १. १ ) अथातो दर्शशान्तिविधिं व्याख्यास्यामः — अथातो दर्शजातस्य मातापित्रोर्दरिद्रता। तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि साम्प्रतम् ॥ पुण्याहं वाचयित्वादौ क्रतुसङ्कल्पपूर्वकम् । कुण्डञ्च मण्डपं कुर्यात्तद्देशे स्थापयेद्धटम् ॥ तत्कुम्भे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकम् । न्यग्रोधोदुम्बराश्वत्थसचूता निम्बकास्तथा ॥ एतेषां वृक्षमूलानां त्वगादीन्पल्लवाँस्तथा। पञ्चरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ आपो हि ष्ठेत्यृचेनाथ कया नश्चित्र इत्यृचा। यत्किञ्चेदमृचा चैव रुद्रप्रश्नञ्च त्र्यम्बकम् ॥ अग्नाविष्णू जपेद्धीमानग्नेः पूर्वप्रदेशके। हारिद्रं रक्तकञ्चैव कृष्णं श्वेतञ्च नीलकम् ॥ एतेषां तण्डुलैश्चैव सर्वतोभद्रमुद्धरेत्। दर्शस्य देवताश्चा सोमसूर्यस्वरूपकाः ॥ प्रतिमाः स्वर्णजा नित्यं राजतीं ताम्रजां तथा। सर्वतोभद्रमध्ये च स्थापयेद्दर्शदैवतम् ॥ ग्रहवर्णं वस्त्रयुग्मं तद्वर्णं गन्धपुष्पकम् । आप्यायस्वेति मन्त्रेण सविता पश्चात्तमेव च ॥ उपचारैः समाराध्य ततो होमं समाचरेत्। अथ वह्निं प्रतिष्ठाप्य क्रतुसङ्कल्पमीदृशम् ॥ आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशान्तये। पुत्रस्य दर्शजननदोषनिर्हरणाय च ॥ मातापित्रोः कुमारस्य सर्वारिष्टप्रशान्तये। तेषामायुः श्रियं लब्धुं शान्तिहोमं करोम्यहम् ॥ समिधश्च चरुद्रव्यं क्रमेण जुहुयाद्द्विजः। हुनेत्सवितृमन्त्रेण सोमो धेनुञ्च मन्त्रतः ॥ एतैर्मन्त्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतम् । दर्शस्य देवताहोममष्टाविंशतिसङ्ख्यया ॥ होममेवन्तु कृत्वाऽथ विध्याचाराभिषेचनम् । आपो हि ष्ठा हिरण्येति यद्देवा वरुणेत्यृचः ॥ एतैर्मन्त्रैरभिषेकं मातापित्रोः शिशोस्तथा। ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् ॥ हिरण्यं रजतञ्चैव कृष्णा धेनुश्च दक्षिणा। अन्येभ्योऽपि यथाशक्ति दातव्या दक्षिणा तथा ॥ ब्राह्मणान् भोजयेत् तत्र कारयेत् स्वस्तिवाचनम् ॥

अथ प्रयोगः ॥ कर्ता कृतनित्यक्रियः पवित्रपाणिः सपत्नीकः शिशुना सहादौ गोप्रसवशान्तिं विधाय स्वासने उपविश्य देशकालौ सङ्कीर्त्यास्य शिशोर्दर्शजननसूचितमाता-पितृ-शिशूनां सर्वारिष्टनिरसनद्वारा आयुरारोग्यैश्वर्यप्राप्त्यर्थं श्रीपरमेश्वर-प्रीत्यर्थं सग्रहमखां दर्शजननशान्तिं करिष्ये इति सङ्कल्प्य, गणपतिं संपूज्य 'आदित्यादिनवग्रहदेवताः प्रीयन्ताम्, पितृसोम-सूर्याः प्रीयन्ताम्' इति पुण्याहं वाचयित्वा आचार्यादीन्वृत्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य सग्रहमखदर्शजननशान्तिहोमं करिष्ये, सग्रहमखदर्शजननशान्तिहोमः कर्म, ग्रहकीर्तनान्ते वरदो नामाग्निः, पितरः सोमः सूर्यश्च देवता, चरुर्हविः, उपहोमे-ग्रहान्ते, पितॄन् - 'ये चेह पितरः०' इति मन्त्रेण समिच्चरुभ्यां प्रतिद्रव्यमष्टाविंशतिसङ्ख्याकाहुतिभिः, सोमं सूर्यञ्च 'सोमो धेनुं०, सविता पश्चात्तात्०' इति मन्त्राभ्यां समिच्चरुभ्यां प्रतिमन्त्रं प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः, ब्रह्मादिमण्डल-देवतानाममन्त्रेणैकैकयाज्याहुत्या यक्ष्ये स्विष्टकृतः अर्यमादयो देवता इत्यादि सङ्कल्प्यान्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निं ग्रहमण्डलं सर्वतोभद्रमण्डलञ्च विरच्य, ग्रहमण्डले विधिवद्ग्रहानावाह्य सम्पूज्य, सर्वतोभद्रमण्डले ब्रह्मादिमण्डलदेवता आवाह्य, तन्मध्ये-मध्यदक्षिणोत्तरक्रमेण कलशत्रयं प्रतिष्ठाप्य, मध्ये कलशे सुवर्णप्रतिमायां 'ये चेह पितरः०' इति मन्त्रेण पितॄन्, तद्दक्षिणकलशे रजतप्रतिमायां 'आ प्यायस्व०' इति मन्त्रेण सोमं, उत्तरकलशे ताम्रप्रतिमायां 'सविता पश्चात्तात्०' इति सूर्यञ्चावाह्य सम्पूज्य, निर्वापाद्यग्निमुखान्तं कृत्वा। "आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशान्तये ॥ पुत्रस्य दर्शजननदोषनिर्हरणाय च ॥ मातापित्रोः कुमारस्य सर्वारिष्टप्रशान्तये ॥ तेषामायुः श्रियै चैव शान्तिहोमं करोम्यहम्" इति यजमानेन सङ्कल्पे कृते ग्रहपक्वहोमं कृत्वाऽवदानधर्मेणावदाय 'तत्सवितुर्वरेण्यं०' इत्यनुद्रुत्य 'ये चेह पितरः०' इति जुहोति ॥ पितृभ्य इदं० ॥ पुनरवदाय-सावित्र्याऽनुद्रुत्य 'आ प्यायस्व०' इति जुहोति ॥ सोमायेदं० ॥ पुनरप्यवदाय सावित्र्याऽनुद्रुत्य 'सविता

पश्चात्तात्०' इति जुहोति ॥ सूर्यायेदं० ॥ स्विष्टकृतमवदायान्तःपरिधौ निधायान्वाधानोक्तक्रमेणोपहुत्योत्तरपरिषेकात्प्राक् कृत्वा हुतशेषेण बलिदानान्ते उत्तरपरिषेकादि होमशेषं समापयेत् ॥ ततः आवाहितदेवताः पुनः सम्पूज्य कलशोदकेन आपो हि ष्ठा०, हिरण्यवर्णाः०, वरुणसूक्तपवमानानुवाकाभ्यां मातापित्रोः शिशोश्चाभिषेकं कुर्यात् ॥ ततो ब्राह्मणान्सम्पूज्य साङ्गतासिध्यर्थं कृष्णां गां सपीठं कलशं हिरण्यं रजतञ्चाऽऽचार्याय दत्वा ऋत्विग्भ्यो यथाशक्ति हिरण्यं दद्यात् ॥ ततः शान्तिमन्त्रपठनम् ॥ यथाशक्ति ब्राह्मणान् भोजयित्वा स्वस्तिवाचनपूर्वकं आशिषो गृह्णीयात् ॥

## ॥ ब्रह्मादिमण्डलदेवताः ॥

ब्रह्मादिमण्डलदेवतास्थापनं पूजनञ्च करिष्ये—मध्ये-ॐ भूर्भुवस्सुवः ब्रह्मणे नमः ब्रह्माणमावाहयामि ॥ १ ॥ ( एवं सर्वत्र ) उत्तरे—सोमाय० सोमं० ॥ २ ॥ ईशान्यां-ईशानाय० ईशानं० ॥ ३ ॥ पूर्वे-इन्द्राय० इन्द्रं० ॥ ४ ॥ आग्नेय्यां-अग्नये० अग्निं० ॥ ५ ॥ दक्षिणे-यमाय० यमं० ॥ ६ ॥ नैर्ऋत्यां-निर्ऋतये० निर्ऋतिं० ॥ ७ ॥ पश्चिमे-वरुणाय० वरुणं० ॥ ८ ॥ वायव्यां-वायवे० वायुं० ॥ ९ ॥ वायुसोममध्ये-अष्टवसुभ्यो० अष्टवसून्० ॥ १० ॥ सोमेशानयोर्मध्ये-एकादशरुद्रेभ्यो० एकादशरुद्रान्० ॥ ११ ॥ ईशानेन्द्रयोर्मध्ये-द्वादशाऽऽदित्येभ्यो० द्वादशाऽऽदित्यान्० ॥ १२ ॥ इन्द्राऽग्निमध्ये-अश्विभ्यां०अश्विनौ० ॥ १३ ॥ अग्नियममध्ये-विश्वेभ्यो-देवेभ्यो० विश्वान्देवान्० ॥ १४ ॥ यमनिर्ऋतिमध्ये-सप्तयक्षेभ्यो० सप्तयक्षान्० ॥ १५ ॥ निर्ऋतिवरुणमध्ये-सर्पेभ्यो० सर्पान्० ॥ १६ ॥ वरुणवायुमध्ये-गन्धर्वाऽप्सरोभ्यो० गन्धर्वाऽप्सरस० ॥ १७ ॥ ब्रह्मसोममध्ये-स्कन्दाय० स्कन्दं० ॥ १८ ॥ नन्दीश्वराय० नन्दीश्वरं० ॥ १९ ॥ शूलाय०शूलं० ॥ २० ॥ महाकालाय० महाकालं० ॥ २१ ॥ ब्रह्मेशानयोर्मध्ये-दक्षाय० दक्षं० ॥ २२ ॥ ब्रह्मेन्द्रमध्ये-दुर्गायै०

दुर्गां० ॥ २३ ॥ विष्णवे० विष्णुं० ॥ २४ ॥ ब्रह्माऽग्निमध्ये-स्वधायै० स्वधां० ॥ २५ ॥ ब्रह्मयममध्ये-मृत्युरोगेभ्यो० मृत्युरोगान्० ॥ २६ ॥ ब्रह्मनिर्ऋतिमध्ये-गणपतये० गणपतिं० ॥ २७ ॥ ब्रह्मवरुणमध्ये-अद्भ्यो० अपः० ॥ २८ ॥ ब्रह्मवायुमध्ये-मरुद्भ्यो० मरुतः० ॥ २९ ॥ ब्रह्मणः पादमूले कर्णिकाऽधः—पृथिव्यै० पृथिवीं० ॥ ३० ॥ तत्रैव-गङ्गादिनदीभ्यो० गङ्गादिनदीः० ॥ ३१ ॥ तत्रैव-सप्तसागरेभ्यो० सप्तसागरान्० ॥ ३२ ॥ तदुपरि-मेरवे०मेरुं० ॥ सोमस्योत्तरतः—गदायै० गदां० ॥ ईशानस्यैशान्यां-त्रिशूलाय० त्रिशूलं० ॥ इन्द्रस्य पूर्वे-वज्राय० वज्रं० ॥ अग्नेराग्नेय्यां-शक्तये० शक्तिं० ॥ यमस्य दक्षिणे-दण्डाय० दण्डं० ॥ निर्ऋतेर्नैर्ऋत्यां-खड्गाय० खड्गं० वरुणस्य पश्चिमे-पाशाय० पाशं० ॥ वायोर्वायव्यां-अङ्कुशाय० अङ्कुशं० ॥ उत्तरे-गौतमाय० गौतमं० ॥ ईशान्यां—भरद्वाजाय० भरद्वाजं० ॥ पूर्वे-विश्वामित्राय० विश्वामित्रं० ॥ आग्नेय्यां-कश्यपाय० कश्यपं० ॥ दक्षिणे-जमदग्नये० जमदग्निं० ॥ नैर्ऋत्यां-वसिष्ठाय० वसिष्ठं० ॥ पश्चिमे-अत्रये० अत्रिं० ॥ वायव्यां-अरुन्धत्यै० अरुन्धतीं० ॥ पूर्वादिक्रमेण-ऐन्द्र्यै० ऐन्द्रीं० ॥ कौमार्यै० कौमारीं०॥ ब्राह्म्यै० ब्राह्मीं० ॥ वाराह्यै० वाराहीं० ॥ चामुण्डायै० चामुण्डां० ॥ वैष्णव्यै० वैष्णवीं० ॥ माहेश्वर्यै० माहेश्वरीं० ॥ वैनायक्यै० वैनायकीं० ॥ इति क्रमेणावाह्य पूजयेत् ॥

## ॥ सूर्यसङ्क्रांतिव्यतीपातवैधृतियोगेषु जन्मनि शान्तिविधिः ॥

( बो. गृ. शे. सू. १. ८ ) अथातः सूर्यसङ्क्रांति-व्यतीपात-वैधृतियोगेषु जन्मनि शान्तिं व्याख्यास्यामः—अथातः सम्प्रवक्ष्यामि जन्मकाले विशेषतः। वैधृतौ हि व्यतीपाते महादोषोऽभिजायते ॥ कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः । सङ्क्रान्तिश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥ दरिद्राणां महद्दुःखं व्याधिपीडा महद्भयम् । अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥

स्त्रीणाञ्च शोको दुःखञ्च सर्वनाशकरं भवेत्। शान्तिर्वा पुष्कला चेत्स्यात्तत्र दोषो न कश्चन ॥ गोमुखप्रसवं कुर्याच्छान्तिं कुर्यात् प्रयत्नतः। जपाभिषेकदानैश्च होमानपि विशेषतः॥ नवग्रहमखं कुर्यात्तस्य दोषोपशान्तये। प्रथमं गोमुखाज्जन्म ततः शान्तिं समाचरेत्॥ गृहस्य पूर्वदिग्भागे गोमयेनानुलेपयेत्। अलङ्कृतं स्वदेशे तु व्रीहिराशिं प्रकल्पयेत्॥ पञ्चद्रोणमितं धान्यं तदर्धं तण्डुलेन च। तदर्धन्तु तिलैः कुर्यादन्योन्योपरि कल्पयेत्॥ तृतीयराशौ द्रव्यस्य अष्टपत्रं लिखेद्बुधः। पुण्याहं वाचयित्वा तु आचार्यं वृणुयात्पुरा। आचार्यवन्तं धर्मज्ञं कुलीनञ्च कुटुम्बिनम्। मन्त्रतन्त्रार्थतत्त्वज्ञं शान्तिकर्मणि कोविदम्॥ पञ्चाङ्गभूषणं दद्यात्पट्टवस्त्राङ्गुलीयकम्। राशौ प्रतिष्ठितं कुम्भमव्रणं सुमनोहरम्॥ तीर्थोदकेन सम्पूर्य समृदोषधिपल्लवम्। पञ्चगव्यं पञ्चरत्नं वस्त्रायुग्मेन वेष्टयेत्॥ तस्योपरि न्यसेत्पात्रं सूक्ष्मवस्त्रेण संयुतम्। प्रतिमां स्थापयेद्धीमान्साधिप्रत्यधिदेवताम्। चन्द्रादित्याकृती पार्श्वे मध्ये वैधृतिमर्चयेत्। एवमेव व्यतीपातशान्तौ सङ्क्रमणस्य च॥ भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत्। निष्कमात्रेण चार्धेन पादेनाऽपि स्वशक्तितः॥ प्रतिमाः कारयेद्धीमाँस्तत्तल्लक्षणलक्षिताः। प्रतिमापूजनार्थाय वस्त्रयुग्मं निवेदयेत्॥ अधिदेवो भवेत्सूर्यश्चन्द्रः प्रत्यधिदैवतम्। तत्तद्व्याहृतिपूर्वेण तत्तन्मन्त्रेण पूजयेत्। त्र्यम्बकेति च मन्त्रेण प्रधानप्रतिमां यजेत्। उदु त्यमिति मन्त्रेण सूर्यपूजां समाचरेत्॥ आप्यायस्वेति मन्त्रेण सोमपूजां समाचरेत्। उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः॥ अर्चितं गन्धपुष्पाद्यैर्गुडनैवेद्यमर्पयेत्। मृत्युञ्जयेन मन्त्रेण प्रधानप्रतिमां स्पृशन्॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतन्तु वा। अष्टाविंशति वा चाथ प्रजप्याऽथ स्वशक्तितः॥ सौरं षडृचसूक्तञ्च सोमार्थं सोममन्त्रतः। ऋचां प्राची मृगारी च पावमान्यो यजुस्तथा॥ जपेच्च पौरुषं सूक्तं त्रियम्बकमतः परम्। कुम्भं स्पृष्ट्वा चतुर्दिक्षु जपं कुर्युस्तथर्त्विजः॥ कुम्भस्य पश्चिमे देशे स्थण्डिलेऽग्निं प्रकल्पयेत्। स्वगृह्योक्तविधानेन कारयेत्संस्कृतानलम्॥ त्र्यम्बकेति च मन्त्रेण समिदाज्यचरूञ्जुहुयात्। अष्टोत्तरसहस्रं वा त्वष्टोत्तरशतन्तु वा॥

अष्टाविंशतिहोमं वा स्वस्वशक्त्यनुसारतः । मृत्युञ्जयेन मन्त्रेण तिलहोमं समाचरेत् ॥ ततः स्विष्टकृतं हुत्वा ह्यभिषेकञ्च कारयेत् । आपो हि ष्ठेति तिसृभिर्हिरण्येति चतसृभिः ॥ पवमानानुवाकेन अक्षीभ्यामिति मन्त्रतः । त्र्यम्बकेणोदुत्यमिति आप्यायस्वेति मन्त्रतः ॥ देवस्य त्वेति मन्त्रेण त्वभिषेकं समाचरेत् । अभिषेकाप्लुतं वस्त्रमाचार्याय प्रदापयेत् ॥ श्वेतवस्त्रधरो भूत्वा भूषणाद्यैरलङ्कृतः । यजमानः स्त्रिया युक्त आज्यावेक्षणमाचरेत् ॥ आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः । गोदानं वस्त्रदानञ्च स्वर्णदानं विशेषतः ॥ तद्दोषशमनार्थाय आचार्याय प्रदापयेत् । प्रच्छादनपटं दद्यात्ततः शान्तिर्भविष्यति ॥ जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् । दीनान्धकृपणेभ्यश्च प्रदद्याद्भूरिदक्षिणाः ॥ ब्राह्मणाञ्छतसङ्ख्याकान्मिष्टान्नैर्भोजयेच्च तान् । बन्धुभिः सह भुञ्जीत यथाविभवसारतः ॥ एवं यः कुरुते मर्त्यो नैव दुःखमवाप्नुयात् । आयुरारोग्यमैश्वर्यं मातापित्रोः शिशोरपि ॥ सर्वदुःखनिवृत्त्यर्थं पुत्रपौत्रप्रवर्धनम् । सर्वान् कामानवाप्नोति शान्तिं कुर्वन् द्विजोत्तमः ॥ इति ॥

अथ प्रयोगः ॥ शिशुजननाद्द्वादशेऽन्यस्मिन् वा शुभेह्नि गोप्रसवशान्तिं कृत्वा कर्ता सपत्नीक आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्याऽस्य शिशोर्वैधृतिजननसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहमखपूर्वकं वैधृतिजननशान्तिं करिष्ये, इति सङ्कल्प्य (व्यतीपातादौ तु तत्सङ्कल्पः संक्रान्तिदिने वैधृतौ शान्तिद्वयं पृथक्कार्यम् । यदा तु व्यतीपाते सङ्क्रमस्तदा तन्त्रेण शान्तिः । द्विगुणो वा प्रधानहोमः ॥) गणेशपूजनादि ऋत्विग्वरणान्तं कुर्यात् ॥ पुण्याहे ‘ आदित्यादिनवग्रहदेवताः प्रीयन्ताम् ’ वैधृतिशान्तौ—‘ रुद्रसूर्यसोमाः प्रीयन्ताम् ’ ( व्यतीपातसङ्क्रमणयोः शान्तौ — ‘ सूर्याऽग्निरुद्राः प्रीयन्ताम् ’ इति विशेषः ) ॥ अथाऽऽचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य ग्रहमखपूर्वकवैधृति ( व्यतीपातसङ्क्रमणयोः ) शान्तिहोमं करिष्ये, वैधृतिशान्तिहोमः कर्म० इत्यादि ग्रहकीर्तनान्ते वरदो नामाऽग्निः वैधृतौ — रुद्रसूर्यसोमा देवताः, ( व्यतीपात-

सङ्क्रमणयोः — सूर्योऽग्निरुद्रा देवताः ) चरुर्हविः, उपहोमे — वैधृतौ- रुद्रं त्र्यम्बकमन्त्रेण समिदाज्यचरुद्रव्यैः अष्टोत्तरसहस्रा-ऽष्टोत्तरशताष्टाविंशत्यन्यतमसंख्याकाहुतिभिः सूर्यं सोमञ्च 'उदु त्यं०, आ प्यायस्व०' इति मन्त्राभ्यां तैरेव द्रव्यैः प्रतिद्रव्य-मष्टाविंशतिसङ्ख्याकाहुतिभिः । ( व्यतीपातसङ्क्रमणयोः -- सूर्यं 'उदु त्यं०' इति मन्त्रेण समिदाज्यचरुद्रव्यैः प्रतिद्रव्यं अष्टोत्तर-सहस्राऽष्टोत्तरशताऽष्टाविंशत्यन्यतमसङ्ख्याकाहुतिभिः अग्निं रुद्रञ्च 'अग्निं दूतं० त्र्यम्बकं०' इति मंत्राभ्यां तैरव द्रव्यैः प्रतिद्रव्य-मष्टाविंशतिसंख्याकाहुतिभिः यक्ष्ये । ) द्वयोरपि -- त्र्यम्बकमन्त्रेण मृत्युञ्जयं आज्याक्ततिलैरष्टोत्तरसहस्राऽष्टोत्तरशताऽष्टा-विंशत्यन्यमसंख्याकाहुतिभिः । अर्यमादयः स्विष्टकृतः इत्यादि सङ्कल्प्याऽन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निं ग्रहानावाह्य तदुत्तरतः पञ्चद्रोणव्रीहिभिः सार्धं द्रोणद्वयतण्डुलैः सपादद्रोणतिलैश्चाऽन्तरान्तरितैः पीठं विरच्यष्टदलोपरि कलशत्रयं 'मही द्यौः' इति संस्थाप्य तत्र सप्तमृत्तिकाः सर्वौषधीः पञ्चपल्लवान्पञ्चगव्यमष्टगन्धं पञ्चरत्नानि च निक्षिप्य प्रत्येकं वस्त्र-युग्मेनावेष्ट्य वरुणं सम्पूज्य वैधृतौ -- मध्यदक्षिणोत्तरक्रमेण स्वर्णनिर्मिता रुद्रादित्यसोमप्रतिमाः संस्थाप्य, मध्ये—त्र्यम्बक-मन्त्रेण रुद्रं, दक्षिणतः—'उदु त्यं जातवेदसं०' इति सूर्यं, उत्तरतः—'आ प्यायस्व०' इति सोमं ( व्यतीपातसङ्क्रमणयोः -- स्वर्णप्रतिमायां—मध्ये 'उदु त्यं०' इति सूर्यं, दक्षिणतः — 'अग्निं दूतं०' इत्यग्निं, उत्तरतः—'त्र्यम्बकं यजामहे०' इति रुद्रञ्चावाह्य ) व्याहृतिपूर्वकं सम्पूजयेत् ॥ अथर्त्विजश्चतुर्दिक्षूपविश्य कुम्भमन्वारभ्य — अष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिं वा 'त्र्यबकं' इति मन्त्रं, सूर्यो देवीमुषसं रोचमानामर्यः । न योषामभ्येति पश्चात् ॥ यत्रा नरो देवयन्तो युगानि । वितन्वते प्रति भद्राय भद्रम् ॥ १ ॥ भद्रा अश्वा हरितः सूर्यस्य । चित्रा एतग्वा अनुमाद्यासः ॥ नमस्यन्तो दिव आ पृष्ठमस्थुः । परि

द्यावापृथिवी यन्ति सद्यः ॥ २ ॥ तत्सूर्यस्य देवत्वं तन्महित्वम् । मध्या कर्तोर्विततꣳसञ्जभार । यदेदयुक्त हरितः सधस्थात् । आद्रात्रीवासस्तनुतेऽसिमस्मै ॥ ३ ॥ तन्मित्रस्य वरुणस्याऽभिचक्षे । सूर्यो रूपं कृणुते द्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्य पाजः । कृष्णमन्यद्धरितः सम्भरन्ति ॥ ४ ॥ अद्या देवा उदिता सूर्यस्य । निरꣳहसः पिपृतान्निरवद्यात् । तन्नो मित्रो वरुणो मामहन्ताम् । अदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५ ॥ दिवो रुक्म उरुचक्षा उदेति । दूरे अर्थस्तरणिर्भ्राजमानः ॥ नूनञ्जनाः सूर्येण प्रसूताः । आयन्नर्थानि कृणवन्नपाꣳसि ॥ ६ ॥ इति सूर्यसूक्तं, सोमो धेनुꣳसोमो अर्वन्तमाशुम् । सोमो वीरं कर्मण्यं ददातु ॥ सादन्यं विदथ्यꣳ सभेयम् । पितु श्रवणं यो ददाशदस्मै ॥ १ ॥ अषाढं युत्सु पृतनासु पप्रिम् । सुवर्षामप्स्वां वृजनस्य गोपाम् ॥ भरेषुजाꣳ सुक्षितिꣳ सुश्रवसम् । जयन्तन्त्वामनुमदेम सोम ॥ २ ॥ त्वꣳ सोम क्रतुभिः सुक्रतुर्भूः । त्वं दक्षैः सुदक्षो विश्ववेदाः ॥ त्वं वृषा वृषत्वेभिर्महित्वा । द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥ ३ ॥ या ते धामानि हविषा यजन्ति । ता ते विश्वा परिभूरस्तु यज्ञम् ॥ गयस्फानः प्रतरणः सुवीरः । अवीरहा प्रचरा सोम दुर्यान् ॥ ४ ॥ त्वमिमा ओषधीः सोम विश्वाः । त्वमपो अजनयस्त्वङ्गाः ॥ त्वमाततन्थोर्वन्तरिक्षम् । त्वं ज्योतिषा वितमो ववर्थ ॥ ५ ॥ या ते धामानि दिवि या पृथिव्याम् । या पर्वतेष्वोषधिष्वप्सु ॥ तेभिर्नो विश्वैः सुमना अहेडन् । राजन्सोम प्रति हव्या गृभाय ॥ ६ ॥ इति सोमसूक्तं, 'ऋचां प्राची०, अग्नेर्मन्वे०, पवमानः सुवर्जनः०' इत्यनुवाकत्रयं, पुरुषसूक्तं, रुद्रसूक्तञ्च जपेयुः । अथ चरुनिर्वापादिग्रहहोमं कृत्वा, रुद्रादित्यसोमेभ्यः ( व्यतीपात-सङ्क्रमणयोः सूर्याग्निरुद्रेभ्यः ) प्रत्येकं पक्कं जुहुयात् ॥ ततः स्विष्टकृतमवदायान्तःपरिधौ निधाय अन्वाधानोक्तक्रमेणो-पहोमाद्युत्तरपरिषेकात्प्राक् कृत्वा ग्रहेभ्यः प्रधानदेवताभ्यश्च बलिं दत्वा होमशेषं समापयेत् ॥ ततः पत्नीशिशुसहितं यजमानं

कलशजलेन ' आपो हि ष्ठा० ' इति तिसृभिः ' हिरण्यवर्णा० ' इति चतसृभिः ' अक्षीभ्यां० ' इति यक्ष्मसूक्तेन पावमानीभिर्ग्रहमन्त्रैः प्रधानदेवतामन्त्रैः ' सुरास्त्वामभिषिञ्चन्तु० ' इति पौराणमन्त्रैश्चाभिषिञ्चेत् ॥ अभिषेकाप्लुतवस्त्रं आचार्याय दद्यात् ॥ अथ सपत्नीको यजमानः आज्यमवेक्ष्य सदक्षिणं ब्राह्मणाय दत्वा आचार्यं सम्पूज्य तस्मै वस्त्रयुगं गां हेमाङ्गुलीयकं यथाशक्ति सुवर्णं सपीठं कलशं च दत्वाऽन्येभ्यश्च ऋत्विग्भ्यो भूयसीं दत्वा मिष्टान्नेन शतं ब्राह्मणान्संभोज्य आशिषो गृह्णीयात् ॥

दिनक्षय-व्यतीपातादिजनने, जपादिविधिः ॥ अथातः सम्प्रवक्ष्यामि जन्मकाले विशेषतः। गण्डान्तानाञ्च नामानि महादोषकराणि च ॥ दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ। शूले गण्डे च परिघे वज्रे च यमघण्टके ॥ कालगण्डे मृत्युयोगे दग्धयोगे सुदारुणे। तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥ अतिदोषकरी प्रोक्ता तत्र पापयुते सति। विचार्य तत्र दैवज्ञं शान्तिं कुर्याद्यथाविधि ॥ यजनं देवतानाञ्च ग्रहाणाञ्चैव पूजनम्। दीपं शिवालये भक्त्या घृतेन परिदापयेत् ॥ अभिषेकं शङ्कराय चाश्वत्थस्य प्रदक्षिणम्। आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनम् ॥ गुरुदैवतविप्राणां पूजनं गोत्रवर्धनम्। पुष्ट्यायुस्तुष्टिशान्त्यर्थ-मभीष्टफलसिद्धये ॥ सर्वारिष्टविनाशाय शान्तियज्ञं समारभेत्। शिवाय विधिवद्भक्त्या दीपदानं करोति यः ॥ अखण्डं गोघृतेनैव स वै मृत्युञ्जयेन्नरः ॥ विष्णुमूर्तिं महापुण्यमश्वत्थं श्रीकरं सदा ॥ प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युञ्जयं जपेत्। सर्वसम्पत्समृध्यर्थं नित्यं कल्याणवृद्धये ॥ अभीष्टफलसिध्यर्थं कुर्याद्ब्राह्मणभोजनम्। अभिषेकं शिवं शान्तिं कृत्वा चैव नरोत्तमः ॥ अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः। गाणपत्यं पुरुषसूक्तं सौरं मृत्युञ्जयं शुभम् ॥ रुद्रप्रश्नं शान्तिपाठं जाप्य मृत्युञ्जयी भवेत्। मूले वा सर्पगण्डे वा कुर्यादेतानि यत्नतः ॥ आयुर्वृद्धिफलार्थाय गण्डदोषप्रशान्तये ॥ इति ॥

दिनक्षय-व्यतीपात-व्याघात-विष्टि-वैधृति-शूल-गण्ड-परिघ-वज्र-यमघण्टा-कालगण्ड-मृत्युयोग-दग्धयोगादिषु जनने तत्तदुक्तशान्तिं कृत्वा, शिवपूजा-रुद्राभिषेक-शिवालये-घृतदीपप्रदान-विष्णुमूर्तिप्रदक्षिण-अश्वत्थप्रदक्षिण-मृत्युञ्जयजप-गणसूक्त-पुरुषसूक्त-सूर्यसूक्त-नमक-चमक-पञ्चशान्ति-पठनानि कुर्यात् ॥

## ॥ ग्रहणजननशान्तिविधिः ॥

( बो. गृ. शे. सू. ६.८ ) अथातो ग्रहणजननशान्तिं व्याख्यास्यामः— ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते । व्याधिपीडा भवेत्स्त्रीणामादौ तु ऋतुदर्शनात् ॥ इत्थं सञ्जायते यस्तु तस्य मृत्युर्न संशयः । व्याधिपीडा च दारिद्र्यं शोकश्च सततं भवेत् ॥ शान्तिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया । यस्मिन्नृक्षे विशेषेण ग्रहणं सम्प्रजायते ॥ तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् । यथाशक्त्य-नुरूपेण वित्तशाठ्यं न कारयेत् ॥ सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः । चन्द्रं चन्द्रग्रहे धीमान् रजतेन विशेषतः ॥ राहुरूपं प्रकुर्वीत सीसकेन विशेषतः । शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् ॥ तस्योपरि न्यसेद्धीमान्नववस्त्रं सुशोभनम् । त्रयाणाञ्चैव रूपाणां स्थापनं तत्र कारयेत् ॥ रक्ताक्षता रक्तगन्धा रक्तपुष्पाम्बराणि च । सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरञ्च यत् ॥ राहवे चैव दातव्यं कृष्णपुष्पाम्बराणि च ॥ दद्यान्नक्षत्रनाथाय श्वेतगन्धानुलेपनम् ॥ सूर्यं सम्पूजयेद्धीमानासत्येन च मन्त्रतः । चन्द्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः ॥ दूर्वाभिर्जुहुयाद्धीमान् राहोः सम्प्रीणनाय च । समिद्भिर्ब्रह्मवृक्षोत्थैर्भेशाय ( नक्षत्राधिपतये ) जुहुयाद् बुधः ॥ आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः । पञ्चगव्यैः पञ्चरत्नैः पञ्चत्वक्पञ्चपल्लवैः ॥ जलैरोषधिकल्कैश्च सहितैः कलशोदकैः । अभिषेकं प्रकुर्वीत यजमाने प्रयत्नतः ॥ आपो हिष्ठादिभिस्त्रिभिः हिरण्येति चतसृभिः । पवमानानुवाकेन तथा वरुणसूक्तकैः ॥ इमम्मे

गङ्गे पितरस्तत्त्वा यामीति मन्त्रकैः । अभिषेके निवृत्ते तु यजमानः समाहितः ॥ आचार्यं पूजयेत्पश्चात्सुशान्तो विजितेन्द्रियः । तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयम् ॥ दक्षिणाभिश्च संयुक्तं यथाशक्त्यनुसारतः । ब्राह्मणान्भोजयित्वा तु प्रणिपत्य क्षमापयेत् ॥ तेभ्योऽपि दक्षिणां दद्याद्यजमानः समाहितः । अनेन विधिना शान्तिं कृत्वा सम्यग्विशेषतः ॥ अकालमृत्युं शोकञ्च व्याधिपीडां न चाऽऽप्नुयात् । सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः ॥ इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् ॥ इत्याह भगवान् बोधायनः ॥

अथ प्रयोगः ॥ सूर्यग्रहणे प्रसूतौ तत्कालीननक्षत्रदेवतायाः सूर्यस्य च स्वर्णप्रतिमे कृत्वा, सीसेन राहुप्रतिमां कुर्यात् । चन्द्रग्रहणे तत्कालीननक्षत्रदेवतायाः स्वर्णप्रतिमां, राजतं चन्द्रबिम्बं, सीसेन राहुप्रतिमाञ्च कुर्यात् ॥ ॥ आशौचान्ते गोमुखप्रसवशान्तिं कृत्वा, 'ममाऽस्य शिशोः सूर्य ( चन्द्र ) ग्रहणकालजननसूचिताऽकालमृत्यु-शोक-दारिद्र्य-व्याधिपीडादि सर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्य ( चन्द्र ) ग्रहणजननशान्तिं करिष्ये ' इति सङ्कल्प्य, गणेशपूजनाद्यृत्विग्वरणान्तं कुर्यात् ॥ ( ग्रहयज्ञः कृताकृतः ) पुण्याहे–' सूर्य ( चन्द्र ) राहु-नक्षत्रदेवताः प्रीयन्ताम् ' इति विशेषः । अग्निं प्रतिष्ठाप्य, सूर्य-( चन्द्र ) ग्रहणजननशान्तिहोमं करिष्ये० वरदो नामाऽग्निः, सूर्यो ( चन्द्रो ) राहुः ( कृत्तिकानक्षत्रे ) अग्निश्च देवताः, ( रोहिण्यादिषु यथायथं देवतानाम ऊह्यम् ) चरुर्हविः, उपहोमे–आसत्येनेति मन्त्रेणाऽर्कसमिच्चर्वाज्यतिलद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसङ्ख्या-काहुतिभिः, कया नश्चित्र इति मन्त्रेण तैरेव द्रव्यैरष्टोत्तरशतसङ्ख्याकाहुतिभिः, अग्निर्नः पातु० यस्य भान्ति० इति मन्त्राभ्यां तैरेव द्रव्यैः प्रतिमन्त्रं प्रतिद्रव्यं चतुःपञ्चाशदावृत्त्याऽष्टोत्तरशतसङ्ख्याकाहुतिभिः, अग्निः स्विष्टकृत् इत्याद्यन्वाधाय प्रणीता-प्रणयनान्तेऽग्रेणाग्निं गोमयेनोपलिप्ते शुचौ देशेऽहतं वासः प्राग्दशं प्रसार्य वस्त्रोपरि विधिवत्स्थंडिलं कृत्वा कलशत्रयं प्रतिष्ठाप्य

मध्ये सूर्यप्रतिमां दाक्षिणतो राहुप्रतिमामुत्तरतो नक्षत्रदेवताप्रतिमाञ्च विन्यस्य, मध्ये 'आ सत्येन०' इति सूर्यमावाह्य रक्तवर्णैर्वस्त्रगन्धाक्षतपुष्पैर्धूपदीपादिभिश्च पूजयेत्। तद्दक्षिणे–'कया नश्चित्र०' इति राहुमावाह्य कृष्णवर्णैर्वस्त्रगन्धादिभिः पूजयेत् ॥ सूर्यस्योत्तरतः—'अग्निर्नः पातु०' इति मन्त्रद्वयेन नक्षत्रदेवतामावाह्य श्वेतगन्धादिभिः पूजयेत् ॥ ( चन्द्रग्रहणे तु–मध्ये 'आ प्यायस्व०' इति मन्त्रेण चन्द्रमावाह्य श्वेतगन्धादिभिः पूजनमिति विशेषः, राहुनक्षत्रयोः पूजनं पूर्ववत् ) निर्वापे सूर्याय ( चन्द्राय ) राहवे अग्नये तण्डुलनिर्वापादि पक्वहोमान्तं कृत्वा स्विष्टकृतमवदायान्तःपरिधौ निधाय 'आ सत्येन०' इति मन्त्रेणाऽर्कसमिदाज्यचरुतिलद्रव्यैरष्टोत्तरशताहुतीर्हुत्वा, "कया नश्चित्रः०" इति मन्त्रेण दूर्वासमिच्चर्वाज्यतिलद्रव्यैरष्टोत्तर-शताहुतीर्हुत्वा, 'अग्निर्नः पातु० यस्य भान्ति०' इति मन्त्राभ्यां पलाशसमिच्चर्वाज्यतिलद्रव्यैः प्रतिमन्त्रं चतुःपञ्चाशदा-वृत्त्याऽष्टोत्तरशताहुतीर्जुहुयात् ॥ ( चन्द्रग्रहणे चन्द्राय 'आ प्यायस्व०' इति मन्त्रेण पलाशसमिच्चर्वाज्यतिलैस्तथैव जुहुयादिति विशेषः ) ततः स्विष्टकृदादि होमशेषं समाप्य पञ्चगव्यपञ्चत्वक्पञ्चरत्नपञ्चपल्लवैरोषधिकल्कैश्च मिश्रितकलशोदकैरभिषेकः—'आपो हि ष्ठा०' इत्यादिभिर्वरुणसूक्तेन 'इमम्मे गङ्गे०' इत्येकया 'पितरः पितामहाः' इत्येतेन 'तत्त्वा यामि' इत्यृचा ग्रहमन्त्रैश्च॥ अभिषेकान्ते आचार्यं सम्पूज्य तस्मै ग्रहपीठं प्रतिमात्रयं दक्षिणाञ्च दद्यात् ॥ अन्येभ्य ऋत्विग्भ्यश्च दक्षिणां दत्वा ब्राह्मणभोजनान्ते आशिषो गृह्णीयात् ॥

## ॥ भद्राजननशान्तिः ॥

उक्तकाले गोप्रसवं कृत्वा देशकालौ सङ्कीर्त्य अस्य शिशोर्भद्राजननसूचितसकलारिष्टपरिहारद्वारा० ग्रहमखपूर्वक-

भद्राजननशान्तिं करिष्ये, इति सङ्कल्प्य गणेशपूजनादि कुर्यात् ॥ पुण्याहवाचने 'भद्रासूर्यरुद्रगणपतिऋषभाः प्रीयन्ताम्' इति विशेषः ॥ स्थण्डिलोल्लिखनाद्यन्वाधाने ग्रहानन्तरं वरदो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे-भद्रा अग्ने० इत्यादि पञ्चमन्त्रैः भद्रां सूर्यं रुद्रं गणपतिं ऋषभं एताः प्रधानदेवताः समिच्चर्वाज्यतिलद्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरसहस्राऽष्टोत्तरशताष्टाविंशत्यन्यतमसंख्याकाहुतिभिः अर्यमादयः स्विष्टकृतः इत्यादि सङ्कल्प्याऽन्वाधाय प्रणीताप्रणयनान्ते पूर्वभागे ग्रहावाहनानन्तरं ईशान्यभागे 'मही द्यौः' इत्यादि मन्त्रावृत्त्या मध्ये एकं, पूर्वादिदिक्षु चतुरः इत्येवं पञ्च कुंभान्संस्थाप्य वरुणपूजां कृत्वा प्रतिमासु देवता आवाहयेत्। मध्ये-"भद्रा अग्नेर्वध्र्यश्वस्य सन्दृशो वामी प्रणीतिः सुरणा उपेतयः। यदीं सुमित्रा विशो अग्र इन्धते घृतेनाहुतो जरते दविद्युतत्" इति भद्रां, पूर्वे--'आ सत्येन०' इति सूर्यं, दक्षिणे--'कद्रुद्राय०' इति रुद्रं, पश्चिमे--'गणानान्त्वा०' इति गणपतिं, उत्तरे--'तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि। तन्नो नन्दिः प्रचोदयात्' इति ऋषभञ्चावाह्य सम्पूज्य पुष्पमालादिभिः कलशान्भूषयित्वा, निर्वापाद्यग्निमुखान्ते ग्रहेभ्यः सवित्रे च पक्वं हुत्वा स्विष्टकृदवदानाद्यन्वाधानोक्तप्रकारेणोपहोमं कृत्वा स्विष्टकृदादिपूर्णाहुत्यन्ते बलिं दत्वोत्तरपरिषेकादि होमशेषं समापयेत् ॥ अथ धृतनववस्त्रं पत्नीशिशुसहितं यजमानं 'आपो हि ष्ठा० समुद्रज्येष्ठा०' इत्यादि वारुणैर्ग्रहादिमन्त्रैश्चाभिषिञ्चेत् ॥ ततो यजमानो धृतनवशुक्लाम्बरोऽभिषेकवस्त्रमाचार्याय दत्वा आचार्यं सम्पूज्य गां सपीठं कलशं निरीक्षितमाज्यञ्च दत्वा ब्राह्मणभोजनादि कर्मशेषं समापयेत् ॥

## ॥ अधोमुखजननशान्तिः ॥

जन्मतो द्वादशाहे जन्मनक्षत्रेऽन्यस्मिन्वा शुभे दिने—कर्ता गोमुखप्रसवं कृत्वा अस्य शिशोरधोमुखजननसूचित-

सर्वारिष्टपरिहारद्वारा० सग्रहमखामधोमुखजननशान्तिं करिष्ये, इति संकल्प्य ऋत्विग्वरणान्तं कुर्यात् ॥ पुण्याहे—' रुद्रः प्रीयताम् ' इति विशेषः ॥ गृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्यास्य शिशोः० ग्रहमखपूर्वकाधोमुखजननशान्तिहोमं करिष्ये इति संकल्प्य ग्रहान्वाधानान्ते वरदो नामाऽग्निः, रुद्रो देवता, चरुर्हविः, उपहोमे — त्र्यंबकमन्त्रेण समिदाज्यतिलचरुद्रव्यैः प्रतिद्रव्यं अष्टोत्तरसहस्राऽष्टोत्तरशताऽष्टाविंशत्यन्यतमसङ्ख्याकाहुतिभिः अर्यमादयः स्विष्टकृतः इत्याद्यन्वाधाय प्रणीताप्रणयनान्तं कृत्वाऽग्नेः पूर्वभागे ग्रहानावाह्य ईशानदिग्भागे स्थण्डिलं कृत्वा ' मही द्यौः ' इत्यादिस्थापितकलशे पूर्णपात्रे सुवर्णप्रतिमायां ' त्र्यम्बकं० ' इति मन्त्रेण रुद्रमावाह्य सम्पूज्य कुम्भमन्वारभ्य रुद्रैकादशिनीं जपेत् ॥ ततो ' रुद्राय जुष्टं० ' इति चरुनिर्वापादि अग्निमुखान्ते ग्रहदेवताभ्यः रुद्राय च पक्वं हुत्वा अन्वाधानोक्तक्रमेणोपहोमञ्च कृत्वा स्विष्टकृदादि होमशेषं समापयेत् ॥ अथ माता बालकं कार्पासराशौ निधाय पराङ्मुखी भवेत् । ततो विप्रास्तं गृहीत्वा स्वाभिमुख्यै मात्रे दद्युः तत्र मन्त्रः —' बालेऽस्माभिरयं बालो युष्मद्दत्तः प्रगृह्य च । दीर्घायुरपि बालोऽयं पूर्ववत्कुलवर्धनः ' इति ॥ ततो यजमानं पत्नी शिशुसहितं कलशोदकेन ' आपो हि ष्ठा० समुद्रज्येष्ठाः० ' इत्यादिभिरभिषिञ्चेत् ॥ तत आचार्यादिभ्यः गां ग्रहपीठसहितं कलशं यथाशक्ति दक्षिणाञ्च दत्वा यावच्छक्ति ब्राह्मणान्भोजयित्वा तेभ्यो भूयसीं दत्वा अशिषः प्रतिगृह्णीयात् ॥ ततः कर्मेश्वरार्पणं कुर्यात् ॥ ॥

## ॥ एकनक्षत्रजननशान्तिविधिः ॥

( बो. गृ. शे. सू. १·९ ) अथैकनक्षत्रजननशान्तिं व्याख्यास्यामः — एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः । प्रसूतिश्च तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥ तद्दोषनाशाय तदा प्रशस्तां शान्तिञ्च कुर्यादभिषेचनञ्च । सम्पूज्य ऋक्षप्रतिमां तदग्रे दानञ्च

कुर्याद्विभवानुरूपम् ॥ तत्र शान्तिं प्रवक्ष्यामि सर्वाचार्यमतेन तु । शुभर्क्षे शुभवारे च चन्द्रताराबलान्विते ॥ रिक्ताविष्टिविवर्जे तु प्रारभेद्दिवसे सुधीः । आचार्यं वरयेत्पूर्वं चतुरोऽथ द्विजोत्तमान् ॥ पुण्याहं वाचयित्वा तु शान्तिकर्म समाचरेत् । आग्नेयीशान-दिग्भागे नक्षत्रप्रतिमां ततः ॥ तन्नक्षत्रोक्तमन्त्रेण चाऽर्चयेत् कलशोपरि । रक्तवस्त्रेण सञ्छाद्य वस्त्रयुग्मेन वेष्टयेत् ॥ स्वशाखोक्तेन मार्गेण कुर्यादग्निमुखं ततः । अनेनैव तु मन्त्रेण जुहुयादष्टोत्तरं शतम् ॥ प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तान्तमेव च । अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः ॥ वस्त्रालङ्कारगोदानैराचार्यं पूजयेत्पुनः । ऋत्विग्भ्यो दक्षिणां दत्वा माषत्रयसुवर्णकम् ॥ देवता-प्रतिमादानं धान्यवस्त्रादिभिः सह । यानशय्यासनादींश्च दद्यात्तद्दोषशान्तये ॥ भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः ॥ इत्याह भगवान् बोधायनः ॥ ॥ पितृनक्षत्रे मातृनक्षत्रे वा कन्यायाः पुत्रस्य वोत्पत्तौ गोमुखप्रसवं कृत्वा शान्तिः कार्या । सोदर भ्रातृभगिन्योर्नक्षत्रे भ्रातृभगिन्या वोत्पत्तौ गोप्रसवमकृत्वा शान्तिं कुर्यात् ॥

अथ प्रयोगः ॥ जनकनक्षत्रोत्पत्तौ उक्तसमये गोमुखप्रसवं कृत्वा एकोदरनक्षत्रोत्पत्तौ तमकृत्वा देशकालौ सङ्कीर्त्य अस्य शिशोः पित्रैकनक्षत्रोत्पत्तिसूचित सर्वारिष्टपरिहारद्वारा० श्रीपरमेश्वरप्रीत्यर्थं पित्रैकनक्षत्रजननशान्तिं करिष्ये, इत्यादि यथा-सम्भवं सङ्कल्प्य गणपतिं सम्पूज्य 'अमुकनक्षत्रदेवताः प्रीयन्ताम्' इति पुण्याहं वाचयित्वाऽऽचार्यं चतुर ऋत्विजश्च वरयेत् ॥ अग्निं प्रतिष्ठाप्य अस्य शिशोः पित्रैकनक्षत्रजननशान्तिहोमं करिष्ये, वरदो नामाग्निः, कृत्तिकानक्षत्रे–अग्निर्देवता, ( रोहिण्यादिषु — यथायथं देवतानाम ऊह्यम् ) चरुर्हविः, अग्निः स्विष्टकृत् इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वा । ऐशान्यां 'मही द्यौः०' इत्यादिना कलशं प्रतिष्ठाप्य रक्तवस्त्रेणाऽऽच्छाद्य वरुणपूजान्ते पूर्णपात्रे नक्षत्रदेवताप्रतिमायां 'अग्निर्नः पातु० यस्य भान्ति०' इति द्वाभ्या मग्निमावाह्य षोडशोपचारैः सम्पूजयेत् ॥ अथाऽग्नये जुष्टं निर्वपामि, इत्याद्यग्निमुखान्तं कृत्वा 'अग्निर्नः पातु० यस्य भान्ति' इति

मन्त्राभ्यां पक्कं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय नक्षत्रदेवतामन्त्राभ्यां समिच्चर्वाज्यद्रव्यैः प्रतिद्रव्यं प्रतिमन्त्रं चतुःपञ्चाशदाहुतीर्जुहुयात् ॥ स्विष्टकृदादि होमशेषं समाप्याचार्यः कलशोदकेन ययोरेकनक्षत्रजन्म तयोरभिषेकं कुर्यात् ॥ ततो यजमान आचार्याय वस्त्रमलङ्करणं गाश्च दद्यात् ॥ ज्योतिर्निबन्धोक्तया स्वर्णरूप्यमयौ हरिहरौ सम्पूज्य तौ वा दद्यात् —" विविधस्यास्य विश्वस्य पितरौ विश्वतो मुखौ । प्रीयेतां मूर्तिदानेन देवौ हरिहरावुभौ " इति ॥ माषत्रयपरिमितं सुवर्णं ऋत्विग्भ्यो दत्वा वस्त्रप्रतिमादिसहितं कलशमाचार्याय धान्यवस्त्रयानशय्यासनादीनि ब्राह्मणेभ्यो दत्वा तैः सहाऽऽचार्यं ऋत्विजश्च भोजयित्वा सम्पूर्णतां वाचयित्वा तेभ्यः शुभ-आशिषः प्रतिगृह्य कर्मेश्वरार्पणं कुर्यात् ॥ ॥

## ॥ नक्षत्रगण्डान्तजननशान्तिविधिः ॥

( बौ. गृ. शे. सू. ६·१० ) अथातो नक्षत्रगण्डान्तविधिं व्याख्यास्यामः —अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः । रेवतीसर्पशाक्रान्ते मासाश्च ऋतुसायकाः ॥ अश्विनीमघमूलादौ नाडिकाद्वितयं तथा । रेवतीसर्पशाक्रान्ते नाडिकाद्वितयं तथा ॥ अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता । पूषादिशाक्रपश्चार्धे जननी बाध्यते शिशोः ॥ पितृहा तु दिवाजातो रात्रिजातस्तु मातृहा । आतमधक्रसन्ध्ययोर्जातो नास्ति गण्डो निरामयः ॥ सर्वेषां गण्डजातानां परित्यागो विधीयते । वर्जयेद्दर्शनं तावत्तच्च षाण्मासिकं भवेत् ॥ गण्डशान्तिं प्रवक्ष्यामि सोममन्त्रेण भक्तिमान् । कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवम् ॥ अष्टभिश्च चतुर्भिर्वा द्वाभ्यां वा शोभनं तथा । तन्मध्ये पायसं शङ्खे नवनीतेन पूरिते ॥ राजतं चन्द्रमर्चेत सितपुष्पसहस्रकैः । दैवज्ञः क्षौमवासाश्च शुक्लमाल्याम्बरार्चितः ॥ सोमोऽहमिति सञ्चिन्त्य पूजां कुर्यादतन्द्रितः । जपेत्साहस्रकं मन्त्रं श्रद्दधानः समाहितः ॥ आप्या-

यस्येति मन्त्रेण पूजां कुर्यात्समाहितः। दद्याद्वै दक्षिणामिष्टां गण्डदोषप्रशान्तये ॥ शुक्लं वागीश्वरञ्चैव ताम्रपात्रसमन्वितम्। गण्डदोषोपशान्त्यर्थं दद्याद्वेदविदे शुचिः ॥ इत्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ शिशुजननाद्द्वादशेऽह्नि आदौ गोमुखप्रसवं कृत्वा पत्नीशिशुभ्यां सह कर्ता उपविश्य देशकालौ सङ्कीर्त्य ममास्यशिशो रेवत्यश्विनीसन्ध्यात्मकगण्डान्तजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं नक्षत्रगण्डान्तजननशान्तिं करिष्ये, इति सङ्कल्प्य। गणेशपूजनान्ते 'चन्द्रबृहस्पतिसहितनवग्रहदेवताः प्रीयन्ताम्' इति पुण्याहं वाचयित्वाचार्यादिकऋत्विजो वृत्वा आचार्यं चन्दनशुक्लमाल्यैः क्षौमशुक्लवासोभ्याञ्च पूजयेत् ॥ अत्र शान्तौ होमो नोक्तः ॥ स्थण्डिले विधिवदग्निं प्रतिष्ठाप्य 'नक्षत्रगण्डान्तसूचितसर्वारिष्टनिरसनार्थं आदित्यादीनां नवानां ग्रहाणां प्रीत्यर्थं नवग्रहशान्तिहोमं करिष्ये' इति सङ्कल्प्य ग्रहान्वाधानादि प्रणीताप्रणयनान्तेऽग्रेणाग्निमुपलिप्ते देशे ग्रहादीन् प्रतिष्ठाप्य सम्पूज्य, तदुत्तरतः एतदर्थमेव सम्पादितं षोडशपलमष्टपलं चतुःपलं नूतनं कांस्यपात्रं 'आ प्यायस्व०' इति मन्त्रेण निर्माय तस्मिन्पात्रे पायसं पयो वा निनीय तत्र नवनीतपूर्णं शङ्खं पूर्वाग्रं निधाय तस्मिन्नग्न्युत्तारणादिना संशुद्धं राजतं चन्द्रबिम्बं संस्थाप्य 'सोमस्वरूपोहम्' इति भावयित्वा समाहितमनाः 'आ प्यायस्व०' इति मन्त्रेण चन्द्रमावाह्य षोडशोपचारैः पूजयेत् ॥ उपचारे श्वेतं सदशं वस्त्रयुग्मं सहस्रनामभिः श्वेतपुष्पसहस्रं च, दक्षिणादाने मौक्तिकञ्च समर्पणीयम् ॥ पूजान्ते 'आ प्यायस्व०' इति मन्त्रस्य सहस्रं जपः। तदुत्तरतः ताम्रकलशं विधिवत् प्रतिष्ठाप्य तत्र रजतप्रतिमायां 'बृहस्पते अति०' इति मन्त्रेण वागीश्वरमावाह्य सम्पूज्य, तदुत्तरतः उदगपवर्गं चतुरः कलशान्संस्थाप्य तेषु क्रमेण कुङ्कुमचन्दनकुष्ठगोरोचनमिश्रिता अपः पूरयित्वा वरुणमावाह्य पूजयेत् ॥ ततश्चरुनिर्वापादि वरदानान्तं ग्रहहोमं कृत्वा,

आवाहितदेवताः पुनः सम्पूज्याभिषेककाले वरुणकलशोदकैः दिवागण्डान्तजातं बालं पित्रा सह रात्रिगण्डान्तजातं बालं मात्रा सह संध्ययोर्जातमुभाभ्यां सह 'सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम्। शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम्' इति मन्त्रेण चाभिषिञ्चेत्॥ ततः सर्वकलशोदकैरभिषेकः—आपो हि ष्ठा० इत्यादिभिः "समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः। इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिहमामवन्तु॥ या आपो देवी उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयञ्जाः॥ समुद्रार्था याः शुचयः पावकास्ता आपो देवीः०॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता आपो०॥ यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति। वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो०" इत्येतैर्मन्त्रैः 'सुरास्त्वामभिषिञ्चन्तु०' इत्यादिभिश्च॥ अथ सुस्नातः कर्ता श्वेतचन्दनादिभिरलङ्कृत्य ब्राह्मणान्सम्पूज्य साङ्गतासिध्यर्थं कांस्यपात्रस्थितं समौक्तिकं सशङ्खं चन्द्रबिम्बं ताम्रपात्रादिसहितं बृहस्पतिबिंबं सपीठग्रहकलशान् गाश्चाचार्याय दद्यात्॥ ऋत्विग्भ्यो यथाशक्ति दक्षिणां दत्वाऽऽयुर्वृध्यर्थं 'सहस्राक्षेण०' इति मन्त्रमष्टोत्तरशतमष्टोत्तरसहस्रं वा जपित्वा दशावरान्ब्राह्मणान् भोजयित्वाऽऽशिषः प्रतिगृह्य कर्मेश्वरार्पणं कुर्यात्॥

## ॥ तिथिलग्नगण्डान्तशान्तिविधिः ॥

(बो. गृ. शे. सू. १·११) अथातस्तिथिलग्नगण्डान्तशान्तिं व्याख्यास्यामः—अभुक्तेतरजातस्य सूतकान्त्यदिनेऽपि वा। शान्तिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत्॥ तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुरुच्यते। काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति॥ आद्यभागे पितुर्गण्डत्रयाणामभिषेचनम्। इतरत्र शिशोर्मातुरभिषेकश्च कारयेत्॥ उत्तरे तिलपात्रं स्यात्तिष्ये गोदान-

मुच्यते । अजाप्रदानं त्वाष्ट्रे च पूर्वाषाढे च काञ्चनम् ॥ उत्तराचित्रतिष्यासु पूर्वाषाढोद्भवस्य च । कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकारजां बुधः ॥ सुवर्णेन च रौप्येण यथावित्तानुसारतः । नक्षत्राधिपते रूपं कृत्वा वस्त्रद्वयेन च । वरुणस्यार्चनं कार्यं तत्तन्मन्त्रैश्च पूजयेत् ॥ शतौषधानि रत्नानि मृत्त्वक्पल्लवसंयुतान् ॥ पूजान्ते समिदन्नाज्यैर्होमं तिलयवैस्तथा । ततः पूर्णाहुतिं हुत्वा वेदाध्यायिकुटुम्बिने ॥ उत्तराप्रथमे पादे तिलपात्रं तथैव च । तिष्ये तु गां सवत्साञ्च सुशीलाञ्च पयस्विनीम् ॥ अजां चित्रासु वै दद्यात्पूर्वाषाढे तु काञ्चनम् । यवांश्च व्रीहिमाषांश्च तिलमुद्गांश्च दापयेत् ॥ यथावित्तानुसारेण कुर्याद्ब्राह्मणभोजनम् । पितुरायुष्यवृध्यर्थं शान्तिरत्र विधीयते ॥ एवं यः कुरुते सम्यक्छान्तिकर्म समाहितः ॥ न दोषैर्लिप्यते नूनं पद्मपत्रमिवाम्भसा ॥ आयुरारोग्यमैश्वर्यं सम्प्राप्नोति दिने दिने । धनधान्यसमृद्धिश्च पुत्रपौत्रसमृद्धिमान् ॥ इत्याह भगवान् बोधायनः ॥

गर्गः — " पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीद्वयं तथा । गण्डान्तं मृत्युदं जन्म यात्रोद्वाहव्रतादिषु ॥ कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः । गण्डान्तमन्तरालं स्याद्घटिकार्धं मृतिप्रदम् ॥ तिथ्यृक्षगण्डे पितृमातृनाशो लग्ने तु सन्धौ तनयस्य नाशः । सर्वेषु नो जीवति हन्ति बन्धूञ्जीवन्पुनः स्याद्बहुवारणाश्च " ॥

अथ प्रयोगः ॥ तिथिगण्डान्तपूर्वार्धजन्मनि नालच्छेदात्पूर्वं कर्ता तत्कालं स्नात्वा पुत्रमनवलोक्याऽस्य शिशोस्तिथिगण्डान्तपूर्वार्धजन्मसूचितसर्वारिष्टनिरसनद्वारा अनडुद्दानं करिष्ये, इति सङ्कल्प्य ब्राह्मणपूजनपूर्वकमनड्वाहं तन्मूल्यं वा दद्यात् ॥ ततो नालच्छेदनादि कुयात् ॥ सूतकान्ते शुभे दिने -- अस्य शिशोर्गण्डान्तपूर्वार्धजनन० प्रीत्यर्थं सग्रहमखां तिथिगण्डान्तशान्तिं करिष्ये, इति सङ्कल्प्य गणेशपूजनाद्याचार्यवरणान्तं कुर्यात् । पुण्याहे ' आदित्यादिनवग्रहदेवताः प्रीयन्तां, भगः प्रीयताम् ' इति विशेषः ॥ ततः स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य अन्वाधाने — ग्रहकीर्तनान्ते वरदो नामाऽग्निः, भगो देवता, चरुर्हविः, उपहोमे-

भगं 'श्रेष्ठो देवानां० भगो ह दाता०' इति द्वाभ्यां समिच्चर्वाज्यतिलयवद्रव्यैः प्रतिद्रव्यं चतुःपञ्चाशतसङ्ख्याकाहुतिभिर्यक्ष्ये, अर्यमादयः स्विष्टकृतः इत्यादि सङ्कल्प्यान्वाधाय प्रणीताप्रणयनान्तेऽग्रेणाऽग्निं व्रीहिमये स्थण्डिले ग्रहानावाह्य सम्पूज्य, तदुत्तरतः कलशं संस्थाप्य शतौषध्यादि निक्षिप्य पूर्णपात्रे-सुवर्णनिर्मितप्रतिमायां 'श्रेष्ठो देवानां० भगो ह दाता०' इति मन्त्राभ्यां भगमावाह्य पूजयेत् ॥ ततश्चरुनिर्वापादि ग्रहपक्कान्ते भगाय पक्कं हुत्वा स्विष्टकृतमवदायान्तःपरिधि सादयित्वाऽन्वाधानोक्तप्रकारेणोपहोमं कृत्वा स्विष्टकृदादि होमशेषं समापयेत् ॥ आवाहितदेवताः पुनः सम्पूज्य कलशोदकेन—'समुद्रज्येष्ठाः०' इत्यादिभिः पित्रादित्रयाणामभिषेकः। ब्राह्मणान्सम्पूज्य सांगतासिद्ध्ये सपीठकलशदानं कृत्वा यवव्रीहिमाषतिलमुद्गांश्च दद्यात् ॥ यथाशक्ति दक्षिणादानं ब्राह्मणभोजनञ्च कार्यम्। तिथिगण्डोत्तरार्धजनने नानडुद्दानम्। अन्यत्सर्वं पूर्ववत् ॥ लग्नगण्डपूर्वार्धजनने काञ्चनदानम्। उत्तराफल्गुनीतिष्य-चित्रापूर्वाषाढासु पूर्वार्धे जन्मनि क्रमेण —तिलपात्रं, धेनुं, अजां, काञ्चनञ्च नालच्छेदात्पूर्वं दत्वा, शान्तौ — प्रतिमायां तत्तन्नक्षदेवतां सम्पूज्य, तत्तन्मन्त्राभ्यां होमादि कुर्यात्। दक्षिणाकाले यव-व्रीहि-माष-तिल-मुद्गान् दद्यात्। उत्तरार्धे जन्मनि नालच्छेदात्पूर्वं दानाऽभावः। सर्वनक्षत्रगण्डेषु दक्षिणाकाले यव-व्रीहि-माष-तिल-मुद्गदानानि कुर्यात् ॥ अभिषेकाद्यन्यत्सर्वं समानम् ॥

## ॥ सदन्तजननशान्तिविधिः ॥

(बो. गृ. शे. सू. ६. १२) अथातो सदन्तजननशान्तिं व्याख्यास्यामः— दन्तजन्मानि बालानां लक्षणं तन्निबोध मे। उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ॥ दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम। मातरं पितरं वाथ खादेदात्मानमेव वा ॥ तत्र शान्तिं

प्रवक्ष्यामि तन्मे निगदतः शृणु । गजपृष्ठगतं बालं तैस्तथा स्थापयेद्द्विजः ॥ तदभावे तु धर्मज्ञः काञ्चने तु वरासने । सर्वौषधैः सर्वगन्धैर्बीजैः पुष्पैः फलैस्तथा ॥ पञ्चगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव ! स्थालीपाकेन धातारं पूजयेत्तदन्तरम् ॥ सप्ताहश्चात्र कर्तव्यं तथा ब्राह्मणभोजनम् । अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ॥ काञ्चनं रजतं गाश्च भुवश्चात्मानमेव वा । दन्तजन्मानि सामान्ये शृणु स्थानमतः परम् ॥ भद्रासने निवेश्यैनं मूर्ध्नि मूलफलैस्तथा । सर्वौषधैः सर्वबीजैः सर्वगन्धैस्तथैव च ॥ स्नापयेत्पूजयेच्चात्र वह्निं सोमं समीरणम् । पर्वतांश्च तथा ख्यातान्देवदेवञ्च केशवम् ॥ एतेषामेव जुहुयद्घृतमग्नौ यथाविधि । ब्राह्मणानाञ्च दातव्या यथाशक्त्यथ दक्षिणा ॥ ततः स्वलङ्कृतं बालमासने तूपवेशयेत् । पूज्याश्च विधिना नार्यो ब्राह्मणाः सुहृदस्तथा ॥ इति ॥

धर्मसिन्धौ–द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा । यदा दन्ताश्च जायन्ते मासे चैव महद्भयम् ॥ मातरं पितरं वाथ खादेदात्मानमेव च । बालानामष्टमे मासि षष्ठे मासि ततः पुनः ॥ दन्ता यस्य च जायन्ते माता वा म्रियते पिता । बालकः पीड्यते वात्र स्वयमेव न संशयः ॥

अथ प्रयोगः॥ उक्तकाले गोमुखप्रसवं कृत्वा देशकालौ संकीर्त्य अस्य शिशोः सदन्तजननसूचित-प्रथममूर्ध्वदन्तजननसूचित-( द्वितीयादिमासदन्तजनने -- द्वितीयमासदन्तजननसूचितेत्याद्यूहः ) सर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सदन्तजननशान्तिं करिष्ये, इति सङ्कल्प्य गणेशपूजनाद्याचार्यादिऋत्विग्वरणान्तं कुर्यात् ॥ पुण्याहे — 'धाता प्रीयताम्' इति विशेषः ॥ होमदेशोत्तरभागे गजपृष्ठे नौकायां, तदभावे सौवर्णपीठे, शिशुमुपवेश्य पञ्चगव्येन सर्वौषधिसर्वगन्धादियुक्तजलैश्च स्नापयेत् ॥ अन्वाधाने – वरदो नामाग्निः, धाता देवता, चरुर्हविः, अग्निः स्विष्टकृत् इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं धान्यराश्युपरि कलशषट्कं प्रतिष्ठाप्य वरुणपूजान्ते क्रमेण षट्प्रतिमा विन्यस्य धातारं 'धाता ददातु नो रयिं०, धाता प्रजाया०' इति द्वाभ्यां, अग्निं,

सोमं, वायुं, पर्वतान्, केशवञ्च 'अग्निर्मूर्धा० आ प्यायस्व० आ नो नियुद्भिः० पर्वतेभ्यो नमः० तद्विष्णोः०' इति मन्त्रैरावाह्य संपूजयेत्। अथ हविर्निर्वापादि धातृपक्वहोमान्ते—आज्याहुतीरुपजुहोति-अग्निर्मूर्धा० इत्यादिपञ्चभिः ॥ यथालिङ्गं त्यागः ॥ स्विष्टकृत्प्रभृति-सिद्धमा धेनुवरप्रदानात् ॥ शिशुं कलशोदकेनाभिषिच्याचार्याय प्रतिमासहितकलशप्रतिपादनान्तेऽन्येभ्यो ब्राह्मणेभ्यश्च भूयसीं दक्षिणां दत्वा सत्राहं ब्राह्मणान्सम्भोजयेत् ॥ अष्टमेहनि शक्त्यनुसारेण काञ्चनादिदानं तेभ्यः कार्यम् ॥ दिनाष्टकं ब्रह्मचर्यादि व्रतचर्यान्ते परमेश्वरार्पणं कुर्यात् ॥ ॥ षष्ठेऽष्टमे वा मासे दन्तोत्पत्तौ तु तदनुसारिसंकल्पपूर्वकं 'बृहस्पते' इति मन्त्रेण पूजनं दधिमधुघृताक्तानामश्वत्थसमिधामष्टोत्तरशतं तन्मत्रेण होमः इत्यन्यत्र ॥

## ॥ विषनाडीजननशान्तिविधिः ॥

गार्ग्यः — विषनाडीषु सञ्जातः सर्वारिष्टभयप्रदः। पितृमातुलमात्मानं घातयेन्नात्र संशयः ॥ मातुश्च विषशस्त्राग्निः क्रूरे लग्नेऽशकेऽपि वा। तद्दोषपरिहाराय शान्तिकर्म समाचरेत् ॥ पुण्याहं वाचयेदादौ आचार्यं पूजयेत्ततः। रुद्रो यमोऽग्निमृत्यू च देवताः परिकीर्तिताः ॥ सुवर्णेनाऽथवा शक्त्या तत्तल्लक्षणलक्षिताः। प्रतिमां कारयित्वाऽथ आढकव्रीहिभिः स्थले ॥ स्थण्डिलं परिकल्प्याऽथ कुम्भमोषधिसंयुतम्। जलं सम्पूर्य संस्थाप्य मृदादि प्रक्षिपेत्ततः ॥ वस्त्रद्वयेन संवेष्ट्य पञ्चरत्नानि निक्षिपेत्। कुम्भोपरि तु संस्थाप्य चतस्रः प्रतिमास्तथा ॥ तत्तन्मन्त्रैश्च सम्पूज्य गन्धपुष्पोपहारकैः। कद्रुद्रायेति मन्त्रेण रुद्रमावाह्य पूजयेत् ॥ यमाय सोम मन्त्रेण यममावाह्य यत्नतः। अग्निं दूतेति मन्त्रेण परं मृत्यो ततः परम् ॥ एतैश्चतुर्भिर्मन्त्रैश्च क्रमादर्चेज्जपेत् ततः। कुम्भस्य पश्चिमे देशे होमस्थानं प्रकल्पयेत् ॥ स्वगृह्योक्तविधानेन कुर्यादग्निमुखं ततः। उल्लेखनादिपर्यन्तमाज्यभागान्त-

माचरेत् ॥ एतैः पूर्वोदितैर्मन्त्रैः प्रत्येकं जुहुयात्ततः । समिच्चरुघृतद्रव्यैः प्रत्येकं जुहुयात्क्रमात् ॥ ऋत्विग्भिश्च सहाचार्यो हुनेदष्टसहस्रकम् । अष्टोत्तरशतं वाऽथ अष्टाविंशतिमेव वा ॥ ततस्तिलैर्हुनेद्रदेवांस्तत्तन्मन्त्रैः पृथक्पृथक् । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ ततोऽभिषच्चयेद्विद्वानाचार्यः पितृपुत्रयोः । आपोहिष्ठेति सूक्तेन सुत्रामित्येति मन्त्रतः ॥ अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च । समुद्रज्येष्ठा सूक्तेन त्रायन्तामिति मन्त्रतः ॥ सुरास्त्वामभिषिञ्चन्तु मन्त्रैः पौराणिकैः क्रमात् । अभिषेके निवृत्ते तु यजमानः समाहितः ॥ अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् । आचार्यं समलङ्कृत्य वेदाध्यायिकुटुम्बिनम् ॥ वस्त्रालङ्कारगोदानमाचार्याय प्रदापयेत् । देवताप्रतिमादानं धान्यवस्त्रादिभिः सह ॥ रुद्रप्रतिमादानमन्त्रः — प्रीयतां भगवानीशः पिनाकी सर्वतोमुखः । तव मूर्तिप्रदानेन सर्वाभीष्टप्रदो भव ॥ यमप्रतिमादानमन्त्रः — ईषत्पीनो यमः कालो दण्डहस्तः प्रसन्नधीः । रक्तदृङ् नीलकायश्च महिषस्थः शिवं कुरु ॥ अग्निप्रतिमादानमन्त्रः — पिङ्गभ्रूश्मश्रुकेशान्तः साक्षसूत्रकमण्डलुः । सप्तार्चिः शक्तिधारी च मम पापं व्यपोहतु ॥ दंष्ट्राकरालवदनो नीलाञ्जनसमाकृतिः । रक्ताक्षोऽसिगदापाणिर्मृत्युर्मां पातु सर्वदा ॥ दानमेवंविधैर्मन्त्रैर्यथाविधि समाहितः । शान्तिं कुर्याद्विधानेन विषदोषप्रशान्तये ॥ ज्योतिर्निबंधे — तिथीषु नागाद्रिगिरीशवारिधिर्गजाद्रिदिक्पावकदिक्षु भास्कराः । मुनीभसङ्ख्याप्रथमा तिथेः क्रमात्परं विषाख्यं घटिकाचतुष्टयम् ॥ विंशश्चतुर्द्वादश दिक्च शैला बाणाश्च तत्त्वानि यथाक्रमेण । सूर्यादिवारेषु भवन्त्यनन्तरं नाड्यो विषाख्यं घटिकाचतुष्टयम् ॥ गर्गः — विषनाडीषु सञ्जातः सर्वारिष्टभयप्रदः । पितृमातुलमात्मानं घातयेन्नात्र संशयः ॥ मातुश्च विषशस्त्रास्त्रैः क्रूरे लग्नेंशकेऽपि वा ॥

अथ प्रयोगः ॥ कर्ता आशौचान्ते देशकालौ सङ्कीर्त्यास्य शिशोर्विषनाडीजनन-सूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं विषनाडीजननशान्तिं करिष्ये, इति सङ्कल्प्य गणेशपूजनान्ते 'रुद्रयमाऽग्निमृत्यवः प्रीयन्ताम्' इति पुण्याहं वाचयित्वा

ऋत्विजो वृणुयात् ॥ तत आचार्यः स्थण्डिले विधिवदग्निं प्रतिष्ठाप्य अन्वाधाने वरदो नामाऽग्निः, रुद्रो यमोऽग्निर्मृत्युश्च देवताः, चरुर्हविः, उपहोमे–कद्रुद्राय, यमाय सोमं, अग्निं दूतं, परं मृत्यो इति चतुर्भिः समिच्चर्वाज्यतिलैः प्रत्येकं प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिर्यक्ष्ये, अग्निः स्विष्टकृत् इत्यादि सङ्कल्प्याऽन्वाधाय प्रणीताः प्रणीयाऽग्रेणाऽग्निं प्रस्थमितैर्व्रीहिभिः स्थण्डिलं कृत्वा तस्मिन्नुदक्संस्थं कलशचतुष्टयं प्रतिष्ठाप्य पूर्णपात्रेषु सुवर्णनिर्मिता अग्न्युत्तारणादिभिः संस्कृता रुद्रयमाग्निमृत्युप्रतिमा विन्यस्य 'कद्रुद्राय०' इति रुद्रं 'यमाय सोमं०' इति यमं, 'अग्निं दूतं०' इत्यग्निं, 'परं मृत्यो०' इति मृत्युं चावाह्य षोडशोपचारैः पूजयेत् ॥ अथ निर्वापाद्यग्निमुखान्ते 'कद्रुद्राय०' इति रुद्रस्य, 'यमाय सोमं०' इति यमस्य, 'अग्निं दूतं' इत्यग्नेः, 'परं मृत्यो०' इति मृत्योश्च पक्कं हुत्वा स्विष्टकृतमवदायान्तःपरिधि सादयित्वा समिच्चर्वाज्यतिलद्रव्यैः अन्वाधानोक्तक्रमेणोपहोमं कृत्वा — स्विष्टकृदादि रुद्र-यम-आग्नि-मृत्युभ्यश्च बलिं दत्त्वा होमशेषं समापयेत् ॥ आवाहितदेवताः पुनः सम्पूज्य कलशोदकैरभिषेकः–आपो हि ष्ठा० मुञ्चामि त्वा० अक्षीभ्यां० पवमानः सुवर्जनः० समुद्रज्येष्ठाः० इत्यादि सूक्तमन्त्रैः ॥ ततो ब्राह्मणान्सम्पूज्य आचार्याय "प्रीयतां भगवानीशः पिनाकी सर्वतोमुखः । तव मूर्तिप्रदानेन सर्वाभीष्टप्रदो भव ॥ १ ॥ ईषत्पीनो यमः कालो दण्डहस्तः प्रसन्नधीः । रक्तदृङ् नीलकायश्च महिषस्थः शिवं कुरु ॥२॥ पिङ्गभ्रूश्मश्रुकेशान्तः साक्षसूत्रकमण्डलुः । सप्तार्चिः शक्तिधारी च मम पापं व्यपोहतु ॥ ३ ॥ दंष्ट्राकरालवदनो नीलाञ्जनसमाकृतिः । रक्ताक्षोऽसिगदापाणिर्मृत्युर्मां पातु सर्वदा" इत्येतैर्मन्त्रैः प्रतिमासहितकलशदानं गोभूहिरण्यवस्त्रदानं ऋत्विग्भ्यो यथाशक्ति दक्षिणादानं च कृत्वा ब्राह्मणान्भोजयित्वाऽऽशिषो गृह्णीयात् ॥

## ॥ यमलकल्पः ॥

(बो. गृ. शे. सू. ३. १४) पत्नी गावो वा यमलौ विजायेरन् तस्य संस्कारः प्राङ्नामकरणात्कार्यः । ब्राह्मणाननुज्ञाप्य चतुर्णां

क्षीरवृक्षाणां कषायानाहरेयुः प्लक्षन्यग्रोधाश्वत्थोदुम्बराणां चतुर उदकुम्भान्पूरयित्वा चतस्रो ब्रह्मचारिणो हिरण्यमन्तर्धाय स्नापयेयुः शतधारेण वा कृत्वाभिषिञ्चन्ति । अथ भूतबलिं करोति । आचार्यमलङ्कृत्य गोमिथुनं दद्यात् । पुंसो यवमयं गोमूत्रं स्त्रियो " हिरण्यगर्भः समवर्तताग्रे " इत्यष्टभिर्हुत्वा कार्यो मारुतश्चरुर्न तस्य भयं विद्यत इति ।

अथ प्रयोगः । नामकरणात्प्राक् शुभे दिने कर्ता सपत्नीकः शिशुभ्यां सह प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मम भार्याया यमलप्रसूतिसूचितसर्वारिष्टनिरसनद्वारा० यमलजननशान्तिं करिष्ये. इति सङ्कल्प्य । गणेशं सम्पूज्य ' सविता मरुतश्च प्रीयन्ताम् ' इति पुण्याहं वाचयित्वाचार्यं वृत्वा पञ्चप्रस्थपरिमितैर्व्रीहिभिर्यवैर्वा स्थण्डिलं कृत्वा चतुर्दिक्षु कलशचतुष्टयं प्रतिष्ठाप्य तेषु प्लक्षन्यग्रोधाऽश्वत्थोदुम्बराणां क्षीरवृक्षाणां प्रत्येकं कषायं पञ्चगव्येन सह सर्वौषधीश्च निक्षिप्य ' मही द्यौः ' इत्यादि वरुणपूजान्तं कुर्यात् ॥ ततश्चत्वारो ब्रह्मचारिणः शतच्छिद्रकलशेन वारुणकलशोदकैर्हिरण्यमन्तर्धाय शिशुभ्यां सह सपत्नीकं यजमानं स्नापयेयुः— अब्लिङ्गाभिर्वारुणीभिः हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिः ॥ अभिषिक्तौ दम्पती श्वेतैर्वस्त्रचन्दनपुष्पैः सौवर्णभूषणैश्चालङ्कृत्य ' ये भूताः प्रचरन्ति० दधातु स्वाहा ' इति बलिं दत्वाऽप आचम्याऽऽचार्यं सम्पूज्य गोमिथुनं दद्यात् ॥ अथाऽऽचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, प्राणानायम्य यजमानस्य भार्याया० यमलजननशान्तिहोमं करिष्ये० वरदो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे— ' हिरण्यगर्भ० ' इत्याद्यष्टमन्त्रैराज्येन, अग्निः स्विष्टकृत्, इत्याद्यन्वाधायाऽग्निमुखान्तं कृत्वा सावित्र्या पक्वं हुत्वा स्विष्टकृतमवशायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति— हिरण्यगर्भः समवर्तताऽग्रे भूतस्य जातः पतिरेक आसीत् । स दाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम स्वाहा । ( सर्वत्र, प्रजापतय इदं०)

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै० स्वाहा॥ य आत्मदा बलदा यस्य विश्वे उपासते प्रशिषं यस्य देवाः। यस्य छायाऽमृतं यस्य मृत्युः कस्मै० स्वाहा॥ यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाऽऽहुः। यस्येमाः प्रदिशो यस्य बाहू कस्मै० स्वाहा॥ यङ्क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने। यत्राधि सूर उदितो व्येति कस्मै० स्वाहा॥ येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः। यो अन्तरिक्षे रजसो विमानः कस्मै० स्वाहा॥ आपो ह यन्महतीर्विश्वमायन्दक्षं दधाना जनयन्तीरग्निम्। ततो देवानां निरवर्ततासुरेकः कस्मै० विधेम स्वाहा॥ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निम्॥ यो देवेष्वधि देव एक आसीत्कस्मै० स्वाहा॥ स्विष्टकृदादि होमशेषं समापयेत्॥ ततो यजमानो गृह्याग्नौ मारुतस्थालीपाकं कुर्यात्। तत्र 'मरुतो यद्धवो दिवः० या वः शर्म०' इति द्वाभ्यां पक्वहोमः। (मरुद्भ्य इदं०) शेषं समानम्॥ अन्ते ब्राह्मणान्सम्पूज्य, आचार्याय कलशदानमन्येभ्यो यथाशक्ति दक्षिणां दत्वा, यावच्छक्ति ब्राह्मणान्सम्भोज्याऽऽशिषो गृह्णीयात्॥ न तस्य भयं विद्यते॥ गोषु यमलजननेऽपि इयमेव शान्तिः॥

## ॥ त्रिकप्रसवशान्तिविधिः ॥

(बौ. गृ. शे. सू. १.१३) अथातस्त्रिकप्रसवशान्तिं व्याख्यास्यामः–सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि। मातापित्रोः कुलस्याऽपि तदाऽरिष्टं महद्भयम्। ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत्। तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः॥ जातस्यैकादशाहे वा द्वादशाहे शुभे दिने। आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरम्॥ सह वा ग्रहयज्ञः स्याद्यथावित्तानुसारतः। ब्रह्माविष्णुमहेशेन्द्रप्रतिमाः स्वर्णतः कृताः॥ पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः। पञ्चमे कलशे रुद्रं पूजयेद्रुद्रसङ्ख्यया॥

रुद्रसूक्तादि चत्वारि शान्तिसूक्तानि सर्वशः । द्विज एको जपेद्धोमकाले शुचिसमाहितः ॥ आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुम् । अष्टोत्तरसहस्रं वा शतं वा विंशतिं तु वा ॥ देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरस्सरम् । ब्रह्मादिमन्त्रैरिन्द्रस्य यत इन्द्र भयामहे ॥ ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं पुनः । अभिषेकं कुटुंबस्य कृत्वाऽऽचार्यं प्रपूजयेत् ॥ हिरण्यं धेनुरेका च ऋत्विग्भ्यो दक्षिणा ततः । प्रतिमा गुरवे देया उपस्कारसमन्विता ॥ कांस्याज्यवीक्षणं कृत्वा शान्तिपाठन्तु कारयेत् । ब्राह्मणान्भोजयेच्छक्त्या दीनानाथांश्च तर्पयेत् ॥ एवं शान्तिविधानेन सर्वारिष्टं प्रलीयते । इत्याह भगवान् बोधायनः ॥

अथ प्रयोगः ॥ जननादेकादशे द्वादशे वा शुभदिने गोमुखप्रसवं कृत्वा मम सुतत्रयजननाऽनन्तरं कन्या–( कन्यात्रयजननाऽनन्तरं सुत ) जननसूचित–सर्वारिष्टपरिहारद्वारा० सग्रहमखां त्रिकप्रसवशान्तिं करिष्ये, इति सङ्कल्प्य गणेशपूजनाद्याचार्यादि ऋत्विग्वरणान्तं कुर्यात् ॥ पुण्याहे—'आदित्यादिनवग्रहसहितब्रह्मविष्णुमहेशेन्द्ररुद्राः प्रीयन्ताम्' इति विशेषः ॥ अन्वाधाने—ग्रहकीर्तनान्ते वरदो नामाऽग्निः, ब्रह्मा विष्णुर्महेश इन्द्रो रुद्रश्च देवताः, चरुर्हविः, उपहोमे — ग्रहानन्तरं ब्रह्माणं 'ब्रह्म जज्ञानं०' इति मन्त्रेण, विष्णुं 'इदं विष्णुः०' इति मन्त्रेण, महेशं 'तत्पुरुषाय०' इति मन्त्रेण, इन्द्रं 'यत इन्द्र०' इति मन्त्रेण, रुद्रं 'कद्रुद्राय०' इति मन्त्रेण, समिदाज्यतिलचरुभिः प्रत्येकं प्रतिद्रव्यं १०८ सङ्ख्याकाहुतिभिः, स्विष्टकृत अर्यमाद्यः, इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाऽग्निं ग्रहान्सम्पूज्य तदुत्तरतः कलशपञ्चकं 'मही द्यौः०' इत्यादिना संस्थाप्य वरुणपूजान्ते पूर्णपात्रेऽग्न्युत्तारणादिना सुसंस्कृताः सुवर्णादिनिर्मिताः ब्रह्मविष्णुमहेशेन्द्ररुद्रप्रतिमा विन्यस्य तत्तन्मन्त्रेणावाह्य षोडशोपचारैः संपूजयेत् ॥ कलशमन्वारभ्य रुद्रैकादशिनीं, 'कृणुष्व पाजः०', रुद्रसूक्त-ब्रह्मसूक्त-विष्णुसूक्त-इन्द्रसूक्त-शान्तिसूक्तानि च जपेत् ॥ ततो हविर्निर्वापादि नवग्रह-ब्रह्मविष्णुमहेशेन्द्ररुद्रदेवतानां पक्वं हुत्वाऽन्वाधानोक्तक्रमेणोपहुत्य स्विष्टकृदादि होमशेषं समापयेत् ॥ आवाहितदेवताः पुनः

सम्पूज्य कलशोदकैरभिषेकः। आचार्याय कलशदानं, आज्यवीक्षणदानं, गोदानं, हिरण्यदानं ऋत्विग्भ्यो यथाशक्ति दक्षिणादानं च कुर्यात्। ततो ब्राह्मणैः शान्तिपाठः कार्यः। यावच्छक्ति ब्राह्मणान्भोजयित्वाऽऽशिषो गृह्णीयात्॥

## ॥ पञ्चमारिष्टजननशान्तिविधिः ॥

अथातो पञ्चमारिष्टजननशान्तिं व्याख्यास्यामः—जातस्य पञ्चमे लग्ने सूर्यादिग्रहसंस्थिते। पित्रादीनामरिष्टन्तु कुर्वन्ति च यथाक्रमम्॥ रविश्च पितरं हन्ति मातरं च शशी तथा। भ्रातरं भूमिपुत्रस्तु मातुलं चन्द्रजस्तथा॥ गुरुर्मातामहं तद्वद् भृगुस्तद्वत्पितामहम्। शनी राहुः शिशुं हन्ति शिखी भ्रातरमेव च॥ तद्दोषपरिहारार्थं शान्तिं वक्ष्याम्यशेषतः। जातस्य द्वादशाहे वा जन्मर्क्षे वा शुभे दिने॥ पुण्याहवाचनं कृत्वा आचार्यं वरयेत्ततः। गृहस्यैशानदिग्भागे गोमयेनोपलेपयेत्॥ व्रीहींस्तत्र विनिक्षिप्य यथावित्तानुसारतः। तस्योपरि न्यसेत्कुम्भमव्रणं तन्तुवेष्टितम्॥ आजिघ्रेति हि मन्त्रेण कलशस्थापनं भवेत्। शुद्धोदकेन सम्पूर्य नदीरावाहयेत्ततः॥ पञ्चगव्यं पञ्चरत्नं पञ्चत्वक्पञ्चपल्लवान्। सर्वौषधीः सर्वमृदस्तत्तन्मन्त्रेण निक्षिपेत्॥ तत्तद्वर्णमयं वस्त्रं कुम्भोपरि निधाय च। प्रधानस्यार्धमानेन अधिप्रत्यधिदेवते॥ अधिप्रत्यधिदेवौ च दक्षिणोत्तरपार्श्वयोः। ग्रहयज्ञोक्तविधिना आवाहनपुरःसरम्॥ उपचारैः षोडशभिस्तत्तन्मन्त्रैर्यथाविधि। श्रीसूक्तं रुद्रसूक्तञ्च ग्रहमन्त्रान् स्पृशञ्जपेत्॥ अष्टोत्तरशतं कुर्याद-ष्टाविंशतिमेव वा। ततो होमं प्रकुर्वीत आचार्यो ब्राह्मणैः सह॥ स्वगृह्योक्तविधानेन कुर्यादग्निमुखं ततः। तत्तत्समिद्भिश्चर्वाज्यै-रष्टोत्तरशतं हुनेत्॥ अष्टोत्तरसहस्रं वा अष्टाविंशतिमेव वा। होमशेषं समाप्याथ अभिषेकन्तु कारयेत्॥ मातापित्रोः शिशोश्चैव आचार्यो ब्राह्मणैः सह। ग्रहमन्त्रैर्हिरण्याद्यैः पावमानीभिरेव च॥ श्रीसूक्तेन पुराणोक्तैरभिषेकन्तु कारयेत्। ततः शुक्लाम्बरधरः

शुक्लमाल्यानुलेपनः ॥ आचार्यं पूजयेत्पश्चात्प्रतिमां वस्त्रसंयुताम् । दद्यात्सदक्षिणां गाश्च आचार्याय प्रदापयेत् ॥ ऋत्विजोऽपि यथाशक्ति दक्षिणाभिः प्रतोषयेत् । ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः ॥ एवं शान्तिं प्रकुर्वीत तस्य दोषो विनश्यति । सर्वारिष्टविनाशः स्याद्वेदोक्तायुर्भविष्यति ॥

अथ प्रयोगः ॥ जननाद्द्वादशाहे जन्मनक्षत्रेऽन्यस्मिन् वा शुभदिने कर्ता प्रातः स्नानादि नित्यकर्म कृत्वा सपत्नीक आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'अस्य शिशोर्जन्मकाले पञ्चमलग्नस्थितसूर्यग्रहसूचितपित्रारिष्ट (चन्द्रग्रहसूचितमात्रारिष्ट कुजग्रहसूचितभ्रात्रारिष्ट इत्यादि) निवृत्त्या वेदोक्तपरिपूर्णाऽऽयुष्याभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां पञ्चमारिष्टजननशान्तिं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य 'आदित्यादिनवग्रहदेवताः प्रीयन्तां, आदित्यः प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादिकृत्विजो वरयेत् ॥ अथाऽऽचार्यो गृहस्येशानदिग्भागे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य, देवयजनोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य प्राणानायम्य देशकालौ सङ्कीर्त्य, यजमानस्याऽस्य शिशोः० सग्रहमखां पञ्चमारिष्टजननशान्तिहोमं करिष्ये० ग्रहान्वाधानान्ते—कपिलो नामाग्निः, आदित्यो देवता, चरुर्हविः, उपहोमे-आदित्यं अर्कसमिच्चर्वाज्यद्रव्यैः प्रतिद्रव्यमष्टोत्तरसहस्रसङ्ख्याकाहुतिभिः अधिदेवताप्रत्यधिदेवतयोस्तैरेव द्रव्यैरष्टाविंशतिसंख्याकाहुतिभिः स्विष्टकृतः अर्यमादयो देवता इत्याद्यन्वाधायाऽग्रेणाऽग्निं व्रीहिमये स्थण्डिले ग्रहानावाह्य सम्पूज्य, तदुत्तरतः स्थण्डिलान्तरे व्रीहीन्निक्षिप्य, तत्र नवमव्रणं सुदृढं कुम्भं प्रतिष्ठाप्य, शुद्धोदकेन सम्पूर्य, कुम्भे पञ्चगव्यं पञ्चरत्नं पञ्चत्वचः पञ्चपल्लवान् सर्वौषधीः सप्तमृदस्तत्तन्मन्त्रेण निक्षिप्य, वरुणपूजान्तं कृत्वा रक्तवर्णमयं (तत्तद्ग्रहवर्णमयं) वस्त्रं कुम्भोपरि निधाय, पूर्णपात्रे—निष्कमात्रसुवर्णनिर्मितामादित्यप्रतिमां संस्थाप्याऽऽदित्यमावाह्य दक्षिणतोऽधिदेवतामग्निमुत्तरतः प्रत्यधिदेवतामीश्वरञ्च क्रमेणाऽऽवाह्य ग्रहमखोक्तक्रमेण पूजयेत् । अथर्त्विजः

कुम्भमन्वारभ्य श्रीसूक्तं रुद्रसूक्तं ग्रहमन्त्रांश्चाष्टोत्तरशतवारं जपेयुः ॥ ततोऽन्वाधानोक्तक्रमेण होमं कृत्वा स्विष्टकृदादि होमशेषं समापयेत् । ततो मातापित्रोः शिशोश्च ग्रहमन्त्रैः आपो हि ष्ठा० हिरण्यवर्णाः० पवमानानुवाकेन श्रीसूक्तेन पुराणमन्त्रैः कलशोदकेनाभिषेकः । यजमानः शुक्लाम्बरधरः शुक्लमाल्यानुलेपन आचार्यादीन् सम्पूज्य, प्रतिमावस्त्रयुतं कलशं गाश्चाचार्याय दत्वा ऋत्विग्भ्योऽपि यथाशक्ति दक्षिणाश्च दत्वा यावच्छक्ति ब्राह्मणान् सम्भोजयेत् ॥ ॥

## ॥ प्रसववैकृतजननशान्तिविधिः ॥

अकालप्रसवा नार्यः कालातीतप्रजास्तथा । विकृतप्रसवाश्चैव धूमप्रसवनास्तथा ॥ अमानुषांश्च खण्डांश्च अज्ञातव्यञ्जनांस्तथा । हीनाङ्गानधिकाङ्गांश्च जनयन्ति यदि स्त्रियः ॥ पशवः पक्षिणश्चैव तथैव च सरीसृपाः । विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥ निर्वासयेत्तान् नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः । चिकित्सनैर्ब्राह्मणतर्पणैश्च ततोऽस्य शान्ति समुपैति पापात् ॥ शान्ति तेषां प्रवक्ष्यामि सर्वारिष्टप्रशान्तये । पुण्याहं वाचयेदादौ आचार्यं वरयेत्ततः ॥ कलशस्थापनं कृत्वा होमस्थानं प्रकल्पयेत् । त्र्यम्बकेति मन्त्रेण समिदाज्यचरूंस्तिलान् ॥ अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तु वा । होमशेषं समाप्याथ अभिषेकं समारभेत् ॥ गोदानं कलशदानं कृत्वा ब्राह्मणभोजनम् । ऋत्विग्भ्यो दक्षिणां दत्वा स्वयं भुञ्जीत वाग्यतः ॥

अथ प्रयोगः ॥ शिशुजननाद्द्वादशेऽह्नि, कर्ता प्रातर्नित्यकर्म कृत्वाऽऽचमनादि देशकालकीर्तनान्ते " मम भार्याया अकालप्रसव ( कालातीतप्रसव-अमानुषप्रसव-विकृतप्रसव-धूमप्रसव-खण्डप्रसव-अज्ञातव्यञ्जनप्रसव-हीनाङ्गप्रसव-अधिकाङ्गप्रसव इत्यादि ) सूचित-कुलनाश-देशनाशादि सर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रसववैकृतशान्तिं करिष्ये " इति सङ्कल्प्य,

गणपतिं सम्पूज्य "मृत्युञ्जयः प्रीयताम्" इति पुण्याहं वाचयित्वाऽऽचार्यादिऋत्विग्वरणं कुर्यात् ॥ अथाऽऽचार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य प्राणानायम्य यजमानस्य भार्यायाः० प्रसववैकृतशान्तिहोमं करिष्ये० वरदो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे-त्र्यम्बकमन्त्रेण समिदाज्यचरुतिलद्रव्यैः प्रतिद्रव्यमष्टोत्तरसहस्राष्टोत्तरशतान्यतमसङ्ख्याकाहुतिभिः, अग्निः स्विष्टकृत् इत्याद्यन्वाधायाऽग्रेणाऽग्निं मही द्यौरित्यादिना कलशं संस्थाप्य वस्त्रयुग्मेनावेष्ट्य, पूर्णपात्रे सौवर्णराजतताम्रान्यतमप्रतिमायां 'त्र्यंबकं' इति मन्त्रेण मृत्युञ्जयमावाह्य षोडशोपचारैः पूजयेत् । ततः सवित्रे चरुनिर्वापाद्यग्निमुखान्तं कृत्वा सावित्र्या पक्वं हुत्वाऽन्वाधानोक्तक्रमेणोपहुत्य स्विष्टकृदादि होमशेषं समापयेत् । आवाहितदेवतां पुनः सम्पूज्य "आपो हि ष्ठेत्यादिभिः, त्र्यम्बकमन्त्रेण, देवस्य त्वेत्यादिभिः" सकुटुम्बं यजमानमभिषिञ्चेत् । ततो यजमान आचार्यादीन्सम्पूज्य गोदानं, कलशदानं, यथाशक्ति दक्षिणादानञ्च कृत्वा, यावच्छक्ति ब्राह्मणान् सुवासिनीश्च भोजयेत् ॥

## ॥ सर्वशान्त्युपयोगिकालः ॥

मुख्यकालं प्रवक्ष्यामि शान्तिहोमस्य यत्नतः । जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने ॥ जननाद्द्वादशाहे शान्तिकरणे शान्त्युक्तनक्षत्र-आहुति–वह्निचक्रावलोकनादि नावश्यकम् । कालान्तरे त्वावश्यकम् ॥ शुक्लादितस्तिथिः सैका वारयुक्ताऽब्धिशेषिता । खे गुणे भुवि वा सोऽग्निर्द्व्येकयोः स्यादधो दिवि ॥ भूमावग्निः शुभः ॥ होमाहुतिः सूर्यभतस्त्रिभं त्रिभं गण्यं मुहुस्तत्र च चन्द्रभावधि । सूर्यज्ञशुक्रार्कजचन्द्रभूमिजा जीवस्तमः केतुरसत्यसन्मुखे ॥ सूर्यनक्षत्राच्चन्द्रनक्षत्रपर्यन्तं त्रिकं त्रिकं गण्यम् । तत्र सूर्यनक्षत्रान्नक्षत्रत्रयं सूर्यस्य, ततो नक्षत्रत्रयं बुधस्य, ततो नक्षत्रत्रयं शुक्रस्य, एवं गणिते सति शुभग्रहस्य नक्षत्रञ्चेत्-

द्दिने होमादिकं कर्तव्यम् । अशुभग्रहे न कर्तव्यम् । संस्कारादि नित्यकर्मसु निमित्ताऽव्यवहितनैमित्तिकेषु रोगातुरे च वह्निचक्राद्यवलोकनं नावश्यकम् ॥ अग्नेः स्थापनवेलायां पूर्णाहुत्यामथाऽपि वा । आहुतिर्वह्निवासश्च विलोक्यौ शान्तिकर्मणि ॥ उत्तरात्रय-रोहिणी-श्रवण-धनिष्ठा-शतभिषा-पुनर्वसू-स्वाती-मघा-अश्विनी-हस्त-तिष्य-अनूराधा-रेवतीनक्षत्रेषु गुरुशुक्रास्त-मलमासरहिते शुभवारातिथ्यादौ शान्तिः कार्या । रोगातुरे निमित्तान्तराऽव्यवहितनैमित्तिके गुरुशुक्रास्तमलमासादि दोषो नास्ति ॥ ॥

## ॥ अथ वनस्पतिशान्तिः ॥

( बो. गृ. शे. सू. ५.७ ) क्रमुकपनसनाळिकेरकदळीष्वन्यस्मिन् पक्वे ब्राह्मणैर्बन्धुभिस्सहागत्य यजमानः क्रमुकादिवृक्षमध्ये अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात् कृत्वाऽग्नेर्दक्षिणतो व्रीहीनवकीर्य 'मेधां म इन्द्रः' इति श्रीदेवीं सरस्वतीमावाह्य प्रागाद्यष्टदिक्पालानावाह्य चतुरः प्रतिदिशं क्रमुकादिवृक्षानर्चयित्वा चतस्र ओषधीस्तेषां पार्श्वे निधाय 'उच्छ्रयस्व वनस्पते' इति गोमयं क्रमुकमूले निधाय लाजैः पुष्पैरक्षतैस्सम्प्रकीर्य पूर्णपात्रं निधाय 'क्षत्रस्य पते' इति क्षेत्रमभ्यर्च्य 'या जाता ओषधयः, या ते धामानि, या ओषधयस्सोमराज्ञीः, शतं वो अम्ब, अश्वत्थे हि भूरिदावत्तरावाम्' इति 'वनस्पतिभ्यस्स्वाहा' इत्येतेनानुवाकेन हविराज्यचरून् हुत्वा जयादि प्रतिपद्यते । परिषेचनान्तं कृत्वा ब्राह्मणान्भोजयित्वा दक्षिणाभिस्सम्पूज्य स्वस्तिसूक्तेनाऽध्वर्युराशिषो वाचयित्वाऽऽचार्याय दक्षिणां ददातीत्याह भगवान् बोधायनः ॥ ॥

पद्मपुराणे-अथातः सम्प्रवक्ष्यामि पूगानां वृक्षजातिनाम् । प्रथमे गर्भसंवृत्ते सीमन्तविधिमाचरेत् ॥ हेमन्ते शिशिरे ऊर्जे तथा कार्तिकमासिके । ब्राह्मणांश्च समाहूय पुण्याहं वाचयेत्ततः ॥ पञ्चगव्यं च संयोज्य पावमानानुवाककैः । क्षेत्रं

सम्प्रोक्ष्य विधिवच्चूताश्वत्थैरलङ्कृतम् ॥ वृक्षाणां पुरतो भागे मण्डपं कारयेत्ततः । पुष्पमाल्यैरलङ्कृत्य वितानध्वजतोरणैः ॥ वृक्षाणाञ्च चतुर्णां हि समलङ्कारयेत्ततः । मिथुनद्वयं प्रकुर्वीत वृक्षेष्वपि चतसृषु ॥ सुवासिनीभिरलङ्कृत्य कुङ्कुमादिभिरर्चयेत् । तन्मूले स्थण्डिलोल्लिख्य कलशेषु चतुर्ष्वपि ॥ वृक्षगर्भगतं सोमं लक्ष्मीनारायणं पुनः । क्षेत्रपालादिदेवानां क्रमेणावाहयेत्ततः ॥ नवग्रहान् लोकपालान् कलशेषु पृथक्पृथक् । सर्वतोभद्रमालिख्य ब्रह्मादिदेवतास्तथा ॥ आवाहयित्वा विधिवद्गन्धपुष्पाक्षतादिभिः । सम्पूज्य विधिवद्भक्त्या नैवेद्यैर्विविधैः शुभैः ॥ सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् । आचार्यं वरयेत्पश्चादेकविंशति ऋत्विजः ॥ रात्रौ जागरणं कृत्वा प्रभाते होममाचरेत् । उपलिप्ते शुचौ देशे विलिखेन्मण्डलं ततः ॥ ब्राह्मणान्सम्यगाहूय तत्र स्वस्त्यादि वाचयेत् । गोचर्ममात्रं संलिख्य गोमयेन विचक्षणः ॥ नान्दीश्राद्धं ऽकुर्वीत शाखोक्तविधिना ततः ॥ वृक्षगर्भगतं सोममभिषेकन्तु कारयेत् ॥ आपो हि ष्ठेति तिसृभिरिमा आपस्तृचेन च ॥ या ओषधीः सोमराज्ञीस्तिसृभिः सिञ्चयेदथ ॥ पूर्णगर्भगतं सोमं वस्त्रमाल्यैः समर्चयेत् ॥ दिग्विदिक्षु तथा देवान् दिक्पालसहितास्तथा ॥ स्थण्डिलेऽग्निं प्रतिष्ठाप्य अन्वाधानपुरःसरम् । त्रिरग्निं पवमानानुवाकेन च हुनेत् क्रमात् । या ओषधीः सोमराज्ञीस्तिसृभिश्च हुनेद्घृतम् ॥ याः फलिनीर्येति मन्त्रेण जुहुयाच्च फलेन तु ॥ सहस्रं त्रिसहस्रं वा पञ्चसाहस्रमेव वा । यथाशक्त्या च जुहुयाद्वित्तशाठ्यं न कारयेत् ॥ आदित्यादिग्रहान्सर्वान्समिदाज्यचरून् हुनेत् । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ या ओषधीभ्यऋचा क्षेत्रादिषु बलिं हरेत् ॥ आरामोपवनोद्याने देवतायतने गृहे । स्नेहात्सञ्जातवृक्षेषु तृणगुल्मलतादिषु ॥ इत्थं कुर्यात्प्रयत्नेन पुंसीमन्तमुच्यते । महाशान्तिं जपित्वादावाचार्याय प्रदापयेत् ॥ गोयुग्मञ्च सुवर्णादि वस्त्रालङ्कारदक्षिणाम् । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ॥ अक्षयं

वाचयित्वाऽथ पूगीवृक्षफलस्य च ॥ आशिषश्च प्रगृह्याऽथ ब्राह्मणांश्च विसर्जयेत् । एवं यः कुरुते तस्य पूगीफलमनन्तकम् ॥ नरकस्थाश्च पितरः स्वर्गलोकमवाप्नुयुः । सर्वान्कामानवाप्नोति कीर्तिमांश्च सुखी भवेत् ॥

अथ प्रयोगः ॥ क्रमुक-पनस-नाळिकेर-कदळीनां वृक्षाणामन्यस्मिन्फलिते—आपूर्यमाणपक्षे शुभेऽहनि पुण्यनक्षत्रे, सपत्नीको यजमानः प्रातर्नित्यकर्म कृत्वा, ब्राह्मणैर्बन्धुभिः सह मङ्गलघोषपुरस्सरं क्रमुकादिक्षेत्रं गत्वा, क्षेत्रमध्ये मण्डपं कारयित्वा माल्यध्वज-तोरणादिभिरलङ्कृत्य, मण्डपमध्ये गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य, दर्भेष्वासीनो दर्भान्धारयमाणः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'ममाऽस्मिन् क्रमुकक्षेत्रे क्रमुकादिफलातिशयप्राप्त्यर्थं, समस्तपितॄणां स्वर्निवाससिध्यर्थं, पुत्र-पौत्र-धन-धान्य-कीर्ति-सुखादि समस्तकामनासिध्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं वनस्पतिशान्तिं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, मातृकापूजनं नान्दीश्राद्धञ्च विधाय 'सविता सोमश्च प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादीन्वृणुयात् । अथाऽऽ-चार्यो देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, यजमानस्याऽस्मिन् क्रमुकक्षेत्रे० वनस्पतिहोमं करिष्ये० बलवर्धनो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे–या जाता ओषधयः०, या ते धामानि०, या ओषधयः सोमराज्ञीः०, शतं वो अम्ब०, अश्वत्थे भूरि-दावत्तरावां० इति पञ्चभिः सोममन्त्रैः, वनस्पतिभ्यः स्वाहा, इत्येतेनाऽनुवाकेन च हविराज्यचरुद्रव्यैः प्रतिमन्त्रं प्रतिद्रव्य-मष्टोत्तरशतसङ्ख्याकाहुतिभिः, अग्निः स्विष्टकृत्, इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्नेर्दक्षिणतो व्रीहिमये स्थण्डिले कलशं प्रतिष्ठाप्य वरुणपूजान्तं कृत्वा 'मेधाम्म इन्द्रो० पुष्करस्रजा' इति श्रीदेवीं सरस्वतीं, ततः प्रागाद्यष्टदिक्षु तण्डुलस्थण्डिलेषु अष्टौ कलशान्प्रतिष्ठाप्य क्रमेण इन्द्रादिदिक्पालांश्चावाह्य षोडशोपचारैः पूजयेत् ॥ अथ परितः पूर्वादि चतुर्दिक्षु प्रतिदिशं चतुर्षु फलितेषु पूगवृक्षेषु "या ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु । तासान्त्वमस्युत्तमा प्र णो जीवातवे सुव" इति मन्त्रेण

सोममावाह्य वस्त्र-गन्ध-पुष्प-माल्य-धूप-दीपादिभिः समर्चयेत् ॥ ततः सुवासिन्यो गन्धमाल्यादिभिरलङ्कुर्युः ॥ अथ वृक्षपार्श्वे चतस्र ओषधीर्निधाय, वृक्षमूले — 'उच्छ्रयस्व वनस्पते। वर्ष्मन्पृथिव्या अधि ॥ सुमिती मीयमानः। वर्चोधा यज्ञवाहसे' इति गोमयं निदध्यात् ॥ अथ लाजैः पुष्पैरक्षतैः सम्प्रकीर्य 'क्षेत्रस्य पतिना' इति मन्त्रेण भूमिं गन्धादिभिः सम्पूज्याथ सवित्रे चरु-निर्वापाद्यग्निमुखान्ते सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधायान्वाधानोक्तमन्त्रेणोपहोमं कुर्यात् — या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा। मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च स्वाहा ॥१॥ या ते धामानि दिवि या पृथिव्याम्। या पर्व-तेष्वोषधीष्वप्सु ॥ तेभिर्नो विश्वैः सुमना अहेडन्। राजन्त्सोम प्रति हव्या गृभाय स्वाहा ॥२॥ या ओषधयः सोम० जीवातवे सुव स्वाहा ॥ ३ ॥ शतं वो अम्ब धामानि सहस्रमुत वो रुहः। अथा शतक्रत्वो यूयमिमम्मे अगदं कृत स्वाहा ॥ ४ ॥ अश्ववꣳ हि भूरिदावत्तरावां वि जामातुरुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यꣳ स्वाहा ॥ ५ ॥ (सर्वत्र, सोमायेदं०) वनस्पतिभ्यः स्वाहा। मूलेभ्यः०। तूलेभ्यः०। स्कन्धोभ्यः०। शाखाभ्यः०। पर्णेभ्यः०। पुष्पेभ्यः०। फलेभ्यः०। गृहीतेभ्यः०। अगृहीतेभ्यः०। अवपन्नेभ्यः०। शयानेभ्यः०। शिष्टाय०। अतिशिष्टाय०। परिशिष्टाय०। सꣳशिष्टाय०। उच्छि-ष्टाय०। रिक्ताय०। अरिक्ताय०। प्ररिक्ताय०। सꣳरिक्ताय०। उद्रिक्ताय ०। सर्वस्मै स्वाहा। (सर्वत्र, यथालिङ्गं त्यागः) स्विष्टकृ-दादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निं — 'तत्सवितुः० या ओषधीः०' इति द्वाभ्यां सवित्रे सोमाय च बलिं दत्वोत्तरपरिषेकादि होमशेषं समापयेत्। आवाहितदेवताः पुनः सम्पूज्य कलशदानादि कुर्यात् ॥ ततो ब्राह्मणान्भोजयित्वा यथाशक्ति दक्षिणां दद्यात्। अथाचार्यः 'स्वस्ति नो मिमीतां' इति दशर्चेन स्वस्तिसूक्तेनाऽऽशिषो दद्यात् ॥ ॥

## ॥ अथ दुर्गाकल्पः ॥

( बो. गृ. शे. सू. ३. ३ ) अथातो दुर्गाकल्पं व्याख्यास्यामः — यज्ञोपवीतं रक्तपद्मपुष्पं सम्भारानुपकल्प्य मासिमासि कृत्तिकापूर्वाह्णे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा प्रोक्ष्य शौचेन सुव्रतास्तिष्ठन् भगवतीमावाहयेत् — 'जातवेदसे' इति 'ओमार्यां रौद्रीमावाहयामि' इत्यावाह्य 'तामग्निवर्णां' इति कूर्चं दत्वा 'अग्ने त्वं पारय' इति यज्ञोपवीतं दत्वाऽथैनां स्नापयति — 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाः' इति चतसृभिः 'पवमानः' इत्येतेनानुवाकेन मार्जयित्वा "आर्यायै रौद्र्यै महाकाल्यै महायोगिन्यै सुवर्णपुष्प्यै देवसङ्कीर्त्यै महायज्ञ्यै ( क्ष्यै ) महावैष्णव्यै महापृथिव्यै मनोगम्यै शङ्खधारिण्यै नमः" इत्येकादशनामधेयैर्गन्धपुष्पधूपदीपैः 'अमुष्यै नमोऽमुष्यै नमः' इत्येतैरेवार्चयित्वा सावित्र्या 'भगवत्यै दुर्गादेव्यै हविर्निवेदयामि' इति हविर्निवेद्य शेषमेकादशनामधेयैर्हुत्वा पञ्चदुर्गां जपेद्दश स्वस्ति जपेत् 'जातो यदग्ने, वषट् ते विष्णो, वास्तोष्पते, एवा वन्दस्व, आ नो नियुद्भिः, हिरण्यवर्णाः, अभयं कृणोतु, अश्वावतीः, त्वं वरुणः, बृहस्पते युवमिन्द्रश्च, स्वस्ति न इन्द्रो वृद्धश्रवाः' इति जपित्वा 'शं च मे मयश्च मे' इत्येतैरेकादशभिरनुवाकैश्च जपेत् । सावित्र्या 'भगवत्यै दुर्गादेव्यै हविरुद्वासयामि' इत्युद्वास्य शेषं ब्राह्मणेभ्यो दत्वा संवत्सरमुपासीत ॥ सर्वे कामास्सिध्यन्तीत्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ मासिमासि कृत्तिकायां पूर्वाह्णे कर्ता प्रातः स्नानादि नित्यकर्म निर्वर्त्य शुचौ देशे गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्याचम्य प्राणानायम्य देशकालौ संकीर्त्य मम समस्तकामनासिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं दुर्गाराधनं करिष्ये इति संकल्प्य गणपतिं सम्पूज्य सविता प्रीयतामिति पुण्याहं वाचयित्वा देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य प्राणानायम्य

देशकालौ संकीर्त्य मम० दुर्गाहोमं करिष्ये, बलवर्धनो नामाग्निः, सविता देवता, चरुर्हविः, उपहोमे- आर्याद्येकादश नाममन्त्रैश्चरुणा, अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधायाग्रेणाग्निं व्रीहिभिर्यवैर्वा स्थण्डिलं कृत्वा मही द्यौरित्यादि विधिना कलशं प्रतिष्ठाप्य वरुण-पूजांते–जातवेदसे० दुरितात्यग्निः, ओंभूर्भुवः सुवः आर्यामावाहयामि, रौद्रीं०, महाकालीं०, महायोगिनीं०, सुवर्णपुष्पीं०, देवसङ्कीर्तिं०, महायज्ञीं०, महावैष्णवीं०, महापृथिवीं०, मनोगर्मां० शङ्खधारिणीमावाहयामि इत्यावाह्य तामग्निवर्णां० इत्यासनं दत्वा पाद्यार्घ्याचमनांते आपो हि ष्ठा०, हिरण्यवर्णाः०, पवमानः सुवर्जनः० इत्येतैर्मार्जयित्वा वस्त्रोपवस्त्रान्ते-अग्ने त्वं पारया नव्यो० शंयोः इति यज्ञोपवीतं दद्यात्। आर्यायै नमः, रौद्र्यै० महाकाल्यै० महायोगिन्यै० सुवर्णपुष्प्यै० देवसङ्कीर्त्यै० महायज्ञ्यै० महावैष्णव्यै० महापृथिव्यै० मनोगर्म्यै०, शंखधारिण्यै नमः इत्येकादश नामधेयैर्गन्ध-रक्तपुष्प-धूप-दीपादिभिरभ्यर्च्य सावित्र्या भगवत्यै दुर्गादेव्यै हविर्निवेदयामि इति हविर्निवेदयेत्। देवस्य त्वेत्यादि सवित्रे हविर्निरुप्य प्रतिष्ठिताभिघारणान्ते सावित्र्या पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधायावशिष्टं हविर्मेक्षणेनोपहत्य आर्यायै स्वाहेत्याद्येकादश नाममन्त्रैर्हुत्वा स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाग्निं दर्भस्त-म्बेषु सावित्र्या आर्याद्येकादशनाममन्त्रैश्च हुतशेषं निधायोत्तरपरिषेकादि होमशेषं समापयेत्। ततः जातवेदसे० इत्यादि पञ्चदुर्गा-मन्त्रान्, स्वस्ति नो मिमीतां इत्यादि दश स्वस्तिसूक्तमन्त्रान्, जातो यदग्ने० वषट् ते विष्णो० वास्तोष्पते० एवा वन्दस्व० आ नो नियुद्भिः० हिरण्यवर्णाः० अभयं कृणोतु० अश्वावतीः० त्वं वरुणः० बृहस्पते युवमिन्द्रश्च० स्वस्ति न इन्द्रो वृद्धश्रवाः० अग्नाविष्णू० वाजश्च मे इत्याद्येकादश चमकानुवाकांश्च जपित्वा सावित्र्या भगवत्यै दुर्गादेव्यै हविरुद्वासयामि इत्युद्वास्य आवाहितदेवता उद्वास्य सपरिवारं यजमानं प्राङ्मुखमुपवेश्य कलशोदकेनाभिषिञ्चेत् ॥ ततो ब्राह्मणान्सम्पूज्य कलशदानं हविःशेषं यथाशक्ति दक्षिणां च दत्वा ब्राह्मणान्भोजयित्वाऽऽशिषो गृह्णीयात्। एवमेव संवत्सरं मासिमासि कुर्यात्। सर्वे कामाः सिध्यन्ति ॥

## ॥ अथाभिवृद्धिकल्पः ॥



(बो. गृ. शे. सू. ३. १२) अथातोऽभिवृद्धिकल्पं व्याख्यास्यामः—ग्रामस्य देवतायतनस्य गृहस्य वा सारतमक्षेत्रेषु वा भूतिमिच्छन्पूर्वपक्षे स्थिरराशौ स्थिरमुहूर्ते ब्रह्मस्थाने इन्द्रस्येशानस्य वा दिशि जानुदघ्नमवटं खात्वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य सैकतेनावकीर्य मध्ये पद्मपत्रं लिखित्वा कुशाग्रेण पञ्चगव्येन 'आपो हि ष्ठा, हिरण्यवर्णाः, पवमानः' इत्येतेनानुवाकेन व्याहृतीभिश्च प्रोक्ष्य सुमनसोऽवकीर्याऽऽशिषो वाचयित्वा मध्यपत्रे श्रिये चासनानि कल्पयित्वा (इन्द्रस्याग्नेर्यमस्य निर्ऋतेर्वरुणस्य वायोस्सोमस्येशानस्य च कल्पयित्वा गन्धोदकेनावोक्ष्य पश्चिमे भागे गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्योद्धत्यावोक्ष्य मध्ये) सैकतेन स्थण्डिलं कृत्वाग्निमुपसमाधाय सम्परिस्तीर्य परिधानात्प्रभृत्याऽऽग्निमुखात्कृत्वा मध्येऽग्नौ मनसा पद्मासनं ध्यात्वा श्रियमावाहयति—'गन्धद्वारां' इत्येतयर्चा गन्धादिभिरन्वाराध्य बिल्वसमिद्भिश्श्रीसूक्तेन हुत्वा पक्वाज्जुहोति--'वास्तोष्पते, वास्तोष्पते' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति --'ब्रह्म जज्ञानम्' इति षड्भिरनुच्छन्दसम् ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाग्रेणाग्निं पुष्करपर्णेषु हुतशेषं निदधाति — 'यत्पर्यपश्यत' इति ॥ पुष्करपर्णं प्रक्षाळ्य पञ्चगव्येन मथितेन पूरयित्वा गन्धादिभिस्सम्पूज्य श्रीसूक्तेन स्वक्षेत्राणि प्रोक्षतीत्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ शुक्लपक्षे स्थिरराशौ स्थिरमुहूर्तादियुते शुभदिवसे प्रातः स्नानादि नित्यकर्म कृत्वा ग्रामस्य, देवालयस्य, गृहस्य, क्षेत्रस्य वा पूर्वस्यामीशान्यां वा दिशि जानुदघ्नं गर्तं खात्वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य सिकताभिः सुशोभितं कृत्वा मध्येऽष्टदळपद्मं विलिख्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममास्मिन् गृहे धन-धान्य-पशु-पुत्रा (क्षेत्रे फलमूलौ-

षष्ठ्या ) द्यभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थमभिवृद्धिहोमं करिष्ये इति संकल्प्य गणपतिं सम्पूज्य दर्भमुष्टिना पञ्चगव्येन आपो हि ष्ठा० इति तिसृभिः, हिरण्यवर्णा० इति चतसृभिः, पवमानः सुवर्जन० इत्येतेनानुवाकेन व्याहृतिभिश्च गर्तदेशं प्रोक्ष्य पुष्पाणि संप्रकीर्य " वास्तोष्पतिः प्रीयताम्, श्रीश्च प्रीयताम् " इति पुण्याहं वाचयित्वाष्टदळपद्मे व्रीह्यादिभिर्निर्मिते स्थण्डिले मध्ये -- श्रियै, परितः पूर्वाद्यष्टदिक्षु क्रमेण -- इंद्राय, अग्नये, यमाय, निर्ऋतये, वरुणाय, वायवे, सोमाय, ईशानाय च प्रत्येकं दर्भद्वयेनासनं प्रकल्प्य गन्धोदकेनावोक्ष्याऽऽसनकल्पनक्रमेणावाह्य -- श्रीसूक्तेन षोडशोपचारैरभ्यर्चयेत् ॥ पश्चिमभागे गोमयेन गोचर्ममात्रं स्थण्डिलं कृत्वा देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य प्राणानायम्य देशकालौ संकीर्त्य मम० अभिवृद्धिहोमं करिष्ये० आधारवत्तन्त्रं, पञ्चदश दारुरिध्मः० बलवर्धनो नामाग्निः, वास्तोष्पतिर्देवता, चरुर्हविः, उपहोमे-ब्रह्म जज्ञानमित्यादि षडृचेन ब्रह्मसूक्तेनाज्येन अग्निः स्विष्टकृदित्याद्यन्वाधाय पात्रासादने बैल्वमिध्ममिति विशेषः । वास्तोष्पतये चरुं निरुप्य प्रतिष्ठिताभिघारणान्तेऽग्निं परिषिच्य इध्माधाने क्रमेण श्रीसूक्तस्यैकैकं मन्त्रं पठन्नेकैकमिध्ममभ्यादध्यात् । ततः अग्निमुखान्तं कृत्वा वास्तोष्पते प्रतिजानीहि० वास्तोष्पते शग्मया० इति द्वाभ्यां पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधायान्वाधानोक्तक्रमेणोपहुत्य स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाग्रेणाग्निं पुष्करपर्णेषु-यत्पर्यपश्यत्सरिरस्य मध्ये । उर्वीमपश्यज्जगतः प्रतिष्ठाम् । तत्पुष्करस्यायतनाद्धि जातम् । पर्णं पृथिव्याः प्रथनꣳ हरामि ' इति हुतशेषं निधायोत्तरपरिषेकादि होमशेषं समापयेत् । प्रक्षाळिते पुष्करपर्णे मथितं पञ्चगव्यं पूरयित्वा तेन गृहं ( क्षेत्रं ) सर्वतः प्रोक्षेत् ॥ आवाहितदेवताः पुनः सम्पूज्योद्वास्य ब्राह्मणान्सम्पूज्य यथाशक्ति दक्षिणां दद्यात् । ग्रामाभिवृध्यर्थं देवालयाभिवृध्यर्थं चैवमेव कुर्यात् ॥

# ॥ अष्टमीप्रदोषविधिः ॥

( बो. गृ. सू. ३. ८ ) अथातोऽर्धमासेऽर्धमासेऽष्टम्यां ब्राह्मणा ब्रह्मचारिणश्चाऽहरुपवसन्ति ॥ अथ प्रदोषे 'रुद्रं विरूपाक्षं सपत्नीकं ससुतं सगणं सपार्षत्कमावाहयामि' इत्यावाह्य गन्ध-पुष्प-धूप-दीपैरभ्यर्च्य, प्रतिपुरुषं पैष्टिकान्दीपानेकातिरिक्तांश्चत-स्रोऽष्टौ वा देवस्यायतने प्रतिदिशं प्रद्योतयति — 'उद्दीप्यस्व जातवेदः, मा नो हिꣳसीत्' इति द्वाभ्यां 'हव्यवाहमभिमातिषाहं, स्विष्टमग्ने अभि' इति द्वाभ्याञ्च ॥ अथोपसमिद्धमग्निं कृत्वा यदशनीयस्य जुहोति — 'इमा रुद्राय स्थिरधन्वने गिरः' इति षड्भिरनुच्छन्दसं, 'मा नो महान्तं, मा नस्तोके' इति द्वाभ्यां 'वास्तोष्पते, वास्तोष्पते' इति द्वाभ्यां 'आर्द्रया रुद्रः, हेती रुद्रस्य' इति द्वाभ्यां "द्वादश सम्पद्यन्ते द्वादश मासास्संवत्सरस्संवत्सर एव प्रतितिष्ठति" इति ब्राह्मणम् ॥ समिधो वाऽभ्यादधातीति ॥ विज्ञायते—'वैष्णवा वै वनस्पतयः विष्णोस्सायुज्यं सलोकतामाप्नोति' ॥ स्तुतिभिस्तुन्वन्ति ब्रह्म वै ब्रह्मा ब्रह्मणस्सायुज्यं सलोकतामाप्नोति ॥ सर्वं पाप्मानं तरति तरति ब्रह्महत्यामप पुनर्मृत्युं जयतीत्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः॥ अर्धमासेऽर्ध मासेऽष्टम्यां गृहे स्थिताः सर्वे ब्राह्मणा ब्रह्मचारिणस्स्त्रियश्चोपोष्य, सायं नित्यकर्म कृत्वा प्रदोषकाले कर्ता आचम्य प्राणानायम्य देशकालौ संकीर्त्य, मम सकुटुम्बस्य सपरिवारस्य ब्रह्महत्यादि सकलपापनिवृत्तिद्वाराऽपमृत्युपरिहारार्थं, ब्रह्मसायुज्यविष्णुसायुज्यप्राप्त्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं, अष्टमीप्रदोषहोमं करिष्ये, इति सङ्कल्प्य, गणपतिं सम्पूज्य 'ईशानः प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यं वृणुयात् । अथाऽऽचार्यः स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, प्राणानायम्य देशकालौ सङ्कीर्त्य-यजमानस्य० प्रदोषहोमं करिष्ये० बलवर्धनो नामाऽग्निः, ईशानो देवता, चरुर्हविः, उपहोमे-इमा रुद्राय० इत्यादि षण्मन्त्रैः

मा नो महान्तं०, मा नस्तोके०, वास्तोष्पते प्रति जानीहि०, वास्तोष्पते शग्मया०, आर्द्रया रुद्रः०, हेती रुद्रस्य०, इत्येतैर्मन्त्रैश्चाज्येन, अग्निः स्विष्टकृत्, इत्याद्यन्वाधायाऽग्रेणाऽग्निं विधिवत्कलशं प्रतिष्ठाप्य, वरुणं सम्पूज्य, प्रतिमां विन्यस्य 'आर्द्रया रुद्रः०, हेती रुद्रस्य०' इति मन्त्राभ्यां 'रुद्रं विरूपाक्षं सपत्नीकं ससुतं सगणं सपार्षत्कमावाहयामि' इति रुद्रमावाह्य 'स्वागतं पुनरागमनम्' इति स्वागतेनाऽभिनन्दयति ॥ 'भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णस्तं जुषस्व, भगवते महादेवाय विरूपाक्षाय सपत्नीकाय ससुताय सगणाय सपार्षत्कायैतदासनमुपक्लृप्तमत्रास्तां भगवान् महादेवो विरूपाक्षः सपत्नीकः ससुतः सगणः सपार्षत्कः' इति कूर्चं दद्यात् । अथ गायत्र्याऽद्भिः प्रक्षाळिते 'ॐ यो रुद्रो अग्नौ०' इत्यभिमन्त्रिते पात्रे तिरः पवित्रमप आनीय गन्धादिभिरभ्यर्च्य पुनस्तेनैव मन्त्रेणाऽभिमन्त्र्य तासामेकदेशं पात्रान्तरेणादाय पाद्यं ददाति—'इमा आपः शिवाः शिवतमाः पूताः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्यास्ता जुषन्तां प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महादेवो विरूपाक्षः० महादेवाय० नमः' पाद्यं० । 'इमा आपः० अमृतरसा अर्घ्यास्ता जुषन्तां० नमः' अर्घ्यं० । 'इमा आपः० अमृतरसा आचमनीयास्ता जुषन्तां० नमः' आचमनीयं० । अथैनं स्नापयति —'आपो हि ष्ठा०' इति तिसृभिः, 'हिरण्यवर्णाः शुचयः०' इति चतसृभिः, 'पवमानः सुवर्जनः०' इत्येतेनाऽनुवाकेन, 'ब्रह्म जज्ञानं०' 'कद्रुद्राय०' 'यो रुद्रो अग्नौ०' 'कया नश्चित्र०' इत्यृचेन, 'आपो वा इदꣳ सर्वं०' इति मन्त्रेण च । व्याहृतीभिः प्रदक्षिणं परिषिच्य, ततः पवित्रं पादमूले निधायाऽद्भिस्तर्पयति- "ॐ भवं देवं तर्पयामि । शर्वं देवं० । ईशानं देवं० । पशुपतिं देवं० । रुद्रं देवं० । उग्रं देवं० । भीमं देवं० । महान्तं देवं तर्पयामि ॥ ॐ भवस्य देवस्य पत्नीं० । शर्वस्य देवस्य पत्नीं० । ईशानस्य देवस्य पत्नीं० । पशुपतेर्देवस्य पत्नीं०। रुद्रस्य देवस्य पत्नीं० । उग्रस्य देवस्य पत्नीं० । भीमस्य देवस्य पत्नीं० । महतो देवस्य पत्नीं० ॥ भवस्य देवस्य सुतं० । शर्वस्य देवस्य सुतं० । ईशानस्य० । पशुपतेर्देवस्य० । रुद्रस्य० । उग्रस्य० ।

भीमस्य० । महतो देवस्य सुतं तर्पयामि " इति तर्पयित्वा, 'ॐ नमो भगवते रुद्राय, महादेवाय विरूपाक्षाय सपत्नीकाय ससुताय सगणाय सपार्षत्काय नमः' वस्त्रं० ॥ आचमनीयं०, 'ॐ नमो भगवते त्र्यम्बकाय, महादेवाय० नमः' उपवीतं० ॥ आचमनीयं०, 'इमे गन्धाः शुभा दिव्याः सर्वगन्धैरलङ्कृताः । पूता ब्रह्मपवित्रेण पूताः सूर्यस्य रश्मिभिः, महादेवाय० नमः' गन्धं० ॥ 'यो रुद्रो अग्नौ० महादेवाय० नमः' अक्षतान्० ॥ 'यो रुद्रो०, इमे पुष्पाः शुभा दिव्या सर्वपुष्पैलङ्कृताः । पूता ब्रह्म० रश्मिभिः, महादेवाय० नमः' पुष्पाणि० ॥ "ॐ भवाय देवाय नमः । शर्वाय देवाय० । ईशानाय देवाय० । पशुपतये देवाय० । रुद्राय देवाय० । उग्राय देवाय० । भीमाय देवाय० । महते देवाय० । भवस्य देवस्य पत्न्यै० । शर्वस्य देवस्य पत्न्यै० । ईशानस्य० । पशुपतेर्देवस्य० । रुद्रस्य० । उग्रस्य० । भीमस्य० । महतो देवस्य पत्न्यै० । भवस्य देवस्य सुताय० । शर्वस्य० । ईशानस्य० । पशुपतेर्देवस्य० । रुद्रस्य० । उग्रस्य० । भीमस्य० । महतो देवस्य सुताय नमः " इत्येतैर्नाममन्त्रैः पुष्पैराराध्य, 'ॐ यो रुद्रो० वनस्पति रसो धूपो धूपेभ्यो धूप उत्तमः । आघ्रेयः० महादेवाय० नमः' धूपं० ॥ 'ॐ यो रुद्रो० ज्योतिः शुक्रश्च तेजश्च देवानां सततं प्रियः । भास्वरः सर्वभूतानां दीपोऽयं प्रतिगृह्यताम् ॥ महादेवाय० नमः' इति दीपं० ॥ देवस्य पुरतश्चतुरस्रमण्डले नैवेद्यं निधाय "ॐ देवस्य त्वा० महादेवाय० नमः नैवेद्यार्थे० निवेदयामि स्वाहा " नैवेद्यमुद्रां प्रदर्श्य 'अमृतोपस्तरणमसि स्वाहा' इत्यपो दत्वा 'ॐ प्राणाय स्वाहा' इत्यादिभिः पञ्चमुद्राः प्रदर्शयेत् ॥ "ॐ त्र्यम्बकं० महादेवाय० नमः" पानीयं० । 'अङ्गुष्ठमात्रः०' नैवेद्यं विसर्जयामि ॥ 'अमृतापिधानमसि स्वाहा' इत्यपो दत्वा, 'ॐ त्र्यंबकं० महादेवाय० नमः' आचमनीयं० ॥ 'पूगीफल० गृह्यताम्' महादेवाय० नमः ताम्बूलं० ॥ 'हिरण्यगर्भः समवर्तताऽग्रे० महादेवाय० नमः' दक्षिणां० ॥ 'सद्योजातं० महादेवाय० नमः' मङ्गळनीराजनं० ॥ 'ॐ वामदेवाय० महादेवाय० नमः' मन्त्रपुष्पं० ॥ 'ॐ अघोरेभ्यः० महादेवाय० नमः' प्रदक्षिणां० ॥ 'ॐ तत्पुरुषाय०महादेवाय० नमः' नमस्कारं० ॥ 'ॐ

ईशानः सर्व० महादेवाय० नमः' प्रार्थनां० ॥ ततः प्रतिपुरुषं (स्व-पत्नी-पुत्र-दुहितृ-पौत्रसङ्ख्याकान्) पिष्टमयानेकाधिकान्दीपान्कृत्वा कलशस्य परितश्चतुर्दिक्षु "उद्दीप्यस्व०, मा नो॑ हि॒ꣳसीज्जातवेदो॒ गामश्वं॒ पुरु॑षं॒ जग॑त् । अबि॑भ्रदग्न॒ आ ग॑हि श्रि॒या मा॒ परि॑पातय॥ हव्यवाहं०, स्विष्टमग्ने० " इति चतुर्मन्त्रैः प्रद्योतयति ॥ अथ देवस्य त्वेत्यादि ईशानाय चरुं निरुप्य प्रोक्ष्याज्यसंस्काराद्यग्निमुखान्ते —'आर्द्रया रुद्रः०, हेती रुद्रस्य०' इति द्वाभ्यां पक्वं हुत्वा, (ईशानायेदं०) स्विष्टकृतमवदायान्तःपरिधौ निधायाऽवशिष्ट-चरुं मेक्षणेनोपहत्यान्वाधानोक्तक्रमेण जुहुयात् ॥ (सर्वत्र, रुद्रायेदं०) ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निमर्क-पर्णेषु हुतशेषं निदधाति-'यो रुद्रो अग्नौ०' इति ॥ उत्तरपरिषेकादि होमशेषं समाप्य, आवाहितदेवताः पुनः सम्पूज्य, ऋग्यजुसामा-थर्वभिरन्यैरार्षैः स्तोत्रैश्च स्तुन्वान्ति ॥ ततः "प्रयातु भगवान्महादेवः—ईशानः सर्वलोकानां सर्वलोकनमस्कृतः । अनेन हविषा तृप्तः पुनरागमनं प्रति" इत्युद्वास्य, ब्राह्मणान् सम्पूज्याऽऽचार्याय गोदानं कलशदानमन्येभ्यो यथाशक्ति दक्षिणाश्च दद्यात् ॥

## ॥ राक्षोघ्नविधिः ॥

(बो. गृ. शे. सू. ४·५·५) "यदपामार्गहोमो भवति रक्षसामपहत्यै" इति ब्राह्मणम् ॥ सर्वस्य भेषजोऽपामार्गहोमः । व्याहृतीभिस्तिलहोमो रक्षोघ्नः पापनाशनश्च ॥

अथ प्रयोगः ॥ कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, मम समस्तरक्षोबाधानिवारणार्थं समस्तपापक्षयार्थं राक्षोघ्नहोमं करिष्ये, इति सङ्कल्प्य, गणेशं सम्पूज्य रक्षोहाग्निः प्रीयतामिति पुण्याहं वाचयित्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, राक्षोघ्नहोमं करिष्ये, राक्षोघ्नहोमः कर्म० वरदो नामाग्निः, रक्षोहाग्निर्देवता, चरुर्हविः, उपहोमे-"यदपामार्गः सपत्नहा०" इति

मन्त्रेण अपामार्गसमिद्भिः १०८ सङ्ख्याकाहुतिभिः, समस्तव्याहृतिभिराज्याक्ततिलैः १०८ सङ्ख्याकाहुतिभिः अग्निः स्विष्टकृदित्याद्यन्वादध्यात् ॥ निर्वापकाले–देवस्य त्वा० अग्नये रक्षोघ्ने जुष्टं निर्वपामि' इति निरुप्य 'देवस्य त्वा० अग्नये रक्षोघ्ने वो जुष्टं प्रोक्षामि' इति प्रोक्ष्य प्रतिष्ठिताभिघारणान्तं कृत्वा, ईशान्यां दिशि कलशं प्रतिष्ठाप्य वरुणं सम्पूज्य, तत्र रक्षोहणमग्निमावाहयति– 'रक्षोहणं०, विज्योतिषा०' इति द्वाभ्याम्। षोडशोपचारैः सम्पूज्याऽग्निमुखान्तं कृत्वा पक्वाज्जुहोति–'रक्षोहणं० नक्तो३म् विज्योतिषा० विनिक्षे स्वाहा' अग्नये रक्षोघ्न इदं० ॥ ततोऽपामार्गसमिद्भिरष्टोत्तरशतं जुहोत्येतेन मन्त्रेण–"यदपामार्गः सपत्नहा सहस्राणां पुष्टिवर्धनाय। यन्मे शिरसि पापं केशेषु निहितं ललाटे पृष्ठे जठरे च यद्विश्वं सर्वस्य भेषजोऽपामार्गोऽवलुम्पतु स्वाहा" इति॥ अग्नये रक्षोघ्न इदं०। ततोऽष्टोत्तरशतवारमाज्याक्ततिलैः समस्तव्याहृतीभिर्हुत्वा स्विष्टकृदादि होमशेषं समापयेत् ॥

## ॥ वास्तुशान्तिविधिः ॥

(बो. गृ. सू. ३·५) प्रहुतानुकृतिर्वास्तुशमनम्। यच्चागारं कारयित्वा प्रथममध्यवस्येत्तद्वास्तोष्पतीयेन शमयित्वाऽध्यवस्येत् ॥ तदु हैके यजुषा स्थूणा उच्छ्रयन्ति यजुषा वंशान् यजुषा छदींषि यजुषाऽम्भृणं यजुषा तल्पदेशं यजुषा वास्तुमध्यं यजुषाऽग्निनिधानम्। स यद्यु हैवं कुर्याद्यथा यजुषोच्छ्रियन्ते सदस्यकर्तामयजूंष्यथर्वणान्याङ्गिरसानि मिथुनीसम्भवन्तीति तद्यदध्यवस्येद्यथा मिथुनीसम्भवन्तावध्यवस्येत्ताद्दक्तद्यद्यजुष्कृतं स्यात् ॥ आधयो व्याधयो ग्रहा उपसर्गाश्चापहन्युः ॥

अथ वास्तुनिर्माणकालः ॥ नारदः–"सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः। मासाः स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः" इति॥ सौम्यो मार्गशीर्षः॥ "आदित्यभौमवर्जन्तु वाराः सर्वे शुभावहाः। चन्द्रादित्यबलं लब्ध्वा लग्ने शुभनिरीक्षिते ॥ स्तम्भोच्छ्रयादि

कर्तव्यमन्यत्तु परिवर्जयेत्" इति ॥ गार्ग्यः-" त्र्युत्तरामृगरोहिण्यः पुष्यमैत्रकरत्रयम् । धनिष्ठाद्वितयं पौष्णं गृहारम्भे प्रशस्यते" इति ॥

अथ गृहप्रवेशकालः ॥ नारदः -" प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः । माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः " इति ॥ रत्नकोशे-" पुष्ये धनिष्ठामृगवारुणेषु स्वायम्भुवे च त्रिषु चोत्तरेषु । अक्षीणचन्द्रे शुभदो नृपस्य तिथावरिक्ते च गृहप्रवेशः " इति ॥ ज्योतिर्ग्रन्थेऽपि-" यज्ञो गृहप्रवेशश्च प्रतिष्ठादेवभूभुजाम् । पुण्यानि यानि कर्माणि न स्युः सुप्ते जगत्पतौ " इति ॥

गृहप्रवेशे नक्षत्रम् ॥ विद्यामाधवीये-शस्तास्स्थिराश्च मृदवश्च गृहप्रवेशे क्षिप्राश्चराश्च विदधत्युडवः प्रवासम् । श्रेष्ठो वृषस्स्थिरगृहाः सशुभाश्च सर्वे वर्ज्याश्चरा वरममीष्वपि वार्षभोंशः ॥ श्रीपतिः-त्वाष्ट्रेऽथ पौष्णे शशिभे च मैत्रे स्वयम्भुवर्क्षे त्रिषु चोत्तरेषु । अक्षीणचन्द्रे गुरुवासरे च तिथावरिक्ते च गृहप्रवेशः ॥ श्रीपतिः - शुभः प्रवेशो मृदुभिः स्थिरर्क्षैः क्षिप्रैश्चरैः स्यात्पुनरेव यात्रा । उग्रैर्नृपो दारुणभैः कुमारो राज्ञी विशाखासु विनाशमेति ॥ कृत्तिकासु भवनं कृशानुना दह्यते प्रविशतामसंशयम् ॥ गुरुश्च - शुभनामासु तारासु सर्वासु प्रविशेद्गृहम् । शुभांशे शुभवारेषु शुभदृष्टे स्थिरांशके॥ श्रीपतिः-रिक्ता तिथिर्भूसुतभानुवारौ निन्द्याश्च योगाः परिवर्जनीयाः । मेषः कुळीरो मकरस्तुला च त्याज्याः प्रवेशे हि तथा तदंशाः ॥ गुरुः-वृषांशकोदये सर्वप्रवेशः शोभनस्सदा । चरोभये तु सर्वेषु वृषांशः स्यात्सुशोभनः ॥ मेषे भवेत्पुनर्यात्रा वृषे भुङ्क्ते परां श्रियम् । श्रीसुखार्थं लभेद्युग्मे कुळीरे धननाशनम् ॥ रत्नभागप्रजाः सिंहे वध्वां ह्यरतिः । तौलो व्याधिर्धनं कीटे चापे स्यात्सुखदुःखवान् ॥ ध्यानभाण्डहतिर्नक्रे कुम्भे कीर्तिश्च वाहनम् । मीने वृद्धिं परां गच्छेत्प्रवेशे नूतने फले॥ अंशाद्यो ग्रहषड्वर्गो यात्रावदिह शोभनः॥ ज्योतिषार्णवे-ब्रह्मेन्द्रादितिपूर्वेषु पूर्वस्यावेशनं शुभम्। अर्यमादिचतुष्के तु दक्षिणस्यां विशेद्गृहम् ॥ मूलवैष्णवमैत्रेषु पश्चिमायां विशेद्गृहम् । अहिर्बुध्न्यश्रविष्ठाभ्यामुदग्गेहं विशेदिति ॥ दिवा प्रवेशः सम्पत्त्यै निशि वा शोभनो भवेत् । यदि सौम्याधिपस्सौम्यस्सुबली सौम्यवीक्षितः ॥ ज्योतिषार्णवे-

रात्रौ केचित्प्रशंसन्ति प्रवेशं सद्ग्रहोदये। रात्रौ चन्द्रबले कुर्याद्दिवा सूर्यबले सति। दिने वा निशि वा कुर्यात्प्रवेशं सुशुभोदये। विद्यामाधवीये-गेहं न प्रविशेन्नवं घटवधूकर्किस्थिते भास्करे श्रेष्ठो दक्षिणपृष्ठभागनिरतः शुक्रोऽत्र वर्ज्योऽन्यगः। कर्तुस्तत्र शुभप्रदान्युपचयस्थानान्यथो नूतने त्याज्यो निर्गमनादिकोऽत्र नवमो मासस्तथा वासरः॥

अगारकरणप्रयोगः॥ कर्ता कृतनित्यक्रियो दर्भेष्वासीनो दर्भान्धारयमाण आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममाऽस्मिन्नागारे चिरकालसुखनिवाससिध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं अगारकरणं करिष्ये, इति सङ्कल्प्य ॥ तदङ्गगणपतिपूजन, मातृकापूजन, नान्दीसमाराधन, स्वतिपुण्याहवाचनानि कुर्यात्॥ पुण्याहे-अगारकर्मणः पुण्याहमित्यादूहः, वास्तोष्पतिः प्रीयतामिति च॥ ततः "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे" इत्यभ्रिमादाय॥ "अभ्रिरसि नारिरसि" इत्यभिमन्त्र्य॥ "परिलिखित१ँ रक्षः परिलिखिता अरातय इदमह१ँ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि" इति त्रिः प्रदक्षिणमवटं परिलिखति सकृन्मन्त्रेण द्विस्तूष्णीम्॥ एवं प्रत्यवटं यावद्भिरवटं प्रयोजनं तावतः खात्वा, अवटपांसूञ्छालाया अभ्यन्तरं प्रकिरति॥ "दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा" इति स्थूणाः प्रोक्षति॥ "शुन्धन्तां लोकाः पितृषदनाः" इत्यपोऽवटेऽवनयति॥ "उद्दिव१ँ स्तभानाऽन्तरिक्षं पृण पृथिवीं दृ१ँह" इति स्थूणा उच्छ्रयति॥ द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा" इत्येताः प्राचीनकर्णा अवटे निदधाति॥ "ब्रह्मवनिं त्वा क्षत्रवनि१ँ सुप्रजावनि१ँ रायस्पोषवनिं पर्यूहामि" इत्येताः प्रदक्षिणं पुरीषेण पर्यूहति॥ "ब्रह्म दृ१ँह क्षत्रं दृ१ँह प्रजां दृ१ँह रायस्पोषं दृ१ँह" इति दण्डेन संहन्ति॥ अन्यूनमनतिरिक्तं परिन्यस्य जलमासिञ्चेत्॥ अवटानां क्रम एवोच्छ्रयाणानां क्रमः॥ "ऋतेन स्थूणावधिरोह

घ॒ऽशोर्ध्वो विराजन्नपसेध शत्रून्। अथाऽस्मभ्य॑ऽ सह वीरा॑ऽ रयिन्दाः" इति प्राचीनकर्णासु तासु स्थूणासु वंशानारोपयति॥ "इन्द्र॑स्य सदो॑ऽसि" इति मध्यमं छादिर्निदधाति॥ "विश्वज॒नस्य॑ छा॒या" इतीतराणि छर्दींषि निदधाति॥ "ऐ॒न्द्रम॒सीन्द्रा॑य त्वा" इति सिद्धमगारमभिमृशाति॥ "उ॒प॒या॒मगृ॑हीतोऽसि॒ विश्वेभ्य॑स्त्वा दे॒वेभ्यः॑" इत्यम्भृणं निधाय जलं पूरयेत्॥ अनेन अगारकरणकर्मणा श्रीपरमेश्वरः प्रीयताम्॥

वास्तुशान्तिप्रयोगः॥ कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य,मम सकुटुम्बस्यसपरिवारस्य आधिव्याधिग्रहोपसर्गनिरसनद्वारा अपमृत्युकालमृत्य्वादिसमस्तमृत्युध्रुवमृत्युपरिहारार्थं समस्तघोरोपशमनार्थं अस्मिन्वास्तौ चिरकालसुखनिवासनिरतिशयसुखायुरारोग्यपुत्रपौत्राद्यनवच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभविद्याविजयविविधश्रेयःसम्पदादिसदभीष्टप्रमुखचतुर्विधपुरुषार्थसिध्यर्थं वास्तुशान्तिं करिष्ये, इति सङ्कल्प्य, द्वारदेशमलङ्कृत्य वास्तुमध्यं मिमायाऽम्भृणं पूरयित्वा तल्पदेशं कल्पयित्वा॥ गणपतिं संपूज्य मातृकापूजनपूर्वकनान्दीसमाराधनं कृत्वा पुण्याहं वाचयित्वा गृहस्येशानदिग्भागे गृह्याग्निमुपसमाधाय समस्तघोरोपशमनार्थं वास्तुशान्तिहोमं करिष्ये, वास्तुशान्तिहोमः कर्म, आघारमापूर्विकं वा तन्त्रं, पञ्चदश चतस्रो वा सामिधेन्यः, अग्नीषोमावाज्यभागौ, वरदो नामाग्निः, वास्तोष्पतिर्देवता, चरुर्हविः, उपहोमे–वास्तोष्पते ध्रुवास्थूणामित्यादि षण्मन्त्रैराज्येन मन्त्रसङ्ख्यया, अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधाय, निर्वापकाले–"देवस्य त्वा० वास्तोष्पतये जुष्टं निर्वपामि" इति निरुप्य, "देवस्य त्वा० वास्तोष्पतये वो जुष्टं प्रोक्षामि" इति प्रोक्ष्य, प्रतिष्ठिताभिघारणान्तं विधाय, ईशान्यां कलशं प्रतिष्ठाप्य वरुणपूजान्तं कृत्वा "वास्तोष्पते प्रतिजानीहि०, वास्तोष्पते शग्मया०' इति मन्त्राभ्यां वास्तोष्पतिमावाह्य षोडशोपचारैरभ्यर्चयेत्॥ ततोऽग्निमुखान्तं कृत्वा पक्वाज्जुहोति–"ॐ वास्तो॑ष्पते॒ प्रति॑जानीह्य॒स्मान्स्वा॑वे॒शो अ॑नमी॒वो भ॑वा नः। यत्त्वेम॑हे॒ प्रति॒तन्नो॑ जुषस्व॒ शन्नं॑ एधि द्वि॒पदे॒

शश्वत्तुष्पदां ३ वास्तोष्पते शग्मया सꣳसदाते सक्षीम हिरण्मया गातुमत्या। आ वः क्षेम उत योगे वरन्नो यूयं पात: स्वस्तिभिः सदा नः स्वाहा" वास्तोष्पतय इदं०॥ अथाऽऽज्याहुतीरुपजुहोति-"ॐ वास्तोष्पते ध्रुवा स्थूणाꣳसत्रꣳसोम्यानाम्। द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा स्वाहा॥ वास्तोष्पतय इदं०॥ १॥ ॐ गृह्यं भयं यच्चेद्द्विपात्सु यदु चेच्चतुष्पात्सु भयं यदस्ति। अग्निर्यविष्ठ्यः प्रणुदतु तद्भयꣳ शन्नः प्रजाभ्यः शमु नः पशुभ्यः स्वाहा॥ अग्नये यविष्ठ्याय०॥२॥ ॐ अक्षिस्पन्देऽङ्गचले च यद्भयं यद्भशिते यदु चेद्दुरुक्ते। अग्निर्यविष्ठ्यः०॥ ३॥ ॐ दुःस्वप्ने पापस्वप्ने च यद्भयꣳ स्वप्नाशने यदमेध्यदर्शने। अग्निर्यविष्ठ्यः०॥ अग्नये यविष्ठ्यायेदं०॥ ४॥ ॐ वास्तोष्पते प्र तरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व स्वाहा॥५॥ ॐ अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखा सुशेव एधि नः स्वाहा॥ सर्वत्र, वास्तोष्पतय इदं०॥ ६॥ स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाग्निं दर्भस्तम्बेषु हुतशेषं निदधाति-"ॐ नमो रुद्राय वास्तोष्पतये। आयने विद्रवणे। उद्याने यत्परायणे। आवर्तने विवर्तने। यो गोपायति तꣳ हुवे" इति॥ अथोत्तरपरिषेकादिहोमशेषं समाप्य, स्थालीसङ्क्षालनमाज्यशेषं प्रणीताजलं कलशजलञ्च स्थाल्यां समानीयौदुम्बरशाखया पलाशशाखया शमीशाखया दर्भमुष्टिना वा "ॐ त्वं विप्रस्त्वं कविस्त्वं विश्वारूपाणि धारयन्। अपजन्यं भयं नुद" इति मन्त्रेण सर्वतः पर्युक्षन् त्रिः प्रदक्षिणमगारं पर्येति॥ ततोऽगारं प्रविशेत्॥

नवागारप्रवेशः॥ एवं वास्तुशान्तिं विधाय कृतशुक्लवस्त्रपरिधानो यजमानः शुभे मुहूर्ते गृहद्वार्युपविश्य देहल्यां गणपतिं लक्ष्मीं क्षेत्रपालं गृहवास्तुं च सम्पूज्य द्विजवरानग्रतः कृत्वा, पत्न्या दध्यक्षतयुक्तं गन्धपुष्पाम्रपल्लवफलोपेतं जलपूर्णकुम्भं

केनचिदन्येन धान्यमूतकं वस्त्राणि द्रव्यञ्च ग्राहयित्वा स्वयं गृहदेवतापात्रं गृहीत्वा दीपकलशहस्ताभिः सुवासिनीभिः सहितः "स्वस्ति नो मिमीतां" इत्यादि स्वस्तिमन्त्रपठनपरैर्द्विजैः सह मङ्गलवाद्यघोषपुरस्सरं गृहं प्रविशेत्–'भद्रान्गृहान् सुमनसः० संविशानि' इति॥ तत आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'कृतनूतनागारप्रवेशाङ्गगणपतिपूजनं पुण्याहवाचनं करिष्ये' इति सङ्कल्प्य, गणेशं सम्पूज्य 'प्रजापतिः प्रीयताम्' इति पुण्याहं वाचयित्वा 'शिवं वास्तु शिवं वास्तु' इति त्रिर्वाचयेत्॥ साङ्गतासिध्यर्थं ब्राह्मणान् भोजयित्वा यथाशक्ति दक्षिणान् दद्यात्॥

प्रकारान्तरेण वास्तुकरणम्॥ वास्तुशास्त्रानुसारेण सुमुहूर्ते भूमिं परीक्ष्य गृहं निर्माय, तत्र पूर्वस्यां दिशि स्नानगृहमाग्नेय्यां पाकशालां, दक्षिणस्यां शयनागारं, नैर्ऋत्यामायुधागारं, सूतिकागृहञ्च, प्रतीच्यां भोजनशालां, वायव्यां धनधान्यागारमुदीच्यां देवमन्दिरमीशान्यां कूपदेशं, कल्पयित्वा, स्नानपाकशालाभ्यन्तरे दधिमन्थनस्थानं, पाकशयनागाराभ्यन्तरे घृतनिधानस्थानं, शयनायुधागाराभ्यन्तरे मलविसर्जनस्थानमायुधागारभोजनशालाभ्यन्तरे रोदनस्थानं, धनधान्यागारदेवमन्दिराभ्यन्तरे भोगस्थानं, देवागारकूपस्थानयोर्मध्ये औषधालयञ्च कल्पयित्वा, ज्योतिर्विदादिष्टे सुदिने वास्तुशांतिः कार्या॥

प्रकारान्तरेण वास्तुराक्षोघ्नविधिः॥ नारदः–अथ सौम्यायने कार्यं नववास्तुप्रवेशनम्। राज्ञां यात्रानिवृत्तौ वा यद्वा द्वन्द्वप्रवेशनम्॥ विधाय पूर्वदिवसे वास्तुपूजाबलिक्रियाम्॥ इति॥ स च वास्तुपूजाबलिविधिर्नवागारप्रवेशादिषु विधियमानो राक्षोघ्नवास्तुहोमपूर्वकः कार्यः। तत्रायं क्रमः—अथ च नवागारं प्रवेक्ष्यञ्छुभेऽनुकूले दिने वस्त्रादिभिर्वर्धकिं सम्मान्य तत्कराद्गृहं परिगृह्य ततः सिततन्त्रिसूत्र्याऽऽवेष्ट्य सदर्भपल्लवमालया परितः संवेष्ट्य सम्मृष्टसिक्तालङ्कृततोरणध्वजादिमण्डितद्वारस्याष्टमङ्गलजुष्टस्य तस्याऽन्तर्धान्यानि विकीर्य पूर्णकलशं निधाय राक्षोघ्नं प्रजप्य पार्ष्णिघाततालत्रयादिभिर्विघ्नकृद्भूतान्युत्सार्याऽऽग्नेय्यां दिशि

राक्षोघ्नहोमं कुर्यात्। तद्विधानमुक्तं प्रयोगमञ्जर्याम्—राक्षोघ्नमग्नेर्दिशि सम्प्रकुर्याद्धोमञ्च कृत्वाऽग्निमुखं यथावत्। द्वाभ्यान्तु पक्वं जुहुयाच्च दर्व्या रक्षोहणं वाजिनमित्युभाभ्याम्॥ भूयः कृणुष्वादिभिराज्यहोमं होतव्यमष्टादशभिश्च मन्त्रैः। तद्वद्विभिन्नैरथ पञ्चभिर्यै देवादिमन्त्रैर्जुहुयात्क्रमेण॥ दुर्गाभिराज्यं त्वथ पञ्चभिश्च हुत्वा पुनर्व्याहृतिभिः क्रमेण। आज्येन हुत्वैवमभीष्टशस्त्रमन्त्रेण होतव्यमतः क्रमेण॥ भूयोऽप्यपामार्गसमिद्भिराज्यैरन्नैस्तथाज्यैश्शतमाहुतीनाम्। प्रत्येकमष्टोत्तरमित्यमीभिर्हुत्वा पुनस्स्विष्टकृतं यथावत्॥ समाप्य होमं पुनराज्यशेषं तोयस्य शेषं हुतभस्मयुक्तम्। युक्तं त्वपामार्गरसैर्गृहं तत्सम्प्रोक्षयेत्तेन निषिच्य पात्रे॥ कृत्वा राक्षोघ्नमेवं तमथ हुतवहं शर्वकोणे निधाय प्रोद्दिष्टं शान्तिहोमं गृहकरणविधौ शान्तिदं सम्प्रकुर्यात्। पूर्वं संस्कृत्य वह्निं हुतवहमभितः स्थण्डिले पूर्वतोऽग्नेर्व्रीहिव्रातैः प्रकृते वसनविरहिते तण्डुलं स्थण्डिले च॥ कृत्वा वास्तीर्य वस्त्रं पुनरपि च शमीपर्णदर्भैः पलाशैः स्वास्तीर्णैस्तण्डुलाढ्यैर्घटमथ सलिलैः पूर्णमच्छं निधाय। शन्नोदेवीरितीमामृचमपि तु वदञ्च्छांतिमावाह्य तस्मिन् गन्धाद्यैः पूज्यमेवं पुनरपि विधिवत्पूर्वमन्त्रेण शान्तिम्॥ वास्तोष्पतेति मन्त्राभ्यां द्वाभ्यां पक्वंतु होमयेत्। षड्भिराज्याहुतीर्हुत्वा वास्तोष्पत्या ध्रुवादिभिः॥ पञ्चब्रह्मभिराज्येन शन्नोवर्गैश्च होमयेत्। शमीमयीश्च समिधो घृतमन्नं पुनर्घृतम्॥ दूर्वाश्च पञ्चगव्याक्तान्प्रत्येकन्तु शतं शतम्। अष्टोत्तरशतं शन्नोमन्त्रेण जुहुयात्पुनः॥ हुत्वा स्विष्टकृतं समाप्य च नमो रुद्राय मन्त्रेण तच्छिष्टान्नेन बलिं कुशेषु विकिरेत्सर्वाशनस्याग्रतः। साज्यैश्शान्तिजलैश्च भस्मसहितैर्गव्याश्रितैः प्रोक्षयेत् त्वं विप्रस्त्वमिति ब्रुवन् गृहमथो पुण्याहमावाचयेत्॥ अत्र केचित्—त्रिपञ्चाशद्वास्तुदेवताभ्योऽपि होमं कुर्वन्ति। तन्त्रराजे—प्रत्येकन्तु हुनेत्कुण्डे चतुरश्रेन्द्रदिङ्मुखः। व्रीहिमुद्गयवक्षौद्रघृतदुग्धाप्लुतैः क्रमात्॥ अष्टोत्तरशतञ्चाष्टोत्तरं विंशतिमेव वा। प्रत्येकं तैर्हुनेन्मन्त्रैर्द्रव्यैस्तद्वच्च पायसैः॥ हुनेत्क्रमेण ताराद्यैस्स्वाहान्तैर्नामभिस्स्वकैः॥ होमान्ते वास्तुदेशेऽथ पूजयेद्वास्तुदेवताः। बलिञ्च तेषां कुर्वीत

पायसैर्व्यञ्जनान्वितैः ॥ ससितैर्मुद्गकदळीफलाऽपूपादिसंयुतम्। क्रमेण मन्त्रैस्ताराद्यैर्नमोन्तैर्नामभिस्स्वकैः ॥ वास्तुदेवतापूजार्थं गृहमध्ये स्थण्डिले मण्डलमेकाशीतिपदं कार्यम्—एकाशीतिपदं लेख्यं वास्तुमध्ये तु पिष्टकैः। हस्तमात्रा लिखेद्रेखा दशपूर्वा दशोत्तराः। गृहमध्ये तण्डुलोपर्येकाशीतिपदं भवेत् ॥ मध्ये पदानां नवकं मार्जयित्वा प्रपूरयेत्। सितेन रजसा भूयस्ताद्दिक्षु चतसृष्वपि ॥ षट्कं सम्मार्ज्य रजसा रक्तेन परिपूरयेत्। कोणस्थान् श्यामरक्ताभ्यां तत्पार्श्वस्थान् सितेन च ॥ कृष्णरक्तसितश्यामपीतश्वेतासितारुणैः ॥ विचित्राणि ततस्तेषु पूजयेद्वास्तुदेवताः ॥ ब्रह्माणमर्चयेन्मध्ये दिक्षु प्रागादि तद्बहिः। आर्यकञ्च विवस्वन्तं क्रमान्मित्रं महीधरम् ॥ सावित्रस्सविता चेन्द्रस्तज्जयौ रुद्रतज्जयौ। आपाऽऽपवत्सावग्न्यादिकोणेष्वर्च्यास्तु युग्मशः ॥ तत्कोणपार्श्वकोष्ठेषु वह्न्या-दीशान्तमर्चयेत्। शर्वं गुहञ्चार्यमणं जृम्भकं पिलिपिञ्छकम् ॥ चरकीञ्च विदारीञ्च पूतनाञ्च प्रदक्षिणम्। ईशादिपरितो बाह्येष्व-ष्टावष्टौ दिशांपतीन् ॥ ईशानाश्चाथ पर्जन्यो जयन्तश्शुक्रभास्करौ। सत्यौ भृशोऽन्तरिक्षश्च पूर्वदिक्कोष्ठगा इमाः ॥ अग्निः पूषाऽथ वितथो यमोऽथ गृहरक्षकः। गन्धर्वो भृङ्गराजश्च मृगा दक्षिणदिग्गतः ॥ निर्ऋतिर्दौवारिकश्चैव सुग्रीवो वरुणस्तथा। पुष्पद-न्ताऽसुरौ शोषरोगौ प्रत्यग्दिगाश्रिताः ॥ वायुर्नागस्तथा मुख्यस्सोमो भल्लाट एव च। अर्गलाख्या दितिस्तद्वददितिस्सौम्य दिग्गताः ॥

अथ प्रयोगः ॥ कर्ता सपत्नीको दर्भेष्वासीनो दर्भान्धारयमाणः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "भूखनन-दारुच्छेदन-पाषाणभेदनादिना जनितसमस्तदोषपरिहारार्थं, सकलभूत-प्रेत-पिशाचादिबाधानिवारणार्थं, मम सकुटुम्बस्य सपरिवारस्य समस्तसङ्कटनानाविधरोगक्लेशदुःखविघ्नोपशमनपूर्वकं अस्मिन्वास्तौ चिरकालसुखनिवाससिध्यर्थं, आयुरारोग्यपुत्रपौत्रधनधान्यसमृध्यर्थं राक्षोघ्नहोमपूर्वकं वास्तुहोमं करिष्ये" इति सङ्कल्प्य, गणपतिं सम्पूज्य, मातृकापूजननान्दी-समाराधनपुण्याहवाचनानि कृत्वा, आचार्यादिऋत्विजो वृत्वाऽर्हयित्वाऽगारशुध्यर्थं ब्रह्मकूर्चहवनं कुर्यात् ॥ सायाह्निनित्यकर्म

निर्वर्त्य गणपतिं सम्पूज्य शिल्पिहस्ताद्गृहं स्वीकुर्यात्, तद्यथा–आदावष्टदलपद्मे व्रीहिभिर्यवैर्वा निर्मिते स्थण्डिले शिल्पिशस्त्राणि संस्थाप्य वस्त्रेणाच्छाद्य षोडशोपचारैः सम्पूज्य प्रार्थयेत्—"स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः। यज्ञियां यज्ञकृतः स्थ ते माऽस्मिन्यज्ञ उपह्वयध्वम्" इति॥ पूजां समर्प्य शिल्पिनं प्रति यजमानः—'दार्वादिनिर्मितं गेहं दृढं सौम्यं त्वया कृतम्। देहि मे शिल्पिशार्दूल गृहमेधीयकर्मणे' इति॥ अथ शिल्पिः–'गृहमेधीयजं पुण्यं दशांशं देहि मे विभो। तद्गृहीत्वा मुदा गेहं प्रदास्यामि द्विजोत्तम'॥ पुनर्यजमानः–'गृहमेधीयजं पुण्यं न दास्यामि कदा च न। धनं रत्नादिकं तुभ्यं दास्याम्यालयकारक'॥ पुनः शिल्पिः–'कृच्छ्रेण निर्मितं गेहं दृढं सौम्यं मनोहरम्। गृहमेधीयकर्मार्थं दास्ये तेऽहं सुतोषतः' इति॥ ततः शिल्पिनं वस्त्रताम्बूलादिना सन्तोष्य तद्धस्ताच्छ्रीसूक्तमुच्चरन् गृहं परिगृह्णीयात्॥ ततः सप्तशुद्धिं कुर्यात्॥

सप्तशुद्धिः–'खननं हरणं दाहः पूरण गोनिवासनम्। विप्रोच्छिष्टं पञ्चगव्यं सप्तैताः स्थानशुद्धयः'॥ खादिरं खनित्रं पञ्चोपचारैः सम्पूज्य 'ॐ मावो रिषत्खनिता० तुरम्' इति खात्वा, 'ॐ आ नो नियुद्भिः० सदा नः' इति मन्त्रेण तत्पांसु हृत्वा नैर्ऋत्यां दिशि निरस्याऽप उपस्पृश्य, दर्भादिभिः 'अग्निनाग्निः समिध्यते० जुह्वास्यः' तद्गर्तं सन्दह्य, पूर्ववत्तद्भस्म नैर्ऋत्यां निरस्याऽप उपस्पृश्य, शुद्धमृत्तिकाभिः 'पृष्टो दिवि पृष्टो० पातु नक्तम्' इति मन्त्रेण तद्गर्तं पूरयित्वा, ॐ शन्नो देवीः० नः' इति जलमासिच्य, 'ॐ 'ध्रुवा द्यौः०मयम्' इति दृढीकुर्यात्॥ अथ गोसूक्तं पठन्नवागारे सर्वत्र गां चारयित्वा सम्पूज्य ग्रासं दद्यात्॥ ततो यथोपलब्धेनान्नेन 'ॐ अहं मेघस्तनयन्० तपन्ति' इति मन्त्रेण ब्राह्मणान्सम्भोज्य 'ॐ शुची वो हव्या० पावकाः' इति पञ्चगव्येन प्रोक्षेत्॥ एवं स्थानशुद्धिं विधाय "रक्षोहाग्निः प्रीयताम्, वास्तोष्पतिः प्रीयताम्" इति पुण्याहं वाचयित्वा उदकशान्तिप्रतिसरबन्धौ कृत्वा गृहस्याऽऽग्नेय्यां दिशि राक्षोघ्नहोमं कुर्यात्॥

राक्षोघ्नहोमः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य स्थण्डिलोल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्य ॥ भूखननदारुच्छेदन-पाषाणभेदनादिभिर्जनितसमस्तदोषपरिहारार्थं भूतप्रेतपिशाचरक्षोबाधानिवारणार्थं राक्षोघ्नहोमं करिष्ये, राक्षोघ्नहोमः कर्म, आघारमापूर्विकं वा तन्त्रं, पञ्चदश चतस्रो वा सामिधेन्यः, अग्नीषोमावाज्यभागौ, वरदो नामाऽग्निः, रक्षोहाग्निर्देवता, चरुर्हविः, उपहोमे-कृणुष्व पाजः० इत्यष्टादशमन्त्रैः, ये देवाः पुरस्सदः०इत्यादिपञ्चमन्त्रैः, जातवेदसे० इत्यादि पञ्चदुर्गामन्त्रैः, भूरादिव्याहृतिभिश्चाज्येन मन्त्रसङ्ख्या, अपामार्गसमिदाज्यचर्वाज्यैरघोरास्त्रेण प्रत्येकं १०८ सङ्ख्याकाहुतिभिर्यक्ष्ये, अग्निः स्विष्टकृदित्यादि सङ्कल्प्याऽन्वादध्यात् ॥ निर्वापकाले- 'ॐ देवस्य त्वा० अग्नये रक्षोघ्ने जुष्टं निर्वपामि' इति निरुप्य 'ॐ देवस्य त्वा० अग्नये रक्षोघ्ने वो जुष्टं प्रोक्षामि' इति प्रोक्ष्य प्रतिष्ठिताभिघारणान्तं कुर्यात ॥ अथाचार्यो देशकालौ सङ्कीर्त्य भूखनन० परिहारार्थं राक्षोघ्न-होमाङ्गतया विहितं कलशस्थापनपूर्वकदेवताऽऽवाहनं पूजनञ्च करिष्ये, इति सङ्कल्प्य। अग्नेरैशान्यभागेऽष्टदलपद्मं विलिख्य शरीर-शुध्यर्थं भूशुध्यादिन्यासान्विधाय कशलपूजनं शङ्खाराधनञ्च कृत्वा 'यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः। स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः। स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवन्त्विमाम्' इति गौरसर्षपान् विकीर्य भूमौ प्रादेशं कृत्वा, 'देवा आयान्तु, यातुधाना अपयान्तु, विष्णो! देवयजनं रक्षस्व' भद्रं कर्णेभिः०, स्वस्ति न इन्द्रः० इति मन्त्रद्वयं पठेत् ॥ अथ 'मही द्यौः' इत्यादि विधिवत् कलशं प्रतिष्ठाप्य वरुणं सम्पूज्य 'रक्षोहणं वाजिनं०, विज्योतिषा० इति द्वाभ्यां रक्षोहणमग्निमावाह्य षोडशोपचारैरभ्यर्चयेत् । तत ऋत्विजो राक्षोघ्नमन्त्राञ्जपेयुः ॥ 'जुषस्व नः' इत्याद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति-रक्षोहणं वाजिनं० विज्योतिषा० इति द्वाभ्यां ( रक्षोघ्नेऽग्नय इदं० ) ॥ ततः स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽ-

ज्याहुतीरुपजुहोति-कृणुष्व पाजः० इत्याद्यष्टादशमन्त्रैः (सर्वत्र, अग्नये रक्षोघ्न इदं०) "ॐ ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु तेनोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभिसन्दहाम्यग्नये रक्षोघ्ने स्वाहा, अग्नये रक्षोघ्न इदं० ॥ १ ॥ ये देवा दक्षिणसदो यमनेत्रा रक्षोहणस्ते नः० रक्षोऽभिसन्दहामि यमाय रक्षोघ्ने स्वाहा, यमाय रक्षोघ्न इदं० ॥ २ ॥ ये देवाः पश्चात्सदः सवितृनेत्रा रक्षोहणस्ते नः० सन्दहामि सवित्रे रक्षोघ्ने स्वाहा, सवित्रे रक्षोघ्न इदं० ॥ ३ ॥ ये देवा उत्तरसदो वरुणनेत्रा रक्षोहणस्ते नः० सन्दहामि वरुणाय रक्षोघ्ने स्वाहा, वरुणाय रक्षोघ्न इदं० ॥ ४ ॥ ये देवा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः० सन्दहामि बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा, बृहस्पतये दुवस्वते रक्षोघ्न इदं० ॥ ५ ॥ इति ॥ ततः पञ्चदुर्गामन्त्रैः (सर्वत्र, दुर्गाया इदं०) भूरादिव्याहृतिभिश्चाज्येन हुत्वाऽघोरास्त्रेणाऽपामार्गसमिदाज्यचर्वाज्यैः प्रत्येकं १०८ वारं हुत्वा स्विष्टकृदादिहोमशेषं समाप्याऽऽज्यशेषमुदकशेषमपामार्गरसं हुतभस्म च सम्मिश्र्य पलाशशाखयाऽपामार्गशाखयाऽश्वत्थशाखया दर्भमुष्टिना वा राक्षोघ्नमन्त्रैर्गृहं परितः प्रोक्षेत् ॥

अथ वास्तुहोमः ॥ गृहस्येशान्यदिग्भागे स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्याग्नेयेणाऽग्नि-अष्टदलपद्मद्वयं विलिख्य तत्र प्राग्दशमुदग्दशं वा द्विगुणं वस्त्रमास्तीर्य व्रीहितण्डुलान्निक्षिप्य, शमीपर्ण-पलाश-दर्भैराच्छाद्य, तत्र क्रमेण तण्डुलपूर्णं जलपूर्णमेवं कलशद्वयं प्रतिष्ठाप्य, तयोर्दूर्वाशमीपलाशपर्णानि निक्षिप्य, प्रत्येकं वस्त्रद्वयेनावेष्ट्य, वरुणमावाह्य, सम्पूज्य, तदुपरि वास्तुप्रतिमां विन्यस्य 'शन्नो देवीः' इति मन्त्रेण वास्तोष्पतिमावाह्य षोडशोपचारैरभ्यर्चयेत् ॥ तदुत्तरे एकाशीतिपदात्मकं वास्तुमण्डलं

१. सग्रहमखे–ग्रहमण्डलं, तदुत्तरतः पश्चिमपूर्वक्रमेणाष्टदलपद्मयुगलं, तदुत्तरतः एकाशीतिपदात्मकं वास्तुमण्डलञ्च विलिखेत् ॥

विलिखेत् ॥ तद्यथा–पश्चादारभ्य प्रागायतोदक्संस्था अङ्गुलद्वयान्तराला दशरेखा लिखित्वा, दक्षिणमारभ्योदगायताः प्राक्संस्था अङ्गुलद्वयान्तराला दशरेखा विलिखेत् ॥ एवं एकाशीतिपदात्मकं वास्तुमण्डलं विलिख्य प्राग्दशमुदग्दशं वा द्विगुणं वस्त्रमास्तीर्य, व्रीहितण्डुलान्निक्षिप्य तदुपरि ( त्रिपञ्चाशत्कलशान्प्रतिष्ठाप्य ) 'मही द्यौः' इति वरुणं सम्पूज्य क्रमेणावाहयेत् ॥ मध्ये नवपदे—ॐ भूर्भुवस्सुवः ब्रह्मणे नमः ब्रह्माणमावाहयामि ॥ १ ॥ एवमेव—तत्पूर्वषट्पदे–आर्यकाय० आर्यकं० ॥ २ ॥ दक्षिणषट्पदे —विवस्वते० विवस्वन्तं० ॥ ३ ॥ पश्चिमषट्पदे–मित्राय० मित्रं० ॥ ४ ॥ उत्तरषट्पदे–महीधराय० महीधरं० ॥ ५ ॥ ततो ब्रह्मण आग्नेय्यामेकपदे-सावित्राय० सावित्रं० ॥ ६ ॥ तदाग्नेय्यां–सवित्रे० सवितारं० ॥ ७ ॥ ब्रह्मणो नैर्ऋत्यामेकपदे-इन्द्राय० इन्द्रं० ॥ ८ ॥ तन्नैर्ऋत्यामेकपदे–इन्द्रजयाय० इन्द्रजयं० ॥ ९ ॥ ब्रह्मणो वायव्यैकपदे–रुद्राय० रुद्रं० ॥ १० ॥ तद्वायव्यामेकपदे–रुद्रजयाय० रुद्रजयं० ॥ ११ ॥ ब्रह्मण ईशान्यामेकपदे–आपाय० आपं० ॥ १२ ॥ तदीशान्यामेकपदे–आपवत्साय० आपवत्सं० ॥ १३ ॥ सावित्रस्य पुरस्तादेकपदे–शर्वाय० शर्वं० ॥ १४ ॥ सावित्रस्य दक्षिणैकपदे-गुहाय० गुहं० ॥ १५ ॥ इन्द्रस्य दक्षिणैकपदे–अर्यम्णे० अर्यमणं० ॥ १६ ॥ इन्द्रस्य पश्चिमैकपदे–जृम्भकाय० जृम्भकं० ॥ १७ ॥ रुद्रस्य पश्चादेकपदे–पिलिपिञ्छकाय० पिलिपिञ्छकं० ॥ १८ ॥ रुद्रस्योत्तरै-कपदे–चरक्यै० चरकीं० ॥ १९ ॥ आपस्योत्तरैकपदे–विदार्यै० विदारीं० ॥ २० ॥ आपस्य पुरस्तादेकपदे–पूतनायै० पूतनां० ॥ २१ ॥ बाह्ये ईशान्यादि परितः प्रादक्षिण्येनैकैकपदे क्रमेणावाहयेत्–ईशानाय० ईशानं० ॥ २२ ॥ पर्जन्याय० पर्जन्यं० ॥ २३ ॥ जयन्ताय० जयन्तं० ॥ २४ ॥ शक्राय० शक्रं० ॥ २५ ॥ भास्कराय० भास्करं० ॥ २६ ॥ सत्याय० सत्यं० ॥ २७ ॥ भृशाय० भृशं० ॥ २८ ॥ अन्तरिक्षाय० अन्तरिक्षं० ॥ २९ ॥ अग्नये० अग्निं० ॥ ३० ॥ पूष्णे० पूषणं० ॥ ३१ ॥ वितथाय० वितथं० ॥ ३२ ॥ यमाय० यमं० ॥ ३३ ॥ गृहरक्षकाय० गृहरक्षकं० ॥ ३४ ॥ गन्धर्वाय० गन्धर्वं० ॥ ३५ ॥ भृङ्गराजाय० भृङ्गराजं० ॥ ३६ ॥ मृगाय० मृगं० ॥ ३७ ॥ निर्ऋतये०

निर्ऋतिं० ॥ ३८ ॥ दौवारिकाय० दौवारिकं० ॥ ३९ ॥ सुग्रीवाय० सुग्रीवं० ॥ ४० ॥ वरुणाय० वरुणं० ॥ ४१ ॥ पुष्पदन्ताय० पुष्पदन्तं० ॥ ४२ ॥ असुराय० असुरं० ॥ ४३ ॥ शोषाय० शोषं० ॥ ४४ ॥ रोगाय० रोगं० ॥ ४५ ॥ वायवे० वायुं० ॥ ४६ ॥ नागाय० नागं० ॥ ४७ ॥ मुख्याय० मुख्यं० ॥ ४८ ॥ सोमाय० सोमं० ॥ ४९ ॥ भल्लाटाय० भल्लाटं० ॥ ५० ॥ अर्गलाय० अर्गलं० ॥ ५१ ॥ दित्यै० दितिं० ॥ ५२ ॥ अदित्यै० अदितिं० ॥ ५३ ॥ इत्यावाह्य षोडशोपचारपूजां कुर्यात् ॥ ततः प्राणानायम्य देशकालौ सङ्कीर्त्य, सपरिवारस्य यजमानस्य सर्वसङ्कटनानाविधरोगक्लेशबन्धुजनक्षयदुःखरक्षोविघ्नोपशमनसम्पदारोग्यपुत्रपौत्रादिधनधान्यसमृद्धिचिरजीवनस्वानिवासासिद्धिद्वाराऽस्मिन्वास्तौ शुभतासिध्यर्थं (ग्रहमखपूर्वकं) वास्तुहोमं करिष्ये० वरदो नामाऽग्निः, वास्तोष्पतिर्देवता, चरुर्हविः उपहोमे–वास्तोष्पते ध्रुवा स्थूणां० इत्यादि षण्मन्त्रैः सद्योजातमित्यादि पञ्चमन्त्रैः शन्नसूक्तेन चाऽऽज्येन, 'शन्नो देवीः०' इति मन्त्रेण शमीसमिदाज्यचर्वाज्यपञ्चगव्याप्लुतदूर्वाभिः, प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः, ब्रह्मादित्रिपञ्चाशद्देवतानामन्त्रैर्मध्वाज्यदुग्धाप्लुतव्रीहिसुद्रयवैः पायसेन च प्रतिद्रव्यमष्टोत्तरशताष्टाविंशत्यष्टान्यतमसङ्ख्याकाहुतिभिर्यक्ष्ये, अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधाय, वास्तोष्पतये चरुं निरुप्य प्रोक्ष्याऽग्निमुखान्तं कृत्वा पक्वाज्जुहोति–वास्तोष्पते प्रतिजानीहि० वास्तोष्पते शग्मया० इति द्वाभ्यां (वास्तोष्पतय इदं०)। स्विष्टकृतमवदायान्तःपरिधौ निधायाऽथाज्याहुतीरुपजुहोति–वास्तोष्पते ध्रुवा स्थूणां० इत्यादिषण्मन्त्रैः, सद्योजातमित्यादि पञ्चमन्त्रैः, ॐ शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रातहव्या। शमिन्द्रासोमा सुविताय शं योः शन्न इन्द्रापूषणा वाजसातौ स्वाहा ॥ १ ॥ (सर्वत्र, विश्वेभ्यो देवेभ्य इदं०) शन्नो भगः शमु नः शंसो अस्तु शन्नः पुरन्धिः शमु सन्तु रायः। शन्नः सत्यस्य सुयमस्य शंसः शन्नो अर्यमा पुरुजातो अस्तु स्वाहा ॥ २ ॥ शन्नो धाता शमु धर्ता नो अस्तु शन्न उरूची भवतु स्वधाभिः।

शं रोदसी बृहती शन्नो अद्रिः शन्नो देवानां सुहवानि सन्तु स्वाहा ॥ ३॥ शन्नो अग्निर्ज्योतिरनीको अस्तु शन्नो मित्रावरुणावश्विना शम्। शन्नः सुकृतां सुकृतानि सन्तु शन्न इषिरो अभि वातु वातः स्वाहा ॥ ४॥ शन्नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु। शन्न ओषधीर्वनिनो भवन्तु शन्नो रजसस्पतिरस्तु जिष्णुः स्वाहा ॥ ५॥ शन्न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः। शन्नो रुद्रो रुद्रेभिर्जलाषः शन्नस्त्वष्टा ग्नाभिरिह शृणोतु स्वाहा ॥ ६॥ शन्नः सोमो भवतु ब्रह्म शन्नः शन्नो ग्रावाणः शमु सन्तु यज्ञाः। शन्नः स्वरूणां मितयो भवन्तु शन्नः प्रस्वः शम्वस्तु वेदिः स्वाहा ॥ ७॥ शन्नः सूर्य उरुचक्षा उदेतु शन्नश्चतस्रः प्रदिशो भवन्तु। शन्नः पर्वता ध्रुवयो भवन्तु, शन्नः सिन्धवः शमु सन्त्वापः स्वाहा ॥ ८॥ शन्नो अदितिर्भवतु व्रतेभिः शन्नो भवन्तु मरुतः स्वर्काः। शन्नो विष्णुः शमु पूषा नो अस्तु शन्नो भवित्रं शम्वस्तु वायुः स्वाहा ॥ ९॥ शन्नो देवः सविता त्रायमाणः शन्नो भवन्तूषसो विभातीः। शन्नः पर्जन्यो भवतु प्रजाभ्यः शन्नः क्षेत्रस्य पतिरस्तु शम्भुः स्वाहा ॥ १०॥ शन्नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु। शमभिषाचः शमु रातिषाचः शन्नो दिव्याः पार्थिवाः शन्नो अप्याः स्वाहा ॥ ११॥ शन्नः सत्यस्य पतयो भवन्तु शन्नो अर्वन्तः शमु सन्तु गावः। शन्न ऋभवः सुकृतः सुहस्ताः शन्नो भवन्तु पितरो हवेषु स्वाहा ॥ १२॥ शन्नो अजएकपाद्देवो अस्तु शन्नोऽहिर्बुध्न्यः शं समुद्रः। शन्नो अपान्नपात्पेरुरस्तु शन्नः पृश्निर्भवतु देवगोपा स्वाहा ॥ १३॥ आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः। शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः स्वाहा ॥ १४॥ ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः। ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः स्वाहा ॥ १५॥ इति शन्नसूक्तेन च हुत्वा, 'शन्नो देवीः०' इति मन्त्रेण

शमीसमिदाज्यचर्वाज्यपञ्चगव्याप्लुतदूर्वाभिः, तथा ब्रह्मादित्रिपञ्चाशद्देवतानाममन्त्रैः मध्वाज्यदुग्धाप्लुतव्रीहिमुद्गयवैः पायसेन च हुत्वा स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निं दर्भस्तम्बेषु हुतशेषं निदधाति — " ॐ नमो रुद्राय वास्तोष्पतये० " इति ॥ ततो ब्रह्मादित्रिपञ्चाशदेवताभ्यस्तत्तन्नाममन्त्रैः कदलीदुग्धाऽपूपतिलादिमिश्रपायसेन ( सग्रहमखपक्षे—ग्रहदेवताभ्यः ) दिक्पाल-क्षेत्रपालदेवताभ्यश्च सदीपबलीन्दद्यात् ॥ ततो वास्तुदेवताः प्रार्थयेत — वास्तुपुरुष नमस्तेऽस्तु भूशय्यानिरत प्रभो । मद्गृहे धन-धान्यादिसमृद्धिं कुरु सर्वदा ॥ १ ॥ पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः । प्रसीद पाहि विश्वेश देहि मे गृहजं सुखम् ॥ २ ॥ दैविकं मानुषं यद्यत्साध्वसं समुपस्थितम् । अपनुद्य च तत्सर्वं त्वन्नः शान्तिं कुरु प्रभो ॥ ३ ॥ भयं प्रवर्तते यद्यद्द्विपदाञ्च चतुष्पदाम् । रक्षोभूतपिशाचेभ्यस्तन्नुदस्व ददस्व शम् ॥ ४ ॥ राजाऽरितस्कराऽग्न्यम्बुशस्त्रशृङ्गविषादिभिः । भयं यद्यत्समायाति तन्नुदस्व ददस्व शम् ॥ ५ ॥ मारीमसूरिकाराजयक्ष्मादिभ्यो महद्भयम् । कदाचिन्न प्रबाध्येत श्रीः सन्तिष्ठतु मद्गृहे ॥ ६ ॥ कदाचित्कलहोऽलक्ष्मी-रनृतं पौरुषन्त्वधम् । गृहे मे न प्रवर्तेत विजयः श्रीश्च तिष्ठतु ॥ ७ ॥ शान्तिं पुष्टिञ्च तुष्टिञ्च वृद्धिमायुर्यशः श्रियम् । धनधान्य-सुखारोग्यं ददस्व सततं मम ॥ ८ ॥ नियन्ता जगतो ब्रह्मा वास्तुरूपेण संस्थितः । दद्याच्च सुखमारोग्यं धनं धान्यं यशः श्रियम् ॥ ९ ॥ वसन्तु मद्गृहे नित्यं ब्रह्माद्या वास्तुदेवताः । ताः सर्वा वरदाः प्रीता शं कुर्वन्तु सदा मम ॥ १० ॥ इति ॥ उत्तरपरिषेकादि होमशेषं समाप्य स्थालीसङ्क्षाळनमाज्यशेषमुदकशेषं पंचगव्यं हुतभस्म च पात्र्यां समानीयौदुम्बरशाखया पलाशशाखया शमी-शाखया दर्भमुष्टिना वा गृहं सर्वतः पर्युक्षन्त्रिः प्रदक्षिणं पर्येति — " त्वं विप्रस्त्वं कविस्त्वं विश्वा रूपाणि धारयन् । अपजन्यं भयं नुद " इति ॥ तत आचार्यादयः सपत्नीकं यजमानं सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिः ' सुरास्त्वां० ' इत्यादि पौराणमन्त्रैश्च शान्तिकलशेनाभिषिच्य सर्वौषधीननुलिप्य स्नापयेयुः ॥ ततश्चूतपल्लवाश्वत्थपल्लवालङ्कृतां

दर्भरज्जुमादाय राक्षोघ्नसूक्तेन पवमानसूक्तेन च गृहमीशान्यादारभ्येशानपर्यन्तं वेष्टयेत् ॥ ॥ खादिराऽर्जुनशाल-युगपत्र-रक्त-चन्दन-पलाश-रक्तशाल-विशालाऽन्यतमवृक्षनिर्मितं चतुर्विंशति-त्रयोविंशति-विंशति-षोडशान्यतमाङ्गुलप्रमाणं शङ्कुं गन्धादिभिरभ्यर्च्य वास्तौ कुक्षिस्थाने ईशान्यदेशे वाऽवटं खात्वा संस्थाप्य दृढीकृत्य पुनर्गन्धादिभिः सम्पूज्य प्रार्थयेत्-' सशैलसागरां पृथ्वीं यथावहसि मूर्धनि । तथा मां वह कल्याण सम्पत्सन्ततिभिः सह ' इति ॥ ततः शुभे मुहूर्ते पूर्वोक्तप्रकारेण नवागारप्रवेशं कृत्वा आचार्यादीन्सम्पूज्य सवत्सामलङ्कृतां गां वासोयुगञ्चाचार्याय ब्रह्मणेऽनड्वाहं सदस्यायाश्वं वासोयुगञ्चान्येभ्यो ऋत्विग्भ्यः ब्रह्मादिप्रीतये काञ्चनं ब्रह्मप्रीतये धेनुं यथाशक्ति दक्षिणाञ्च दत्वा ब्राह्मणान् भोजयित्वाऽऽशिषो गृह्णीयात् ॥

## ॥ अथ महान्यासविधिः ॥

( बो. गृ. शे. सू. ६.१ ) अथातः पञ्चाङ्गरुद्राणां न्यासपूर्वकं जपहोमार्चनाभिषेकाविधिं व्याख्यास्यामः ॥ या ते रुद्रेति शिखायाम् । अस्मिन्महत्यर्णव इति शिरसि । सहस्राणि सहस्रश इति ललाटे । हꣳसश्शुचिषदिति भ्रुवोर्मध्ये । त्र्यम्बकं यजामह इति नेत्रयोः । नमः स्रुत्याय चेति कर्णयोः । मा नस्तोक इति नासिकायाम् । अवतत्येति मुखे । नीलग्रीवा इति कण्ठे । नमस्ते अस्त्वायुधायेति बाह्वोः । या ते हेतिरित्युपबाह्वोः । ये तीर्थानीति हस्तयोः । सद्यो जातमित्यादि पञ्चाऽनुवाकान् पञ्चस्वङ्गुलीषु । नमो वः किरिकेभ्य इति हृदये । नमो गणेभ्य इति पृष्ठे । ( नमस्तक्षभ्य इति कक्षयोः) नमो हिरण्यबाहव इति पार्श्वयोः । विज्यं धनुरिति जठरे । हिरण्यगर्भ इति नाभौ । मीढुष्टमेति कट्याम् । ये भूतानामधिपतय इति गुह्ये । (ये अन्नेष्वित्यण्डयोः) सशिरा जातवेदा इत्यपाने । मा नो महान्तमित्यूर्वोः । एष ते रुद्रभाग इति जान्वोः । सꣳसृष्टजिदिति जङ्घयोः । विश्वं भूतमिति गुल्फयोः । ये पथामिति पादयोः । अध्यवोचदधिवक्तेति

कवचम्। नमो बिल्मिने चेत्युपकवचम्। नमो अस्तु नीलग्रीवायेति तृतीयं नेत्रम्। प्रमुञ्च धन्वन इत्यस्त्रम्। ( य एतावन्तश्चेति दिग्बन्धः। ) ॐ नमो भगवते रुद्रायेति नमस्कारं न्यसेत्–ओङ्कारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः। मोकारन्तु ललाटे वै भकारं मुखमध्यतः॥ गकारं कण्ठदेशे तु वकारं हृदि विन्यसेत्। तेकारं दक्षिणे हस्ते रुकारं वामहस्तके॥ द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत्। सद्यश्च पादयोर्न्यस्य वामं न्यस्योरुमध्यतः॥ अघोरं हृदि विन्यस्य मुखे तत्पुरुषं न्यसेत्। ईशानं मूर्ध्नि विन्यस्य हंसं मन्त्रं समारभेत्। हंस हंसेति यो ब्रूयाद्धंसो नाम सदाशिवः। एवं न्यासविधिं कृत्वा ततः सम्पुटमारभेत्॥ त्रातारमिन्द्रं त्वन्नो अग्ने सुगन्नः पन्थामसुन्वन्तं तत्त्वा याम्यानो नियुद्भिर्वयᳪं सोम तमीशानमस्मे रुद्राः स्योना पृथिवीत्येतत्सम्पुटमिन्द्रादीन् दिक्षु विन्यसेत्। आदौ प्रणवमुच्चार्य व्याहृतीः प्रणवं ततः। बीजं मन्त्रं समुच्चार्य मन्त्रान्ते बीजमुच्चरेत्॥ ततः षोडशधा विभक्तेन विभूरसीत्यनुवाकेन षोडशाङ्गरौद्रीकरणं कुर्यात्। शिखायां मस्तके मूर्ध्नि ललाटेऽक्ष्णोश्च कर्णयोः। मुखे कण्ठे च बाह्वोश्च हृदि नाभौ कटौ तथा॥ ऊर्वोर्जान्वोर्जङ्घयोश्च पादयोः षोडश न्यसेत्। अथ त्वगस्थिगतैरित्याद्युक्त्वा मनो ज्योतिरबोध्याग्निः ( अग्निर्मूर्धा ) मूर्धानं मर्माणि ते जातवेदा इति गुह्यनाभि ( हृदय ) कण्ठमुखशिरांस्यभिमन्त्र्यात्मरक्षा कर्तव्या। शिवसङ्कल्पᳪं हृदयम् ( येनेदं येन कर्माणि येन कर्माण्यपसो यत्प्रज्ञानᳪं सुषारथिर्यस्मिन्नृचो यदत्र षष्ठं यज्जाग्रतो येनेदं येनद्यौर्ये मनो हृदयमचिन्त्यमेका च ये पञ्च वेदाहमेतं यस्यैतं धीराः परात्परतरं चैव परात्परतरं ब्रह्म या वेदादिषु यो वै देवं प्रयतः प्रणवो योऽसौ गोभिर्जुष्टं मा नो महान्तं मा नस्तोके गन्धद्वारां विश्वतश्चक्षुरुत त्र्यम्बकᳪं ऋतᳪं सत्यं ब्रह्म जज्ञानं यः

१. अत्र पुनः—' ललाटे नेत्रयोः कर्णे मुखे बाह्वोश्च नासयोः। हृदि नाभौ मूर्ध्नि पदोर्दशाङ्गेषु न्यसेत्क्रमात् ' इत्यङ्गेषु च विन्यासे दशाङ्गरौद्रीकरणं भवतीत्यप्युक्तम्॥

प्राणतो य आत्मदा कद्रुद्राय कैलास चतुरो वेदान्य इदꣳ शिवसङ्कल्पꣳ षट्त्रिꣳ शत ) पुरुषसूक्तꣳ शिरः। उत्तरनारायणꣳ शिखा। अप्रतिरथं कवचम्। ( यावन्तो गृह्या इति नेत्रम् ) शतरुद्रीयमित्यस्त्रम्। ( अथ पञ्चाङ्गं सकृज्जपित्वा ) हिरण्यगर्भो यः प्राणतो ब्रह्म जज्ञानं मही द्यौरुपश्वासयाग्ने नय या ते अग्न इमं यमप्रस्तरामित्यष्टाङ्गं प्रणमेत्। " उरसा शिरसा दृष्ट्या मनसा वचसा तथा। पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टाङ्ग उच्यते "। अथात्मानमित्यादिना ध्यात्वा द्विजः सम्यक्ततो यजनमारभेत् ॥

महान्यासक्रमः ॥ ॐ या ते रुद्र० चाकशीहि ॥ शिखायै नमः ॥ १ ॥ अस्मिन्महत्यर्णवे० तेषाꣳ० धन्वानि तन्मसि ॥ शिरसे नमः ॥ २ ॥ सहस्राणि सहस्रशो० तेषाꣳ० तन्मसि ॥ ललाटाय नमः ॥ ३ ॥ हꣳसः० ऋतं बृहत् ॥ भ्रुवोर्मध्याय नमः ॥ ४ ॥ त्र्यम्बकं० मामृतात् ॥ नेत्राभ्यां नमः ॥ ५ ॥ नमः स्रुत्याय च पथ्याय च ॥ कर्णाभ्यां नमः ॥ ६ ॥ मा नस्तोके० नमसा विधेम ते ॥ नासिकायै नमः ॥ ७ ॥ अवतत्य धनुः० सुमना भव ॥ मुखाय नमः ॥ ८ ॥ नीलग्रीवाः शितिकण्ठाश्शर्वा० तेषाꣳ० ॥ कण्ठाय नमः ॥ ९ ॥ नीलग्रीवाः शितिकण्ठा दिवꣳ० तेषाꣳ० ॥ उपकण्ठाय नमः ॥ १० ॥ नमस्ते अस्त्वायुधाया० धन्वने ॥ बाहुभ्यां नमः ॥ ११ ॥ या ते हेतिः० परिब्भुज ॥ उपबाहुभ्यां नमः ॥ १२ ॥ ये तीर्थानि० तेषाꣳ० ॥ हस्ताभ्यां नमः ॥ १३ ॥ सद्यो जातं० भवोद्भवाय नमः ॥ अङ्गुष्ठाभ्यां नमः ॥ ( १ ) ॥ वामदेवाय नमो० मनोन्मनाय नमः ॥ तर्जनीभ्यां नमः ॥ ( २ ) ॥ अघोरेभ्योऽथ० रुद्ररूपेभ्यः ॥ मध्यमाभ्यां नमः ॥ ( ३ ) ॥ तत्पुरुषाय० प्रचोदयात् ॥ अनामिकाभ्यां नमः ॥ ( ४ ) ॥ ईशानः सर्व-विद्यानां० सदाशिवोम् ॥ कनिष्ठिकाभ्यां नमः ॥ १४ ॥ नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यः ॥ हृदयाय नमः ॥ १५ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमः ॥ पृष्ठाय नमः ॥ १६ ॥ ( नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः ॥ कक्षाभ्यां नमः ) ॥ नमो हिरण्य-

बाहवे सेनान्ये दिशाञ्च पतये नमः ॥ पार्श्वाभ्यां नमः ॥ १७ ॥ विज्यं धनुः० निषङ्गथिः ॥ जठराय नमः ॥ १८ ॥ हिरण्यगर्भः समवर्तताग्रे० हविषा विधेम ॥ नाभ्यै नमः ॥ १९ ॥ मीढुष्टम० विभ्रदागहि ॥ कट्यै नमः ॥ २० ॥ ये भूतानामधिपतयो० तेषा२० ॥ गुह्याय नमः ॥ २१ ॥ ( ये अन्नेषु० तेषा२० ॥ अण्डाभ्यां नमः ॥ ) स शिरा जातवेदाः । अक्षरं परमं पदम् । वेदानाᳬ शिर उत्तमम् । जातवेदसे शिरसी माता । ब्रह्मभूर्भुवस्सुवरोम् ॥ अपानाय नमः ॥ २२ ॥ मा नो महान्तमुत० रुद्र रीरिषः ॥ ऊरुभ्यां नमः ॥ २३ ॥ एष ते रुद्र भागः० कृत्तिवासाः ॥ जानुभ्यां नमः ॥ २४ ॥ सᳬसृष्टजित्सोम० बाधमानः ॥ जङ्घाभ्यां नमः ॥ २५ ॥ विश्वं भूतं भुवनं चित्रं० रुद्राय नमो अस्तु ॥ गुल्फाभ्यां नमः ॥ २६ ॥ ये पथां० तेषा२० ॥ पादाभ्यां नमः ॥ २७ ॥ अध्यवोचदधिवक्ता० यातुधान्यः ॥ कवचाय नमः ॥ २८ ॥ नमो बिल्मिने च कवचिने च ॥ उपकवचाय नमः ॥ २९ ॥ नमो अस्तु नीलग्रीवाय० तेभ्योऽकरं नमः ॥ तृतीयनेत्राय नमः ॥ ३० ॥ प्रमुञ्च० भगवो वप ॥ अस्त्राय नमः ॥ ३१ ॥ ( य एतावन्तश्च० तेषा२० ॥ दिग्बन्धाय नमः ॥ ( १ ) ॥ ॐ मूर्ध्ने नमः ॥ १ ॥ नं नासिकाग्राय० ॥ २ ॥ मों ललाटाय० ॥ ३ ॥ भं मुखमध्याय० ॥ ४ ॥ गं कण्ठाय नमः ॥ ५ ॥ वं हृदयाय० ॥ ६ ॥ तें दक्षिणहस्ताय० ॥ ७ ॥ रुं वामहस्ताय० ॥ ८ ॥ द्रां नाभ्यै० ॥ ९ ॥ यं पादाभ्यां० ॥ १० ॥ ( २ ) ॥ ॥ सद्यो जातं० भवोद्भवाय नमः ॥ पादाभ्यां० ॥ १ ॥ वामदेवाय० मनोन्मनाय नमः ॥ ऊरुमध्याय० ॥ २ ॥ अघोरेभ्यो० रुद्ररूपेभ्यः ॥ हृदयाय० ॥ ३ ॥ तत्पुरुषाय० प्रचोदयात् ॥ मुखाय० ॥ ४ ॥ ईशानः० सदाशिवोम् ॥ मूर्ध्ने० ॥ ५ ॥ ( ३ ) ॥ ॥ अस्य श्रीहंसगायत्रीमन्त्रस्य । आत्मा ऋषिः । ( अव्यक्त ) गायत्री छन्दः । परमात्मा देवता । हंसगायत्रीप्रसादसिध्यर्थे जपे विनियोगः ॥ हं सां अङ्गुष्ठाभ्यां नमः । हं सीं तर्जनीभ्यां नमः । हं सूं मध्यमाभ्यां० । हं सैं अनामिकाभ्यां० । हं सौं कनिष्ठिकाभ्यां० । हं सः करतलकरपृष्ठाभ्यां० । हं सां

हृदयाय नमः। हं सीं शिरसे स्वाहा। हं सूं शिखायै वषट्। हं सैं कवचाय हुम्। हं सौं नेत्रत्रयाय वौषट्। हं सः अस्त्राय फट्। भूर्भुवः सुवरोमिति दिग्बन्धः॥ " गमागमस्थं गमनादिशून्यं चिद्रूपदीपं तिमिरापहारम्। पश्यामि तं सर्वजनान्तरस्थं नमामि हंसं परमात्मरूपम् " इति ध्यात्वा। हंसः सोऽहं सोऽहं हंसः॥ हंसहंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्॥ इति जपेत्॥ ॥ अथ सम्पुटीकरणम्॥ ॐ भूर्भुवस्सुवः। ॐ ॐ त्रातारमिन्द्रं० मघवा धात्विन्द्रः॥ ॐ पूर्वदिग्भागे (ललाटस्थाने) इन्द्राय नमः॥ १॥ ॐ भूर्भुवस्सुवः। ॐ नं त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्॥ नं आग्नेयदिग्भागे (नेत्रस्थाने) अग्नये नमः॥२॥ ॐ भूर्भुवस्सुवः। ॐ मों अप पाप्मानं भरणीर्भरन्तु। तद्यमो राजा भगवान् विचष्टाम्॥ लोकस्य राजा महतो महान् हि। सुगन्नः पन्थामभयं कृणोतु॥ यस्मिन्नक्षत्रे यम एति राजा। यस्मिन्नेनमभ्यषिञ्चन्त देवाः॥ तदस्य चित्रꣳ हविषा यजाम। अप पाप्मानं भरणीर्भरन्तु॥ मों दक्षिणदिग्भागे (कर्णस्थाने) यमाय नमः॥ ३॥ ॐ भूर्भुवस्सुवः। ॐ भं असुन्वन्तं० निर्ऋते तुभ्यमस्तु। भं निर्ऋतिदिग्भागे (मुखस्थाने) निर्ऋतये नमः॥ ४॥ ॐ भूर्भुवस्सुवः॥ ॐ गं तत्वा यामि० आयुः प्रमोषीः॥ गं पश्चिमदिग्भागे (बाहुस्थाने) वरुणाय नमः॥ ५॥ ॐ भूर्भुवस्सुवः। ॐ वं आनो नियुद्भिः० सदा नः। वं वायव्यदिग्भागे (नासिकास्थाने) वायवे नमः॥ ६॥ ॐ भूर्भुवस्सुवः। ॐ तं वयꣳ सोम व्रते तव। मनस्तनूषु बिभ्रतः। प्रजावन्तो अशीमहि॥ तं उत्तरदिग्भागे (हृदयस्थाने) सोमाय नमः॥७॥ ॐ भूर्भुवस्सुवः। ॐ रुं तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषानो यथा वेदसामसद्वृधे

१. अन्यत्र 'हंसहंसः परमहंसः सोऽहं हंसः सोऽहं हंसः एवमादिपाठ उपलभ्यते।

रक्षिता पायुरदब्धः स्वस्तये ॥ रुं ईशानदिग्भागे ( नाभिस्थाने ) ईशानाय नमः ॥ ८ ॥ ॐ भूर्भुवस्सुवः । ॐ द्रां अस्मे रुद्रा० अस्माऽ अवन्तु देवाः ॥ द्रां ऊर्ध्वदिग्भागे ( मूर्ध्निस्थाने ) ब्रह्मणे नमः ॥ ९ ॥ ॐ भूर्भुवस्सुवः । ॐ यं स्योना पृथिवि० सप्रथाः ॥ यं अधोभागे ( पादस्थाने ) पृथिव्यै नमः ॥ १० ॥

अथ षोडशाङ्गरौद्रीकरणम् ॥ ॐ अं विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ॥ अं शिखायै नमः ॥ १ ॥ ॐ आं वह्निरसि हव्यवाहनो रौद्रेणा० हिꣳसीः ॥ आं शिरसे नमः ॥ २ ॥ ॐ इं श्वात्रोऽसि प्रचेता रौद्रेणा० हिꣳसीः ॥ इं मूर्ध्ने नमः ॥ ३ ॥ ॐ ईं तुथोऽसि विश्ववेदा रौद्रेणा० हिꣳसीः ॥ ईं ललाटाय नमः ॥ ४ ॥ ॐ उं उशिगसि कवी रौद्रेणा० हिꣳसीः ॥ उं नेत्राभ्यां नमः ॥ ५ ॥ ॐ ऊं अङ्घारिरसि बम्भारी रौद्रेणा० हिꣳसीः ॥ ऊं कर्णाभ्यां नमः ॥ ६ ॥ ॐ ऋं अवस्युरसि दुवस्वान्रौद्रेणा० हिꣳसीः ॥ ऋं मुखाय नमः ॥ ७ ॥ ॠं शुन्ध्यूरसि मार्जालीयो रौद्रेणा० हिꣳसीः ॥ ॠं कण्ठाय नमः ॥ ८ ॥ ॐ लृं सम्राडसि कृशानू रौद्रेणा० हिꣳसीः ॥ लृं बाहुभ्यां नमः ॥ ९ ॥ ॐ लॄं परिषद्योऽसि पवमानो० हिꣳसीः ॥ लॄं हृदयाय नमः ॥ १० ॥ ॐ एं प्रतक्कासि नभस्वान् रौद्रेणा० हिꣳसीः ॥ एं नाभ्यै नमः ॥ ११ ॥ ॐ ऐं असम्मृष्टोऽसि हव्यसूदो रौद्रेणा० हिꣳसीः ॥ ऐं कट्यै नमः ॥ १२ ॥ ॐ ओं ऋतधामासि सुवर्ज्योती रौद्रेणा० हिꣳसीः ॥ ओमूरुभ्यां नमः ॥ १३ ॥ ॐ औं ब्रह्मज्योतिरसि सुवर्धामा रौद्रेणा० हिꣳसीः ॥ औं जानुभ्यां नमः ॥ १४ ॥ ॐ अं अजोऽस्येकपाद्रौद्रेणा० हिꣳसीः ॥ अं जङ्घाभ्यां नमः ॥ १५ ॥ ॐ अः अहिरसि बुध्नियो रौद्रेणा० हिꣳसीः ॥ अः पादाभ्यां नमः ॥ १६ ॥ ॥ त्वगस्थिगतैस्सर्वपापैः प्रमुच्यते सर्वभूतेष्वपराजितो भवति ततो भूतप्रेतपिशाचब्रह्मराक्षसयक्षयमदूतशाकिनीडाकिनीसर्पश्वपदतस्करज्वराद्युपद्रव-

जोपघाताः सर्वे ज्वलन्तं पश्यन्तु माꣳ रक्षन्तु (मम यजमानꣳ रक्षन्तु।)॥ ॥ मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम्॥ गुह्याय नमः॥ १॥ अबोध्यग्निः० नाकमच्छ॥ नाभ्यै नमः॥ २॥ (अग्निर्मूर्धा०जिन्वति॥ हृदयाय नमः) मूर्धानं दिवो० जनयन्त देवाः॥ कण्ठाय नमः॥ ३॥ मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजामृतेनाऽभिवस्ताम्। उरोर्वरीयो वरिवस्ते अस्तु जयन्तन्त्वामनुमदन्तु देवाः॥ मुखाय नमः॥ ४॥ जातवेदा यदि वा पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शं प्रजाभ्यो यजमानाय लोकम्। ऊर्जं पुष्टिं ददद्भ्याऽववृत्स्व॥ शिरसे नमः॥ ५॥ (६)

अथ शिवसङ्कल्पः॥ येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम्। येन यज्ञस्त्रायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु॥ १॥ येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा चारु यन्ति। यत्सम्मितं मनस्सञ्चरन्ति तन्मे मनः० ॥ २॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्षमन्तः प्रजानां तन्मे०॥ ३॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु। यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे०॥ ४॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते पशुभिर्वाजिनीवान्। हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे० ॥ ५॥ यस्मिन्नृचस्साम यजूꣳषि यस्मिन्प्रतिष्ठा रथनाभाविवाराः। यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां तन्मे० ॥ ६॥ यदत्र षष्ठं त्रिशतꣳ सुवीरं यज्ञस्य गुह्यं नव नावमाय्यम्। दश पञ्च त्रिꣳशतं यत्परं तन्मे० ॥ ७॥ यज्जाग्रतो दूरमुदैतु सर्वं तत्सुप्तस्य तथैवेति। दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे० ॥ ८॥ येनेदं विश्वं जगतो बभूव ये देवा विमहसो जातवेदाः। तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमास्तन्मे० ॥ ९॥ येन द्यौः पृथिवी चान्तरिक्षञ्च ये पर्वताः प्रदिशो दिशश्च।

येनेदं जगद्व्याप्तं प्रजानां तन्मे० ॥ १० ॥ ये मनो हृदयं ये च देवा ये दिव्या आपो ये सूर्यरश्मिः । ये श्रोत्रे चक्षुषी सञ्चरन्तं तन्मे० ॥ ११ ॥ अचिन्त्यं चाप्रमेयञ्च व्यक्ताऽव्यक्तपरञ्च यत् । सूक्ष्मात्सूक्ष्मतरं ज्ञेयं तन्मे० ॥ १२ ॥ एका च ( दश च ) शतञ्च सहस्रञ्चायुतञ्च नियुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रञ्च मध्यञ्चाऽन्त्यञ्च परार्धञ्च तन्मे० ॥ १३ ॥ ये पञ्चपञ्चादशशतᳪ-सहस्रमयुतन्न्यर्बुदञ्च । ये अग्निचित्तेष्टकास्तᳪ शरीरं तन्मे० ॥ १४ ॥ वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । यस्य योनिं परिपश्यन्ति धीरास्तन्मे० ॥ १५ ॥ यस्यैतं धीराः पुनन्ति कवयो ब्रह्माणमेतं त्वा वृणतामिन्दुम् । स्थावरं जङ्गमं द्यौराकाशं तन्मे० ॥ १६ ॥ परात्परतरञ्चैव तत्पराच्चैव यत्परम् । यत्परात्परतो ज्ञेयं तन्मे० ॥ १७ ॥ परात्परतरं ब्रह्मतत्परात्परतो हरिः । यत्परात्परतोऽधीशं तन्मे० ॥ १८ ॥ या वेदादिषु गायत्री सर्वव्यापि महेश्वरी । ऋग्यजुस्सामाऽथर्वैश्च तन्मे० ॥ १९ ॥ यो वै देवं महादेवं प्रयतः प्रणवः शुचिः । यः सर्वैः सर्ववेदैश्च तन्मे० ॥ २० ॥ प्रयतः प्रणवोङ्कारं प्रणवं पुरुषोत्तमम् । ओङ्कारं प्रणवात्मानं तन्मे० ॥ २१ ॥ योऽसौ सर्वेषु वेदेषु पठ्यते ह्ययमीश्वरः । अकायो निर्गुणो ह्यात्मा तन्मे० ॥ २२ ॥ गोभिर्जुष्टं धनेन ह्यायुषा च बलेन च । प्रजया पशुभिः पुष्कराक्षं तन्मे० ॥ २३ ॥ मा नो महान्तमुत० रीरिषस्तन्मे० ॥ २४ ॥ मा नस्तोके० नमसा विधेम ते तन्मे० ॥ २५ ॥ गन्धद्वारां० श्रियं तन्मे० ॥ २६ ॥ विश्वतश्चक्षुरुतः० देव एकस्तन्मे० ॥ २७ ॥ त्र्यम्बकं० मामृतात्तन्मे० ॥ २८ ॥ ऋतᳪ सत्यं०वै नमो नमस्तन्मे० ॥ २९ ॥ ब्रह्म जज्ञानं० योनिमसतश्च विवस्तन्मे० ॥ ३० ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम तन्मे० ॥ ३१ ॥ य आत्मदा बलदा यस्य विश्वे उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम तन्मे० ॥ ३२ ॥ कद्रुद्राय० हृदे । सर्वोह्येष रुद्रः० अस्तु

तन्मे० ॥ ३३ ॥ कैलासशिखरे० मोदन्ति तन्मे० ॥ ३४ ॥ चतुरो वेदानधीयीत सर्वशास्त्रमयं विदुः । इतिहासपुराणानि तन्मे० ॥३५॥ य इदꣳ शिवसङ्कल्पꣳ सदा ध्यायन्ति ब्राह्मणाः । ते परं मोक्षं गमिष्यन्ति तन्मे मनश्शिवसङ्कल्पमस्तु ॥ ३६ ॥ हृदयाय नमः ॥ सहस्रशीर्षा पुरुषः० साध्यास्सन्ति देवाः ॥ शिरसे स्वाहा ॥ अद्भ्यस्सम्भूतः० सर्वम्मनिषाणा ॥ शिखायै वषट् ॥ ॥ आशुः शिशानो० विश्वाहा शर्म यच्छतु ॥ कवचाय हुम् ॥ यावन्तो गृह्यास्मस्तेभ्यः कर्मकरं पशूनाꣳशर्मासि शर्म यजमानस्य शर्म मे यच्छैक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागस्सह स्वस्राऽम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथासति । सुगं मेषाय मेष्यै अवाम्ब रुद्र मदिमह्यव देवं त्र्यम्बकम् । यथा नश्श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात् ॥ त्र्यम्बकं० मामृतात् ॥ एष ते रुद्र०कृत्तिवासाः ॥ नेत्रत्रयाय वौषट् ॥ ॥ त्वमग्ने रुद्रो०पासि नुत्मना ॥ देवा देवेषु श्रयध्वम् । प्रथमा द्वितीयेषु श्रयध्वम् । द्वितीयास्तृतीयेषु श्रयध्वम् । तृतीयाश्चतुर्थेषु श्रयध्वम् । चतुर्थाः पञ्चमेषु श्रयध्वम् । पञ्चमाष्षष्ठेषु श्रयध्वम् ॥ १ ॥ षष्ठास्सप्तमेषु श्रयध्वम् । सप्तमा अष्टमेषु श्रयध्वम् । अष्टमा नवमेषु श्रयध्वम् । नवमा दशमेषु श्रयध्वम् । दशमा एकादशेषु श्रयध्वम् । एकादशा द्वादशेषु श्रयध्वम् । द्वादशास्त्रयोदशेषु श्रयध्वम् । त्रयोदशाश्चतुर्दशेषु श्रयध्वम् । चतुर्दशाः पञ्चदशेषु श्रयध्वम् । पञ्चदशाष्षोडशेषु श्रयध्वम् ॥ २ ॥ षोडशास्सप्तदशेषु श्रयध्वम् । सप्तदशा अष्टादशेषु श्रयध्वम् । अष्टादशा एकान्नविꣳशेषु श्रयध्वम् । एकान्नविꣳशा विꣳशेषु श्रयध्वम् । विꣳशा एकविꣳशेषु श्रयध्वम् । एकविꣳशा द्वाविꣳशेषु श्रयध्वम् । द्वाविꣳशास्त्रयोविꣳशेषु श्रयध्वम् । त्रयोविꣳशाश्चतुर्विꣳशेषु श्रयध्वम् । चतुर्विꣳशाः पञ्चविꣳशेषु श्रयध्वम् । पञ्चविꣳशाष्षड्विꣳशेषु श्रयध्वम् ॥ ३ ॥ षड्विꣳशास्सप्तविꣳशेषु श्रयध्वम् ।

सप्तवि॑ꣳशा अ॒ष्टावि॑ꣳशेषु श्रयध्वम् । अ॒ष्टावि॑ꣳशा एकान्नत्रि॒ꣳशेषु श्रयध्वम् । एका॒न्नत्रि॑ꣳशास्त्रि॑ꣳशेषु श्रयध्वम् । त्रि॑ꣳशा एकत्रि॑ꣳशेषु श्रयध्वम् । एक॒त्रि॑ꣳशा द्वा॒त्रि॑ꣳशेषु श्रयध्वम् । द्वा॒त्रि॑ꣳशास्त्र॒यस्त्रि॑ꣳशेषु श्रयध्वम् । दे॒वा॑स्त्रिरेकादशा॒स्त्रिस्त्र॑यस्त्रि॑ꣳशाः । उत्त॑रे भवत । उत्त॑र वर्त्मा॑न उत्त॑र सत्वानः । यत्का॑म इ॒दं जु॒हो॑मि । तन्मे॒ समृ॑ध्यताम् । व॒यꣳ स्या॑म॒ पत॑यो र॒यीणाम् । भूर्भुव॒स्सु-व॒स्स्वाहा॑ ॥ अस्त्राय फट् ॥ ('स॒द्योजा॒तं' इत्यादि 'सदाशिवोम्' इति पञ्चाङ्गं सकृज्जपेत्) ॥ ॥ हि॒र॒ण्य॒ग॒र्भः सम॑वर्त॒ताऽग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ आसीत् । स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ उरसा नमः ॥ १ ॥ यः प्रा॑ण॒तो० ह॒विषा॑ विधेम ॥ शिरसा नमः ॥ २ ॥ ब्रह्म॑ ज॒ज्ञानं०मस॑तश्च॒ विवः ॥ दृष्ट्या नमः ॥ ३ ॥ मही द्यौः० भरी॑मभिः ॥ मनसा नमः ॥ ४ ॥ उप॑श्वासय० शत्रू॒न् ॥ वचसा नमः ॥ ५ ॥ अग्ने॒ नय॑० उक्तिं विधेम । पद्भ्यां नमः ॥ ६ ॥ या ते॑ अग्ने॒ रु॒द्रि॑या त॒नूस्तया॑ नः पाहि तस्या॑स्ते॒ स्वाहा॑ ॥ कराभ्यां नमः ॥ इ॒मं य॑म प्रस्त॒रमाहि० मादयस्व ॥ कर्णाभ्यां नमः ॥ ॥ अथात्मानं शिवात्मानं श्रीरुद्ररूपं ध्यायेत् — शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् । नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयञ्च वरेण्यमभयप्रदम् ॥ कमण्डल्वक्षसूत्राभ्यामन्वितं शूलपाणिनम् । ज्वलन्तं पिङ्गलजटं शिखामध्योदधारिणम् ॥ वृषस्कन्धसमारूढमुमादेहार्धधारिणम् । अमृतेनाऽप्लुतं हृष्टं दिव्यभोगसमन्वितम् ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं तं शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजस्सम्यक्ततो यजनमारभेत् ॥ ॥

## ॥ अथ सर्पबलिः ॥ ( बलिहरणानुकृतिः )

( बो. गृ. सू. ३·१० ) संवत्सरेसंवत्सरे षट्सुषट्सु मासेषु चतुर्षुचतुर्षु ऋतावृतौ मासिमासि वा वर्षास्वाश्रेषासु क्रियेत ॥ अपां समीपे वल्मीकाग्रेण वा पचनम् ॥ गन्धोदकैर्दूर्वोदकैश्चाभ्युक्ष्य चित्रास्सुमसनसस्सम्प्रकीर्य यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाऽऽज्येनेक्षुरसेन वा पक्त्वा पायसं घृतपक्कांश्च अपूपानोदनं धानास्सक्तून् करम्भान् लाजानित्युपकिरन्ति —“ नमो अस्तु सर्पेभ्यः ” इति तिसृभिरनुच्छन्दसम् ॥ “ सर्पेभ्यस्स्वाहाऽऽश्रेषाभ्यस्स्वाहा दन्दशूकेभ्यस्स्वाहा इति त्रयस्स्वाहाकाराः उर्वरो गृहपतिरध्वर्युर्धृतराष्ट्र ऐरावतो ब्रह्मदत्तस्तापसो होता पृथुश्रवा दूरेश्रवा उद्गाता ग्लावश्चाजगरश्च प्रस्तोता प्रतिहर्ता शितिपृष्ठो मैत्रावरुणस्तक्षको वैशालकिर्ब्राह्मणाच्छंस्युपनीतिस्ताक्ष्र्यस्सदस्यशिखातिशिखौ नेष्टापोतारौ वारुणो होताऽच्छावाकश्चक्रः पिशङ्ग आग्नीध्रश्चाहिरो महेयस्सुब्रह्मण्योऽर्बुदो ग्रावस्तुत्साण्ड उन्नेता पशगो ध्रुवगोपः कौस्तुको धुरिमेजयश्च जनमेजयश्चेत्येतैरेव नामधेयैः, ‘ समीची नामासि प्राची दिक् ’ इति षड्भिः पर्यायैः, ‘ हेतयो नाम स्थ तेषां वः पुरो गृहाः ’ इति षड्भिः, ‘ इदं सर्पेभ्यो हविरस्तु जुष्टं ’ इति चोपस्थानम् ॥ त्रिवृतान्नेन ब्राह्मणान्सम्पूज्य आशिषो वाचयित्वा ॥ व्याख्यातस्सर्पबलिर्व्याख्यातस्सर्पबालिः ॥

अथ प्रयोगः ॥ संवत्सरे संवत्सरे षट्सु षट्सु मासेषु चतुर्षु चतुर्षु ऋतावृतौ मासि मासि वर्षासु वा आश्लेषानक्षत्रे. कर्ता प्रातः कृतनित्यक्रियोऽपां समीपं वल्मीकमूलं वा गत्वा, शुद्धदेशे उपविश्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, ‘ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सर्पबलिं करिष्ये ’ इति सङ्कल्प्य, गणपतिं सम्पूज्य, मातृकापूजनं नान्दीश्राद्धञ्च

विधाय, 'सर्पाः प्रीयन्ताम्' इति पुण्याहं वाचयेत्॥ अथ गोमयेन गोमर्चमात्रं चतुरस्रं स्थण्डिलमुपलिप्य, गन्धोदकैर्वृर्वोदकैश्चाभ्युक्ष्य, विविधानि पुष्पाणि सम्प्रकीर्य, यवपिष्टानि श्यामाकपिष्टानि वाऽऽज्येनेक्षुरसेन पक्त्वा, पायसं घृतपक्कांश्चापूपानोदनं धानाः (भर्जितयवाः) सक्तूनि (भर्जितयवपिष्टानि) करम्भान् (आज्येन मिश्रितभर्जितयवसक्तून्) लौकिकाग्नौ पचन्ति। देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, प्राणानायम्य देशकालौ सङ्कीर्त्य, मम०सर्पबलिहोमं करिष्ये, अपूर्वं तंत्रं, पचनो नामाऽग्निः, सर्पादयो देवताः, आज्यं हविः, सद्यो यक्ष्ये, इत्याद्यन्वाधाय, परिसमूह्य पर्युक्ष्य परिस्तीर्याऽऽज्यं संस्कृत्य स्रुवं सम्मृज्य 'जुषस्व नः' इत्याद्यग्निमलंकृत्याऽऽज्येन चतस्रो व्याहृतीर्हुत्वाऽऽज्याहुतीर्जुहोति—सर्पेभ्यः स्वाहा आश्रेषाभ्यः० दन्दशूकेभ्यः० इति (यथालिङ्गं त्यागः) ततो व्याहृतीर्मिन्द्राहुती च हुत्वा होमशेषं समापयेत्॥ ततः पूर्वोक्तयवपिष्टादीन्येकीकृत्याज्येन सम्मिश्र्य, पूर्वमुपलेपनादिना संस्कृतस्थण्डिले प्रागग्रेषु दर्भेषु बलिमुपहरति—'नमो अस्तु सर्पेभ्यः' इति तिसृभिः प्रतिमन्त्रम्। अन्ते परिषिच्योपतिष्ठते—"जीर्वरो (उर्वरो) गृहपतिरध्वर्युर्धृतराष्ट्र ऐरावतो ब्रह्मदत्तस्तापसो होता पृथुश्रवा दूरेश्रवा उद्गाता ग्लावश्चाजगरश्च प्रस्तोता प्रतिहर्ता शितिपृष्ठो मैत्रावरुणः तक्षको वैशालकिर्ब्राह्मणाच्छंस्युपनीतिस्ताक्ष्यस्सदस्यश्शिखातिशिखौ नेष्टापोतारौ वारुणो होताऽच्छावाकश्चक्रः पिशङ्ग आग्नीध्रश्चाहिरो महेयस्सुब्रह्मण्योऽर्बुदो ग्रावस्तुत्साण्ड उन्नेता पशगो ध्रुवगोपः कौस्तुको धुरिमेजयश्च जनमेजयश्च" इति॥ अथ दिश उपतिष्ठते—पश्चात्प्राङ्मुखस्तिष्ठन् "समीची नामासि० वां जम्भे दधामि" इत्युपस्थाय, उत्तरतो दक्षिणाभिमुखस्तिष्ठन्—"ओजास्विनी नामाऽसि०" इति, पुरस्तात्प्रत्यङ्मुखः—"प्राची नामाऽसि०", दक्षिणत उदङ्मुखः—"अवस्थावा नामासि०", पश्चादूर्ध्वमुखः—अधिपत्नी नामासि०", तत्रैवाऽधोमुखः—"वशिनी नामासि०" इति॥ एवमेव तत्तदाभिमुखः—"हेतयो नाम स्थ' इत्यादि

षड्भिरुपस्थानं कुर्यात्॥ अन्ते 'इदं सर्पेभ्यः' इति चोपस्थानम्॥ अथ त्रिवृतान्नेन ब्राह्मणान् सम्पूज्य 'सर्पाः प्रीयन्ताम्' इति पुण्याहं वाचयित्वाऽऽशिषो गृह्णीयात्॥ ॥

## ॥ वेदपारायणविधिः ॥

(बो. ध. सू. ३.९) अथातोऽनश्नन्पारायणविधिं व्याख्यास्यामः॥ शुचिवासाः स्याच्चीरवासा वा॥ हविष्यमन्नमिच्छेदपः फलानि वा॥ ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याऽद्भिरभ्युक्ष्याऽग्निमुपसमाधाय सम्परिस्तीर्य ताभ्यो देवताभ्यो जुहुयात्॥ अग्नये स्वाहा सोमाय स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वयंभुव ऋग्भ्यो यजुर्भ्यः सामभ्योऽथर्वभ्यश्श्रद्धायै प्रज्ञायै मेधायै श्रियै ह्रियै सवित्रे सावित्र्यै सदसस्पतयेऽनुमतये च हुत्वा वेदादिमारभेत सन्ततमधीयीत नाऽन्तरा व्याहरेन्न वाऽन्तरा विरमेत्। अथाऽन्तरा व्याहरेदथाऽन्तरा विरमेत् त्रीन् प्राणानायम्य वृत्तान्तादेवाऽऽरभेत॥ अप्रतिभायां यावता कालेन न वेद तावन्तं कालं तदधीयीत स यज्जानीयात्॥ ऋक्तो यजुष्टस्सामत इति॥ तद्ब्राह्मणं तच्छन्दसं तद्दैवतमधीयीत॥ द्वादश वेदसंहिता अधीयीत यदनेनाऽनध्यायेऽधीयीत यद्गुरवः कोपिता यान्यकार्याणि भवन्ति ताभिः पुनीते शुद्धमस्य पूतं ब्रह्म भवति॥ अत ऊर्ध्वं सञ्चयः॥ अपरा द्वादश वेदसंहिता अधीत्य ताभिरुशनसो लोकमवाप्नोति॥ अपरा द्वादश वेदसंहिता अधीत्य ताभिर्बृहस्पतेर्लोकमवाप्नोति॥ अपरा द्वादश वेदसंहिता अधीत्य ताभिः प्रजापतेर्लोकमवाप्नोति॥ अनश्नन्संहितासहस्रमधीत्य ब्रह्मभूतो विरजो ब्रह्म भवति ॥ संवत्सरं भैक्षं प्रयुञ्जानो दिव्यं चक्षुर्लभते॥ षण्मासान्यावकभक्षश्चतुरो

मासानुदकसक्तुभक्षा द्वौ मासौ फलभक्षो मासमब्भक्षो द्वादशरात्रं वाऽप्राश्नन्क्षिप्रमन्तर्धीयते ज्ञातीन्पुनाति सप्ताऽवरान्सप्त पूर्वानात्मानं पञ्चदशं पङ्क्तिञ्च पुनाति॥ तामेतां देवनिश्श्रेयणीत्याचक्षते ॥ एतया वै देवा देवत्वमगच्छन्नृषय ऋषित्वम् ॥ तस्य ह वा एतस्य यज्ञस्य त्रिविध एवाऽऽरंभकालः प्रातस्सवने माध्यन्दिने सवने ब्राह्मे वाऽपररात्रे॥ तं वा एतं प्रजापतिस्सप्त ऋषिभ्यः प्रोवाच सप्तर्षयो महाजज्ञवे महाजज्ञुर्ब्राह्मणेभ्यो ब्राह्मणेभ्यः॥

आ समाप्तेर्नाश्नीयात् ॥ यथाशक्ति वा ॥ अपः पयः फलान्योदनं हविष्यमात्रमल्पं भुञ्जीत ॥ नोपरि शयीत ॥ न मैथुनं चरेत् ॥ पतिताद्यैर्न सम्भाषेत ॥ नैतत्समीपेऽधीयीतेति बोधायनः ॥

अत्र पुराणे कलशस्थापनं तत्र सविशेषं ब्रह्मपूजनञ्चोक्तम्—" तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते। कलशं सुदृढं तत्र सुनिर्णिक्तं विभूषितम् ॥ पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः । मृत्तिकां यवसम्मिश्रां वेदिमध्ये क्षिपेत्ततः ॥ पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखः स्थितः । वाग्यतः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ॥ वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतम् । ब्रह्मोपधाने दत्वा तं ततः स्वस्त्ययनं पठेत् ॥ प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्याण्यथोच्यते। यज्ञोपवीतनैवेद्यवस्त्रचन्दनकुङ्कुमैः ॥ स्रग्धूपदीपताम्बूलैरक्षतैश्च पितामहम् । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत् ॥ ततो गुरुञ्च सम्पूज्य यथापाठं पठेत्ततः " इति ॥

अथ प्रयोगः ॥ उदगयन आपूर्यमाणपक्ष आत्मानुकूलदेवनक्षत्रे कर्ता स्नानादिनित्यकर्म निर्वर्त्य ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य, गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य, दर्भेष्वासीनो दर्भान्धारयमाणः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, "मम बाल्याद्यवस्थासु मनोवाक्कायकर्मभिः कृताऽनृतवाद-शूद्रान्नभोजन-शूद्रस्त्रीसेवन-अयाज्ययाजन-

निषिद्धप्रतिग्रह-ब्राह्मणताडन-हनन-निन्दा-प्राणिहिंसन-सुवर्णस्तेय-पतितसंयोग-गुरुतल्पगमन-रजस्वलागमन-सुरापान-असोमपाने-त्यादि सकलपापक्षयद्वारा अग्निष्टोमादि क्रत्वनुष्ठानफलप्राप्त्यर्थं, शान्ति-पुष्टि-तुष्टि-धन-धान्याद्यभिवृध्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं स्वर्गकामः स्वशाखात्मकवेदपारायणं करिष्ये " (पुत्रादि कामनायां पुत्रकामनासिध्यर्थं इत्यादि यथायथमूहः) इति सङ्कल्प्य, गणपतिपूजनं मातृकापूजनं नान्दीश्राद्धं " सविता प्रीयताम् " इति पुण्याहवाचनं कुर्यात् ॥ " अमुकप्रवरान्वितोऽमुकगोत्रोत्पन्नोऽमुकशर्माहं अमुकप्रवरान्वितामुकगोत्रोत्पन्नममुकशाखाध्यायिनममुकशर्माणं ब्राह्मणं वेदपारायणार्थं आचार्यं त्वामहं वृणे " इति ऋत्विग्वरणं मधुपर्कञ्च कुर्यात् ॥ अथाचार्यो देवयजनोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य, प्राणानायम्य देशकालौ सङ्कीर्त्य यजमानेन वृतोऽहं श्रीपरमेश्वरप्रीत्यर्थं वेदपारायणहोमं करिष्ये० बलवर्धनो नामाऽग्निः, (यजमानकर्तृके पारायणे गृह्याग्निमेव बलवर्धननामाऽयमग्निः इति ध्यायेत्) सविता देवता, चरुर्हविः, अग्निः स्विष्टकृदित्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽथ निवीती — अग्रेणाऽग्निं पञ्चकोष्ठेष्वक्षतपुञ्जेषूदगग्रान्कूर्चान्निधायोदगपवर्गं क्रमेण — ' सप्त ते अग्ने० घृतेन ' ॐ भूर्भुवस्सुवः प्रजापतिं काण्डर्षिमावाहयामि, एवमेव — सोमं काण्डर्षिं०, अग्निं काण्डर्षिं०, विश्वान्देवान्काण्डर्षिं०, स्वयम्भुवं काण्डर्षिमावाहयामि इत्यावाह्य गन्धादिभिरभ्यर्च्य, ॐ प्रजापतिं काण्डर्षिं तर्पयामि तर्पयामि, एवमेव–सोमं०, अग्निं०, विश्वान्देवान्०, स्वयंभुवं० इति द्विर्द्विस्तर्पयित्वा, उपवीती-सवित्रे चरुनिर्वापाद्यग्निमुखान्तं कृत्वा-सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधायाऽऽज्याहुतीरुपजुहोति — याज्ञिकीभ्यो देवताभ्यः स्वाहा, साꣳहितीभ्यो०, वारुणीभ्यो०, इत्याद्येकोनविंशत्याहुतीर्हुत्वा, अग्नये स्वाहा, सोमाय०, प्रजापतये०, विश्वेभ्यो देवेभ्यः०, स्वयम्भुवे०, ऋग्भ्यः०, यजुर्भ्यः०, सामभ्यः०, अथर्वभ्यः०, श्रद्धायै०, प्रज्ञायै०, मेधायै०, श्रियै०, ह्रियै०, सवित्रे०, सावित्र्यै०, सदसस्पतये०, अनुमतये० इत्यष्टादशाज्याहुतीश्च हुत्वा (यथालिङ्गं त्यागः) स्विष्टकृदादि होमशेषं समाप्य,

ॐ अग्निं तर्पयामि, सोमं०, प्रजापतिं०, विश्वान्देवान्०, स्वयम्भुवं०, ऋचस्त०, यजूंषि०, सामानि०, अथर्वणस्त०, श्रद्धां०, प्रज्ञां०, मेधां०, श्रियं०, ह्रियं०, सवितारं०, सावित्रीं०, सदसस्पतिं०, अनुमतिं०, इत्यष्टादशमन्त्रैस्तर्पयेत् ॥ ततो हस्तायामविस्तारायां हस्तोच्छ्रायायां यवसम्मिश्रमृत्तिकायां वेद्यां — सुप्रक्षालितं पुष्पपल्लवमालाचन्दनकुङ्कुमादिविभूषितं सुदृढं कुम्भं 'मही द्यौः' इत्यादि विधिना संस्थाप्य वस्त्रयुग्मेनावेष्ट्योत्तराग्रकुशकृतं वत्सजान्वाकृतिवेदं ब्रह्मणः शिर उपधानत्वेन कलशे परिकल्प्य, स्वस्तिसूक्तं पठेत् ॥ तत उर्ध्वाग्रं पञ्चाशत्कुशनिर्मितं कूर्चं निधाय, "ब्रह्म जज्ञानं०" इति मन्त्रेण 'वेदात्मनाय०' इति ब्रह्मगायत्र्या वा सरस्वतीसहितं ब्रह्माणमावाह्य, 'नर्य प्रजां मे गोपाय०' इति प्रतिष्ठाप्य षोडशोपचारैः पूजयेत् ॥ ततो गुरुं प्रणम्य, दर्भासनोपविष्टो दर्भपाणिराचम्य प्राणानायम्य, सव्याहृतिकां गायत्रीं पच्छोऽर्धर्चशोऽनवानमुक्त्वा, वाग्यतः प्रणवोच्चारपूर्वकं 'इषे त्वा०' इत्यादिकं वेदपारायणमारभते। प्रश्नान्तेऽनुवाकान्ते वा विरमेत् ॥ प्रत्यहं प्रहरद्वयपर्यन्तं यावत्पारायणं भवति तावत्कर्तव्यम्। अति त्वरायां सार्धप्रहरद्वयपर्यन्तम् ॥ आरण्यप्रपाठकेषु मध्ये विरामेऽपि तत्तत्प्रपाठकस्योत्तरां शान्तिं कुर्यात्। द्वितीये दिने पूर्वां शान्तिं कृत्वा कृतान्तादारभेत्। कर्मसमाप्त्यन्तं ब्रह्मचर्यमधःशयनं स्वल्पं हविष्याशनञ्च कार्यम्। शक्तौ सत्यामुपोषणम्। ब्रह्मपूजनञ्च प्रत्यहम्। पारायणसमाप्तिपर्यन्तं पतित-रजस्वलादिसम्भाषणं तत्समक्षमध्ययनञ्च न कुर्यात् ॥ ऋत्विक्कर्तृके पारायणकारयित्राऽप्येते नियमाः पालनीयाः ॥

पारायणसमाप्तौ कर्ता स्नानादिचतुष्टयं विधायापां समीपे शुचौ देशे उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य वेदपारायणसाङ्गतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदपारायणोत्सर्जनं करिष्ये, इति सङ्कल्प्य गणपतिं सम्पूज्य "सविता प्रीयताम्"

इति पुण्याहं वाचयित्वा, संस्कारकाण्डोक्तप्रकारेणोत्सर्जनोक्तदेवर्षिपितॄन् पूजयेत् ॥ तत्पश्चिमे भागे—स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, वेदपारायणोत्सर्जनहोमं करिष्ये० बलवर्धनो नामाऽग्निः, सविता देवता, चरुर्हविः, अग्निः स्विष्टकृदित्याद्यन्वाधायाऽग्रेणाग्निं पूर्ववत्पञ्चकाण्डर्षीन्संपूज्य, सवित्रे चरुनिर्वापाद्यग्निमुखान्ते सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय, "याज्ञिकीभ्यो देवताभ्यः स्वाहा" इत्याद्येकोनविंशत्याहुतीर्हुत्वा, स्विष्टकृदादिहोमशेषं समापयेत् ॥ अथ दूर्वारोपणोदधावूर्मिनिष्पादनाजिधावनञ्च वर्जयित्वा विधिवत्स्नानं कुर्यात् । अथाऽऽचार्यः सपरिवारं यजमानं प्राङ्मुखमुपवेश्य, कलशोदकेन 'आपो हि ष्ठा०' इत्यादिभिः प्रोक्षयेत् ॥ यजमानः—आचार्यं सम्पूज्य, कलशदान-गोदान-हिरण्यदान-वस्त्रदानादि कृत्वाऽपूपैः सक्तुभिरोदनेनाऽन्यैश्च व्यञ्जनैर्ब्राह्मणान्भोजयित्वा, भूयसीं दक्षिणां दत्वाऽऽशिषो गृह्णीयात् ॥

## ॥ अश्वत्थसंस्कारः ॥

( बो. गृ. शे. सू. २.१० ) अथातोऽश्वत्थसंस्कारं व्याख्यास्यामः ॥ ऋतुर्यथाकामी स्यात् ॥ पुण्ये नक्षत्रे ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयित्वा प्रदक्षिणमश्वत्थं परिसमूहति—'अश्वत्थे वो निषदनं' इति ॥ तमभ्यर्च्य यज्ञोपवीतं प्रतिमुञ्चति । देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा याज्ञिकीं समिधमाज्येनाऽक्त्वा तूष्णीमभ्याधापयति । यथालाभं तूष्णीं वासः परिधापयति । तूष्णीं मेखलां परिव्ययति । मन्त्रवद्ग्रन्थिं करोति । तूष्णीमजिनं प्रतिमुञ्चति । तूष्णीं दण्डं प्रयच्छति । याज्ञिकस्य वृक्षस्य नाम प्रयच्छति ॥ अथाऽश्वत्थमुपनयेत्—'देवस्य त्वा' इति नामग्रहणवर्जम् ॥ आचार्य एव पक्वाज्जुहोति—'तत्सवितुर्वरेण्यम्' इति ॥ अथाऽज्याहुतीरुपजुहोति—'क्षेत्रियै त्वा' इति षड्भिर्व्याहृतिभिश्च ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाऽग्रेणाऽग्निं

पलाशपर्णेषु हुतशेषं निदधाति। तत्पुरस्ताद्व्याख्यातम् ॥ अथ पक्वादुपादायाऽथैनं निवेदयति ॥ तूष्णीं सर्वान् मन्त्रानाचार्य एव जपेदित्याह भगवान् बोधायनः ॥ ॥

अथ प्रयोगः ॥ स्थापनादष्टमे वर्षे द्वादशे एकादशेऽपि वा उत्तरायणे गुरुशुक्रोदये माघ-फाल्गुन-चैत्र-वैशाखेषु शुक्लपक्षे शुभे ऋक्षे शुभवारतिथिलग्नके स्कन्धपर्णाङ्कुराऽन्विते विद्युता दावाग्निना वाऽनभिहतेऽश्वत्थोद्यापनं कुर्यात् ॥ तत्रादौ कनककुण्डले कनकसूत्रे कनकमौञ्जीं होमद्रव्याणि सर्वसम्भारान्यथासम्भवं सम्भृत्याऽश्वत्थस्य चतुरस्रां वेदिकां विधायाऽश्वत्थमूले वर्तुलं चतुरस्रं वाऽऽलवालं वा कृत्वा, तत्र तुलसीं प्लक्षशाखां शमीञ्च रोपयित्वाऽश्वत्थवेदिकायां चतुरस्रं समन्ताच्चतुर्द्वारं चतुर्हस्तमधिकं वाऽश्वत्थात् पूर्वे पश्चिमे उत्तरे वोक्तलक्षणं मण्डपं कृत्वा, स्वगृहे ज्योतिर्विदादिष्टे मुहूर्ते प्रधानसङ्कल्पं कुर्यात् ॥ तिथ्यादि सङ्कीर्त्य "ममाऽऽत्मनः पुण्याऽतिशयाऽऽयुष्य-पुत्र-पौत्र-पशु-वित्त-धन-धान्य-विद्या-कुलाऽभिवृद्धि-कुलकोटिसहितस्वर्लोकप्राप्त्याद्यैहिकाऽऽमुष्मिकफलप्राप्त्यर्थं. दशपूर्वान्दशपरानात्मना सहैकविंशतिपुरुषानुद्धर्तुं, विष्णुपदप्राप्त्यर्थं, तथा चाऽश्वत्थस्य ब्रह्मत्वशान्त्यभीष्टफलदातृत्वाद्यनेकगुणसम्पत्त्यर्थं, यथाज्ञानेन यथामीलितोपचारद्रव्यैर्देशकालाद्यनुसारतः एकाहाद्यधिवासप्रकारेणाऽश्वत्थोद्यापनाख्यं करिष्ये" (पुत्रकामश्चेत्—'ममेह जन्मनि जन्मान्तरे वा नानानिमित्तोपार्जितसन्ततिप्रतिबन्धकाऽदृष्टनिरसनपूर्वकसत्पुत्राऽवाप्तये' इति) इति सङ्कल्प्य गणेशपूजनं कृत्वा मातृकापूजनं नान्दीश्राद्धं विधाय 'लक्ष्मीनारायणः प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादीन्वृत्वा मधुपर्केणाऽर्हयेत् ॥

ततः सर्त्विक्सपत्नीको यजमानः पूर्णकलशहस्तः "भद्रं कर्णेभिः" इत्यादि मन्त्रेण मङ्गलतूर्यघोषेण सहाश्वत्थप्रादक्षिण्येन मण्डपपश्चिमद्वारमागत्य तत्र धरां सम्पूज्य मण्डपं प्रविश्य कलशमश्वत्थसमीपे निधाय, निर्ऋतिवरुणयोर्मध्ये उपविशेत् ॥

तत आचार्यः- 'अश्वत्थोद्यापनकर्मणि वृतोऽहं आचार्यकर्म करिष्ये' इति सङ्कल्प्य, शरीरशुध्यर्थं भूतशुध्यादि पौरुषजपं न्यासांश्च कृत्वा, 'यदत्र संस्थितं०' इति सर्षपलाजान्विकीर्य, साधितपञ्चगव्येन कुशैः सर्वत्र 'शुची वो हव्या०, आपो हि ष्ठा०, उत्तरनारायणेन च प्रोक्ष्य 'भद्रं कर्णेभिः०, स्वस्ति न इन्द्रः०' इति पठित्वा 'देवा आयान्तु, यातुधाना अपयान्तु, विष्णो देवयजनं रक्षस्व' इति भूमौ प्रादेशं कुर्यात्॥ यथोक्तमण्डपाऽकरणे साधारणमण्डपे प्राग्द्वारे-अमन्त्रकं चूतपल्लवतोरणं दक्षिणे-प्लक्षपल्लवतोरणं, पश्चिमे-वटपल्लवतोरणं, उत्तरे-अशोकपल्लवतोरणञ्च बध्वा, तथैव प्रागादि चतुर्द्वारेषु-श्वेत-कृष्ण-हरित-रक्तपताका, अश्वत्थशिरसि महान्तं चित्रध्वजं च बध्नीयात्। अथ प्रागादिद्वारचतुष्टये वेदादिक्रमेण द्वौद्वविकमेकं वा ब्राह्मणं जपार्थं वृत्वाऽश्वत्थस्य तैलहरिद्रारोपणादि लौकिकं कुर्यात्॥ ततः आग्नेय्यां पृथक्स्थण्डिले-राक्षोघ्नहोमं विधाय, ईशान्यां प्रधानकुण्डे स्थण्डिलोल्ले-खनाद्यग्निं प्रतिष्ठाप्य, सग्रहमखस्य वास्तुहोमस्यान्वाधानं कृत्वा, ग्रहवेद्यां-ग्रहान्सम्पूज्य, तदुत्तरे अष्टदलपद्मे-वास्तोष्पतिं, वास्तुमण्डले-ब्रह्मादि त्रिपञ्चाशद्देवता आवाह्य सम्पूजयेत्॥ ततो ग्रहवास्तुहोमान्ते पृथगग्नौ कूष्माण्डहोमं कृत्वा, ततः पृथग्घव्यवाहसंज्ञकेऽग्नावग्नेः षोडशसंस्कारसिद्धये प्रत्येकं चतुर्व्याहृतिभिराज्यं हुत्वा, तस्मात्कुण्डात् "अग्निनाग्निः०" इत्यग्निमुद्धृत्य व्याहृत्या स्वे स्वे कुण्डे निक्षिपेयुः॥ मुख्याचार्यः स्वर्णसूच्याऽश्वत्थे लक्ष्मीनारायणौ लिखेत्। अश्वत्थोपरि चित्रध्वजं पताकाञ्च बध्वा विधिवत्सर्वौषधि कलशं प्रतिष्ठाप्य, तेन "या ओषधीः०" इति स्नापयित्वा, पिष्टकेन भूषयित्वा, "वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम। यन्त्वा यꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय" इति मन्त्रेण गन्धादिभिः सम्पूज्य, गुग्गुलुधूपं दत्वा महानैवेद्यमग्रतो निधाय, सुवर्णशलाकया नेत्रोन्मीलनं कृत्वा, दधिमधुनाऽञ्जने-

नाङ्क्त्वा वेद्यां पीठे धान्यराशौ विधिवत्कलशं प्रतिष्ठाप्य, तत्र सुवर्णप्रतिमायां "वनस्पते शतवल्शः०" इति मन्त्रेण लक्ष्मीनारायणाभ्यां नमः लक्ष्मीनारायणौ आवाहयामि इत्यावाह्य, पुरुषसूक्तेन षोडशोपचारैरभ्यर्चयेत् ॥ ततोऽश्वत्थपरितः पीठसमन्तो वाऽष्टौ कलशान्संस्थाप्य, तत्र पूर्वकलशे 'आपो हि ष्ठा' इति नवर्चेन शुद्धोदकं, आग्नेयकलशे– 'आ नो भद्रा' इति दशर्चेन गन्धोदकं, दक्षिणकलशे–'स्वस्ति नो मिमीतां' इति पञ्चमन्त्रेण क्षीरोदकं, निर्ऋतिकलशे–'शन्न इन्द्राग्नी' इति पञ्चदशर्चेन पञ्चगव्यं, पश्चिमकलशे– 'एतोन्विन्द्रं' इत्यृचेन हरिद्रोदकं, वायव्यकलशे–समुद्र ज्येष्ठा' इति चतसृभिः सर्वौषध्युदकं, उत्तरकलशे–'या आपो दिव्या' इति मन्त्रेण कुशोदकं, ईशान्यकलशे– 'प्रसुव आपः' इति नवर्चेन कुशोदकञ्च प्रपूर्य, 'मही द्यौः' इत्यादि वरुणं संपूज्य तेषु कलशेषु पूर्वादिक्रमेण इन्द्रादीन् तत्तन्मन्त्रैरावाह्य पूजयेत् ॥ सुवर्णशलाकां सूचीञ्च ताम्रपात्र्यां निधायाऽधिवासयेत् ॥ ततो यूपं वेद्यामुत्तरतः संस्थाप्य कुङ्कुमधूपदीपादिभिरभ्यर्च्य वस्त्रयुग्मेनाच्छाद्य नैवेद्यं समर्प्य 'ऊर्ध्व ऊ षु ण०' इत्यधिवासयेत् ॥ ततोऽश्वत्थं पुरुषसूक्तेनाऽथर्वशिरसा पञ्चामृतादिभिरभिषिच्य, षोडशोपचारैः सम्पूजयेत् ॥ अथ पूर्वादिदिक्षु चत्वारि स्थण्डिलानि विधाय, तेषु होमार्थं चतुर आचार्यान्वृत्वा ते स्वगृह्यविधिनाऽग्नीन्स्थापयेयुः ॥ मुख्यकुण्डपश्चिमत आचार्य उपविश्य, प्राणानायम्य देशकालौ सङ्कीर्त्य श्रीपरमेश्वरप्रीत्यर्थमश्वत्थोद्यापनाङ्गम् अधिवासहोमं करिष्ये० बलवर्धनो नामाऽग्निः, लक्ष्मीनारायणो देवता, चरुर्हविः उपहोमे—वनस्पते शतवल्शः इति मन्त्रेण न्यग्रोधोदुम्बराश्वत्थपलाशापामार्गसमित्तिल-पायसद्रव्यैः प्रतिद्रव्यं शतसंख्याकाहुतिभिः, विष्णुसूक्तेनप्रत्यृचं चरुणा, पुरुषसूक्तेन प्रत्यृचमाज्येन, सहस्राणि सहस्रधा इति मन्त्रेण पूर्वोक्तन्यग्रोधादिसप्तद्रव्यैः प्रतिद्रव्यं अष्टाविंशत्यष्टाविंशतिसङ्ख्याकाहुतिभिः, ब्रह्मादिमण्डलदेवतास्तैरेव द्रव्यैः मन्त्रसंख्यया,

अग्निः स्विष्टकृत् इत्याद्यन्वादध्यात् ॥ पूर्वकुण्डे–बलवर्धनो नामाग्निः इत्यादि उपहोमे- वनस्पते शतवल्शः इति मन्त्रेण न्यग्रोधादि सप्तद्रव्यैः प्रतिद्रव्यं शतसङ्ख्याकाहुतिभिः, त्रातारमिन्द्रं०, अग्निर्दा द्रविणं० इति द्वाभ्यां तैरेव द्रव्यैः प्रतिमन्त्रं प्रतिद्रव्यं २८ सङ्ख्याकाहुतिभिः ॥ दक्षिणकुण्डे–बलवर्धनो नामाऽग्निः इत्यादि पूर्वकुण्डवत्। तत्र 'त्रातारमिन्द्रं०, अग्निर्दा०' इत्यत्र 'यमो दधम पृथिविं०, असुन्वन्तमयजमानं०' इति मन्त्रद्वयं, पश्चिमकुण्डे–'सधमादो०, आ नो नियुद्भिः०' इति मन्त्रद्वयं, उत्तरकुण्डे– 'सोमो धेनुं०' इति मन्त्रं योज्यम्, अन्यत्सर्वं पूर्वकुण्डवत् ॥ अग्निः स्विष्टकृदित्यादि सङ्कल्प्यान्वाधायाऽग्निमुखान्तं कृत्वा, विष्णुगायत्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधायाऽन्वाधानोक्तक्रमेण तत्तत्कुण्डे उपहुत्य, स्विष्टकृदादि प्रागुत्तर-परिषेकात्कृत्वा इन्द्रादिभ्यः क्षेत्रपालाय च बलिं दत्वोत्तरपरिषेकादि होमशेषं समाप्य, सर्वे आचार्याः यजमानेन सह उत्तरदिनावधि अग्निं रक्षेयुः ॥ पुराणादिना रात्रिं नयेयुः ॥

प्रातर्नित्यकर्म निर्वर्त्याऽऽचार्यः घटीस्थापनं कृत्वा, पूर्वस्थापिताष्टकलशोदकैः 'पवमानः सुवर्जनः' इत्येतेनाऽनुवाकेन अश्वत्थनारायणं त्रिरभिषिच्य गन्धादिभिः पूजयेत् ॥ अथाचार्यः कुण्डस्य पश्चिमत उपविश्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, "अस्याऽश्वत्थस्य ब्रह्मत्वप्रसन्नताशान्त्यभीष्टदातृत्वादिसिद्ध्ये पुंसवन-सीमन्तोन्नयन-विष्णुबलि-जातकर्म-नामकरणो-पनिष्क्रमणाऽन्नप्राशन-कर्णवेधन-चौलसंस्कारान् व्याहृतिद्वारा करिष्ये" इति सङ्कल्प्य, व्यस्ताभिस्समस्ताभिर्व्याहृतिभिः प्रतिमन्त्रं प्रतिसंस्कारमष्टवारमाज्येन जुहुयात्। प्रतिसंस्कारहोमान्ते 'वनस्पते शतवल्शः०' इति मन्त्रेणाऽश्वत्थं स्पृशेत्। कर्णवेधन-संस्कारेऽधिवासितसूच्या कर्णवेधं कुर्यात् ॥ अस्याऽश्वत्थस्य द्विजत्वसिध्यर्थं उपनयनं करिष्ये० जातवेदा नामाऽग्निः, सविता

देवता, चरुर्हविः, अग्निः स्विष्टकृत्, इत्याद्यन्वाधाय, प्राकृतपात्रैः सह दण्डमजिनं, वस्त्रं, मेखलां समिधश्चाऽऽसादयेत् ॥ 'अश्वत्थे वो निषदनं०' इति प्रदक्षिणमश्वत्थं परिसमुह्य, गन्धादिभिरभ्यर्च्य, आचमनं दत्वा, 'यज्ञोपवीतं०' इति मन्त्रेण यज्ञोपवीतं प्रतिमुञ्चति। सर्वत्र आचार्य एव मन्त्रान्पठेत्। पुनराचमनं दद्यात्। अथ चरुनिर्वापाद्यग्निमुखान्तं कृत्वा, याज्ञिकीं समिधमाज्येनाक्त्वाऽभ्याधापयति —'आयुर्दा देव जरसं०' इति। "या अकृन्तन्नवयन्या०, परिधत्त धत्त०, जरां गच्छ, सि०, परीदं वासः०" इति यथालाभं वासः परिधाप्य, 'इयं दुरुक्तात्०' इति मेखलाः त्रिः परिव्ययति। 'ऋतस्य गोप्त्री०' इति तामनुमन्त्र्य 'प्राणानां ग्रन्थिरसि०' इति नाभिदेशे ग्रन्थिं करोति। 'मित्रस्य चक्षुः०' इत्यजिनं प्रतिमुच्य, 'सोमोऽसि सोमपं मा कुरु' इति दण्डं प्रयच्छति 'त्वं अश्वत्थोऽसि' इति नाम दत्वोपनयेत् 'देवस्य त्वा० उपनये' इति ॥ आचार्यः सावित्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय, 'क्षेत्रियै त्वा' इत्यादि षण्मन्त्रैर्व्याहृतिभिश्चोपहुत्य, स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निं पलाशपर्णेषु हुतशेषं निदधाति —'नमो अस्तु नीलग्रीवाय०' इति। सप्रणवां सव्याहृतिकां सशिरस्कां गायत्रीं अश्वत्थं स्पृष्ट्वा उपदेशवत्पठेत्। ततः पक्वादुपादाय 'शरीरं मे विचर्षणं०' इति मन्त्रेणाऽश्वत्थाय निवेदयेत् ॥ ततो महानाम्नी-महाव्रत-गोदान-समावर्तन-विवाहेषु प्रतिसंस्कारं पूर्ववद्व्याहृतिभिरष्टवारमाज्येन हुत्वाऽश्वत्थं करेण स्पृशेत् ॥ ततः आयुष्यमिति सूक्तेन कुण्डले बध्वा, शलाकया नेत्राञ्जनं कार्यम्। ततोऽश्वत्थमूलस्थतुलस्या हस्तान्मालां गृहीत्वा, यजमानकरे दत्वा मध्येऽन्तःपटं धृत्वा मङ्गलाष्टकं पठित्वा, पटमुत्सृज्य, मालामश्वत्थमूले समर्प्य, भद्रं कर्णेभिरित्यादि पठेयुः। ततो होमशेषं समाप्याश्वत्थोत्तरतः "ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता। ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे" इति यूपं रोपयित्वा, तुलस्या

सहाऽश्वत्थस्य सुवासिनीभिस्तैलहरिद्रारोपणं मङ्गलस्नानञ्च कारयित्वा, कर्मसाद्गुण्याऽवाप्तये लक्ष्मीनारायणप्रीतये च दुकूल-वस्त्रादिनानाद्रव्यपूरितं वंशपात्रदानं कार्यम् ॥ तत्रादौ पूजनम् — ब्रह्मविष्णुशिवादीनां स्थानं त्वं वृक्षराट् स्वयम् । अङ्गैः सर्वैरहो स्वामिन् स्थातव्यन्तु त्वया विभो ॥ इत्यावाहनं समर्पयामि ॥ मूलानि ब्राह्मणा यस्य ऋगाद्याश्चाङ्गपल्लवाः । फलानि यज्ञशाखाश्च वाङ्मयो मे दयां कुरु ॥ आसनं० ॥ सर्वतीर्थमयो यस्मात्सर्वदेवमयो यतः । सर्वतीर्थाम्बुभिस्तस्मात्पाद्यमाधत्स्व वृक्षराट् ॥ पाद्यं० ॥ आपो धर्मस्य यद्बीजमापो धर्मः सनातनः । अद्भ्यः पवित्रं नास्त्यन्यदपामर्घ्यं गृहाण मे ॥ अर्घ्यं० ॥ शुध्यन्ति द्रव्यमात्राणि गङ्गातोयेन नित्यशः । अतः सर्वाणि गात्राणि स्नापये यज्ञवृक्षराट् ॥ स्नानं० ॥ सर्वभूताधिवासाय सर्वदेवमयाय च । सर्वलज्जा-निरासार्थं वाससी कल्पयाम्यहम् ॥ वस्त्रं० ॥ यतो गन्धवती भूमिर्भूमिरूपा हि पादपाः । राजा त्वं पादपानाञ्च चन्दनं प्रतिगृह्यताम् ॥ गन्धं० ॥ वृक्षराज नमस्तुभ्यं यज्ञराज नमोऽस्तु ते । यज्ञाङ्गरूप यज्ञेश वृक्षाश्वत्थ नमोऽस्तुते ॥ पुष्पं० ॥ निर्यासं वृक्षराजानां धूपार्थं कल्पयाम्यहम् । धर्मरूपेण वर्तन्ते वृक्षाश्वत्थाय ते नमः ॥ धूपं० ॥ चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पये भक्त्या परिगृह्णीष्व वृक्षराट् ॥ दीपं० ॥ अन्नाद्भवन्ति भूतानि यज्ञश्चाऽन्नात्प्रवर्तते । अश्वत्थ यज्ञरूपोऽसि नैवेद्यं तेऽर्पयाम्य-हम् ॥ नैवेद्यं० ॥ ( पायसं लड्डुकांश्चार्पयेत् ) फलताम्बूलदक्षिणाः समर्प्य नमस्कारप्रदक्षिणापुष्पाञ्जल्यन्ते प्रार्थयेत् — अश्वत्थोऽ-सि जगन्नाथ पुरा देवैर्विनिर्मितः । पापात्सन्त्राहि नो देव पुण्यं देहि महाफलम् ॥ क्षीरोदधिसमुद्भूते तुलसि हरिवल्लभे । अश्वत्थो-द्यापनफलं देहि मह्यं सदाशिवे ॥ प्रार्थनां० ॥ पूजां समर्प्याऽऽचार्यादीन् सम्पूज्याचार्याय गोदानं, कलशदानमन्येभ्य ऋत्विग्भ्यो दशदानं यथाशक्ति दक्षिणां च दत्वा ब्राह्मणान् यावच्छक्ति सम्भोज्याऽऽशिषो गृह्णीयात् ॥

## ॥ अथ धर्मोपभोगविधिः ॥ ( प्रहुतानुकृतिः )

( बो. गृ. शे. सू. ४·४ ) सेतुबन्धनदीखाततटाकपुष्करिणीवापीकूपदेवगृहप्रासादवसतीनामोषधिवनस्पतीनां च पूर्तं भवति भूतिकामो निशि जुहोति ॥ उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे यज्ञद्रव्याण्यध्वर्युरुपकल्पयते—खादिरं पालाशं वा त्र्यरत्निमात्रं यूपं कृत्वा सौवर्णसर्पशिंशुमारकूर्ममकरकर्कटकमलकुवलयकुमुदोत्पलकल्हाराश्च राजतान् हंसमत्स्यमण्डूकांश्च देवगृहप्रासादवसतीनां तदाकृतिवदोषधिवनस्पतीनां तत्फलाकृतिवत्सुवर्णरत्नेषु सर्पिश्चरुतिलचूर्णपयोऽपूपधानान् सक्तून् करम्भान् गन्धपुष्पधूपदीपवासांसीध्मान्बर्हिषी च ॥ संप्रदोषे द्विजातीनां होमः ॥ शूद्राणां नमस्कारैरावृतैर्वा ॥ तटाकतीरे मध्यपूर्वे स्थण्डिलमुपलिप्य यूपावटं खात्वाऽध्वर्युश्च यूपं प्रतिष्ठापयति—'आब्रह्मन् ब्राह्मणः' इति ब्राह्मणस्य 'अस्मिन्राष्ट्रे' इति राजन्यस्य 'दोग्ध्री धेनुः' इति वैश्यस्य ॥ मणिमुक्ताप्रवाळसुवर्णरजताक्षतैरवकीर्य जघनेन यूपं स्थण्डिलं कृत्वा देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं देवानावाहयति-'ब्रह्मणे, विष्णवे, श्रियै, सूर्याय, चन्द्राय, अग्नये, यमाय, निर्ऋतये, वरुणाय, वायवे, सोमाय, ईशानाय' इत्यावाह्य सुवर्णरजताक्षतैरवकीर्य यूपदेवतानां गन्धपुष्पधूपदीपैरभ्यर्च्य यूपमुपतिष्ठते-'तद्विष्णोः परमं पदम्' इति ॥ तं वासोभिर्वेष्टयित्वा तस्मिन् रूपाणि बध्वा परिधानप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति—'अव ते हेळः, उदुत्तमम्' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति-'कूप्याभ्यः स्वाहा, अद्भ्यः स्वाहा' इत्येताभ्यामनुवाकाभ्याम् 'इमं मे वरुण, तत्वा यामि, यच्चिद्धि, यत्किञ्चेदम्, कितवासो, हिरण्यवर्णाश्शुचयः, त्वं नो अग्ने, स त्वन्नो अग्ने' इति ॥ स्विष्टकृतोऽथ यूपाहुतीर्जुहोति-'ब्रह्मणे स्वाहा, विष्णवे, श्रियै, सूर्याय, चन्द्रमसे, अग्नये, यमाय, निर्ऋतये, वरुणाय, वायवे, सोमाय, ईशानाय स्वाहा' इति ॥ अथौषधिवनस्पतीनां

पक्वाज्जुहोति-'या जाता, शतं वो अम्ब धामानि' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति-'पुष्पावतीः प्रसूवतीः, ओषधीभ्यः स्वाहा, वनस्पतिभ्यः स्वाहा' इति त्रिभिरनुवाकैः प्रत्यृचम् ॥ स्विष्टकृतोऽथ देवगृहेभ्यः पक्वाज्जुहोति-'वास्तोष्पते, वास्तोष्पते' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति-'वास्तोष्पते ध्रुवा स्थूणाम्' इति षड्भिः ॥ स्विष्टकृतोऽथ 'नमस्ते रुद्र मन्यवे' इत्यान्तादनुवाकस्य प्रत्यृचम् ॥ अथ कूष्माण्डाणि हुत्वा पुरस्तात्स्विष्टकृतो 'वैश्वानराय प्रतिवेदयामः' इति ॥ अथ चरुतिलचूर्णपयस्सर्पिर्मिश्रैरपूपैर्धानाभिस्सक्तून् करम्भान् दर्भेषु बलिमुपहरते-'ब्रह्मणे नमः' इति पूर्वोक्तद्वादशनामभिः ॥ त्रिः प्रदक्षिणं यजमानो बलीन्सम्प्रकीर्य यमसूक्तं वाचयित्वा पुरुषसूक्तं चोर्मिमन्तमुदधिं कृत्वा स्नात्वाऽप आचम्य ब्राह्मणेभ्यो वासांसि दद्यादाचार्याय गोमिथुनं दद्याद्वृषभैकादश वा दद्यादाशिषो वाचयित्वा रूपाणि विसर्जयेत् ॥ एवं प्रयुञ्जानो दशपूर्वान् दशपराना-त्मानं चैकविंशतिं पङ्क्तिश्च पुनाति ॥ अथाप्युदाहरन्ति नृत्तगीतवाद्यघोषैः प्रत्यूषे बोधयन्ति । एतेषां नष्टानां पुनः करणमधिकं-फलमिति षष्ठिवर्षसहस्राणि ब्रह्मलोके महीयत इत्याह भगवान् बोधायनः ॥ ॥

पद्मपुराणे — भीष्म उवाच ॥ तटाकारामकूपेषु वापीषु नलिनीषु च । विधिं वदस्व मे ब्रह्मन्देवतायतनेषु च ॥ १ ॥ के तत्र ऋत्विजो विप्रा वेदी वा कीदृशी भवेत् । दक्षिणावलयः कालः स्थानमाचार्य एव च ॥ २ ॥ द्रव्याणि कानि शस्त्राणि सर्वमाचक्ष्व सुव्रत ॥ पुलस्त्य उवाच ॥ शृणु राजन्महाबाहो तटाकादिषु यो विधिः ॥ ३ ॥ पुराणेष्वितिहासोऽयं पठ्यते राजसत्तम । प्राप्य पक्षं शुभं शुक्लं सम्प्राप्ते चोत्तरायणे ॥ ४ ॥ पुण्येऽह्नि विप्रैः कथिते कृत्वा ब्राह्मणवाचनम् । अशुभैर्वर्जिते देशे तटाकस्य समीपतः ॥ ५ ॥ चतुर्हस्तां समां वेदिं चतुरस्रां चतुर्मुखीम् । तथा षोडशहस्तस्स्यान्मण्डपश्च चतुर्मुखः ॥ ६ ॥ वेद्यास्तु परितो गर्ता रत्नि-

मात्रास्त्रिमेखलाः। नव सप्ताऽथ वा पञ्च ऋजुवक्त्रा नृपात्मज ॥७॥ वितस्तिमात्रा योनिः स्यात्षट्सप्ताऽङ्गुलिविस्तृता। गर्ताश्च हस्त-मात्रास्स्युस्त्रिपर्वोच्छ्रितमेखलाः ॥८॥ सर्वतस्तु सवर्णास्स्युः पताकाध्वजसंयुताः। अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि तु ॥ ९ ॥ मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्। शुभास्तत्राष्टहोतारो द्वारपालास्तथाऽष्ट वै ॥ १० ॥ अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः। सर्वलक्षणसम्पूर्णान्मन्त्रज्ञान्विजितेन्द्रियान् ॥ ११ ॥ कुलशीलसमायुक्तान्स्थापयेद्वै द्विजोत्तमान्। प्रतिगर्तेषु कलशान् यज्ञोपकरणानि च ॥ १२ ॥ व्यजने चासनं शुभ्रं ताम्रपात्रं सुविस्तरम्। ततस्त्वनेकवर्णास्स्युर्बलयः प्रतिदैवतम् ॥ १३ ॥ आचार्यः प्रक्षिपेद्भूमावनुमन्त्र्य विचक्षणः। अरत्निमात्रो यूपः स्यात्क्षीरवृक्षविनिर्मितः ॥ १४ ॥ यजमानप्रमाणो वा संस्थाप्यो भूति-मिच्छता। हेमालङ्कारिणः कार्याः पञ्चविंशतिऋत्विजः ॥ १५॥ कुण्डलानि च हैमानि केयूरकटकानि च। तथाङ्गुलिपवित्राणि वासांसि विविधानि च ॥ १६ ॥ दद्यात्समानि सर्वेषामाचार्ये द्विगुणं स्मृतम्। दद्याच्छयनसंयुक्तमात्मनश्चाऽपि यत्प्रियम् ॥ १७॥ सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ। ताम्रौ कुम्भीरमण्डूकौ वायसः शिशुमारकः ॥१८॥ एवमासाद्य तत्सर्वमादावेव विशाम्पते। शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥ १९॥ सर्वौषध्युदकैः सर्वैः स्नापितो वेदपारगैः। यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ॥ २०॥ पश्चिमद्वारमासाद्य प्रविशेद्यागमण्डपम्। ततो मङ्गलशब्देन भेरीणां निस्स्वनेन च॥ २१ ॥ रजसा मण्डलं कुर्यात्पञ्चवर्णेन तत्त्ववित्। षोडशारं ततश्चक्रं पद्मगर्भं चतुर्मुखम् ॥ २२॥ चतुरस्रन्तु परितो वृत्तं मध्ये सुशोभनम्। वेद्याश्चोपरितः कृत्वा ग्रहाँल्लोकपतींस्ततः ॥ २३॥ संन्यसेन्मन्त्रतः सर्वान्प्रतिदिक्षु विचक्षणः। कलशं स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितम् ॥ २४॥ ब्रह्माणञ्च शिवं विष्णुं तत्रैव स्थापयेद्बुधः। विनायकञ्च विन्यस्य कमलामम्बिकान्तथा ॥ २५॥ शान्त्यर्थं

सर्वलोकानां भूतग्रामं न्यसेत्ततः। पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाधिवासनम् ॥ २६ ॥ कुम्भांश्च रत्नगर्भास्तान्वासोभिः परिवेष्टयेत् । पुष्पगन्धैरलङ्कृत्य द्वारपालान्समन्ततः ॥ २७ ॥ यजध्वमिति तान् ब्रूदाचार्यमभिपूजयेत् ॥ बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणे तु यजुर्विदौ ॥ २८ ॥ सामगौ पश्चिमे स्थाप्यावुत्तरेणाप्यथर्वणौ । उदङ्मुखो दक्षिणतो यजमान उपाविशेत् ॥ २९ ॥ यजध्वमिति तान् ब्रूयाद्या-जकान्पुनरेव तान्। उत्कृष्टमन्त्रजाप्येन तिष्ठध्वमिति जापकान् ॥ ३० ॥ एवमादिश्य तान्सर्वान्सन्धुक्ष्याऽग्निं स मन्त्रवित् । जुहुयादाहुती मन्त्रैराज्यं च समिधस्तथा ॥ ३१ ॥ ऋत्विग्भिश्चैव होतव्यं वारुणैरेव सर्वतः। ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च ॥ ३२ ॥ मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्मणे। शान्तिसूक्तश्च रौद्रश्च पावमानश्च मंगलम् ॥ ३३ ॥ जपेच्च पौरुषं सूक्तं पूर्वतो बह्वृचः पृथक्। शाक्रं रौद्रश्च सौम्यश्च कौष्माण्डं जातवेदसम् ॥ ३४ ॥ सौरं सूक्तञ्जपेयुस्ते दक्षिणेन यजुर्विदः। वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम् ॥ ३५ ॥ शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च। वामदेव्यं बृहत्साम रौरवञ्च रथन्तरम् ॥ ३६ ॥ गवां व्रतं विकीर्णश्च रक्षोघ्नश्च यमं तथा। गायेयुः सामगा राजन्पश्चिमद्वारमाश्रिताः ॥ ३७ ॥ अथर्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा। जपेयुर्मनसा देवमाश्रिता वरुणं प्रभुम् ॥ ३८ ॥ पूर्वेद्युरभितो रात्रावेवं कृत्वाऽधिवासनम्। गजाश्वरथवल्मीकसङ्गमाद्व्रजगोकुलात् ॥ ३९ ॥ मृदमादाय कुम्भेषु प्रक्षिपेदोषधीस्तथा। रोचनाश्च ससिद्धार्था गन्धान् गुग्गुलमेव च ॥ ४० ॥ स्नापनं तस्य कर्तव्यं पञ्चगव्यसमन्वितम्। पूर्वं कर्तुर्महामन्त्रैरेवं कृत्वा विधानतः ॥ ४१ ॥ अतिवाह्य क्षपामेवं विधियुक्तेन कर्मणा। ततः प्रभाते विमले सञ्जाते तु शतं गवाम् ॥ ४२ ॥ ब्राह्मणेभ्यः प्रदातव्यमष्टषष्टयथवा पुनः। पञ्चाशद्वाथ षड्विंशत्पञ्चविंशति वा पुनः ॥ ४३ ॥ ततश्चावसरप्राप्ते शुद्धे लग्ने सुशोभने। वेदशब्दैस्सगन्धर्वैर्वाद्यैश्च विविधैः पुनः ॥ ४४ ॥ कनकालङ्कृतां कृत्वा जले गामवतारयेत् ।

सामगाय च सा देया ब्राह्मणाय विशाम्पते ॥ ४५ ॥ पात्रीमादाय सौवर्णां पञ्चरत्नसमन्विताम् । ततो निक्षिप्य मकरान्मत्स्यादींश्चैव सर्वशः ॥ ४६ ॥ धृतां चतुर्भिर्विप्रैश्च वेदवेदाङ्गपारगैः । महानदीजलोपेतां दध्यक्षतविभूषिताम् ॥ ४७ ॥ उत्तराभिमुखान्युब्जांजलमध्ये तु कारयेत् । आथर्वणेन सुस्नातां पुनर्भार्यां तथैव च ॥ ४८ ॥ आपो हि ष्ठेति मन्त्रेण क्षिप्त्वागत्य च मण्डलम् । पूजयित्वा सदस्यान्वै बलिं दद्यात्समन्ततः ॥ ४९ ॥ पुनर्दिनानि होतव्यं चत्वारि राजसत्तम । चतुर्थीकर्म कर्तव्यं देयं तत्राऽपि शक्तितः ॥५०॥ कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च । ऋत्विग्भ्यश्च समं दद्यान्मण्डपं विभजेत्पुनः ॥ ५१ ॥ हेमपात्रीञ्च शय्याञ्च विप्राय च निवेदयेत् । ततः सहस्रं विप्राणामथवाऽष्टशतं तथा ॥ ५२ ॥ भोजनीयं यथाशक्ति पञ्चाशद्वाऽथ विंशतिः । एवमेव पुराणेषु तटाकविधिरुच्यते ॥ ५३ ॥ कूपवापीषु सर्वासु तथा पुष्करिणीषु च । एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च ॥ ५४ ॥ मन्त्रतस्तु विशेषः स्यात्प्रासादोद्यानभूमिषु । अयन्त्वशक्तावर्धेन विधिर्दृष्टः स्वयम्भुवा ॥ ५५ ॥ स्वल्पेष्वेकाऽग्निवत्कार्यो वित्तशाठ्यविवर्जितैः । प्रावृट्काले स्थितं तोयमग्निष्टोमफलं स्मृतम् ॥ ५६ ॥ शरत्कालस्थितं यत्स्यात्तदुक्तफलदायकम् । वाजपेयाऽतिरात्राभ्यां हेमन्ते शिशिरे स्थितम् ॥ ५७ ॥ अश्वमेधफलं प्राहुर्वसन्तसमये स्थितम् । ग्रीष्मेऽपि यत्स्थितं तोयं राजसूयाद्विशिष्यते ॥ ५८ ॥ एतान्महाराज विशेषधर्मान्करोति चोर्व्यामतिशुद्धबुद्धिः । स याति ब्रह्मालयमेव शुद्धः कल्पाननेकान्दिवि मोदते च ॥ ५९ ॥ अनेकलोकान्विचरन्स्वरादीन्भुक्त्वा परार्धद्वयमङ्गनाभिः । सहैव विष्णोः परमं पदं यत्प्राप्नोति तद्योगबलेन भूयः ॥ ६० ॥ ॥

तडाकाद्युत्सर्गप्रयोगः ॥ उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे शुभवासरे वापीकूपतडागाद्युत्सर्गं कुर्यात् । पूर्वेद्युः खादिरं पालाशं वा त्र्यरत्निमात्रमष्टास्रञ्च चषालयुतं मूर्ध्नि वर्तुलं यूपं, सुवर्णनिर्मितान्सर्प-शिंशुमार-कूर्म-मकर-कर्कट-कमल-कुवलय-कुमुद-

उत्पल-कह्लारान्तथा च राजतान्हंस-मत्स्य-मण्डूकान्सर्पिस्तिलयवचूर्णं पयः, अपूपान् धानाः सक्तून् करम्भान् गन्ध-पुष्प-धूप-दीप-वासांसि इध्माबर्हिश्चेति सम्भारान्सम्भृत्य, तटाकतीरे मध्यपूर्वे षोडशहस्तप्रमाणं मध्ये चतुर्हस्तप्रमाणं समचतुरस्रवेदियुतं – वेद्याः पश्चिमतो हस्तमात्रप्रमाणकुण्डयुतं तोरणध्वजपल्लवमाल्यादिभिरलङ्कृतं मण्डपं निर्माय, मार्जनोपलेपनं कुर्यात् ॥ कर्ता सपत्नीकः प्रातर्नित्यकर्म निर्वर्तनान्ते वस्त्राभरणगन्धमाल्यादिभिरलङ्कृतो ब्राह्मणैर्बान्धवैः सह पूर्णकुम्भं पुरस्कृत्य, 'स्वस्ति नो मिमीतां०' इत्यादिमन्त्रघोषमङ्गलवाद्यपुरस्सरं तडागदेशं गत्वा, मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण मण्डपं प्रविश्य निर्ऋतिकोणे उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, "अमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशर्मणो मम सर्वपापक्षयपूर्वकं अनेन तडागोत्सर्गेण दशपूर्वान्दशापरान्पुरुषानात्मानञ्च पवित्रीकर्तुं षष्टिसहस्रवर्षब्रह्मलोकवासादि कल्पोक्तफलावाप्त्यर्थं, अस्य तडागस्य सर्वभोगार्हत्व-सिध्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं तडागोत्सर्गं करिष्ये" इति सङ्कल्प्य, गणपतिं सम्पूज्य, मातृकापूजनं नान्दीश्राद्धञ्च विधाय 'वरुणः प्रीयताम्' इति पुण्याहं वाचयित्वाऽऽचार्यादिकृत्विजो वृत्वा मधुपर्केणाऽर्हयेत् ॥ कर्मसमाप्तिपर्यन्तं यजमानस्योपवासः ॥ शिल्पिनं वस्त्रादिभिः सम्पूज्य । अथाचार्यः 'यदत्र संस्थितं०' इति सर्षपान्विकीर्य, पञ्चगव्येन सर्वतो भूमिं प्रोक्ष्य 'आपो हि ष्ठा०' इति तिसृभिरद्भिः प्रोक्ष्य, 'भद्रं कर्णेभिः०स्वस्ति न इन्द्रः०' इति मन्त्राभ्यां प्रार्थ्य, चतुरस्रवेद्यां–ग्रहमण्डलं वास्तुमण्डलं सर्वतोभद्रमण्डलञ्च विलिख्य सप्तशुद्धिपूर्वकं राक्षोघ्नहवनं ग्रहमखपूर्वकं वास्तुहवनञ्च कुर्यात् ॥ अथ सर्वतोभद्रमण्डले ब्रह्मादिदेवता आवाह्य सम्पूज्य, सुवर्णादिनिर्मितसर्पादीनामग्न्युत्तारणं कृत्वा 'सर्पाय नमः' इत्यादि तत्तन्नाममन्त्रैरावाह्य षोडशोपचारैः पूजयेत् । अथ मण्डप-पूर्वभागे गोमयेनोपलिप्याऽरत्निमात्रमवटं खात्वाऽवटेऽक्षतान्दर्भांश्च निक्षिप्य, पूर्वोक्तखादिराद्यन्यतमवृक्षनिर्मितं यूपं प्रोक्ष्य,

यजमानेनान्वारब्धोऽध्वर्युर्हरिद्रामिश्रितघृतेन सर्वतोऽभ्यक्तं कृत्वा, 'आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायताम्' इति मन्त्रेणावटे प्रतिष्ठापयति। ततो यूपे चषालं प्रतिमुच्य, 'युवा सुवासा०' इति वस्त्रयुग्मेनाच्छाद्य, गन्ध-पुष्पमालादिभिरलङ्कृत्य, यूपस्य परितः- मणि-मुक्ताफल-प्रवाळसुवर्णरजताऽक्षतैरवकिरेत्। ततः सायं नित्यकर्म कृत्वा प्रदोषकाले — देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य, यजमानस्य सर्वपापक्षयपूर्वकं० श्रीपरमेश्वरप्रीत्यर्थं तडागोत्सर्गहोमं करिष्ये, बलवर्धनो नामाऽग्निः, वरुणो देवता, चरुर्हविः, उपहोमश्च — 'कूप्याभ्यः स्वाहा' इत्येताभ्यामनुवाकाभ्यां, 'इमम्मे वरुण०, तत्वा यामि०, यश्चिद्धि ते०, यत्किञ्चेदं०, कितवासो०' 'हिरण्यवर्णाः' इत्यनुवाकेन, 'त्वन्नो अग्ने०, स त्वन्नो अग्ने०' इति द्वाभ्यां 'ब्रह्मणे स्वाहा' इत्यादि त्रयोदशनाम-मन्त्रैश्चाऽऽज्येन, ब्रह्मादिमण्डलदेवताश्चाज्येन, अग्निः स्विष्टकृत्, इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वाऽग्रेणाग्निं वेद्यामष्टदलं विलिख्य 'मही द्यौः०' इत्यादि विधिना कलशं प्रतिष्ठाप्य 'अव ते हेडः० उदुत्तमं०' इति द्वाभ्यां वरुणमावाह्य पूजयेत्। ततो यूपे — ॐ भूर्भुवस्सुवः ब्रह्मणे नमः ब्रह्माणमावाहयामि एवमेव — विष्णवे०। श्रियै०। सूर्याय०। चन्द्रमसे०। इन्द्राय०। अग्नये०। यमाय०। निर्ऋतये०। वरुणाय०। वायवे०। सोमाय०। ईशानाय नमः ईशानमावाहयामि॥ इति त्रयोदश देवता आवाह्य, सुवर्णरजताक्षतैरव-कीर्य, यूपदेवता गन्ध-पुष्प-धूप-दीपैरभ्यर्च्य, यूपमुपतिष्ठते — 'तद्विष्णोः परमं०' इति। पूर्वस्थापितानि सर्पशिशुमारादिरूपाणि यूपे बध्वा प्रार्थयेत्—"देहि मेऽनुग्रहं यूप प्रसादं कुरु च प्रभो॥ मूलच्छेदेन यत्पापं भूमिघातेन पातकम्॥ अदुष्टयूपघातोत्थं यूपः पापं व्यपोहतु॥ यद्बाल्ये यच्च कौमारे यत्पापं वार्धके कृतम्॥ तत्सर्वं मम देवेश यूपः पापं व्यपोहतु॥ यन्निशायां तथा प्रातर्य-न्मध्याह्नापराह्णयोः॥ सन्ध्ययोश्च कृतं पापं कर्मणा मनसा गिरा॥ तत्सर्वं मम देवेश यूपः पापं व्यपोहतु" इति॥ अथ यूपे

पुष्पमालां बध्वा नमस्कुर्यात् ॥ अथ चरुनिर्वापाद्यग्निमुखान्तं कृत्वा, अव ते हेडो० उदुत्तमं० इति द्वाभ्यां पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय, कूप्याभ्यः स्वाहा ॥ कूल्याभ्यः स्वाहा ॥ विकर्याभ्यः स्वाहा ॥ अवट्याभ्यः० ॥ खन्याभ्यः० ॥ ह्रद्याभ्यः० ॥ सूद्याभ्यः० ॥ सरस्याभ्यः० ॥ वैशन्तीभ्यः० ॥ पल्वल्याभ्यः० ॥ वर्ष्याभ्यः० ॥ अवर्ष्याभ्यः० ॥ ह्रादुनीभ्यः० ॥ पृष्वाभ्यः० ॥ स्यन्दमानाभ्यः० ॥ स्थावराभ्यः० ॥ नादेयीभ्यः० ॥ सैन्धवीभ्यः० ॥ समुद्रियाभ्यः० ॥ सर्वाभ्यः० ॥ अद्भ्यः० ॥ वहन्तीभ्यः० ॥ परिवहन्तीभ्यः० ॥ समन्तं वहन्तीभ्यः० ॥ शीघ्रं वहन्तीभ्यः० ॥ शीभं वहन्तीभ्यः० ॥ उग्रं वहन्तीभ्यः० ॥ भीमं वहन्तीभ्यः० ॥ अम्भोभ्यः० ॥ नभोभ्यः० ॥ महोभ्यः स्वाहा ॥ सर्वस्मै स्वाहा ॥ ( यथालिङ्ग त्यागः ) इत्याद्यन्वाधानोक्तक्रमेणाज्यहुतीरुपहुत्य स्विष्टकृदादि प्रागुत्तरपरिषेकात् कृत्वाऽग्रेणाऽग्निं दर्भस्तम्बेषु – ओदन-तिल-यवचूर्ण-अपूपाधाना ( भ्रष्टयव ) सक्तु ( भ्रष्टयवपिष्ट ) करम्भान् ( आज्यमिश्रयवपिष्टान् ) पयसा आज्येन च मिश्रीकृत्य बलिमुपहरते— 'ब्रह्मणे नमः' इत्यादि पूर्वोक्तनाममन्त्रैः। ततः सयूपस्य तटाकस्य त्रिः प्रदक्षिणं बलीन् सम्प्रकीर्य, यमसूक्तं पुरुषसूक्तञ्च पठित्वोत्तरपरिषेकादि होमशेषं समापयेत् ॥ तत आचार्यादयः कलशोदकेन सकुटुम्बस्य सपरिवारस्य यजमानस्याऽभिषेकं कुर्युः॥ ततो यजमानः स्नात्वाऽन्यत्प्रयतं वासः परिधायाचम्य, जलमध्ये पश्चिमतीरमारभ्येशानदिक्पर्यन्तं पुच्छाग्राऽन्वारब्धो गां नयेत् ॥ "इमां धियꣳ शिक्षमाणस्य देवक्रतुं दक्षं वरुण सꣳशिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधिनावꣳ रुहेम" इति अवतीर्यमाणां तां गामनुमन्त्रयीत। "इदं सलिलं पवित्रं कुरुष्व शुद्धाः पूता अमृताः सन्तु नित्यम्। मां तारयन्ती कुरु तीर्थाभिषेकं लोकाल्लोकं तरते तीर्यते च" इति ॥ ( वापीकूपयोर्गोरुत्तारणं नास्ति ) ततस्तां गामाचार्याय दद्यात् ॥ अथ यजमानः साक्षतकुशोदकमञ्जलावादाय "एतत्तटाकस्थितं

जलं अमुकगोत्रोऽमुष्य प्रपौत्रः अमुष्य पौत्रः अमुष्य पुत्रोऽमुकशर्माऽहं श्रीपरमेश्वरप्रीतिकामो नानाभूतेभ्य उत्सृजामि, देवपितृमनुष्यभूतानि च प्रीयन्ताम्" इत्युत्सर्गं कृत्वा प्रार्थयेत्—"सर्वसत्वेभ्य उत्सृष्टं मयैतज्जलमूर्जितम्। सेवन्तां सर्वभूतानि दानपानावगाहनैः॥ सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम्। धर्मार्थकाममोक्षेषु साधनं स्यादहर्निशम्" इति॥ अथाऽऽचार्यादीन् सम्पूज्य, आचार्याय कलशदानं गोदानं ब्राह्मणेभ्यो वासांसि च दत्वा, यूपे बद्धानि सर्पशिशुमारादिरूपाणि विसृजेत्॥ शतं ब्राह्मणान् भोजयित्वा यथाशक्ति भूयसीं दक्षिणां दत्वाऽऽशिषो गृह्णीयात्॥ ॥ एवमेव सेतुबन्ध-नदीखात-पुष्करिणी-वापी-कूपानामुत्सर्गः॥

देवगृह-प्रासाद-वसतीनामुत्सर्गे—पुण्याहवाचने "वास्तोष्पतिः प्रीयताम्" इति विशेषः॥ "वास्तोष्पते०, वास्तोष्पते०" इति द्वाभ्यां वास्तोष्पतिपूजनं पक्वहोमश्च॥ वास्तोष्पते ध्रुवा स्थूणां इत्यादि षण्मन्त्रैः, नमस्ते रुद्र मन्यव इत्यनुवाकेन, यद्देवा देवहेळनं इति त्रिभिरनुवाकैः प्रत्यृचमाज्येनोपहोमः॥ वैश्वानराय प्रतिवेदयामः इत्युपस्थानम्॥ स्विष्टकृदादि सर्वमन्यत्समानम्॥ गोरवतरणस्थाने-देवगृहादिषु सर्वत्र परिभ्रमणम्॥

ओषधिवनस्पतीनां (आरामोद्यानानां) उत्सर्गे—ओषधिवनस्पतयो देवताः॥ 'या जाता ओषधयः०, शतं वो अम्ब धामानि०' इति द्वाभ्यामोषधिवनस्पतिपूजनं पक्वहोमश्च॥ पुष्पावतीः प्रसूवतीः इत्यान्तादनुवाकस्य, ओषधीभ्यः स्वाहा, वनस्पतिभ्यः स्वाहा इत्यनुवाकद्वयेन प्रत्यृचमाज्येनोपहोमः॥ ओषधीभ्यः स्वाहा॥ मूलेभ्यः०॥ तूलेभ्यः०॥ काण्डेभ्यः०॥ वल्शेभ्यः०॥, पुष्पेभ्यः०॥ फलेभ्यः०॥ गृहीतेभ्यः०॥ अगृहीतेभ्यः०॥ अवपन्नेभ्यः०॥ शयानेभ्यः०॥ सर्वस्मै०॥ वनस्पतिभ्यः०॥ मूलेभ्यः०॥

स्कंधोभ्यः० ॥ शाखांभ्यः० ॥ पर्णेभ्यः० ॥ पुष्पेभ्यः० ॥ फलेभ्यः० ॥ गृहीतेभ्यः० ॥ अगृहीतेभ्यः० ॥ अवपन्नेभ्यः ॥ शयानेभ्यः० ॥ शिष्टाय० ॥ अतिशिष्टाय० ॥ परिशिष्टाय० ॥ सꣳशिष्टाय० ॥ उच्छिष्टाय० ॥ रिक्ताय० ॥ अरिक्ताय० ॥ प्ररिक्ताय० ॥ सꣳरिक्ताय० ॥ उद्रिक्ताय० ॥ सर्वस्मै स्वाहा ॥ स्विष्टकृदादि शेषं समानम् ॥

## ॥ वानप्रस्थविधिः ॥

(बो.;ध. सू. ३·३) अथ वानप्रस्थस्य द्वैविध्यम् ॥ पचमानका अपचमानकाश्चेति ॥ तत्र पचमानकाः पञ्चविधाः—सर्वारण्यका वैतुषिकाः कन्दमूलभक्षाः फलभक्षाश्शाकभक्षाश्चेति ॥ तत्र सर्वारण्यका नाम द्विविधाः द्विविधमारण्यमाश्रयन्तः इन्द्रावसिक्ता रेतोवसिक्ताश्चेति ॥ तत्रेन्द्रावसिक्ता नाम वल्लीगुल्मलतावृक्षाणामानयित्वा श्रपयित्वा सायं प्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्वाऽथेतरच्छेषभक्षाः ॥ रेतोवसिक्ता नाम मांसव्याघ्रवृकश्येनादिभिरन्यतमेन वा हतमानयित्वा श्रपयित्वा सायं प्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्वाऽथेतरच्छेषभक्षाः ॥ वैतुषिकास्तुषधान्यवर्जं तण्डुलानानयित्वा श्रपयित्वा सायं प्रातरग्निहोत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्वाऽथेतरच्छेषभक्षाः ॥ कन्दमूलफलशाकभक्षाणामप्येवमेव ॥ पञ्चैवाऽपचमानकाः-उन्मज्जकाः प्रवृत्ताशिनो मुखेनादायिनस्तोयाहारा वायुभक्षाश्चेति ॥ तत्रोन्मज्जका नाम लोहाश्मकरणवर्जम् ॥ हस्तेनाऽऽदाय प्रवृत्ताशिनः ॥ मुखेनाऽऽदायिनो मुखेनाऽऽददते ॥ तोयाहाराः केवलं तोयाहाराः ॥ वायुभक्षा निराहाराश्च ॥ वैखानसानां विहिता दशदीक्षाः ॥ यश्शास्त्रमभ्युपेत्य दण्डश्च मौनश्चाऽप्रमादश्च ॥ वैखानसाश्शुध्यन्ति निराहाराश्चेति ॥ शास्त्रपरिग्रहस्सर्वेषां ब्रह्म-वैखानसानाम् ॥ न द्रुह्येद्दंशमशकान् हिमवान्तापसो भवेत् ॥ वनप्रतिग्रस्सन्तुष्टश्चीरचर्मजलप्रियः ॥ अतिथीन्पूजयेत्पूर्वं काले

त्वाश्रममागतान् । देवविप्राग्निहोत्रे च युक्तस्तपसि तापसः ॥ कृच्छ्रां वृत्तिमसंहार्यां सामान्यां मृगपक्षिभिः । तदहर्जनसम्भारां कषायकटुकाश्रयाम् ॥ परिगृह्य शुभां वृत्तिमेतां दुर्जनवर्जिताम् । वनवासमुपाश्रित्य ब्राह्मणो नाऽवसीदति ॥ मृगैः सह परिस्पन्दः संवासस्तेभिरेव च । तैरेव सदृशी वृत्तिः प्रत्यक्षं स्वर्गलक्षणम् ॥ प्रत्यक्षं स्वर्गलक्षणमिति ॥

( बो. ध. सू. २·६ ) वानप्रस्थो वैखानसशास्त्रसमुदाचारः ॥ वैखानसो वने मूलफलाशी तपःशीलः सवनेषूदकमुपस्पृशञ्छ्रा-मणकेनाऽग्निमाधायाऽग्राम्यभोजी देवपितृभूतमनुष्यर्षिपूजकः सर्वातिथिः प्रतिषिद्धवर्जं भैक्ष्यमप्युपभुञ्जीत न फालकृष्टमधि-तिष्ठेद्ग्रामञ्च न प्रविशेज्जटिलश्चीराजिनवासा नाऽतिसंवत्सरं भुञ्जीत ॥

अथ प्रयोग ॥ अनवद्यं गृहधर्मं चरित्वा पुत्रमुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विधाय, गुणवति पुत्रे कुटुम्बभारं नियोज्य, उत्तरायणे पूर्वपक्षे पुण्ये नक्षत्रे पूर्वेद्युः स्नानादि नित्यकर्म कृत्वा, कुशचीरवल्कलवासा जटी कृष्णाजिनोत्तरीयः सपत्नीकः कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, " ममाऽशेषदुःखनिवृत्तिपूर्वकस्वर्गलोकप्राप्त्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं वानप्रस्थं करिष्ये " इति सङ्कल्प्य, गणपतिं सम्पूज्य, मातृकापूजनं नान्दीश्राद्धञ्च विधाय ' इन्द्राविष्णू प्रीयेताम् ' इति पुण्याहं वाचयित्वा, देव-यजनोल्लेखनादि गृह्याऽग्निं प्रतिष्ठाप्य० श्रीपरमेश्वरप्रीत्यर्थं इन्द्राविष्णूस्थालीपाकं करिष्ये० पचनो नामाऽग्निः, इन्द्राविष्णू देवते, चरुर्हविः, अग्निः स्विष्टकृदित्याद्यन्वाधाय, देवस्य त्वेत्यादि इन्द्राविष्णुभ्यां तण्डुलान्निरुप्य प्रोक्ष्याऽग्निमुखान्तं कृत्वा, "सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अप सस्पारे अस्य । जुषेथां यज्ञं द्रविणञ्च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ उभाजिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् " इति द्वाभ्यां पक्वं हुत्वा ( इन्द्राविष्णु-

भ्यामिदं० ) स्विष्टकृदादि होमशेषं समापयेत् ॥ अथाऽपरेद्युः प्रातर्नित्यकर्म कृत्वौपासनहोमान्तेऽग्नेः पश्चादुपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'श्रीपरमेश्वरप्रीत्यर्थं वनं प्रथास्यन्वास्तोष्पतीयहोमं करिष्ये' इति सङ्कल्प्याऽग्निं परिसमुह्य, पर्युक्ष्य, परिस्तीर्याज्यं संस्कृत्य, स्रुक्स्रुवौ सम्मृज्याऽग्निं परिषिच्य, स्रुचि चतुर्गृहीतं गृहीत्वा, एकां समिधमभ्यावाधाय, 'वास्तोष्पते प्रतिजानीहि०' इति पुरोनुवाक्यामनूच्य, 'वास्तोष्पते शग्मया सꣳसदा ते०' इति याज्यया जुहोति। ( वास्तोष्पतय इदं० ) ॥ पुनः परिषिञ्चेत् ॥ ॥ ततः साग्निको वनं गत्वा तत्र कुटीं कृत्वाऽग्निमुपसमाधाय, वेणु-श्यामाक-नीवारादिभिरारण्यमूलफलैरोषधिभिरहरहः सायं प्रातरौपासन-वैश्वदेव-पञ्चमहायज्ञान् कुर्यात् ॥ यमनियममन्त्रोपासनादिभिः शरीरं परिशोषयेत् ॥ अधःशायी ब्रह्मचारी अतिथिप्रियोऽमत्सरी विवाद-पैशुन्य-मृषावादवर्जी सदाशुचिररण्यवासप्रियः सर्वभूतानामभयदायी परैरभिमृष्टान्याश्रमान्तराहितानि नाऽहरन्तिष्ठेत् ॥ सबीजां प्रोषितां भूमिं नाऽक्रमेत् ॥ तपोधिकाय यज्ञाधिकाय वयोधिकाय फलोदकं दद्यात् ॥ ये चाऽन्ये काल आगच्छेयुस्तेभ्योऽपि दद्यात् ॥ लवण-हिङ्गु-लशुन-मधु-मत्स्य-मांस-दुर्गन्धान्न-दुर्गन्धधान्य-परस्पर्शन-परपाकवर्जी वनचरो ग्रामबहिष्कृतो नारायणपरायणस्तपःशीलो नारायणं ध्यायन्मोक्षमेव प्रार्थयेत् ॥ एवं स्वकालं व्यपोह्य स्वर्गलोकं गमिष्यति॥ अथवा तृतीयमायुर्भागं वानप्रस्थव्रतं चरित्वा, चतुर्थमायुर्भागं परिव्रजेद्वा ॥

## ॥ संन्यासविधिः ॥

( बो. ध. सू. २·१० ) अथाऽतस्संन्यासविधिं व्याख्यास्यामः ॥ सोऽत एव ब्रह्मचर्यवान्प्रव्रजतीत्येकेषाम् ॥ अथ शालीनयायावराणामनपत्यानाम् ॥ विधुरो वा ॥ प्रजाः स्वधर्मे प्रतिष्ठाप्य वा ॥ सप्तत्या ऊर्ध्वं संन्यासमुपदिशन्ति ॥ वानप्रस्थस्य

वा कर्मविरामे ॥ एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैवाऽऽत्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेनेति ॥ अपुनर्भवं नयतीति नित्यः ॥ महदेनं गमयतीति महिमा ॥ अनाश्रमी चतुरः कृच्छ्रानात्मशुध्यर्थं विदध्यादाश्रमी तप्तकृच्छ्रमेकम् ॥ ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा ॥ केशश्मश्रुलोमनखानि वापयित्वोपकल्पयते-यष्टयश्शिक्यं जलपवित्रं कमण्डलुं पात्रमिति ॥ एतत्समादाय ग्रामान्ते ग्रामसीमान्तेऽन्यगारे वाऽऽज्यं पयो दधीति त्रिवृत्प्राश्योप-वसेदपो वा 'त्रिवृदसि' इति त्रिभिर्मन्त्रैः ॥ ॐ भूस्सावित्रीं प्रविशामि तत्सवितुर्वरेण्यम् । ॐ भुवस्सावित्रीं प्रविशामि भर्गो देवस्य धीमहि । ॐ सुवस्सावित्रीं प्रविशामि धियो यो नः प्रचोदयादिति पच्छोऽर्धर्चशस्ततस्समस्तया च व्यस्तया च ॥ आश्रमादाश्रम-मुपनीय ब्रह्मपूतो भवतीति विज्ञायते ॥ अथाऽप्युदाहरन्ति—आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः । भिक्षाबलिपरिश्रान्तः पश्चाद्भवति भिक्षुकः ॥ इति ॥ स एष भिक्षुरानन्त्याय ॥ पुराऽऽदित्यस्याऽस्तमयाद्गार्हपत्यमुपसमाधायाऽन्वाहार्यपचनमाहृत्य ज्वलन्त-माहवनीयमुद्धृत्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याऽऽहवनीये पूर्णाहुतिं जुहोति 'ॐ स्वाहा' इति ॥ एतद्ब्रह्मान्वाधानमिति विज्ञायते ॥ अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु यष्ट्यादीनि कन्थां वासो द्वन्द्वं न्यञ्चि पात्राणि सादयित्वा दक्षिणेनाऽऽहवनीयं ब्रह्मायतने दर्भान्संस्तीर्य तेषु कृष्णाजिनं चाऽन्तर्धायैतां रात्रिं जागर्ति ॥ एवं विद्वान् ब्रह्मरात्रिमुपोष्याऽग्नीन्समारोप्य प्रमीयते सर्वं पाप्मानं तरति तरति ब्रह्महत्याम् ॥ अथ ब्राह्मे मुहूर्त उत्थाय काल एव प्रातरग्निहोत्रं जुहुयात् ॥ अथ पृष्ठ्याः स्तीर्त्वाऽपः प्रणीय वैश्वानरं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः सन्तिष्ठते । आहवनीयेऽग्निहोत्र-पात्राणि प्रक्षिपेदमृण्मयान्यनायसानि । गार्हपत्ये अरणी भवतं नः समनसाविति । अथात्मन्यग्नीन् समारोपयते—या ते अग्ने यज्ञिया तनूः इति त्रिस्त्रिरेकैकं समाजिघ्रति ॥ अथ यज्ञोपवीतं विसृज्याद्भिः सःस्पृश्याप्सु जुहोति वेदान्तेति । अथाऽन्तर्वेदि

तिष्ठन् 'ॐ भूर्भुवस्सुवः संन्यस्तं मया सन्यस्तं मया संन्यस्तं मया' इति त्रिरुपांशूक्त्वा त्रिरुच्चैः॥ त्रिषत्या हि देवा इति विज्ञायते॥ "अभयं सर्वभूतेभ्यो मत्तः" इति चाऽपां पूर्णमञ्जलिं निनयति॥ अथाऽप्युदाहरन्ति-अभयं सर्वभूतेभ्यो दत्वा यश्चरते मुनिः। न तस्य सर्वभूतेभ्यो भयं चाऽपि हि जायते॥ स वाचंयमो भवति॥ 'सखा मे गोपाय' इति दण्डमादत्ते। 'यदस्य पारे रजसः' इति शिक्यं गृह्णाति। 'येन देवाः पवित्रेण' इति जलपवित्रं गृह्णाति। 'येन देवा ज्योतिषोर्ध्वा उदायन्' इति कमण्डलुं गृह्णाति। सप्तव्याहृतीभिः पात्रं गृह्णाति॥ यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतत्समादाय यत्राऽऽपस्तद्गत्वा स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान्धारयित्वोत्तीर्य वासः पीडयित्वाऽन्यत्प्रयतं वासः परिधायाऽप आचम्यों भूर्भुवस्सुवरिति जलपवित्रमादाय तर्पयति-ओं भूस्तर्पयाम्यों भुवस्तर्पयाम्यों सुवस्तर्पयाम्यों महस्तर्पयाम्यों जनस्तर्पयाम्यों तपस्तर्पयाम्यों सत्यं तर्पयामि इति॥ दैववत् पितृभ्योऽञ्जलिमुपादाय ॐ भूस्स्वधों भुवस्स्वधों सुवस्स्वधों भूर्भुवस्सुवर्महर्नमः इति॥ अथोदुत्यं चित्रमिति द्वाभ्यामादित्य-मुपतिष्ठते॥ ओमिति ब्रह्म ब्रह्म वा एष ज्योतिः य एष ज्योतिः य एष तपत्येष वेदः य एष तपति वेद्यमेवैतद्य एष तर्पयति एव-मेवैष आत्मानं तर्पयत्यात्मने नमस्करोत्यात्मा ब्रह्माऽऽत्मा ज्योतिः॥ सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा॥ ॐ भूर्भुवस्सुवरिति पवित्रमादायाऽपो गृह्णति॥ न चाऽत उर्ध्वमनुद्धृताभिरद्भिरपरिस्रुताभिरपरिपूताभिर्वाऽऽचामेत्॥ न चाऽत ऊर्ध्वं शुक्लं वासो धारयेत्॥ एकदण्डी त्रिदण्डी वा॥

संन्यासिनियमाः॥ अेकदण्डी त्रिदण्डी वा॥ अथेमानि व्रतानि भवन्ति—अहिंसा सत्यमस्तैन्यं मैथुनस्य च वर्जनं त्याग इत्येव॥ पञ्चैवोपव्रतानि भवन्ति—अक्रोधो गुरुशुश्रूषाऽप्रमादश्शौचमाहारशुद्धिश्चेति॥ अथ भैक्षचर्या—ब्राह्मणानां

शालीनयायावराणामपवृत्ते वैश्वदेवे भिक्षां लिप्सेत ॥ भवत्पूर्वां प्रचोदयेत् ॥ गोदोहनमात्रमाकाङ्क्षेत् ॥ अथ भैक्षचर्या-दुपावृत्तः शुचौ देशे न्यस्य हस्तपादान्प्रक्षाल्याऽऽदित्यस्याऽग्रे निवेदयेत् — 'उदु त्यं चित्रमिति' ब्रह्मणे निवेदयते ब्रह्म जज्ञानमिति ॥ विज्ञायते — आधानप्रभृति यजमान एवाऽग्नयो भवन्ति तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनो व्यान आहवनीय उदान-समानौ सभ्यावसथ्यौ ॥ पञ्च वा एतेऽग्नय आत्मस्थाः ॥ आत्मन्येव जुहोति ॥ स एष आत्मयज्ञ आत्मनिष्ठ आत्मप्रतिष्ठ आत्मानं क्षेमं नयतीति विज्ञायते ॥ भूतेभ्यो दयापूर्वं संविभज्य शेषमद्भिस्संस्पृश्यौषधवत्प्राश्नीयात् ॥ प्राश्याऽप आचम्य वाङ्म आसन्नसोः प्राण इति जपित्वा ज्योतिष्मत्याऽऽदित्यमुपतिष्ठते उद्वयं तमसस्परीति ॥ अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया । आहार-मात्रं भुञ्जीत केवलं प्राणयात्रिकमिति ॥ अथाप्युदाहरन्ति — अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशाऽरण्यवासिनः । द्वात्रिंशतं गृहस्थ-स्याऽपरिमितं ब्रह्मचारिणः ॥ भैक्षं वा सर्ववर्णेभ्य एकान्नं वा द्विजातिषु । अपि वा सर्ववर्णेभ्यो न चैकान्नं द्विजातिष्विति ॥ अथ यत्रोपनिषदमाचार्या ब्रुवते तत्रोदाहरन्ति — स्थानमौनवीरासनसवनोपस्पर्शनचतुर्थषष्ठाष्टमकालव्रतयुक्तस्य ॥ कण-पिण्याकयावकदधिपयो व्रतत्वं चेति ॥ तत्र मौने युक्तस्त्रैविद्यवृद्धैराचार्यैर्मुनिभिरन्यैर्वाऽऽश्रमिभिर्बहुश्रुतैर्दन्तैर्दन्तान् सन्धाया-न्तर्मुख एव यावदर्थं सम्भाषीत न यत्र लोपो भवतीति विज्ञायते ॥ स्थानमौनवीरासनानामन्यतमेन सम्प्रयोगो न त्रयं सन्निपातयेत् ॥ यत्र गतश्च यावन्मात्रमनुव्रतयेदापत्सु न यत्र लोपो भवतीति विज्ञायते ॥ स्थानमौनवीरासनसवनोपस्पर्शन-चतुर्थषष्ठाष्टमकालव्रतयुक्तस्य । अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधमिति ॥ सायं प्रातरग्निहोत्रमन्त्रान् जपेत् ॥ वारुणीभिः सायं सन्ध्यामुपतिष्ठते मैत्रीभिः प्रातः ॥ अनग्निरनिकेतस्स्यादशर्माऽशरणो मुनिः ॥ भैक्षार्थी ग्राममन्विच्छेत् ॥ स्वाध्याये वाचमुत्सृजेदिति ॥ विज्ञायते च — परिमिता वा ऋचः परिमितानि सामानि परिमितानि

यजूंष्यथैतस्यै वाऽन्तो नाऽस्ति यद्ब्रह्म तत्प्रतिगृणत आचक्षीत स प्रतिगर इति ॥ एवमेवैष आशरीरविमोक्षणाद् वृक्षमूलिको वेदसंन्यासिकः ॥ वेदो वृक्षः तस्य मूलं प्रणवः ॥ प्रणवात्मको वेदः ॥ प्रणवो ब्रह्म प्रणवं ध्यायेत् ॥ प्रणवो ब्रह्मभूयाय कल्पत इति होवाच प्रजापतिः ॥ सप्तव्याहृतिभिर्ब्रह्मभाजनं प्रक्षालयेदिति प्रक्षालयेदिति ॥

अथ प्रयोगः ॥ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति—' वैश्वानराय प्रतिवेदयाम ' इति पुरोनुवाक्यामनूच्य ' वैश्वानरः पवयान्नः पवित्रैः ' इति याज्यया जुहोति। अथाऽऽज्याहुतीरुपजुहोति — ' वैश्वानरो न ऊत्या ' इत्यष्टभिरनुच्छन्दसं ' अग्नये स्वाहा ' इति च। अथैनमुपतिष्ठते—' सहस्रशीर्षा पुरुषः ' इत्येतेनाऽनुवाकेन। स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाऽग्रेणाऽग्निं दर्भस्तम्बेषु हुतशेषं निदधाति—' सर्वो वै रुद्रः, विश्वं भूतं ' इति द्वाभ्याम् ॥ उत्सृजत्यग्निम् ॥ ' आयुर्दा अग्ने हविषो जुषाणः ' इति पक्वादुपादाय ' सहस्रशीर्षा ' इत्यनुवाकेन प्राश्याऽऽचम्याऽऽत्मानं प्रत्यभिमृशति ' ॐ तद् ब्रह्म ' इत्यनुवाकेन। अथाऽग्निद्रव्यमग्नौ प्रक्षिप्याऽऽत्मन्यग्निं समारोपयेत्—' या ते अग्ने यज्ञिया तनूः ' इति ॥

## ॥ कपिलसंन्यासविधिः ॥

( बो. गृ. शे. सू. ४·१६ ) अनग्निकस्तु मुण्डी शिखी वाऽहोरात्रोपोषितः स्नात्वाऽप आचम्याप एव पाणिनाऽप्स्वाहुती जुहोति—' आपो वै सर्वा देवतास्स्वाहा ' इति॥ ' पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च सर्वभूतेभ्यश्च व्युत्थितोऽहं स्वाहा ' इति ॥ ' संन्यस्तं मया संन्यस्तं मया संन्यस्तं मया ' इति त्रिरुपांशूक्त्वा त्रिरुच्चैः ' त्रिषत्या हि देवाः ' इति विज्ञायते॥ ' अभयं सर्वभूतेभ्यो मत्तस्स्वाहा ' इति दण्डान् गृहीत्वा जलपवित्रं ' पवित्रम् ' इति समादाय पुत्रमित्रसुहृद्बन्धुज्ञातिसन्निधौ त्यक्त्वाऽथ

ग्रामादाहृत्यैकपात्रमुदकेनाप्लाव्य सकृदल्पेन भुञ्जति ॥ न केनचित्सह सम्भाषेत ॥ न किञ्चन याचेत ॥ पर्वतगुहानदीपुलिन-शून्यागारे देवतायतने बिलदर्योर्निवसेत् ॥ स्वयं पतितं प्रक्षाळ्य जीवितमुक्तम् ॥ जीर्णमानीयाहृतानि दृढान्यजिनानि यदर्थं बिभृयात् ॥ सूर्योदयहीनयाचितेन कार्यं कुर्वीत ॥ व्रतं स्नानासमर्थो न लभेत् ॥ अथ प्रक्षाळ्य जलार्द्रेण कर्पटेन साशिरस्क-जलापकर्षणं कृत्वाऽन्तर्वासाः परितस्सन्ध्यामुपासीत ॥ नित्यं मध्याह्ने प्रातस्स्नायीतेत्याह भगवान् बोधायनः ॥ ॥

कात्यायनः—ब्रह्मचर्याद्गृहाद्वाऽपि वनाद्वा संन्यसेद्बुधः । पुत्रेषु भार्यां निक्षिप्य मृतपत्नीक एव वा ॥ कुर्यात्कृच्छ्राणि चत्वारि संन्यासेप्सुरनाश्रमी । आश्रमी कृच्छ्रमेकन्तु कृत्वा संन्यासमर्हति ॥ व्यासः—ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा पुनः ॥ विरक्तः सर्वकामेभ्यः पारिव्राज्यं समाश्रयेत् ॥ यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । तावन्न्यासोऽग्निहोत्रञ्च कर्तव्यन्तु कलौ युगे ॥ दत्तात्रेयः—होमं दत्वा तथा सायं कुशान्कृष्णाजिनं ततः । ब्रह्मस्थाने समास्तीर्य ब्रह्मभावेन संस्थितः ॥ ब्रह्मरात्रीं ततो दत्वा विष्णौ संन्यस्य मानसम् ॥ समभ्यर्च्य हृषीकेशं जपन्नेकाक्षरं परम् ॥ यमः—दत्वा तोयाञ्जलिं विप्रो भक्त्या सम्प्रार्थयेद्धरिम् । सर्वदेवात्मके तोये तोयाहुतिमहं हरे ॥ दत्वा सर्वैषणं त्यक्त्वा युष्मच्छरणमागतः । त्राहि मां सर्वलोकेश गतिरन्या न विद्यते ॥ ततो दिगम्बरो भूत्वा गच्छेत्किञ्चिदुदङ्मुखः । जिज्ञासुश्चेत्परावृत्य तिष्ठेत्तदनुशासनात् ॥ भविष्यपुराणे—दण्डन्तु वैणवं सौम्यं सत्वञ्च समपर्वकम् । पुण्यस्थाने समुत्पन्नं नानाकल्माषशोभितम् ॥ अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम् । स्वयम्भूतन्तु मेदिन्यां शाखावर्णमृजुं शुभम् ॥ नासोदग्रं शिरस्तुल्यं भ्रुवोर्वा बिभृयाद्यतिः ॥ परमहंसोपनिषदि—असौ स्वपुत्र-मित्र-कलत्र-बन्ध्वादीञ्छिखां यज्ञोपवीतं यागं सूत्रञ्च स्वाध्यायञ्च सर्वकर्माणि संन्यस्याऽयं ब्रह्माण्डञ्च हित्वा कौपीनं स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत् इति ॥ अत्रिः—शेषं वित्तं त्यजेद्विप्रो धनधान्यादिकञ्च यत् ।

अत्यागात्सर्ववित्तानां संन्यासो निष्फलो भवेत् ॥ बाष्कलः—कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः। यज्ञं यज्ञोपवीतञ्च त्यक्त्वा गूढश्चरेन्मुनि ॥ सुमन्तुः–एष त्यजाम्यहं सर्वं कामभोगादिकं सुखम्। शोकं तोषं विषादञ्च गन्धमाल्यानुलेपनम् ॥ भूषणं नर्तनं गेयं दानमादानमेव च ॥ इत्यादि ॥ पराशरः–ब्रह्मचर्यमहिंसा च सत्यमस्तेयमार्जवम्। वेदान्तश्रवणं ध्यानं भिक्षोः कर्माणि नित्यशः ॥ एकाकी निस्पृहस्तिष्ठेन्न केनाऽपि सहाऽऽलये। दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ॥ मेधातिथिः–भिक्षाटनं जपो ध्यानं स्नानं शौचं सुरार्चनम्। कर्तव्यानि षडेतानि यतिना नृपदण्डवत्। वैखानसः–सप्तत्यूर्ध्वं वृद्धोऽनपत्यो विधुरो वा जन्ममृत्युजरादीन्विचिन्त्य योगार्थी यदा स्यात्तदा, अथवा पुत्रे भार्यां निक्षिप्य परमात्मनि बुद्धिं निवेश्य वनात्संन्यासं कुर्यात् ॥ सायणः—सर्वपापनिवर्हणद्वारा संन्यासं करिष्यमाणः यथाशास्त्रोक्ताधिकारी स्वगृह्योक्तविधिना पञ्चभूतसंस्कारादि आज्यसंस्कारान्तं कर्म कृत्वा, एतैर्वक्ष्यमाण (विरजा) मन्त्रैः प्रधानाहुतीः कुर्यात्। स्विष्टकृदाद्यन्यत्समानम्। सर्वत्र हविर्ग्राहिणी देवता तु परमात्मैव ॥

अथ प्रयोगः ॥ पूर्वमेव गायत्रीजप, रुद्रजप, कूष्माण्ड, गणहवनादिभिः पूतो भूत्वा, उदगयन आपूर्यमाण पक्षे रिक्ततिथौ प्रातः स्नानादिनित्यकर्म कृत्वा, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम संन्यासाधिकारसिध्यर्थं चतुःकृच्छ्रात्मकं प्रायश्चित्तं तत्प्रत्याम्नायगोनिष्क्रयद्वारा अहमाचरिष्ये' इति सङ्कल्प्य तन्निष्क्रयद्रव्यं विप्रेभ्यो दद्यात्। ततः स्नानादि चतुष्टयं विधाय, गणपतिं सम्पूज्य, मातृकापूजनं नान्दीसमाराधनञ्च कृत्वा 'परमात्मा प्रीयताम्' इति पुण्याहं वाचयेत् ॥ ततः पूर्वाह्णे सप्ताष्टौ वा शिखाकेशान्स्थाप्य कक्षोपस्थवर्णं केशश्मश्रुलोमनखानि वापयित्वा, स्नात्वाऽऽचम्य, होमादिद्रव्यमतिरिक्तं द्रव्यजातं विप्रेभ्यः पुत्रादिभ्यश्च दद्यात् ॥ कौपीनादिकं गैरिकराञ्जितं कृत्वा वैणवं दण्डं सत्वचं शिरोभ्रूललाटान्यतमप्रमाणं समूलमङ्गुलिस्थूलं विप्रानीतं एकादश-नव-चतुः-सप्तान्यतमपर्वकं पर्वग्रन्थियुतं मुद्रायुतं सम्पाद्य, शङ्खोदकेन प्रणव-पुरुषसूक्त-

केशवादिद्वादशनामभिरभिषिच्य स्थापयेत् ॥ ततः शिक्यं, (आचमनार्थोदकस्य पावनहेतुभूतं नवं केशादिरहितं द्विगुणं द्विगुणं त्रिगुणं वाऽष्टाङ्गुलं प्रादेशमात्रं) जलपवित्रं, भिक्षापात्रं, वल्कलमजिनं, छत्रं, कन्थां, पादुकाश्च स्थापयेत् ॥ अथाऽग्नेः पश्चादुपविश्य देशकालौ सङ्कीर्त्य, 'अशेषदुःखनिवृत्ति-निरतिशयानन्दप्राप्ति-परमपुरुषार्थप्राप्तये परमहंसाख्यसंन्यासग्रहणं करिष्ये' इति सङ्कल्प्य, पयोदधिमिश्रमाज्यं जलं वा 'त्रिवृदसि' इति प्रथमं प्राश्य, 'प्रवृदसि' इति द्वितीयं, 'संवृदसि' इति तृतीयं, 'आपः पुनन्तु०' इति जलं प्राश्याचम्य सावित्रीप्रवेशं कुर्यात् ॥ (समाप्तिपर्यन्तं न भुञ्जीत) "ॐ भूः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यम् । ॐ भुवः सावित्रीं प्रविशामि, भर्गो देवस्य धीमहि । ॐ सुवः सावित्रीं प्रविशामि, धियो यो नः प्रचोदयात् । ॐ भूः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । ॐ भुवः सावित्रीं प्रविशामि, धियो यो नः प्रचोदयात् । ॐ सुवः सावित्रीं प्रविशामि, तत्सवितुर्वरेण्यं० प्रचोदयात्" इति ॥ ततः सूर्यास्तमयात्पूर्वं स्नात्वा गृह्याग्निमुपसमाधाय (विच्छिन्नश्चेत्पुनःसन्धानविधिना) देशकालौ सङ्कीर्त्य, 'संन्यासं कर्तुं ब्रह्मान्वाधानं करिष्ये' इति सङ्कल्प्य, परिसमूहनाद्याज्यसंस्कारान्तं कृत्वा, स्रुक्स्रुवौ सम्मृज्याऽग्निमलङ्कृत्याज्येन चतस्रो व्याहृतीर्हुत्वा, स्रुचि चतुर्गृहीतं गृहीत्वैकां समिधमग्नावाधाय पूर्णाहुतिं जुहोति — 'ॐ स्वाहा' इति (परमात्मन इदं०) व्याहृतीर्मिन्द्राहुती च हुत्वोत्तरपरिषेकादि शेषं समापयेत् ॥ ॥ अथ सायं सन्ध्योपासनादि कृत्वोत्तरेणाऽग्निं दर्भान्संस्तीर्य, आज्यस्थालीं स्रुवमित्यादि प्राकृतपात्रैः सह पूर्वस्थापितकौपीनाद्यासाद्य, दक्षिणेनाऽग्निं ब्रह्मायतने दर्भानास्तीर्य कृष्णाजिनमन्तर्धायाऽग्निसमीपे जागरणं कुर्यात् ॥ ॥ अथ ब्राह्मे मुहूर्त उत्थाय यथाविधि स्नात्वा नित्यकर्म निर्वर्त्य, देशकालौ सङ्कीर्त्य, श्रीपरमेश्वरप्रीत्यर्थं करिष्यमाणसंन्यासाङ्गभूतं वैश्वानरस्थालीपाकं करिष्ये० पचनो नामाऽग्निः अग्निर्वैश्वानरो देवता,

चरुर्हविः, उपहोमे — ' वैश्वानरो न ऊत्या० ' इत्याद्यष्टभिर्मन्त्रैः ' अग्नये स्वाहा ' इत्यनेन चाऽऽज्येन, अग्निः स्विष्टकृत्, इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वा, ' देवस्य त्वा० अग्नये वैश्वानराय जुष्टं निर्वपामि ' इति तण्डुलान्निरुप्याऽग्निमुखान्तं कृत्वा पक्वाज्जुहोति — ' वैश्वानराय प्रतिवेदयामः०, वैश्वानरः पवयान्नः पवित्रैः० ' इति द्वाभ्याम् ( अग्नये वैश्वानरायेदं० )। स्विष्टकृदवदानाद्यन्वाधानक्रमेण होमः ॥ अथोपोत्थायाऽग्निमुपतिष्ठते — ' सहस्रशीर्षा पुरुषः ' इत्येतेनाऽनुवाकेन ॥ ततः स्विष्टकृत्प्रभृति प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाग्निं दर्भस्तम्बेषु हुतशेषं निदधाति — ' सर्वो वै रुद्रः०, विश्वं भूतं० ' इति द्वाभ्याम् ॥ ' आयुर्दा अग्ने हविषो जुषाणः० ' इति पक्वादुपादाय ' सहस्रशीर्षा पुरुषः ' इत्यनुवाकेन प्राश्याचम्याऽऽत्मानं प्रत्यभिमृशति — ' ॐ तद्ब्रह्म । ॐ तद्वायुः । ० ब्रह्मभूर्भुवः सुवरो३म् ' इति ॥ अथोत्तरपरिषेकादि होमशेषं समापयेत ॥

ततः ( तरत्समन्दी० इति जपित्वा ) कुशहेमरौप्यजलैः स्नात्वा देशकालौ सङ्कीर्त्य, संन्यासाङ्गभूतं विरजाहोमं करिष्ये, इति सङ्कल्प्याऽऽज्यसंस्कारान्तं कृत्वाऽग्निमलङ्कृत्य व्याहृतीर्हुत्वा, तिलाञ्जुहोमि सरसा॑ँ सपिष्टान् गन्धार मम चित्ते रमन्तु स्वाहा ॥ १ ॥ गावो हिरण्यं धनमन्नपान॑ँ सर्वेषा॑ँ श्रियै स्वाहा ॥ २ ॥ श्रियश्च लक्ष्मिश्च पुष्टिश्च कीर्तिश्चाऽऽनृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रजाः सन्ददातु स्वाहा ॥ ३ ॥ तिलाः कृष्णास्तिलाः श्वेतास्तिलाः सौम्या वशानुगाः । तिलाः पुनन्तु मे पापं यत्किञ्चिद्दुरितं मयि स्वाहा ॥ ४ ॥ चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः । गोस्तेय॑ँ सुरापानं भ्रूणहत्या तिला शान्ति॑ँ शमयन्तु स्वाहा ॥ ५ ॥ श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिश्चाऽऽनृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रज्ञा तु जातवेदः सन्ददातु स्वाहा ॥ ६ ॥ प्राणाऽपानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास॑ँ स्वाहा ॥ ७ ॥ वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुध्याकूतिः-

सङ्कल्पा मे शुध्यन्तां ज्योतिरहं० भूयासꣳ स्वाहा ॥ ८ ॥ त्वक्चर्ममाꣳसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ ९ ॥ शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ १० ॥ उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ ११ ॥ पृथिव्यापस्तेजोवायुराकाशा मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ १२ ॥ शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ १३ ॥ मनोवाक्कायकर्माणि मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ १४ ॥ अव्यक्तभावैरहंकारैर्ज्योतिरहं० भूयासꣳ स्वाहा ॥ १५ ॥ आत्मा मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ १६ ॥ अन्तरात्मा मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ १७ ॥ परमात्मा मे शुध्यन्तां० भूयासꣳ स्वाहा ॥ १८ ॥ क्षुधे स्वाहा ॥ १९ ॥ क्षुत्पिपासाय स्वाहा ॥ २० ॥ विविट्यै स्वाहा ॥ २१ ॥ ऋग्विधानाय स्वाहा ॥ २२ ॥ कषोत्काय स्वाहा ॥ २३ ॥ क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीनाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वान्निर्णुद मे पाप्मानꣳ स्वाहा ॥ २४ ॥ अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ २५ ॥ ( सर्वत्र, परमात्मन इदं० ) स्विष्टकृदादि होमशेषं समाप्याऽऽचार्यायाऽऽज्यस्थाल्यादि तैजसपात्राणि हिरण्यं धेनुं च दत्वा, स्रुक्स्रुवादिदारुमयानि पात्राण्यग्नौ प्रक्षिप्याऽऽत्मन्यग्निं समारोपयति—' या ते अग्ने यज्ञिया तनूः० ' इति ॥ आत्मसमारोपणं नाम अग्नेर्जिघ्राणम् ॥ अथाऽग्नेः पश्चात्तिष्ठन् — " ॐ भूर्भुवः सुवः संन्यस्तं मया, संन्यस्तं मया, संन्यस्तं मया " इति त्रिरुपांशुस्त्रिरुच्चैरुक्त्वाऽपां पूर्णमञ्जलिं निनयेत् — " अभयं सर्वभूतेभ्यो मत्तः " इति । ' सखा मे गोपाय ' इति दण्डमादत्ते । " यदस्य पारे रजसश्शुक्रं ज्योतिरजायत । तन्नः पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा " इति शिक्यं, " येन देवाः पवित्रेण० ' इति जलपवित्रं, येन देवा

ज्योतिषोर्ध्वा० " इति कमण्डलुं, सप्तव्याहृतिभिर्भिक्षापात्रञ्च ॥ ततः कृष्णाजिनमादाय गृहान्निष्क्रम्य " सर्वे भवन्तु वेदाढ्याः सर्वे भवन्तु सोमपाः । सर्वे पुत्रमुखं दृष्ट्वा सर्वे भवन्तु भिक्षुकाः " इति पुत्रादिभ्य आशिषो दत्वा, पुत्रान्सुहृदो बन्धून्प्रति- " न मे कश्चिन्नाऽहं कस्यचित् " इति ममतां त्यजेत् ॥ ततो जलाशयं गत्वाऽञ्जलिना जलमादायाऽप्स्वेवाऽपो जुहोति-" आपो वै सर्वा देवताः स्वाहा, पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च सर्वभूतेभ्यश्च व्युत्थितोऽहं स्वाहा ॥ अभयं सर्वभूतेभ्यो मत्तः स्वाहा ॥ इति पुनरेवमभयं दत्वा वदेत्-" यत्किञ्चिद्बन्धनं कर्म कृतमज्ञानतो मया । प्रमादालस्यदोषोत्थं तत्सर्वं सन्त्यजाम्यहम् ॥ त्यक्तसर्वो विशुद्धात्मा त्यक्तस्नेहशुभाशुभः । एष त्यजाम्यहं सर्वं कामभोगसुखादिकम् ॥ रोषं तोषं विवादञ्च गन्धमाल्यानुलेपनम् । भूषणं नर्तनं गेयं दानमादानमेव च ॥ नमस्कारं जपं होमं याश्च नित्याः क्रिया मम । नित्यं नैमित्तिकं काम्यं वर्णधर्माश्रमाश्च मे ॥ सर्वमेव परित्यज्य ददाम्यभयदक्षिणाम् । पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः । करिष्ये प्राणिनां पीडां प्राणिनः सन्तु निर्भयाः " इति ॥ अथ सूर्यादिदेवान्विप्रांश्च साक्षित्वेन ध्यात्वा, नाभिमात्रे जले प्राङ्मुखः सावित्रीप्रवेशं पूर्ववत्कृत्वा, तरत्समन्दीति सूक्तं पठित्वा, "पुत्रेषणाया वित्तेषणाया लोकेषणायाश्च व्युत्थितोऽहं, भिक्षाचर्यां चरामि" इति जले जलं जुहुयात् । ' ॐ भूर्भुवस्सुवः संन्यस्तं मया संन्यस्तं मया संन्यस्तं मया ' इत्युक्त्वा त्रिर्जलाञ्जलिं विसृजेत् ॥ अथ शिखामुत्पाट्य, यज्ञोपवीतमुद्धृत्य करे गृहीत्वाऽद्भिः संस्पृश्याऽप्सु जुहोति -' वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे स्वाहा " इति । ततः प्रार्थयेत्-" सर्वदेवात्मके तोये तोयाहुतिमहं हरे । दत्वा सर्वैषणां त्यक्त्वा युष्मच्छरणमागतः ॥ त्राहि मां सर्वलोकेश गतिरन्या न विद्यते । संन्यस्तं मे जगन्नाथ पाहि मां मधुसूदन ॥ त्राहि मां सर्वदेवेश वासुदेव सनातन । संन्यस्तं

मे जगद्योने पुण्डरीकाक्ष मोक्षद ॥ अहं सर्वाऽभयं दत्वा भूतानां परमेश्वर। युष्मच्छरणमापन्नस्त्राहि मां पुरुषोत्तम " इति ॥ ततो दिगम्बरो भूत्वोदङ्मुखः पञ्चपदानि गच्छेत् ॥ अथाऽऽचार्यस्तस्मै कौपीनाच्छादने दद्यात्। स च कौपीनं वासश्च परिधायाऽप आचम्य, सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्मार्जयित्वाऽन्तर्जलगतः षोडश प्राणायामान्धारयित्वोत्तीर्य, वासः पीडयित्वाऽन्यत्प्रयतं वासः परिधायाऽप आचम्य, 'ॐ भूर्भुवस्सुवस्सुवः' इति जलपवित्रमादाय, जलपवित्रनिस्सृतेन जलेन तर्पयति – ॐ भूस्तर्पयामि, ॐ भुवस्त०, ॐ सुवस्त०, ॐ महस्त०, ॐ तपस्त०, ॐ जनस्त०, ॐ सत्यं त०' इति ॥ एवमेवाऽञ्जलिना जलमुपादाय—"ॐ भूः स्वधा, ॐभुवः स्वधा, ॐ सुवः स्वधा, ॐ भूर्भुवस्सुवः स्वधा" इति पितृंश्च तर्पयित्वा, 'ॐ महर्नमः' इत्युक्त्वा, "उदु त्यं०, चित्रं०" इति द्वाभ्यामादित्यमुपस्थाय, सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा। ततो 'भूर्भुवस्सुवः' इति पवित्रमन्तर्धायाऽपो गृह्णाति ॥ अथ समित्पाणिर्गुरुमुपगम्य, दक्षिणं जान्वाच्य पादावुपसङ्गृह्य "त्रायस्व भो जगन्नाथ गुरो संसारवह्निना। दग्धं मां कालदष्टश्च त्वामहं शरणं गतः ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ अधीहि भगवो ब्रह्म" इति प्रार्थयते। ततो गुरुः—अद्वैतः सच्चिदानन्दैकरूपमात्मानमनुसन्धाय, जलपूर्णं शङ्खं तुलस्यादिभिरभ्यर्च्य, द्वादशप्रणवैरभिमन्त्र्य, तेनोदकेन प्रणवेन शिष्यस्य शिरोऽभिषिच्य, 'शन्नो मित्रः शं वरुणः०' इत्यादि शान्तिं पठित्वा, तच्छिरसि हस्तं दत्वा पुरुषसूक्तं जपेत् ॥ तत उदङ्मुखाय शिष्याय शुद्ध-बुद्ध-मुक्त-सत्य-परमानन्दाऽद्वयब्रह्मप्रतिपादकं प्रणवं दक्षिणे कर्णे प्राङ्मुखः सन्नुपदिशेत्। प्रणवस्याऽर्थं पञ्चीकरणाद्यवबोध्य "प्रज्ञानं ब्रह्म, अयमात्मा ब्रह्म, तत्वमसि, अहं ब्रह्माऽस्मि" इति महावाक्यमुपदिश्य, तेषामर्थञ्च बोधयेत् ॥

ततस्तीर्थाश्रमादिसम्प्रदायानुसारेण (अधिकारानुसारेण) नाम दद्यात् ॥ न चात ऊर्ध्वं शुक्लवासो धारयेत्। यज्ञादि-सर्वकर्मणां परित्यागः। विविदिषूणां स्वाश्रमोचितब्रह्मचर्या-अपरिग्रह-श्रवण-मनन-निदिध्यासन-प्रणवाभ्यास-सन्ध्या-ध्यान-मौन-त्रिषवणस्नान-गुरुशुश्रूषादीनि कर्माणि श्रुतिस्मृतिषु कर्तव्यतया प्रतीयन्ते। कषायवासाः कक्षोपस्थरोमा लघुमुण्डोदरपात्रोदपात्रो विमुक्तमार्गोऽनिकेतश्चरेत् ॥ भिक्षुः स्नात्वा नित्यं प्रणवेनाऽऽत्मानं तर्पयित्वा तेनैव नमस्कुर्यात्। षडवरान्प्राणायामान्कृत्वा शतावरां सावित्रीं जप्त्वा सन्ध्यामुपासीत। सायं प्रातरग्निहोत्रमन्त्राञ्जपेत्। जलपवित्रात्पूताभिरद्भिराचामेत्। प्रत्यहं द्वादशसहस्रं प्रणवं जपेत्। ग्रामाद्बहिर्विविक्ते मठे देवालये वृक्षमूले वा निवसेत्। चातुर्मास्यान्यत्रैकाहादूर्ध्वमेकस्मिन्देशे न वसेत्। वर्षाः शरच्चातुर्मास्यमेकत्र वसेत्। भिक्षापात्रं गृहीत्वैककाले विप्राणां शुद्धानां गृहेषु वैश्वदेवान्तेऽधोमुखो भिक्षां चरेत्। भूमौ वीक्ष्य जन्तून्परिहरन्पादं न्यसेत्। भिक्षाकालादन्यत्र परवेश्म न गन्तव्यम्। भिक्षां चरित्वा शुचौ देशे स्थापयित्वा, हस्तपादान्प्रक्षाल्याऽऽचम्य, 'उदु त्यं०, चित्रं०' इति द्वाभ्यामादित्याय 'ब्रह्म जज्ञानं०' इति ब्रह्मणे च निवेदयित्वा, सर्वभूतेभ्यो बलिं दत्वा, शिष्टमन्नमद्भिः संस्पृश्य, प्राणयात्रामात्रमष्टौ ग्रासान्वा औषधवत्प्राश्नीयात्। अथाऽप आचम्य, वाङ्म आसन्नसोः प्राणः० इति मन्त्रं जपित्वा 'उद्वयं तमसस्परि' इत्यादित्यमुपतिष्ठते। सप्तव्याहृतिभिर्भिक्षापात्रं प्रक्षालयते ॥

ब्रह्मचारिणः संन्यासग्रहणे—ब्रह्मान्वाधानं उद्वासनस्थालीपाकवर्जं विरजाहोमं च कृत्वात्मन्यग्निं समारोपयेत्। कुटीचकस्य संन्यासे—ब्रह्मान्वाधानं विरजाहोमं च कार्यम्। उद्वासनस्थालीपाकं, शिखोत्पाटनं, आत्मन्यग्निसमारोपणं, यज्ञोपवीत-विसर्जनं च न कार्यम्। शिखी, यज्ञोपवीती साग्निक एव संन्यासग्रहणं कुर्यात्। संन्यासग्रहणान्ते- अहरहः सायंप्रातः सन्धाराधन-मौपासनं पञ्चमहायज्ञानि काले दर्शपूर्णमासस्थालीपाकं च कुर्यात्। सर्वमन्यत्समानम् ॥ अनग्निना कपिलप्रोक्तेन विधिना

संन्यासः कर्तव्यः। कृच्छ्रप्रायश्चित्त-गणपतिपूजन-नान्दीसमाराधन--पुण्याहवाचन-केशश्मश्रुलोमनखवपन-स्नान-सर्वदान-दण्डादिसन्निधानत्रिवृत्प्राशन-सावित्रीप्रवेशन-सन्ध्याराधनानि लौकिकाग्नौ ब्रह्मान्वाधानं च कृत्वोपोष्याऽपरेद्युः स्नात्वा सन्ध्याराधनं लौकिकाग्नौ विरजाहोमं देवर्षिपितृतर्पणञ्च कृत्वा "आपो वै सर्वा देवतास्स्वाहा, पुत्रैषणायाश्च० व्युत्थितोहं स्वाहा" इत्यप्स्वेवाऽपः पाणिना हुत्वा, यथाविधि प्रैषमुक्त्वा, 'अभयं सर्वभूतेभ्यो मत्तः स्वाहा' इत्यभयं दत्वा यथाधिकारं यथाविधि दण्डादि गृहीत्वा स्वधर्मनिष्ठो भवेत् ॥ ॥

## ॥ पर्यङ्कशौचम् ॥

अथ प्रयोगः ॥ कस्मिंश्चित्पुण्यदिने कश्चिद्गृहस्थः स्वाग्रे पीठादौ यतिमुपवेश्य गुर्वनुज्ञातो 'यतये पर्यङ्कशौचं करिष्ये' इति सङ्कल्प्य वामभागे प्राक्संस्थान्पञ्च मृद्भागान्दक्षिणभागेऽपि तथैव पञ्च संस्थाप्योभयत्र शुद्धोदकञ्च संस्थाप्य, वामप्रथममृद्भागेन पञ्चवारं मृज्जलाभ्यां यतिजानुद्वयं कराभ्यां युगपत्क्षालयेत्। चरमक्षालने मृद्भागसमाप्तिः, एवमग्रेऽपि ॥ ततो दक्षिणभागस्य प्रथमभागार्धेन स्ववामकरं मृज्जलाभ्यां दशवारं प्रक्षाल्याऽपरार्धेन तेनैव जलेनोभौ करौ सप्तवारं क्षालयेत्, एवमग्रेऽपि योज्यम् ॥ सङ्ख्यायां विशेषस्तूच्यते– वामद्वितीयभागेन चतुर्वारं जङ्घाद्वयं युगपत्प्रक्षाल्य, दक्षिणद्वितीयभागार्धेन सप्तवारं, वामकरमर्धान्तरेण चतुर्वारमुभौ च करौ क्षालयेत् ॥ वामतृतीयेन यतिगुल्फौ त्रिवारं दक्षिणभागार्धेन वामकरं षड्वारमुभौ चतुर्वारं वामचतुर्थेन ॥ यतिपादपृष्ठौ द्विवारं दक्षिणार्धेन स्व-वामं करं चतुर्वारं भूमौ द्विवारमवशिष्टार्धेन वामपञ्चमेन यतिपादतले सकृद्दक्षिणपञ्चमार्धेन वामस्य द्विवारमुभयोश्चाऽपरार्धेन सकृत्क्षालनमिति ॥

## ॥ योगपट्टः ॥

कारितपर्यङ्कशौचो यतिः कटिशौचं कृत्वा, कटिसूत्रकौपीने धृत्वा वस्त्रेणाऽवगुण्ठ्य, गुर्वनुज्ञयोच्चासने उपविश्य सभ्यैः सह वेदान्ते किञ्चिदुपन्यसेत् ॥ गुरुर्यतिः शिष्यं यतिं शिरसि शङ्खेन पुरुषसूक्तेनाभिषिच्य, वस्त्र-गन्ध-पुष्प-धूप-दीप-नैवेद्यैः सम्पूज्य, वस्त्रमुपरि धृत्वा, 'यतिभिः सह विश्वरूपाध्यायं पश्यामि देवान्' इत्यारभ्य 'भुङ्क्ष्व राज्यं समृद्धं' इत्यन्तं पठित्वा पूर्वकल्पितं नाम दद्यात् ॥ ततः शिष्यं वदेत् — "इतः परं त्वया संन्यासाधिकारिणे संन्यासो देयो, दीक्षायोगपट्टादिकञ्च कार्यं, ज्येष्ठयतयो नमस्कार्याः" ॥ ततो गुरुः कटिसूत्रं पञ्चमुद्रालङ्कृतं पूर्वदण्डञ्च शिष्याय दत्वा, शिष्यं यथासम्प्रदायं नमस्कुर्यात् ॥ शिष्यो 'नारायण' इत्युक्त्वोच्चासनादुत्थाय, तत्र गुरुमुपवेश्य यथाविधि नत्वाऽन्ययतीन्नमेत् ॥ ॥

## ॥ आतुरसंन्यासविधिः ॥

कपिलः— संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि । सोऽक्षयांल्लभते लोकान्पुनर्जन्म न विद्यते ॥ स्मृत्यन्तरे—संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि । न तत्क्रतुसहस्रेण फलं प्राप्नोति मानवः ॥

अथ प्रयोगः ॥ आतुरसंन्यासे सङ्कल्पप्रैषोच्चराभयदानेति त्रयं प्रधानमवश्यं कार्यम् । दण्डग्रहणाद्यङ्गभूतं यथासम्भवं कार्यम् ॥ स्नात्वा, अशक्तश्चेन्मन्त्रस्नानं कृत्वा शुद्धवस्त्रं धृत्वा, 'ज्ञानप्राप्तिद्वारा मोक्षसिध्यर्थमातुरविधिना संन्यासमहं करिष्ये' इति सङ्कल्प्य, वपनं कृत्वा स्नात्वा सन्ध्याद्यौपासनहोमान्तं यथासम्भवं कृत्वा, त्रिवृत्प्राश्य, सावित्रीप्रवेशं कृत्वा, ब्रह्मान्वाधानं जागरमुद्वासनस्थालीपाकं विरजाहोमञ्च यथासम्भवं कृत्वाऽऽत्मन्यग्निं समारोप्य, प्रैषोच्चारणं यथाविधि कृत्वा 'आपो वै सर्वा

देवताः स्वाहा ' इत्यप्सु हुत्वा, हुतशेषजलं ' आशुः शिशानः ' इत्यनुवाकेनाभिमन्त्र्य, ' पुत्रैषणायाश्च० इति किञ्चिज्जलं पिबेत् । ' अभयं सर्वभूतेभ्यो मत्तः स्वाहा ' इति द्वितीयं पिबेत् । ' संन्यस्तं मया ' इति तृतीयं पीत्वा, प्राङ्मुख ऊर्ध्वबाहुः प्रैषोच्चारं पूर्ववत्कृत्वा ' अभयं सर्वभूतेभ्यो मत्तः स्वाहा ' इति प्राच्यां जलं क्षिपेत् ॥ अथ शिखामुत्पाट्य यज्ञोपवीतं विसृजेत् ॥ पुत्रगृहे न तिष्ठेत् । जीवति चेत्स्वस्थः सन्महावाक्योपदेशदण्डग्रहणादि सर्वं कुर्यात् ॥

## ॥ ग्रहस्थस्य नित्यानुष्ठानक्रमः ॥

( बो. गृ. शे. सू. २·८ ) कथमु खलु नित्यानामनुक्रम इति-सन्ध्योपासनमग्न्युपस्थानं नित्यस्वाध्याय-गृहकर्म-स्नाना-ऽऽदित्योपस्थान-तर्पण-जप-यज्ञ-गृहदेवतार्चन-वैश्वदेव-पञ्च-महायज्ञाऽत्मयज्ञ-सन्ध्योपासनाऽग्निहोत्रात्मयज्ञ-संवेशनानीत्येतान्युदितहोमिनोऽजस्राऽग्निहोत्रिणोऽनुदितहोमिनोऽग्निहोत्रं सन्ध्योपासनमिति क्रमः ॥ एतानि नित्यान्युपव्युषमारभ्याऽऽसंवेशनात् प्रसिद्धम् ॥ सायं प्रातः सपत्नीकः प्रीतिं वर्धयेत् ॥ तस्याः पत्न्याः पूर्वरात्रावुपसंवेशनमाऽर्धरात्रादधश्शयनमाब्राह्ममुहूर्तादथोपोत्थाय नित्यान्यारभते ॥

## ॥ इति सङ्कीर्णकाण्डं समाप्तम् ॥



# * अथ पितृमेधकाण्डम् *

## अथ मङ्गलाचरणम्

यस्य संस्मरणादेव मुमूर्षुः परमां गतिम् ।
याति तं परमात्मानं सन्ततं चिन्तयाम्यहम् ॥

---

ज्ञातव्यविषयः ॥ ॥ अथात्र तावत्पैतृमेधिककर्मविधायकं पितृमेधसूत्रम् — " तस्माज्जातस्य वै मनुष्यस्य द्वौ संस्कारावृणभूतौ भवतो जातसंस्कारो मृतसंस्कारश्चेति ॥ विज्ञायते — जातसंस्कारेणेमं लोकमभिजयति मृतसंस्कारेणाऽमुं लोकम् " इति । एतेन जातसंस्कारो मृतसंस्कारश्चाऽवश्यं कर्तव्य इति विदधात्याचार्य इति बोद्धव्यम् । जातसंस्काराः षोडश, संस्कारकाण्डे व्याख्याताः । दहनादिसपिण्डीकरणान्ताः षोडश मृतसंस्काराश्चाऽस्मिन्पितृमेधकाण्डे यथाक्रमं निरूप्यन्ते । अथ संस्कार्यसंस्कर्तृविशेषाः प्रोक्तास्तत्रैव पितृमेधसूत्रे —" तस्मान्मातरं पितरमाचार्यं पत्नीं पुत्रं शिष्यमन्तेवासिनं पितृव्यं मातुलं सगोत्रमसगोत्रं वा दायमुपयच्छेद्दहनसंस्कारेण संस्कुर्वन्ति " इति ॥ ॥ पितृमेधशेषसूत्रे च —" अथ पुत्रः पौत्रो दत्तको वा पत्नी दौहित्रो भ्राता तत्पुत्रः पिता स्वस्रीयः सपिण्डो जामाता वा यथाक्रमं संस्कर्ता पितृमेधेन वा होतृकल्पेन वा ब्रह्ममेधेन वा

यथाप्राप्तं संस्कुर्यात् " इति ॥ ॥ अनुपनीतकर्तृके पत्नीकर्तृके च संस्कारे विशेषस्तत्रैवोक्तः —" अनुपनीतः पत्नी वा कर्ता चेन्मन्त्रवद्दहनमन्यत्सर्वं कारयेत् " इति ॥ वैद्यनाथीयेऽपि —" अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् । यद्यसौ कृतचौलः स्याद्यदि वा स्यात् त्रिवत्सरः" इति ॥ ॥ ब्रह्मचारिकर्तृके विशेषमाह याज्ञवल्क्यः —" आचार्यपित्रुपाध्यायान्निर्हृत्याऽपि व्रती व्रतम् । सूतकान्नं न चाऽश्नीयान्न च तैः सह संविशेत् " ( व्रती–नैष्ठिकब्रह्मचारी ) इति ॥ पुत्राणां बहुत्वे विभक्तत्वे च विशेषो वैद्यनाथीये —" सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाऽविभक्तेन सर्वैरेव कृतं भवेत् " इति ॥ " सदृशस्त्रीषु जातानां पुत्राणाञ्च विशेषतः । न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते " इति ॥ " नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्याणि संविभक्तधनेष्वपि " इति चोक्तः ॥ जीवत्पितृककर्तृकेऽपि धर्मसिन्धौ प्रेतकर्मप्रतिप्रसवप्रकरणे —" जीवत्पितृकः स्वमातुरपुत्रसापत्नमातुः स्वपुत्रसपत्नीपुत्ररहितभार्याया अपुत्रपितृव्यस्याऽपुत्रमातामहमातामह्योश्च दाहादिप्रेतकर्माणि कुर्यात् " इत्युक्तम् ॥

अथ मुमूर्षुः स्वकृतपापापनोदनार्थं सर्वप्रायश्चित्तं कृच्छ्ररूपं प्रथममाचरेदिति स्मृतिषु विशेषतः प्रतिपादितम्, वैद्यनाथीये—द्वादशाब्दकृच्छ्ररूपं षडब्दकृच्छ्ररूपं त्रिद्व्येकाब्दकृच्छ्ररूपं वा सर्वप्रायश्चित्तं यथाशक्ति स्वपापानुसारेण कुर्यात्—" सर्वजन्माऽऽर्जितानीह भ्रूणहत्यादिकान्यपि । सर्वपापानि नश्यन्ति कृच्छ्रैर्द्वादशवार्षिकैः " इत्याद्युक्तम् ॥ तल्लक्षणन्तु—" त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । परं त्र्यहञ्च नाश्नीयात्प्राजापत्यो भवेदयम्" ॥ एवं द्वादशाहसाध्यः प्राजापत्यकृच्छ्रः । त्रिंशत्प्राजापत्यैरब्दकृच्छ्रः सम्पद्यते । प्राजापत्यप्रतिनिधिरेका गौः । अब्दप्रतिनिधिस्त्रिंशद्गावः । गोः प्रतिनिधिर्निष्कनिष्कार्धनिष्कपादान्यतमप्रमाणं सुवर्णं रजतं वा शक्तेरनुरूपम् । चत्वारः कर्षा निष्कम् । अशीतिर्गुञ्जाः कर्षः ॥ इति ज्ञेयम् ॥ ॥ अथाऽन्यान्यपि दानान्युक्तानि

वैद्यनाथीये—" आतुरो वाऽथ पुत्रो वा दद्यादासन्नबान्धवाः। उत्क्रान्तिर्वैतरण्यौ च दशदानानि चैव हि॥ प्रेतेऽपि कृत्वा तं प्रेतं शवधर्मे नियोजयेत्॥ गोभूतिलहिरण्याज्यवस्त्रधान्यगुडानि च। रौप्यं लवणमित्याहुर्दश दानानि पण्डिताः" इत्यादि॥ ॥ अथ धनिष्ठापञ्चकत्रिपुष्करद्विपुष्करयोगादौ मरणे कर्तव्यविधानान्युक्तानि निर्णयसिन्धौ—" कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते। न तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत्॥ न तस्य दाहः कर्तव्यो विनाशात्स्वेषु जन्तुषु। अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकः॥ दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः। यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत्॥ प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः। प्रेतहर्ता पञ्चमस्तु नामान्येतानि च क्रमात्"॥ अथ प्रतिमा गन्धपुष्पैः पूजयित्वा प्रथमां शिरसि, द्वितीयां नेत्रयोः, तृतीयां वामकुक्षौ, चतुर्थीं नाभौ पञ्चमीं पादयोर्न्यसेत्। तदुपरि नामभिर्घृतं हुत्वा यमाय सोमं त्र्यम्बकमिति मन्त्राभ्यां प्रत्येकं तास्वाज्यं हुनेदिति। " सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकम्। कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद्द्विजन्मने॥ ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः। माषमुद्गयवव्रीहिप्रियङ्ग्वादि प्रयच्छति॥ स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्चनम्। गोभूदानं षडंशेन कुर्याद्दोषोपशान्तये" इति॥ धर्मसिन्धौ तु नक्षत्रान्तरे मृतस्य पञ्चके दाहप्राप्तौ पुत्तलविधिरेव न शान्तिकम्, पञ्चकमृतस्याऽश्विन्यां दाहप्राप्तौ शान्तिकमेव न पुत्तलविधिः, इति विशेषः प्रोक्तः॥ त्रिपुष्करद्विपुष्करयोगौ धर्मसिन्धावुक्तौ—" यदि भद्रातिथीनां[1] स्याद्भानुभौमशनैश्चरैः। त्रिपादृक्षैश्च संयोगस्तदा योगस्त्रिपुष्करः॥ द्विपुष्करो द्वयोर्योगेऽथवाऽयं स्याद्द्विपादभैः। पुनर्वसूत्तराऽषाढाकृत्तिकोत्तरफल्गुनी॥ पूर्वभाद्रा विशाखा च ज्ञेयमेतत्त्रिपादभम्। मृगचित्राधनिष्ठा च ज्ञेयमेतद्द्विपादभम्" इति। तत्र कर्तव्यविधानमप्युक्तं निर्णयसिन्धौ—" द्वित्रिपुष्करयोगे तु मृतिर्मृत्यन्तरावहा। दहने मरणे चैव त्रिगुणं स्यात् त्रिपुष्करे॥ खननेऽप्येवमेव

१. द्वितीयासप्तमीद्वादशीतिथीनाम्।

स्यादेतद्दोषोपशान्तये। तिलपिष्टैर्यवैर्वाऽपि शरीरं कारयेत्ततः॥ शूर्पे निधायाऽलङ्कृत्य दाहयेत्पैतृकोपरि" इति॥ तद्दाहे मन्त्रमाह बोधायनः—"अस्मात्त्वमिति मन्त्रेण यवपिष्टं प्रदाहयेत्। द्वित्रिपुष्करयोर्दोषस्त्रिभिः कृच्छ्रैर्व्यपोहति" इति॥ धर्मसिन्धौ तु— यवपिष्टमयपुरुषत्रयेण सह प्रेतदाहः, पुरुषत्रयस्य प्रेते न्यास आज्याहुतयश्च पूर्ववत्। तद्दोषशान्तये—'सुवर्णं दक्षिणां दद्यात्कृष्णवस्त्रमथाऽपि वा। शान्तिं कुर्यात्सूतकान्ते पूर्वोक्तां तेन मङ्गलम्' इति विशेषः प्रोक्तः॥ ॥ अथ कालाख्यमृत्युदोषः प्रोक्तो ग्रन्थान्तरे—"अर्काधिष्ठितभाद्रदन्त्युडुगणा नष्टासु दिक्षु क्रमादीशानादिषु चान्तराणि गणये-च्चत्वार्यथ त्रीन्बहिः। अन्तस्थानि बहिर्गतानि सकलान्येवंविधाऽगारतो मासं हिं२ं व घंटाऽन्त्यमं गं-रं-मितं कालं दिनौघं बुधाः" इति॥ मृतगेहे मरणकालीनसूर्यनक्षत्रप्रभृतिगण्यमानैरष्टाविंशतिकैरुत्तराषाढोत्तरमभिजित्सहितैश्चन्द्रनक्षत्रैः कालाख्यमृत्युरीशा-नकोणमारभ्य क्रमाच्चतुर्भिरन्तः प्रविशति त्रिभिः पूर्वस्यां मध्यात् बहिर्निर्गच्छति, पुनराग्नेयकोणमारभ्य चतुर्भिः प्रविशति त्रिभिर्दक्षिणस्यां निर्गच्छति, ततो नैर्ऋत्यकोणमारभ्य चतुर्भिः प्रविशति त्रिभिर्निर्गच्छति पुनरपि वायव्यकोणाच्चतुर्भिः प्रविशति त्रिभिर्निर्गच्छति, एवं प्रवेशादिनिर्गमान्तं चतुर्ष्वपि नक्षत्रसप्तकेषु मरणे क्रमेण ७५, ४८, २४, १०, ५, ३, २ दिनपर्यन्तं तद्गृहे मरणाद्यनिष्टं करोतीत्यर्थः। मरणकालीनसूर्यनक्षत्राद्गण्यमाने चन्द्रनक्षत्रे यदि ७५, ४८, २४ दिनपर्यन्तमनिष्टप्रदं स्यात्तदा तादृशाऽनिष्टपरिहारार्थं 'पित्रादेर्मरणकालीननक्षत्रसूचितमृत्योः सम्भाव्याऽपमृत्य्वादिसर्वाऽनिष्टपरिहारद्वारा गृहे स्थितानां सर्वेषां दीर्घायुरारोग्याभयादिप्राप्त्यर्थं शौनकोक्तां कालशान्तिं करिष्ये' इति सङ्कल्पमात्रं कृत्वाऽऽशौचान्ते तां यथाविधि कुर्यादिति ज्ञेयम्॥ ॥

# ॥ दहनविधिः ॥

( बो. पि. सू. १. १७. ८ ) ' अथ यद्याहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इति विज्ञायते । ' पुरुषाहुतिर्ह्यस्य प्रियतमा ' इत्येतामनुव्याख्यां दहनस्य ब्रुवते । अथाप्युदाहरन्ति ' शरीरदायादा ह वा अग्नयो भवन्ति ' इति ॥ (बो. पि शे. सू. १.१) मरणसंशये ब्रह्म संस्मृत्य दशदानानि कृत्वा उत्क्रान्तिगां दद्यात् —" अत्युत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रान्तिविमुक्तये । तुभ्यं सम्प्रददाम्येनां गामत्रोत्क्रान्तिसंज्ञिताम् " इति ॥ अथ पुत्रः पौत्रो दत्तको वा पत्नी दौहित्रो भ्राता तत्पुत्रः पिता स्वस्त्रीयस्सपिण्डो जामाता वा यथाक्रमं संस्कर्ता पितृमेधेन वा होतृकल्पेन वा ब्रह्ममेधेन वा यथाप्राप्तं संस्कुर्यात् ॥ ' ब्रह्म वै चतुर्होतारः ' इति ब्रह्मचारिणं होतृकल्पेनैव । दुर्मृतानामुक्तकाले नारायणसंस्कारविधिना जडादीनां कन्याकुमाराणामेकर्चा ॥ अथ त्रिवर्षात्पूर्वं मृतानां व्याहृतीभिर्दहेदथवा निखनेत् ॥ दन्तजातानां प्रणवेन निखनेत् । अजातमृतानां तूष्णीं निखनेदिति ॥ यथाविधि संस्कुर्यात् ॥ अनुपनीतः पत्नी वा कर्ता चेद्दहनमन्यत्सर्वं कारयेत् ॥ द्विवर्षात्प्रागूढा बाला मृता स्यात्तां यामं भूमौ निक्षिप्य पितृमेधेन दहेदथ चिताम् ॥ ब्राह्मणा भर्तारः कर्तारश्च भवन्ति ॥ अथ ये तत्र प्रेतानुगास्ते सचैलं स्नात्वाऽग्निं स्पृष्ट्वाऽऽज्यं प्राश्य पुनरपि स्नात्वा पुनः प्राणानायम्योत्तीर्य शुष्कवस्त्रं परिधाय पुनरपि स्नात्वा ततश्शुद्धा भवन्ति ॥ कन्यामनुपनीतमनाथमनूचानं यज्वानं यदि प्रेतमनुव्रजन् घृताऽग्न्यादिकं न भवेदग्निघृताद्यसम्भवे गायत्र्याऽभिमन्त्र्य दशकृत्वोऽपः पीत्वा पुनस्स्नानेन शुद्धिर्भवति ॥ अथ वाहका ब्राह्मणाः परिषदं प्रदक्षिणीकृत्य नमस्कृत्वाऽसपिण्डशवहरणप्रायश्चित्तमभ्यनुज्ञाप्याऽहश्शेषं रात्रिशेषं वाऽतिक्रम्य ग्रामं प्रविश्य पञ्चगव्यं प्राश्य गोग्रासं दत्वा देवतादर्शनं कृत्वा यथाशक्ति

गायत्रीं जपित्वा ततश्शुद्धा भवन्ति ॥ गायत्रीमेव वा जपेयुरित्येके ॥ (बो. पि. सू. ३. १) अथाऽतो द्विजातीनां दहनकल्पं व्याख्यास्यामः ॥ जातस्य वै मनुष्यस्य ध्रुवं मरणमिति विजानीयात्तस्माज्जातेन प्रहृष्येन्मृते च न विषीदेत् ॥ 'अकस्मादागतं भूतमकस्मादेव गच्छति ॥ तस्माज्जातं मृतञ्चैव सम्पश्यन्ति सुचेतसः' इति ॥ तस्माज्जातस्य वै मनुष्यस्य द्वौ संस्कारावृणभूतौ भवतो जातसंस्कारो मृतसंस्कारश्चेति । विज्ञायते —'जातसंस्कारेणेमं लोकमभिजयति मृतसंस्कारेणाऽमुं लोकम्' ॥ तस्मान्मातरं पितरमाचार्यं पत्नीं पुत्रं शिष्यमन्तेवासिनं पितृव्यं मातुलं सगोत्रमसगोत्रं वा दायमुपयच्छेद्दहनसंस्कारेण संस्कुर्वन्ति ॥ त एव शवभर्तारोऽन्ये समानगोत्रा वा ॥ राजन्यस्य पुरोहितः सहस्रदक्षिणो ब्राह्मणः ॥ वैश्यस्य सतगुना वा ॥ अथाऽहिताऽग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ॥ गृहस्थमौपासनेन ॥ ब्रह्मचारिणं कपालसन्तपनाऽग्निना ॥ उत्तपर्नायेनेतरान् ॥ एवं स्त्रियम् ॥ अथ यद्याहिताग्निर्भवति पौर्णमासेन हविषेष्ट्वा सायं हुत्वा वा प्रमीयेताऽथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वोत्तरतो दक्षिणामुख उपविश्य गार्हपत्ये जुहोति — 'मृत्योरधिष्ठानाय स्वाहा' इति ॥ एवमेव प्रह्वोऽन्वाहार्यपचने तिष्ठन्नाहवनीये ॥ दक्षिणतस्सकृदतिवाल्य वेद्यै दक्षिणऽसे दक्षिणाग्रं स्रुचं निधाय प्राचीनावीतं कृत्वा दक्षिणोत्तानेन पाणिना दक्षिणतस्स्रुचं सम्मार्ष्टि — "पितृभ्यस्त्वा मृत्युं जिन्व' इति वा । तूष्णीं वा ॥ अथाऽप उपस्पृश्याऽङ्गुल्या सकृत्प्राश्याऽप आचम्य निर्णिज्य स्रुचं निष्टप्याऽद्भिः पूरयित्वा प्रेतस्य प्राण-स्थानेषु निनीय यथायतन स्रुच विमुञ्चति ॥ 'सैव ततः प्रायश्चित्तिः' इति ब्राह्मणम् ॥ अथैनं मरणसंशये यजमानायतने सिकतास्सम्प्रकीर्य दक्षिणाग्रान् दर्भान् संस्तार्य तेषु दक्षिणशिरसमेनं निपात्य दक्षिणे कर्णे जपति —'आयुषः प्राणं सन्तनु' इत्येतमनुवाकम् ॥ 'संज्ञानं विज्ञानं' इति षोडशानुवाकानेवमुत्तरे ॥ अथ प्राणेषूत्क्रान्तेषु हिरण्यशकलमास्ये निधायाऽध्वर्युरुप-

कल्पयते — सर्वौषधं चोदकुम्भं चाहतञ्च वासस्समूलं बर्हिर्हिरण्यञ्च हिरण्यशकलांश्च गां रोहिणीं परशुमश्मानं चोर्णासूत्रमौदुम्बरं तल्पमौदुम्बरीं शाखां दधिमधुघृतमिति तिलतण्डुलांश्च याज्ञिकानि च काष्ठानि च स्पन्द्यां शङ्कूनित्येतेऽस्य सम्भारा उपकॢप्ता भवन्ति॥ अथैषा पत्नी केशान्विरूस्याऽद्भिरेनं स्नापयति भ्राता पुत्रो वा तूष्णीम्॥ (बो. पि. सू. ३. २) अथाऽध्वर्युः प्राचीनावीती सर्वौषधेनोदकुम्भं पूरयित्वा तेन दशहोत्रा पत्तोऽग्रं स्नापयति—'चित्तिः स्रुक्' इत्येतेनाऽनुवाकेन॥ अथ ग्राम्येणाऽलङ्कारेणा-लङ्कृत्य शिरस्तो नळदमालामाबध्यौदुम्बरं तल्पं समारोप्याऽङ्गुष्ठबन्धं करोति॥ अथैनमहतेनोदीचीनदशेन वाससा समुखं प्रच्छाद्य भर्तारो ग्रामादुपनिष्क्रम्याऽग्निभिस्सह यज्ञायुधानि च सम्भारांश्च तस्याऽग्रेण सम्भारान्दक्षिणतः पात्राणि पश्चादग्निमिति निधायाऽ-पसलैः परिस्तीर्य तं बान्धवास्सिग्घातेनोपवीजयन्तस्त्रिरपसव्यं परियन्ति—'वातास्ते वान्तु पथि पुण्यगन्धा मनश्शुभा गात्रशुभा अनुलोमाः। त्वचस्सुखा मांससुखा अस्थिसौख्या वहन्तु त्वा मरुतस्सुकृतां यत्र लोकाः' इति॥ यथेत त्रिः पुनः प्रतिपरियन्ति॥ एवं पथि चितायाम्॥ चितायामित्येके॥ श्मशानं नीत्वा दहनं जोषयते॥ तस्य दक्षिणाप्रत्यक्प्रवणमनिरिणमभङ्गुरमसुषिरमवल्मी-कमजागर्तिबहुळौषधि गोचर्ममात्रं स्थण्डिलं भवति ब्राह्मणस्य, धनुष्कोटिमात्रं राजन्यस्य, रथचक्रमात्रं वैश्यस्य, विमाय शङ्कुभिः परिणिहत्य समन्तं स्पन्द्यया परितनोति॥ अथैनं मध्ये शकलेनोद्धत्याऽवोक्ष्यौदुम्बर्या शाखया पलाशशाखया शमीशाखया वा सम्मार्ष्टि—'अपेत वीत वि च सर्पत' इति। दक्षिणतश्शाखां निरस्याऽद्भिरवोक्षति—'अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै' इति। हिरण्यशकलमवदधाति—'अपसर्पत प्रेता ये के चेह पूर्वजास्स्वस्ति नः कुरुत माऽश्रुयातः पुनराग-मिष्यामहे' इति॥ स्फ्येन वा परशुना वा दक्षिणापवर्गास्तिस्रः कर्षूः खात्वा तिलतण्डुलानां मुष्टिं पूरयित्वा—'यमाय दहनपतये पितृभ्यस्स्वधा नमः' इति प्रथमायां निवपति। 'कालाय दहनपतये पितृभ्यस्स्वधा नमः' इति द्वितीयायाम्। 'मृत्यवे दहनपतये

पितृभ्यस्स्वधा नमः' इति तृतीयायाम् ॥ प्रथमेनैव मन्त्रेण तिसृषु निवपतीत्येके ॥ अथाऽवशिष्टान्तिलतण्डुलान्सर्वतस्त्रिरपसव्यं प्रकिरति ॥ ( बो. पि. सू. ३. ३ ) 'यथा पिता पुत्रं पश्यति सखा वा सखिमागतम् । एवमिमं पूर्वसंक्लिन्नाः प्रेताः पश्यत माऽन्यथा' इति दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु दक्षिणाग्रैर्याज्ञिकैः काष्ठैश्चितां कल्पयित्वा चितायां दक्षिणाग्रेषु दर्भेषु कृष्णाजिनं दक्षिणाग्रीवमधरलोमास्तृणाति ॥ तस्मिन्दक्षिणाशिरसमुत्तानं प्रेतं निधायाऽपसलैः परिस्तीर्य त्रितामूर्णासूत्रेणाऽपसलैः परिवेष्टयति ॥ तमग्निमपसलैः परिस्तृणाति ॥ दक्षिणेनाऽग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वेकैकशो न्यञ्चि पात्राणि सादयित्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रेतं पात्राणि दारुचिताश्च प्रोक्ष्याऽऽज्यं संस्कृत्य स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा व्याहृतीर्जुहोति ॥ अथास्य सप्तप्राणायतनेषु सप्तहिरण्यशकलान्प्रत्यस्यत्यास्ये नासिकयोरक्ष्णोः कर्णयोरिति ॥ अलाभ आज्यबिन्दून्वा ॥ मुखे प्रथममाज्यमानीय दधि मधु घृतमिति तिलतण्डुलांश्च समुदायुत्याऽस्ये निवपति ॥ अथ दशहोतारमेवाग्रे नासिकयोर्द्विर्जपेत् ॥ 'आसीत्' इति सर्वेषु होतृपदेष्वनुषजत्यन्यत्र षड्ढोतृपदेभ्यः । 'आस्ताम्' इति द्वित्ववाचिषु ॥ चतुर्होतारं मुखे । अक्षिकटकयोर्द्विः पञ्चहोतारम् । कर्णयोर्द्विष्षड्ढोतारम् । कीकसासु द्विस्सप्तहोतारमिति ॥ (बो. पि. सू. १. १) अथ यद्याहिताग्निर्निर्मारं गच्छत्युपतपता वा जरया वाऽग्निष्व एवाऽस्य यजमानायतने शयनं कल्पयेयुर्जघनेन गार्हपत्यम् ॥ तदस्मै भक्षानाहरन्ति यावदलं भक्षाय मन्यते ॥ स यद्यु हाऽगदो भवति पुनरेति ॥ यद्यु वै प्रैति न पयस्समासिञ्चति ॥ अथैतदग्निहोत्रं सायमुपक्रमं प्रातरपवर्गमित्याचार्या ब्रुवते ॥ तत्रोदाहरन्ति-स यदि सायं हुतेऽग्निहोत्रे प्रेयात्प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात् ॥ अथ यदि प्रातरग्निहोत्रे हुते कुशलम् ॥ अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्थावित्याचार्या ब्रुवते ॥ तत्रोदाहरन्ति—स यदि पौर्णमास्यां वृत्तायां प्रेयात्प्रतिकृष्याऽमावास्यां यजेत ॥ अथ यद्यमावास्यायां वृत्तायां कुशलम् ॥ अथ यस्योभे पर्वणी अतिपन्ने स्यातामतिपन्न-

प्रायश्चित्तं कुर्वीत ॥ अथ यद्यार्तस्याऽग्निहोत्रं विच्छिद्येत यद्यस्य पुत्रो वाऽन्तेवासी वाऽलं कर्मणस्स्यात् । सोऽरण्योरग्नीन्समारोह्योदवसाय मथित्वाऽग्नीन्विहृत्याग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति शरावं दक्षिणां ददाति सा प्रसिद्धेष्टिस्सन्तिष्ठते ॥ [ (बो. पि. सू २. ८ १०,११ ) अथाऽनाहिताग्नेरौपासनं सायमुपक्रमं प्रातरपवर्गमित्यादि समानं भवति ॥ अथ यद्यार्तस्स्यादौपासनं विच्छिद्येत द्वादशाहादूर्ध्वमिष्टिं वा कर्तुमशक्तः आज्यं संस्कृत्य चतुर्गृहीतेनाज्येन यावदाम्नातमाज्याहुतीर्जुहोति ॥ ] अथ यदि विप्रक्रान्ते प्रेयात्तूष्णीमेतत्तन्त्रं संस्थाप्याऽपो भक्षानभ्यवहरेयुः ॥ 'अपो भक्षानभ्यवहरन्ति' इति विज्ञायते ॥ अथाऽस्याऽग्नीनुपनिर्हृत्येमां दिशं विहारं कल्पयित्वा दक्षिणाप्राचीम्—'एषा हि पितॄणां प्राची दिक्' इति विज्ञायते ॥ अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा प्रेतस्य दक्षिणं बाहुमन्वारभ्याऽऽहवनीये जुहोति ॥ (बो. पि. सू. १. २) 'परेयुवांसं प्रवतो महीरनु बहुभ्यः पन्थामनपस्पशानम् । वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्यत स्वाहा' इति ॥ अपि वा सपुरीषमेवाऽऽप्लाव्याऽऽच्छाद्याऽलङ्कृत्याऽथैनमादायाऽन्तरेण वेद्युत्करौ प्रपाद्य जघनेन गार्हपत्यमासन्द्यां कृष्णाजिने दक्षिणाशिरसं संवेश्य शिरस्तो नळदमालां प्रतिमुच्य पत्तोऽदशेनाहतेन वाससा प्रोर्णोति ॥ (बो. पि. सू. १. ३) 'इदं त्वा वस्त्रं प्रथमं न्वागन्' इति ॥ अथैतदपोहति—'अपैतदूह यदिहाबिभः पुरा । इष्टापूर्तमनुसम्पश्य दक्षिणां यथा ते दत्तं बहुधा विबन्धुषु' इति ॥ तस्य पुत्रोऽन्तेवासी वा पत्नी वा परिदधीत तद्गुहाजरसमेव वसीताऽहश्शेषं वा ॥ (बो. पि. सू. १. ४) एतस्मिन्कालेऽस्याऽमात्यास्तिसृभिस्तिसृभिरङ्गुळीभिरुपहत्य पांसूनंसेष्वावपन्ते—'खल्वघं न्वा स्यादघं नो एवाघम्' इति ॥ अस्य भार्याः कनिष्ठप्रथमा प्रकीर्णकेश्यो व्रजेयुः पांसूनंसेष्वावपमानाः—'खल्वघं न्वा स्यादघं नो एवाघम्' इति ॥ अथैनमेतयाऽऽसन्द्या तल्पेन कटेन वा संवेष्ट्य दासाः प्रवयसो वा वहेयुः ॥ अथैनमनसा वहन्तीत्येकेषाम् ॥ अनश्चेद्युञ्ज्यात्—'इमौ

युनज्मि ते वह्नी अनुनीथाय वोढवे। याभ्यां यमस्य सादनं सुकृतां चाऽपि गच्छतात्' इति समारोप्याऽग्नीन् हरन्ति। समारोप्य वाऽन्तरेण वा कृत्वाऽग्नीन् हरन्त्यथैनमाददते॥ आदीयमानमनुमन्त्रयते — 'पूषा त्वेतश्च्यावयतु प्रविद्वानलब्धपशुर्भुवनस्य गोपाः। स त्वैतेभ्यः परिददात्पितृभ्योऽग्निर्देवेभ्यस्सुविदत्रेभ्यः' इति॥ तृतीयमेतस्याऽध्वनो गत्वा निदधाति॥ कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः॥ एवममात्या एवं स्त्रियः॥ संयम्य केशान्यथेतं त्रिः पुनः प्रतिपरियन्ति॥ अथैनमाददते॥ आदीयमानमनुमन्त्रयते॥ ( बो. पि. सू. १. ५ ) 'पूषेमा आशा अनुवेद सर्वास्सो अस्माꣳअभयतमेन नेषत्। स्वस्तिदा अघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रविद्वान्' इति॥ अर्धमेतस्याध्वनो गत्वा निदधाति॥ कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्ति॥ एवममात्या एवं स्त्रियः॥ संयम्य केशान्यथेतं त्रिः पुनः प्रतिपरियन्त्यथैनमाददते॥ आदीयमानमनुमन्त्रयते —'आयुर्विश्वायुः परिपासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात्। यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवस्सविता दधातु' इति॥ समस्तमेतस्याध्वनो गत्वा निदधाति॥ कनिष्ठप्रथमाः प्रकीर्णकेशास्त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः॥ एवममात्या एवं स्त्रियः॥ संयम्य केशान्यथेतं पुनः प्रतिपरियन्ति॥ ( बो. पि. सू. १. ६ ) अथास्याऽवकाशं जोषयते– पश्चादुदकमनूषरमनुपहतमविस्रग्दार्यमनिरिणमसुषिरमभङ्गुरमजागर्तिबहुलौषधि यत्र क्षीरिणो वृक्षा ओषधयो वाऽभ्याशे न स्युर्यस्माद्दक्षिणाप्रतीच्य आपश्शनैर्गत्वा प्रतिध्रेरस्ताः प्रदक्षिणमभिपर्यावृत्य महानदीमभ्यवेत्य प्राच्यस्सम्पद्येरन् दक्षिणाप्रत्यक्प्रवणमित्येकेषामुदक्प्रत्यक्प्रवणमित्येकेषामपि वा यस्समभूमिः॥ तस्माद्वीरुध उद्धारयन्ति — काळाश्च पृश्निपर्णीश्च तिल्वकां चापारकां चापामार्गश्च शुण्ठीश्च बहुपुत्रिकाश्च विस्रांसिकाश्च राजक्षपर्णीश्च याश्चान्याः क्षीरिण्य ओषधयो भवन्ति॥ अथैनं मध्ये शकलेनोद्धृत्यावोक्ष्य हिरण्येन परिकीर्य पर्णशाखयाऽपकर्षति —'अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः।

अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ' इति ॥ तद्वारुचितां कुर्वन्ति दक्षिणाप्राचीम्—' एषा हि पितॄणां प्राची दिक् ' इति विज्ञायते ॥ जघनेन चितां दक्षिणाप्राचीं विहारं कल्पयित्वा दर्भैरग्निं चितां चापसलैः परिस्तीर्य दक्षिणेन विहारं दक्षिणाग्रान्दर्भान् संस्तीर्य तेष्वेकैकशो न्यञ्चि पात्राणि संसादयति ॥ एकपवित्रेण प्रोक्षणीं संस्कृत्य पात्राणि प्रोक्ष्य प्रेतं चितां चाज्यं निरुप्याऽधिश्रित्य पर्यग्नि कृत्वोद्वास्योत्पूय तूष्णीं दर्भैः पात्राणि सम्मृज्य ॥ ( बो. पि. सू. १. ७ ) अथाऽस्य भार्यामुपसंवेशयति ॥ ( बो. पि. सू. १. ८ ) ' इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्यप्रेतम् । विश्वं पुराणमनु पालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ' इति ॥ तां प्रतिहितस्सव्ये पाणावभिपाद्योत्थापयति —' उदीर्ष्वनार्यभि जीवलोकमितासुमेतमुपशेष एहि । हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभि सम्बभूव ' इति ॥ अथाऽस्य सुवर्णेन हस्तौ निमृजते – ' सुवर्णं हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम ' इति ब्राह्मणस्य ॥ ' धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम ' इति क्षत्रियस्य ॥ मणिं हस्तादाददाना मृतस्य श्रियै विशे पुष्ट्यै बलाय । अत्रैव त्वमिह वयं सुशेवा विश्वा स्पृधो अभिमातीर्जयेम ' इति वैश्यस्य ॥ यद्यत्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ अथैनमेतयाऽऽसन्द्या सह चितायामादधाति ॥ अपकृष्य रज्जूमासन्दीमपविध्यन्ति ॥ कृष्णाजिने चैव रज्जुषु चोत्तानश्शेते ॥ तस्य प्राणेषु हिरण्यशकलान्प्रत्यस्य नाना चतुर्गृहीताभ्यामक्ष्णोर्जुहोति—' चित्रं देवानामुदगादनीकम् ' इत्यर्धर्चाभ्यां जुहोतीति विज्ञायते ॥ ( बो. पि. सू. २. १ ) यथो एतदाहिताग्नेर्निर्मारं गच्छतः प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात्प्रतिकृष्यामावास्यां यजेतेति ॥ तथैते कर्मणी अभिसञ्चरेद्यथा जीवतः कृते स्याताम् ॥ स उ चेदहुते प्रातरग्निहोत्रेऽनिष्ट्वायाममावास्यायां प्रेयात्तदानीमेवाऽस्य तूष्णीं प्रातरग्निहोत्रं यादृक्कीदृक्च होतव्यं तदानीमेवाऽस्य तूष्णीममावास्यां यादृशीं कीदृशीञ्च यजेतेति ॥

स उ चेत्पुनरागतः स्यात् पुनरेवास्य प्रातरग्निहोत्रं काल्यमव्यापन्नं होतव्यं पुनरेवामावास्यां काल्यामव्यापन्नां यजेतेति ॥ (बो. पि. सू. १. ११ ५) उदकुम्भेन त्रिरपसलैः परिषिञ्चति वारुणीभिः ॥ (बो. पि. सू. ३. ४) अथ पत्न्युदकुम्भमादाय शीर्षन्नधिनिधाय त्रिरपसलैः परिषिञ्चति ॥ तमश्मना परशुना वा किञ्चिदधस्तात् प्रहरति । तां धारामनुमन्त्रयते— 'इमा आपो मधुमत्योऽस्मिंस्ते लोक उपदुह्यन्ताम्' इति ॥ द्वितीयं परिगतायां प्रहरति । तां धारामनुमन्त्रयते—'इमा आपो मधुमत्योऽन्तरिक्षे ते लोक उपदुह्यन्ताम्' इति ॥ तृतीयं परिगतायां प्रहरति । तां धारामनुमन्त्रयते —'इमा आपो मधुमत्यस्स्वर्गे ते लोक उपदुह्यन्ताम्' इति ॥ अथाध्वर्युर्वा कुम्भं भिनत्ति ॥ 'यदि पुरस्तात्पतति पापीयान् भवति यदि पश्चात्पतति वसीयान्भवति' इति ब्राह्मणम् ॥ अत्रैवोपसीदति आर्द्रानोषधिवनस्पतीनारभ्योपोत्थाय कपालशेषा अपः प्रेतस्य प्राणस्थानेषु निनयति— 'दिवि जाताः' इति ॥ गां पश्यति । ब्राह्मणान्पश्यति । हिरण्यमालभते । अत्र गुरवे वरं ददाति ॥ अथैनमहतेनोदीचीनदशेन वाससा कृष्णाजिनेन वा दक्षिणाग्रीवेणोत्तरलोम्ना प्रोर्णोति ॥ अङ्गुष्ठबन्धं विस्रस्याऽथाऽग्नीनादीपयति—'भूः पृथिवीं गच्छतु' इति वायव्यां गार्हपत्यं 'भुवोऽन्तरिक्षं गच्छतु' इति नैर्ऋत्यामन्वाहार्यपचनं 'सुवर्दिवं गच्छतु' इत्यैन्द्यामाहवनीयं पुरस्तात्सभ्यावसथ्यौ तूष्णीं वायव्यमेवोत्तरेष्वग्निषु ॥ अथ सम्भारैश्च पत्नीभिश्चोपोषित् ॥ ग्रहैः ऋतुमुखीयेन 'ब्राह्मण एक होता' इति चोपस्थानम् । (बो. पि. सू. १. ११) अथैनमादीपयत्यादीप्यमानमनुमन्त्रयते—'मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो मा शरीरम् । यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात्पितृभ्यः' इति ॥ प्रज्वलितमनुमन्त्रयते— 'शृतं यदा करसि जातवेदोऽथेमेनं परिदत्तात्पितृभ्यः । यदा गच्छत्यसुनीतिमेतामथा देवानां वशनीर्भवाति' इति ॥ अत्र षड्ढोतारं व्याचष्टे-- 'सूर्यन्ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः' इति ॥ अत्रैतमजं

चित्यन्तेऽबलेन शुल्बेन बध्नाति—अजोभागस्तपसा तं तपस्व तन्ते शोचिस्तपतु तन्ते आर्चिः। यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमं सुकृतां यत्र लोकाः ' इति ॥ स यद्यहो द्रवति नैनं प्रत्यानयति। प्राग् हैक उपोषणात् ॥ तत्प्रच्छाद्येन पर्णमयेन स्रुवेणोपघातं जुहोति – ' य एतस्य पथो गोप्तारस्तेभ्यस्स्वाहा ' इति नव स्रुवाहुतीः ॥ अथान्यां जुहोति—' अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि ॥ वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमं सुकृतां यत्र लोकास्स्वाहा ' इति ॥ अत्रैव स्रुवमनुप्रहरति ॥ अत्रैव दर्वीमनुप्रहरति जघनेन चिताम् ॥ अथैनं नवर्चेन याम्येन सूक्तेनोपतिष्ठते—' प्रकेतुना बृहता भात्यग्निः ' इति ॥ आसीनः पराचाऽनुशंसति वा ॥ ( बो. पि. सू. ३. ४. १४, १५ ) सुसमिद्धेष्वग्निषु तं घर्ममनुमन्त्रयते—' यं घर्मो अग्निमभिजिहर्ति होमान्यां गतिं यान्ति युधि युद्धशूरास्सुगतिनः । अग्निहोत्रा निष्ठास्तनुत्यजो मोक्षविदो मनीषिणो विधूतपापा विरजा विशोकास्तान् लोकान्गच्छ सुगतिं नाकपृष्ठं स्वधा नमः ' इति ॥ यद्यु वाऽनाहिताऽग्निर्भवति तं घर्ममनुमन्त्रयते—' यं घर्मो अग्निमभिजिहर्ति होमान्यां गतिं यान्ति वै युधि युद्धशूरास्तनुत्यजो मोक्षविदो मनीषिणो विधूतपापा विरजा विशोकास्तान् लोकान्सुगतिं नाकपृष्ठं स्वधा नमः ' इति ॥ ( बो. पि. सू. १. ११. १३,१४ ) जघनेन दहनं तिस्रो दक्षिणप्राचीः कर्षूः कुर्वन्ति ॥ अथैना अद्भिरनुप्लाव्य सिकताभिरनुप्रकीर्य सङ्गाहन्त यवीयान्यवीयान्पूर्वः पूर्वस्सङ्गाहन्ते ॥ ( बो. पि. सू. १. १२ ) अश्मन्वती रेवतीस्संरभध्वमुत्तिष्ठत प्रतरता सखायः । अत्रा जहाम ये असन्नशेवाश्शिवान्वयमभि वाजानुत्तरेम ' इति ॥ जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बध्वा विनिस्सर्पन्ति—' यद्वै देवस्य सवितुः पवित्रं सहस्रधारं विततमन्तरिक्षे । येनापुनादिन्द्रमनार्तमार्त्यै तेनाऽहं मां सर्वतनुं पुनामि ' इति ॥ जघन्यो व्युदस्यति—' या राष्ट्रात्पन्नादपयन्ति शाखा अभिमृता नृपतिमिच्छमानाः । धातुस्तास्सर्वाः पवनेन पूताः प्रजयाऽस्मान् रय्या वर्चसा संसृजाथ ' इति ॥ यत्राऽपस्तद्यन्त्यनवेक्षमाणा अपस्सचेला दक्षिणामुखास्समृत्तिका आप्लवन्ते–

‘ धाता पुनातु सविता पुनातु ’ इति ॥ नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याऽऽचम्याऽऽदित्यमुपतिष्ठते—‘उद्वयं तमसस्परि’ इति ॥ अथ गृहानायान्ति यश्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ एतस्मिन्कालेऽस्याऽमात्या केशश्मश्रूणि वापयन्ते ये सन्निधाने भवन्ति। विकल्पमितरेषु वापयेरन्वा निवर्तयेरन्वा ॥ श्रुतवता तु वक्तव्यमेवाऽसन्निधानेऽपीति बोधायनस्य कल्पः ॥ न समावृत्ता वपेरन्नन्यत्र विहारादित्येके ॥ मातरि पितर्याचार्य इति त्रिरात्रमक्षारलवणभोजनमधश्शयनं ब्रह्मचर्यं त्र्यहं षडहं द्वादशाहं संवत्सरं यावद्ग्रहणं द्वादशाहाऽवरार्धं परमगुरुष्वेवमघोदकमितरेषु त्रिरात्रं यावज्जीवं प्रेतपत्नी ॥ ( बो. पि. शे. सू. १. १० ) अथ शुक्रवारे निशायां वा दहेत्तदौरसव्यतिरिक्ता न वापयेयुरपरेद्युः कुर्युः पुत्रस्त्वकृतचौळोऽपि मातरं पितरं वा दग्ध्वा तदा चौळवत्तूष्णीं वपनम्। पश्चाद्यथाकाले विधिवत्कुर्यात्। मातृपितृव्यतिरिक्तदहने न वापयेत् ॥ ( बो. पि. सू. २. २ ) अथ वै भवति प्रजापतिः प्रजास्सृष्ट्वा वृत्तोऽशयत्तं देवा भूतानां रसं तेजस्सम्भृत्य तेनैनमभिषज्यन्निति तत्पृच्छन्ति कतमत् ब्राह्मणानां तेजो रसो येनैनमभिषज्यन्निति चतुर्होतार इत्येव ब्रूयात् ॥ तस्य सग्रहैर्होतृभिर्होमो भर्तृसूक्तेन भरणं पत्नीभिरुपसंवेशनं दक्षिणाप्रतिग्रहैर्निर्मार्गो हृदयैर्हिरण्यशकलान्सम्भारैः पात्रचयो ज्योतिष्मतीभिरुपोषणं नारायणाभ्यां ‘ ब्राह्मण एकहोता ’ इति चोपस्थानं ‘ प्रयासाय स्वाहा ’ इत्याज्याहुतीः ‘ चित्तं सन्तानेन ’ इति हविराहुतीः मृत्युसूक्तेनाऽनुशंसनं सौम्यया सङ्गाहनमीयुष्ट्य ऽवगाहनं सौर्येणाऽऽदित्यस्योपस्थानमिति तानेतान् परं ब्रह्मेत्याचक्षते ॥ तान्न साधारणे श्मशाने प्रयुञ्जीत नाऽनाचार्याय नाऽश्रोत्रियाय नाऽगुरवे नाऽब्रह्मविदे कामं पित्र्ये च ॥ ( बो. पि. सू. ३. ४ ) अथाऽप्रतीक्षास्तीर्थमायान्ति। तान्गोत्रमैथुनो राजपुरुषो वा वारयति पर्णशाखया मावतरतेति। ‘ न पुनः पुनरागमिष्यामहे ’ इत्युक्त्वा केशानोप्यातुरव्यञ्जनानि कुर्वीरन्। पांसूनोप्यैकैकवाससो दक्षिणामुखा सकृदुन्मज्ज्योत्तीर्योपविशन्ति॥ बद्धशिखा यज्ञोपवीतिनोऽप आचम्य प्राचीनावीतं कृत्वा दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु दूर्वाञ्जलिनोदकमादाय सव्यं

जानुं निपात्य दक्षिणामुखास्तिलमिश्रा अपस्तं प्रति 'असावेतत्त उदकम्' इति। एवं द्वितीयं तृतीयञ्च कृत्वा स्नात्वाऽप आचम्य 'सन्त्वा सिञ्चामि यजुषा' इति शान्तिं कृत्वा ज्योतिष्मत्याऽऽदित्यमुपतिष्ठते—'उद्वयं तमसस्परि' इति॥ अथाऽप्रतीक्षाः कनिष्ठप्रथमा ग्राममायान्ति॥ गृहद्वारे निम्बपत्रं प्राश्याऽप आचम्य गोशकृत्सुवर्णापोऽग्निगौरसर्षपान्संस्पृश्याऽश्मनि तिष्ठन्तीत्येके॥ यत्र च प्रेतस्य प्राणा उत्क्रान्ता भवन्ति तत्रोदकमिश्रांस्तिलतण्डुलान्त्सम्प्रकिरन्ति—'स्वस्त्यस्तु वो गृहाणामशेषे शिवं वास्त्वास्ताम्' इति ज्योतिष्कृत्वाऽगारं प्रविशन्ति॥ एकरात्रमुपोष्य तेषामक्षारलवणभोजनमधश्शयनं ब्रह्मचर्यञ्चादशरात्रात्सायम्प्रातस्तूष्णीमुपलेषु पिण्डं निपृणुयात्सायम्प्रातस्सकृदुदकक्रिया॥ अथैषा पत्नी नाश्नीयात्पक्वान्नस्य॥ दशमेऽहनि त्रिरुदकमुत्सिञ्चन्ति सर्वेऽमात्याः॥ अथैकादश्यामेकोद्दिष्टं कुर्वन्ति॥ (बो. पि. सू. २. ४) कथमु खलु प्राचीनावीतिना पितृमेधः कर्तव्योऽन्यत्र यज्ञोपवीतिनेति। प्राचीनावीतिनेत्येव ब्रूयात्। विज्ञायते च—'पितॄणां वा एष मेधो देवानां वा अन्ये मेधाः' इति॥ निवीतिनस्त्वेवैनं वहेयुश्चितायां चादध्युः॥ (बो. पि. सू. २. ३. १८) बह्वृचां पितृमेधे स्त्रीणामिमान्मन्त्रानुपोद्धरेत्॥ (बो. पि. सू. २. ४) 'इयं नारी पतिलोकं, उदीर्ष्व नार्यभिजीवलोकं, सुवर्णं हस्तात्, धनुर्हस्तात्, मणिं हस्तात्, मैनमग्ने, शृतं यदा, अजो भागस्तपसा, अयं वै त्वम्, इदन्त एकम्, यौ ते श्वानौ, यत्ते कृष्णः, उत्तिष्ठ प्रेहि, अस्मात्त्वम्, अपेत वीत, उच्छ्मञ्चस्व, पृथिवि मा विबाधिथाः' इति॥ (बो. पि. सू. २·३) न प्राक् चौळात्प्रमीतानां दहनं विद्यते। नाऽनुपनीतानां कन्यानां वा पितृमेधः। अनुपनीतानां कन्यानां वा पुनर्दहनमन्त्रेण दहेयुः॥ (बो. पि. सू. ३. ५) अथैके 'तूष्णीमितरेषाम्' इत्यत्रोदाहरन्ति—'भार्यासंज्ञिका नारी पुरुषो ब्राह्मणसंज्ञकः। त एते हीतृसस्कारा इतरे मन्त्रसंस्काराः' इति॥ ता अनुव्याख्यास्यामः—अनुपेत उन्मत्तो जळोऽन्धो मूको बधिरः पङ्गुष्षण्डः कुष्ठी किलासी कुब्जः खञ्जः कुणिर्व्यसनी हीनाङ्गोऽधिकाङ्गस्स भागवतो ब्राह्मणोऽनाथो राजन्योऽनाहिताऽ-

ग्निर्वैश्यस्त्रियोऽनुत्पन्नपुत्राः कन्या विधवा कुत्सिनी वन्ध्या चेति। तेषां प्राणेषूत्क्रान्तेषु हिरण्यशकलमास्ये निधाय तूष्णीं स्नापयेत्। श्मशानं नीत्वाऽमन्त्रेण शाखया संमृजेत्। तूष्णीं तिलतण्डुलान् सन्निवपेत्। सम्प्रकीर्य चितां कल्पयित्वा चितायां प्रेतं निधायाऽपसलैः परिस्तीर्याऽऽज्यमास्ये निनयेत्—'इदं त आत्मनश्शरीरमयं त आत्माऽऽत्मनस्त आत्मानं शरीराद्ब्रह्म निर्भिनत्ति भूर्भुवस्सुवरसौ स्वाहा' इति। सा हि पूर्णाहुतिः। अपि वा—'अस्मात्त्वमधि जातोऽस्ययं त्वदधिजायताम्। अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा' इत्यनयर्चा वा 'वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यस्साध्येभ्यो मरुद्भ्य ऋभुभ्यः पितृभ्यस्स्वाहा' इत्यनेन यजुषा वा। अत्रैव मन्त्रेण सिग्वातेनोपवीजयन्ति। तूष्णीमुदकुम्भेनाऽपसव्यं परिषिञ्चेत्। उत्तपनीयेनाऽग्निना संयोजयेत्। नातीर्थेऽभिषिञ्चेत्। प्रसिद्धमेकादश्यामेकोद्दिष्टं कुर्वन्ति ॥ (बो. पि. सू. ३·६) यथो एतत्प्राक्चौळात्प्रमीतानां दहनं विद्यते नाऽनुपनीतानां कन्यानां वा पितृमेध इत्युक्तम्। कथमु खल्वेषामुक्तस्संस्कारो विद्यत इति॥ असमाप्तशरीराणां गर्भाणां स्रवणमित्येके। गर्भस्रवणे 'इयं वा अग्निर्वैश्वानरोऽस्यामेवैनं जुहोति' इति ब्राह्मणम्। भूमौ निहत्य सचेलोऽवगाहेत सद्यश्शौचम्॥ अदन्तजातानां निखननं प्रणवेन वा॥ दन्तजातानां व्याहृतिविधानेन वा। तस्य कः कर्मण उपक्रमो भवति? निर्मन्थ्यं कुर्यान्निर्मन्थ्येन स्त्रीकुमाराणां दहेयुरित्युक्तत्वात्। अथ ग्राम्येणाऽलङ्कारेणाऽलङ्कृत्य श्मशानं निर्हृत्य प्रेतं तत्रैव निधायाऽऽस्यातं चितायामुपकल्पनम्॥ अपरेण चितामग्निमुपसमाधाय सम्परिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य पर्णमयेन स्रुवेण मध्यमेन पलाशपर्णेन वा 'तत्सवितुर्वरेण्यम्' इत्यनुद्रुत्यैकादशकृत्वो गृह्णाति—'प्रजापतये स्वाहा' इति प्रथमामाहुतिं जुहोति 'प्रेतायाऽमुष्मै यमाय वैवस्वताय स्वाहा' इति द्वितीयां 'दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तत्सर्वञ्जुहोति' इति ब्राह्मणम्॥ पर्णमयस्रुवं प्रेतस्योपरिष्टान्निधाय 'भूः' इति मनसा ध्यायन्नुपोषेत्। 'भुवः' इत्युपस्थानं

'सुवः ' इत्यवगाह्याऽप्सु निमज्योन्मज्योत्तीर्याऽऽचम्यैकमुदकाञ्जलिं ददाति ॥ न चाऽस्याऽत उर्ध्वं श्मशानं कर्तुमाद्रियेत नोदकक्रिया वा ॥ ( बो. पि. सू. ३·७ ) आपद्युक्तं प्रेतविधानमेवं शस्त्रविषरज्जुजलाऽचलमारुततरुपाषाणहुताशनाऽनुच्छ्वासनादिना मृतानां शरीरसंस्कारं वर्जयेत् ॥ देशान्तरमृते सद्ग्रामहते व्याघ्रहते शरीरमादाय विधिना दाहयेत् ॥ अथ यद्येकाङ्गदर्शने पराङ्गस्य ' सप्तप्राणास्तदाश्रयाः ' इति मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् ॥ ( बो. पि. सू. २·३ ) न प्राक्चौळात्प्रमीतानां दहनं विद्यते ॥ नाऽनुपनीतानां कन्यानां वा पितृमेधः ॥ अनुपनीतानां कन्यानां वा पुनर्दहनमन्त्रेण दहेयुः ॥

( बो. पि. सू. २·८ ) अथ द्विजातीनां पापकर्मणामज्ञातमृतानां मुख्यमेवशरीरसंस्कारं कुर्वन्ति। तदानीमेव प्रायश्चित्तं कुर्वन्ति ॥ सर्पदष्टानां ' नमो अस्तु सर्पेभ्यः ' इति तिस्र आहुतीर्जुहुयात् ॥ ॥ जले मृतानां ' इमम्मे वरुण, तत्त्वा यामि ' इति द्वाभ्याम् ॥ ॥ समुद्रे मृतानां ' समुद्राय वयुनाय ' इत्यृचा ॥ ॥ पश्वादिभ्यो मृतानां ' आ गावः, इन्द्रो यज्वने ' इति द्वाभ्याम् ॥ ॥ अशनिपातमृतानां ' अग्निर्मूर्धा, भुवः ' इति द्वाभ्याम्। ' मूर्धानं दिवः ' इत्येतेन वा ॥ ॥ अथ सूतिकाया उदक्याया आशौचिनां वा मरणे आशौचकालेऽतीते वा तावत्कालं शरीररक्षणाऽशक्तौ मृद्भस्मामिश्रितेन पञ्चगव्येन गोमूत्रेण वा कुशैः प्रोक्षति—' सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिः ' इति ॥ शतरुद्रियेण, ' अग्निर्मूर्धा ' इत्यनुवाकेन चेत्येके। अथाऽन्येन वाससाऽऽच्छाद्य विधिना दहेत् ॥ ( बो. पि. सू. २·६·१२ ) अथ यदि यजमाने म्रियमाणे पत्न्यनालम्भुका स्यात्कथं तत्र प्रायश्चित्तम् ? द्वादशगृहीतेन स्रुचं पूरयित्वा दुर्गामनस्वतीमहाव्याहृतीर्हुत्वा ' अप पाप्मानं, तद्यमो राजा ' इति द्वाभ्यां पूर्णाहुतिं हुत्वा यद्यर्थिनो विन्देरंस्तेभ्यो धेनुं दद्यादिति ॥

प्रेतपुनस्सन्धानम् ॥ (बो. गृ. शे. सू. ४·१४) अथ गृहस्थस्यौपासनं विच्छिद्येत प्राणेषूत्क्रान्तेषूभयोः श्रोत्रिययोर्वचनादुद्धरेत् श्रोत्रियागाराद्वाऽऽहृत्य व्याहृतीभिर्नियुप्योपसमाधाय पर्युक्ष्य परिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वारब्धो यजमानो जुहोति—'सप्त ते अग्ने', सप्त व्याहृतिभिश्च, 'पूर्वं देवा अपरेण, प्राणापानौ' इति द्वाभ्यां, 'मा त्वा वृक्षौ सम्बाधिष्टाम्, मा त्वा वृक्षौ सम्बाधेथाम्' इति द्वाभ्याम्, 'अग्नेऽभ्यावर्तिन्, अग्ने अङ्गिरः' इति द्वाभ्यामेकैकं प्रति चतुर्गृहीतं गृहीत्वा जुहोति ॥ न च ब्रह्मा न च प्रणीता न चरुर्न च स्विष्टकृतम् ॥ अत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ॥ (बो. पि. सू. २·७) मरणे श्रेयोऽवाप्तिः। 'य एवं विद्वानुदगयने प्रमीयते सौर्येण पथा स्वर्गं लोकमेत्यथ यो दक्षिणे प्रमीयते चान्द्रमसेन पथा पितृलोकमेति' इति विज्ञायते ॥ 'ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्' इत्याहुतिभिष्षड्भिरेवैनं पूर्वपक्ष उदगयन आहरेदिति ॥ 'उदगयन आपूर्यमाणपक्षे दिवा कृत्वन्ते श्रेयो मरणम्' इत्युपदिशन्ति ॥ (बो. पि. सू. २. ४. ७–१२) सह प्रमीतयोः सहैकः पितृमेधः। औपासनस्योल्मुकार्थत्वादौपासनेऽविद्यमाने निर्मन्थ्येन पितृमेधः। 'औपासनेनानाहिताग्निम्' इत्यविशेषाज्जायापत्योरनाहिताग्न्योरित्येवेदमुक्तं भवति। तयोर्यः पूर्वो म्रियेत तस्यौपासनेन पितृमेधः। यः पश्चात्तस्य निर्मन्थ्येन। उत्तपनीयमेके समामनन्ति। निर्मन्थ्येन स्त्रीकुमाराणां दहेयुरित्येकेषाम्। (बो. पि. सू. २·३) अघोदकमुत्सिच्य दशरात्रमाशौचम्। दशरात्रे शौचं कृत्वा शान्तिः। सपिण्डानां सबान्धवानां मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमात्पुरुषादाचार्यान्तेवासिनोश्च सपत्नीकानां सापत्यानां सपिण्डानां दशरात्रं त्रिरात्रमितरेषाम् ॥ बाले देशान्तरस्थे च सद्यश्शौचमित्येके ॥

चन्द्रिकायाम्—'प्रेतस्य पुत्रो दाहादि दद्यादेवौरसः सुतः। बहुत्वे तु गुणी दद्यात्साम्ये तु ज्येष्ठ एव च' इति। ऋष्यशृङ्गः—'पुत्राणां मध्यमो वाऽपि कनिष्ठो ज्येष्ठ एव वा। पितुर्यस्तु प्रियतमस्सर्वं तेनैव कारयेत्' इति ॥ औरसलक्षणमाह

याज्ञवल्क्यः—' औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रो नेतरेण वा' इति ॥ प्रेतालङ्करणम्—' पुष्पैस्तु गन्धमालाद्यैर्माधवाऽङ्घ्रिसमर्पितैः। यदि प्रेतमलङ्कुर्यात्स याति परमां गतिम्' इति॥ प्रह्लादसंहितायाम्—' शरीरं दह्यते यस्य तुलसीकाष्ठवह्निना। नरो यत्कुरुते पापं तस्मात्पापात्प्रमुच्यते॥ यद्येतत्तुलसीकाष्ठं मध्ये वाऽपि चितौ कृतम्। दाहकाले भवेन्मुक्तिः पापकोटिकृतस्तथा' इति॥ आपस्तम्बः—' धून्वने अन्वारम्भणे सङ्गाहने संसर्पणे उदकोपस्पर्शने' इति सर्वत्र कनिष्ठ-प्रथमा अनुपूर्वा इतरे स्त्रियोऽग्रे' इति॥

## ॥ अथ पितृमेधः ॥

पुत्रादिः पित्रादेः संस्कार्यस्य मरणसंशये धर्मशास्त्रज्ञमाचार्यमाहूय सम्पूज्यानुज्ञाप्य संस्कार्यं स्नानेन मन्त्रजलप्रोक्षणेन गंगाजलप्राशनादिना वा शुद्धं विधाय स्वयमपि शुद्धो भूत्वा दर्भपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य "मम आसन्न-मरणस्य पित्रादेः जन्मप्रभृत्येतावत्कालपर्यन्तं ज्ञानतोऽज्ञानतः कामतोऽकामतः सकृदसकृद्वा कृतकायिक-वाचिक-मानसिक-सांसर्गिक-स्पृष्टास्पृष्ट-भुक्ताभुक्त-पीतापीत- संकरीकरण-मलिनीकरण-पात्रीकरण-जातिभ्रंशकर- प्रकीर्णकान्त-पातकानुपातको-पपातक-लघुपातकादि-नानाविधपातकानां समूलनिर्बर्हणपूर्वकमुत्तमलोकप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्मृत्युक्तं सर्व-प्रायश्चित्तप्रत्याम्नायभूतं शक्तेरनुरूपं (द्वादशाब्दषडब्दत्र्यब्दसार्धाब्दैकाब्दान्यतमं) कृच्छ्र-तत्प्रत्याम्नायगोनिष्क्रयसुवर्णदानद्वारा रजतदानद्वारा वा करिष्ये" इति संकल्प्य तावत्प्रमाणं सुवर्णं रजतं वा— "यज्ञसाधनभूताया विश्वस्याघौघनाशिनी। अस्यामूल्यप्रदानेन प्रीयतां विश्वरूप धृक् । पातकानां विशुध्यर्थं धेनुमूल्यं ददाम्यहम् । तस्मादस्य प्रदानेन सर्वपापं

व्यपोहतु" इति पठन् जलधाराविसर्गपूर्वकं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दद्यात्॥ ॥ अथ ब्रह्मकूर्चविधानं कूष्माण्डहवनं चोभयं यथानुकूलमेकैकं वा प्रायश्चित्तं कारयित्वा गोदानादि दशदानानि तिलाद्यष्टदानानि च एकादशाहकृत्येषु वक्ष्यमाणदानमन्त्रैः कारयेत्॥ ॥ अथ तिलपात्रदानविधिः ॥ कांस्यपात्रे ताम्रपात्रे वा तिलान् सुवर्णं च निक्षिप्य यथाशक्ति दक्षिणां निधाय "यानि कानि च पापानि ब्रह्महत्यासमान्यपि। तिलपात्रप्रदानेन तानि नश्यन्तु केशव"॥ मम (पित्रादेः) जन्मप्रभृतिमरणान्तमाचरितसमस्तपापापनोदनार्थमिदं तिलपात्रं सदक्षिणं तुभ्यमहं संप्रददे, न मम॥ इति विप्रहस्ते जलविसर्गपूर्वकं दद्यात्॥ ॥ उत्क्रान्तिगोदानविधिः ॥ "मम (पित्रादेः) प्राणानां सुखोत्क्रमणप्रतिबन्धकसकलपापक्षयद्वारा सुखोत्क्रमणसिद्ध्यर्थमुत्क्रान्तिगोदानं करिष्ये" इति संकल्प्य गां विप्रं च संपूज्य "अत्युत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रमणसिद्धये। तुभ्यं संप्रददाम्येनां गामत्रोत्क्रान्तिसंज्ञिताम्"॥ मम (पित्रादेः) सकलपापक्षयपूर्वकं सुखोत्क्रमणसिद्ध्यै इमामुत्क्रान्तिधेनुं रुद्रदैवत्यां तुभ्यमहं संप्रददे, न ममेति पुच्छे गृहीत्वा विप्रहस्ते जलविसर्गपूर्वकं दद्यात्। एतत्सर्वं मुमूर्षुः शक्तश्चेत्स्वयमेव कुर्यात्। यदि पित्रादिरकृतप्रायश्चित्त एव म्रियेत तदानीं पुत्रादिरेवोक्तं प्रायश्चित्तं दानं वाऽऽशौचान्ते करिष्ये इत्यधुना संकल्पमात्रं कृत्वाऽऽशौचान्ते कुर्यात्। ततो भगवन्नामसंकीर्तनम् उपनिषद्भागवतपुराणगीतापुरुषसूक्तविष्णुसूक्तादि श्रावयेत् ॥

अथ प्राणोत्क्रमणकाले भूमिं गोमयेनोपलिप्य सिकतास्तिलांश्च संप्रकीर्य दक्षिणाग्रान्दर्भान् संस्तीर्य तेष्वेनं "सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आधित। स्योनास्मै सुषदा भव यच्छास्मै शर्म सप्रथाः" इति दक्षिणाशिरसं निपात्य देशकालौ संकीर्त्य "अस्य पुण्यलोकावाप्त्यर्थं कर्णे (सूक्त) मन्त्रपठनं करिष्ये" इति संकल्प्य दक्षिणे कर्णे जपति—"आयुषः प्राणꣳ सन्तनु। प्राणादपानꣳ सन्तनु। अपानाद्व्यानꣳ सन्तनु। व्यानाच्चक्षुः सन्तनु। चक्षुषः श्रोत्रꣳ सन्तनु। श्रोत्रान्मनः सन्तनु। मनसो वाचꣳ

सन्तनु । वाच आत्मानꣳ सन्तनु । आत्मनः पृथिवीꣳ सन्तनु । पृथिव्या अन्तरिक्षꣳ सन्तनु । अन्तरिक्षाद्दिवꣳ सन्तनु । दिवः सुवः सन्तनु ॥ ॥ संज्ञानं विज्ञानं प्रज्ञानं जानदभि जानत् । संकल्पमानं प्रकल्पमानमुपकल्पमानमुपक्लृप्तं क्लृप्तम् । श्रेयो वसीय आयत्संभूतं भूतम् । चित्रः केतुः प्रभानाभान्त्संभान् । ज्योतिष्माꣳ स्तेजस्वानातपꣳस्तपन्नभितपन् । रोचनो रोचमानः शोभनः शोभमानः कल्याणः । दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना । आप्यायमाना प्यायमाना प्याया सूनृतेरा । आपूर्यमाणा पूर्यमाणा पूरयन्ती पूर्णा पौर्णमासी । दाता प्रदाता नन्दो मोदः प्रमोदः । आवेशयन्निवेशयन्त्संवेशनः सꣳशान्तः शान्तः । आभवन्प्रभवन्त्संभवन्त्संभूतो भूतः । प्रस्तुतं विष्टुतꣳ सꣳस्तुतं कल्याणं विश्वरूपम् । शुक्रममृतं तेजस्वि तेजः समिद्धम् । अरुणं भानुमन्मरीचिमदभितपत्तपस्वत् । सविता प्रसविता दीप्तो दीपयन्दीप्यमानः । ज्वलञ्ज्वलिता तपन्वितपन्त्संतपन् । रोचनो रोचमानः शुंभूः शुंभमानो वामः । सुता सुन्वती प्रसुता सूयमानाभिषूयमाणा । पीती प्रपा संपा तृप्तिस्तर्पयन्ती । कान्ता काम्या कामजातायुष्मती कामदुघा । अभिशास्तानुमन्ता नन्दो मोदः प्रमोदः । आसादयन्निषादयन्त्सꣳसादनः सꣳसन्नः सन्नः । आभूर्विभूः प्रभूः शंभूर्भुवः । पवित्रं पवयिष्यन्पूतो मेध्यः । यशो यशस्वानायुरमृतः । जीवो जीविष्यन्त्स्वर्गो लोकः । सहस्वान्त्सहीयानोजस्वान्त्सहमानः । जयन्नभिजयन्त्सुद्रविणो द्रविणोदाः । आर्द्रपवित्रो हरिकेशो मोदः प्रमोदः । अरुणोऽरुणरजाः पुण्डरीको विश्वजिदभिजित् । आर्द्रः पिन्वमानोऽन्नवान् रसवानिरावान् । सर्वौषधः संभरो महस्वान् । राजत्काजोऽवत्काः । क्षुल्लकाः शिपिविष्टकाः । सरिस्त्रराः सुशेरवः । अजिरासो गमिष्णवः । इदानीन्तदानीमेतर्हि क्षिप्रमजिरम् । आशुर्निमेषः फणो द्रवन्नतिद्रवन् ।

११

त्वरःस्त्वरमाण आशुराशीयाञ्जवः । अग्निष्टोम उक्थ्योऽतिरात्रो द्विरात्रस्त्रिरात्रश्चतूरात्रः । अग्निर्ऋतुः सूर्य ऋतुश्चन्द्रमा ऋतुः । प्रजापतिः संवत्सरो महान्कः ” इति । एवमुत्तरे कर्णेऽपि जपति ॥

अथ प्राणषूत्क्रान्तेषु मृतस्यास्ये हिरण्यशकलं निधाय कर्ता स्नात्वार्द्रवासा एकदर्भपवित्रपाणिराचम्य प्राणानायम्य देशकालौ स्मृत्वा ममात्मशुद्धिद्वारा मृतस्य ( पित्रादेः ) पैतृमेधिकसंस्कारं कर्तुमधिकारसिध्यर्थं कृच्छ्रत्रयप्रत्याम्नायगोनिष्क्रय-हिरण्यमाशौचान्ते दास्ये । आदौ ब्रह्मदण्डं वपनं च करिष्ये इति संकल्प्य ॥ “ समस्त संपत् ” इति ब्रह्मदण्डं निधाय पित्रादेः पैतृमेधिकसंस्कारं कर्तुं मम अधिकारसिद्धिरस्त्विति भवन्तो ब्रुवन्तु । अधिकारसिद्धिरस्त्विति प्रतिवचनम् । “ मेरुमन्दर-तुल्यानि पापानि विविधानि च । केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ” इत्युक्त्वा कण्ठादुपरि वापयित्वा स्नात्वा पुनरेकदर्भपवित्रं धृत्वा देशकालौ संकीर्त्यामुकगोत्रस्यामुकशर्मणः ( पित्रादेः ) प्रेतस्याधिव्याधिवशात्स्नानसन्ध्यादि कर्मलोप-ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टाभक्ष्यभक्षणास्पृश्यस्पर्शनान्तरालमरण–खट्वामरणादिजनित–समस्तपापपरिहारार्थं कृच्छ्रत्रय-प्रत्याम्नायगोनिष्क्रयहिरण्यदानमाशौचान्ते करिष्ये, इति संकल्प्याशौचान्ते कुर्यात् ॥ शवे पर्युषितेऽपि कृच्छ्रत्रयं कृत्वा शवं पञ्चगव्येन “ पवमानः सुवर्जनः ” इत्येतेनानुवाकेन स्नापयेत् ॥ ॥

## ॥ पितृमेधे प्रायश्चित्तानि ॥

प्रेतस्य विच्छिन्नाग्निपुनःसन्धानम् ॥ प्राचीनावीती दक्षिणाप्राङ्मुखः सर्वकर्माणि कुर्यात् ॥ आचम्य प्राणानायम्य ( आचमनप्राणायामयोः सर्वत्रोपवीतम् ) देशकालौ संकीर्त्य “ अमुकगोत्रस्यामुकशर्मणो मम ( पित्रादेः ) प्रेतस्य

पैतृमेधिकविधिना संस्कारं कर्तुं विच्छिन्नाग्निं पुनः सन्धास्ये" इति संकल्प्य याज्ञिकशकलेन भूमिं सकृदुद्धृत्यावोक्ष्य स्थण्डिलं कृत्वा प्रागग्रा दक्षिणाग्राश्च तिस्रस्तिस्रो रेखास्तूष्णीं विलिख्याद्भिरभ्युक्ष्याग्निं व्याहृतिभिर्नियुप्यान्वादध्यात् । प्रेतपुनःसन्धानहोमः कर्म, पैतृकं तन्त्रं, क्रव्यादो नामाग्निः, अग्न्यादयो देवताः, आज्यं हविः, सद्यो यक्ष्ये, इत्याद्यन्वाधायाग्निमपसव्यं परिसमूह्य पर्युक्ष्य दक्षिणाग्रप्रागग्रैर्दर्भैः ( पुरस्ताद्दक्षिणाग्रान् उत्तरतः प्रागग्रान्पश्चाद्दक्षिणाग्रान्दक्षिणतः प्रागग्रानुत्तरानुत्तरान्दक्षिणानधरानित्येवं ) परिस्तीर्य दक्षिणेनाग्निं दर्भेषु आज्यस्थालीं स्रुवं स्रुचं प्रोक्षणीमित्येकैकशः सादयित्वा एकदर्भपवित्रेण प्रोक्षणीः संस्कृत्योत्तानानि पात्राणि कृत्वा सकृत्प्रोक्ष्यापरेणाग्निमाज्यं निरूप्य दक्षिणतोंगारान्निरूह्य तष्वधिश्रित्याभिद्योतनेनाभिद्योत्य दर्भाग्रं प्रच्छिद्य प्रक्षाळ्य प्रत्यस्य पूर्वाभिद्योतनेनैव पुनरभिद्योत्याऽप्रदक्षिणं सकृत्पर्यग्नि कृत्वा दक्षिणत उद्वास्यांगारान्प्रत्यूह्याज्यं सकृदुत्पूय पवित्रं विस्रस्याप उपस्पृश्याग्नावनुप्रहरति। अथ स्रुक्स्रुवौ निष्टप्य संमृज्य संमार्गदर्भानाद्भिः सꣳस्पृश्य प्रहृत्याग्निमपसव्यं परिषिच्य समिधमाधाय स्रुचि चतुर्गृहीतं गृहीत्वा ( पंचावत्तिनां पंचगृहीतं ) पूर्णाहुतिं जुहोत्यन्वारब्धे यजमाने–" सप्त ते अग्ने समिधः सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि । सप्त होत्रास्सप्त धात्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा । अग्नये सप्तवत इदं०"। पुनश्चतुर्गृहीतेन सप्तव्याहृतीर्विग्राहं जुहोति—" ॐभूस्स्वाहा । अग्नय इदं० ॥ ॐ भुवस्स्वाहा । वायव इदं० ॥ ॐ सुवस्स्वाहा । सूर्यायेदं० ॥ ॐ महस्स्वाहा । बागीशायेदं० ॥ ॐ जनस्स्वाहा । वरुणायेदं० ॥ ॐ तपस्स्वाहा । इन्द्रायेदं० ॥ ॐ सत्यꣳ स्वाहा । विश्वेभ्यो देवभ्य इदं० " ॥ पुनश्चतुर्गृहीतेन द्वे आहुती विग्राहं जुहोति—" पूर्वं देवा अपरेणानु पश्यञ्जन्मभिः । जन्मान्यवरैः पराणि । वेदानि देवा अयमस्मीतिमाम् । अहꣳ हित्वा शरीरं जरसः परस्तात्स्वाहा । देवेभ्य

इदं० ॥ प्राणाऽपानौ चक्षुः श्रोत्रम् । वाचं मनसि सम्भृताम् । हित्वा शरीरं जरसः परस्तात् । आभूतिं भूतिं वयमश्नवामहै स्वाहा । प्राणादिभ्य इदं०" ॥ पुनश्चतुर्गृहीतेन द्वे आहुती विग्राहं जुहोति – "मा त्वा वृक्षौ सम्बाधिष्टां मा माता पृथिवि त्वम् । पितॄन्ह्यत्र गच्छास्ये धासं यमराज्ये स्वाहा । वैवस्वतायेदं० ॥ मा त्वा वृक्षौ सम्बाधेथां मा माता पृथिवी मही । वैवस्वतꣳ हि गच्छासि यमराज्ये विराजसि स्वाहा । वैवस्वतायेदं०" ॥ पुनश्चतुर्गृहीतेन द्वे आहुती विग्राहं जुहोति— "अग्नेभ्यावर्तिन० धनेन स्वाहा ॥ अग्ने अङ्गिरः० कृधि स्वाहा" ॥ आहुतिद्वयेऽपि अग्नयेऽभ्यावर्तिन इदं० ॥ स्रुवेण अनाज्ञातादित्रयं मिन्दाद्वयं भूरादिचतुष्टयञ्च हुत्वा होमशेषं समापयेत् ॥ ॥ औपासनविच्छित्तिदिनादारभ्यैतावत्कालपर्यन्तं सायंप्रातरौपासनाऽकरणप्रायश्चित्तार्थं कृच्छ्रप्रत्याम्नायहिरण्यदानमाशौचान्ते करिष्ये, इति सङ्कल्प्य ह्यस्तनसायमौपासनाऽद्यतनप्रातरौपासनार्थं तण्डुलं संस्कृत्याऽग्निमपसव्यं परिषिच्य समिधमाधाय 'अग्नये स्वाहा, प्रजापतये स्वाहा' (यथालिङ्गं त्यागः) इति तण्डुलैराहुतिद्वयं हुत्वा, पुनः समिधमाधाय 'सूर्याय स्वाहा, प्रजापतये स्वाहा' (यथालिङ्गं त्यागः) इति तण्डुलैराहुतिद्वयं हुत्वा पुनरपसव्यमग्निं परिषिञ्चेत् ॥ ॥ यदि शुक्लपक्षे रात्रौ म्रियेत तदा रात्रिमरणप्रायश्चित्तं वक्ष्यमाणप्रकारेण कृत्वाऽद्यतनसायमौपासनं श्वस्तनप्रातरौपासनं चाऽपकृष्य तण्डुलैर्होष्ये, इति सङ्कल्प्य पूर्ववदाहुतिचतुष्टयं जुहुयात् ॥

दक्षिणायनमरणप्रायश्चित्तम् ॥आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य प्राचीनावीती –"अमुकगोत्रस्याऽमुकशर्मणो मम (पित्रादेः) प्रेतस्य दक्षिणायनमरणजनितसमस्तदोषपरिहारार्थं उत्तरायणसम्पत्तिद्वारा उत्तमलोकप्राप्त्यर्थं 'ता सूर्याचन्द्रमसा' इत्यादिषण्मन्त्रैः प्रायश्चित्ताज्याहुतीर्होष्ये" इति सङ्कल्प्याऽग्निमपसव्यं परिषिच्य स्रुचि चतुर्गृहीतं गृहीत्वोत्तरतो दक्षिणामुख उपविश्य सकृज्जुहोति —'मृत्योरधिष्ठानाय स्वाहा' । मृत्योरधिष्ठानायेदं० ॥ ततः पृथक्पृथक्चतुर्गृहीतेन षण्मन्त्रैर्जुहोति — "ॐ ता

सूर्याचन्द्रमसा० जातु देवयोः स्वाहा । सर्वत्र सूर्याचन्द्रमोभ्यामिदं० ॥ उभावन्तौ० हतामती स्वाहा ॥ पती द्युमत्० महिव्रता स्वाहा ॥ विश्ववपरी० सन्दिव१ँ स्वाहा ॥ अस्य श्रवो० विचर्तुर१ँ स्वाहा ॥ पूर्वापरं० जायते पुनः स्वाहा" इति षड्भिर्हुत्वाऽग्निं पुनरपसव्यं परिषिच्याऽमुकगोत्रस्य० प्रेतस्य दक्षिणायनमरणजनितसमस्तदोषपरिहारार्थं उत्तरायणमरणसम्पत्तिद्वारा उत्तम-लोकप्राप्त्यर्थं अद्यप्रभृत्युत्तरायणाऽऽरम्भदिनपर्यन्तं भविष्यदौपासनाहुतिपरिमितद्रव्यं तन्निष्क्रयहिरण्यं वा आशौचान्ते दास्ये इति सङ्कल्प्याऽऽशौचान्ते दद्यात् ॥

कृष्णपक्षमरणप्रायश्चित्तम् ॥ "अमुकगोत्रस्य० प्रेतस्य कृष्णपक्षमरणजनितसमस्तदोषनिवृत्त्या उत्तमलोकप्राप्त्यर्थं 'ता सूर्याचन्द्रमसा' इत्यादि षण्मन्त्रैः प्रायश्चित्ताज्याहुतीर्होष्ये" इति सङ्कल्प्याऽदौ चतुर्गृहीतेन 'मृत्योरधिष्ठानाय स्वाहा' (मृत्योर-धिष्ठानायेदं०) इति हुत्वा पृथक्पृथक्चतुर्गृहीतेन ता सूर्यादिषडाहुतीश्च हुत्वाऽमुकस्य प्रेतस्य शुक्लपक्षमरणसम्पत्यर्थमद्यप्रभृति-दर्शान्तान्सायमौपासनहोमान्शुक्लप्रतिपत्पर्यन्तान् प्रातरौपासनहोमांश्चाऽपकृष्य तन्त्रेण तण्डुलैर्होष्ये । दर्शस्थालीपाकसंपत्त्यर्थं पूर्णाहुतिश्च होष्ये इति सङ्कल्प्य तण्डुलान् संस्कृत्याऽग्निमपसव्यं परिषिच्यैकां समिधमभ्याधाय स्थाल्यां दर्शपर्यन्तं वृद्धिक्षयानु-सारेण भविष्यत्तिथिसङ्ख्याकं सकृत्सकृत्तण्डुलमुष्टिं गृहीत्वा द्वेधा विभज्य प्रथमभागं 'अग्नये स्वाहा' द्वितीयभागं 'प्रजापतये स्वाहा' इति सकृत्सकृद्धुत्वा पुनः शुक्लप्रतिपत्पर्यन्तातिथिसङ्ख्यया सकृत्सकृद्गृहीत्वा द्वेधा विभज्य प्रथमं 'सूर्याय स्वाहा' द्वितीयं 'प्रजापतये स्वाहा' इति सकृत्सकृज्जुहुयात् ॥ दर्शस्थालीपाकस्थाने स्रुचि चतुर्गृहीतं गृहीत्वा 'अग्निर्मूर्धा० जिन्वतो ३ भुवो यज्ञस्य० हव्यवाह१ँ स्वाहा' इति पूर्णाहुतिं जुहुयात् । मूर्धाग्नय इदं० ॥ पुनरग्निमपसव्यं परिषिञ्चेत् ॥

रात्रिमरणप्रायश्चित्तम् ॥ "अमुकप्रेतस्य रात्रिमरणसम्भावितसमस्तदोषपरिहारार्थं ता सूर्याचन्द्रमसेत्यादिषड्भिः प्रायश्चित्ताज्याहुतीर्होष्ये" इति सङ्कल्प्य पूर्वोक्तवद्धुत्वा, कृष्णपक्षे चेत् पूर्वोक्तप्रकारेणौपासनहोमान्दर्शस्थालीपाकं च कुर्यात् ॥ ॥ विधवाविधुरयोरुत्तपनाग्निसन्धानम् ॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य प्राचीनावीती "अमुकगोत्रस्याऽमुकशर्मणः (पित्रादेः) विधुरस्य प्रेतस्य (अमुकविधवायाः प्रेतायाः) पैतृमेधिकसंस्कारं कर्तुमुत्तपनाग्निसन्धानं करिष्ये" इति सङ्कल्प्य याज्ञिककाष्ठेन तूष्णीमुद्धत्याऽवोक्ष्य स्थण्डिलं कृत्वा दर्भाग्रे 'दर्भाग्रे ज्वलितस्त्वन्यदर्भमुष्टिमुपाश्रितः । पुनर्मुष्ट्यन्तरारूढो वह्निरुत्तपनाह्वयः' एवमुत्पादितमुत्तपनाऽग्निं व्याहृतिभिर्नियुज्य, उत्तपनाऽग्निसन्धानहोमः कर्म, पैतृकं तन्त्रं, क्रव्यादो नामाऽग्निः, अग्न्यादयो देवताः, आज्यं हविः, सद्यो यक्ष्ये, इत्यन्वाधानादि पूर्णाहुत्यन्तं कृत्वा स्रुचि द्वादशगृहीतमाज्यं गृहीत्वा "सहस्रशीर्षा पुरुषः० साध्यास्सन्ति देवाः स्वाहा" इति पुरुषसूक्तेन सकृज्जुहोति ॥ पुरुषाय नारायणायेदं० ॥ अनाज्ञातादि होमशेषं समापयेत् ॥ नात्रौपासनहोमः ॥ दक्षिणायनमरणकृष्णपक्षमरणप्रायश्चित्तादिकं यथासम्भवं कुर्यात् ॥ ॥ ब्रह्मचारिणः कपालाऽग्निसन्धानम् ॥ देशकालसङ्कीर्तनान्ते प्राचीनावीती "अमुकगो० प्रेतस्य ब्रह्मचारिणः पैतृमेधिकसंस्कारं कर्तुं कपालाऽग्निसन्धानं करिष्ये" इति सङ्कल्प्य तूष्णीं स्थण्डिलं कृत्वा "अग्निवर्णं कपालन्तु कृत्वा तत्र विनिक्षिपेत् । करीषादि ततो वह्निर्जातो यः स कपालजः" एवमुत्पादितं कपालाऽग्निमुपसमाधाय कपालाऽग्निसन्धानहोमः कर्म, पैतृकं तन्त्रं, क्रव्यादो नामाऽग्निः, अग्न्यादयो देवताः, आज्यं हविः, सद्यो यक्ष्ये, इत्यादि पूर्णाहुत्यन्तं कृत्वा स्रुचि द्वादशगृहीतमाज्यं गृहीत्वा 'प्रजापतये स्वाहा' इति मनसा ध्यायञ्जुहोति । प्रजापतय इदं० ॥ अनाज्ञातादि होमशेषं समापयेत् ॥ दक्षिणायनमरणादिप्रायश्चित्तञ्च कुर्यात् ॥ ॥ अथाप्सु मरणे

प्रायश्चित्तम् ॥ जले[1] मृतस्याऽस्य प्रेतस्याऽप्सु मरणप्रायश्चित्तं करिष्ये, इति सङ्कल्प्य चतुर्गृहीतेन " इमम्मे वरुण, तत्त्वा यामि " इति द्वाभ्यां जुहुयात् ॥ ॥ सर्पदष्टमरणे प्रायश्चित्तम् ॥ चतुर्गृहीतेनाऽऽज्येन " नमो अस्तु सर्पेभ्यः " इति तिस्र आहुतीर्जुहुयात् ॥ ॥ पश्वादिभ्यो मरणे प्रायश्चित्तम् ॥ चतुर्गृहीतेनाऽऽज्येन " आ गावो अग्मन्, इन्द्रो यज्वने " इति द्वाभ्यां द्वे आहुती जुहुयात् ॥ ॥ दंष्ट्रिभ्यो मरणे प्रायश्चित्तम् ॥ चतुर्गृहीतेनाऽऽज्येन " द ꣳष्ट्राभ्याम्मलिम्लूञ्जम्भ्यैस्तस्कराꣳ उत । हनूभ्याꣳस्तेनान् भगवस्ताꣳस्त्वं खाद सुखादितान् स्वाहा ॥ ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः स्वाहा " इति द्वाभ्यां जुहुयात् ॥ ॥ समुद्रे मरणे प्रायश्चित्तम् ॥ चतुर्गृहीतेनाऽऽज्येन " समुद्राय वयुनाय सिन्धूनां पतये नमः । नदीनाꣳ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहामर्त्यꣳ हविः स्वाहा " इत्येकयर्चा जुहुयात् ॥ ॥ अशनिपातमरणे प्रायश्चित्तम् ॥ चतुर्गृहीतेनाऽऽज्येन " अग्निर्मूर्धा, भुवो यज्ञस्य " इति द्वाभ्यां " मूर्धानं दिवः " इत्येकया वा जुहुयात् ॥ ॥ भार्याया रजसि प्रसूतौ वा पतिमरणे प्रेताऽग्निसन्धानम् ॥ मम पितुः० गोत्रस्य० शर्मणः प्रेतस्य मरणकाले भार्याया रजसि प्रसूतौ वा प्रेताऽग्निसन्धानं पितृमेधसूत्रोक्तप्रायश्चित्तं च करिष्ये, इति सङ्कल्प्य पूर्वोक्तप्रकारेणाऽभ्यावर्तिनी होमान्तं कृत्वा ( चतुर्गृहीतेन ' जातवेदसे० त्यग्निः स्वाहा । अग्नये जातवेदस इदं० ' ॥ पुनश्चतुर्गृहीतेन ' मनो ज्योतिः० घृतेन स्वाहा । मनसे ज्योतिष इदं० ' ॥

---

१. यदृच्छया प्रमादेन वा मरणे निर्णयसिन्धौ " प्रमादादपि निश्शङ्कस्त्वकस्माद्विधिचोदितः । शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ॥ चण्डालैरथवा चोरैर्निहतो वाऽपि कुत्रचित् । तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः " इत्युक्तत्वात् ॥ बुद्धिपूर्वमृतानां स्मृत्युक्तकृच्छ्राचरणपुरःसरमौर्ध्वदेहिकं कार्यम् ॥ २. " पञ्चम्यां पन्नगं हैमं स्वर्णैनैकेन कारयेत् । क्षीराऽऽज्यपात्रमध्यस्थं पूज्यविप्राय दापयेत् । प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शम्भुना " इति धर्मसिन्धौ विशेषः प्रोक्तः ॥

पुनश्चतुर्गृहीतेन 'तन्तुन्तन्वन्०, उद्बुध्यस्वाग्ने०, त्रयस्त्रिं शत्तन्तव०' इति त्रिभिः । अग्नये तन्तुमत इदं० ॥ पुनश्चतुर्गृहीतेन महाव्याहृतीर्हुत्वा ॥ पुनश्चतुर्गृहीतेन भूरादिचतुष्टयञ्च हुत्वा) एवमग्निसन्धानं कृत्वा प्रायश्चित्तं द्वादशगृहीतेन स्रुचं पूरयित्वा 'जातवेदसे' इति पञ्च मनस्वतीं महाव्याहृतीः इत्येताः सन्ततमुक्त्वा एकामाहुतिं जुहुयात् ॥ पुनश्चतुर्गृहीतेन 'अप पाप्मानं भरणीर्भरन्तु० यस्मिन्नक्षत्रे० भरन्तु स्वाहा' (यमाय राज्ञ इदं०)॥ स्रुवेण अनाज्ञातादित्रयं, मिन्दाद्वयं, भूरादिचतुष्टयञ्च हुत्वा होमशेषं समापयेत् ॥ गाञ्चैकामाशौचान्ते दद्यात् ॥ ॥ रजस्वलाऽवस्थायां सूतिकाऽवस्थायां वा मरणे प्रायश्चित्तम् ॥ देशकालौ सङ्कीर्त्य अमुकगोत्राया अमुकदायाः प्रेताया रजस्वलाऽवस्थायां सूतिकाऽवस्थायां वा मरणाज्जनितसमस्तदुरितपरिहारद्वारा पैतृमेधिकसंस्कारयोग्यतासिध्यर्थं गोमूत्रमृद्भस्मपञ्चगव्यैस्स्नापनं आशौचान्ते चान्द्रायणकृच्छ्रत्रयप्रत्याम्नायगोनिष्क्रयहिरण्यदानं च करिष्ये, इति सङ्कल्प्य शुद्धजलेन स्नापयित्वा मृद्भस्ममिश्रितेन पञ्चगव्येन गोमूत्रेण वा कुशैः प्रोक्षेत् — सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिरिति ॥ शतरुद्रीयेण, 'अग्निमूर्धा' इत्यनुवाकेन च ॥ पञ्चगव्येन योनिं प्रक्षाळ्याऽन्येन वाससाऽऽच्छाद्य विधिवद्दहेत् ॥

अथ ब्रह्मचारिमरणे प्रायश्चित्तम् ॥ धर्मसिन्धौ—सङ्कल्पपूर्वकं द्वादश षट् त्रीणि वाऽब्दानि शक्त्यनुकूलं प्रायश्चित्तं चरित्वा, देशकालौ सङ्कीर्त्याऽमुकगोत्रस्य शर्मणो ब्रह्मचारिणो मृतस्य व्रतविसर्गं करिष्ये, इति सङ्कल्प्य हिरण्येन नान्दीश्राद्धं कृत्वाऽग्निप्रतिष्ठापनाद्याघारान्ते आज्येन व्याहृतीर्हुत्वा "अग्नये व्रतपतये स्वाहा । (यथालिङ्गं त्यागः) अग्नये व्रतानुष्ठानफलसम्पादनाय

१. धर्मसिन्धौ—चान्द्रायणकृच्छत्रयं कृत्वा यवपिष्टेन प्रेतामनुलिप्य शूर्पोदकैरष्टोत्तरशतवारं संस्नाप्य भस्मगोमयमृत्पञ्चगव्याद्यैः स्नापयेत् इत्युक्तम् ॥

स्वाहा। विश्वेभ्यो देवेभ्यः स्वाहा " इति हुत्वा स्विष्टकृदादि होमशेषं समाप्य, पुनर्देशकालौ सङ्कीर्त्याऽमुकस्यौर्ध्वदेहिकाऽधिकारार्थमर्कविवाहं करिष्ये, इति सङ्कल्प्य हिरण्येन नान्दीश्राद्धं कृत्वा, अर्कसमीपे नीत्वाऽर्कशाखां वा गृहीत्वाऽर्कब्रह्मचारिणौ हरिद्रयाऽनुलिप्य पीतसूत्रेण संवेष्ट्य वस्त्रयुग्मेनाऽऽच्छाद्याऽग्निप्रतिष्ठापनाद्याघारान्ते आज्येन 'अग्नये स्वाहा (यथालिङ्गं त्यागः) बृहस्पतये०, विवाहविधियोजकाय०, यस्मै त्वा कामकामाय वयं सम्राड्यजामहे। तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब स्वाहा। कामायेदं०'। भूरादिचतुष्टयञ्च हुत्वा स्विष्टकृदादि होमशेषं समाप्याऽर्कशाखां ब्रह्मचारिशवञ्च तुषाऽग्निना विधिवद्दहेत् ॥ स्नातकमरणेऽप्येवमेवेति केचित् ॥ आशौचान्ते त्रिंशद्ब्रह्मचारिभ्यः कौपीनकृष्णाजिनयज्ञोपवीतगोपीचन्दनादि दत्त्वा भोजयेत् ॥

कुष्ठिमरणे ॥ कुष्ठादिमहारोगमृतस्यौर्ध्वदैहिकाधिकारसिध्यर्थमादौ षडब्दप्रायश्चित्तं चरित्वा दाहादि कुर्यात्। तत्र विशेषः— तूष्णीं स्नापनम्। तूष्णीं दहनदेशसम्मार्गः। तूष्णीं तिलतण्डुलनिवपनम्। चितायां प्रेतं निधायाऽपसलैः परिस्तीर्याऽऽज्यमास्ये निनयेत्—'इदन्त आत्मनः० असौ स्वाहा' इति। अपि वा 'अस्मात्वमधि० लोकाय स्वाहा' इत्यृचा 'वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः साध्येभ्यो मरुद्भ्य ऋभुभ्यः पितृभ्यः स्वाहा' इत्यनेन यजुषा वा। अत्रैव मन्त्रेण सिग्वातेनोपवीजनम्। उदकुम्भेन तूष्णीं परिषेचनम्। कपालजलस्यास्यादिषु निनयनं नास्ति। उत्तपनाग्निना दहनम्। अन्यत्सर्वं समानम् ॥ एवमेवानुपेतोन्मत्तादीनां संस्कारः ॥

धनिष्ठापञ्चकमरणप्रायश्चित्तम् ॥ धनिष्ठोत्तरार्धादि रेवत्यन्तसार्धचतुर्नक्षत्रेषु मरणे वंशारिष्टाद्यनिष्टफलोक्तेस्तत्प्रायश्चित्तमाचरणीयम् ॥ अमुकगोत्रास्याऽमुकशर्मणः प्रेतस्य (पित्रादेः) धनिष्ठापञ्चकमरणजनितसमस्तदोषपरिहारद्वारा प्रेतस्य पुण्यलोकावाप्त्यर्थं अस्माकं वंशारिष्टादिसर्वारिष्टपरिहारार्थं धनिष्ठापञ्चकमरणप्रायश्चित्तं करिष्ये, इति सङ्कल्प्य दर्भमर्यायवपिष्टानुलिता

ऊर्णासूत्रवेष्टिताः पञ्च प्रतिमाः कृत्वा, तासु क्रमेण प्रेतवाहं, प्रेतसखं, प्रेतपं, प्रेतभूमिपं, प्रेतहर्तारञ्चाऽऽवाह्य "अष्टौ देवा वसवः०, क्षत्रस्य राजा वरुणः०, अज एकपादुद्गात्०, अहिर्बुध्नियः प्रथमानः०, पूषा रेवत्यन्वेति०" इति पञ्चभिर्मन्त्रैरभिमन्त्र्य गन्धपुष्पादिभिः सम्पूज्य, चितौ शवे स्थापिते 'शिरसि प्रथमां, नेत्रयोर्द्वितीयां, वामकुक्षौ तृतीयां, नाभौ चतुर्थीं, पादयोः पञ्चमीं' इति क्रमेण निधायाऽऽज्यं स्रुवेण जुहुयात् "प्रेतवाहाय स्वाहा, प्रेतसखाय०, प्रेतपाय०, प्रेतभूमिपाय०, प्रेतहर्त्रे स्वाहा" (यथालिङ्गं त्यागः) "अस्मात्वमधि जातोऽस्ययं त्वदधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा"। अग्नये वैश्वानराय सुवर्गाय लोकायेदं० ॥ इति हुत्वा तिलोदकञ्च[1] दद्यात् । ततः प्रेतमुखे पञ्चरत्नं, सुवर्णमाज्यबिन्दुं वा निक्षिप्य ताभिः प्रतिमाभिः सह दहेत् । एकादशेऽह्नि शान्तिञ्च कुर्यात् ॥ ॥ त्रिपुष्करद्विपुष्करयोगमरणप्रायश्चित्तम् ॥ त्रिपुष्करयोगमरण (द्विपुष्करयोगमरण) जनितसमस्तदोषपरिहारद्वारा प्रेतस्य पुण्यलोकाऽवाप्त्यर्थं अस्माकं वंशारिष्टादिसर्वारिष्टपरिहारार्थं त्रिपुष्कर (द्विपुष्कर) मरणप्रायश्चित्तं करिष्ये, इति सङ्कल्प्य पञ्चकोक्तप्रकारेण तिस्रः प्रतिमाः कृत्वा तासु 'प्रेतवाहं, प्रेतसखं, प्रेतपं च क्रमेणाऽऽवाह्य सम्पूज्य चितायां स्थापिते शवे शिरसि, नेत्रयोः, वामकुक्षौ च क्रमेण निधाय 'प्रेतवाहाय स्वाहा' इत्यादि त्रिभिराज्यं हुत्वा तिलोदकञ्च दत्वा शवमुखे सुवर्णं निक्षिप्य "अस्मात्वमधि जातोऽस्ययं त्वदाधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा"। अग्नये वैश्वानराय सुवर्गाय लोकायेदं० ॥ इति प्रतिमाभिः सह शवं विधिवद्दहेत् ॥ एकादशाहे शान्तिं कुर्यात् ॥

अथ कालाख्यमृत्योः प्रवेशकाले मरणे ॥ गृहस्थितानां द्विपदानां चतुष्पदानाञ्च सर्वेषामपमृत्युकालमृत्य्वादि (कालमृत्युप्रवेशसूचित) सर्वाऽनिष्टनिरसनद्वारा दीर्घायुरारोग्याऽभयप्राप्त्यर्थं सूतकान्ते कालशान्तिं करिष्ये, इति सङ्कल्पमात्रमिदानीं कृत्वाऽऽशौचान्ते कालशान्तिं कुर्यात् ॥

---

१. उदकदानान्ते—'यमाय सोमं सुनुत, त्र्यम्बकं यजामहे' इति द्वाभ्यां प्रत्येकं प्रतिमास्वाज्याहुती जुहुयात् इति धर्मसिन्धौ ॥

## ॥ पितृमेधप्रयोगः ॥

अग्नेः पश्चाद्दक्षिणाऽग्रेषु दर्भेषु दक्षिणाशिरसं प्रेतं शाययित्वा सर्वौषधं ( तिलमाषव्रीहियवगोधूमाऽणुप्रियङ्गवश्यामाक-नीवारजर्तिलगवीधुकगार्मुतकुरुविन्दवेणुयवं ) उदकुम्भमहतं वासः समूलं बर्हिर्हिरण्यशकलानग्निपात्रं परशुमश्मानं शुक्लसूत्र-मूर्णासूत्रमनः प्रेतासन्दीं द्वे शुल्वे तिस्रः पर्णशाखाः समिधश्चतुरश्शङ्कून् रज्जुं दधि मधु घृतं तिलांस्तण्डुलानाज्यं स्रुक्स्रुवादि याज्ञिककाष्ठानि चान्यांश्चोपयुक्तान्सम्भारान्सम्भृत्य — आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, प्राचीनावीती–अमुकगोत्रम-मुकशर्माणं ( पित्रादिं ) प्रेतममुकाऽग्निना पैतृमेधिकविधिना संस्करिष्यामि, इति सङ्कल्प्य यथोक्तमग्निमुपसमाधाय, मृतसंस्कारहोमः कर्म, पैतृकं तन्त्रं, क्रव्यादो नामाग्निः, यमो देवता, प्रेतशरीरं हविः, आज्यञ्च, आज्यस्य मान्त्रवर्णिक्यो देवताः, सद्यो यक्ष्ये, इत्याद्यन्वाधायाऽपसव्यं परिसमूहनादि स्रुक्स्रुवसम्मार्जनान्ते तूष्णीमप्रदक्षिणमग्निं परिषिच्य, समिधमाधाय स्रुचि चतुर्गृहीतं गृहीत्वा —" ॐसन्त्वा सिञ्चामि यजुषा प्रजामायुर्धनञ्च । ॐ शान्तिः शान्तिः शान्तिः " इति शान्तिं पठित्वा प्रेतस्य दक्षिणं बाहुमन्वारभ्य जुहोति–" परेयुवाꣳसं प्रवतो महीरनु बहुभ्यः पन्थामनपस्पशानम् । वैवस्वतꣳ सङ्गमनं जनानां यमꣳ राजानꣳ हविषा दुवस्यत स्वाहा " इति । वैवस्वताय यमाय राज्ञ इदं० । अथैनं सम्भारेण सह बहिरानीय सर्वौषधेनोदकुम्भं पूरयित्वाऽनेन विस्रस्तकेशः पादमारभ्य स्नापयति —" चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाऽध्वर्युः । वाचस्पते विधेनामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम ।

वाचस्पतिः सोमं पिबतु । आस्मासु नृम्णं धात्स्वाहा " इति ॥ एवं संस्नाप्य ग्राम्यैरलंकारैरलङ्कृत्य शिरस्तो नलदमालां बध्वाऽऽसन्द्यां दक्षिणाशिरसमुत्तानं संवेश्य शुक्लसूत्रेण हस्तपादाङ्गुष्ठौ दृढं बध्वा उदग्दशेनाहतेन वाससा ( तस्य चतुर्थभागं छित्त्वाऽऽत्मन उत्तरीयं कृत्वा ) पादादिकेशान्तं प्रच्छादयति— " इदं त्वा वस्त्रं प्रथमं न्वागन्न् " इति ॥ पूर्वधृतं प्रेतवस्त्रमपोहति— " अपैतदूह यदिहाबिभः पुरा । इष्टापूर्तमनु सम्पश्य दक्षिणां यथा ते दत्तं बहुधा विबन्धुषु " इति । तस्य पुत्रोऽन्तेवासी वा पत्नी वा परिदधीत । एतस्मिन्कालेऽस्य भार्या पुत्रादयो ज्ञातयो विकीर्णकेशाः पांसून् तिसृभिरङ्गुलीभिरादायाऽऽत्मनोंऽसेष्वावपन्ते " खल्वघं न्वास्यादघघ्नो एवाघम् " इति ॥ अथैनमासन्द्याऽनसा वा दासाः प्रयवसो वा निवीतिनो वहेयुः ॥ अनसा प्रेतवहनपक्षे— " इमौ युनज्मि ते वह्नी असुनीथाय वोढवे । याभ्यां यमस्य सादनꣳ सुकृताञ्चाऽपि गच्छतात् " इति अनड्वाहौ युनक्ति । अनसोऽभावेऽनेनैव मन्त्रेण वाहकाननुमन्त्रयते । वाहकैरादीयमानमनुमन्त्रयते — ' पूषा त्वेतश्च्यावयतु प्रविद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परिददात् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रेभ्यः" इति ॥ अग्निं सम्भारांश्चाग्रतः कृत्वा सर्वेऽनुगच्छेयुः । तृतीयमेतस्याध्वनो गत्वा दक्षिणाऽग्रेषु दर्भेषु दक्षिणाशिरसं प्रेतं निधाय तस्य पाददेशे दक्षिणामुखो भूमिं प्रोक्ष्य दक्षिणाग्रेषु दर्भेषु तिलोदकं ददाति— " अमुकगोत्राऽमुकशर्मन्प्रेत अध्वनस्तृतीयभागे इदन्ते तिलोदकमुपतिष्ठतु " इति । कनिष्ठप्रथमाः पुत्रादयः प्रकीर्णकेशाः सिग्वातेन ( परिहितवस्त्रैः ) उपवीजयन्तस्त्रिरप्रदक्षिणं परियन्ति —" वातास्ते वान्तु पथि पुण्यगन्धा मनःशुभा गात्रशुभा अनुलोमाः । त्वचःसुखा मांससुखा अस्थिसौख्या वहन्तु त्वा मरुतः सुकृतां यत्र लोकाः " इति ॥ अथ बद्धशिखा ज्येष्ठप्रथमास्तूष्णीं त्रिः प्रदक्षिणं प्रतिपरियन्ति । पुनर्विस्त्रस्य केशा वाहकैरादीयमानमनुमन्त्रयते —" पूषेमा आशा अनुवेद सर्वास्सो अस्माꣳ अभयतमेननेषत् ।

स्वस्तिदा अघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रविद्वान् " इति। अथाऽध्वनोऽर्धभागं गत्वा पूर्ववत्प्रेतं निधाय पाददेशे दक्षिणाऽग्रेषु दर्भेषु "अमुकगोत्र० शर्मन् प्रेत अध्वनोऽर्धभागे इदन्ते तिलोदकमुपतिष्ठतु " इति तिलोदकं दत्वा, अप्रदक्षिणं प्रदक्षिणञ्च पूर्ववत्त्रिः परीत्य पुनस्तथैवाऽदीयमानमनुमन्त्रयते—" आयुर्विश्वायुः परिपासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात्। यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु " इति। दहनदेशं गत्वा तत्र पश्चाद्दक्षिणाऽग्रेषु दर्भेषु दक्षिणाशिरसं प्रेतं निधाय तस्य पाददेशे दक्षिणामुखो दक्षिणाऽग्रेषु दर्भेषु—" अमुकगोत्र० प्रेत समस्ताऽध्वनो भागे इदन्ते तिलोदकमुपतिष्ठतु " इति तिलोदकं दत्वा पूर्ववदप्रदक्षिणं प्रदक्षिणञ्च त्रिः परीत्य, दहनदेशं दक्षिणाप्रत्यक्प्रवणं गोचर्ममात्रं विमाय हिरण्येन परिक्रीय चतुर्दिक्षु शंकून् निहत्य रज्वा परिवेष्ट्य मध्ये उद्धृत्यावोक्ष्य हिरण्यं निधाय पर्णशाखयौदुम्बरशाखया शमीशाखया वा दक्षिणापवर्गं सम्मार्ष्टि- " अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः" इति ॥ दक्षिणतः शाखां निरस्याद्भिरवोक्षति— अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै" इति॥ तत्र हिरण्यशकलं निदधाति– अपसर्पत प्रेता ये के चेह पूर्वजाः स्वस्ति नः कुरुत माश्रुपातः पुनरागमिष्यामहे " इति। स्फ्येन वा परशुना वा दक्षिणापवर्गास्तिस्रः कर्षूः खात्वा तासु मुष्टिपरिमिततिलतण्डुलान् निवपति- "यमाय दहनपतये पितृभ्यः स्वधा नमः" इति प्रथमायां "कालाय दहनपतये पितृभ्यः स्वधा नमः" इति मध्यमायां "मृत्यवे दहनपतये पितृभ्यः स्वधा नमः " इति दक्षिणायां निवपति। अवशिष्टांस्तिलतण्डुलान् सर्वतस्त्रिरपसव्यं प्रकिरति —" यथा पिता पुत्रं पश्यति सखा वा सखिमागतम्। एवमिमं पूर्वसंक्लिन्नाः प्रेताः पश्यतमान्यथा " इति। तत्र दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु दक्षिणाग्रे- र्याज्ञिकैः काष्ठैश्चितां कल्पयित्वा तत्र दक्षिणाग्रीवमधरलोम कृष्णाजिनमास्तीर्य दक्षिणाशिरसमुत्तानं प्रेतं निधायाऽपकृष्य

रज्जुमासन्दीमपविध्य चितामूर्णासूत्रेणाऽपसव्यं संवेष्ट्य तत्पश्चादग्निं निधाय दर्भैरग्निं चिताञ्चाऽप्रदक्षिणं परिस्तीर्याऽग्नेर्दक्षिणतो दक्षिणाऽग्रेषु दर्भेषु आज्यस्थालीं स्रुवं स्रुचं प्रोक्षणीञ्चैकैकशः सादयित्वा एकदर्भपवित्रेण प्रोक्षणीः संस्कृत्य प्रेतं पात्राणि चिताञ्च प्रोक्ष्याऽऽज्यसंस्कारादि स्रुक्सम्मार्जनान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा व्याहृतीर्विग्राहं हुत्वा ( प्रेतस्य भार्यामुपसंवेशयति — " इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्य प्रेतम् । विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणञ्चेह धेहि " इति । तां प्रतिहितः ( देवरः ) सव्ये पाणावभिपात्योत्थापयति —" उदीर्ष्व नार्यभि जीव लोकमितासुमेतमुपशेष एहि । हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभि सम्बभूव " इति ॥ इदं प्रेतस्य भार्योपसंवेशनमुत्थापनञ्च नानुष्ठेयम्, कलौ निषिद्धत्वात् ॥ ) प्रेतस्य दक्षिणवामहस्तौ क्रमेण सुवर्णेन सम्मार्ष्टि—" सुवर्णꣳ हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वाः स्पृधो अभिमातीर्जयेम " इति ॥ स्त्रीणां तूष्णीं सम्मृजेत् ॥ अथास्य प्रच्छादनवस्त्रमपास्य आस्ये नासिकयो-रक्ष्णोः कर्णयोरिति सप्त प्राणायतनेषु सप्त हिरण्यशकलानाज्यबिन्दून्वा प्रत्यस्य, स्रुचि चतुर्गृहीतं गृहीत्वा दक्षिणेऽक्षिण जुहोति— चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः स्वाहा " इति ॥ पुनश्चतुर्गृहीतेन वामेऽक्षिण —" आप्रा द्यावापृथिवी अन्त-रिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा " इति ॥ सूर्यायेदं० ॥ दधिमधुघृतं तिलतण्डुलांश्च समुदायुत्य शवमुखे निवपति ॥ शम्याप्रणीतास्थालीदर्व्यादिस्मार्तपात्रसंग्रहणपक्षे तानि प्रेतस्योपरि निदधाति— इममग्ने चमसं माविजीह्वरः प्रियो देवा नामुत सो-म्यानाम् । एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम् " इति ॥ तं बान्धवाः सिग्वातेनोपवीजयन्ति ॥ अथोदकुंभं शिरसि वामांसे वा निधाय प्रेतं चितां चाप्रदक्षिणं पर्येति । तमश्मना परशुना वा कश्चिदधस्तात्प्रहरति—" यच्छिद्रिते विशो यथा प्रदेव वरुण

व्रतम् । मिनीमसिद्याविद्याव " इति । तां धारामनुमन्त्रयते— "इमा आपो मधुमत्योऽस्मिँस्ते लोक आदुह्यंताम्" इति॥ एवं द्वितीयं पर्येति । तं तथैव प्रहरति—"यत्किंचेदं० रीरिषः " इति । तां धारामनुमन्त्रयते-"इमा आपो मधुमत्योंतरिक्षे ते लोक उपदुह्यन्ताम्" इति॥ एवमेव तृतीयं पर्येति। तथैव प्रहरति-"कितवासो० प्रियासः" इति। तां धारामनुमन्त्रयते- " इमा आपो मधुमत्यः स्वर्गे ते लोक उपदुह्यन्ताम् " इति ॥ प्रेतशिरोदेशे उदङ्मुखस्तिष्ठन् पृष्ठभागे तं कुंभं भिनत्ति ॥ तत्रैवोपविश्यार्द्रतृणगुल्मादिकं स्पृष्ट्वोपोत्थाय भिन्नकुंभकपालस्थजलमादाय प्रेतस्यास्यनासिकाश्रोत्रेषु निनयति — दिवि जाता अप्सु जाता या जाता ओषधीभ्यः। अथो या अग्निजा आपस्ता नः शुन्धन्तु शुन्धनीः" इति ॥ गां ब्राह्मणं च दृष्ट्वा हिरण्यं स्पृशति ॥ अथैनं प्रेतम् अहतेनोदीचीनदशेन वाससा कृष्णाजिनेन दक्षिणाग्रीवेणोत्तरलोम्ना वा आच्छाद्यांगुष्ठबंधनं विस्रस्याग्निनोपोषति —" भूः पृथिवीं गच्छतु " इति शिरोदेशे। भुवोंतरिक्षं गच्छतु " इति नाभिदेशे। " सुवर्दिवं गच्छतु " इति पाददेशे॥ अथैनमादीपयति। आदीप्यमानमनुमन्त्रयते— मैनमग्ने विदहो माभिशोचो मास्यत्वचं चिक्षिपो मा शरीरम्। यदाशृतं करवो जातवेदोऽथेमेनं प्रहिणुतात्पितृभ्यः " इति ॥ प्रज्वलितमनुमन्त्रयते —" शृतं यदा करसि जातवेदोऽथेमेनं परिदत्तात् पितृभ्यः। यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति " इति " मैनमग्ने, शृतं यदा " इति मन्त्रद्वयं स्त्रीणां वर्जयेत्॥ अत्र षड्ढोतारं व्याचष्टे — सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः " इति॥ अथाबलेन शुल्बेन ( दर्भमयं वा ) अजं चितासमीपे बध्नाति यथास्वयमेव छित्वा गच्छेत् — अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेम॰ सुकृतां यत्र लोकाः " इति ॥ स्त्रीणामजबन्धनं न विद्यते ॥

अथ दहनाग्नौ पर्णमयेन स्रुवेणाज्याहुतीर्जुहोति—"य एतस्य पथो गोप्तारस्तेभ्यस्स्वाहा। पथो गोप्तृभ्य इदं०॥ य एतस्य पथो रक्षितारस्तेभ्यः स्वाहा। पथो रक्षितृभ्य इदं०॥ य एतस्य पथोऽभिरक्षितारस्तेभ्यः स्वाहा। पथोऽभिरक्षितृभ्य इदं०॥ आख्यात्रे स्वाहा, यथालिंगं त्यागः। अपाख्यात्रे स्वाहा। अभिलालपते स्वाहा। अपलालपते स्वाहा। अग्नये कर्मकृते स्वाहा॥ यमत्र नाधीमस्तस्मै स्वाहा। अनधीताय तस्मा इदं०॥ अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरासि। वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमꣳ सुकृतां यत्र लोकाः स्वाहा॥ अग्नये वैश्वानराय जातवेदस इदं०"॥ अत्र स्त्रीणां "अयं वै त्वं०" इत्येकं वर्जयेत्। अत्रैव स्रुवमग्नौ प्रहरति॥ अथ जघनेन चितां दक्षिणाभिमुखस्तिष्ठन्नवर्चेन याम्येन सूक्तेनोपतिष्ठते॥ आसीनः पराचानुशंसति वा। (अनुशंसनक्रमः) प्रकेतुना बृहता भात्यग्निरा रोदसी वृषभो रोरवीति। दिवश्चिदन्तादुप मामुदानडपामुपस्थे महिषो ववर्धा३ मिदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व। संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थो३ नाके सुपर्णमुपयत्पतंतꣳ हृदा वेनंतो अभ्यचक्षत त्वा। हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्यो३ मतिद्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा। अथा पितॄन्त्सुविदत्राꣳ अपीहि यमेन ये सधमादं मदंतो३ यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथि रक्षी नृचक्षसा। ताभ्याꣳ राजन्परिदेह्येनꣳ स्वस्ति चास्मा अनमीवं च धेहो३ मुरुणसावसुतृपावुलुंबलौ यमस्य दूतौ चरतो वशाꣳ अनु। तावस्मभ्यं दृशये सूर्याय पुनर्दत्तावसुमद्येह भद्रो३ सोम एकेभ्यः पवते घृतमेक उपासते। येभ्यो मधु प्रधावति ताꣳ श्चिदेवापिगच्छतो३ ये युध्यंते प्रधनेषु शूरासो ये तनुत्यजः। ये वा सहस्रदक्षिणास्ताꣳ श्चिदेवापिगच्छतो३ तपसा ये अनाधृष्यास्तपसा ये सुवर्गताः। तपो ये चक्रिरे महस्ताꣳ श्चिदेवापिगच्छतो३" इति॥ अत्र "इदं त एकं, यौ ते श्वानौ" इति द्वयं स्त्रीणां वर्जयेत्॥ (स्त्रीणां शंसनक्रमः) "प्रकेतुना० ववर्धो३ नाके सुपर्ण० भुरण्यो३-

मतिद्रव सारमेयौ० मदन्तो ३ मुरुणसा० भद्रों ३ सोम एकेभ्यः०" इत्यादि ॥ सुसमिद्धेष्वग्निषु यज्ञियकाष्ठमाधाय तं घर्ममुपतिष्ठते—
"यं घर्मो अग्निमभिजिहर्ति होमान्यां गतिं यान्ति वै युधि युद्धशूराः। तनुत्यजो मोक्षविदो मनीषिणो विधूतपापा विरजा विशोकास्तान् लोकान्गच्छ सुगतिं नाकपृष्ठे॰ स्वधा नमः" इति ॥ अथ जघनेन चितां त्रीणि गर्तानि खात्वाद्भिः पूरयित्वा सिकताभिरनुप्रकीर्य कनिष्ठप्रथमास्तदुदकं स्पृशन्तः संगाहन्ते—"अश्मन्वती रेवतीः सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः। अत्रा जहाम ये असन्नशेवाः शिवान्वयमभि वाजानुत्तरेम" इति ॥ गर्तपश्चिमे पर्णशाखे निहत्याऽवलं शुल्वं तोरणाकारेण बध्वा तदन्तरेण कनिष्ठप्रथमाः निर्गच्छन्ति—"यद्वै देवस्य सावितुः पवित्रꣳ सहस्रधारं विततमन्तरिक्षे। येनापुनादिन्द्रमनार्तिमार्त्यै तेनाऽहं माꣳ सर्वतनुं पुनामि" इति ॥ पश्चाद्गन्ता शुल्वं छित्वा पर्णशाखे व्युदस्यति—"या राष्ट्रात्पन्नादपयन्ति शाखा अभिमृता नृपतिमिच्छमानाः। धातुस्ताः सर्वाः पवनेन पूताः प्रजयाऽस्मान् रय्या वर्चसा सꣳ सृजाथ" इति ॥ तन्देशमनवेक्षमाणा उदङ्मुखास्तीर्थं गच्छन्ति। राजपुरुषाः स्वगोत्रबान्धवो वा पर्णशाखामादाय "मावतरत" इति तान्निवारयेत्। "न पुनःपुनरागमिष्यामहे" इति प्रतिब्रूयुः। ततो मृत्तिकाभिः सर्वाङ्गमालिप्य दक्षिणामुखा एकैकवाससो विस्रस्तकेशा आप्लवन्ते—"धाता पुनातु सविता पुनातु। अग्नेस्तेजसा सूर्यस्य वर्चसा" इति ॥ अथ प्राचीनावीतिनो दक्षिणामुखाः "अमुकगोत्राऽमुकशर्मन्प्रेत दाहजनिततापोपशमनार्थमयन्ते जलाञ्जलिरुपतिष्ठतु" इति त्रींस्त्रीञ्जलाञ्जलीन्दद्युः ॥ पुत्रादयः पुनस्सकृन्निमज्योत्तीर्य शिखां बध्वाऽऽचम्य प्राचीनावीतिनो दक्षिणाग्रान्-दर्भान्त्सꣳस्तीर्य प्रेतशिलां निधाय सव्यं जानु निपात्य दक्षिणमुध्दृत्य तिलदूर्वामिश्रजलमञ्जलौ गृहीत्वा "अमुकगोत्र० प्रेत एतत्ते तिलोदकमुपतिष्ठतु" इति त्रिस्त्रिस्तिलाञ्जलीन्दत्वा यज्ञोपवीतिनः पुनः स्नात्वाऽऽचम्य "सन्त्वा सिञ्चामि० धनं च" इति शान्तिं पठित्वाऽऽदित्यमुपतिष्ठन्ते—"उद्वयन्तमसस्परि० रुत्तमम्" इति। कनिष्ठप्रथमा ग्रहानायान्ति। गृहद्वारि निम्बपत्रं प्राश्याऽऽचम्य

गोमयं सुवर्णमपोऽग्निं गौरसर्षपांश्च स्पृष्ट्वा कनिष्ठपुरस्सरमश्मानि पदं कृत्वा मृतस्थाने उदकमिश्रांस्तिलसर्षपतण्डुलान्सम्प्रकिरति— " स्वस्त्यस्तु वो गृहाणामशेषे शिवं वास्त्वास्ताम् " इत्युक्त्वा दीपं प्रज्वाल्य गृह प्रविशन्ति ॥



## ॥ अथ नग्नप्रच्छादनश्राद्धम् ॥

वैद्यनाथीये चन्द्रिकायाम्—" नग्नप्रच्छादनश्राद्धं स्नानान्ते तु मृतेऽहनि । घटे तण्डुलसम्पूर्णे वाससा परिवेष्टिते ॥ पिधाय कांस्यपात्रेण तस्मिन्नाज्यं विनिक्षिपेत् । हिरण्यं तत्र निक्षिप्य यथाविभवसारतः ॥ कुलीनाय दरिद्राय विष्णुञ्च मनसा स्मरन् । प्रेतमुद्दिश्य सम्पूज्य ब्राह्मणन्तु विसर्जयेत् " इति ॥ व्यासः— " वासस्तण्डुलमत्पात्रं प्रदीपं कांस्यभाजनम् । दहनानन्तरं दद्यान्नग्न-प्रच्छादनं हि तत् " इति ॥ जातूकर्णिः—" तिलोदक तथा पिण्डं नग्नप्रच्छादनं नवम् । रात्रौ न कुर्यात्सन्ध्यायां यदि कुर्यान्निरर्थ-कम् " इति ॥

अथ नग्नप्रच्छादनश्राद्धप्रयोगः ॥ आचमनादि देशकालकीर्तनान्ते ( प्राचीनावीती ) " अमुकगोत्रस्य० प्रेतस्य क्षुत्तृष्णाजनिततापोपशमनार्थं नग्नत्वविमोचनार्थं नग्नप्रच्छादनश्राद्धं करिष्ये " इति सङ्कल्प्य उदङ्मुखं दर्भवटुमुपवेश्य, अमुकगोत्र० प्रेत इदं ते आसनमुपतिष्ठतु, अमुक० प्रेत अयन्ते क्षण उप० । एवमेव आवाहनम्, अर्चनम्, अर्घ्यम्, वासः, उपवीतम्, अलङ्करणम्, गन्धः, अक्षताः, पुष्पाणि, इत्यादिभिरुपचारैरभ्यर्च्य, वाससा परिवेष्टितं कांस्यपात्रेणापिहितं साज्यं सदीपं सहिरण्यं तण्डुलपूर्णघटं " अमुकप्रेतस्य० नग्नत्वविमोचनार्थं क्षुत्तृष्णादाहतापोपशमनार्थं तण्डुलपूर्णघटाद्युपतिष्ठतु " इत्युक्त्वा जलधारापूर्वकं दद्यात् । तद्दिने उपवासः ॥ ॥ दशाहपर्यन्तमक्षारलवणाशनमधःशय्याब्रह्मचर्यादय एते कर्तृनियमाः ॥

# ॥ नित्यविधिः ॥

( बो. गृ. शे. सू. ४.३ ) अथाऽतो मृतबलिं व्याख्यास्यामः ॥ प्राग्दक्षिणायतनं चतुरस्रं गोमयेनोपलिप्य प्राचीनावीती दक्षिणामुखस्सव्यं जानुं निपात्य सकृदुल्लिख्याऽद्भिरभ्युक्ष्य दक्षिणाग्रान् दर्भान् संस्तीर्याऽद्भिर्मार्जयित्वोपस्तीर्णाभिघारितं सक्तुतिलमिश्रं चरुमवद्यति मुष्टिप्रमाणं कुक्कुटाण्डप्रमाणं वा हस्तेन 'अमुकगोत्रायैतत्ते ओदनस्स्वधा नमः' इति ॥ अथाऽङ्गुष्ठेना-ऽभिमृश्याथाऽञ्जनाऽभ्यञ्जने मधु वासो दशोर्णा वा गन्धपुष्पधूपदीपैर्हस्ताद्विपरीतात् सायं प्रातर्दशरात्रं कृत्वा स्वस्तिग्रामं भोजयित्वा दशम्यां विकृताहारं सायं बलिं दत्वाऽथैकादश्यामेकोद्दिष्टं कुर्वन्ति ॥ न जातु श्येनकाकादीन् पक्षिणः प्रतिषेधयेत् 'तद्रूपास्तस्य पितरस्समायान्तीति वैदिकाः' इति विज्ञायते ॥ ( बो. पि. शे. सू. २ ) अथ कर्ता ज्ञातयश्च कनिष्ठप्रथमा ग्रामं प्रयान्ति। मृतदेशे सर्षपतण्डुलान्विकीर्य नग्नप्रच्छादनश्राद्धं कृत्वा नदीतीरं तटाकान्तं वा गत्वा स्नात्वा सार्द्रवस्त्रो दक्षिणामुख उपविश्य शिलां स्थापयेद्दक्षिणान्ताम्— "ब्रह्मात्मकं यमाकारममुं प्रेतमावाहयामि, विष्णवात्मकमन्तकाकारममुं प्रेतमावाहयामि, शिवात्मकं वैवस्वताकारममुं प्रेतमावाहयामि" इत्यावाह्य क्षुत्तृष्णादाहोपशमनार्थं तिलोदकवासोदकप्रदानानि कुर्युः। कनिष्ठ-प्रथमास्सपिण्डा ज्ञातयस्त्रिस्त्रिरेकैकोत्तरमञ्जिदः समानोदकास्तृप्यन्तु। नित्यमेकैकमञ्जलिमिति वस्त्राणि च संपीड्य जलघटं शिरसि निधाय गृहं गत्वा वामपार्श्वे पूर्ववत्तिस्रश्शिलाः स्थाप्य तासु वस्त्राणि संपीड्य सायमारभ्य बलिं दत्वा पिण्डं काकेभ्यो दत्वाऽप्सु वा प्रक्षिप्यैकोत्तरवृद्धिश्राद्धं दत्वा नवश्राद्धदिवसे नवश्राद्धञ्च स्नात्वा सपिण्डान्तं ब्रह्मचारी भवति। द्वितीयदिवसेऽस्थि-सञ्चयनं कुर्यात्। दशाहमध्ये सङ्क्रान्तिर्वा दर्शो वा भवेत्तदानीमेवौरसदत्तकव्यतिरिक्तानां समापयेत् ॥ ( बो. पि. सू. ३. ४. २२ )

एकरात्रमुपोष्य तेषामक्षारलवणभोजनमधःशयनं ब्रह्मचर्यं चादशरात्रात्। सायंप्रातस्तूष्णीमुपलेषु पिण्डं निपृणुयात्। सायंप्रातः सकृदुदकक्रिया ॥ अथैषा पत्नी नाश्नीयात्पक्वान्नस्य ॥

अथ प्रयोगः ॥ नदीतीरं तटाकान्तं वा गत्वा स्नात्वाऽऽर्द्रवस्त्र एकदर्भपवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य प्राचीनावीती "अमुकगोत्रस्य प्रेतस्य क्षुत्तृष्णादाहोपशमनार्थं मूर्धाद्यवयवनिष्पत्त्यर्थं प्रेताऽऽप्यायनार्थञ्च प्रथमेऽहनि प्रातः (सायङ्काले तु 'सायं' अशक्तः 'तन्त्रेण प्रातस्सायं') तिलोदकवासोदकपिण्डबलिप्रदानानि करिष्ये, आदौ अद्यप्रभृतिदशमदिनान्तकर्मसु प्रेतसान्निध्यार्थं शिलास्थापनं करिष्ये" इति सङ्कल्प्य शुचौ देशे अवटं खात्वा दक्षिणामुख उपविश्य नातिस्थूलं नातिसूक्ष्ममस्फुटं सुदर्शनं श्लक्ष्णं श्यामलं लोहितं वा प्रक्षालितं दर्भवेष्टितं शिलात्रयं दक्षिणाऽपवर्गमवटे निधाय तासु क्रमेण तिलैरावाहयेत्-"ब्रह्मात्मकं यमाकारममुकगोत्रममुकशर्माणं प्रेतमावाहयामि, विष्ण्वात्मकमन्तकाऽऽकारममुक० शर्माणं प्रेतमावाहयामि, रुद्रात्मकं वैवस्वताकारममुक० शर्माणं प्रेतमावाहयामि" इत्यावाह्य "अत्र सन्निहितस्तिलोदकादि स्वीकुरु" इति प्रार्थ्य गन्धादिभिरभ्यर्च्य 'अमुकगोत्राऽमुकशर्मन्प्रेत अद्य प्रातरेतत्ते तिलोदकमुपतिष्ठतु, अमुकगोत्राऽमुकशर्मन्प्रेत सायमेतत्ते तिलोदकमुपतिष्ठतु' इति प्रत्येकं त्रिस्त्रिस्तिलोदकं दद्यात्। वस्त्रखण्डं त्रिगुणीकृतं गृहीत्वा प्रथमेऽहनि त्रीणि द्वितीये चत्वारि तृतीये पञ्च चतुर्थे षट् पञ्चमे सप्त षष्ठेऽष्टौ सप्तमे नव अष्टमे दश नवमे एकादश दशमे द्वादश वासोदकं दद्यात्। अथ शिलाग्रतः सकृदुद्धृत्याऽद्भिरवोक्ष्य सव्यं जानु निपात्य दक्षिणामुखो दक्षिणाऽग्रान्दर्भान्संस्तीर्य 'मार्जयताममुक० प्रेतः' इति तेषु तिलोदकं दत्वा तत्र 'अमुक० प्रेत अद्य प्रथमेऽहनि प्रातरयन्ते पिण्ड उपतिष्ठतु, अमुक० प्रेत सायमयन्ते पिण्ड उपतिष्ठतु' इति तिलदधिमधुक्षीरघृतसंयुतमोदनपिण्डद्वयं दत्वा, 'मार्जयताममुक० प्रेतः' इति तिलोदकं दद्यात्। अथाऽङ्गुष्ठेनाऽभिमृश्य 'अमुक० प्रेत एतत्ते अञ्जनमुपतिष्ठतु, अभ्यञ्जनमुप-

तिष्ठतु, वास उप०, गन्ध उप०, अक्षताः०,पुष्पं०, नैवेद्यमुपातिष्ठतु' इत्यञ्जनादि दत्वा, तत्पूर्वभागे दक्षिणाग्रदर्भेषु 'अमुक० प्रेत अयन्ते बलिरुपतिष्ठतु' इति सव्यञ्जनमोदनं दत्वा पिण्डबल्योरुपरि तिलोदकमुपतिष्ठतु, इति तिलोदकं दत्वा स्थालीसंक्षाळनेन पिण्डमपसव्यं परिषिच्य 'अनादिनिधनेशान शङ्खचक्रगदाधर। अक्षय्यपुण्डरीकाक्ष प्रेतमुक्तिप्रदो भव' इति प्रार्थ्य पिण्डं बलिञ्चोद्वास्य पिण्डं जले प्रवाह्य बलिं काकेभ्यो दद्यात् ॥ द्वितीयदिने सङ्कल्पे 'ग्रीवास्कन्धाद्यवयवनिष्पत्त्यर्थं, तृतीये—हृदयादि, चतुर्थे—पृष्ठादि, पञ्चमे—नाभ्यादि, षष्ठे—कटिगुह्यादि, सप्तमे—सक्थिनी इत्यादि, अष्टमे-जान्वाद्यवयवनिष्पत्त्यर्थं, नवमे-पादाद्यवयवनिष्पत्त्यर्थं, दशमे दिने—सर्वाऽवयवनिष्पत्त्यर्थं' इति विशेषः॥ एवं प्रत्यहं सायञ्च तिलोदकवर्जं वासोदकपिण्डबलिप्रदानानि कुर्यात् ॥ नित्यश्राद्धानन्तरं (विषमदिने नवश्राद्धात्पूर्वं) प्रत्यहमेकोत्तरवृद्धिश्राद्धं नवश्राद्धवदामेन कुर्यात् ॥ प्रथमदिने नित्यविधिं समाप्य जलघटं शिरसि निधाय गृहद्वारि वामपार्श्वे पूर्ववत्तिस्रः शिलाः स्थापयित्वा तासु कनिष्ठपूर्वाः उदकदानमन्त्रेण वासः पीडयन्ति ॥

## ॥ नवश्राद्धविधिः ॥

(बो. पि. सू. ३. ६. ८-९) अयुग्मदिवसे त्रीन्पञ्च सप्त ब्राह्मणान्भोजयेदेकमपि वा॥ भवत्यामैर्वा मूलफलैः प्रदानमात्रं हिरण्येन वा प्रदानमात्रं सर्वेषु होतृपरेषु स्वधास्थानेषु कुर्यात् 'अमुष्मा उपतिष्ठतु' इति॥ (बो. पि. सू. २. १०. ६-७) अथ नवश्राद्धं विच्छिद्यैतैतस्मिन्नह्नि कुर्यात्। अथाऽप्युदाहरन्ति—' चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि। यदत्र दीयते जन्तोस्तन्नव-श्राद्धमुच्यते॥ एकोद्दिष्टे नवश्राद्धे यदि विघ्नः प्रवर्तते। तिथिवारादिभिः कुर्यात्प्राप्तमेकादशेऽहनि' इति॥ स्मृत्यन्तरे— "नवश्राद्धं

सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्याणि संविभक्तधनेष्वपि ” ॥ कण्वः — “ नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत् । तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्ष्यते ” ॥

अथ नवश्राद्धप्रयोगः ॥ प्रथमे, तृतीये, पञ्चमे, सप्तमे, नवमे, एकादशे चेति, षट्सु विषमदिनेषु कुर्यात् — “ अमुक०प्रेतस्य प्रेतत्वनिवृत्त्यर्थं अद्य प्रथमेऽहनि नवश्राद्धमामेन करिष्ये ” इति संकल्प्य उदङ्मुखं दर्भबटुमुपवेश्यासनादिभिरभ्यर्च्य “ अमुक० प्रेतत्वनिवृत्त्यर्थमिदमामं सोपस्करं सदक्षिणमुपतिष्ठतु ” इत्युक्त्वा भोजनाद्द्विगुणमामं ब्राह्मणाय दद्यात् ॥ इति नवश्राद्धम् ॥ ॥ अथ स्नात्वा जलपूर्णं कुंभं शिरसि निधाय गृहमागत्य यथाचारं मृतस्थाने उपरिसूत्रं लंबयित्वा शिक्यादौ जलपात्रं क्षीरपात्रं च निधाय “ श्मशानानलदग्धोसि परित्यक्तोसि बान्धवैः । इदं नीरमिदं क्षीरमत्र स्नाहि इदं पिब ” इति विज्ञापयेत् ॥ तदग्रे तिलोदकं दत्वा मुष्टिपरिमितमुपस्तीर्णाभिघारितमन्नं “ अमुक० प्रेत क्षुत्तृड्दाहोपशान्त्यर्थं इदमन्नमुपतिष्ठतु ” इति दत्वा “ अन्नस्योपरि तिलोदकमुपतिष्ठतु ” इति तिलोदकं च दद्यात् ॥ रात्रौ दीपं क्षीरं चैवमेवादशरात्रं कुर्यात् । स्थालीशिलादिकं सुरक्षितं गोपायेत् ॥

## ॥ अत्र संभाव्यानि प्रायश्चित्तानि ॥

शिलास्थाल्यादिनाशे द्रव्यवस्त्रादिविपर्यासे च अन्यद्गृहीत्वा पूर्वदत्ताञ्जलीन् पुनर्दद्यात् ॥ ॥ उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये—“पूर्वदत्ताञ्जलीन् पिंडान् पुनरित्याह गौतमः” इत्यादि वैद्यनाथीयवचनात् ॥ तत्क्रमश्चोक्तः कुंभकोणप्रयोगे । शिलानाशेऽन्यच्छिलात्रयं पूर्ववत्प्रतिष्ठाप्यावाह्य स्पृष्ट्वा जपेत् —“ आयातु देवः सुमनाभिरूतिभिर्यमो हवेह प्रयताभिरक्ता । आसीदताँ सुप्रयतेह

बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै " इति ॥ पूर्वदत्तान्वासोदकतिलोदकपिंडांश्च पुनर्दद्यात् ॥ ततो नष्टशिलानां पुनर्लाभे ता अप्यत्रैव संस्थाप्य उभयं स्पृष्ट्वा जपेत्—यमे इव यतमाने यदैतं प्रवां भरन्मानुषादेवयन्तः ॥ आसीदतᳪस्वमुलोकं विदाने स्वासस्थे भवतमिन्दवे नः " इति ॥ शिलानां नाशे पुनर्दर्शने च लौकिकाग्नावाज्यं संस्कृत्य—"यमाय सोमᳪसुनुत यमाय जुहुता हविः । यमᳪह यज्ञो गच्छ-त्यग्निदूतो अरंकृतः स्वाहा ॥ यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत । स नो देवेष्वायमद्दीर्घमायुः प्रजीवसे स्वाहा ॥ यमाय मधुमत्तमᳪ राज्ञे हव्यं जुहोतन ॥ इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः स्वाहा " इति तिस्रः स्रुवाहुतीर्जुहोति ॥ यमायेदं० ॥ पिंडद्रव्यचरुस्थाल्योर्विपर्यासेऽन्यद्गृहीत्वा पूर्वदत्तपिंडान्बलींश्च पुनर्दद्यात् ॥ वस्त्रविपर्यासे पूर्वदत्तवासोदकादि सर्वं पुनर्दद्यात् ॥ इति ॥ ॥ दहनकाले श्मशानाग्निनाशे—" दह्यमाने शवे वह्निर्नष्टो वर्षाद्भवेद्यदि । चितिकाष्ठं तु निर्मथ्य तेन प्रेतं पुनर्दहेत् ॥ अभावे चितिकाष्ठानां प्रायश्चित्ते कृतेऽग्निना । दाहयेत्तानि शिष्टानि शेषं वाप्सु विनिक्षिपेत् " ॥ ॥ अस्थिनाशे — " पूर्णे दग्धे तथा कुर्याज्ज्वालौघेनास्थिनाशने । नदीतीरे सरित्तीरे तन्मन्त्रांस्तु जपेद्बुधः ॥ अस्थिसञ्चयनात्पूर्वं प्रमादापहृतं यदि । अस्थिप्रतिकृतिं-कृत्य तद्देशान्मृदमाहरेत् ॥ अस्थिवच्चिनुयाद्विद्वान्लोष्टं वा भस्म वा ततः । प्रमाणमस्थिवत्कृत्वा तन्मन्त्रांस्तु जपेद्बुधः " ॥ इत्यादि वचनैरस्थिनाशेऽग्न्यनुगतप्रायश्चित्तं कृत्वा तिस्रोऽवसर्जनीयाश्च हुत्वा भस्मादि सञ्चिनुयात् ॥ भस्माद्यभावे केवलं मन्त्रजपः ॥

अथास्थिसंचयनात्पूर्वं श्मशानाग्नावनुगते प्रायश्चित्तम् ॥ अमुक० प्रेतस्यास्थिसंचयनात्पूर्वं श्मशानाग्न्यनुगतप्रायश्चित्तं करिष्ये ' इति संकल्प्य, "अपहता असुरा रक्षाᳪसि पिशाचा ये क्षयन्ति पृथिवीमनु ॥ अन्यत्रेतो गच्छन्तु यत्रास्यं गतं मनः " इत्यद्भि-श्चितां प्रोक्ष्य, " अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिम् " इति तद्भस्म समिधि समा-

रोप्य दहनदेशाद्दक्षिणतः उद्धृत्यावोक्ष्य लौकिकाग्निं प्रतिष्ठाप्य तां समिधमादधाति— " आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमासीद साध्या। अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च। पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयितन्तुमेतम् " इति द्वाभ्याम् ॥ अथैनमुपसमाधाय— " प्रायश्चित्तहोमः कर्म, पैतृकं तन्त्रं, चित्तिर्नामाग्निः, अग्न्यादयो देवताः, आज्यं हविः, सद्यो यक्ष्ये " इत्यादि संकल्प्यान्वाधानादि स्रुक्संमार्जनान्तं कृत्वाऽग्निमपसव्यं परिषिच्यालंकृत्य समिधमाधायाज्याहुतीर्जुहोति— " अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि। अयसा मनसा धृतोऽयसा हव्यमूहिषेयानो धेहि भेषजꣳ स्वाहा "॥ अग्नये अयस इदं० ॥ स्रुचि चतुर्गृहीत गृहीत्वा जुहोति— " अग्निर्होता। अश्विनाध्वर्यू। त्वष्टाग्नीत्। मित्र उपवक्ता। सोमः सोमस्य पुरोगाः। शुक्रः शुक्रस्य पुरोगाः। श्रातास्त इन्द्र सोमाः। वातापेर्हवन श्रुतः स्वाहा "॥ वाचस्पतये ब्रह्मण इदं० ॥ ततः स्रुवेण— " ब्राह्मण एकहोता। स यज्ञः। स मे ददातु प्रजां पशून्पुष्टिं यशः। यज्ञश्च मे भूयात्स्वाहा ॥ ब्रह्मण इदं० ॥ अग्निर्द्विहोता। स भर्ता। स मे ददातु० यशः। भर्ता च मे भूयात्स्वाहा। अग्नय इदं० ॥ पृथिवी त्रिहोता। स प्रतिष्ठा। स मे ददातु० यशः। प्रतिष्ठा च मे भूयात्स्वाहा ॥ पृथिव्या इदं० ॥ अन्तरिक्षं चतुर्होता। स विष्ठाः। स मे० यशः। विष्ठाश्च मे भूयात्स्वाहा ॥ अन्तरिक्षायेदं० ॥ वायुः पञ्चहोता। स प्राणः। स मे० यशः। प्राणश्च मे भूयात् स्वाहा ॥ वायव इदं० ॥ चन्द्रमाः षड्ढोता। स ऋतून्कल्पयाति। स मे० यशः। ऋतवश्च मे कल्पन्ताꣳ स्वाहा। चन्द्रमस इदं० ॥ अन्नꣳ सप्तहोता। स प्राणस्य प्राणः। स मे० यशः। प्राणस्य च मे प्राणो भूयात्स्वाहा ॥ अन्नायेदं० ॥ द्यौरष्टहोता। सोऽनाधृष्यः। स मे० यशः। अनाधृष्यश्च भूयासꣳ स्वाहा ॥ दिव इदं०॥ आदित्यो नवहोता। स तेजस्वी। स मे० यशः। तेजस्वी च भूयासꣳ

स्वाहा ॥ आदित्यायेदं० ॥ प्रजापतिर्दशहोता । स इद्ग्ं सर्वम् । स मे० यशः । सर्वं च मे भूयात्स्वाहा । प्रजापतय इदं० ”॥ मनस्वती, मिन्दाहुती, महाव्याहृतीः, व्याहृतिश्च हुत्वा ॥ भूर्भुवः सुवः स्वाहा ॥ इति सर्वप्रायश्चित्तं हुत्वा पुनरपसव्यं परिषिच्य होमशेषं समापयेत् ॥

## ॥ अस्थिसञ्चयनविधिः ॥

( बो. पि. सू. ३.१० ) अथातोऽस्थिसञ्चयनं व्याख्यास्यामः — निवृत्तेऽग्नौ करणे द्व्यहे त्र्यहे चतुरहे सप्ताहे वा नवकुम्भमादाय श्मशानं नीत्वा तं देशं गत्वा पलाशशङ्कून् वौदुम्बरशङ्कून् वा निहत्य अङ्गुष्ठेनोपकनिष्ठिकया मध्यमया वा सर्वाभिरङ्गुलीभिस्सर्वास्थीनि समुच्चित्य क्षीरेण प्रक्षाळ्य कुम्भेऽवधाय क्षीरेण प्लावयित्वा घृतं निनयेत्— ‘इदन्त आत्मनश्शरीरमयन्त आत्मा आत्मनस्त आत्मानं शरीराद्ब्रह्म निर्भिनत्ति भूर्भुवस्सुवरसौ स्वाहा’ इति । व्याहृतिभिरपि वा ॥ त्रिवृताऽन्नेन कुम्भमभ्यर्च्याऽथ यदि न दहेयुरुल्मुकात्पुनर्दहेयुः— ‘अस्मात्वमधिजातोऽस्ययं त्वदधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा’ इति ॥ तथैवाऽपिधानात्कृत्वाऽस्थिकुम्भमादाय नदीतीर्थसमुद्रेषु वाऽभ्यवहरन्त्यपि वा पुरुषसंमितं गर्तं खात्वा तस्मिन्कुम्भमवधाय पुनरभ्यर्च्य पुरीषेण प्रच्छादयेत् । एतद्यावद्वसति तावत्स्वर्गे महीयते ॥ ( बो. पि. सू. १. १४ ) अथातस्सञ्चयनम्— एकस्यां व्युष्टायां तिसृषु वा पञ्चसु वा सप्तसु नवसु एकादशसु वाऽयुग्मा रात्रीरर्धमासान्मासानृतून्संवत्सरं वा सम्पाद्य सञ्चिनुयुरिति ॥ स उपकल्पयते— सतश्च क्षीरञ्चाऽऽज्यञ्चोदकुम्भश्च दर्भाश्च परिस्तरणीयान्नीललोहिते सूत्रे बृहतीफलञ्चाश्मानञ्चापामार्गश्च वेतसशाखाश्च सिकताश्च शुल्बश्च पर्णशाखे च ॥ अत एवादहनादङ्गारान्निर्वर्त्य तिस्रोऽवसर्जनीया जुहोति— ‘अवसृज

पुनरग्ने पितृभ्यः, सङ्गच्छस्व पितृभिः, यत्ते कृष्णश्शकुन आतुतोद ' इति ॥ अथैतस्मिन्सते क्षीरश्चोदकुम्भञ्च निषिच्य वेतसशाखयाऽवोक्ष्यन्सम्पादयत्यप्रक्वाथयञ्च्छरीराणि— ' यन्ते अग्निममन्थाम ' इति षड्भिः ॥ प्रथमां वोत्तमां वा द्विरभ्यावर्तयेयुः ॥ अथैनदादहनमुदकुम्भैः स्ववोक्षितमवोक्ष्य याऽस्य स्त्रीणां मुख्या सव्ये पाणौ बृहतीफलं नीललोहिताभ्यां सूत्राभ्यां विग्रथ्याश्मानमन्वास्थायापामार्गेण सकृदुपमृज्याऽनन्वीक्षमाणा पत्तश्शिरस्तो वाऽस्थि गृह्णाति— ' उत्तिष्ठातस्तनुवꣳ सम्भरस्व मेह गात्रमवहा मा शरीरम् । यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवस्सविता दधातु ' इति । ' इदन्त एकं ' इति द्वितीयम् । ' पर ऊत एकम् ' इति तृतीयम् । ' तृतीयेन ज्योतिषा संविशस्व ' इति चतुर्थम् । ' संवेशनस्तनुवै चारुरेधि' इति पञ्चमम् । ' प्रियो देवानां परमे सधस्थे ' इति षष्ठम् ॥ अथैनं सुसञ्चितं सञ्चित्य भस्म पिण्डं करोति तं तथा करोति यथाऽस्य कपोतश्छायायां नोपविशेदिति ॥ अथैनमपरिमितैः क्षुद्रमिश्रैरश्मभिः परिचिनोति न तेन परिचिनुयात् यथाऽस्य कपोतश्छायायामुपविशेदिति ॥ अथैतान्यस्थान्यद्भिः प्रक्षाळ्य कुम्भे वा सते वा कृत्वाऽऽदायोपोत्तिष्ठति ॥ ( बौ. पि. सू. १. १५ ) ' उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन् । यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेमम् ' इति ॥ तं गर्तदेशं कुम्भं निधाय जघनेन कुम्भं तिस्रो दक्षिणा प्राचीः कर्षूः कुर्वन्तीति तत्पुरस्ताद्व्याख्यातम् ॥ जघनेन कर्षूः पर्णशाखे निहत्याऽवलेन शुल्बेन बध्वा विनिस्सर्पन्तीति तत्पुरस्ताद्व्याख्यातम् ॥ यत्राऽपस्तद्यन्त्यनवेक्षमाणा अपस्सचेला दक्षिणामुखास्समृत्तिका आप्लवन्ते— ' धाता पुनातु सविता पुनातु ' इति ॥ नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याऽऽचम्याऽऽदित्यमुपतिष्ठते—' उद्वयं तमसस्परि ' इति ॥ अथ गृहानायान्ति । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ ( बौ. पि. सू. २. ३. २ ) कुम्भान्तमनाहिताग्नेः स्त्रियाश्च निवपनान्तं हविर्यज्ञयाजिनः पुनर्दहनान्तं सोमयाजिनश्चित्यन्तमग्निचितो यदीतरमघोदकमुत्सिच्य दशरात्रमाशौचम् ॥

यमः—'अस्थिसञ्चयनादर्वाग्भर्तुः पत्नी मृता यदि। तस्मिन्नेवाऽनले दाह्या यदि चाऽग्निर्न शाम्यति' इति॥ अस्थिसञ्चयने वारादिविशेष उक्तः स्मृत्यन्तरे—'बुधसोमौ शुभौ ज्ञेयौ मध्यमौ गुरुभार्गवौ। अर्कारमन्दा निन्द्याः स्युः प्रशस्तं विषमेऽहनि॥ द्वितीयश्च चतुर्थश्च शुभदौ युग्मवासरौ। वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसञ्चयम्॥ प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः' इति॥ एवं वैद्यनाथीयादिग्रंथे वारनक्षत्रादिदोषा अपि विविधाः प्रोक्ताः। तथा च- मृताहाद्वितीयादियुग्मदिनेषु तृतीये सप्तमे वा दिने सञ्चयनं कुर्यात्। कुजशुक्रशनिवारान् सम्भवेऽर्कवारश्च धनिष्ठापञ्चकं त्रिपान्नक्षत्रं जन्मविपत्प्रत्यरवधभञ्च वर्जयेत्। चतुर्थेऽह्नि वारनक्षत्रादिदोषो नास्तीति केचित्। असम्भवे विप्रानुज्ञया कार्यम्, दशाहं न लङ्घयेत्, दशाहेऽतीते पुनर्दाहादिसर्वं कुर्यात्। दशाहमध्ये दर्शसङ्क्रान्तिसम्भवे मातापितृव्यतिरिक्तानां सञ्चयनं तदानीमेव कुर्यात्॥ अस्थ्नां श्वसूकरचण्डालादिस्पर्शे पञ्चगव्यशालग्रामतुलस्युदकैः प्रोक्षेत्। प्राजापत्यकृच्छ्रत्रयं चरेत्॥

अथ सञ्चयनप्रयोगः॥ आदौ नित्यविधिं निर्वर्त्य स्नात्वा सतं क्षीरमाज्यमुदकुम्भं दर्भाचीललोहिते सूत्रे बृहतीफल-मश्मानमपामार्गं वेतसशाखां सिकताः शुल्वं पर्णशाखे च पिण्डबल्यर्थमोदनमपूपतिललाजदधिमधुक्षीरघृतगुडनाळिकेरदीप-पताकछत्रपादुकागन्धाक्षतपुष्पहरिद्राकुङ्कुमादिसम्भारान्सङ्गृह्य, श्मशानं गत्वा दक्षिणाप्राङ्मुख उपविश्यैकदर्भपवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, प्राचीनावीती "अमुकगोत्रस्य० प्रेतस्य प्रेतत्वनिवृत्त्याऽक्षय्यपुण्यलोकप्राप्त्यर्थमस्थिसञ्चयनं करिष्ये" इति सङ्कल्प्य दहनाऽग्निं दक्षिणतो निरूह्य (दहनाऽग्न्यनुगते लौकिकाऽग्निमुपसमाधाय पूर्वोक्तप्रायश्चित्तं कृत्वा) सञ्चयनहोमः कर्म, पैतृकं तन्त्रम्, क्रव्यादो नामाऽग्निः, अग्निर्जातवेदा इत्यादयो देवताः, आज्यं हविः, सद्यो यक्ष्ये, इत्यादि सङ्क-ल्प्याऽन्वाधायाऽऽज्यस्थालीं स्रुवं प्रोक्षणीं समिधश्चेत्यैकैकशस्सादयित्वैकदर्भपवित्रकरणादि स्रुवसम्मार्जनान्तं कृत्वाऽग्निमपसव्यं

परिषिच्य समिधमाधाय स्रुवेण तिस्रोऽवसर्जनीया जुहोति —"अवसृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः। आयुर्वसान उपयातु शेषꣳ सङ्गच्छतां तनुवा जातवेदः स्वाहा। अग्नये जातवेदस इदं० ॥ सङ्गच्छस्व पितृभिस्सꣳ स्वधाभिस्समिष्टापूर्तेन परमे व्योमन्। यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवस्सविता दधातु स्वाहा। देवाय सवित्र इदं० ॥ ('यत्ते कृष्ण' इति स्त्रीणां वर्ज्यम्) यत्ते कृष्णः शकुन आतुतोद पिपीलस्सर्प उत वा श्वापदः। अग्निष्टद्विश्वादनृणं कृणोतु सोमश्च यो ब्राह्मणमाविवेश स्वाहा ॥ अग्नीषोमाभ्यामिदं०" इति ॥ मिन्दाहुती व्याहृतीश्च हुत्वा पुनरपसव्यं परिषिच्य होमं समापयेत् ॥ अथ सते क्षीरमुदकञ्च निषिच्य वेतसशाखयाऽस्थीन्यवोक्षति—'यन्ते अग्निममन्थाम' इति षड्भिः (प्रथमां वोत्तमां वा द्विरभ्यावर्तयेत) यन्ते अग्निममन्थाम वृषभायेव पक्तवे। इमन्तꣳ शमयामसि क्षीरेण चोदकेन च ॥ १ ॥ यन्त्वमग्ने समदहस्त्वमु निर्वापया पुनः। क्याम्बूरत्र जायतां पाकदूर्वा व्यल्कशा ॥ २ ॥ शीतिके शीतिकावति ह्लादुके ह्लादुकावति। मण्डूक्यासु सङ्गमयेमꣳ स्वग्निꣳ शमय ॥ ३ ॥ शन्ते धन्वन्या आपः शमु ते सन्त्वनूक्याः। शन्ते समुद्रिया आपः शमु ते सन्तु वर्ष्याः ॥ ४ ॥ शन्ते स्रवन्तीस्तनुवे शमु ते सन्तु कूप्याः। शन्ते नीहारो वर्षतु शमु पृष्वाऽवशीयताम् ॥ ५ ॥ शन्ते स्रवन्तीस्तनुवे० शीयताम् ॥ ६ ॥ इति ॥ तमग्निमयुग्मैरुदकुम्भैस्सर्वतः शमयित्वा याऽस्य स्त्रीणां मुख्या तदभावे कर्ता वा वामपाणौ बृहतीफलं नीललोहिताभ्यां सूत्राभ्यां बध्वाऽश्मनि वामपादं निधायाऽपामार्गेण करौ सकृत्समृज्य नेत्रे निमील्य शिरस्तोऽस्थि गृण्हाति— "उत्तिष्ठातस्तनुवꣳ सम्भरस्व मेह गात्रमवहा मा शरीरम्। यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधातु" इत्यादायाऽद्भिः प्रक्षाळ्य कुम्भे निदधाति। एवं —'इदन्त एकम्' इति द्वितीयमुरस्तः। 'पर ऊत एकम्' इति तृतीयं जठरतः। 'तृतीयेन ज्योतिषा संविशस्व'

इति चतुर्थमूरुभ्याम् । 'संवेशनस्तनुवै चारुरेधि' इति पञ्चमं बाहुभ्याम् । 'प्रियो देवानां परमे सधस्थे' इति षष्ठं पद्भ्याम् । तूष्णीमितराणि च गृह्णीयात् । अथैतद्भस्म सर्वमेकीकृत्याऽरत्निमात्रां समचतुरस्रां वेदिकां कृत्वा तत्र दक्षिणाग्रान्दर्भानास्तीर्य तेषूत्तरतो दक्षिणामुखं पाषाणत्रयं प्रतिष्ठाप्य तिलोदकं दत्वा मध्यमे पाषाणे 'प्रेतराजमावाहयामि' तस्य दक्षिणपार्श्वस्थे 'प्रेतसखं यममावाहयामि' उत्तरपार्श्वस्थे 'प्रेतसखं रुद्रमावाहयामि' इत्यावाह्य 'प्रेतराजाय, प्रेतसखाय यमाय, प्रेतसखाय रुद्राय' इति प्रत्येकं 'पाद्यमुपतिष्ठतु, आसनमुपतिष्ठतु' इत्येवमर्घ्यं वस्त्रं गन्धाऽक्षतपुष्पाणि धूपदीपनैवेद्यं ताम्बूलञ्च दत्वा दक्षिणाऽग्रेषु दर्भेषु तिलोदकं दत्वा "प्रेतराजायाऽयं पिण्ड उपतिष्ठतु, प्रेतसखाय यमायाऽयं पिण्ड उपतिष्ठतु, प्रेतसखाय रुद्रायाऽयं पिण्ड उपतिष्ठतु, पिण्डस्योपरि तिलोदकमुपतिष्ठतु" इति पिण्डं तिलोदकञ्च दत्वा, तत्रैव वेदिकायां पिष्टमयास्तिस्रास्तिस्रो रेखा विलिख्य तन्मध्ये पलाशपर्णेषु तिलोदकं दत्वा बलिं दद्यात्– ओदनं लाजाऽपूपदधिमधुक्षीरघृतगुडसहितं नाळिकेरफलोदक-मञ्जनाऽभ्यञ्जनदशासूत्राणि पिष्टमये छत्रपादुके हरिद्राकुङ्कुमगन्धरक्तपुष्पदीपपताकादि निधाय "श्मशानदेवतासहिताय सपरिवाराय प्रेतराजायाऽयं सव्यञ्जनस्सोपस्करो बलिरुपतिष्ठतु" इति बलिं दत्वा 'बलेरुपरि तिलोदकमुपतिष्ठतु' इति तिलोदकञ्च दत्वा प्रार्थयेत् — "ये श्मशानस्थिता देवा भगवन्तस्सनातनाः । ते मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥ प्रेतस्याऽस्य शुभाल्लोकान्प्रयच्छन्तु च शाश्वतान् । अस्माकमायुरारोग्यं सुखं ददतु ते चिरम्" इति ॥ ततः पिण्डबल्यादीन् काकेभ्यो दद्यात् ॥ अथैतान्यस्थीन्यद्भिः प्रक्षाळ्य कुम्भे निधाय क्षीरेण प्लावयित्वा घृतं निनयेत् — "इदन्त आत्मनः शरीर-मयन्त आत्मा आत्मनस्त आत्मानं शरीराद्ब्रह्म निर्भिनत्ति भूर्भुवस्सुवरसौ स्वाहा" इति, व्याहृतिभिरपि वा । हिरण्यशकलं क्षिप्त्वाभ्यर्च्य वस्त्रेणाऽऽच्छाद्याऽस्थिकुम्भमादायोपोत्तिष्ठति — "उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन् । यमेन त्वं यम्या

संविदानोत्तमं नाकमधिरोहेमम् " इति ( स्त्रीणामयम्मन्त्रो वर्ज्यः ) नदीसमुद्रेषु वाऽभ्यवहरन्त्यपि वा पुरुषसम्मितं गर्तं कृत्वा तस्मिन्कुम्भमवधाय पुनरभ्यर्च्य मृत्तिकाभिः प्रच्छादयेत् । एतद्यावद्वसति तावत्स्वर्गे महीयते ॥ अथ जघनेन कुम्भं त्रीणि गर्तानि खात्वाऽद्भिः पूरयित्वा सिकता विकीर्य कनिष्ठप्रथमास्तदुदकं स्पृशन्तस्सङ्गाहन्ते — " अश्मन्वती० वाजानुत्तरेम." इति ॥ तत्पश्चिमे पर्णशाखे निहत्याऽवलं रज्जुं बध्वा तोरणाकारं कृत्वा तदन्तरेण कनिष्ठप्रथमा निर्गच्छन्ति — " यद्वै देवस्य० पुनामि " इति । पश्चाद्गन्ता रज्जुं छित्वा पर्णशाखे व्युदस्यति — ' या राष्ट्रत्पन्नात्० सः सृजाथ ' इति । तन्देशमनवेक्षमाणास्तीर्थं गत्वा मृत्तिकाभिस्सर्वाङ्गमालिप्य दक्षिणामुखाः सचेलास्स्नानङ्कुर्वन्ति — " धाता पुनातु० वर्चसा " इति । ततस्तिलोदकं त्रिवारं दत्वा पुनस्स्नात्वाऽऽचम्य ' उद्वयन्तमसस्परि० रुत्तमम् ' इत्यादित्यमुपस्थाय गृहमागत्य निम्बपत्रप्राशनसुवर्णादिस्पर्शनं कुर्युः । सञ्चयनाङ्गश्राद्धं सङ्कल्पपूर्वकं नवश्राद्धवदामेन कुर्यात् ॥ ॥

## ॥ दशमदिनविधिः ॥

( बो. पि. शे. सू. ३ ) अथ दशमेऽहनि कर्ता ज्ञातयश्च प्रकोष्ठभ्रूशिखावर्जं सर्वाङ्गवपनं कुर्युः । पिण्डान्ते प्रभूतबलिं दत्वा सुवस्त्रोपरि कंसे उदकवास आस्तीर्य तस्मिन्पिण्डौ निक्षिप्य शिला उद्वास्य पिण्डे निक्षिप्य जपादिभिरभ्यर्च्य शिरसि निधाय तटाकान्तं गत्वा तत्र शिला अन्यपिण्डे निक्षिप्य जलं गत्वाऽनवेक्षमाण उदङ्मुखो दक्षिणतः प्रसृज्य स्नात्वा वापयित्वा शान्तिहोमं कृत्वा श्वोभूते वृषमुत्सृज्य नवश्राद्धं कृत्वाऽऽद्यश्राद्धं द्विजेऽग्नौ वा कृत्वा वृद्धिश्राद्धं षोडशश्राद्धं वा कृत्वा द्वादशेऽहनि

वा पञ्चदशश्राद्धं सोदकुम्भश्राद्धञ्च दत्वा सपिण्डीकरणं कृत्वाऽत ऊर्ध्वं पार्वणेन मासिकानि कुर्यादाब्दिकपर्यन्तं दर्शादिश्राद्धं न कुर्यात्। सोदकुम्भादिनित्यश्राद्धञ्च कुर्यात् ज्येष्ठ औपासने पित्रोस्सपिण्डीकरणं कुर्यात्॥

( बो. पि. सू. १. २१ )·अथ गृहानेष्यन्नुपकल्पयते-वारणं स्रुक्स्रुवञ्च वारणान्परिधीन्कुशमयं बर्हिः पर्णमयमिध्मं रोहितं चर्माऽनडुहं नवञ्च सर्पिराञ्जनञ्चाश्मानञ्चाऽनड्वाहञ्च शमीशाखाञ्च कुशतरुणकानि च दर्भस्तम्बञ्चाऽञ्जनञ्च यवांश्चेति॥ अथान्तरेण ग्रामञ्च श्मशानञ्च तद्वृथा ( लौकिका )ऽग्निमुपसमाधाय कुशमयं बर्हिस्तीर्त्वा वारणान्परिधीन्परिधाय पर्णमयमिध्ममभ्यज्य स्वाहाकारेणाऽभ्याधायाऽथैतद्रोहितं चर्माऽनडुहं जघनेनाऽग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति॥·तदाऽऽरोहन्ति यावन्तोऽस्य ज्ञातयो भवन्ति— 'आरोहताऽऽयुर्जरसं गृणानाः' इति॥ अथैनाननुपूर्वं कल्पयति— 'यथाऽहान्यनुपूर्वं भवन्ति' इति॥ अथ वारणेन स्रुवेण वारण्यां स्रुचि चतुर्गृहीतं गृहीत्वा जुहोति— 'न हि ते अग्ने तनुवै क्रूरं चकार मर्त्यः। कपिर्बभस्ति ते जनं पुनर्जरायु गौरिव। अपनश्शोशुचदघमग्ने शुशुध्या रयिम्। अप नश्शोशुचदघं मृत्यवे स्वाहा' इति॥ अथ वारणेन स्रुवेणोपघातं जुहोति— 'अप नश्शोशुचदघम्' इति द्वादश स्रुवाहुतीः॥ अथोपोत्थायाऽनड्वाहमन्वारभन्ते— 'अनड्वाहमन्वारभामहे स्वस्तये। स न इन्द्र इव देवेभ्यो वह्निस्सम्पारणो भव' इति॥ प्राञ्चो यान्ति— 'इमे जीवा विमृतैः' इति॥ जघन्यश्शमीशाखया पदानि संलोपयते— 'मृत्योः पदम्' इति॥ अथाऽन्तरेणाऽग्निञ्च श्मशानञ्चाऽश्मानमुपदधाति— 'इमञ्जीवेभ्यः परिधिं दधामि' इति॥ अथैताः पत्नयो नवेन सर्पिषा सम्मृशन्ति— 'इमा नारीरविधवाः' इति॥ कुशतरुणकैस्त्रैककुदेनाऽञ्जनेनाऽङ्क्ते— 'यदाञ्जनं त्रैककुदं जातं हिमवतस्परि' इति॥ अथैतानि कुशतरुणकानि समुच्चित्य दर्भस्तम्बे निदधाति— 'यथा त्वमुद्भिनत्स्योषधे' इति॥ प्रत्येत्य गृहानासन्दीं प्रोष्ठावित्यारोहन्ति— 'अनश्रवो अनमीवास्सुशेवा आरोहन्तु जनयो योनिमग्रे'

इति ॥ अजश्चैतदहः पचन्ते यवोदनञ्च ॥ अजस्याऽश्नन्ति— 'अजोऽस्यजास्मदघाद्द्वेषांसि' इति ॥ यवोदनस्य च प्राश्नन्ति— 'यवोऽसि यवयाऽस्मदघाद्द्वेषाꣳसि' इति ॥ ( बो. पि. सू. २. ४. १८–१९ ) यथो एतत् गृहान्निष्यन्नुपकल्पयत इति स्वान् स्वान् गृहस्थधर्मान्प्रतिपत्स्याचित्येवेदमुक्तं भवति । नाऽशुचिः काम्यं तप आतिष्ठेन्न यजेन्न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपूर्णमासा-भ्यां न दद्यात्काममृत्विग्भ्यो दद्यात् ॥ स्मृत्यन्तरे — " तिलोदके च पिण्डे च प्रदत्ते दशमेऽहनि । अश्मनोत्थापनं कृत्वा ततः प्रेतं विसर्जयेत् " ॥

दशमादिनप्रयोगः ॥ कर्ता स्नात्वा नित्यपिण्डदानादिकं प्रातःसायं करिष्यमाणं समानतन्त्रेण निर्वर्त्य पिण्डौ सुरक्षितं स्थापयेत् । प्रभूतबल्यर्थमाज्यं दधि मधु क्षीरं कार्पासं वस्त्रमुपवीतं पिष्टमयछत्रपादुके लोहितसूत्रमञ्जनं पक्वमोदनं लाजाऽपूप-भक्ष्यादि हरिद्राकुङ्कुमतिलाक्षतपुष्पाणि दीपं पताका नाळिकेरमुदकुम्भं कांस्यपात्रञ्च, शान्तिहोमार्थं वारणौ स्रुक्स्रुवौ वारणान् परिधीन्कुशमयं बर्हिः पर्णमयमिध्मं रोहितं चर्माऽनडुहं नवञ्च सर्पिराज्ञनञ्चाऽश्मानं शमीशाखां कुशतरुणकानि दर्भस्तम्बञ्चेति सम्भारान्सङ्गृह्य । आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य प्राचीनावीती—अमुकगोत्रस्य० प्रेतस्य महाक्षुन्तृण्णिवृत्त्याऽक्षय्य-तृप्त्यर्थं प्रभूतबलिं करिष्ये, इति सङ्कल्प्य, गोमयेनोपलिप्ते शुचौ देशेऽरत्निमात्रां समचतुरस्रा वेदिकां कृत्वा चतुर्दिक्षु तिस्रस्तिस्रः पिष्टमया रेखा लिखित्वा तन्मध्ये मण्डलत्रयं कृत्वा दक्षिणामुख उपविश्य मण्डलशिरोभागे दक्षिणाऽग्रेषु दर्भेषु शिलात्रयं प्रतिष्ठाप्य, मध्ये— 'प्रेतराजाय' पश्चिमे— 'प्रेतसखाय यमाय' पूर्वे— 'प्रेतसखाय रुद्राय' एवं क्रमेण 'इदमासनमुपतिष्ठतु' ॥ एवमेव आवाहनं, पाद्यं, अर्घ्यं, आचमनं, स्नानं, वस्त्रं, उपवीतं, गन्धः, ( अक्षताः, तिलाः, पुष्पाणि उपतिष्ठन्तु ) छत्रं, पादुके उपतिष्ठतः इति दत्वा तत्पुरस्ताद्दक्षिणाग्रेषु दर्भेषु 'तिलोदकमुपतिष्ठतु' इति तिलोदकं दत्वा, तदुपरि 'प्रेतराजाय, प्रेतसखाय यमाय,

प्रेतसखाय रुद्राय' इति मध्ये पश्चिमे पूर्वे 'अयं पिण्ड उपतिष्ठतु' इति दधिमधुक्षीरसर्पिस्तिलमिश्रांस्त्रीन्पिण्डान्दत्वा तदुपरि पूर्ववत्तिलोदकं दद्यात्। अथाऽञ्जनमुपतिष्ठतु, अभ्यञ्जनं०, वासः०, इत्यञ्जनाभ्यञ्जनवासांसि दत्वा, ओदनलाजापूपभक्षादिकं दधिमधुक्षीरघृतसहितं नीलहरिद्राकुङ्कुमनाळिकेरोदकमुदकुम्भदीपपताकाश्च पिण्डसमीपे निधाय "अमुकगोत्र० अमुकशर्मन् प्रेत महाक्षुत्तृष्णिवृत्त्यर्थमयन्ते प्रभूतबलिरुपातिष्ठतु" इति प्रभूतबलिं तिलोदकञ्च दत्वा, सर्वे दूरतो गत्वा पिण्डादि काकेभ्यो दद्यात्। ततः सुवस्त्रोपरि कांस्यपात्रं निधायाऽऽर्द्रवास आस्तीर्य तस्मिन्पूर्वमुद्वास्य स्थापितौ नित्यपिण्डौ निक्षिप्य सर्वाः शिला उद्वास्य तिलतैलेनाऽभ्यज्य प्रथमपिण्डोपरि निक्षिप्य जलसमीपं गत्वा तत्रस्थाः शिला द्वितीयपिण्डे निक्षिप्याऽनवेक्षमाण उदङ्मुखो दक्षिणतो जले विसर्जयेत्— "शिलादेवि महापुण्ये प्रेतलोकं विमुच्यतु। कल्यादौ यत्र सञ्जाता जले त्वं तिष्ठ सर्वदा" इति॥

शान्तिहोमप्रयोगः॥ कर्ता कृतसर्वाङ्गवपनो नद्यादौ स्नात्वा ग्रामश्मशानयोर्मध्ये शुचौ देशे प्राङ्मुख उपविश्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य (यज्ञोपवीत्येव) ज्ञातीनां मम च सर्वेषामघनिर्हरणार्थं शान्तिहोमं करिष्ये, इति सङ्कल्प्य स्थण्डिलोल्लेखनादि लौकिकाऽग्निमुपसमाधाय, शान्तिहोमः कर्म, अपूर्वं तन्त्रं, पवमानो नामाऽग्निः, अग्निर्मृत्युश्च देवता, नवं सर्पिर्हविः, सद्यो यक्ष्ये, इत्यन्वाधानाद्यग्निं परिस्तीर्य, उत्तरतः प्रागग्रेषु दर्भेषु आज्यस्थालीं, वारणं स्रुवं, वारणं स्रुचं, प्रोक्षणीं वारणान्परिधीन्, पालाशमिध्मं, कुशमयं बर्हिरिति पात्राण्यासाद्य नवं सर्पिः संस्कृत्य स्रुक्स्रुवसम्मार्जनान्तं कृत्वा वारणान्परिधीन्परिधाय प्रदक्षिणमग्निं परिषिच्य पालाशमिध्ममभ्यज्य स्वाहाकारेणाऽभ्याधायाऽऽज्येन व्याहृतीर्हुत्वा जघनेनाऽग्निं रोहितं चर्माऽनडुहं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिन्सर्वे ज्ञातयः क्रमेणाऽन्वारोहन्ति—" आरो॑हता॒ऽऽयु॒र्जर॒सं॑ गृणा॒ना अ॑नुपू॒र्वं यत॑माना॒ यति॑ष्ठ। इ॒ह त्वष्टा॑ सु॒जनि॑मा सु॒रत्नो॑ दी॒र्घमायुः॑ करोतु जी॒वसे॑ वः" इति॥ अथैनाननुपूर्वं यथाज्येष्ठं कर्तॄन् स्त्रीरग्रे

यथावृद्धं ज्ञातीन्क्रमेणोपवेशयति—" यथाहान्यनुपूर्वं भवन्ति यथर्तव ऋतुभिर्यन्ति क्लृप्ताः । यथा न पूर्वमपरो जहात्येवा धातरायूꣳषि कल्पयैषाम् " इति ॥ अथ स्रुचि चतुर्गृहीतं गृहीत्वा जुहोति-" न हि ते अग्ने तनुवै क्रूरं चकार मर्त्यः । कपिर्बभस्ति तेजनं पुनर्जरायुर्गौरिवो ३ मप नः शोशुचदघमग्ने शुशुध्या रयिम् । अपनश्शोशुचदघं मृत्यवे स्वाहा" अग्नये मृत्यव इदं० ॥अथ द्वादश स्रुवाहुतीर्जुहोति—" अप नः शोशुचदघमग्ने शुशुध्या रयिम् । अप नः शोशुचदघꣳ स्वाहा । ( अग्नय इदं०, इति सर्वत्र त्यागः ) सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघꣳ स्वाहा ॥ प्रयद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः० दघꣳ स्वाहा ॥ प्रयदग्नेः सहस्वतो विश्वतो यन्ति सूरयः । अप० दघꣳ स्वाहा ॥ प्रयत्ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप०घꣳ स्वाहा ॥ त्वꣳ हि विश्वतोमुख विश्वतः परिभूरसि । अप०घꣳ स्वाहा ॥ द्विषो नो विश्वतोमुखाऽतिनावेव पारय । अप०घꣳ स्वाहा ॥ स नः सिन्धुमिव नावयाऽतिपर्षा स्वस्तये । अप०घꣳ स्वाहा ॥ आपः प्रवणादिव यतीरपास्मत्स्यन्दतामघम् । अप०घꣳ स्वाहा ॥ उद्वनादुदकानीवाऽपास्मत्स्यन्दतामघम् । अप०घꣳ स्वाहा ॥ आनन्दाय प्रमोदाय पुनरागाꣳ स्वान्गृहान् । अप० घꣳ स्वाहा ॥ न वै तत्र प्रमीयते गौरश्वः पुरुषः पशुः । यत्रेदं ब्रह्म क्रियते परिधिर्जीवनायकमप० घꣳ स्वाहा" इति ॥ ततो मिन्द्राहुती व्याहृतीर्यदस्य-कर्मण इति स्विष्टकृतश्च हुत्वा परिस्तरणान् परिधींश्चाऽनुप्रहृत्य सꣳस्रावं हुत्वोत्तरपरिषेकादि होमशेषं समापयेत् ॥ अथ सर्वे उत्थायाऽग्रेणाऽग्निं प्राङ्मुखमनड्वाहमन्वारभन्ते —" अनड्वाहमन्वारभामहे स्वस्तये । स न इन्द्र इव देवेभ्यो वह्निः सम्पारणो भव " इति ॥ अनड्वाहं पुरस्कृत्य प्राञ्चो यान्ति —" इमे जीवा विमृतैराववर्तिन्नभूद्भद्रा देव-हूतिर्नो अद्य । प्राञ्चोगामानृतये हसाय द्राघीय आयुः प्रतरां दधानाः " इति ॥ पश्चाद्गन्ता शमीशाखयाऽनडुहः पदानि

सम्मार्जयते— "मृत्योः पदं योपयन्तो यदैम द्राघीय आयुः प्रतरां दधानाः। आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवथ यज्ञियासः" इति॥ ग्रामश्मशानयोर्मध्येऽश्मानमुपदधाति—"इमं जीवेभ्यः परिधिं दधामि मा नोऽनुगादपरो अर्धमेतम्। शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दध्महे पर्वतेन" इति॥ अथैताः पत्नयो नवेन सर्पिषा नयने सम्मृशन्ति—"इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सम्मृशन्ताम्" इति॥ अथ पुरुषा कुशतरुणकैस्त्रैककुदेनाऽञ्जनेनाऽञ्जते—" यदाञ्जनं त्रैककुदं जातꣳ हिमवतस्परि। तेनामृतस्य मूलेनारातीर्जम्भयामसि" इति॥ कुशतरुणकानि समुच्चित्य दर्भस्तम्बे निदधाति— "यथा त्वमुद्भिनत्स्योषधे पृथिव्या अधि। एवमिम उद्भिन्दन्तु कीर्त्या यशसा ब्रह्मवर्चसेन" इति॥ गृहं सम्मृज्य गोमयेनोपलिप्य पञ्चगव्येन प्रोक्ष्य स्त्रीपुरस्सराः प्रविश्य खट्वादिमारोहन्ति—"अनश्रवो अनमीवाः सुशेवा आरोहन्तु जनयो योनिमग्रे" इति॥ यवोदनं प्राश्नन्ति—"यवोऽसि यवयास्मद्द्वेषा द्वेषाꣳसि" इति॥ स्त्रीणान्तु नामान्ते 'दा' शब्दं 'दायी' शब्दं वा स्त्रीलिङ्गविभक्त्यनुरूपमनुसन्धाय वर्ज्यमन्त्रान्विहाय सर्वं यथोक्तं कुर्यात्॥

## ॥ अथैकादशाहकृत्यम् ॥

तत्रादौ ज्ञातव्यविशेषाः—वैद्यनाथीये, स्मृतिरत्ने— "एकादशेऽह्नि सम्प्राप्ते स्नात्वा पुण्याहवाचनम्। कृत्वा चरेद्वृषोत्सर्गं कुर्याच्छ्राद्धं ततः परम्" इति॥ "एकादशेऽह्नि कर्तव्यमेकोद्दिष्टं सदा द्विजैः। आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि॥ एकोद्दिष्टन्तु यच्छ्राद्धं देवहीनं विधीयते। एकोद्दिष्टन्तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्तितम्"॥ गौतमः — "ब्राह्मणं भोजयेदाद्य

होमः कार्योऽथ वाऽनले। पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिह "॥ कालादर्शेऽपि—" आद्यश्राद्धं द्विजेऽग्नौ वा कुर्यात्पुनरपि द्विजे" इति ॥ निर्णयसिन्धौ — "पतिपुत्रवती नारी भर्तुरग्रे मृता यदि। वृषोत्सर्गं न कुर्वीत गां दद्याच्च पयस्विनीम्॥ आशौचान्तरे प्राप्तेऽपि वृषोत्सर्गमाद्यमासिकञ्च कुर्यादेव" इति ॥ दशाहमध्ये संस्कारान्तरस्याऽऽशौचान्तरस्य वा सम्पाते वैद्यनाथीये — "अनिर्दशाहे तत्कर्तुः पुनः प्रेतस्य कर्मणि। पूर्वेणैव समाप्तिः स्यादेकोद्दिष्टं यथोदितम् ॥ तत्तदेकादशाहे एकोद्दिष्टमित्यर्थः ; सपिण्डीकरणं तु द्वितीयमृतस्य द्वादशाहे प्रथममृतस्य त्रिपक्षे कार्यम्" इति ॥ दशमदिने रात्रौ अन्त्ययामे वाऽन्यमरणे 'रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिः' इति गौतमवचनाद्दशाहाशौचानन्तरं क्रमेण द्विदिनं त्रिदिनं चाधिकमाशौचमिति बो० धर्मसूत्रव्याख्यानादवगम्यते ॥ "जनकस्य मृतेर्मध्ये जननीमरणं यदि। पित्राशौचे समाप्तिः स्यान्मात्राशौचन्तु पक्षिणी ॥ मात्राशौचस्य मध्ये तु पिता च म्रियते यदि। पितुर्मरणमारभ्य पुत्राणां दशरात्रकम्" इति मातापितृविषये विशेष उक्तो वैद्यनाथीये। तत्रैव जनकादि सामान्याशौचमध्ये परस्परसम्पाते—" जनकस्य जनन्याश्च भार्याया भर्तुरेव च। पुत्रस्य दुहितुश्चैव जनने मरणेऽपि वा ॥ स्वकालेनैव शुद्धिः स्याच्छेषन्यायो न विद्यते" इत्युक्तम् ॥ ॥ अथैकादशाहे गृहस्य सर्वतो गोमयेनाऽनुलेपनं, सम्मार्जनं, संस्पृष्टवस्त्राणां क्षाळनं, सचेलस्नानं, पञ्चगव्यहोमप्राशने, उपवीतधारणं, पुण्याहवाचनञ्च कुर्यात् । ततः पूर्वसङ्कल्पितकृच्छ्राणां परिपूर्त्यर्थं हिरण्यदानं, तिलहवनं च कृत्वा प्रेततृप्त्यर्थं गोदानादियथासम्भवदानानि, वृषोत्सर्गं, नवश्राद्धमाद्यश्राद्धं षोडश श्राद्धं सोदकुम्भश्राद्धं च कुर्यात् ॥ अपि वा नवश्राद्धानन्तरं द्विरावृत्त्याऽऽद्यश्राद्धं कृत्वा द्वादशेऽहनि पञ्चदश श्राद्धं सोदकुम्भश्राद्धं च कुर्यात् । ततः सपिण्डीकरणं कार्यम् ॥

# ॥ वृषोत्सर्गविधिः ॥

( बो. गृ. शे. सू. ३·१६ ) कार्तिक्यां पौर्णमास्यां क्रियेताऽपि वाऽऽश्वयुज्यां वैशाख्यां वा गोष्ठे गवां मध्ये। अथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति—' पूषा गा अन्वेतु नः ' इति पुरोनुवाक्यामनूच्य ' शुक्रन्ते अन्यत् ' इति याज्यया जुहोति ॥ अथाऽऽज्याहुतीरुपजुहोति—' इह धृतिः स्वाहा, इह विधृतिः स्वाहा, इह रन्तिः स्वाहा, इह रमतिः स्वाहा, उपसृजन्मात्रे वत्सं धारयन्धरुणो धयन् रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा ' इति। 'आ गावो अग्मन् ' इत्येतेन सूक्तेन ' नमस्ते रुद्र मन्यवे ' इत्यान्तादनुवाकस्य ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथ रुद्रं जपित्वा गोमिथुनमध्वर्यवे ददाति ॥ लाजमन्त्रेण त्रिः प्रदक्षिणं परिक्रमयेदेकवर्षो द्विवर्षो वा यूथं छादयति। यूथस्य मुख्याश्चतस्रो वत्सतर्यः स्नाप्याच्छाद्य तिलोदकं गृह्णाति–' ऋचां प्राची ' इति ॥ अवधूनुयुर्जलबिन्दून्पीत्वा—' तृप्ता यान्तु पितरः ' इति ॥ अथैनं मध्ये गोष्वपिसृजति—' एतं युवानं परि वो ददामि ' इति ॥ अपियन्तमनुमन्त्रयते—' त्वां गावः ' इति ॥ मध्यस्थमनुमन्त्रयते—' मयोभूर्वातो अभिवातूस्राः ' इति ॥ सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्सम्पूज्याऽऽशिषो वाचयित्वा यथाशक्ति दक्षिणां ददाति ॥ तिर्यग्योनिगताञ्ज्ञातीञ्ज्ञात्यन्तरे वर्तमानान्दुष्कृतैरपरुद्धान्दशपूर्वान्दशाऽपरानात्मानञ्चैकविंशतिपङ्क्तिञ्च पुनाति न च पुनरावर्तते न च पुनरावर्तत इति ॥ अथाप्युदाहरन्ति–' एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत् ॥ लोहितो यस्तु वर्णेन श्वेतलाङ्गूललक्षणः। खुरे ककुदि च श्वेतस्स वै नीलवृषः स्मृतः ॥ ॥ बोधायनः—अथ वृषोत्सर्जनं। तच्च द्विविधम्। काम्यं नैमित्तिकमिति। नैमित्तिकमेकादशाह्निकम्। काम्यं कार्तिक्यां वैशाख्यां ग्रहणे सङ्क्रमेऽपि वा ॥ प्रचेतः— ' विहिते च वृषोत्सर्गे

त्वलाभे शक्त्यसम्भवे। प्रेतत्वस्य विमोकार्थं रुद्रानेकादशाऽर्चयेत्'॥ ॥ बोधायनः—'तासां पयसि पायसं श्रपयित्वा एकादश ब्राह्मणान्भोजयेत्'॥ ॥ शातातपः—'एकादशसु विप्रेषु रुद्रानुद्दिश्य भोजयेत्। प्रेतत्वस्य विमोकार्थं मधुक्षीरघृताशनैः'॥ स्मृतिरत्ने—'शूलं चक्रमथान्यद्वा लाञ्छनं कारयेत्ततः। यस्य देवस्य यो भक्तस्तस्य चिन्हं समालिखेत्'॥ स्मृत्यन्तरे—'वृषोत्सर्गे तदा शुक्रबालमौढ्यं न दोषकृत्'॥ ॥ वृषाऽभावे स्मृत्यन्तरे—'वृषोत्सर्जनवेलायां वृषाऽभावे कथञ्चन। वृषं दर्भमयं कृत्वा मन्त्रैः कर्म समाचरेत्'॥ गार्ग्यः—'न प्रेतार्थवृषोत्सर्गं वृद्धिश्राद्धं विधीयते। एकोद्दिष्टविधानेन स्वशक्त्या भोजयेद्द्विजान्'॥

वृषोत्सर्गप्रयोगः॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "अमुकगोत्रस्य० शर्मणः प्रेतस्य प्रेतत्वविमुक्त्या उत्तमलोकप्राप्त्यर्थं श्रीरुद्रप्रीत्यर्थं वृषोत्सर्गं करिष्ये" इति सङ्कल्प्य "पूषा प्रीयताम्" इति पुण्याहं वाचयित्वा, गोष्ठे गवां मध्ये वा स्थण्डिलोल्लेखनादि लौकिकाऽग्निं प्रतिष्ठाप्य "वृषोत्सर्गहोमः कर्म, आघारमापूर्विकं वा तन्त्रं, पञ्चदश चतस्रो वा सामिधेन्यः, अग्नीषोमावाज्यभागौ, चित्तिर्नामाऽग्निः, पूषा देवता, चरुर्हविः, उपहोमश्च 'इह धृतिः स्वाहा' इत्यादिमन्त्रैः सकृत्सकृदाज्येन, अग्निः स्विष्टकृत्, आज्यस्य मान्त्रवर्णिक्यो देवताः" इत्याद्यन्वाधायाऽऽप्रणीताभ्यः कृत्वा, स्थाल्यां तण्डुलं सिद्धमोदनं वा निर्वपति-'देवस्य त्वा० हस्ताभ्यां पूष्णे जुष्टं निर्वपामि' इति त्रिर्यजुषा सकृत्तूष्णीं निरुप्य 'देवस्य त्वा० पूष्णे वो जुष्टं प्रोक्षामि' इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य, आज्यनिर्वापाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति—"पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजꣳ सनोतु नो॑३ शुक्रन्ते॑० रातिरस्तु स्वाहा" इति, पूष्ण इदं०॥ स्विष्टकृतमवदायान्तः परिधौ निधायाऽऽज्याहुतीरुपजुहोति—"इह धृतिः स्वाहा। धृत्या इदं०॥ इह विधृतिः स्वाहा। विधृत्या इदं०॥ इह रन्तिः स्वाहा। रन्त्या इदं०॥ इह रमतिः स्वाहा।

रमत्या इदं० ॥ उपसृजन्मात्रे वत्सं धारयन्धरुणो धयन्। रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा। पुष्टिपतय इदं० ॥ आगावो अग्मन्० दुहाना: स्वाहा ॥ १ ॥ (अष्टसु, गोभ्य इदं०) इन्द्रो यज्वने० देवयुः स्वाहा ॥ २ ॥ न तानशन्ति० सह स्वाहा ॥ ३ ॥ न ता अर्वा० यज्वनः स्वाहा ॥ ४ ॥ गावो भगो० चिदिन्द्रं स्वाहा ॥ ५ ॥ यूयं गावो० सभासु स्वाहा ॥ ६ ॥ प्रजावतीः० वृञ्ज्यात्स्वाहा ॥ ७ ॥ उपेदमुप० तव वीर्ये स्वाहा ॥ ८ ॥ नमस्ते रुद्र० मुत ते नमः स्वाहा ॥ १ ॥ (पञ्चदशसु, रुद्रायेदं०) यात इषुः० मृडय स्वाहा ॥ २ ॥ या ते रुद्र शिवा० चाकशीहि स्वाहा ॥ ३ ॥ यामिषुं० जगत्स्वाहा ॥ ४ ॥ शिवेन वचसा० असत्स्वाहा ॥ ५ ॥ अध्यवो० धान्यः स्वाहा ॥ ६ ॥ असौ यस्ताम्रो० ईमहे स्वाहा ॥ ७ ॥ असौ योऽव० हार्यः। उतैनं० मृडयाति नः स्वाहा ॥ ८ ॥ नमो अस्तु० करन्नमस्स्वाहा ॥ ९ ॥ प्रमुञ्च० वप स्वाहा ॥ १० ॥ अवतत्य० भव स्वाहा ॥ ११ ॥ विज्यं धनुः० निषङ्गथिः स्वाहा ॥ १२ ॥ या ते हेति० भुज स्वाहा ॥ १३ ॥ नमस्ते अस्त्वा० धन्वने स्वाहा ॥ १४ ॥ परि ते० धेहि तं स्वाहा ॥ १५ ॥" इति ॥ स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वाऽग्रेणाऽग्निमर्कपर्णेषु हुतशेषं निदधाति — "यो रुद्रो अग्नौ० नमो अस्तु" इति। उत्तरपरिषेकादि होमशेषं समाप्य रुद्रजपं कृत्वाऽध्वर्यवे गोमिथुनं दद्यात् ॥ अथ वृषभं प्रदक्षिणमग्निं पर्याणयति — "इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती। दीर्घायुरस्तु मे पतिर्जीवातु शरदः शतम्" इति ॥ अथ वृषभं वत्सतरीश्चोदकेन 'आपो हि ष्ठादिभिः' स्नापयित्वा वस्त्रगन्धपुष्पादिभिरलङ्करोति — "शिवस्त्वष्टरिहागहि विभुः पोष उत त्मना। यज्ञे यज्ञेन उदव ॥ पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः। प्रजां त्वष्टा विष्यतु नाभिमस्मे अथा देवानामप्येतु

---

१. हुतशेषनिधानं गृह्यकारिकायामुक्तम् ॥

पार्थः " इति द्वाभ्याम् ॥ अथ वृषस्य दक्षिणोरौ शिवालङ्कं त्रिशूलं चाऽग्नितप्तेनाऽयसा विलिख्य तत्र रुद्रं षोडशोपचारैरभ्यर्च्य "भवं देवं तर्पयामि । शर्वं देवं० । ईशानं देवं० । पशुपतिं देवं० । रुद्रं देवं० । उग्रं देवं० । भीमं देवं० । महान्तं देवं तर्पयामि " इत्यष्टभिस्तर्पयित्वा प्रार्थयेत् — " सौरभेय सुपुष्टाङ्ग गोपते गतिसाधन । हरस्य वहतो भूत्वा विहरस्व यथासुखम् ॥ देवदेव महादेव सर्वदेवोत्तमोत्तम । प्रसीद सर्वभावेन त्वामहं शरणं गतः ॥ त्वद्रूपिणं वृषमिमं तवाऽग्रेऽभ्युत्सृजाम्यहम् । त्वल्लिङ्गचिह्नितं देव तन्मेऽनुज्ञातुमर्हसि ॥ मातः पार्वति शर्वाणि सर्वलोकैकसुन्दरि । प्रसादं कुरु मे देवि शान्ते शङ्करवल्लभे " इति ॥ अथ सꣳशास्त्येनं वृषं स्थापयित्वा " ऋचां प्राचीमहतीदिगुच्यते ॥ दक्षिणामाहुर्यजुषामपाराम् ॥ अथर्वणामङ्गिरसां प्रतीची ॥ साम्नामुदीची महती दिगुच्यते ॥ ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः ॥ सामवेदे नास्तमये महीयते ॥ वेदैरशून्यस्त्रिभिरेति सूर्यः ॥ ऋग्भ्यो जाताꣳ सर्वशो मूर्तिमाहुः । सर्वा गतिर्याजुषी हैव शश्वत् ॥ सर्वं तेजः सामरूप्यꣳ हशश्वत् । सर्वꣳहेदं ब्रह्मणा हैव सृष्टम् ॥ ऋग्भ्यो जातं वैश्यं वर्णमाहुः । यजुर्वेदं क्षत्रियस्याऽहुर्योनिम् ॥ सामवेदो ब्राह्मणानां प्रसूतिः । पूर्वे पूर्वेभ्यो वच एतदूचुः ॥ आदर्शमग्निं चिन्वानाः । पूर्वे विश्वसृजो मृताः ॥ शतं वर्षसहस्राणि । दीक्षिताः सत्रमासत ॥ तप आसीद्गृहपतिः । ब्रह्म ब्रह्माऽभवत्स्वयम् ॥ सत्यꣳह होतैषामासीत् । यद्विश्वसृज आसत ॥ अमृतमेभ्य उदगायत् । सहस्रं परिवत्सरान् ॥ भूतꣳ ह प्रस्तोतैषामासीत् । भविष्यत्प्रतिचाऽऽहरत् ॥ प्राणो अध्वर्युरभवत् । इदꣳ सर्वꣳ सिषासताम् ॥ अपानो विद्वानावृतः । प्रतिप्रातिष्ठदध्वरे ॥ आर्तवा उपगातारः । सदस्या ऋतवोऽभवन् ॥ अर्धमासाश्च मासाश्च । चमसाऽध्वर्यवोऽभवन् ॥ अशꣳसद्ब्रह्मणस्तेजः । अच्छावाकोऽभवद्यशः ॥ ऋतमेषां प्रशास्ताऽऽसीत् ।

यद्विश्व सृज आसत ॥ ऊर्ग्राजानमुदवहत् । ध्रुवगोपः सहोऽभवत् ॥ ओजोऽभ्यष्टौद्ग्राव्णः । यद्विश्व सृज आसत ॥ अपचितिः पोत्रीयामयजत् । नेष्ट्रीयामयजत्त्विषिः ॥ आग्नीध्राद्विदुषी सत्यम् । श्रद्धा हैवाऽयजत्स्वयम् ॥ इरापत्नी विश्वसृजाम् । आकूतिरपिनड्ढविः ॥ इध्मꣳह क्षुच्चैभ्य उग्रे । तृष्णाचावहतामुभे ॥ वागेषाꣳ सुब्रह्मण्यासीत् । छन्दोयोगान्विजानती ॥ कल्पतन्त्राणि तन्वानाहः । सꣳस्थाश्च सर्वशः ॥ अहोरात्रे पशुपाल्यौ । मुहूर्ताः प्रेष्या अभवन् ॥ मृत्युस्तदभवद्धाता । शमितोग्रो विशां पतिः ॥ विश्वसृजः प्रथमाः सत्रमासत । सहस्रसमं प्रसुतेनयन्तः ॥ ततोह जज्ञे भुवनस्य गोपाः । हिरण्मयः शकुनिर्ब्रह्मनाम ॥ येन सूर्यस्तपति तेजसेद्धः । पिता पुत्रेण पितृमान्योनियोनौ ॥ नावेदविन्मनुते तं बृहन्तम् । सर्वानुभुमात्मानꣳ सम्पराये ॥ एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् ॥ तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन ॥ ॐ " इति जपित्वा ॥ "अमुक प्रेत० गोत्र एतत्ते तिलोदकमुप०" इति तिलोदकं दत्वा जलबिंदून् वृषस्य पाययित्वा गात्राण्यवधूनुयुः । प्राचीनावीती 'तृप्तायान्तु पितरः' इत्युक्त्वा "धर्मस्त्वं वृषरूपेण ब्रह्मणा निर्मितः पुरा । तवोत्सर्गप्रदानेन तारयस्व भवार्णवात्" इति संप्रार्थ्य "अमुक गोत्रस्य० प्रेतस्य प्रेतत्वविमोचनद्वारा अक्षय्यपुण्य-लोकाऽवाप्त्यर्थं मयायं वृष उत्सृष्टः' 'भो वृषभराज तृणं खात्वा जलं पीत्वा देवस्वं ब्रह्मस्वं विहाय गोवृन्दमध्ये यथासुखं विहर' इत्युत्सृजेत् ॥ अथैनं मध्ये गोष्वपिसृजति —" एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण । मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम ॥ नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहं गृणामि । अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ॥ देवानामेष उपनाह आसीदपां गर्भ ओषधीषु न्यक्तः । सोमस्य द्रप्समवृणीत पूषा बृहन्नद्रिरभवत्तदेषाम् ॥

पिता वत्सानां पतिरघ्नियानामथो पिता महतां गर्गराणाम् । वत्सो जरायु प्रतिधुक्पीयूष आमिक्षा मस्तु घृतमस्य रेतः ” इति ॥ गच्छन्तमनुमन्त्रयते —“ त्वां गावो वृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः । वर्ष्मन्क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनि ” इति ॥ गोमध्यस्थमनुमन्त्रयते — “ मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड ॥ याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद । या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥ या देवेषु तनुवमैरयन्त यासाꣳ सोमो विश्वा रूपाणि वेद । ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्रगोष्ठे रिरीहि ॥ प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः । शिवाः सतीरुप नो गोष्ठमाकस्तासां वयं प्रजया सꣳ सदेम ” इति ॥ अथोत्सृष्टस्य वृषस्य लोमत्वचादिदाहजनितदोषपरिहारार्थं तिलवस्त्रहिरण्योदकुम्भदानानि करिष्ये, इति सङ्कल्प्य — “ तिलाः काश्यप० केशव ” इति तिलान् । “ शीतवातोष्ण० प्रयच्छ मे ” इति वस्त्रम् । “ हिरण्यगर्भ० प्रयच्छ मे ” इति हिरण्यम् । “ तृप्तिदं सर्वभूतानामतिशैत्यकरं सदा । प्राणरूपं जलं यस्मादतः शान्तिं प्रयच्छ मे ” इत्युदकुम्भञ्च सदक्षिणाकं दद्यात् ॥ सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्सम्पूज्याऽऽशिषो वाचयित्वा यथाशक्ति दक्षिणां ददाति ॥

## ॥ एकोद्दिष्टविधिः ( आद्यश्राद्धविधिः ) ॥

( बो. गृ. सू. ३. १२. ६–१४ ) अथैकोद्दिष्टेषु नाऽग्नौकरणं नाऽभिश्रावणं न पूर्वं निमन्त्रणं न दैवं न धूपं न दीपं न स्वधा न नमस्कारो नात्राऽपूपम् ॥ सर्वं सिद्धं समानीयाऽयुग्मान्ब्राह्मणान्त्सुप्रक्षाळितपाणिपादानप आचमय्य सदर्भोपक्लृप्तेष्वासनेषूपवेश्य सर्वस्मात्सकृत्सकृत्समवदायाऽभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात् — ‘ प्रेतायाऽमुष्मै यमाय च स्वाहा ’

इति। तद्धुतमहुतञ्च भवति ॥ अमुष्मै तृप्तिरस्त्वित्यपां प्रतिग्रहणं विसर्जनञ्च। अमुष्मा उपतिष्ठत्वित्यनुदेशनमाशयेष्वेव पिण्डदानं तृप्यस्वेति सदक्षाळनं तृप्तिरस्त्विति विसर्जनमस्तु तृप्तिरितीतरेषां प्रतिवचनम् ॥ प्रेतस्य द्वितीयाप्रभृति ब्राह्मणभोजनैरेकोत्तरवृद्धि-रादशाहात् ॥ अत्र नवं विच्छिद्येत ॥ एकादश्यां श्राद्धं तृतीये पक्षे द्वितीयं सन्ततमेकैकेनैकादश मासान्नयन्ति न द्वादश मासम-भ्यारोहन्ति ॥ संवत्सरे सपिण्डीकरणं साऽग्नौकरणं साऽभिश्रावणं सपूर्वं सदैवं सधूपं सदीपं सस्वधा सनमस्कारं साऽपूपम् ॥ अथाप्युदाहरन्ति —'एकोद्दिष्टे नवश्राद्धे नाग्नौकरणमिष्यते। न चाऽभिश्रावणं कुर्यान्न च पूर्वन्तु कारयेत् ॥ प्रणामञ्च न कुर्वीत स्वधाकारं तथैव च। ऊर्ध्वं संवत्सरात्प्रेतः पितृत्वमुपपद्यते' ॥

(बो. पि. सू. २. ९) अथैकोद्दिष्टेष्वादित एव प्राचीनावीतं कृत्वा दक्षिणाप्रत्यक्प्रवणं स्थण्डिलं कृत्वा सकृदुल्लिख्याऽ-द्भिरभ्युक्ष्याऽग्निं प्रतिष्ठाप्य परिस्तृणाति — पुरस्ताद्दक्षिणाग्रानुत्तरतः प्रागग्रान्पश्चाद्दक्षिणाग्रान्दक्षिणतः प्रागग्रानुत्तरानुत्तरान् दक्षिणानधरान् ॥ दक्षिणेनाऽग्निं दक्षिणाग्रान्दर्भान् संस्तीर्य तेष्वेककेशा न्यञ्चि पात्राणि संसादयति—अथाज्यस्थालीं स्रुवमौदुम्बरं दर्वीं तिलोदकपात्रं प्रोक्षणीपात्रमुद्धरणीयं पात्रमिति ॥ तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य सिद्धमोदनं सविशेषमानीय दक्षिणतो निधाय नाऽत्राऽपूपमथाज्यं निर्वपति ॥ दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रित्याऽभिद्यो-तनेनाऽभिद्योत्य दर्भाग्रं प्रत्यस्य पुनरभिद्योत्य सिद्धमोदनं सहापसलैः पर्यग्निकृत्वा स्रुवञ्च दर्वीञ्च सम्मृज्य सविशेषमोदनं प्रतिष्ठितमभिघारयति ॥ पवित्रं कृत्वा तिलोदकपात्रे निधायाऽप आनयन्नाह —'आम आगच्छतु प्रेतो देवयानान् समुद्रान् सलिलान् सवर्णानस्मिन् यज्ञे सर्वकामं लभतेऽक्षीयमाणामुपदुह्यतामिमां प्रेताय वो गृह्णामि' इति पुंसाम्। 'प्रेता देवयानान्० प्रेतायै वो गृह्णामि' इति स्त्रीणाम् ॥ अपोद्धृत्य पवित्रं तिलानावपति —'तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नवद्भिः

प्रत्नथेहि प्रेतमिमान् लोकान् प्रीणयाहि नः ' इति पुंसाम् । ' प्रेताम् ' इति स्त्रीणाम् ॥ अथ तिरः पवित्रं मध्वानयति—' मधु वाता ऋतायते ' इति तिसृभिरनुच्छन्दसम् ॥ अथैनत्सर्वाभिरङ्गुलीभिस्समुदायुत्याऽभिमृशति —' सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाहि ' इति ॥ तस्मिंश्चित्किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसङ्गृह्योमां दिशं निरस्यति —' अवेष्टा दन्दशूका निरस्तं नमुचेश्शिरः ' इति ॥ अथाऽप उपस्पृश्य पुनरेवाऽभिमृशति —' शन्नो देवीरभिष्टये । आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ' इति ॥ अथैनद्गन्धपुष्पैरभ्यर्च्य दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्य भोजनस्थानेष्वासनेषु च तिलान् सिकताश्च सम्प्रकिरति —' अपहता असुरा रक्षा ꣳसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रास्य गतं मनः ' इति पुंसाम् । ' यत्रास्या गतं मनः ' इति स्त्रीणाम् ॥ अथैनदद्भिरवोक्षति —' उदीर्तामवर उत्पर उन्मध्यमः प्रेतस्सोम्यः । असुं य इयायावृक ऋतज्ञस्स नोऽवतु प्रेतो हवेषु ' इति पुंसाम् ॥ ' उदीर्तामवरोत्परोन्मध्यमा प्रेता सोम्या । असुं येयायावृकर्तज्ञा सा नोऽवतु प्रेता हवेषु ' इति स्त्रीणाम् ॥ अथ प्रेतमावाहयति —' आयाहि प्रेत सोम्य गम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददद्रयिञ्च दीर्घायुत्वञ्च शतशारदञ्च ' इति पुंसाम् । ' आयाहि प्रेते सोम्ये गम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददती रयिञ्च दीर्घायुत्वञ्च शतशारदञ्च ' इति स्त्रीणाम् ॥ अथ ब्राह्मणानाहूय सुप्रक्षाळितपाणिपादानप आचमय्य सदर्भोपक्लृतेष्वासनेषूपवेश्य तेषां सपवित्रेषु पाणिषु तिलोदकं ददाति —' अमुष्मै तृप्तिरस्तु ' इति ' अस्तु तृप्तिः ' इतीतरेषां प्रतिवचनम् ॥ अथैनान् वस्त्रगन्धपुष्पमाल्यैस्सम्पूज्य शुद्धोदकं दत्वा पूर्ववत्तिलोदकम् ॥ अथैनान्पृच्छति —' करिष्यामि ' इति । ' कुरुष्व ' इतीतरे प्रत्याहुः ॥ अथाऽभ्यनुज्ञातो दर्व्यामुपस्तीर्य सर्वस्मात्सकृत्सकृत्समवदायाऽभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात् —' प्रेतायाऽमुष्मै यमाय च स्वाहा ' इति । तद्धुतमहुतञ्च भवति ॥ अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य दक्षिणाग्रेषु

दर्भेषु सादयित्वा दर्भैः प्रतिच्छाद्याऽभिमृशति —' पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जुहोम्य-क्षितमसि मा प्रेतस्य क्षेष्ठा अमुत्राऽमुष्मिन्लोके ' इति ॥ अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य ब्राह्मणस्याऽङ्गुष्ठेनाऽनखेनाऽनु दिशति—' अमुष्मा उपतिष्ठतु ' इति। भुञ्जानान् समीक्षते —' प्राणे निविष्टोऽमृतं जुहोमि ' इति पञ्च ' ब्रह्मणि म आत्माऽमृतत्वाय ' इत्यात्मानम्। न चाऽत ऊर्ध्वं निरीक्षते। तृप्तानप आचमय्य ' स्वदितमुच्यताम् ' इति ' अस्तु स्वदितम् ' इतीतरेषां प्रतिवचनम् ॥ पूर्ववत्तिलोदकं दत्वाऽऽशयेष्वन्नशेषैः पिण्डं ददाति —' अमुष्मा उपतिष्ठतु ' इति, सदूक्षाळनेनाऽपसव्यं ' तृप्यस्व ' इति परिषिच्य दक्षिणां दत्वाऽक्षय्यं वाचयित्वा यज्ञोपवीत्यभिवादनं कृत्वा उत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्याऽ-न्नशेषान्निवेदयते। यथा ब्रूयुस्तथा कुर्यात्। तृतीये पक्षे द्वितीयम्। सन्ततमेकैकेनैकादशमासान्नयन्ति। न द्वादश मासम-भ्यारोहन्ति ॥

( बो. पि. सू. २. १० ) अथैकोद्दिष्टे प्राप्ते विप्राभावे द्रव्याभावे वा कथमत्र कुर्यादिति ? । द्वात्रिंशत्कवळेन सघृतपायसेनाऽ-ग्नावेव कुर्यादिति विज्ञायते ॥ अथ कर्ता स्नात्वा शुचौ देशे ब्राह्मणानाहूयाऽनुज्ञाप्य पूर्ववत्प्रेतावाहनान्तं कृत्वाऽग्निंप्रेताकारं ध्यात्वाऽऽ-सनं पाद्यमाचमनीयं तिलोदकं चाऽग्निसमीपे दक्षिणतो दत्वाऽथ तिलगन्धपुष्पमाल्यैरग्निमभ्यर्च्य तथा तिलोदकम्। अथ ब्राह्मणैरनु-ज्ञातोऽग्निं परिषिच्य व्याहृतीभिर्हुत्वा प्रेताहुतिं जुहुयात्। तस्मिन्हविषि मुष्टिप्रमाणं घृततिलमिश्रमुपस्तीर्णाऽभिघारितं द्वात्रिंश-त्कवळं दर्व्या जुहोति—' यमाय सोमं, यमाय घृतवत् ' इति द्वाभ्याम् ॥ अथ दर्वीं प्रहृत्याऽभिहुत्य तिलोदकं चरुशेषेण पिण्डञ्च दत्वा तिलोदकपात्रमानीय ' तृप्तिरस्तु ' इति परिषिच्यापसव्यमथ ब्रह्मसमूहमग्निञ्च प्रदक्षिणीकृत्य यथाशक्ति दक्षिणां दत्वा ' प्रेततृप्तिरस्तु ' इति वाचयित्वाऽऽशिषो वाचयित्वाऽथ व्याहृतीभिर्हुत्वा दर्भान्प्रहृत्याऽग्निं परिषिच्य पिण्डमप्सु प्रक्षिप्य स्नात्वा

पुण्याहं वाचयित्वा प्रोक्षति ॥ अथाप्युदाहरन्ति—आद्यश्राद्धे तु सम्प्राप्ते विप्राभावे कथं भवेत्। द्रव्याभावे तु कुर्वीत चरुणा पायसेन तु ॥ अग्नौ हुत्वा यमायेति द्वाभ्यां द्वात्रिंशदाहुतीः। प्रेतस्तृप्तिमवाप्नोति पुण्यलोके महीयते॥ इति॥ अथ नवश्राद्धं विच्छिद्येतै- तस्मिन्नह्नि कुर्यात्, अथाप्युदाहरन्ति—चतुर्थे पञ्चमे चैव नवमैकादशेहनि । यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥ एकोद्दिष्टे नवश्राद्धे यदि विघ्नः प्रवर्तते । तिथिवारादिभिः कुर्यात्प्राप्तमेकादशेऽहनि ॥ इति ॥ बोधायनः —एकोद्दिष्टान्त एवस्यात्संस्कर्तुः शुद्धता त्वघात्। पिण्डोदकप्रदानैश्च पुण्याहोक्त्या विशुध्यति ॥

एकोद्दिष्ट आद्यश्राद्ध ) प्रयोगः॥ तच्चेदानीं भोक्तृविप्राभावात्प्रायः सर्वत्राऽग्नावेव क्रियते। प्रातः कृतवृषोत्सर्गो मध्याह्ने नदीतीरादौ शुचौदेशे दर्भेष्वासीन एकदर्भपवित्रपाणिराचम्य प्राणानायम्य ( प्राचीनावीती ) देशकालौ सङ्कीर्त्य "अमुकगोत्रस्य० प्रेतस्य प्रेतत्वनिवृत्त्योत्तमलोकप्राप्त्यर्थमद्यैकादशेऽहनि अग्नावाद्यश्राद्धं करिष्ये" इति सङ्कल्प्य कलशार्चनं ब्रह्मदण्डञ्च कृत्वा दक्षिणाप्रत्यक्प्रवणं स्थण्डिलं कृत्वा सकृदुल्लिख्याऽद्भिरवोक्ष्य लौकिकाऽग्निं प्रतिष्ठाप्य एकोद्दिष्टहोमः कर्म, पैतृकं तन्त्रम्, कव्यादो नामाग्निः, प्रेतो यमश्च देवता, सविशेषमन्नं हविः, सद्यो यक्ष्ये, इत्यादि सङ्कल्प्याऽन्वाधायाऽग्निं परिसमूह्य पर्युक्ष्य पुरस्ताद्दक्षिणाग्रै- रुत्तरतः प्रागग्रैः पश्चाद्दक्षिणाग्रैर्दक्षिणतः प्रागग्रैरपसव्यं परिस्तीर्योत्तरान्दर्भान्पूर्वपश्चिमपरिस्तरणयोरुपरि कुर्याद्दक्षिणांस्तयोरधः। दक्षिणेनाग्निं दक्षिणाग्रेषु दर्भेषु आज्यस्थालीमौदुम्बरं स्रुवमौदुम्बरीं दर्वीं तिलोदकपात्रं प्रोक्षणीपात्रमुद्धरणीयं पात्रं सविशेषान्नपात्रं समेक्षणञ्चैकैकशः सादयित्वा, एकदर्भपवित्रेण प्रोक्षणीः संस्कृत्य पात्राणि सकृत्प्रोक्ष्य सिद्धमन्नं सविशेषमानीय सकृन्निरुप्य दक्षिणतो निधाय सकृत्प्रोक्ष्य दक्षिणत आज्यं निरुप्य तत्रैव भस्ममिश्रानङ्गारान्निरुह्य तेष्वधिश्रित्याऽभिद्योतनेनाऽभिद्योत्य दर्भाग्रं प्रत्यस्य पुनरभिद्योत्याऽप्रदक्षिणमुभयं पर्यग्निकृत्वा आज्यं दक्षिणत उद्वास्य उत्पूय स्रुवं दर्वीं मेक्षणञ्च सम्मृज्य सविशेषमोदनम-

भिघार्य दक्षिणत उद्वास्य प्रतिष्ठिताऽभिघारणान्तं कृत्वा तिलोदकपात्रे दक्षिणाग्रं पवित्रं निधायाऽप आनयति—"आम आगच्छतु प्रेतो देवयानान् समुद्रान् सलिलान् सवर्णान्। अस्मिन्यज्ञे सर्वकामं लभतेऽक्षीयमाणामुपदुह्यताम्, इमा अमुकप्रेताय वो गृह्णामि" इति॥ (स्त्रीणाञ्चेत्—"आम आगच्छतु प्रेता देवयानान्० दुह्यताम्, इमा अमुकप्रेतायै वो गृह्णामि" इति)॥ पवित्रमपोद्धृत्य तिलानावपति— "तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नवद्भिः प्रत्नयेहि प्रेतमिमान् लोकान् प्रीणयाहि नः" इति॥ (प्रेतामिमान्, इति स्त्रीणाम्) तिरः पवित्रं मध्वानयति—"मधुवाता० माध्वीर्गावो भवन्तु नः" इति तिसृभिः प्रत्यृचम्। अथैनत्सर्वाभिरङ्गुलीभिः समुदायुत्याऽभिमृशति—"सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाहि" इति॥ तस्मिन्यत्किञ्चिदापतितं स्यात्तदङ्गुष्ठेन महानाम्न्या चोपसङ्गृह्येमां दिशं निरस्यति — "अवेष्टा दन्दशूका निरस्तं नमुचेः शिरः" इति॥ अप उपस्पृश्य पुनरेवाऽभिमृशति—"शन्नो देवीरभिष्टये० स्रवन्तु नः" इति॥ अथैनद्गन्धपुष्पैरभ्यर्च्य दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्य भोजनस्थानेष्वासनेषु ससिकततिलान्सम्प्रकिरति—"अपहता असुरा रक्षाँसि पिशाचा ये क्षयन्ति पृथिवीमनु। अन्यत्रेतो गच्छन्तु यत्राऽस्य गतं मनः" इति॥ (यत्राऽस्या गतं मनः, इति स्त्रीणाम्) अथाऽद्भिरवोक्षति —"उदीतामवर उत्पर उन्मध्यमः प्रेतः सोम्यः। असुं य इयायाऽवृक ऋतज्ञः सनोऽवतु प्रेतो हवेषु" इति॥ (स्त्रीणान्तु — "उदीतामवरोत्परोन्मध्यमा प्रेता सोम्या। असुं येयायाऽवृकर्तज्ञा सा नोऽवतु प्रेता हवेषु" इति) अथाऽग्नौ प्रेतमावाहयति—"आयाहि प्रेत सोम्य गम्भीरैः पथिभिः पूर्व्यैः। प्रजामस्मभ्यं ददद्रयिञ्च दीर्घायुत्वञ्च शतशारदञ्च, अमुकगोत्रममुकशर्माणं प्रेतमग्नावावाहयामि" इति। (स्त्रीणान्तु "आयाहि प्रेते सोम्ये गम्भीरैः० प्रजामस्मभ्यं ददती रयिञ्च० शारदञ्च, अमुकां प्रेतामावाहयामि" इति) अग्निं प्रेताकारं ध्यात्वा "अमुकगोत्र० प्रेत स्वागतम्। इदन्ते आसनम्। अयन्ते क्षणः। एवमेव पाद्यम्। आचमनीयम्। तिलोदकपात्रादुद्धरणीयेनाऽऽदाय 'प्रेताय अमुष्मै०

तृप्तिरस्तु '( स्त्रीणान्तु–' प्रेतायै अमुष्यै तृप्तिरस्तु ' ) इत्यर्घ्यं चाऽग्निसमीपे दक्षिणतो दत्वा ' अमुक० प्रेत ( प्रेते ) अयन्ते गन्धः । इमे ते तिलाक्षताः । इदन्ते पुष्पम् । इत्यग्नौ गन्धादिभिरभ्यर्च्य, पुनस्तथैव तिलोदकपात्रादादायाऽर्घ्यं ' इदन्ते अर्घ्यं ' इति तिलोदकं दत्वा, ' अग्नौ करिष्यामि ' इति पृष्ट्वा ' कुरुष्व ' इति ब्राह्मणैरनुज्ञातोऽग्निमपसव्यं तूष्णीं परिषिच्य, समिधमाधाय व्याहृतीभिराज्यं हुत्वा स्रुवेण दर्व्यामुपस्तीर्य सर्वस्मात् ( सव्यञ्जनादन्नात् ) सकृत्सकृदवदायाऽभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु पुरस्तात्स्रुवाऽऽहुतिं हुत्वा जुहुयात्—' प्रेताय अमुकगोत्रायाऽमुकशर्मणे यमाय च स्वाहा ' इति (स्त्रीणान्तु— ' प्रेतायै अमुकगोत्रायै० दायै यमाय च स्वाहा ' इति ) यथालिङ्गं त्यागः ॥ उपरिष्टात्स्रुवाहुतिं हुत्वाऽथैतेनाऽवशिष्टेन हविषा मुष्टिप्रमाणं घृततिलमिश्रमुपस्तीर्णाऽभिघारितं द्वात्रिंशत्कवलं दर्व्या जुहोति—' यमाय सोमं, यमाय घृतवत, इति द्वाभ्यां ( षोडशाऽऽवृत्ताभ्याम् ) " यमाय सोमꣳ सुनुत यमाय जुहुता हविः । यमꣳ ह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः स्वाहा ॥ यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत । स नो देवेष्वायमद्दीर्घमायुः प्रजीवसे स्वाहा " इति ॥ यमायेदं० ॥ प्रत्येकं पुरस्तादुपरिष्टाच्च स्रुवाहुतिं जुहुयात् ॥ अथ दर्वीं प्रहृत्याऽभिहुत्याऽग्निसमीपे दक्षिणाग्रेषु दर्भेषु ' मार्जयताममुकप्रेतः ' इति तिलोदकं दत्वा " अस्मिन्नाद्यश्राद्धे अमुकप्रेतायाऽयं पिण्ड उपतिष्ठतु ' इति चरुशेषेण पिण्डं दत्वा ' मार्जयताममुकप्रेतः ( " अमुकप्रेतायै अयं पिण्डः मार्जयताममुकप्रेता " इति स्त्रीणाम् ) इति ॥ तिलोदकमञ्जनाऽभ्यञ्जनादिकं दद्यात् ॥ अथाऽर्घ्यपात्रोदकं पात्रसङ्क्षालनेन सम्मिश्र्य ' तृप्यस्व ' इति सकृदपसव्यं पिण्डं परिषिच्याऽग्नौ व्याहृतीर्हुत्वा होमशेषं समाप्य ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दत्वा, तान् प्रदक्षिणीकृत्य ' प्रेततृप्तिरस्तु, श्राद्धमक्षय्यमस्तु ' इत्याशिषो वाचयित्वा पिण्डादिकमन्नशेषञ्चाऽप्सु निक्षिप्य स्नात्वा गृहं गत्वा " प्रजापतिः प्रीयताम् " इति पुण्याहं वाचयित्वा तज्जलं प्रोक्षेत् ॥

# ॥ अथ दानानि ॥

" अमुकगोत्रस्य० शर्मणः ( पित्रादेः ) अक्षय्यतृप्तिद्वारा पुण्यलोकप्राप्त्यर्थं गोदानादि यथासम्भवदानानि करिष्ये " इति संकल्प्य। एकादशाहे द्वादशाहे वा यथानुकूलं गोदानादि कुर्यात् ॥

अथ दशदानानि—" गोभूतिलहिरण्याऽऽज्यवासोधान्यगुडानि च। रौप्यं लवणमित्येवं दश दद्यादनुक्रमम् ॥ गोदानम्–सवत्सां गां सम्पूज्य विप्रञ्च यथाविभवमभ्यर्च्य—" यज्ञसाधनभूता या विश्वस्याऽघौघनाशिनी। विश्वरूपधरो देवः प्रीयतामनया गवा ॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश। तस्मादस्याः प्रदानेन हरे शान्तिं प्रयच्छ मे " इति गोवत्सयोः पुच्छे गृहीत्वा 'इमां सवत्सां सदक्षिणां गां तुभ्यमहं सम्प्रददे' इति विप्रहस्ते जलधाराविसर्गपूर्वकं दद्यात् ॥ १ ॥ एवं सर्वत्र ज्ञेयम् ॥ भूदानम् — " सर्वेषामाश्रया भूमिर्वराहेण समुद्धृता। अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे " ॥ २ ॥ तिलदानम्—"तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः। तिलदानादसहं मे पापं नाशय केशव" इमांस्तिलान्सम्प्रददे ॥ ३ ॥ हिरण्यदानम्–" हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्ति० " ॥ ४ ॥ आज्यदानम् — " कामधेनुसमुद्भूतं सर्वक्रतुषु संस्थितम्। देवानामाज्यमाहार अतः शान्ति० " ॥ ५ ॥ वस्त्रदानम् — " शीतवातोष्णसन्त्राणं लज्जाया रक्षणं परम्। देहालङ्करणं वस्त्रमतः शांतिं० " ॥ ६ ॥ धान्यदानम् — " धन्यं करोति दातारं इहलोके परत्र च। प्राणिनां जीवनं धान्यमतः शांतिं० ॥ ७ ॥ गुडदानम् — " गुडमिक्षुरसोध्दूतं सर्वप्राणिमनोहरम्। दानेनाऽनेन चैतस्य गृहे लक्ष्मी स्थिरा भवेत् " ॥ ८ ॥ रौप्यदानम्–

" रुद्रनेत्रसमुद्भूतं विष्णुशङ्करवल्लभम् । पितृप्रीतिकरं रौप्यमतः० " ॥ ९ ॥ लवणदानम् --" रसानामग्रजं श्रेष्ठं लवणं बलवर्धनम् । तस्मादस्य प्रदानेन अतः० " ॥ १० ॥ इति दशदानानि ॥

अथ षोडशदानानि —" रुद्राक्षं सोदकुम्भञ्च वासो लिङ्गं तथा तिलम् । पादुकां व्यजनं छत्रं श्रीखण्डं भस्मचन्दनम् ॥ सौवर्णं रौप्यदानञ्च दीपदानमतः परम् । फलं ताम्बूलदानञ्च दद्यात्प्रेतत्वमुक्तये " इति ॥ रुद्राक्ष०–रुद्रनेत्रसमुद्भूतानरुद्राक्षाञ्छिववल्लभान् । रुद्रप्रियान्प्रदास्यामि प्रीतो भवतु शङ्करः ॥ १ ॥ उदकुम्भ०–ब्रह्मणा प्रथमं सृष्टा अघमर्षणहेतवः । आपो युष्मत्प्रदानेन तृप्यन्तु मम देवताः ॥ अथवा—वारिणा पूरितं पात्रं तापत्रयनिवारणम् । तस्मादस्य प्रदानेन अतः शां० ॥ २ ॥ वासोदानम्—शीतवातोष्णसन्त्राणं० ॥ ३ ॥ लिङ्गदा० -- लिङ्गमूर्ते महादेव भक्तानामघनाशन । तव मूर्तिप्रदानेन प्रीतो भव सदाशिव ॥ ४ ॥ तिलदा०--तिलाः पापहराः० ॥ ५ ॥ पादुकादा० –कण्टकोच्छिष्टपाषाणवृश्चिकादिनिवारणे । अत्युष्णपांसुशमने पादुके प्रददाम्यहम् ॥ ६ ॥ व्यजनदा० –व्यजनं वायुदैवत्यं घर्मकाले सुखप्रदम् । तस्मादस्य प्रदानेन अतः० ॥ ७ ॥ छत्रदा० — छत्रं वर्षातपत्राणं घर्मकाले सुखावहम् । तस्मादस्य० ॥ ८ ॥ श्रीखण्डदा० — लक्ष्मीः श्रीखण्डदैवत्यं सर्वस्वेदनिवारणम् । तस्मादस्य० ॥ ९ ॥ भस्मदानम् – भस्मप्रिय महादेव महापातकनाशन । तद्भस्मनः प्रदानेन मम पापं विनाशय ॥ १० ॥ चन्दनदानम्—चन्दनं स्कन्ददैवत्यं प्राणिनामुपकारकम् । तस्मादस्य० ॥ ११ ॥ सुवर्णदानम्— हिरण्यगर्भ० प्रयच्छ मे ॥ १२ ॥ रौप्यदानम्— रुद्रनेत्रसमुद्भूतं० प्रयच्छ मे ॥ १३ ॥ दीपदानम्-- परमात्मतनो दीप परमार्थ प्रकाशक । आत्मानात्मविवेकं मे जनय त्वं जनार्दन ॥ १४ ॥ फलदानम् — फलं मनोरथफलं पुत्रपौत्रप्रवर्धनम् । तस्मादस्य० ॥ १५ ॥ ताम्बूलदानम्—पूगो ब्रह्मा हरिः पर्णं चूर्णं साक्षान्महेश्वरः । एतेषां सम्प्रदानेन सन्तु मे भाग्यसम्पदः ॥ १६ ॥

अथ पददानानि —" आसनोपानहौ छत्रं मुद्रिका च कमण्डलुः । भाजनं भोजनाधारं पदं सप्तविधं स्मृतम् " इति ॥ आसनदानम् — आसनं भूमिदेवत्यं जपकाले सुखावहम् । तस्मादस्य० मे ॥ १ ॥ उपानद्दानम् — उपानहौ प्रदास्यामि कण्टकादिनिवारणे । सर्वस्थानेषु सुखदे अतः शान्तिं० मे ॥ २ ॥ छत्रदा० — छत्रं वर्षातप त्राणं घर्म०मे ॥ ३ ॥ मुद्रिकादा०— मुद्रिकामग्निदैवत्यां सदाऽङ्गुलिविभूषणाम् । ऊर्मिकां सम्प्रदास्यामि स मे विष्णुः प्रसीदतु ॥ ४ ॥ कमण्डलुदा० — कमण्डलुं जलधरमृषिप्रीतिकरं सदा । तस्मादस्य० मे ॥ ५ ॥ भाजन० — भाजनं धान्यपूर्णञ्च पाकयोग्यमिदं शुभम् । पितृणां भुक्तिदं श्रेष्ठमतः० मे ॥ ६ ॥ भोजनपात्र० — इदञ्च भोजनाधारपात्रं पितृसुखावहम् । तस्मादस्य० मे ॥ ७ ॥

शालिग्रामदा० — शालिग्रामं प्रदास्यामि विष्णुसारूप्यदं शुभम् । महापापहरं तेन प्रीयतां मे जनार्दनः ॥ घण्टादानम् — सर्ववाद्यमयी घण्टा सर्वदेवप्रियङ्करी । तस्मादस्याः प्रदानेन प्रसीदन्तु दिवौकसः ॥ शङ्खदा० — शङ्खत्वं पुण्यपुण्यानां मङ्गलानाञ्च मङ्गलम् । विष्णुना विधृतो नित्यमतः० मे ॥

अथ तिलाद्यष्टदानम् —" तिला लोहं हिरण्यञ्च कार्पासं लवणं तथा । सप्तधान्यं क्षितिर्धेनुश्चैकैकं पावनं स्मृतम् " इति ॥ ( तत्र गोभूतिलहिण्यलवणदानान्युक्तानि ) लोहदान० — यमस्य यमदूतामायुधानां यमस्य च । तुष्टये प्रददाम्येतल्लोहं तुष्टा भवन्तु मे ॥ कार्पास० — कार्पासं सर्ववस्त्राणामाधारं सर्ववर्णकम् । अपमृत्युहरं यस्मादतः० मे ॥ सप्तधान्य० — व्रीहीन्यवांश्च गोधूमान्मुद्गान्माषान प्रियङ्गुकान् । चणकांश्च प्रदास्यामि ततः शान्तिं० मे ॥

क्षीरदा० — अलक्ष्मीहरणं नित्यं सुखसौभाग्यवर्धनम् । क्षीरं मङ्गलमायुष्यमतः० मे ॥ श्रीगन्धदा० — मलयाचलसम्भूतं सदा मोदकरं नृणाम् । श्रीगन्धं सौरभोपेतमतः० मे ॥ नळिकेर०-फलप्रदो यो भगवान्सुकृतानां जनार्दनः । नाळिकेरप्रदानेन

स मे विष्णुः प्रसीदतु ॥ कूष्माण्डदा०- कूष्माण्डं बहुबीजाढ्यं ब्रह्मविष्णुशिवात्मकम् । तस्मादस्य० मे ॥ रम्भाफलदा०-- रम्भाफलं रुचिकरं विष्णुप्रीतिकरं नृणाम् । तुष्टिदं पुष्टिदं नित्यमतः० मे ॥ कांस्यपात्र०- यानि पापान्यनेकानि देहस्थानि गुरूणि च। कांस्यपात्रप्रदानेन तानि नश्यन्तु केशव ॥ वैतरणी०- सद्यो वैतरणीनद्यास्तारिणी शुभदा तरीः । तस्मादस्याः प्रदानेन स मे विष्णुः प्रसीदतु ॥यममार्गे महाघोरे प्राप्तां वैतरणीं नदीम् । तर्तुकामो ददाम्येतां तुभ्यं वैतरणीं नमः ॥ शाकदा०- सर्वदेवप्रियकरं शाकं तृप्तिकरं नृणाम् । ददामि सर्वभद्राणि मम सन्तु मनोरथाः ॥ कटुत्रय०-कटुत्रयसमायुक्तं रोगघ्नं पापनाशनम् । तस्मादस्य० मे ॥ कम्बलदा०--ऊर्णाच्छादनसुश्लाघ्यं शीतवातभयापहम् । तस्मादस्य० मे ॥

॥ वैतरणीगोदानम् ॥ कार्पासोपरि सप्तधान्यानि निधाय, पाटलां कृष्णां वा हेमशृङ्गीं रौप्यखुरां कृष्णवस्त्रयुगच्छन्नां कण्ठे घण्टासमन्वितां कांस्यपात्रोपदोहिनीं गां सन्निधाप्य, घृतपूरितकांस्यपात्रे लोहदण्डसमन्वितं हैमं यमं विन्यस्य, एकस्मिन्गर्ते प्रभूतं जलं प्रपूर्य तत्र पट्टसूत्रवेष्टितां इक्षुमयीं नावं निधाय नौकोपरि सवत्सां धेनुं संस्थाप्य, तिथ्यादि सङ्कीर्त्य ' अमुक गोत्रस्य० प्रेतस्य ( पितुः ) यममार्गस्थितवैतरणीतरणार्थं गोदानं करिष्ये ' इति सङ्कल्प्य, जलशुद्धिं कृत्वा यमं षोडशोपचारैस्सम्पूज्य प्रार्थयेत्—" भव सागरमग्नानां शोकतापोर्मिदुःखिनाम् । त्राता त्वं हि जगन्नाथः शरणागतवत्सलः " इति ॥ ततो द्विजं वृत्वा यथा-विभवं सम्पूज्य, ' जातवेदसे सुनवाम ' इति मन्त्रेण नौकापूजनं गोपूजनं च कृत्वा ' मम पितुः०शर्मणः वैतरणीनदीतरणार्थं इमां गां सवत्सां यमप्रतिमायुतां रुद्रदैवत्यां अमुकगोत्रय०शर्मणे सम्प्रददे ' इति तिलोदकधारायुतं गोपुच्छं विप्रहस्ते दत्वा सर्वं प्रदक्षिणीकृत्य प्रार्थयेत्—" विष्णुरूप द्विजश्रेष्ठ मामुद्धर महीसुर । सदक्षिणा मया दत्ता तुभ्यं वैतरणी नमः ॥ यममार्गे महाघोरे तां नदीं शतयोजनाम् । तर्तुकामो ददाम्येतां तुभ्यं वैत० नमः ॥ धेनुके तं प्रतीक्षस्व यमद्वारमहापथे । उत्तारणार्थं देवेशि वैतरण्यै नमो

नमः ॥ या लक्ष्मीः सर्वभूतानां या च देवे प्रतिष्ठिता । धेनुरूपेण सा देवी प्रेत ( पितृ ) पापं व्यपोहतु " इति ॥ ततः प्रतिग्रहीतुः "देवस्य त्वा० रुद्राय गाम् । तयाऽमृतत्वमश्याम्० प्रति गृह्णातु " इति प्रतिग्रहमन्त्रः ॥

प्रेतघटदानम् ॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य " मम पितुः० गोत्रस्य० शर्मणः प्रेतत्वदुर्गतिसर्वाऽशुभनिवृत्यर्थं प्रेतघटदानं करिष्ये " इति सङ्कल्प्य सुवर्णाद्यन्यतमनिर्मितं घटं क्षीराज्याभ्यां प्रपूर्य, मध्ये-ब्रह्मविष्णुमहेश्वरान्, अष्टदिक्षु -लोकपालांश्चावाह्य सम्पूज्य गोत्रोच्चारणपूर्वकं ब्राह्मणाय सदक्षिणाकं इमं प्रेतघटं दद्यात् । " देवस्य त्वा० पूष्णो हस्ताभ्यां प्रतिगृह्णामि राजा त्वा०दक्षिणे समुद्रायाऽऽपः । ताभिरमृतत्व०प्रतिगृह्णातु " अनेन प्रतिगृह्णीयात् ॥

शय्यादानम् ॥ अष्टदलपद्मे तिलप्रस्थं निक्षिप्य तद्बहिः शय्यापरिमितचतुरस्रं विलिख्य मञ्चके पट्टसूत्रैर्वितानितां हंसतूलिप्रतिच्छन्नां शीर्षोपधानिकां प्रच्छादनपटीयुतां शय्यामास्तीर्य ईशानादिविदिक्षु शिरोभागे च घृतकुङ्कुमगोधूमजलपूर्णकुम्भमुच्छीर्षे घृतपूर्णकलशं सप्तधान्यानि च संस्थाप्य चामरव्यजनासनभाजनभृङ्गारकादर्शादीनि तथा कज्जलालक्तकुङ्कुमवस्त्रभूषणादीनि शयनोपकरणानि विन्यस्य शय्यामध्ये हैमीं लक्ष्मीनारायणप्रतिमां संस्थाप्य शय्यापरितोऽष्टदिक्षु अष्टौ दीपान् प्रज्वाल्य, " अद्येत्यादि० पितुः० शर्मणः समस्तपापक्षयपूर्वकं सुखनिवाससिध्यर्थं शय्यादानं करिष्ये " इति सङ्कल्प्य, शय्यास्थितप्रतिमायां लक्ष्मीनारायणौ तत्परितः अष्टौ लोकपालान्ग्रहांश्चावाह्य सम्पूज्य प्रार्थयेत्—" यथा कृष्ण त्वदीयाऽस्ति शय्या क्षीरोदसागरे । तथा भूयादशून्येयं मम जन्मनि जन्मनि " इति ॥ ततस्तदुपरि श्रुतिशीलसम्पन्नं सपत्नीकं ब्राह्मणमुपवेश्य गन्धपुष्पवस्त्राभरण-भूषणोष्णीषोत्तरीयभाजनभोजनादिभिरभ्यर्च्य " मृदु ह्यबीजकार्पासपूरितं सुखदं नृणाम् । सोपस्करं ददाम्येतत्सुखं स्यात्सर्वदा पितुः ॥ इमां यथाशक्त्यलङ्कृतां लक्ष्मीनारायणप्रतिमायुतां अङ्गिरोदेवतां दक्षिणासहितां शय्यां अमुकगोत्रोत्पन्न० सपत्नीकाय

तुभ्यमहं सम्प्रददे " इति शय्योपवेशितविप्रहस्ते साक्षतकुशोदकमुत्सृजेत् ॥ ततः प्रदक्षिणनमस्कारान्कृत्वा प्रार्थयेत् —" यथाह्यशून्यं शयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्याऽस्तु तथा जन्मनि जन्मनि " इति ॥ ततः प्रतिग्रहीतुः — " देवस्य त्वा० मनवे तल्पम् । तेनामृतत्व० प्रतिगृह्णातु " इति प्रतिग्रहमन्त्रः ॥

गोदानम् ॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मम पित्रादिकुलशतनरकोत्तारणपूर्वकं धेनुवत्सरोमसङ्ख्यावत्सरावधि देवलोकमहिमत्वसिध्या ब्रह्मलोकावाप्त्यर्थं सवत्सगोप्रदानं करिष्ये, तदादौ गणपतिपूजनं ब्राह्मणपूजनं गोपूजनञ्च करिष्ये, इति सङ्कल्प्य, गणपतिं सम्पूज्य जलशुद्धिं कृत्वा गोत्रोच्चारपूर्वकं गोप्रतिग्रहीतारं ब्राह्मणं वृत्वा पूजयेत्— " तव पादोदकं तीर्थं मुखे वेदाः प्रतिष्ठिताः । पाद्यं गृहाण विप्रेन्द्र भूमिदेव नमोऽस्तु ते " इति पाद्यम् ॥ " भूमिदेवाग्रजन्मासि त्वं विप्र पुरुषोत्तम । प्रत्यक्षं यज्ञपुरुष अर्घोऽयं प्रतिगृह्यताम् " इत्यर्घ्यम् ॥ आचमनीयं, वस्त्रयज्ञोपवीतगन्धालङ्कारपुष्पधूपदीपान्, भोजनपर्याप्तमामं, यथाशक्ति दक्षिणां, ताम्बूलञ्च दत्वा, " यदर्चनं कृतं विप्र तव विष्णुस्वरूपिणः । तत्सर्वं मम दानस्य विष्णवेऽस्तु समर्पणम् " इति प्रार्थयेत् ॥ ततो हिरण्यशृङ्गीं रौप्यखुरां पट्टदुकूलवस्त्राद्यैरलङ्कृतां आदर्शभालां कज्जलनेत्रां स्रग्घण्टाबद्धकण्ठां ताम्रपट्टयुतपृष्ठां मुक्ताफलमालायुतपुच्छां कांस्यपात्रोपदोहिनीं सवत्सां गां संस्थाप्य तत्परितः कस्तूरिकागन्धान् सप्तधान्यानि घृतपूर्णकुम्भञ्च परिकल्प्य देवता आवाहयेत्— शृङ्गमूलयोः—ब्रह्मविष्णुभ्यां नमः ब्रह्मविष्णू आवाहयामि । एवमेव शृङ्गाग्रयोः सर्वतीर्थानि० । लालाटे– महादेव० । ललाटाग्रे– महादेवीं० । नासावंशे–षण्मुखं० । कर्णयोः— अश्विनौ० । चक्षुषोः-शशिभास्करौ० । दन्तेषु — वायुं० । जिह्वायां — वरुणं० । हुङ्कारे — सरस्वतीं० । गण्डयोः — यमधर्मौ० । ओष्ठयोः — सन्ध्ये० । ग्रीवायां — इन्द्रं० । कुक्षौ — रक्षांसि० । उरसि — साध्यान्० । चतुष्पादेषु — धर्मं० । खुरमध्ये — गन्धर्वान्० । खुराग्रे — पन्नगान्० ।

खुरपार्श्वेषु -- अप्सरसः० । पृष्ठे — एकादशरुद्रान्० । सर्वसन्धिषु -- वसून्० । श्रोणीतटे — पितॄन्० । लाङ्गूले -- सोमं० । वालेषु -- आदित्यरश्मीन्० । गोमूत्रे -- गङ्गां० । क्षीरे — सरस्वतीं० । दध्नि -- नर्मदां० । सर्पिषि -- हुताशनं० । रोमसु— त्रयस्त्रिंशत्कोटिदेवान्० । उदरे -- पृथिवीं० । पयोधरेषु -- चतुस्सागरान्० । इत्यावाह्य पूजयेत् — सौरभेयि सर्वहिते पवित्रे पापनाशिनि । गृह्णीष्वैतन्मया दत्तं पाद्यं त्रैलोक्यवन्दिते ॥ भूर्भुवः सुवः रुद्ररूपिण्यै गवे नमः पाद्यं समर्पयामि ॥ सर्वदेवमये देवि सर्वतीर्थमये शुभे । गृहाणार्घ्यं मया दत्तं सौरभेयि नमोऽस्तु ते ॥ अर्घ्यम्० ॥ देहस्थिताऽसि रुद्राणी शङ्करस्य प्रिया सदा । धेनुरूपेण सा देवी मम पापं व्यपोहतु । आचमनीयं० ॥ या लक्ष्मीः सर्वलोकेषु या च देवेष्ववस्थिता । धेनुरूपेण सा० व्यपोहतु ॥ स्नानं० ॥ गोसूक्तेन स्नापयेत् ॥ आच्छादनं गवे दद्यां सम्यक्शुद्धं सुशोभनम् । सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरी ॥ वस्त्रं० ॥ सर्वदेवमये देवि चन्दनं चन्द्रसन्निभम् । कस्तूरीकुङ्कुमाढ्यञ्च सुगन्धि प्रतिगृह्यताम् ॥ चन्दनं० ॥ माल्यादिनि सुगन्धीनि मालत्यादीनि शोभने । मया दत्तानि देवेशि प्रीत्यर्थं प्रतिगृह्यताम् ॥ पुष्पाणि० ॥ देवद्रुमरसोद्भूतो गोघृतेन समन्वितः । प्रयच्छामि महाभागे धूपोऽयं प्रतिगृह्यताम् ॥ धूपं० ॥ आनन्दकृत्सर्वलोके देवानाञ्च सदा प्रियः । गौस्त्वमादिजगन्नाथो दीपोऽयं प्रतिगृह्यताम् ॥ दीपं० ॥ सुरभिस्त्वं जगन्मातर्देवि विष्णुपदे स्थिता । सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस ॥ सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः । प्रतिगृह्णन्त्विमं ग्रासं गावस्त्रैलोक्यमातरः ॥ नैवेद्यं० ॥ फलताम्बूलदक्षिणाः समर्प्य नीराज्य ॥ ' नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥ पञ्चगावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः ॥ नमस्कारं० ॥ गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो गे हृदये नित्यं गवां मध्ये वसाम्यहम् ॥ प्रदक्षिणाः० ॥ हिङ्कृण्वती वसुपत्नी०॥ पुष्पाञ्जलिं ०॥ गावः प्रतिष्ठा भूतानां गावस्स्वस्त्ययनं महत् । अन्नमेव परं

गावो देवानां हविरुत्तमम् ॥ पावनं सर्वभूतानां रक्षन्ति च वहन्ति च । हविषां मन्त्रपूतेन तर्पयन्त्यमरान्दिवि ॥ ऋषीणामपि होतॄणां गावो होमे प्रतिष्ठिताः । सर्वेषामेव भूतानां गावः शरणमुत्तमम् ॥ गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः सर्वस्य लोकस्य गावो धन्याः सनातनाः ॥ गावो ममाऽग्रतः० मध्ये वसाम्यहम् ॥ प्रार्थनां० ॥ इति संपूज्य गोवत्सपुच्छयोर्गृहीत्वा — यज्ञसाधन-भूताया विश्वस्याऽघौघनाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । तस्मादस्याः प्रदानेन अतः शान्तिं प्रयच्छ मे ॥ इमां गां रुद्रदैवत्यां दोग्ध्रीं सवत्सामव्यङ्गां सर्वाभरणभूषितां गन्धाद्युपचारैः पूजितां पूर्व-सङ्कल्पितसर्वमनोरथप्राप्तये श्रीमहाविष्णुप्रीत्यर्थं ( अमुक गोत्राय० ) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥ गौस्तारयतु, पुण्यं वर्धतां, शान्तिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु, वृद्धिरस्तु, अविघ्नमस्तु, आरोग्यमस्तु, शिवं कर्मास्तु, कर्मसमृद्धिरस्तु, धर्मसमृद्धिरस्तु, अहरहरभिवृद्धिरस्तु, कल्याणाभ्युदयोऽस्तु । अनेन रुद्रस्वरूपिणीगोप्रदानेन महाविष्णुः प्रीयताम् ॥ स्वस्त्यस्तु दीर्घमायुः० शिवा आपः सन्तु, सौमनस्यमस्तु, अक्षतञ्चाऽरिष्टं चास्तु ॥ दानस्य प्रतिष्ठासिध्यर्थमिदं यथाशक्ति सुवर्णं अग्निदैवत्यं विष्णुस्वरूपिणे गोप्रतिग्रहीत्रे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम ॥ ततः प्रतिग्रहीता —" देवस्य त्वा० पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ राजा त्वा वरुणो नयतु देवि दक्षिणे रुद्राय गाम् ॥ तया मृतत्वमश्याम् ॥ वयो दात्रे ॥ मयो महामस्तु प्रतिग्रहीत्रे ॥ क इदं कस्मा अदात् ॥ कामः कामाय ॥ कामो दाता ॥ कामः प्रतिग्रहीता ॥ काम॑ समुद्रमाविश ॥ कामेन त्वा प्रतिगृह्णामि ॥ कामैतत्ते ॥ एषा ते कामदक्षिणा ॥ उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु " इति प्रतिगृह्णीयात् ॥ ततो विप्रं प्रार्थयेत्—" त्वं सर्वदेवगणमन्दिरसर्वभूतविश्वेश्वर-त्रिपथगोदधिपर्वतानाम् । तद्दानशक्तिशलटीकृतपापकोटिः प्राप्तोऽस्मि निर्वृतिमतीव परां नतोऽस्मि " इति ॥ ततो भूयसीं दक्षिणां दत्त्वा कर्मेश्वरार्पणं कुर्यात् ॥

## ॥ आवृत्ताद्यादिषोडशैकोद्दिष्टमासिकश्राद्धानि ॥

व्यासः— सपिण्डीकरणात्पूर्वं कुर्याच्छ्राद्धानि षोडश ॥ श्राद्धानि षोडशाऽकृत्वा न तु कुर्यात्सपिण्डताम् ॥ श्राद्धानि षोडशाऽऽपाद्य विदधीत सपिण्डताम् ॥ ॥ सपिण्डीकरणादर्वाक्कुर्वन्श्राद्धानि षोडश । एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥ सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः । प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ॥

अथ प्रयोगः ॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य (प्राचीनावीती) "अमुकगोत्रस्य० प्रेतस्य प्रेतत्वविमुक्तयोत्तमलोकप्राप्त्यर्थं श्वः सपिण्डीकरणं करिष्यमाणस्तत्पूर्वभावीनि आवृत्ताद्यमासिक–ऊनमासिक–द्वितीयमासिक–त्रैपक्षिकमासिक–तृतीयमासिक–चतुर्थमासिक–पञ्चममासिक–षष्ठमासिक–ऊनषाण्मासिक–सप्तममासिकाऽष्टममासिक–नवममासिक – दशममासिकैकादशमासिक–द्वादशमासिकोनाब्दिकानि षोडश मासिकश्राद्धान्यपकृष्य तन्त्रेणान्नेन हविषा एकोद्दिष्टविधानेनाऽद्यैव करिष्ये" इति सङ्कल्प्य, कलशार्चनं ब्रह्मदण्डञ्च कृत्वा षोडश कुशमयान्ब्राह्मणान् "अमुक० प्रेतस्याद्यमासिके इदमासनमत्र भवता क्षणः कर्तव्यः, प्राप्नोतु भवान्" इत्येवं क्रमेण षोडशसु सदर्भक्लृप्तेष्वासनेषूपवेश्य, एकोद्दिष्टवत् स्थण्डिलकरणादि लौकिकाग्निं प्रतिष्ठाप्य, प्रतिष्ठिताभिघारणान्तं कृत्वाऽग्नेर्दक्षिणत एकमेवाऽर्घ्यपात्रमासाद्य तथैवाऽप आनयति— "आम आगच्छतु प्रेतो देवयानान्० उपदुह्यताम् । इमा अमुक० प्रेताय वो गृह्णामि" इत्यादिनाऽर्घ्यं संस्कृत्य भोजनस्थानेष्वासनेषु च ससिकततिलविकिरणावोक्षणे कृत्वा कुशब्राह्मणेषु आद्यमासिके, ऊनमासिके, द्वितियमासिके, इत्यादिक्रमेण "आयाहि प्रेत सोम्य गम्भीरैः० पूर्व्यैः । प्रजामस्मभ्यं ददद्रयिञ्च दीर्घायुत्वञ्च शतशारदञ्च" अमुकगोत्रं० प्रेतमावाहयामि, इत्यावाह्य । अमुकगोत्र० प्रेत इदं ते पाद्यम् । अर्घ्य-

पात्रादादाय 'इदन्ते अर्घ्यम्' एवमेव वस्त्रं, गन्धं, तिलाक्षतान्, पुष्पाणि, पुनरर्घ्यञ्च दत्वा "अग्नौ करिष्यामि" इति पृष्ट्वा 'कुरुष्व' इत्यनुज्ञातः अग्निमपसव्यं परिषिच्य समिधमाधायाऽऽज्येन व्याहृतीर्हुत्वा दर्व्यां सकृदुपस्तीर्य चरोः षोडशवारमवदाय सकृदभिघार्य, दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु पुरस्तात्स्रुवाहुतिं हुत्वा जुहुयात्—"प्रेतायाऽमुकगोत्राय० शर्मणे यमाय च स्वाहा" (स्त्रीणां "प्रेतायै अमुकगोत्रायै० दायै यमाय च स्वाहा") इति ॥ यथालिङ्गं त्यागः ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा षोडशसु भोजनपात्रेषु पृथक्पृथगुपस्तीर्य हुतशेषमन्नं सव्यञ्जनं परिविष्याऽभिघार्य दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्याऽभिमृशति—"पृथिवी ते पात्रं द्यौरपिधानम्। ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जुहोम्यक्षितमसि मा। प्रेतस्य क्षेष्ठा अमुत्राऽमुष्मिँल्लोके" इति ब्राह्मणस्याऽङ्गुष्ठेनाऽनखेनाऽनुदिशति ॥ 'प्रेताय अमुकगोत्राय० इदमन्नं सव्यञ्जनमुपतिष्ठतु' इति॥ 'अमृतोपस्तरणमसि' इत्यपो दत्वा भुञ्जानान्समीक्षते—'प्राणे निविष्टोऽमृतं जुहोमि' इति पञ्चभिः 'ब्रह्मणि म आत्माऽमृतत्वाय' इत्यात्मानम्॥ न चाऽत ऊर्ध्वं निरीक्षते। भुक्तवत्सु 'अमृतापिधानमसि' इत्यपो दत्वा। तृप्तानप आचमय्य 'स्वदितमुच्यताम्' इति विज्ञाप्य 'अस्तु स्वदितम्' इति प्रत्युक्ते पूर्ववदर्घ्यं दत्वा। दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु "मार्जयताममुक० प्रेतः" इति तिलोदकं दत्वा। अन्नशेषैः 'प्रेताय अमुकगोत्राय० आद्यमासिके अयं पिण्ड उपतिष्ठतु' इत्यादिना षोडश पिण्डान्दत्वा "मार्जयताममुक० प्रेतः" इति पिण्डानामुपरि तिलोदकं दत्वा, अञ्जनाभ्यञ्जनादिकञ्च दद्यात्। अथार्घ्यपात्रोदकं पात्रसङ्क्षालनेन संयुत्य 'तृप्यस्व' इति सकृदपसव्यं परिषिच्याऽग्नौ व्याहृतीर्हुत्वा होमशेषं समाप्य ब्राह्मणेभ्यो दक्षिणादिकं दत्वाऽक्षय्यं वाचयित्वा यज्ञोपवीती अभिवाद्योत्थाप्य, प्राचीना वीती पिण्डानुद्वास्याऽप्सु विनिक्षिपेत्॥

मरणाद्वर्षमध्ये यद्यधिकमास आपतेत्तदा तन्मासिकश्राद्धं द्विरावर्तयेत्। तदा सप्तदश मासिकानि सम्पद्यन्ते। ऊनमासिकत्रैपक्षिकोनषाण्मासिकोनाऽब्दिकानां मृततिथ्यनपेक्षाणामावृत्त्यभावान्मासिकानि सप्तदशैव स्युः। सौरपक्षेऽपि सङ्क्रमणात्परं दशदिनादर्वाक् मृतस्य कुत्रचिदेकस्मिन्सौरमासे मृततिथिद्वयसम्भवात्प्रायः सप्तदश मासिकानि सम्पद्यन्ते। एवं सप्तदश मासिकसम्भवे हविरवदानानि ब्राह्मणाः पिण्डाश्च सप्तदश सप्तदश भवन्ति॥

## ॥ सोदकुम्भश्राद्धविधिः ॥

कारिकारत्ने—आद्याहाद्द्वादशाहाद्वा तत्पूर्वाहादथाऽपि वा। विप्रायाऽन्नं सोदकुम्भं दद्यादन्वहमाब्दिकात्॥ मार्कण्डेयः— यस्य संवत्सरादर्वाक्सपिण्डीकरणं कृतम्। मासिकं सोदकुम्भञ्च देयं तस्याऽपि वत्सरम्॥ याज्ञवल्क्यः—अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत्। तस्याऽप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः॥ कृते सपिण्डीकरणे पार्वणन्तु विधीयते। सपिण्डीकरणादर्वागेकोद्दिष्टं विधीयते॥ गौतमः— अदैवं पार्वणं श्राद्धं सोदकुम्भमधर्मकम्। कुर्यात्तत्राऽब्दिकश्राद्धात्सङ्कल्पविधिनाऽन्वहम्॥ अस्यार्थः—अदैवं= विश्वेदेवाविष्णुरहितं, पार्वणं = त्रिपुरुषात्मकं, अधर्मकं = दन्तधावनताम्बूलादिवर्जनाऽपुनर्भोजनादिरूपकर्तृभोक्तृधर्मरहितं, इति॥ सङ्कल्पविधिं विवृणोति स्मृत्यन्तरे— आवाहनाऽग्नौकरणे स्वधानिनयनं तथा। विकिरं पिण्डदानञ्च सङ्कल्पे पञ्च वर्जयेत् इति॥ आपस्तम्बः—सङ्कल्पश्राद्धे अर्घ्याऽऽवाहनाऽग्नौकरणपिण्डदानानि वर्जयेत्॥ सङ्ग्रहे—सङ्कल्पन्तु यदा कुर्यान्न कुर्यात्पात्रपूरणम्। विकिरञ्च न दातव्यं पिण्डांश्चैव न निर्वपेत्॥ स्मृत्यन्तरे— अब्दमम्बुघटं दद्यादन्नमाज्येन संयुतम्। संवत्सरे प्रवृद्धेऽपि प्रतिमासञ्च मासिकम्॥ व्यासः—अतिथिं भोजयेद्विद्वान्सोदकुम्भे विशेषतः। अभ्यागतं भोजयित्वा नियतन्तु न भोजयेत्॥ नियतं भोजयेद्यस्तु

लोभान्मोहाद्विमूढधीः। त्रयस्ते नरकं यान्ति कर्ता भोक्ता तथा पिता इति॥ पितृमेधसारे-न द्वादशाहादौ सापिण्ड्ये सोदकुम्भश्राद्धान्याहृत्य दद्यात्, विध्यभावात्। प्रत्यहमाब्दं तद्विधिवैयर्थ्यापत्तेर्मासिकवद्विरनुष्ठाने प्रमाणाऽभावाच्च, प्रागब्दात्कृतान्यब्दसापिण्ड्ये न पुनः कुर्यादकृतानि कृत्वा सापिण्ड्यं कुर्यात्, शक्तविषये द्वादशाहप्रभृत्याऽऽसंवत्सरात्प्रत्यहमेकं त्रिपुरुषोद्देशेनाऽदैवमधर्मकं सदक्षिणं सङ्कल्पविधिना सोदकुम्भश्राद्धं दद्यात्, प्राक्सपिण्डीकरणादेकोद्दिष्टवत्, न सांवत्सरिकाऽहे तानि दद्यात्, कालाऽतीतत्वात्॥

अथ प्रयोगः॥ द्वादशाहात्प्रभृति संवत्सरं सोदकुम्भश्राद्धं कुर्यात्॥ यथा-विप्रमेकं निमन्त्र्य देशकालौ सङ्कीर्त्य, 'अमुकगोत्रस्य० पितुः क्षुत्तृष्णोपशमनद्वाराऽक्षय्यतृप्त्यर्थं सोदकुम्भश्राद्धं सङ्कल्पविधिना करिष्ये' इति सङ्कल्प्य, क्षणपाद्याऽऽसनगन्धाऽऽच्छादनान्ते सर्पिष्मताऽन्नेन परिविष्य गायत्र्या प्रोक्ष्य 'एष उदकुम्भः, इदमन्नं' इत्यनुदिश्य भोजयेत्। अन्ते ताम्बूलदक्षिणादि दद्यात्॥ इदमब्दपर्यन्तं प्रत्यहं कर्तुमशक्तश्चेत् प्रतिमासं कर्तव्यम्॥

## ॥ धनिष्ठापञ्चकमरणशान्तिविधिः ॥

एकादशेऽह्नि सम्प्राप्ते प्रातरुत्थाय पुत्रकः। आहृत्य कलशान्पञ्च स्थापयेदृक्षमन्त्रतः॥ सौवर्णी राजतीर्वाऽपि स्थापयेत्पञ्च मूर्तिकाः। ऋक्षमन्त्रैः प्रतिष्ठाप्य स्थापयेत्कलशोपरि॥ पूजां तत्र विधानेन कारयेद्भक्तिपूर्वकम्। ऋक्षमन्त्रैश्च सम्पूज्य गन्धपुष्पाक्षतादिभिः॥ नैवेद्यं कारयेत्तत्र प्रेतमुद्दिश्य कल्पयेत्। आरार्तिकं ततः पश्चाद्यथोक्तविधिना ततः॥ कुम्भाग्रे स्थण्डिलं कृत्वा

१. केचित्तु सपिण्डनात्पूर्वं षोडशमासिकवत् सोदकुम्भश्राद्धानि सपिण्डान्यपकृष्य कुर्वन्ति॥

स्थापयेच्च विभावसुम् । आज्यस्य संस्कृतिं कृत्वा बर्हिरास्तरणं ततः ॥ ग्रहान्संस्थापयेत्तत्र साधिप्रत्यधिदेवतान् । प्रतिष्ठाप्य ग्रहांश्चैव आज्यसंस्थापनं ततः ॥ इध्माधानं ततः कृत्वा आघाराद्यथ होमकान् । ऋक्षमन्त्रैस्ततो हुत्वा स्रुवेणाऽऽज्याहुतीः पृथक् ॥ ततस्तिलाक्षतैर्होमं ग्रहर्क्षाणाञ्च कारयेत् । चरुणा च यमादिभ्य एकैकामाहुतिं हुनेत् ॥ प्रायश्चित्तं ततो हुत्वा पूर्णाहुतिमथो हुनेत् । ग्रहान्सम्पूजयेत्तत्र गन्धपुष्पैश्च धर्मतः ॥ श्वभ्रेण नाळिकेरेण अर्घ्यं दत्वा विधानतः । ततो दुग्धं समादाय सर्वौषधिसमन्वितम् ॥ दक्षिणाभिमुखो भूत्वा तर्पयेदृक्षमन्त्रतः । प्रेताय तर्पणं कृत्वा ततः प्रेतगणाय च ॥ ततस्तु दक्षिणा देया प्रेतस्य मुक्तिहेतवे । अनेन विधिना वत्स कर्तव्यं ऋक्षपञ्चके ॥ यस्य गेहे भवेच्छान्तिः सुखं प्राप्नोत्यसंशयम् । पुण्याहवाचनं कृत्वा विधिना शान्तिकारकम् ॥ देवस्यत्वेति मन्त्रेण पावमान्या ततः परम् । समुद्रज्येष्ठामन्त्रेण त्रायन्तामितिमन्त्रतः ॥ ततः पौराणिकैर्मन्त्रै-रभिषिञ्चेच्च मूर्धनि । आशीर्वादं ततः पूर्वं दानं दद्यात्ततः परम् ॥ तिलांल्लोहं हिरण्यञ्च कार्पासं लवणं ततः । सप्तधान्यं क्षितिं गाश्च एकैकं पावनं स्मृतम् ॥ कांस्यपात्रे स्थितं तैलं वीक्ष्य दद्याद्विजन्मने ॥

अथ प्रयोगः ॥ एकादशेऽहनि सूतकान्ते ( एकोद्दिष्टान्ते ) दर्भेषु प्राङ्मुख उपविश्य पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "अमुकगोत्रस्य० प्रेतस्य धनिष्ठापञ्चकमरणसूचिताऽधोगतिदोषनिवृत्तिपूर्वकमस्माकं वंशारिष्टाद्यनिष्टपरि-हारार्थं धनिष्ठापञ्चकमरणशान्तिं करिष्ये" इति सङ्कल्प्य गणपतिं सम्पूज्य "सविता प्रीयताम्, वस्वादयश्च प्रीयन्ताम्" इति पुण्याहं वाचयित्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, धनिष्ठापञ्चकशान्तिहोमः कर्म, वरदो नामाऽग्निः, सविता देवता, चरुर्हविः,

---

१. 'सूतकान्ते कुर्यात' इति सामान्यवचनात् 'एकोद्दिष्टे तु सम्प्राप्ते विप्राभावे गते सति । पिण्डमेकं प्रदातव्यमाशौचं चाऽप्रदानतः" इति श्रीधरीयवचनाच्च एकोद्दिष्टानन्तरमेव आशौचनिवृत्तिः ॥

उपहोमे वस्वाद्यृक्षदेवताः, आज्यतिलाभ्यां ' अष्टौ देवा वसवः० ' इत्यादिदशाभिर्मन्त्रैः प्रतिद्रव्यं एकैकयाऽऽहुत्या यक्ष्ये, आदित्यादिनवग्रहानधिदेवताप्रत्यधिदेवतासहितान्तत्तन्मन्त्रैस्तिलैरेकैकयाहुत्या यक्ष्ये, यमादिचतुर्दशदेवताः तत्तन्नाममन्त्रेण चरुणा एकैकयाहुत्या यक्ष्ये, अग्निः स्विष्टकृत, इत्यादि सङ्कल्प्याऽन्वाधाय परिसमूहनादि प्रतिष्ठिताऽभिघारणान्तं कृत्वाऽग्रेणाऽग्निं व्रीहिभिर्यवैर्वा स्थण्डिलं कृत्वा तत्र पञ्च कलशान्संस्थाप्य तेषु सुवर्णेन वा रजतेन वा निर्मिताः पञ्च प्रतिमा विन्यस्य, ' अष्टौ देवा वसवः०, यज्ञं नः पान्तु० ' इति द्वाभ्यां वसून, ' क्षत्रस्य राजा०, यज्ञं नो राजा० ' इति द्वाभ्यां वरुणं, 'अज एकपात्०, विभ्राजमानः०' इति द्वाभ्यां अजमेकपदं, ' अहिर्बुध्नियः० ' चत्वार एकं० ' इति अहिं बुध्नियं, ' पूषा रेवत्यन्वेति०, क्षुद्रान्पशून्रक्षतु० ' इति पूषणञ्च क्रमेणाऽऽवाह्य, परितोऽक्षतपुञ्जेषु — यमं, धर्मराजं, मृत्युं, अन्तकं, वैवस्वतं, कालं, सर्वभूतक्षयं, औदुम्बरं, दध्नं, नीलं, परमेष्ठिनं, वृकोदरं, चित्रं, चित्रगुप्तं, चेति तत्तन्नाममन्त्रेण चतुर्दश देवता आवाह्य, तदग्रेऽष्टदळपद्मे कलशस्थापनपूर्वकं आदित्यादिनवग्रहानधिदेवताप्रत्यधिदेवताश्चावाप्त्य षोडशोपचारैः सम्पूज्य, जुषस्वन इत्याद्याऽऽज्यभागान्ते गायत्र्या पक्वं हुत्वाऽऽज्यतिलाभ्यां " अष्टौ देवा वसवः० स्वस्ति स्वाहा ॥ १ ॥ यज्ञं नः पान्तु० सागन्स्वाहा ॥ वसुभ्य इदं० ॥ २ ॥ क्षत्रस्य राजा० धत्त स्वाहा ॥ ३ ॥ यज्ञन्नो राजा० भेषजानि स्वाहा ॥ वरुणायेदं० ॥ ४ ॥ अज एकपा० गोपाः स्वाहा ॥ ५ ॥ विभ्राजमानः० सर्वे स्वाहा ॥ अजायैकपद इदं० ॥ ६ ॥ अहिर्बुध्नियः० रक्षन्ति सर्वे स्वाहा ॥ ७ ॥ चत्वार एक० सद्य स्वाहा ॥ अहये बुध्नियायेदं० ॥ ८ ॥ पूषा रेव० यज्ञ ँ स्वाहा ॥ ९ ॥ क्षुद्रान् व्यजमानाय यज्ञँ स्वाहा ॥ पूष्ण इदं० ॥ १० ॥ " अथ तिलैः अधिदेवताप्रत्यधिदेवतासहितनवग्रहान्, चरुणा ' यमाय स्वाहा ' इत्यादि चतुर्दशाहुतीश्च हुत्वा, स्विष्टकृदादि पूर्णाहुत्यन्तं कुर्यात् ॥ अथाऽऽवाहितदेवताः पुनः सम्पूज्य सर्वौषधिमिश्रेण क्षीरेण दक्षिणामुखः 'अष्टौ देवा०' इति द्वाभ्यां वसूंस्तर्पयामि, ' क्षत्रस्य राजा०' इति द्वाभ्यां वरुणं तर्पयामि, 'अज एक०'

इति द्वाभ्यां अजमेकपदं तर्पयामि, 'अहिर्बुध्नियः०' इति द्वाभ्यां अहिं बुध्नियं तर्पयामि, 'पूषा रेव०' इति द्वाभ्यां पूषणं तर्पयामि, इति तर्पयित्वा, प्राचीनावीती "प्रेतं तर्पयामि, प्रेतगणं तर्पयामि" इति तर्पयेत् ॥ अथोत्तरपरिषेकादि होमशेषं समाप्य "देवस्य त्वा० भिषिञ्चामि, पवमानः० पुनातु, समुद्रज्येष्ठा०, त्रायन्तां०, सुरास्त्वामभिषिञ्चन्तु०" इत्यादिभिः कलशोदकेन मार्जयित्वा आचार्याय कलशदानं ब्राह्मणेभ्यः तिलाद्यष्टदानं दत्वा तैलपूरितकांस्यपात्रे आत्मनः प्रतिरूपमवेक्ष्य "तैलं तिलसमुद्भूतं सर्वारिष्टनिवारकम् । तुष्टिदं पुष्टिदं चैव प्रददेऽरिष्टशान्तये" इत्युक्त्वा सहिरण्यं दद्यात् ॥

## ॥ त्रिपुष्करादिमरणशान्तिः ॥

एकादशेऽहनि 'अमुकप्रेतस्य त्रिपुष्करयोगमरणसूचिताऽधोगतिदोषनिवृत्तिपूर्वकमस्माकं वंशारिष्टादिसर्वानिष्टपरिहारार्थं त्रिपुष्करशान्तिं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य 'सविता प्रीयताम्, (पुनर्वसूमरणे) अदितिश्च प्रीयताम्' इति पुण्याहं वाचयित्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, त्रिपुष्करशान्तिहोमः कर्म, वरदो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे (पुनर्वसूनक्षत्रस्य–पुनर्नो देव्यदितिः०, एवा न देव्यादितिः० इति द्वाभ्यां) अदितिं पलाशसमित्तिलचर्वाज्यद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः (आर्द्रया रुद्रः०, हेती रुद्रस्य० इति द्वाभ्यां) अधिदेवतां रुद्रं (बृहस्पतिः प्रथमं०, तिष्यः पुरस्तात्० इति द्वाभ्यां) प्रत्यधिदेवतां बृहस्पतिश्च तैरेव द्रव्यैः प्रतिद्रव्यमेकादशैकादशसङ्ख्याकाहुतिभिः, यमादि चतुर्दशदेवताः तैरेव द्रव्यैः प्रतिद्रव्यमष्टाष्टसङ्ख्याकाहुतिभिः, आदित्यादिनवग्रहानाधिदेवताप्रत्याधिदेवतासाहितान् तिलैरेकैकयाहुत्या यक्ष्ये, अग्निः स्विष्टकृत्, इत्यादि सङ्कल्प्यान्वाधाय प्रतिष्ठिताऽभिघारणान्तं कृत्वाऽग्रेणाऽग्निं कलशत्रयं प्रतिष्ठाप्य, मध्ये–अदितिं, दक्षिणे–रुद्रं, उत्तरे–

बृहस्पतिं, च पूर्वोक्तमन्त्रैरावाह्य परितः-यमादि चतुर्दश देवता नाममन्त्रेणाऽऽवाह्य, तदुत्तरेऽष्टदळपद्मे-आदित्यादिनवग्रहानधिदेवता-प्रत्यधिदेवतासहितांश्चावाह्य षोडशोपचारैः संपूजयेत् ॥ ततो 'जुषस्व नः' इत्यादि सावित्र्या पक्वं हुत्वाऽन्वाधानक्रमेणोपहुत्य पूर्णाहुत्यादि धनिष्ठापञ्चकशान्तिवत्सर्वं कुर्यात् ॥ एवमेव विशाखादि त्रिपान्नक्षमरणे त्रिपुष्करमरणे च तत्तन्नक्षत्रमन्त्रैरावाहनादि-सर्वं कुर्यात् । द्विपुष्करयोगेऽपि एवमेव ॥

## ॥ कालशान्तिविधिः ॥

शौनकोऽहं प्रवक्ष्यामि कालशान्तिं विधानतः । मृत्युयोगे मृत्युदिने नक्षत्रे च त्रिपादके ॥ भृग्वङ्गारदिने चैव मृत्युयोगस-मन्विते । गृहमध्ये स्थिते काले स्वगृहे मरणं सदा ॥ जायते कुलनाशाय कर्तुर्वा मरणाय वै । पुत्रदारगृहस्थस्य कालाऽग्निश्च जायते ॥ अथवा राजचोरादि पीडा सञ्जायते ध्रुवम् । तद्दोषपरिहारार्थं शान्तिं वक्ष्ये समासतः ॥ ततो दैवज्ञमाहूय कालं ज्ञात्वा विधानतः । तावद्धितं गृहं हित्वा शान्तिं कृत्वा गृहं व्रजेत् ॥ आचार्यं वरयेदादौ शान्तं दान्तं कुटुम्बिनम् । पुण्याहं वाचयेत्तत्र नमस्कृत्वेष्टदेवताम् ॥ गृहस्येशानदिग्भागे पद्ममष्टदळं लिखेत् । शालीतण्डुलपूर्णञ्च स्थापयेत्कलशं ततः ॥ कषायोदकगन्धैश्च कलशं पूरयेत्ततः । मृत्युञ्जयं त्र्यम्बकेति मन्त्रेणाऽऽवाहयेत्सुधीः ॥ वेष्टयेद्वस्त्रयुग्मेन गन्धपुष्पाक्षतैर्यजेत् । धूपं दीपञ्च नैवेद्यं विधिना कार-येद्बुधः ॥ ततो होमं प्रकुर्वीत कालस्थदिशि संस्थितः । स्थण्डिलोल्लेखनादीनि कुर्यादग्निमुखं ततः ॥ मृत्युञ्जयस्य मन्त्रेण समिधाज्य-चरून्हुनेत् । मृत्युसूक्तेन जुहुयान्मृत्युर्नश्यत्विति ब्रुवन् ॥ हुनेदष्टोत्तरशतं शान्तसूक्तं तथैव च । मृत्युसूक्तं शान्तसूक्तं समिदाज्यचरून्हुनेत् ॥ मृत्युप्रशमनार्थाय तिलहोमं समाचरेत् । त्र्यम्बकेति च मन्त्रेण तिलांश्च घृतमिश्रितान् ॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा । तावन्मानं

तु जुहुयादाज्यं त्र्यम्बकतुष्टये॥ यन्नक्षत्रे च मरणं तत्तन्नक्षत्रदेवताम्। अष्टोत्तरशतं हुत्वा साधिप्रत्यधिदेवताम् ॥ तन्नक्षत्रोक्तमन्त्रेण समिदाज्यचरून्हुनेत्। ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत्॥ अभिषेकं ततः कुर्यादायुष्यमिति सूक्ततः। समुद्रज्येष्ठा इति च शन्न इन्द्रेति सूक्ततः॥ आपो हिष्ठेति तिसृभिः पवमानानुवाकतः। देवस्य त्वेति मन्त्रेण तच्छंयोरित्यृचा ततः॥ ग्रहमन्त्रैः पुराणोक्तैरभिषेकं समापयेत्। अग्निरायुष्मानिति च अभिषेकं समाचरेत्॥ अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत्। आज्ये निरीक्ष्य वै दद्यात्सर्वदोषोपशान्तये॥ प्रतिमां कलशं दद्याद्गुरवे ब्रह्ममूर्तये। वासो हिरण्यं गां रत्नं भूमिं धान्यानि दापयेत्॥ ब्राह्मणान्भोजयेत् पश्चात्तेभ्यो दद्याच्च दक्षिणाम्॥ तोषयित्वा द्विजांस्तेभ्य आशिषो वाचयेदथ॥

॥ कालशान्तिप्रयोगः॥ सूतकान्ते (द्वादशाहादौ) शुचिः स्नातो दर्भेष्वासीनः पवित्रपाणिराचम्य प्राणानायम्यदेशकालौ सङ्कीर्त्य 'मम पित्रादेर्मरणकाले कालमृत्योर्गृहान्तःप्रवेशसूचिताऽपमृत्युकालमृत्य्वादिसर्वानिष्टनिरसनद्वारा गृहे स्थितानां द्विपदानां चतुष्पदानाञ्च सर्वेषां दीर्घायुरारोग्याऽभयप्राप्त्यर्थं कालशान्तिं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य 'त्र्यम्बकमृत्युञ्जयः प्रीयताम्' इति पुण्याहं वाचयित्वा स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, कालशान्तिहोमः कर्म, वरदो नामाऽग्निः, त्र्यम्बको देवता, चरुर्हविः, उपहोमे-मृत्युञ्जयमन्त्रेण समिदाज्यचरुद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः शन्नसूक्तमन्त्रैः समिदाज्यचरुद्रव्यैरेकैकयाहुत्या, मृत्युसूक्तेन(हरि ँ हरन्तं, माच्छिदो मृत्यो, सद्यश्चकमानाय, कामेन मे, परं मृत्योः, प्रपूर्व्य, इति षण्मन्त्रैः) तैरेव द्रव्यैः प्रतिद्रव्यं प्रतिमन्त्रमष्टादशावृत्याऽष्टोत्तरशतसंख्याकाहुतिभिः, त्र्यम्बकमन्त्रेण तिलाऽऽज्याभ्यां प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याकाहुतिभिः, मरणकालनक्षत्रमन्त्राभ्यां समिच्चर्वाज्यद्रव्यैः प्रतिमन्त्रं प्रतिद्रव्यं चतुःपञ्चाशदावृत्याऽष्टोत्तरशतसङ्ख्याकाहुतिभिर्यक्ष्ये, अधिप्रत्यधिदेवतास्तत्तन्नक्षत्रमन्त्रैः (पूर्वोत्तरनक्षत्रमन्त्रैः) तैरेव द्रव्यैः अष्टाष्टसंख्याकाहुतिभिर्यक्ष्ये, अग्निः

स्विष्टकृत्, इत्यादि प्रतिष्ठिताभिघारणान्तेऽग्रेणाऽग्निं कषायोदकपञ्चगव्यपूरितं कलशं महीद्यौरित्यादिना विधिवत्प्रतिष्ठाप्य तत्र त्र्यम्बकमन्त्रेण त्र्यम्बकं मृत्युञ्जयमावाह्य षोडशोपचारैः पूजयेत्। ततो 'जुषस्व नः' इत्याद्याज्यभागान्ते "त्र्यम्बकं यजामहे" इति मन्त्रेण पक्कं हुत्वाऽन्वाधानक्रमेणोपहोमं कुर्यात्। मृत्युसूक्तहोमे प्रत्याहुत्यन्ते 'मृत्युर्नश्यत्वायुर्वर्धताम्' इत्यनुसन्दध्यात्। स्विष्टकृदादि होमशेषं समाप्याऽऽवाहितदेवतानामुत्तरपूजां कृत्वा, ब्राह्मणाः कलशोदकेन आपो हिष्ठेति तिसृभिः, पवमानाऽनुवाकेन, शन्नसूक्तेन, आयुष्यसूक्तेन, समुद्रज्येष्ठा०, देवस्य त्वा०, तच्छंयोरावृणीमहे, ग्रहमन्त्रैः, अग्निरायुष्मानिति पञ्चभिः, सुरास्त्वामित्यादि पुराणोक्तमन्त्रैश्च सकुटुंबं यजमानं प्रोक्षेयुः॥ यजमानः अभिषेकाप्लुतं वस्त्रमाचार्याय ददाति। ततो ब्राह्मणान्-संपूज्य आज्यपात्रे मुखं निरीक्ष्य दत्वाऽऽचार्याय सपीठं कलशं गां वासो हिरण्यं रत्नं भूमिं धान्यानि ऋत्विग्भ्यो यथाशक्ति दक्षिणां च दत्वा ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयीत॥

## ॥ सपिण्डीकरणविधिः ॥

(बो. पि. सू. २·११) 'संवत्सरे सपिण्डीकरणं साग्नौकरणम्' इति तत्पुरस्ताद्व्याख्यातमेतावदेव नाना॥ द्वे स्थण्डिले करोति दक्षिणतश्चोत्तरतश्च दक्षिणतो मासिश्राद्धवदुत्तरत एकोद्दिष्टवत्। दक्षिणतोऽथ देवयजनोल्लेखनप्रभृत्याऽऽप्रणीताभ्यः कृत्वा विश्वेभ्यो देवेभ्यो ब्राह्मणावुपवेश्य गन्धपुष्पधूपदीपैरभ्यर्च्य वैश्वदेवेन चरुणाऽनुदिश्य 'विश्वेभ्यो देवेभ्यः स्वाहा' इत्यथ प्राचीनावीतं कृत्वा पूर्ववत्तिलोदकं संयुज्याऽथोत्तरत उल्लेखनप्रभृत्याऽऽपरिषेचनात्कृत्वा पवित्रं कृत्वा तिलोदकपात्रे निधायाऽप आनयन्नाह—'आम आगच्छतु प्रेतो देवयानान्समुद्रान्सलिलान्सवर्णान्। अस्मिन्यज्ञे सर्वकामं लभतेऽक्षीयमाणमुपदुह्यतामिमां

प्रेताय वो गृह्णामि ' इति पुंसाम् । ' प्रेता देवयानान्० प्रेतायै वो गृह्णामि ' इति स्त्रीणाम् ॥ अथोद्धृत्य पवित्रं तिलानावपाति -- ' तिलोऽसि सोम देवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रत्नस्वधयेहि प्रेतामिमान्लोकान्प्रीणयाहि नः स्वधा नमः ' इति पुंसाम् । ' प्रेताम् ' इति स्त्रीणाम् । स्वधाशब्दो नमस्कारशब्दो नमस्काराभिधेयत्वात् ॥ मध्वानयनप्रभृति समानमा प्रेतावाहनात् ॥ दक्षिणस्य पितॄणामावाहनप्रभृति तिलोदकदानान्तं कृत्वाऽथोत्तरस्य ' अमुष्मै स्वधा नमः ' इति तथाऽलङ्कृत्य ददाति । ' अग्नौ करिष्यामि ' इति ' कुरुष्व ' इतीतरे प्रत्याहुः ॥ अथाभ्यनुज्ञातः परिधानप्रभृत्याऽन्नाभिमर्शनात्कृत्वाऽथोत्तरस्य परिषेकं कृत्वा व्याहृतीभिर्हुत्वा दर्व्यामुपस्तीर्य सर्वस्मात्सकृत्सकृदवदायाऽभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात् — " प्रेतायामुष्मै यमाय च स्वधा नमस्स्वाहा, अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहा ' इति दक्षिणार्धपूर्वार्धे ॥ अथौदनं पात्रेषूद्धृत्य दर्भेषु सादयित्वा दर्भैः प्रच्छाद्याभिमृशति —' पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जुहोम्यक्षितमसि मा प्रेतस्य क्षेष्ठा अमुत्राऽमुष्मिन् लोके ' इत्यभिमृश्य निधायाऽथ दक्षिणस्य ब्राह्मणानामङ्गुष्ठेनाऽनखेनाऽनुदिशति —' अमुष्मै स्वधा नमोऽमुष्मै स्वधा नमः ' इति ॥ अथोत्तरस्य तन्मन्त्रेणानुमन्त्रणं परिषेचनादि तत्राऽभिश्रावणान्तं कृत्वा तृप्तानप आचमय्याऽऽ-शयेष्वन्नशेषान्सम्प्रकीर्य संक्षाळनेनाऽवकीर्य दक्षिणां दत्वाऽक्षय्यं वाचयित्वा यज्ञोपवीत्यभिवादनं कृत्वाऽथोत्तरस्याऽऽ-शयेषूपलिप्य दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान्संस्तीर्य तेष्वन्नशेषैः पिण्डं ददाति — ' अमुष्मा उपतिष्ठतु ' इति सङ्क्षाळनेनाऽपसव्यं ' तृप्यस्व ' इति परिषिच्य दक्षिणां दत्वाऽक्षय्यं वाचयित्वाऽभिवाद्य स्वधां वाचयित्वोत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्याऽथोत्तरे व्याहृतीर्हुत्वा दर्भान्प्रहृत्य परिषिच्य दक्षिणे चतुर्विंशतिपिण्डान्दत्वा प्रेतपात्रं पितृपात्रेषु निनयेत् – मधुमतीभिः, ' सङ्गच्छध्वम् ' इति द्वाभ्याम् । प्रेतपिण्डं पितृपिण्डेषु निदध्यात् —' समानो मन्त्रस्समितिः,

समानीव आकूतिः' इति द्वाभ्याम् ॥ अथैनानुपतिष्ठते —' ये समानाः, ये सजाताः' इति द्वाभ्याम् ॥ संक्षालनप्रभृति सिद्धमत ऊर्ध्वम् ॥

(बो. पि. सू. २·१२) संवत्सरे सपिण्डीकरणमेकादशे मासि षष्ठे चतुर्थे द्वादशेऽह्नि वा ॥ पितॄणामावाहनं सव्यस्य पाणेरङ्गुष्ठोपकनिष्ठिकया चाऽङ्गुल्या चाऽऽरभ्य पृथिवीं जपेत् । 'ये पार्थिवासः पितरो ये अन्तरिक्षे ये दिवि ये वा मृता बभूवुः । ते अस्मिन्यज्ञे समवयन्ताम्' इति । चत्वारि पात्राणि तिलमिश्रगन्धोदकेन पूरयित्वा एकं प्रेतस्य त्रीणि पितॄणामेकमथवाऽथ प्रेतपात्रं पितृपात्रेषु निनयेत् — मधुमतीभिः, 'सङ्गच्छध्वम्' इति द्वाभ्याम् । प्रेतपिण्डं पितृपिण्डेषु निदध्यात् —' समानो मन्त्रः, समानीव आकूतिः' इति द्वाभ्याम् ॥ अथैनानुपतिष्ठते —' ये समानाः, ये सजाताः' इति द्वाभ्याम् ॥ पिण्डानुपस्थायैकं वा पितृपात्रं 'असौ पितृभिः पितामहैः प्रपितामहैस्सहैतत्ते तिलोदकम्' इति तिलोदकप्रदानं नेह संप्रकिरणमन्नप्रदाने यथार्थमूहेदास्वादनेष्वाशयेष्वेव ॥ सपिण्डो व्याख्यातः ॥

तत्स्वरूपमुक्तं वैद्यनाथीये —" कामकालौ वैश्वदेवौ निर्दिष्टौ तु सपिण्डने । पितामहादीन्निर्दिश्य पितुरुच्चारणं ततः ॥ प्रेतभावविनिर्मोकद्वारा प्रेतस्य वै पितुः । पितामहादिभिः सार्धं सापिण्ड्यस्य प्रसिद्धये ॥ समानोदकभावस्य सिध्यर्थश्च पितुः सुतः" इत्यादिना प्रेतपिण्डस्य तत्पित्रादिपिण्डत्रये, प्रेतस्त्रीपिण्डस्य तच्छ्वश्र्वादिपिण्डत्रये च सम्मेलनं, तथैवाऽर्घ्योदकसम्मेलनश्चेति सामान्यतः सपिण्डीकरणस्य स्वरूपमिति बोध्यते ॥ व्युत्क्रममृतौ तु तत्रैव —" मृते पितरि यस्याऽथ विद्यते च पितामहः । तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकम् ॥ तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्ववत् । व्युत्क्रमाच्च मृते देयो येभ्य एव ददात्यसौ" ॥ असौ व्युत्क्रममृतो जीवद्दशायां येभ्यो ददाति तेभ्य इत्यर्थः । तथा च प्रेतस्य पितरि जीवति तत्पितामहादित्रिषु पिण्डेषु

सम्मेलनम्, प्रेतायाः श्वश्र्वां जीवन्त्यां तत्प्रश्वश्र्वादित्रिषु पिण्डेषु सम्मेलनमित्यपि बोधितम् ॥ सपिण्डीकरणकालोऽपि तत्रैव प्रोक्तः– "एकादशाहमारभ्य यावदाषोडशाद्दिनात् । सपिण्डीकरणं कुर्यात्ततः सप्तदशेऽह्नि वा"। "एकादशे द्वादशेऽह्नि त्रयोदशदिनेऽपि वा । त्रिपक्षे वा त्रिमासे वा षष्ठे वैकादशेऽपि वा ॥ वत्सरान्तेऽपि वा कुर्यात् त्रयोविंशदिनेऽपि वा । वृद्धिपूर्वदिने वेति दश कालाः सपिण्डने" इति ॥ एतेन एकादशाहादिसप्तदशाहपर्यन्तसप्तदिनेषु त्रयोविंशदिने च त्रिपक्षे तृतीयषष्ठैकादशमासेषु वत्सरान्त्यदिने वृद्धिपूर्वदिने चेति चतुर्दश कालाः सपिण्डीकरणे इति पर्यवस्यति ॥ नक्षत्रविशेष उक्तः । स्मृत्यन्तरे—"सपिण्डीकरणे त्रीणि ऋक्षाण्याहुर्मनीषिणः । प्राजापत्यं तथा रौद्रं नक्षत्रं त्विंद्रदैवतम्" ॥ गालवः—"सपिण्डीकरणश्राद्धमुक्तकाले न चेत्कृतम् । रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्"॥ अथाऽग्निनिर्णयोऽपि तत्रैवोक्तः—"औपासनाऽग्नौ कर्तव्यं मातापित्रोर्गुरोरपि । अन्येषां लौकिकाग्नौ तु विधुरस्य च लौकिके" इत्यादिना मातापित्रोः सपत्नीमातुर्मातामहमातामह्योर्मातुलस्याऽपुत्रस्य ज्येष्ठभ्रातुः पितृव्यस्याचार्यस्य च स्वौपासनाऽग्नावन्येषां विधुरस्य च लौकिकाऽग्नौ सपिण्डीकरणं कुर्यात्" इति ॥ ॥ कर्तृविशेषश्चोक्तस्तत्रैव— "ज्येष्ठपुत्रस्य सद्भावे कनिष्ठः कुरुते क्रियाम् । प्रेतत्वान्न विमुच्येत पितृत्वञ्च न गच्छति ॥ ज्येष्ठपुत्रोऽग्निमान्न स्यात्कनिष्ठस्त्वग्निमान्यदि । कनिष्ठ एव कुर्वीत सपिण्डीकरणं पितुः ॥ ज्यायस्य नष्टावन्यस्तु साग्निः पित्रोः सपिण्डनम् । कुर्यात् त्यक्त्वा प्रेतशब्दं सत्यग्नावग्रजः पुनः ॥ पितृशब्देन कर्तव्यं प्रेतशब्दं विहाय च । अर्घ्यसंयोजनं नाऽस्ति पिण्डसंयोजनं तथा" इति ॥ अत्र अग्निशब्दः श्रौताऽग्निस्मार्ताग्न्युभयसाधारणः । तेन सपत्नीकस्य साग्निकत्वाज्ज्येष्ठकनिष्ठयोर्द्वयोरपि साग्निकत्वे ज्येष्ठस्याऽसन्निधानेन (सपिण्डनकालेऽभार्यत्वेन वा कनिष्ठकृतसपिण्डीकरणं) पुनः समागतो विवाहितो वा ज्येष्ठ उक्तपार्वणविधिना पुनः कुर्यादित्यर्थः ॥ द्वादशाहे

पत्न्यां रजस्वलायामौपासने विद्यमाने तामनादृत्य[1] सपिण्डीकरणं कुर्यात् । अग्निविच्छेदे तु एकोद्दिष्टान्तं स्वकाले कृत्वा पञ्चमदिनादावुक्तकालेऽग्निं सन्धाय सापिण्ड्यं कुर्यात् । किञ्चाऽपुत्रस्य प्रेतस्याऽपुत्रप्रेताया वा सपिण्डीकरणे सन्निहितसपिण्ड एव मुख्यकर्ता भवति । मरणकाले तस्याऽसन्निधानेऽन्येनैकोद्दिष्टान्तमेव कर्तव्यम् । सपिण्डीकरणन्तु मुख्यकर्त्रा स्वेनैव करणीयम् ॥

अथ प्रयोगः ॥ द्वादशेऽहनि नित्यकर्म निर्वर्त्य नद्यादौ स्नात्वा शुचौ देशे दर्भेष्वासीनः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यादौ शरीरशुद्ध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि कृत्वा, कलशार्चनं ब्रह्मदण्डञ्च विधाय, पुनः प्राणानायम्य देशकालौ सङ्कीर्त्य, ( प्राचीनावीती ) अमुकगोत्रस्य० पितुः प्रेतत्वविमुक्त्या वस्वादिपितृत्वप्राप्त्यर्थं अस्मत्पितामहप्रपितामहवृद्धप्रपितामहैरमुकगोत्रैरमुकशर्मभिर्वसुरुद्रादित्यरूपैः सह ( अन्येषाञ्चेत् — तत्पित्रादिभिः त्रिभिः । स्त्रीणां—मातुश्चेत्— अस्मत्पितामहीप्रपितामहीवृद्धप्रपितामहीभिः गोत्राभिः० दाभिर्वसु० रूपाभिः । अन्यासाञ्चेत् -- तच्छ्वश्रूप्रभृतिभिस्तिसृभिः ) समानोदकत्वसापिण्डतासिध्यर्थञ्चाऽद्य मृताहाद्द्वादशेऽहनि सपिण्डीकरणश्राद्धं सदैवं साग्नौकरणमन्नेन हविषा पार्वणैकोद्दिष्टविधानेनाऽहमद्य करिष्ये " इति सङ्कल्प्य, ( उपवीती ) विश्वेदेवार्थं द्वौ, पार्वणार्थं त्रीन्, एकोद्दिष्टार्थमेकं, एवं षट् ( अशक्तौ — सर्वत्रैकैकमिति त्रीन् ) ब्राह्मणान्पूर्वेद्युरेव निमन्त्रितान्तेषामलाभे दर्भवटून् सदर्भक्लृतेष्वासनेषु देवौ प्राङ्मुखौ पितॄनुदङ्मुखान्प्रेतं प्रत्यङ्मुखमिति क्रमेणोपवेश्य स्वागतप्रश्नक्षणग्रहणादिपादप्रक्षाळनान्तं कृत्वा पार्वणार्थं दक्षिणतः एकोद्दिष्टार्थमुत्तरतः इति द्वे स्थण्डिले करोति । अथ दक्षिणतो मासिश्राद्धवद्देवयजनोल्लेखनप्रभृत्यौपासनाऽग्निं प्रतिष्ठाप्य सपिण्डीकरणश्राद्धाङ्गमग्नौकरणहोमं

१. प्रेतपत्न्यां रजस्वलायां सापिण्ड्यं पञ्चमदिने कुर्यात् । अपुत्रे भर्तरि प्रेते यदि पत्नी कुर्यात्तदैव पञ्चमदिने कुर्यादित्यपरे । इति वैद्यनाथीये ॥

करिष्ये, अग्नौकरणहोमः कर्म, आघारमापूर्विकं वा तन्त्रं, पञ्चदश चतस्रो वा सामिधेन्यः, अग्नीषोमावाज्यभागौ, हव्यवाहनो नामाऽग्निः, कामकालसंज्ञकविश्वेदेवा देवता, चरुर्हविः, प्राचीनावीती–कव्यवाहनो नामाऽग्निः, प्रेतस्य पितृपितामहप्रपितामहा देवताः, चर्वपूपाज्यानि हवींषि, उपवीती—अग्निः कव्यवाहनः स्विष्टकृत्, इत्याद्यन्वाधाय दक्षिणाग्रप्रागग्रैर्दर्भैः परिस्तीर्य उत्तरतो दर्भेष्वाज्यस्थालीमौदुम्बरं स्रुवमौदुम्बरीं दर्वीं, प्रोक्षणीं, चरुस्थाल्यौ, मेक्षणे, यवागूपात्रमपूपपात्रं, चतस्रः समिधो, दर्भमुष्टिञ्च, दक्षिणतो दर्भेषु-यवोदकपात्रं स्वधापात्रं (अर्घ्यार्थं दैवे द्वे, पित्र्याणि त्रीणि, उभयत्र एकैकं वा) अञ्जनाभ्यञ्जने, दशासूत्रं, सकृदाच्छिन्नं बर्हिमुष्टिमित्येकैकशः सादयित्वा, पवित्रकरणादि प्रोक्षणीः संस्कृत्योत्तरतः सादितपात्राणि त्रिः प्रोक्ष्य, दक्षिणतः सादितानि सकृत्प्रोक्ष्य, चरुनिर्वापे— "देवस्य त्वा० .कामकालसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामि" इति चरुं विश्वेभ्यो देवेभ्यो निरुप्य, प्राचीनावीतेन "पितृभ्यो जुष्टं निर्वपामि" इति पात्रान्तरे यवागूमपूपञ्च सकृन्निरुप्य, "विश्वेभ्यो० वो जुष्टं प्रोक्षामि" इति त्रिवारं, 'पितृभ्यो वो जुष्टं प्रोक्षामि' इति सकृत्प्रोक्ष्य, आज्यनिर्वापादि प्रतिष्ठिताभिघारणान्तं कुर्यात्। अथाऽर्घ्यार्थं दक्षिणतः सादितं यवोदकपात्रद्वयमेकं वोत्तानं कृत्वा तूष्णीं संस्कृताभिरद्भिः प्रोक्ष्य प्रागग्रे पवित्रे निधाय "शन्नो देवीरभिष्टये० स्रवन्तु नः॥ कामकालसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो वो गृह्णामि" इत्यप आनीयाऽपोद्धृत्य पवित्रं यवानावपति— "यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः। निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्" इति॥ तिरः पवित्रं "शुक्रमसि ज्योतिरसि तेजोऽसि देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इत्याज्यम्। "हिरण्यगर्भः० विधेम" इति हिरण्यम्। 'गन्धद्वारां० श्रियम्" इति गन्धम्। "काण्डात्काण्डात्० शतेन च" इति दूर्वाश्च क्रमेण निक्षिप्य। दर्भैः प्रच्छाद्य 'अर्घ्यपात्रं सम्पन्नम्' इत्युक्त्वा 'सुसम्पन्नम्' इत्युक्ते, स्वधापात्रत्रयमेकं वोत्तानं कृत्वा प्रोक्ष्य, दक्षिणाग्रं पवित्रं निधाय, प्राचीनावीती अप आनयन्नाह

— "आम आगच्छन्तु पितामहप्रपितामहवृद्धप्रपितामहा देवयानान्त्समुद्रान्त्सतिलान्त्सवर्णान्। अस्मिन्यज्ञे सर्वकामान् लभन्तेऽक्षीयमाणमुपदुह्यन्ताम्॥ इमाः पितामहप्र० वृद्धप्र०महेभ्यो वो गृह्णामि" इति। अपोध्दृत्य पवित्रं तिलानावपति "तिलोऽसि० स्वधयेहीमान्पितामहप्र०वृ०महान्प्रीणयाहि नः स्वधा नमः" इति। तिरः पवित्रं मध्वानयति—"मधुवाता० भवन्तु नः" इति तिसृभिः प्रतिमन्त्रम्। सर्वाभिरङ्गुलीभिः समुदायुत्याऽभिमृशाति— "सोमस्य० दिद्योन्मा पाहि" इति। तस्मिन्यत्किञ्चिदापतितं स्यात्तदङ्गुष्ठेन महानाम्न्या चोपसङ्गृह्य नैर्ऋत्यां दिशि निरस्यति— "अवष्टा दन्दशूका निरस्तं नमुचेः शिरः" इति। अप उपस्पृश्य पुनरेवाऽभिमृशति- "शन्नो देवी० स्रवन्तु नः" इति। "हिरण्यगर्भः० विधेम" इति हिरण्यक्षेपणादि दर्भप्रच्छादनान्तं देवपात्रवत्कृत्वा 'अर्घ्यपात्रं सम्पन्नम्' इत्युक्त्वाऽथ प्रेतार्थमुत्तरत एकोद्दिष्टवत् स्थण्डिलोल्लेखनादि लौकिकाऽग्निं प्रतिष्ठाप्य, प्रतिष्ठिताऽभिधारणान्तं कृत्वा तिलोदकपात्रे "आम आगच्छतु प्रेतो० लभतेऽक्षीयमाणमुपदुह्यताम्, इमाः अमुकप्रेताय वो गृह्णामि" इति तिरः पवित्रमप आनीयाऽपोध्दृत्य पवित्रं तिलानावपति—"तिलोऽसि०प्रत्नस्वधयेहि प्रेतमिमान् लोकान् प्रीणयाहि नः स्वधा नमः" इति। तिरः पवित्रं मध्वानयतीत्यादि पुनरभिमर्शनान्तं कुर्यात्॥ अथ भोजनस्थानेष्वासनेषु च ससिकततिलान्विकिरति-" अपहता० यत्रैषां गतं मनः" इति ('यत्राऽऽसां गतं मनः' इति स्त्रीणाम्)। प्रेतस्थाने — 'यत्रास्य गतं मनः' ('यत्रास्याः' इति स्त्रियाः) अद्भिरवोक्षति— 'उदीरतामवर उत्परासः० हवेषु' (स्त्रीणां— 'मातरो हवेषु' इति)। प्रेतस्थाने— "उदीतामवर उत्पर उन्मध्यमः प्रेतः सोम्यः। असुं य इयायाऽवृक ऋतज्ञः स नोऽवतु प्रेतो हवेषु" इति। (स्त्रियाश्चेत् "उदीतामवरोत्परोन्मध्यमा प्रेता सोम्या।

---

१. पात्रत्रयपक्षे 'पितामहेभ्यो वो गृह्णामि। प्रपिता० मि। वृद्धप्रपि० मि। इति पृथक्पृथङ्मन्त्रेण गृह्णीयात्॥

अस्तुं ये याया ऽवृकर्तज्ञा सा नोऽवतु प्रेता हवेषु" इति )। गायत्र्या पाकादीन्प्रोक्ष्य "श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तये " इति विज्ञाप्य 'आवाहयिष्ये' इति पृष्ट्वा 'आवाहय' इत्यनुज्ञातः— आगच्छन्तु महाभागा विश्वेदेवा महाबलाः । ये ह्यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥ विश्वेदेवास आगत शृणुताम इमᳪ हवम् । एदं बर्हिर्निषीदत ॥ विश्वेदेवाः शृणुतेमᳪहवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥ कामकालसंज्ञकान्विश्वान्देवानावाहयामि " इति यवाक्षतैर्विश्वान्देवानावाह्य, निरङ्गुष्ठं हस्तं गृहीत्वा "ॐ क्षणः क्रियताम्" "प्राप्नोतु भवान्" इति क्षणं ग्राहयति । "ॐ तथा, प्राप्नवानि" इति प्रतिवचनम् । विश्वेदेवहस्ते उदगग्रं पवित्रं निधाय यवोदकपात्रादुद्धरण्याऽर्घ्यजलमादाय "या दिव्या आपः० स्योना भवन्तु ॥ कामकालसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहा नमः, इदं वो अर्घ्यं" इत्यर्घ्यं दत्वा "युवा सुवासाः० देवयन्तः ॥ कामकाल० विश्वेभ्यो देवेभ्यः स्वाहा नमः, आच्छादनार्थे इदं वो वस्त्रम्" इति वस्त्रम् । एवमेवोपवीताऽलङ्कारगन्धाक्षतपुष्पधूपदीपादीन्यथोपपादं दत्वा पुनः पूर्ववदर्घ्यं दद्यात् ॥ अथ प्राचीनावीती वामाङ्गुष्ठोपकनिष्ठिकाभ्यां भुवं स्पृष्ट्वा जपति — "ये पार्थिवासः पितरो येऽन्तरिक्षे ये दिवि ये वाऽमृता बभूवुस्तेऽस्मिन्यज्ञे समवयन्ताम्" इति । 'पितॄनावाहयिष्ये, आवाहय' इत्यनुज्ञातः "आयात पितरः सोम्या गम्भीरैः पथिभिः पूर्वैः । प्रजामस्मभ्यं ददतो रयिश्च दीर्घायुत्वञ्च शतशारदञ्च ॥ पितामहप्रपितामहवृद्धप्रपितामहानावाहयामि" इति तिलैरावाह्य, क्षणं ग्राहयित्वा, स्वधापात्रादुद्धरण्याऽर्घ्यजलमादाय "या दिव्या आपः० भवन्तु ॥ पितामह० प्र० वृ० महेभ्यः स्वधा नमः, इदं वो अर्घ्यम्" इत्यर्घ्यं दत्वा, आच्छादनादि पुनरर्घ्यान्तं कृत्वा, प्रेताऽऽवाहनादि पुनरर्घ्यान्तमेवमेव कुर्यात् ॥ अथाऽग्नौ करिष्यामि, इति पृष्ट्वा, 'कुरुष्व' इत्यनुज्ञातः, दक्षिणाऽग्नेः पश्चादुपविश्य यज्ञोपवीती "जुषस्व नः० सूर्यस्य" इत्युपस्थानपूर्वकं परिषेकादि चरूत्सेकप्रायश्चित्तान्ते

उभयं चरुमाप्याय्य वैश्वदेवचरुं मेक्षणेनोपहत्य 'कामकालसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहा' इति द्विर्हुत्वा। कामकाल० विश्वेभ्यो देवेभ्य इदं० ॥ अथ प्राचीनावीती पञ्च स्रुवाहुतीर्जुहोति—"याः प्राचीः सम्भवन्त्याप उत्तरतश्च याः। अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितामहाद्दधे स्वधा नमः स्वाहा ॥ पितामहायेदं० ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवा। दिग्भिरनन्ताभिरूतिभिरन्तरन्यं प्रपितामहाद्दधे स्वधा नमः स्वाहा ॥ प्रपितामहायेदं० ॥ अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः ससन्धिकैः। अर्धमासैश्च मासैश्चान्तरन्यं वृद्धप्रपितामहाद्दधे स्वधा नमः स्वाहा ॥ वृद्धप्रपितामहायेदं० ॥ यन्मे पितामही प्रलुलोभ चरत्यननुव्रता। तन्मे रेतः पितामहो वृङ्क्तामन्या भूरन्योऽवपद्यताᳲ स्वधा नमः स्वाहा ॥ पितामहायेदं० ॥ यद्वः क्रव्यादङ्गमदहंल्लोकाननयत्प्रणयञ्जातवेदाः। तद्वो अहं पुनरावेशयाम्यरिष्टास्सर्वैरङ्गैस्सम्भवत पितरः स्वधा नमः स्वाहा ॥ समस्तपितृभ्य इदं०" ॥ अथ दर्व्यां द्विरुपस्तीर्य पितृपात्रस्थं चरुं सकृदवदाय द्विरभिघार्य प्रत्यज्य पुरस्तात्स्रुवाहुतिं हुत्वा, जुहोति—"सोमाय पितृमते शुष्मिणे जुहुमो हविः। वाजिन्निदं जुषस्व नः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा" सोमाय पितृमत इदं० ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, पुनर्दर्व्यां द्विरुपस्तीर्य सकृच्चरुमवदाय द्विरभिघार्य प्रत्यज्य पुरस्तात्स्रुवाहुतिं हुत्वा जुहोति— "अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे। वैवस्वतेदमद्धि नः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा" यमायाङ्गिरस्वते पितृमत इदं०॥ एवमेव पुनरवदाय "यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः। प्रदेवेभ्यो वह हव्यं पितृभ्यश्च स्वजा कव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा" अग्नये कव्यवाहनायेदं०॥ अथाऽपूपमष्टधा विच्छिद्य त्रीण्यवदानानि एवमेव मन्त्रत्रयेण हुत्वा, स्विष्टकृदर्थमुभयतः सकृत्सकृच्चरुमवदाय द्विरभिघार्य बर्हिषि सादयित्वा, शेषमोदनं यवागूतिलाज्यैः समुदायुत्यावदानधर्मेणावदाय जुहोति—"पितामहेभ्यः स्वधा नमः स्वाहा। प्रपितामहेभ्यः स्वधा० हा। वृद्धप्रपि० हा। पितामहीभ्यः स्व० हा। प्रपितामहीभ्यः० हा। वृद्धप्रपितामही० हा। मातामहेभ्यः स्व० हा। मातुः पितामहे० हा।

मातुःप्रपि० हा। मातामही० हा। मातुःपितामही० हा। मातुःप्रपि० हा। आचार्येभ्यः स्व० हा। आचार्यपत्नीभ्यः० हा। गुरुभ्यः स्व० हा। गुरुपत्नीभ्यः० हा। सखिभ्यः स्व० हा। सखिपत्नीभ्यः० हा। ज्ञातिभ्यः० हा। ज्ञातिपत्नीभ्यः स्व० हा। अमात्येभ्यः० हा। अमात्यपत्नीभ्यः०। सर्वेभ्यः०। सर्वाभ्यः स्वधा नमः स्वाहा" इति २४॥ यथालिङ्गं त्यागः॥ एवं चतुर्विंशत्याहुतीर्हुत्वा "अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा" इति स्विष्टकृतञ्च हुत्वा, (अग्नये कव्यवाहनाय स्विष्टकृत इदं०) उपवीती मेक्षणं प्रहृत्य सꣳस्रावं हुत्वाऽन्तःपरिधि बहिःपरिधि सङ्क्षाळनं निनीय अथोत्तराग्निमपसव्यं परिषिच्य समिधमाधाय व्याहृतीर्हुत्वा दर्व्या-मुपस्तीर्य तिलाज्यमिश्रमन्नमपूपञ्च सकृदवदायाऽभिघार्य प्रत्यज्य दक्षिणतो भस्ममिश्रानङ्गारान्निरुह्य तेषु पुरस्तात्स्रुवाहुतिं हुत्वा जुहुयात्— "प्रेतायाऽमुकगोत्रायाऽमुकशर्मणे यमाय च स्वधा नमः स्वाहा" इति। उपरिष्टात्स्रुवाहुतिं हुत्वा पुनरवदाय पुरस्तात्स्रु-वाहुतिं हुत्वा "अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा" इति दक्षिणार्धपूर्वार्धे स्विष्टकृतमुपरिष्टात्स्रुवाहुतिं च हुत्वा मेक्षणप्रहरणादि सङ्क्षाळननिनयनान्तं कुर्यात्॥ अथ सदर्भक्लृप्तेषु भोजनपात्रेषु तत्तद्धुतशेषमन्नमपूपं व्यञ्जनादिकञ्च परिविष्य दर्भैः प्रतिच्छाद्य विश्वेषां देवानां प्रेतस्य पितामहादीनाञ्चान्नप्रोक्षणपरिषेचनाभिमर्शनादिकं प्रेतस्यैकोद्दिष्टवत् पितामहादीनां पार्वणवत् कृत्वाऽऽपोशनं दत्वा 'श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि' इत्यादिभिर्भुञ्जानान्समीक्ष्य 'यथासुखं जुषध्वम्' इति ब्रूयात्। एतत्काले स्वधायुक्तान्राक्षोघ्नान्त्रैऋतान्पित्र्यान्वैष्णवानन्यांश्च पवित्रमन्त्रान्श्रावयेत्। तेषु भुक्तवत्सु तृप्तिप्रश्नं विकिरमुच्छिष्टपिण्ड-

१. पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितामहप्र० त्र० महानां क्षेष्ठाः अमुत्रामुष्मिल्लोके, प्रेतस्थाने— "ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जु०मा प्रेतस्य क्षेष्ठाः" इत्यादिमन्त्रं अत्र कुशबद्धप्रवेशनपक्षे केवलमुच्चारयन्भावयेत्॥

दानञ्च कृत्वोत्तरापोशनं दत्वा हस्तप्रक्षाळनान्ते तानाचमय्य स्वदितवाचनं तत्तत्पात्रात्पूर्ववदर्घ्यदानं शुद्धोदकसौमनस्यताम्बूल-दक्षिणादिदानञ्च कृत्वाऽक्षय्यं वाचयित्वा ( यज्ञोपवीती ) अभिवाद्य भोजनपात्राणि चालयेत् ॥ अथोत्तराग्नेर्दक्षिणतो दक्षिणाग्रान् दर्भान् संस्तीर्य, तेषु " मार्जयताममुक० प्रेतः " इति तिलोदकं दत्वाऽन्नशेषेण पिण्डं रम्भामुकुलवत्कृत्वा " अमुकगोत्राय० अमुष्मै प्रेतायाऽयं पिण्ड उपतिष्ठतु " इति दत्वा ( परिभाषासूत्रे-पिण्डत्रयं वा दद्यादिति सूचितम् ॥ धर्मसूत्रेऽपि अष्टकामासिकश्राद्धव्यतिरिक्तश्राद्धे अग्नौकरणहोमे आहुतित्रयं पिण्डदानेऽप्यर्थात्पिण्डत्रयमुक्तम् ) पिण्डोपरि तिलोदकं, अञ्जनाऽभ्यञ्जनवासांसि च दत्वा संक्षाळनेन ' तृप्यस्व ' इत्यपसव्यं परिषिच्य दक्षिणां दत्वाऽक्षय्यं वाचयित्वा सव्येनाऽभिवाद्य अपसव्यं स्वधां वाचयित्वोत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्य उत्तराग्नौ व्याहृतिभिराज्यं हुत्वा दर्भान्दर्वीञ्च प्रहृत्याग्निमपसव्यं परिषिच्य समिधमाधायोपस्थाय होमं समापयेत् ॥ अथ दक्षिणाऽग्नेर्दक्षिणतो दक्षिणाग्रान्दर्भान्त्सं-स्तीर्य, तेषु " मार्जयन्तां पितामहाः " इत्यादिभिस्तिलोदकं दत्वाऽन्नशेषैः " पितामहेभ्यः अमुकशर्मभ्योऽमुकगोत्रेभ्यो वसुरूपेभ्योऽयं पिण्डः स्वधा नमः, प्रपितामहेभ्यः० " इत्यादिभिश्चतुर्विंशतिपिण्डान्दद्यात् ॥ पिण्डानामुपरि पूर्ववन्मार्जयित्वा ( भूमौ लेपं निर्मार्ष्टि ) अञ्जनाऽभ्यञ्जनवासाꣳसि दद्यात् ॥ अथ पिण्डार्घ्यसंयोजनम्— " अमुकस्य० प्रेतस्य प्रेतत्वविमुक्त्या तत्पित्रादिभिः सह समानोदकत्वसपिण्डतासिद्धिद्वारा च वस्वादिपितृत्वप्राप्त्यर्थं प्रेतार्घ्योदकं पितामहाद्यर्घ्योदकैः प्रेतपिण्डञ्च पितामहादिपिण्डैः संयोजयिष्ये " इति विज्ञाप्य ' संयोजय ' इत्यनुज्ञातः, अर्घ्यपिण्डसंयोजनाधिकारसिध्यर्थं कृच्छ्रत्रयप्रत्याम्नायहिरण्यं दत्वा ' अधिकारसिद्धिरस्तु ' इति वाचयित्वा प्रेताऽर्घ्योदकं पितामहाद्यर्घ्योदकेषु निनयति— " मधुवाता० भवन्तु नः ॥३॥ सङ्गच्छध्वꣳ

संवदध्वं । सं वो मनाꣳसि जानताम् । देवा भागं यथा पूर्वे॑ । सञ्जानाना उपासत " इति ॥ त्रिगुणीकृतरज्वा प्रेतपिण्डं त्रिधा विभज्य पितामहादिपिण्डत्रये संयोजयति[1] — "समानो मन्त्रः समितिः समानी । समानं मनः सहचित्तमेषाम् । समानक्रेतो अभिसꣳरभध्वम् ॥ संज्ञानेन वो हविषा यजामः ॥ समानी व आकूतिः ॥ समाना हृदयानि वः ॥ समानमस्तु वो मनः ॥ यथा वः सु सहा संति " इति द्वाभ्याम् । पिण्डत्रयं दृढं कृत्वोपतिष्ठते —" ये समानाः समनसः० कल्पताम् ॥ ये सजाताः समनसः० शतꣳ समाः " इति द्वाभ्याम् । " एष वोऽनुगतः प्रेतः पितृसामान्यमाप्तवान् । शिवमस्त्विह शेषाणां जायन्तां चिरजीविनः ॥ अनेन प्रतिगृह्णन्तु पितरश्च स्वधाऽमृतम् । प्रीणन्तु च सहानेन तथा पिण्डोदकाः क्रियाः " इति प्रार्थ्य गन्धादिभिरभ्यर्च्याऽपूपादिकं ताम्बूलञ्च निवेद्य षड्भिर्नमस्कारैर्विपर्यासमुपस्थाय " वीरम्मे पितरः० पितामहाः० प्रपितामहाः० वृद्धप्रपितामहा दत्त पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्त " इत्यादिचतुर्भिः प्रार्थ्य अर्घ्यपात्रोदकं " अमुकगोत्र० शर्मन् पितृभूत मम पितः ( तव ) पितृभिः पितामहैः प्रपितामहैः सहैतत्ते तिलोदकम् " इति पिण्डानामुपरि त्रिर्निषिच्य शेषं चरुस्थाल्यां निनयेत् । अथ स्थालीसंक्षाळनेन त्रिरप्रदक्षिणं परिषिञ्चति —" ऊर्जं वहन्तीरमृतं घृतं दधि मधु पयः कीलालं परिस्रुतꣳ स्वधास्थ तर्पयत मे पितॄꣳस्तृप्यत तृप्यत तृप्यत " इति ॥ दक्षिणतः स्थालीं न्युब्ज्योत्तानीकृत्य प्रोक्षेत् ॥ अथ ब्राह्मणान्नमस्कृत्य " आ मा वाजस्य० गम्यात् ॥ दातारो नोऽभिवर्धन्तां० " इत्यादि शेषमनुज्ञाप्याऽऽशिषो वाचयित्वा " उत्तिष्ठत पितरः० " इति पितृपितामहप्रपितामहवृद्धप्रपितामहानुद्वास्य "यन्तु पितरो यथालोकं मनसा जवेन । परेत पितरः० मदन्ति" इति प्रसाद्य " मनोन्वा०

1. कुंभकोणप्रयोगे — पिण्डसंयोजनात्पूर्वं वैतरणीगोदानं, दशदानं नौदानं, शय्यादानं पददानादिकञ्चोक्तम् ॥

सचेमहि " इति मन आहूय " वाजे वाजेऽवत० " इति विश्वान्देवानुद्वास्य पिण्डांश्चोद्वास्य " प्रजापते न त्वदेतान्यन्यो० रयीणाम् " इत्यग्निमभिप्रपद्य " यदन्तरिक्षं० मामनेनसम् " इत्यग्निमुपस्थाय प्रायश्चित्ताज्याहुत्यादि होमशेषं समाप्य " यस्य स्मृत्या " इति कर्मसमर्पणं कुर्यात् ॥ अथ पिण्डानप्सु प्रक्षिप्य स्नात्वा गृहं गच्छेत्। अत्र श्राद्धे तिलतर्पणं निषिद्धम्॥ धर्मसिन्धौ निर्णयसिन्धौ च —" वृद्धिश्राद्धे सपिण्ड्याञ्च प्रेतश्राद्धेऽनुमासिके । संवत्सरविमोके च न कुर्यात्तिलतर्पणम् " इति ॥

मातुः सपिण्डीकरणप्रयोगः ॥ सङ्कल्पे—अमुकगोत्रायाः अमुकदायाः मातुः प्रेतायाः प्रेतत्वविमुक्त्या वस्वादिपितृत्व-प्राप्त्यर्थं अस्मत्पितामहीप्रपितामहीवृद्धप्रपितामहीभिः सह समानोदकसपिण्डतासिध्यर्थञ्च सपिण्डीकरणश्राद्धं सदैवं साग्नौकरण-मन्त्रेन हविषेत्यादि ब्रूयात् ॥ पिण्डषट्क ( चतुर्विंशतिपिण्ड ) पक्षे पित्रादीनेव वृणुयात् । जीवत्पितृकश्चेत्पितामहादीनेव वृणुयात् । तेषामेवाऽऽवाहनाऽर्घ्यग्रहणहोमभोजनानि कुर्यात् । पिण्डत्रयपक्षे पितामह्यादीनेव वृणुयात्, तासामेवाऽऽवाहनादिकं कुर्यात् । 'अमुकप्रेतायै० गोत्रायै ते गृह्णामि' इत्याद्येकोद्दिष्टवत्प्रेतार्घ्यकल्पनम् । अर्घ्यसंयोजनं पित्रादिवरणे पित्राद्यर्घ्येषु, प्रेतपिण्ड-संयोजनन्तु पितामह्यादिपिण्डेषु कुर्यात् । पितामह्यादिवरणे प्रेताया अर्घ्यं पिण्डञ्च पितामह्यादीनामेवार्घ्येषु पिण्डेषु च संसृजेत् । 'अमुकगोत्रे अमुकदे मम मातस्तव श्वश्र्वादिभिः सहैतत्ते तिलोदकम्' इति तिलोदकदानम् ॥ अन्यत्सर्वं पूर्ववत् ॥

पाथेयश्राद्धप्रयोगः ॥ सपिण्डीकरणान्ते तैलाभ्यङ्गपूर्वकं तिलामलकादिना स्नात्वा 'प्रजापतिः प्रीयताम्' इति पुण्याहं वाचयेत् ॥ द्वादशेऽह्नि त्रयोदशेऽह्नि वा देशकालौ सङ्कीर्त्य, अस्मत्पितुः० गोत्रस्य० शर्मणः प्रेतलोकात्पितृलोकगमने पथि समस्तसुखसम्पत्यर्थं अस्मत्पितृपितामहप्रपितामहानां० रूपाणां पाथेयश्राद्धं सदैवं सपिण्डं पार्वणविधिना करिष्ये, इति सङ्कल्प्य

क्षणपाद्यासनादिसर्वं पार्वणवत् ॥ अपि वा 'पाथेयश्राद्धं आमेन करिष्ये' इति सङ्कल्प्य, ब्राह्मणान्सम्पूज्य स्थाल्यादिकं भोजनचतुर्गुणपरिमिताऽऽमेन प्रपूर्य गायत्र्या प्रोक्ष्य "अस्मत्पितुः० गोत्रस्य० शर्मणः प्रेतलोकात्पितृलोकगमने पथि क्षुण्णिवृत्या समस्तसुखसम्पत्यर्थं इदमामान्नदानं सोपस्करं दक्षिणासहितं सम्प्रददे, न मम" इति दद्यात् ॥ केचित्तु पाथेयश्राद्धे— प्रथमदिनप्रभृतिधृतोत्तरीयवस्त्रदानं च कुर्वन्ति ॥

## ॥ श्रवणभोजनादिकृत्यम् ॥

द्वादशेऽहनि— आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ; "अमुकगोत्रस्य० शर्मणः पितुर्जन्मप्रभृतिमरणपर्यन्तमाचरितस्य सुकृतस्य धर्मराजाग्रे कथयितॄणां श्रवणानां प्रीत्यर्थं महाविष्णुप्रीत्यर्थञ्च अन्नदानं करिष्ये" इति सङ्कल्प्य त्रयोदशसङ्ख्याकान्ब्राह्मणान्सम्पूज्य यथाविभवं भोजयित्वा तेभ्य उदकुम्भवस्त्रदक्षिणाऽऽदि दत्वाऽऽशिषो गृह्णीयात् ॥ ॥ अद्यप्रभृति वैश्वदेवब्रह्मयज्ञनित्यतर्पणादि कुर्वीत ॥ पैतृमेधिककर्मान्ते आचार्येण कर्तुर्नववस्त्रप्रदानमङ्गलार्तिक्याऽऽशीर्वादाऽभिनन्दनं, कर्त्रा आचार्याय वस्त्रफलताम्बूलपैतृमेधिकदक्षिणादिभिरभ्यर्हणं कार्यम् ॥ ततः सर्वाऽमङ्गलनिरसनद्वारा समस्तमङ्गलाऽवाप्त्यर्थं उदकशान्तिः कार्या ॥ चतुर्दशेऽह्नि वैकुण्ठसमाराधनं, तत्तत्काले ऊनमासिकादि ऊनाऽऽब्दिकपर्यन्तं तानि तानि मासिकानि वत्सरस्याऽन्तिमे दिने ( वर्षान्तश्राद्धं ) अब्दपूर्तिश्राद्धञ्च कुर्यात् ॥ मृततिथौ वार्षिकश्राद्धं कार्यम् ॥

---

१. 'तत्र प्रथमेऽब्दे वर्षान्तसापिण्डनपक्षे मृताहात्पूर्वेऽह्नि सपिण्डनं अब्दपूर्तिश्राद्धञ्च कृत्वा परेद्युर्वार्षिकश्राद्धञ्च कुर्यात्' इति स्मृत्यर्थसारे ॥

# ॥ षोडश मासिकश्राद्धानि ॥



तेषां कालाः प्रोक्ता वैद्यनाथीये—"एकादशेऽह्नि मास्यूने आद्ये षष्ठे तथाऽन्तिमे । प्रतिमासं मृतेऽह्नयब्दं स्युस्त्रिपक्षे च षोडश" ॥ मरणादेकादशेऽहनि १, आद्ये मास्यूने २, षष्ठे मास्यूने ३, अन्तिमे द्वादशे मास्यूने ४, प्रतिमासं ( द्वितीयादि ) मासे मासे मरणदिने ११, त्रिपक्षे ( तृतीयपक्षे ) १ ॥ अब्दं ( संवत्सरपूर्तिपर्यन्तम् ) एवं षोडश मासिकश्राद्धानि स्युः। अर्थात्–आद्यमासिकं ऊनमासिकं, द्वितीयमासिकं, त्रैपक्षिकमा०, तृतीयमा०, चतुर्थमा०, पञ्चममा०, षष्ठमा०, ऊनषाण्मासिकं, सप्तममा०, अष्टममा० नवममा०, दशममा०, एकादशमा०, द्वादशमा०, ऊनाब्दिकं चेति षोडश स्युरित्यर्थः । अथाऽऽशौचाद्यन्तरितमासिककालः—वैद्यनाथीयोक्तः– "आपदाद्यकृतं यत्तत्कुर्यादूर्ध्वमृताऽहतः" इति । आदिशब्देनाऽऽशौचोपसङ्ग्रहः। आपदादिना अकृतं मासिक-मूर्ध्वमृताहतः, उत्तरमासमृतदिने कुर्यादित्यर्थः । उत्तरमासमृतदिने विधानादूनमासिकदिने न कार्यमिति पर्यवस्यति। अन्तरित-मासिकमुत्तरमासमृततिथौ तन्त्रतः कुर्यान्न पृथक्पाकहोमादि, पिण्डदानन्तु पृथगेवेत्युक्तं भवति । आशौचाद्यन्तरितान्यून-मासिकानि परमासे दर्शादौ कार्याणीति केचिदाहुः । अपरे तु "ऊनानां नापकर्षः स्यात्पुनरप्यपकर्षणे उत्कर्षश्चाऽपि न भवेत्"। उत्कर्षो नाऽस्ति किन्तु लोप एवेत्याहुः। अन्ये तु "ऊनान्यूनेषु कुर्वीत" द्वित्रिदिनैरूनेषु दिवसेषु पृथगेव कुर्यान्न मासान्तरे योजयेदित्यप्याहुः ॥ पितृमेधसारे—"त्रिपुष्करेषु नन्दासु दर्शे भार्गववासरे। चतुर्दश्याञ्च नो तानि कृत्तिकासु त्रिपुष्करे" इति वर्ज्यविशेषः प्रोक्तः ॥ स्मृत्यन्तरे— "अलब्धाऽऽत्मीयसूत्रस्य श्राद्धान्तं परसूत्रतः। कुर्यात्सपिण्डीकरणं स्वसूत्रेणैव नान्यतः" इति ॥ यदा संवत्सरादर्वाक्सापिण्ड्यं कर्तुमिष्यते। आवर्तनं षोडशानां तदा कर्तव्यमेव हि॥

# ॥ मारीमसूरिकादिमरणे ॥

स्मृतिसङ्ग्रहे—"मारीमासूरिकाद्यैर्यदि भवति मृतिर्नैव दाहस्तदानीं न्यस्येद्देहं यथावद्दृढतरविमले तैलपूर्णे कटाहे। यावत्तद्व्याधिनाशस्तदुपरि दहनाद्युक्तकार्यं विदध्यान्नो शक्तौ गूहयेत्तं शुचि भुवि सलिले निक्षिपेत्तन्न शक्तौ ॥ प्रागग्निपक्षाद्युग-पक्षतो वा तदप्यशक्तौ निखनेद्धरायाम्। जलेऽप्यगाधे परिनिक्षिपेद्वा जीर्णे शरीरे गुणपक्षके तु ॥ पूर्वं त्रिपक्षादुभयोः स्वपित्रोः पुनर्विधौ देवसुरारिगुर्वोः। न मूढदोषोऽस्ति न चाधिमासस्तेषां परेषामुदितोऽस्ति दोषः॥ अस्थ्ना पलाशवृन्तैर्वा दग्ध्वा तेन शरीरिणम्। मातापित्रोर्दशाहं स्यादन्येषान्तु त्रिरात्रकम् ॥ मृतं कर्तुः प्रमादेन संस्कारं न करोति यः ॥ दशाहाच्छुध्यते ज्ञातिः प्रारम्भे त्रिदिनं पुनः ॥ पिता पितामहो भ्राता पितृव्यस्तत्सुतः स्त्रियः। यावन्न संस्कृतिस्तेषामाशौचं तावदिष्यते ॥ प्रेते यन्मन्त्रहीने मृतदहनविधौ तन्मृताहादिशावं सापिण्डानां दशाहं पुनरपि च विधौ स्यात्त्रिरात्रञ्च तेषाम् ॥ एकोद्दिष्टन्न यावत्सुतसुततनयभ्रातृ-पुत्राङ्गनाद्यास्तावच्छुद्धाश्च न स्युः पितृविधिविषये देवकार्यं न कुर्युः ॥ पिता पितामहो भ्राता पितृव्यस्तत्सुतः सुतः। पौत्राश्च भ्रातृपुत्राश्च तेषां पत्न्यस्तथैव च ॥ एते स्वकीया विज्ञेयाः परकीयास्तथाऽपरे" ॥

मारीमसूरिकादि साङ्क्रामिकरोगादिना मरणे — तदानीं शवं तैलपूर्णे कटाहे विन्यसेत्। अशक्तश्चेत् — शुद्धभूमौ तूष्णीं निखनेत्, अपि वाऽगाधे जले निक्षिपेत् ॥ ततः सार्धमासं मासद्वयं वा हित्वा रोगशान्त्यनन्तरं शवमुद्धृत्य दहनादि कार्यम् ॥ तैलकटाहे निहितश्चेत् — शवमुद्धृत्य पञ्चगव्येन संस्नाप्य तूष्णीं दग्ध्वाऽस्थीनि सङ्गृह्य, यथाशक्ति कृच्छ्रं चरित्वा अस्थिसंस्कार-विधिना पैतृमेधिकं कुर्यात् ॥ निखननं कृतश्चेत् — पूर्वोक्तकालानन्तरं अस्थीन्युद्धृत्य शाखासंस्कारविधिना कर्म कुर्यात् ॥ जले

विसृष्टे पूर्वोक्तकालानन्तरं शाखासंस्कारं कुर्यात् । मातापित्रोः संस्कारविषये — गुरु-शुक्रमौढ्य-मलमासादि दोषो नाऽस्ति ॥ इतरेषान्तु — दिनादि संशोध्य संस्कारः कार्यः ॥ मरणकाले सपिण्डानां दशरात्रं संस्कारकाले त्रिरात्रञ्चाशौचम् ॥

## ॥ अस्थिसंस्कारः ॥

( बो. पि. सू. ३·७ ) आपद्युक्तं प्रेतविधानमेवं शस्त्रविषरज्जुजलाऽचलमारुततरुपाषाणहुताशनाऽनुच्छ्वासादिना मृतानां शरीरसंस्कारं वर्जयेत् ॥ देशान्तरमृते सङ्ग्रामहते व्याघ्रहते वा शरीरमादाय विधिना दाहयेत् ॥ अथ यद्येकाङ्गदर्शने पराङ्गस्य 'सप्तप्राणास्तदाश्रयाः' इति मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् । अस्थीन्याहृत्य तैः कृष्णाजिने पुरुषाकृतिं कृत्वा मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् । हस्तकौशलैः पृथिवीशरीरं कृत्वा मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् । यदि तावन्न विन्देत पलाशवृन्तानां त्रीणि षष्टिशतान्याहृत्य तैः कृष्णाजिने पुरुषाकृतिं कृत्वा मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् ॥ (बो. पि. सू. २·६ ) अथो एतत्परोक्षप्रेतस्य यजमानस्याऽस्थान्याहृत्य संस्कुर्यादिति कथमत्राऽहरणं विद्यत इति ॥ शिरस्तः प्रथमं गृहीत्वाऽथोरस्तोऽथो जठरतोऽथोरुबाहुभ्यामथ पत्त इति त्रयस्त्रिंशतमस्थानि गृह्णातीति ॥ विज्ञायते — 'त्रयस्त्रिंशत्पुरुषः' इति ॥ अथैतान्यस्थान्यद्भिः प्रक्षाळ्य कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नस्थानि सम्भरति — 'इन्द्रो दधीचो अस्थभिः' इत्येतेनानुवाकेन ॥ अत्र तयादेवतं करोति — 'तया देवतयाऽङ्गिरस्वद्ध्रुवासीद' इति ॥ अथ सूददोहसं करोति — 'ता अस्य सूददोहसस्सोमं श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वारोचने दिवः' इति ॥ दीर्घवंशे विग्रथ्याऽक्षारलवणाशिनो मृण्मयभोजना आहरन्ति ॥ तानि ग्राममर्यादायां निधायाऽग्नीनुपनिर्हृत्य पैतृमेधिकं कर्म प्रतिपद्यते ॥ नाऽसति यजमाने ग्राममर्यादा-

मतिहरेयुः ॥ यद्यतिहरेयुरग्नयो लौकिकाः सम्पद्येरन् । विज्ञायते—' प्रवसत्यवसति यजमानोऽग्निभ्यः परिदाय गृहानेति तस्माद्ग्राम-मर्यादां नाति व्रजन्ति ' इति ॥ ( बो. पि. सू. १. १३. ४ ) अथ यदि दग्धस्स्यादस्थान्याहृत्याऽन्तर्वेदि शरीराणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥

अस्थिसंस्कारप्रयोगः ॥ देशान्तरमृतस्य दुर्मृतस्य वा प्रत्यक्षशवस्य मन्त्रवत्संस्कारकरणाऽसम्भवे वा तूष्णीं शवं दग्ध्वा तस्य शिरस्तः पञ्च उरस्तः पञ्च जठरतः पञ्च हस्ताभ्यां त्रीणि त्रीणि ऊरुभ्यां त्रीणि त्रीणि पादाभ्यां त्रीणि त्रीणि, अथवा शिरस्त एकमन्येभ्यश्चत्वारि चत्वारि, एवं नव स्थानेभ्यस्त्रयास्त्रिंशदस्थीनि. अशक्तौ यथासम्भवं वा गृहीत्वा दर्भादिभिर्बध्वा दीर्घवंशे विग्रथ्य अक्षारलवणाशना विनियमेनाऽऽहृत्य ग्राममर्यादायां निधाय दशादिनाभ्यन्तरे संस्कारं कुर्यात्— ' अमुकगोत्रस्य० शर्मणः अमुकस्याऽस्थिभिः पुरुषाऽऽकृतिं करिष्ये' इति सङ्कल्प्य कृच्छ्रं चरित्वा अस्थान्यद्भिः प्रक्षाळ्य कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽ-स्तीर्य तत्र दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु त्रयस्त्रिंशदस्थीनि शिरःप्रभृति स्थलेषु ( ग्रहणक्रमेण ) निधाय स्पृष्ट्वा जपति— ' इन्द्रो दधीचो अस्थभिः० ववक्षुरुग्रो अस्तृतः ' इत्यनुवाकम् । तयादेवतं करोति—' तया देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीद ' इति । सूददोहसं करोति—' ता अस्य सूददोहसः० रोचने दिवः ' इति मृतं पुरुषरूपं भावयित्वा मधुना सर्पिषा वाऽभ्यज्य कर्णमन्त्रजपादि सर्वं कुर्यात् । सङ्कल्पे ' अमुकगोत्रस्य० प्रेतस्याऽस्थिप्रतिकृतिं ( तत्तदुक्तेन ) अमुकाऽग्निना पैतृमेधिकविधिना संस्करिष्यामि ' इति विशेषः । सद्यः सञ्चयनम् ॥ ॥ यदि सद्ग्रामादौ, अरण्ये व्याघ्रादिना वा मृतस्य केवलं शिर एव लभ्येत तच्छिर आहृत्य ' सप्तप्राणास्तदाश्रयाः ' इति मधुना सर्पिषा वाऽभ्यज्य कर्णसूक्तादि सर्वं पैतृमेधिकं कुर्यात् ॥

## ॥ शाखासंस्कारविधिः ॥



( बो. पि. सू. १·१३·५–७ ) अथ यद्यस्थानि न विन्देयुरन्तर्वेदि त्रीणि षष्टिशतान्याहृत्य पर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुः इति ॥ अथ यदि दिगेव प्रज्ञायते तां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्राहमाहूय पर्णत्सरूणामेव कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुः इति ॥ अथ यदि दिगेव न प्रज्ञायते इमां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्राहमाहूय पर्णत्सरूणामेव कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुः इति ॥ ( बो. पि. सू. ३·८ ) आहिताऽग्निश्चेत्प्रवसन् म्रियेत पुनस्संस्कारविधिं व्याख्यास्यामः– दर्भान्समान्संस्तीर्य तस्मिन्पलाशवृन्तैः पुरुषविकल्पं करोति चत्वारिंशता शिरः प्रकल्पयते। दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशतापञ्चाशतैकैकं बाहुं तेषामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते। सप्तत्यासप्तत्यैकैकं पादं तेषामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते। अष्टाभिश्शिश्नं द्वादशभिर्वृषणमित्येतानि प्रोक्ष्याऽथ भूमौ हिरण्यं निधायाऽरणी निधाय यां दिशं यजमानोऽगच्छत्तां दिशं प्रेक्षमाणो जपति—'उपावरोह जातवेदः' इति ॥ विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये पूर्णाहुतिं जुहोति—'सप्त ते अग्ने समिधस्सप्त जिह्वाः' इति ॥ अथ प्रेतसंस्कारमर्हतीत्याह भगवान्बोधायनः ॥

अथ प्रयोगः ॥ देशान्तरमृतस्य दुर्मृतस्य वाऽस्थ्नामलाभे पलाशवृन्तैः ( यज्ञियवृक्षसमिद्भिर्दर्भैर्वा ) पुरुषाकृतिं कृत्वा संस्कुर्यात् " अमुकगोत्रस्य० अमुकस्य पलाशवृन्तैः ( यज्ञियसमिद्भिर्दर्भैर्वा ) पुरुषाकृतिं करिष्ये " इति संकल्प्य कृच्छ्रं चरित्वा

यस्यां दिशि मृतस्तद्दिङ्मुखो दक्षिणामुखो वा प्राचीनावीती—कृष्णाजिने दक्षिणाग्रान्दर्भानास्तीर्य पुरुषाकृतिं कुर्यात्— चत्वारिंशता शिरः, दशभिर्ग्रीवां, विंशत्योरः, त्रिंशतोदरं, पञ्चचत्वारिंशता दक्षिणं बाहुं, पञ्चभिस्तदङ्गुलीः, पञ्चचत्वारिंशता वामं बाहुं, पञ्चभिस्तदङ्गुलीः, पञ्चषष्ट्या दक्षिणं पादं, पञ्चभिस्तदङ्गुलीः. पञ्चषष्ट्या वामं पादं, पञ्चभिस्तदङ्गुलीः, अष्टभिः शिश्नं, द्वादशभिर्वृषणं, इत्येवं षष्ट्युत्तरत्रिशतैस्तूष्णीं देहक्लृप्तिं कृत्वा मधुना सर्पिषा वाऽभ्यज्य कुशतरुणकैः प्रच्छाद्य "अमुकगोत्र अमुकशर्मन् अमुकप्रेत अस्यां प्रतिकृताविहि" इति त्रिवारं प्रेताह्वानं कृत्वा कर्णमन्त्रजपादि यथोक्तमग्निमुत्पाद्य "अमुकगोत्रस्य० प्रेतस्य शाखाप्रतिकृतिममुकाऽग्निना पैतृमेधिकविधिना संस्करिष्यामि" इति सङ्कल्प्य सर्वं कुर्यात् ॥ सद्यः सञ्चयनम् ॥ भस्माऽस्थिवत्सञ्चिनुयात्सद्यो मन्त्राञ्जपेत्तु वा ॥

## ॥ गर्भिणीसंस्कारविधिः ॥

(बो. पि. सू. ३·९) गर्भिण्यामन्तर्वत्न्यां म्रियेताऽत ऊर्ध्वं श्मशानं नीत्वा दहनं जोषयेत् ॥ तस्य चितामपरेण सव्येन वा प्रेतस्योदरं लिखेत्—'हिरण्यगर्भस्समवर्तताऽग्रे' इत्यनुलेखनम् । कुमारं दृष्टमनुमन्त्रयते—'जीवतु मम पुत्रो दीर्घायुत्वाय वर्चसे' इति ॥ अथ कुमारं स्नापयेयुर्हिरण्यमन्तर्धाय जीवता ग्राममायान्ति—'यस्ते स्तनश्शशयः' इति स्तनं प्रदाय तस्मिन्नुदरेऽज्यानीर्जुहोति—'शतायुधाय शतवीर्याय' इति पञ्च । 'प्रयासाय स्वाहाऽऽयासाय स्वाहा' इत्यनुवाकेन, 'प्राणाय स्वाहा, व्यानाय स्वाहा' इत्यनुवाकेन, 'पूष्णे स्वाहा, पूष्णे शरसे स्वाहा' इत्यनुवाकेन च । अथ सूच्याऽव्रणं कुर्यात्, प्रेतं चितामारोप्य विधिना दाहयेत् ॥ अष्टकाधेनुं नीलधेनुं (तिलधेनुं) भूमिधेनुमिति च दद्यात् ॥ प्रसिद्धमेकादश्यामेकोद्दिष्टं कुर्वन्ति ॥

अथ प्रयोगः ॥ षाण्मासादूर्ध्वं गर्भिणीमरणे कर्णमन्त्रजपादि यथोक्ताऽग्निमुत्पाद्य, दक्षिणायनमरणादि यथासंभवं प्रायश्चित्तं कृत्वा 'अमुकगोत्रां अमुकदां गर्भिणीं प्रेतां अमुकाऽग्निना पैतृमेधिकविधिना संस्करिष्यामि' इति सङ्कल्प्य परेयुवांसमित्यादि श्मशानं नीत्वा चिताकल्पनान्तं कृत्वा तत्पश्चादग्निं निधाय दर्भैरग्निं चिताञ्चाऽपसलैः परिस्तीर्य पात्रासादनादि स्रुक्सम्मार्जनान्ते चितायाः पश्चात्परिश्रिते देशे दक्षिणाशिरसं प्रेतां निधाय नाभेरुपरि वामपार्श्वे जलेन रेखां कृत्वा 'हिरण्यगर्भः० विधेम' इति क्षुरेण विदार्य जीवितं शिशुमनुमन्त्रयते —'जीवतु मम पुत्रो दीर्घायुत्वाय वर्चसे' इति। अथ तं शिशुं हिरण्यमन्तर्धाय संस्नाप्य गृहमानीय 'यस्ते स्तनश्शशयो० धातवेकः' इति यस्याः कस्याश्चित्स्तनं पाययित्वा सुरक्षितं कृत्वा पुनश्शवान्तिकमागत्य (शिशुर्यदि न जीवति तं घृतेनाऽभ्यज्य तत्रैव भूमौ निखनेत्) अथ शवं मृद्भस्मकुशवारिणा 'आपो हि ष्ठा' इत्यादिभिः संस्नाप्य तस्या उदरे स्रुवेणाऽऽज्याहुतीर्जुहोति—" शतायुधाय० विश्वा स्वाहा, इन्द्रायेदं० ॥ १ ॥ ये चत्वारः० सर्वे स्वाहा, देवभ्य इदं० ॥२॥ ग्रीष्मो हेमन्तः० स्याम स्वाहा, ग्रीष्मादिऋतुभ्य इदं० ॥ ३ ॥ इदुवत्सराय० अहता स्याम स्वाहा, इदुवत्सरादिभ्य इदं० ॥ ४ ॥ भद्रान्नः० स्योनस्स्वाहा, देवेभ्य इदं० ॥ ५ ॥ प्रयासाय स्वाहा (यथालिङ्गं त्यागः), आयासाय स्वाहा, वियासाय०, संयासाय०, उद्यासाय०, अवयासाय०, शुचे०, शोकाय०, तप्यत्वै०, तपते०, ब्रह्महत्यायै०, सर्वस्मै० ॥ १२ ॥ प्राणाय०, व्यानाय०, अपानाय०, चक्षुषे०, श्रोत्राय०, मनसे०, वाचे सरस्वत्यै०, पूष्णे०, पूष्णे शरसे०, पूष्णे प्रपथ्याय०, पूष्णे नरन्धिषाय०, पूषेऽङ्घृणये०, पूष्णे नरुणाय०, पूष्णे साकेताय० ॥ १३ ॥ "इति हुत्वा। सूच्या सूत्रेण जठरं सन्धाय (अव्रणं कृत्वा) वस्त्रेणाऽऽच्छाद्य प्रेतोदरविदारण-दोषनिवृत्त्यर्थं त्रिंशत्कृच्छ्रप्रत्याम्नायहिरण्यदानं अष्टकाधेनुतिलधेनुभूमिधेनुदानञ्च सूतकान्ते करिष्ये, इति सङ्कल्प्य (सूतकान्ते दद्यात्) प्रेतां चितामारोप्य तूष्णीं सुवर्णेन हस्तसम्मार्जनादि सर्वं पैतृमेधिकं कुर्यात् ॥

## ॥ कनिष्ठादिभिः प्रारब्धस्यौर्ध्वदेहिकस्यान्तरामुख्यकर्त्रागमे विधिः ॥

" मुख्यकर्त्राऽऽगमेऽन्यस्तु प्रवृत्तोऽपि क्रियां त्यजेत् ॥ ततस्तु कर्म कुर्वीत संस्कर्ता मुख्य एव तु ॥ पुनस्तिलोदकं पिण्डं नग्नप्रच्छादनं तथा । नवश्राद्धप्रदानादि सर्वं कर्म समाचरेत् ॥ दशाऽहकर्माण्यारब्धे संस्कारादौ कनीयसा । ज्येष्ठो यस्त्वन्तरा गच्छेत् सोऽस्य शेषं समापयेत् ॥ अन्येन यस्य संस्कारः कृतस्तस्यात्मजः पुनः । कुर्यादेव यथाशास्त्रमन्यथा किल्बिषी भवेत् ॥ पुनर्दहनमारभ्य श्राद्धान्तं पैतृमेधिकम् " ॥ ॥ कनिष्ठेन सोदरेण वा कृते दाहादिकृत्ये—आरब्धे सञ्चयात्पूर्वं परं वा आगतो ज्येष्ठपुत्रः कनिष्ठकृतस्य प्रेतकृत्यशेषं कुर्यात् । तत्र सञ्चयात्पूर्वमागतश्चेद्धुतकेशः सञ्चयनमतीतकालोदकपिण्डाश्चैकदा कृत्वा ततस्तात्कालिकपिण्डोदकनवश्राद्धाद्येकोद्दिष्टान्तं स्वस्वकाले कृत्वा द्वादशाहे सापिण्डनं च कुर्यात् । सञ्चयात्परमागतश्चेदतीतकालोदकपिण्डमात्रमेकदा दत्वा तात्कालिकपिण्डोदकाद्येकोद्दिष्टान्तं स्वस्वकाले कृत्वा श्रवणदिनमारभ्य दशाहाशौचमनुष्ठायानन्तरमावृत्ताऽऽद्यमासिकादीन्युक्तकाले कृत्वा त्रिपक्षादौ सापिण्डनं कुर्यान्न द्वादशाहे । तत्र तस्याऽऽशौचसद्भावात् ॥ ॥ अन्येन संस्कारे कृते सञ्चयात्पूर्वमागतः पुत्रः पुनर्दाहादि ( अस्थिदाहादि ) सर्वं कृत्वा दशाहशेषेण शुध्येत् । कनिष्ठेन कृते दाहे न पुनर्दाहः । सञ्चयादि सर्वं कृत्वा दशाहशेषेणैव शुध्येत् ॥ ॥ अत्र पुनर्दाहे चिताग्निनाशे — तदनुगतप्रायश्चित्तविधिनाग्निमुत्पाद्य पुनर्दहनविधिनास्थ्यादि संस्कृत्य एकादशाहे एकोद्दिष्टं द्वादशाहे सपिण्डीकरणं च कुर्यात् ॥ ॥ सञ्चयनात्परमागतेन पुत्रेण दाहादि न कार्यम् । अतीतपिण्डोदकदाननग्नप्रच्छादनादिकमवशिष्टदिनप्रेतकृत्यं च कार्यम् ॥ ॥ अन्येन कृते दाहे सञ्चयात्पूर्वमागतोऽपि पुत्रव्यतिरिक्तो मुख्यकर्ता पुनर्दाहं न कुर्यात् । सञ्चयनोदकाद्येव कुर्यात् ॥ ॥ सञ्चयात्परं मुख्यकर्तुरागमने, असपिण्डस्य पक्षिण्याशौचिनस्त्रिरात्राशौचिनश्च दाहकर्तुः

प्रेतान्नभोजने दशाहमाशौचमुदकदानं च कार्यम्। सञ्चयात्पूर्वं मुख्यकर्तुरागमनेऽसपिण्डस्योदकदानमाशौचं च नास्ति॥ ॥ दशाहमध्ये दर्शसंक्रान्तिसंभवे-वैद्यनाथीये—"दशाहमध्ये संक्रान्तिर्दर्शो वाथ भवेद्यदि। तोयं पिण्डं समाप्येत तद्दिने चौरसेतरैः"॥ पुत्रव्यतिरिक्तः संस्कर्ता संक्रान्तौ दर्शे वा दशमदिनान्तं दीयमानं तिलोदकं पिण्डं नवश्राद्धं च समापयेत्। प्रभूतबलिं पाषाणोत्थापनं शान्तिहोमं च दशमेऽहन्येव कुर्यादित्युक्तम् ॥ ॥ शाखासंस्कारोत्तरं शवलाभे—शाखासंस्कारावशिष्टकाष्ठैस्तं दहेत्। तादृशकाष्ठालाभे लौकिकाग्निना दग्ध्वा तदस्थीनि महाजले क्षिपेत्। शाखासंस्कारोत्तरमस्थिलाभेऽप्येवमेव ॥

## ॥ अथ नारायणबलिसंस्कारः ॥

(बो. गृ. शे. सू. ३·२१) चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि॥ दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम्॥ विषास्त्ररज्जुपाषाणदेशान्तरमृतेऽपि वा॥ अभिशस्तसुरापात्मत्यागिनां द्विजहतानामन्येषाञ्च द्वादशवर्षाणि त्रीण्येकं वा यत्र मरणं यस्य तत्र तत्र कुर्वीत॥ असंनिहितानां पालाशग्रमाहृत्य पर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा होतृकल्पेन वा पितृमेधेन वा संस्कुर्यात्॥ अथ प्रयोगमन्त्रानपोद्धृत्य पुरुषसूक्तस्य प्रत्यृचं तत्तन्मन्त्राणां स्थाने पृथक्पृथक्प्रयोगो भवति॥ अपि वा तूष्णीं सर्वं क्रियेत॥ याम्यसूक्तेनोपोषणम्॥ पौरुषेणोपस्थानम्॥ समानमत ऊर्ध्वम्॥ तीर्थे स्नात्वा प्रेतायोदकक्रियां कृत्वा नामगोत्रे मनसा 'नारायणैतत्त उदकम्' इति वाचाऽभिव्याहरेत्॥ स एवमेव सायंप्रातर्दशरात्रं करोति॥ त्रिरात्रेण वा॥ पिण्डदाने 'असावेतत्ते पिण्डम्' इति विशेषः॥ एकादश्यामेकोद्दिष्टम्॥ एवं 'प्रेतायामुष्मै यमाय च स्वाहा' इत्यग्नौकरणे वा॥ प्रतिग्रहणे प्रदाने विसर्जने च 'नारायणाय' इत्यनेन मन्त्रेण करोति॥ सर्वं मनसा सङ्कल्पयेद्वाचाऽभिव्याहरेत्॥ पूर्वत्रये च षाण्मासिके च समानम्॥ संवत्सरे सपिण्डीकरणम्

—सपिण्डीकरणस्थाने नारायणबलिक्रिया ॥ सायं प्रातर्न विद्यते सोयं बोधायनमतो यथा ॥ द्वयोरयनसङ्क्रान्त्योः पुण्येषु दिवसेषु वा ॥ अथवाऽपरपक्षस्य क्रिया भवेत् ॥ सपिण्डीकरणमेतेषामन्येषां च समानम् ॥ प्रेतपात्रं पितृपात्रे निनयेत् त्रिषु वा सिञ्चेत् ॥ प्रेतपिण्डं पितृपिण्डेषु निदध्यात् 'असौ पितृभिः पितामहैः प्रपितामहैस्सङ्गच्छध्वं भूर्भुवस्सुवरोम्' इत्याह भगवान्बोधायनः ॥

नारायणबलिसंस्कारप्रयोगः ॥ चाण्डालदंष्ट्रिसर्पविषरज्वादिना दुर्मृतिं गतानां आत्मघातिनां च महापापिनां द्वादशवर्षाऽनन्तरं त्रिवर्षाऽनन्तरं वर्षाऽनन्तरं वा अयनसङ्क्रान्त्यादौ कृष्णपक्षस्य पुण्ये दिवसे द्वादशाऽब्दादि यथाशक्ति कृच्छ्राचरणं चरित्वा नारायणबलिविधिना संस्कारः कार्यः। तेषां शवसंस्कारो नाऽस्ति। अस्थिसंस्कारपूर्वकं तदलाभे शाखासंस्कारपूर्वकं वा कार्यः ॥ यथा—"अमुकप्रेतस्य० गोत्रस्यामुकदुर्मरणजनितसमस्तदुरितक्षयद्वारा पितृत्वप्राप्त्यर्थं नारायणबलिविधानेन संस्करिष्यामि" इति सङ्कल्प्य सर्वं कुर्यात्। सर्वत्र पैतृमेधिकमन्त्रस्थाने पुरुषसूक्तमन्त्रान्क्रमेण योजयेत्। 'परे युवांसं०' इत्यत्र 'सहस्रशीर्षा० दशाङ्गुलम्'॥ 'इदन्त्वा वस्त्रं प्रथमं०' इत्यत्र 'पुरुष एवेदं० रोहति'॥ 'अपैतद्रूह०' इत्यत्र 'एतावानस्य० दिवि' एवं क्रमेण योजयेत् ॥ अपि वा तूष्णीं सर्वं क्रियेत। याम्यसूक्तनाऽग्न्युपोषणम्। पुरुषसूक्तेनोपस्थानम्। अत ऊर्ध्वं समानम् ॥ तीर्थे स्नात्वा उदकक्रियायां 'अमुकप्रेत० गोत्र' इति मनसोच्चार्य 'नारायण एतत्त उदकं' इत्युच्चैरुक्त्वा 'उपातिष्ठतु' इति मनसा वदेत्। एवमेव क्रमेण 'नारायण एतत्ते तिलोदकं, नारायण एतत्ते पिण्डं' इति तिलोदकादि दद्यात्। एवमेव नग्नप्रच्छादननवश्राद्धैकोत्तरवृद्धिश्राद्धादौ मनसा प्रेतशब्दमुच्चार्य 'नारायण' इति उच्चैरुच्चार्य 'उपातिष्ठतु' इति पुनर्मनसोच्चारणं कर्तव्यम्। दशरात्रेण, त्रिरात्रेण वा और्ध्वदेहिकं कुर्यात्। एकादश्यामेकोद्दिष्टाऽग्नौकरणे—'अमुकप्रेताय० गोत्राय यमाय च स्वाहा' इति होमः। आवाहनादौ— ० प्रेतं नारायणमावाहयामि,० प्रेत० गोत्र नारायण अयन्ते क्षण उपातिष्ठतु,० नारायण इदन्ते आसनमुपातिष्ठतु' एवमेव पाद्यादि-

दानम् ॥ काले सपिण्डीकरणम् ॥ तत्र प्रेतस्थाने–एकोद्दिष्टवत् '०प्रेत०गोत्र नारायण अयन्ते क्षण उपतिष्ठतु,० प्रेत० गात्र नारायण इदन्ते आसनमुपतिष्ठतु ' इत्याद्यर्चनम्। तत्र अग्नौकरणहोमे– '०प्रेताय० गोत्राय यमाय च स्वाहा ' इति पूर्ववद्धोमः। प्रेतस्य पितृपितामहप्रपितामहस्थाने पार्वणविधानेन क्षणाद्यर्चनमग्नौकरणञ्च सर्वं ( अविकृतं ) समानं कुर्यात् ॥ प्रेतार्घ्यपात्रस्य पितृपात्रे पितृपितामहप्रपितामहपात्रेषु वाऽवनयनम्—' अमुकप्रेत० गोत्र पितृभिः पितामहैः प्रपितामहैः सङ्गच्छध्वं भूर्भुवः सुवरोम् ' इति ॥ पित्रादित्रिषु पिण्डेषु प्रेतपिण्डसंयोजनम्। अत ऊर्ध्वं षोडशमासिकाब्दिकादिषु सर्वैः समानं पार्वणविधानम् ॥

दिनत्रयेण क्रियासमापनप्रयोगः ॥ " प्रथमेऽह्नि चतूरात्रं द्वितीयेऽह्नि दिनत्रयम्। तथा त्रयं तृतीयेऽह्नि दद्यात्पिण्डातिलोदकम् " इति बोधायनवचनात् दुर्मृतिं गतानां वर्षाद्यनन्तरं यदा त्रिरात्रेण वा क्रियासमापनं क्रियते तदा तन्त्रेण प्रथमादि दिनचतुष्टयस्य, वासोदक-तिलोदक-पिण्डदान-नग्नप्रच्छादन-नवश्राद्धादि तात्कालिकं कर्म प्रथमदिने कुर्यात्। एवमेव द्वितीयेऽह्नि पञ्चमादि-दिनत्रयस्य, तृतीयेऽह्नि अष्टमादि दिनत्रयस्य वासोदक-तिलोदक-पिण्डदान-नवश्राद्धादि कुर्यात्। प्रभूतबलिशान्तिहोमाद्यपि तृतीय-दिन एव। चतुर्थेऽहन्येकोद्दिष्टादिकं पञ्चमेऽहनि सपिण्डीकरणञ्च कार्यम् ॥

## ॥ अस्थिक्षेपविधिः ॥

प्रेतस्थाने बलिं दत्वा क्षीरेणाभ्युक्ष्य वाग्यतः। प्रेतस्यास्थीनि गृह्णीयात्प्रधानाङ्गोद्भवानि च ॥ पञ्चगव्येन संस्नाप्य क्षौम-वस्त्रेण वेष्ट्य च। प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे॥ अरण्ये वृक्षमूले वा शुद्धे संस्थापयेदथ। सूक्ष्माण्यस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ॥ ततः संमार्जनं भूमेः कर्तव्यं गोमयाम्बुभिः। पूजां च पुष्पधूपाद्यैर्बलिभिः पूर्ववच्चरेत् ॥ तत्स्थानाच्छनकै-

नीत्वातीर्थे वा जाह्नवीजले। कश्चिच्च प्रक्षिपेत्पुत्रो दौहित्रो वा सहोदरः॥ मातुःकुलं पितृकुलं वर्जयित्वा नराधमः। अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत्॥ गङ्गातोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः। न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात्॥ अस्तंगते गुरौ शुक्रे तथा मासे मलिम्लुचे। गङ्गायामस्थिनिक्षेपं न कुर्यादिति गौतमः॥ दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति। गङ्गायां-मरणं यादृक् तादृक् फलमवाप्नुयात्॥

तीर्थे अस्थिक्षेपप्रयोगः॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "अमुकगोत्रस्य शर्मणः अमुकस्य (पित्रादेः सपिण्डीकरणात्पूर्वश्चेत् — प्रेतस्य) पुण्यलोकाऽवाप्त्यर्थं गङ्गादि अमुकतीर्थे अस्थिनिक्षेपं कर्तुं अस्थिशुद्धिं करिष्ये" इति सङ्कल्प्य[1] यत्रास्थीनि निखातानि तत्र भूमिं गायत्र्या गोमूत्रेण, गन्धद्वारामिति गोमयेन, आप्यायस्वेति क्षीरेण, दधिक्राव्ण इति दध्ना, शुक्रमसीत्याज्येन, च प्रोक्ष्य भूमिं प्रार्थयेत् —" उपसर्प मातरं भूमिमेतामुरुव्यचसं पृथिवी॰सुशेवाम्। ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात्" इति॥ अथ भूमिं खनति—"उच्छ्वञ्चस्व पृथिवि मा निबाधथाः सूपायनाऽस्मै भव सूपवञ्चना। माता पुत्रं यथा सिचाऽभ्येनं भूम ऊर्णुहि" इति॥ अथ मृत्तिकामुद्धराति —" उच्छ्वञ्चमाना पृथिवी सुतिष्ठतु सहस्रं मित उप हि श्रयन्ताम्। ते गृहासो घृतश्चुतो भवन्तु विश्वा हाऽस्मै शरणाः सन्त्वत्र" इति॥ अस्थीनि गृह्णाति—" उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम्। एतां स्थूणां पितरो धारयन्तु तेऽत्रा यमः सादनाते मिनोतु" इति॥ अथैतोन्विन्द्रं इति त्रिभिर्मन्त्रैः प्रतिमन्त्रमस्थीनि स्पृष्ट्वा त्रिः स्नायात् —" एतोऽन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृध्वांसं शुद्ध

---

[1] अधिकारार्थं कृच्छ्त्रयं कृत्वा॥

आशीर्वा ममन्तु ॥ १ ॥ इन्द्रं शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥ २ ॥ इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि " ॥ ३ ॥ इति ॥ एवमेव दशद्रव्यैर्दशवारमस्थीनि स्नापयन्स्वयञ्च स्नायात् — गायत्र्यादि पञ्च मन्त्रैर्गोमूत्रगोमयक्षीरदधिघृतैर्देवस्य त्वेति कुशोदकेन, मानस्तोकेति भस्मना, अश्वक्रान्त इति मृदा, मधुवाता इति मधुना, आपो हिष्ठेति तृचा जलेनेत्येवं स्नात्वा अस्थीनि कुशैर्मार्जयते — " अतोदेवा० सप्तधामभिः " इत्यृचा " एतोन्विन्द्रं स्तवाम " इति तिसृभिः, " शुची वो हव्या मरुतः शुचीनां शुचीं हिनोम्यध्वरं शुचिभ्यः । ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः " इति मन्त्रेण, "न तमंहो न दुरितं देवासो अष्ट मर्त्यम् । सजोषसो यमर्यमा मित्रो नयन्ति वरुणो अतिद्विषः ॥ १ ॥ तद्धि वयं वृणीमहे वरुण मित्राऽर्यमन् । येना निरंहसो यूयं पाथ नेथा च मर्त्यमतिद्विषः ॥ २ ॥ ते नूनं नोऽयमूतये वरुणो मित्रो अर्यमा । नयिष्ठा उ नो नेषणि पर्षिष्ठा उ नः पर्षण्यतिद्विषः ॥ ३ ॥ यूयं विश्वं परिपाथ वरुणो मित्रो अर्यमा । युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयोऽतिद्विषः ॥ ४ ॥ आदित्यासो अतिस्रिधो वरुणो मित्रो अर्यमा । उग्रं मरुद्भी रुद्रं हुवेमेन्द्रमग्निं स्वस्तयेऽतिद्विषः ॥ ५ ॥ नेतार ऊषुणस्तिरो वरुणो मित्रो अर्यमा । अति विश्वानि दुरिता राजानश्चर्षणीनामतिद्विषः ॥ ६ ॥ शुनमस्मभ्यमूतये वरुणो मित्रो अर्यमा । शर्म यच्छन्तु सप्रथ आदित्यासो यदीमहे अतिद्विषः ॥ ७ ॥ यथा ह त्यद्वसवो गौर्यं चित्पदिषिताममुञ्चता यजत्राः । एवोष्व१ स्मन्मुञ्चता व्यंहः प्रतार्यग्ने प्रतरन्न आयुः ॥ ८ ॥ इत्यष्टभिः, " इति वा इति मे मनो गामश्वं सनुयामिति । कुवित्सोमस्याऽपामिति ॥ १ ॥ प्रवाता इव दोधत उन्मा पीता अयंसत । कुवित्सो० ॥ २ ॥ उन्मा पीता अयंसत रथमश्वा इवाशवः । कुवित्सो० ॥ ३ ॥ उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियम् । कुवित्सो० ॥ ४ ॥

अहं तत्रैव वन्धुरं पर्येचामि हृदा मतिम् । कुवित्सो० ॥ ५ ॥ न हि मे अक्षिपच्चनाच्छान्त्सुः पञ्च कृष्टयः । कुवित्सो० ॥ ६ ॥ न हि मे रोदसी उभे अन्यं पक्षञ्च न प्रति । कुवित्सो० ॥ ७ ॥ अभि द्यां महिना भुवमभी ३ मां पृथिवीं महीम् । कुवित्सो० ॥ ८ ॥ हन्ताऽहं पृथिवीमिमां निदधानीह वेहवा । कुवित्सो० ॥ ९ ॥ ओषमित्पृथिवीमहं जङ्घनानीह वेहवा । कुवित्सो० ॥ १० ॥ दिवि मे अन्यः पक्षो३धो अन्यमर्चाकृषम् । कुवित्सो० ॥ ११ ॥ अहमस्मि महामहोऽभिनभ्यमुदीषितः । कुवित्सो० ॥ १२ ॥ गृहो याम्यरङ्कृतो देवेभ्यो हव्यवाहनः । कुवित्सो० " ॥ १३ ॥ इति त्रयोदशभिः, " यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वितज्जहि ॥ १ ॥ पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥ २ ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः ॥३॥ यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्मसवैः पुनीहि नः ॥ ४ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥५॥ त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥६॥ पुनन्तु मां देवजनाः पुनन्तु वसवो धिया । विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा " ॥ ७ ॥ इति सप्तभिः, " ममाऽग्ने वर्चो विहवेष्वस्तु वयन्त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम ॥ १ ॥ मम देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः । ममाऽन्तरिक्ष-मुरुलोकमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥ २ ॥ मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः । दैव्या होतारो वनुषन्त पूर्वेऽरिष्टाः स्याम तन्वा सुवीराः ॥ ३ ॥ मह्यं यजन्तु मम यानि हव्याऽऽकूतिः सत्या मनसो मे अस्तु । एनो मा नि गां कतमच्चनाहं विश्वेदेवासो अधिवोचता नः ॥ ४ ॥ देवीः षळुर्वीरुरु नः कृणोत विश्वेदेवास इह वीरयध्वम् । मा हास्म हि प्रजया

मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ५ ॥ अग्ने मन्युं प्रतिनुदन्परेषामदब्धो गोपाः परिपाहि नस्त्वम् । प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधां विनेशत् ॥ ६ ॥ धाता धातॄणां भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहम् । इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् ॥ ७ ॥ उरुव्यचा नो महिषः शर्म यंसदस्मिन्हवे पुरुहूतः पुरुक्षुः । स नः प्रजायै हर्यश्व मृळयेन्द्र मा नो रीरिषो मा परा दाः ॥ ८ ॥ ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥ ९ ॥ अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः । इमन्नो यज्ञं विहवे जुषस्वाऽस्य कुर्मो हरिवो मे दिनन्त्वा " ॥ १० ॥ इति दशभिः, " कद्रुद्राय प्रचेतसे मीह्ळुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ॥ १ ॥ यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥ २ ॥ यथा नो मित्रो वरुणो यथा रुद्रश्चिकेताति । यथा विश्वे सजोषसः ॥ ३ ॥ गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः सुम्नमीमहे ॥ ४ ॥ यः शुक्र इव सूर्यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुः ॥ ५ ॥ शन्नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥ ६ ॥ अस्मे सोम श्रियमधि निधेहि शतस्य नृणाम् । महिश्रवस्तुविनृम्णम् ॥ ७ ॥ मा नः सोमपरिबाधो मारातयो जुहुरन्त । आ न इन्दो वाजे भज ॥ ८ ॥ यास्ते प्रजा अमृतस्य परस्मिन्धामन्नृतस्य । मूर्धा नाभा सोम वेन आभूषन्तीः सोम वेदः" ॥ ९ ॥ इति नवभिः, इत्येतैः प्रतिमन्त्रं मार्जयित्वा, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'अस्थिशुध्यङ्गतया विहितममुक० प्रीत्यर्थं हिरण्यश्राद्धं करिष्ये' इति सङ्कल्प्य सपिण्डीकरणात् पूर्वश्चेदेकोद्दिष्टविधिनाऽनन्तरश्चेत् पार्वणविधिना (कुशमयब्राह्मणमुपवेश्य) कुर्यात् ॥ एकोद्दिष्टे—प्रेतार्थमेकं ब्राह्मणे, पार्वणे—धूरिलोचनसंज्ञकविश्वेदेवार्थमेकं पित्रादित्रयार्थमेकं

ब्राह्मणमुपवेश्य, क्षणपाद्यादिभिरभ्यर्च्य 'भोजनादि पर्याप्तमिदं हिरण्यं तुभ्यमहं सम्प्रददे' इति हिरण्यं दत्वा पितॄन् विश्वेदेवांश्चोद्वास्य, सक्तुपिण्डं सम्बन्धनामगोत्रादि चतुर्थ्यन्तमुक्त्वा 'अयं पिण्डः स्वधा नमः' इति बर्हिषि पिण्डदानादि कुर्यात्। (एकोद्दिष्टे पिण्डमेकं, पार्वणे पिण्डत्रयम्) गोदानादि दशदानानि यथासम्भवं वा दत्वा पिण्डोद्वासनान्ते तिलतर्पणं कुर्यात्॥ अथ ताम्रपात्रे शुद्धमृदं निक्षिप्य पञ्चगव्यं प्रपूर्य तत्र केशवादि द्वादशनामभिरस्थीनि निधाय हिरण्यमध्वाज्यतिलै-र्विकीर्य गन्धपुष्पादिभिरभ्यर्च्य पञ्चरत्नानि (सुवर्णरजतमुक्ताप्रवालनीलानि) निक्षिप्यान्येन ताम्रपात्रेणापिधाय यक्षकर्दमेना-ऽनुलिप्याऽजिनकम्बलदर्भभूर्जपत्रशाणपट्टवस्त्रतालपत्रैः क्रमेण सप्तधा यथासम्भवं संवेष्ट्य मृदाभिलिप्य स्थापयेत्॥

अथ स्थण्डिलोल्लेखनादि लौकिकाऽग्निं प्रतिष्ठाप्य, अस्थिशुद्धिहोमः कर्म, आपूर्विकं तन्त्रं, चतस्रः सामिधेन्यः, अग्नीषोमा-वाज्यभागौ, पवमानो नामाऽग्निः, सविता देवता, चरुर्हविः, उपहोमे-आज्याक्ततिलद्रव्येण उदीरतामित्यादि चतुर्दशमन्त्रैरष्टोत्तर-शताहुतिभिः, अग्निः स्विष्टकृत, इत्यादि सङ्कल्प्यान्वाधाय, गायत्र्या पक्वहोमान्ते-आज्याक्ततिलैः 'उदीरतामवर' इत्यादि चतुर्दशमंत्रैः सप्ताऽऽवृत्तिभिः अष्टमाऽऽवृत्तौ अन्त्यानां चतुर्णां त्यागेन एवं१०८ आहुतीर्जुहोति॥ ते च मन्त्राः—उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु स्वाहा॥ १॥ (सर्वत्र, पितृभ्य इदं०) इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु स्वाहा॥ २॥ आहं पितॄन् सु-विदत्राँ अवित्सि नपातञ्च विक्रमणञ्च विष्णोः।। बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः स्वाहा॥ ३॥ बर्हिषदः

---

१. द्वादशकर्षं चन्दनं कुंकुमं च षट्कर्षः कर्पूरश्चतुष्कर्षा कस्तूरी चैतेषां मेलनम्॥

पितर ऊत्यं १ र्वागिमा वो हव्या चकृमा जुषध्वम् । त आगताऽवसा शन्तमेनाऽथा नः शं योररपो दधात स्वाहा ॥ ४ ॥ उपहूता पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान्० ॥ ५ ॥ आच्या जानु दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे । मा हिंसिष्ट पितरः केनचिन्नो यद्व आगः पुरुषताकराम० ॥ ६ ॥ आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय । पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छत त इहोर्जं दधात० ॥ ७ ॥ ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः । तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु० ॥ ८॥ ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः । आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः० ॥ ९ ॥ ये सत्यासो हविरदो हविष्पा इन्द्रेण देवैः सरथं दधानाः । आग्ने याहि सहस्रं देववन्दैः परैः पूर्वैः पितृभिर्घर्मसद्भिः० ॥ १० ॥ अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः । अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन० ॥ ११ ॥ त्वमग्न ईळितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी । प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि० ॥ १२ ॥ ये चेह पितरो ये च नेह याँश्च विद्म याँ उ च न प्रविद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व० ॥ १३ ॥ ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते । तेभिः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयस्व स्वाहा ॥ १४ ॥ इति हुत्वा स्विष्टकृदादि होमशेषं समाप्य, अस्थीन्यादाय नाभिमात्रजले स्थित्वा दक्षिणामुखः " नमोऽस्तु धर्माय, स मे प्रीतोऽस्तु " इत्युक्त्वा ' ऋतञ्च ' इत्यघमर्षणसूक्तं पठन् पितृतीर्थेन जले क्षिपेत् । ततः स्नात्वाऽऽदित्यं दृष्ट्वा ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दद्यात् ॥

# ॥ अथ नारायणबलिः ॥

( बो. गृ. शे. सू. ३. २० ) अथातो नारायणबलिं व्याख्यास्यामः — दक्षिणोत्तरायणयोरपरपक्षस्य द्वादश्यां क्रियेत ॥ पूर्वेद्युर्द्वादश षड्वा ब्राह्मणान्निमन्त्रयते योनिगोत्रश्रुतवृत्तसम्पन्नान् ॥ अथाऽपरेद्युर्देवगृहे नदीतीरे वाऽग्निमुपसमाधाय सम्परिस्तीर्याऽऽप्रणीताभ्यः कृत्वोपोत्थायाग्रेणाऽग्निं दैवतमावाहयति-पुरुषसूक्ते द्वे ऋचौ जपित्वा व्याहृतिभिः पुरुषमावाहयति ॥ अथैनं स्नापयति-पुरुषसूक्तेन ॥ अथैनं गन्धपुष्पधूपदीपैरष्टाक्षरेणाऽर्चयित्वाऽद्भिस्तर्पयति — 'केशवं तर्पयामि' इति द्वादशनामभिः ॥ परिधान-प्रभृत्याऽऽग्निमुखात्कृत्वा पक्वाज्जुहोति—'विष्णोर्नुकम्' इति पुरोनुवाक्यामनूच्य 'परो मात्रया' इति याज्यया जुहोति ॥ आथाऽऽज्याहुतीरुपजुहोति—'केशवाय स्वाहा' इत्येतैरेव नामधेयैः ॥ अथ गुळपायसघृतमिश्रमन्नं निवेदयति — 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विष्णवे महापुरुषाय हविर्निवेदयामि' इति । सप्तव्याहृतिभिस्स्वाहाकारेण जपति । व्याहृति-भिराचमनीयम् ॥ अथ ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषूपवेश्याऽथैनान् वस्त्रगन्धपुष्पधूपदीपैर्माल्यैरभ्यर्च्याऽथाऽभ्यनुज्ञात-स्तिलघृतमिश्रं हविस्समुदायुत्य हस्तेन जुहोति — 'पितृभ्यस्स्वधा नमो नारायणाय स्वाहा' इत्यादि चतुर्विंशतिमन्त्रा ऊह्याः ॥ अथ 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो नारायणाय स्वाहा' इति ॥ अथ ब्राह्मणानन्नेन परितोष्याऽऽचम्य तेषां यथाशक्ति दक्षिणां ददाति ॥ प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु बलिं ददाति— 'विश्वेभ्यो देवेभ्यो नमस्साध्येभ्यो देवेभ्यो नमस्सर्वेभ्यो देवेभ्यो नमस्सर्वाभ्यो देवताभ्यो नमो विष्णवे नमो नारायणाय नमस्सहस्रशीर्षाय नमो

यज्ञपुरुषाय नमो विश्वात्मने नमस्सर्वात्मने नमस्सर्वेश्वराय नमः' इति ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ सर्वान्पितॄन्समधिगच्छति ब्रह्मलोके महीयत इत्याह भगवान्बोधायनः ॥

नारायणबलिप्रयोगः ॥ कृष्णपक्षस्य द्वादश्यां देवालये नदीतीरे वा आचम्य प्राणानायम्य 'अमुकस्य (पित्रादेः) शर्मणः गोत्रस्य सम्भावितसमस्त (अमुक) पापक्षयद्वारा शाश्वत( विष्ण्वादि )पुण्यलोकाऽवाप्त्यर्थं श्रीनारायणप्रीत्यर्थं नारायणबलिं करिष्ये' इति सङ्कल्प्य, कलशार्चनं ब्रह्मदण्डञ्च कृत्वा, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, नारायणबलिहोमः कर्म, चित्तिर्नामाऽग्निः, नारायणो देवता, चरुर्हविः, उपहोमे-केशवादिद्वादशनामभिराज्येन एकैकयाऽऽहुत्या, 'पितृभ्यः स्वधा नमो नारायणाय स्वाहा' इत्यादि 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो नारायणाय स्वाहा' इत्यन्तं पञ्चविंशतिमन्त्रैश्च तिलघृतमिश्रहविषा एकैकयाऽऽहुत्या, अग्निः स्विष्टकृत्, इत्याद्यन्वाधानादि चरुनिर्वापे 'विष्णवे जुष्टं निर्वपामि' इति प्रतिष्ठिताभिघारणान्तं कृत्वोपोत्थायाऽग्रेणाऽग्निमष्टदळपद्मे तण्डुलोपरि कलशं प्रतिष्ठाप्य सौवर्णीं विष्णुप्रतिमां विन्यस्य 'सहस्रशीर्षा० दशाङ्गुलम्, पुरुष एवेदꣳ० रोहति' इति मन्त्रद्वयं जपित्वा, व्याहृतीभिः 'ॐ भूः पुरुषं नारायणमावाहयामि' इत्यादिभिः पुरुषमावाह्याऽष्टाक्षरमन्त्रेण आसनपाद्यार्घ्याऽऽचमनीयं दत्वा पुरुषसूक्तेन संस्नाप्याऽष्टाक्षरेण गन्धपुष्पधूपदीपैरभ्यर्च्याऽद्भिस्तर्पयति—" केशवं तर्पयामि " इत्यादि द्वादशनामभिः। अथ परिधानप्रभृत्याऽऽग्निमुखात्कृत्वा पक्वं जुहोति—" विष्णोर्नुकं० त्रेधोरुगायोरे परो मात्रया० वित्से स्वाहा " इति, विष्णव इदं० ॥ अथाज्याहुतीरुपजुहोति— " केशवाय स्वाहा " इत्यादि द्वादशनामभिः ॥ अथ गुळपायसं घृतमिश्रमन्नं निवेदयति गायत्र्या प्रोक्ष्य 'देवस्य त्वा० हस्ताभ्यां विष्णवे महापुरुषाय हविर्निवेदयामि' इति। 'अमृतोपस्तरणमसि स्वाहा' इत्यापोशनं दत्वा " ॐ भूः स्वाहा, ॐ भुवः स्वाहा, ॐ सुवः०, महः०, जनः०, तपः०, सत्यं स्वाहा " इति जपित्वा 'अमृतापिधानमसि स्वाहा'

इत्युत्तरापोशनं, व्याहृतीभिराचमनं, ताम्बूलं, नीराजनं, पुष्पाञ्जलिञ्च दद्यात् ॥ अथ पूर्वेद्युः सद्यो वा निमन्त्रितान्द्वादश ब्राह्मणान् ( कुशमयान्वा ) " केशवार्थे भवता क्षणः कर्तव्यः, नारायणार्थे०, माधवार्थे०, गोविन्दार्थे०, विष्णवार्थे०, मधुसूदनार्थे०, त्रिविक्रमार्थे०, वामनार्थे०, श्रीधरार्थे०, हृषीकेशार्थे०, पद्मनाभार्थे०, दामोदरार्थे भवता क्षणः कर्तव्यः " इति क्षणं ग्राहयित्वा पादप्रक्षाळनं कृत्वा तानाचमय्य स्वयञ्च पादौ प्रक्षाल्याऽऽचम्य सदर्भक्लृप्तेष्वासनेषु प्राङ्मुखानुदङ्मुखान्वा ब्राह्मणानुपवेश्य 'केशवमावाहयामि' इत्यादिक्रमेणाऽऽवाह्य, अर्घ्यवस्त्रगन्धपुष्पधूपदीपमाल्यैरभ्यर्च्य 'अग्नौ करिष्यामि' इत्युक्त्वा 'कुरुष्व' इत्यनुज्ञातः तिलघृतमिश्रमन्नं समुदायुत्य हस्तेनैव जुहोति—" पितृभ्यः स्वधा नमो नारायणाय स्वाहा ( पितृभ्यो नारायणायेदं० इत्यादि त्यागः ) पितामहेभ्यः स्वधा नमो नारायणाय०। प्रपितामहेभ्यः० स्वाहा। मातृभ्यः स्व० स्वाहा। पितामहीभ्यः स्व०। प्रपितामहीभ्यः स्व० स्वाहा। मातामहेभ्यः स्व०। मातुःपितामहेभ्यः स्व०। मातुःप्रपितामहेभ्यः स्व०। मातामहीभ्यः स्व०। मातुःपितामहीभ्यः०। मातुःप्रपितामहीभ्यः०। आचार्येभ्यः०। आचार्यपत्नीभ्यः स्व०। गुरुभ्यः०। गुरुपत्नीभ्यः०। सखिभ्यः स्व०। सखिपत्नीभ्यः०। ज्ञातिभ्यः०। ज्ञातिपत्नीभ्यः०। अमात्येभ्यः०। अमात्यपत्नीभ्यः०। सर्वेभ्यः०। सर्वाभ्यः स्वधा नमो नारायणाय स्वाहा। अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो नारायणाय स्वाहा " इति पञ्चविंशतिः॥ अथ ब्राह्मणेभ्यश्चतुरश्रमण्डलेषु द्वादश पात्राण्यासाद्य परिविष्य प्रोक्ष्य परिषिच्य—'केशवाय नमः इदमन्नम्' इत्यादि द्वादशनामभिरन्नं समर्प्याऽऽपोशनं दत्वा ब्रह्मार्पणं कृत्वा भोजनान्ते उत्तरापोशनादि यथाशक्ति दक्षिणां दत्वा तान्प्रदक्षिणीकृत्य शेषमनुज्ञाप्योद्वास्य, दक्षिणेनाऽग्निं प्रागग्रान्दर्भान् संस्तीर्य तेष्वन्नशेषेण बलिं ददाति — " विश्वेभ्यो देवेभ्यो नमः। साध्येभ्यो देवेभ्यो०। सर्वेभ्यो देवेभ्यो०। सर्वाभ्यो देवताभ्यो०। विष्णवे०। नारायणाय०। सहस्रशीर्षाय०। यज्ञात्मने०। यज्ञपुरुषाय०। विश्वात्मने०। सर्वात्मने०।

सर्वेश्वराय नमः" इति ॥ १२ ॥ ततः स्विष्टकृत्प्रभृति होमशेषं समाप्य, व्याहृतिभिर्देवमुद्वास्य कलशं प्रतिमान्विकं सदक्षिणं गाश्चाऽऽचार्याय दद्यात् ॥ 'पितॄन्समधिगच्छति ब्रह्मलोके महीयते' ॥

## ॥ प्राक्चौळात्प्रमीतानां स्त्रीकुमाराणां संस्कारविधिः ॥

( बो. पि. सू. ३. ६ ) यथो एतन्न प्राक्चौळात्प्रमीतानां दहनं विद्यते नानुपनीतानां कन्यानां वा पितृमेध इत्युक्तम्। कथमु खल्वेषामुक्तस्संस्कारो विद्यत इति ॥ असमाप्तशरीराणां गर्भाणां स्रवणमित्येके। गर्भस्रवणे 'इयं वा अग्निर्वैश्वानरोऽस्यामेवैनं जुहोति' इति ब्राह्मणम्। भूमौ निहत्य सचेलोऽवगाहेत सद्यश्शौचम् ॥ अदन्तजातानां निखननं प्रणवेन वा ॥ दन्तजातानां व्याहृतिविधानेन वा। तस्य कः कर्मण उपक्रमो भवति? निर्मन्थ्यं कुर्यान्निर्मन्थ्येन स्त्रीकुमाराणां दहेयुरित्युक्तत्वात्। अथ ग्राम्येणालङ्कारेणालङ्कृत्य श्मशानं निर्हृत्य प्रेतं तत्रैव निधायाख्यातं चितायामुपकल्पनम् ॥ अपरेण चितामग्निमुपसमाधाय सम्परिस्तीर्याज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य सम्मृज्य पर्णमयेन स्रुवेण मध्यमेन पलाशपर्णेन वा 'तत्सवितुर्वरेण्यम्' इत्यनुद्रुत्यैकादशकृत्वो गृह्णाति—'प्रजापतये स्वाहा' इति प्रथमामाहुतिं जुहोति 'प्रेतायामुष्मै यमाय वैवस्वताय स्वाहा' इति द्वितीयां 'दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तत्सर्वं जुहोति' इति ब्राह्मणम् ॥ पर्णमयस्रुवं प्रेतस्योपरिष्टान्निधाय 'भूः' इति मनसा ध्यायन्नुपोषेत्। 'भुवः' इत्युपस्थानं 'सुवः' इत्यवगाह्याप्सु निमज्योन्मज्योत्तीर्याचम्यैकमुदकाञ्जलिं ददाति ॥ न चास्यात ऊर्ध्वं श्मशानं कर्तुमाद्रियेत नोदकक्रिया वा ॥ अयुग्मदिवसे त्रीन्पञ्च सप्त ब्राह्मणान्भोजयेदेकमपि वा ॥ भवत्यामैर्वा मूलफलैः प्रदानमात्रं हिरण्येन वा प्रदानमात्रं सर्वेषु होतृपरेषु स्वधास्थानेषु कुर्यात् 'अमुष्मा उपतिष्ठतु' इति ॥

स्रावादिसंस्कारप्रयोगः ॥ गर्भस्रावे-मासचतुष्टपर्यन्तं संस्कारो नास्ति ॥ ॥ गर्भपाते-( पञ्चमषष्ठमासयोः ) असमाप्त-शरीरं ( गर्भपिण्डं ) भूमौ निहत्य सचैलस्नानं कुर्यात् ॥ सद्यः शौचम् ॥ ॥ सप्तममासप्रभृति दन्तजननात्पूर्वं मरणे – शिशुं संस्नाप्य घृतेनाभ्यज्य ग्राम्येणालङ्कारेणालङ्कृत्य श्मशानं नीत्वा दक्षिणोत्तरायतं गर्तं खात्वा तं गर्तं गोमयजलेन प्रोक्ष्य तत्र दक्षिणाग्रान्दर्भान्संस्तीर्य तेषु दक्षिणाशिरसं मृतं शिशुं प्रणवेन निधाय दर्भैः प्रच्छाद्याऽवटं ( श्वादयो यथा न खादन्ति तथा ) मृद्भिः पूरयित्वा सचैलं स्नात्वा गृहं गच्छेत् ॥ ॥ मृतजातशिशूनामेवमेव निखननं तूष्णीम्, अन्यत्सर्वं समानम् ॥ आशौचान्ते पञ्चगव्यं प्राश्य यज्ञोपवीतं धृत्वा ' प्रजापतिः प्रीयताम् ' इति पुण्याहं वाचयेत् ॥ ॥ आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्यात्तत्राशौचं विधीयते ॥ आद्यमासत्रये मातुस्त्रिरात्रं चतुर्थमासे चतूरात्रमस्पृश्यत्वमाशौचम् । पित्रादिसपिण्डानां स्रावमात्रे स्नानाच्छुद्धिः ॥ पञ्चमषष्ठमासयोर्गर्भपाते गर्भिण्या माससमसङ्ख्यं क्रमेण पञ्चषड्दिनान्यस्पृश्यत्वलक्षणमाशौचम् । पित्रादिसपिण्डानान्तु त्रिदिनं जननाऽऽशौचम् । मृताऽऽशौचन्तु नास्ति ॥ गर्भिण्याः सप्तममासप्रभृति प्रसवे मातुः पित्रादि-सपिण्डानाञ्च जननाऽऽशौचम् । मृताशौचं नास्ति ॥ जननोत्तरं नाळच्छेदनात्पूर्वं शिशुमरणे पित्रादिसपिण्डानां त्रिदिनं जननाऽऽ-शौचम् । मातुस्तु दशाहमेव । मृताशौचं नास्ति ॥ नाळच्छेदनोत्तरं दशाहाभ्यन्तरे शिशुमरणे सपिण्डानां जननाऽऽशौचम् । मृताऽऽ-शौचं नास्ति ॥ ॥ दन्तोत्पत्यनन्तरं चौलात्पूर्वं मरणे – ( खननपक्षे ) शिशुं संस्नाप्य घृतेनाभ्यज्याऽलङ्कृत्य गर्तं खात्वा प्रोक्ष्य दर्भान्संस्तीर्य ' भूः ' इति गर्ते शवं निधाय ' भुवः ' इत्युपस्थानं कृत्वा ' सुवः ' इति अप्सु निमज्योन्मज्योत्तीर्याचम्य " प्रेताय० गोत्राय० नाम्ने उदकाञ्जलिरुपतिष्ठतु " इति जलाञ्जलिमेकं दद्यात् ॥ विषमदिवसेषु त्रीन् पञ्च सप्त ब्राह्मणान् भोजयेदेकं वा । " प्रेताय० गोत्राय० नाम्ने उपतिष्ठतु " इति आमान्नफलमूलानि हिरण्यं वा दद्यात् ॥ आशौचान्ते पूर्ववत्पञ्चगव्यप्राशनादि

पुण्याहवाचनान्तं कुर्यात् ॥ ( दहनपक्षे )—पूर्ववच्छिशुं संस्नाप्य घृतेनाभ्यज्यालङ्कृत्य श्मशानं नीत्वा यज्ञियकाष्ठैश्चितां कल्पयित्वा चिताया अपरेण तुषाऽग्निमुपसमाधाय सम्परिस्तीर्याज्यं विलाप्योत्पूय पर्णमयं स्रुक्स्रुवं निष्टप्य सम्मृज्य पर्णमयेन स्रुवेण स्रुचि एकादशगृहीतं गृहीत्वा 'तत्सवितुः' इत्यनुद्रुत्य 'प्रजापतये स्वाहा' इति प्रथमामाहुतिं हुत्वा, पुनरेकादशगृहीतं गृहीत्वा 'प्रेतायाऽमुष्मै यमाय वैवस्वताय स्वाहा' इति द्वितीयामाहुतिं हुत्वा, प्रेतं चितामारोप्य स्रुक्स्रुवौ तस्योपरि निधाय "भूः" इति मनसा ध्यायन्नग्निना दहेत् ॥ "भुवः" इति यममुपस्थाय तीर्थं गत्वा "सुवः" इत्यवगाह्याप्सु सकृन्निमज्योन्मज्योत्तीर्याचम्य, "प्रेताय० गोत्राय० नाम्ने अयन्ते जलाञ्जलिरुपतिष्ठतु" इत्युदकाञ्जलिमेकं दद्यात्। विषमदिवसेषु त्रीन् पञ्च सप्त ब्राह्मणान्भोजयेदेकं वा। "प्रेताय० गोत्राय० नाम्ने उपतिष्ठतु" इत्यामान्नफलमूलादिकं हिरण्यं वा दद्यात् ॥ आशौचान्ते पूर्ववत्पञ्चगव्यप्राशनादि पुण्याहवाचनान्तं कुर्यात् ॥ ॥ अनुपनीतानां ( चौलानन्तरमुपनयनात्पूर्वं ) मरणे — प्राणेषूत्क्रान्तेषु मुखे हिरण्यशकलं निधाय तूष्णीं शवं स्नापयित्वाऽलङ्कृत्यासन्द्यां प्रेतं निधाय श्मशानं नीत्वा पलाशशाखयोदुम्बरशाखया वा दहनदेशं दक्षिणापवर्गं तूष्णीं सम्मृज्य शाखां निरस्याऽद्भिरवोक्ष्य दधिमधुघृततिलतण्डुलांश्च समुदायुत्य तूष्णीं शवमुखे निवपति। दहनदेशे मुष्टिपरिमितांस्तिलतण्डुलान्सम्प्रकीर्याऽवशिष्टान्सर्वतः सम्प्रकिरति। चितां कल्पयित्वोत्तपनाग्निमुत्पाद्य चितायां प्रेतं निधायाऽप्रदक्षिणं परिस्तीर्य संस्कृतमाज्यं प्रेतास्ये निनयति — "इदन्त आत्मनश्शरीरमयन्त आत्माऽऽत्मनस्त आत्मानं शरीराद्ब्रह्म निर्भिनत्ति भुर्भुवस्सुवरसौ स्वाहा" इति ॥ ( प्रेतायेदं० ) सा हि पूर्णाहुतिः ॥ अपि वा — "अस्मात्वमधिजातोऽस्ययं त्वदधि जायताम्। अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा" (अग्नये वैश्वानरायेदं०) इत्यनयर्चा वा "वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यस्साध्येभ्यो मरुद्भ्य ऋभुभ्यः पितृभ्यस्स्वाहा" ( यथालिङ्गं त्यागः ) इत्यनेन यजुषा वा । ततः "वातास्ते वान्तु०" इति वस्त्रेणोपवीजयन्ति-अप्रद-

क्षिणं परीत्य तूष्णीं प्रदक्षिणं त्रिः परियन्ति। उदकुम्भं शिरसि वामांसे वा धृत्वा तूष्णीं त्रिरप्रदक्षिणं परीत्याऽग्निना शवं दहेत्। ततस्तीर्थं गत्वा "प्रेताय० गोत्राय० नाम्ने उदकाञ्जलिरुपतिष्ठतु" इति जलाञ्जलिं दत्वा नग्नप्रच्छादनाद्येकोद्दिष्टान्तं सर्वं कुर्यात् ॥ पञ्चमवर्षात्पूर्वं मृतानां सञ्चयनवर्जम् ॥ ॥ संघातमरणे (यद्यनेकेषामेकदिने मृतिः स्यात्) — मातापित्रोः पत्न्यादीनां तद्व्यतिरिक्तानामेकस्मिन्दिने मरणे — पितृमातृपूर्वमेव पत्न्यादीनां संस्कारं कुर्यात्। क्रमतः पश्चान्मृतयोर्मातापित्रोः पत्न्यादिभ्यः पूर्वमेव संस्कारं कुर्यात्। पितुः पूर्वं संस्कारं कृत्वा अनन्तरं मातुः संस्कारः ॥ पत्नीपुत्रपौत्रभ्रातृतत्पुत्रस्नुषास्वसॄणां संख्यातक्रमात् (उक्तक्रमात्) दाहादिक्रियाः पृथक्पृथक् कुर्यात्। अन्येषामेकदिनमरणे (कृत्वा पूर्वमृतस्यादौ द्वितीयस्य ततः परम्। तृतीयस्य ततः कुर्यात्सन्निपातेष्वयं क्रमः) मरणक्रमेण संस्कारः ॥ ॥ यदि दम्पत्योः सहमृतिः स्यात्सहैव दाहादिक्रियाः कुर्यात्। सहप्रमीतयोः सहैव पितृमेधः। द्विवचनलिङ्गान्मन्त्रान्धारयन्ति। चितायां भार्योपसंवेशनोत्थापनमन्त्रवर्जम् ॥ "एककाल-मृतौ पित्रोः पितृमेधक्रिया सह। उदकं पिण्डदानञ्च श्राद्धं कुर्यात्पृथक्पृथक् ॥ सपिण्डीकरणञ्चैव सह वा पृथगेव वा। एकगर्ते जलं दद्याच्छ्राद्धं चैकदिने द्वयोः ॥ सह चर्माधिरोहश्च शान्तिहोमं समाचरेत्। तन्त्रेण श्रवणं कुर्याच्छ्राद्धं कुर्यात्पृथक्पृथक् ॥ तत्र द्वयोर्निमित्तौ द्वौ ब्राह्मणावितरैः सह ॥ दम्पत्योस्सह मृत्यौ तु सह स्याद्दहनक्रिया। पृथक्पिण्डोदकादीनि यथाविधि समाचरेत् ॥ कुण्डमेकं पृथक्पिण्डजलाञ्जलिशिलामताः। अस्थ्नां सञ्चयनञ्चाऽपि पृथक्सङ्कल्प्य कुम्भयोः ॥ एककालगतासूनां बहूनामथवा द्वयोः। मन्त्रेण दहनं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक् ॥ दम्पत्योरेकदा मृत्यौ दहेदौपासनादुभौ। पृथक्पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ॥ नग्नप्रच्छादनश्राद्धं नवश्राद्धं तथैव च। वृषोत्सर्गं मासिकानि सपिण्डीकरणं पृथक्" इति ॥ भर्तुरस्थि-सञ्चयनात्पूर्वं तस्य भार्याया मरणे यमः — अस्थिसञ्चयनादर्वाग्भर्तुः पत्नी मृता यदि। तस्मिन्नेवाऽनले दाह्या यदि चाग्निर्न शाम्यति ॥

# ॥ ब्रह्ममेधविधिः ॥

( बो. पि. सू. २·२ ) अथ वै भवति प्रजापतिः प्रजास्सृष्ट्वा वृत्तोऽशयत्तं देवा भूतानां रसं तेजस्सम्भृत्य तेनैनमभिषज्यन्निति तत्पृच्छन्ति कतमद्ब्राह्मणानां तेजो रसो येनैनमभिषज्यन्निति चतुर्होतार इत्येव ब्रूयात् ॥ तस्य सग्रहैर्होतृभिर्होमो, भर्तृसूक्तेन भरणं, पत्नीभिरुपसंवेशनं, दक्षिणाप्रतिग्रहैर्निर्मार्गो, हृदयैर्हिरण्यशकलान्, सम्भारैः पात्रचयः, ज्योतिष्मतीभिरुपोषणं, नारायणाभ्यां 'ब्राह्मण एकहोता' इति चोपस्थानं, 'प्रयासाय स्वाहा' इत्याज्याहुतीः, 'चित्तं सन्तानेन' इति हविराहुतीः, मृत्युसूक्तेनानुशंसनं, सौम्यया सन्नाहनमीयुष्ट्वाऽवगाहनं सौर्येणादित्यस्योपस्थानमिति तानेतान्परं ब्रह्मेत्याचक्षते ॥ तान्न साधारणे श्मशाने प्रयुञ्जीत नाऽनाचार्याय नाऽश्रोत्रियाय नाऽगुरवे ॥

अथ प्रयोगः ॥ ब्रह्मविदां तपोनिष्ठानां पितुराचार्यस्य च गुरूणां वा ब्रह्ममेधविधिना संस्कारं कुर्यात् । पितृमेधप्रयोगः सर्वत्र प्रकृतिर्भवति । प्रायश्चित्तप्रभृति यथोक्तमग्निमुत्पाद्य दक्षिणायनमरणादि यथासम्भवं प्रायश्चित्तं कृत्वा ब्राह्मणाननुज्ञाप्य 'अमुकशर्माणं प्रेतं० अग्निना ब्रह्ममेधेन पितृमेधविधिना सह संस्करिष्ये' इति सङ्कल्पः । विशेषस्तूच्यते—'परे युवांसं०' इत्यस्य होमानन्तरं नानाचतुर्गृहीतैर्होमः—"चित्तिः स्रुक्० नृम्णं धात्स्वाहा ॥ पृथिवी होता० इन्द्रियाय स्वाहा ॥ अग्निर्होता० हवनश्रुतः स्वाहा ॥ सूर्यन्ते० मेरय स्वाहा ॥ महाहविर्होता० पृथिव्यै स्वाहा ॥ वाग्घोता० स्वयंभुवे स्वाहा" ( सर्वत्र–वाचस्पतये ब्रह्मण इदं० ) ॥ शवनयनकाले—'पूषात्वेतश्चावयतु०' इत्यनन्तरं 'भर्ता सन्भ्रियमाणः०' इत्यनुवाकं पठेत् । एवमेव 'पूषे मा आशाः०, आयुर्विश्वायुः०' इत्यत्रापि । एवमेव 'इयंनारी० इत्यत्र 'सेनेन्द्रस्य० इत्यनुवाकं, 'सुवर्णं

हस्तात्०' इत्यत्र 'देवस्य त्वा०' इत्यादि षोडश प्रतिग्रहमन्त्रांश्च पठेत्॥ 'सुवर्णं घर्म०' इत्यास्ये, 'ब्रह्मेन्द्रमग्नि०' इति नासिकयोः, 'शतं नियुतः०' इत्यक्ष्णोः, 'सुवर्णं कोशं०' इति कर्णयोः हिरण्यशकलान्प्रत्यस्यति। 'मैनमग्ने०, ज्योतिष्मतीं त्वा०' इत्यनुवाकेन चाग्न्युपोषणम्। 'सहस्रशीर्षा०, अद्भ्यः सम्भूतः०, ब्राह्मण एकहोता०' इति त्रिभिरनुवाकैरुपस्थानम्। 'य एतस्य पथो गोप्तारः०' इत्यादिभिः सह 'प्रयासाय स्वाहा' इत्यादि द्वादशाज्याहुतयः। 'प्रकेतुना०' इत्यनन्तरं 'हरि१ हरन्तं०' इत्यनुवाकेन चाऽनुशंसनम्। 'अप्स्वन्वती०, आप्यायस्व मदिन्तम०' इति च सङ्काहनम्, 'धाता पुनातु०, ईयुष्टे ये०' इत्यवगाहनं, 'उद्वयन्तमसस्परि०, तरणिर्विश्वदर्शतो०' इत्यादित्यस्योपस्थानम्॥ सर्वमन्यत्पितृमेधवत्॥

## ॥ ब्रह्मचारिमरणे होतृकल्पविधिः ॥

(बो. पि. शे. सू. १·४) 'ब्रह्म वै चतुर्होतारः' इति ब्रह्मचारिणं होतृकल्पेनैव॥ (बो. पि. सू. ३. ३·८–१०) अथ दशहोतारमेवाग्रे नासिकयोर्द्विर्जपेत्॥ 'आसीत्' इति सर्वेषु होतृपदेष्वनुषजत्यन्यत्र षड्ढोतृपदेभ्यः। 'आस्ताम्' इति द्वित्ववाचिषु॥ चतुर्होतारं मुखे। अक्षिकटकयोर्द्विः पञ्चहोतारम्। कर्णयोर्द्विष्षड्ढोतारम्। कीकसासु द्विस्सप्तहोतारामिति॥ (बो. पि. सू. ३·४·१२–१३) अथ सम्भारैश्च पत्नीभिश्चोपोषेत्॥ ग्रहैः, ऋतुमुखीयेन 'ब्राह्मण एकहोता' इति चोपस्थानम्॥

अथ प्रयोगः॥ "प्रेतं० गोत्रं० शर्माणं होतृकल्पविधिना पितृमेधविधिना सह संस्करिष्ये" इति सङ्कल्पः॥ पितृमेधविधावास्ये दधिमधुघृततिलतण्डुलनिवपनान्ते — "चित्तिः स्रुगासीत्॥ चित्तमाज्यमासीत्॥ वाग्वेदिरासीत्" इत्यादि "साम्नाध्वर्युरासीत्" इत्यन्तं दक्षिणवामनासिकयोर्द्विर्जपेत्॥ एवमेव "पृथिवी होताऽऽसीत्॥ द्यौरध्वर्युरासीत्॥ रुद्रोऽग्निरासीत्॥

बृहस्पतिरुपवक्तासीत्” इति मुखे ॥ “अग्निर्होताऽऽसीत् ॥ अश्विनाऽध्वर्यू आस्ताम् ॥ त्वष्टाऽग्नीदासीत् ॥ मन उपवक्ताऽऽसीत्” इति वामदक्षिणनेत्रयोर्द्विः ॥ “सूर्यन्ते चक्षुः ॥ वातं प्राणः ॥ द्यां पृष्ठम् ॥ अन्तरिक्षमात्मा ॥ अङ्गैर्यज्ञम् ॥ पृथिवी ँ शरीरैः” इति दक्षिणवामकर्णयोर्द्विः ॥ “महाहविर्होताऽऽसीत् ॥ सत्यहविरध्वर्युरासीत्” इत्यादि “अयास्य उद्गाताऽऽसीत्” इत्यन्तं कीकसासु (दन्तपङ्क्तौ) द्विर्जपेत् ॥ “मैनमग्ने०, अग्निर्यजुर्भिः० सेनेन्द्रस्य०” इत्यनुवाकाभ्याश्चाऽऽग्न्युपोषणम् ॥ “वाचस्पते विधेनामन्० नृम्णं धात्स्वाहा, वाचस्पते वाचो वीर्येण० इन्द्रियाय स्वाहा, सोमः सोमस्य पुरोगाः० हवनश्रुतः स्वाहा, वाचस्पते च्छिद्रया० मेरय स्वाहा, वाचस्पते हृद्विधेनामन्० पृथिव्यै स्वाहा, वाग्घोता० स्वयंभुवे स्वाहा, ब्राह्मण एकहोता०” इत्यनुवाकेन चोपस्थानम् ॥ इति विशेषः ॥ अन्यत्सर्वमविकृतं पैतृमेधिकं कर्म कुर्यात् ॥ समावृत्तानामप्येवमेव ॥ ॥

## द्विभार्यकस्य भार्यान्तरसंस्कारे संसृष्टाऽग्निविमोकविधिः ॥

(बो. गृ. शे. सू. ४ १२) अथ यद्यग्निविमोकमीक्षेताऽग्निमुपसमाधाय सम्परिस्तीर्याज्यं विलाप्योत्पूयस्रुक्स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा द्वयोर्भार्ययोरन्वारब्धयोर्यजमानो जुहोति—‘इम ँ स्तनमूर्जस्वन्तन्धयापां प्रप्यातमग्ने सरिरस्य मध्ये। उत्सं जुषस्व मधुमन्तमूर्व समुद्रिय ँ सदनमाविशस्व स्वाहा’ इत्यग्निविमोकं हुत्वा तमनलं विभजेत् ॥ पुनस्संयोगो न भवति ‘विभक्तं न हि संसृजेत्’ इति स्मरणात् ॥ पूर्वस्मिन्नग्नौ यदि विवहेत्स हि साधारणो भवति न तत्र विभाग एकत्वादग्ने-रित्याह भगवान् बोधायनः ॥ ॥ “बहुभार्यस्य गृहिणो यद्येका निधनं गता। त्वरितं मरणात्पूर्वमिष्ट्या संसर्गयैव तु ॥ संयोजितं पूर्ववह्निं स्थण्डिले सन्निधाय तु। भूतं प्रवर्तमानञ्च कर्म नैत्यिकमाचरेत् ॥ मन्त्रेणेमं स्तनमिति घृतपूर्णां हुनेत्स्रुचम्। सिन्दाहुती

महाद्यास्तु व्याहृतीर्व्याहृतीर्हुनेत् ॥ ततो विभज्य तं वह्निमानयेन्मन्त्रमीरयेत् । दापयेन्म्रियमाणायै वह्निं दक्षिणभागगम् ॥ विसर्गेष्टिमकृत्वैव पुरस्तान्निधनं गता । नीत्वा गृहान्तरं वह्निं विभज्येत्तन्तु पूर्ववत् ॥ इमां वैसर्गिकीमिष्टिं समगोत्रेण कारयेत् । द्वयोरन्यतरं तन्त्रं मुख्यतन्त्रेण वा चरेत् " इति ॥

अथ प्रयोगः ॥ आचम्य प्राणानायम्य पूर्वसंसृष्टमौपासनाग्निमुपसमाधाय, देशकालौ सङ्कीर्त्य 'पूर्वसंसृष्टाग्निविभागार्थं अग्निविमोकहोमं करिष्ये' इति सङ्कल्प्यान्वाधायाज्यसंस्कारान्तं कृत्वा स्रुक्स्रुचौ निष्टप्याऽग्निं परिषिच्यालङ्कृत्य व्याहृतीर्हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा द्वयोर्भार्ययोरन्वारब्धयोर्यजमानो जुहोति — "इम ँ स्तनमूर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये'। उत्सं जुषस्व मधुमन्तमूर्व समुद्रिय ँ सदनमा विशस्व स्वाहा" (अग्नय इदं० ) ॥ ततो महाव्याहृतीर्व्याहृतीर्मिन्दाहुती च हुत्वा होमशेषं समाप्य ॥ मृताया भार्याया संस्कारार्थं दक्षिणार्धमग्निं पृथक्कुर्यात् ॥ अवशिष्टेनाग्निना यावज्जीवमौपासनादि सर्वं कार्यम् ॥ विभक्तस्य पुनः संयोगो न भवति । 'विभक्तं न हि संसृजेत्' इत्युक्तत्वात् ॥

स्नातकदहनप्रयोगः ॥ स्नातकस्य मरणे आदौ अवकीर्णदोषनिवृत्त्यर्थं प्राजापत्यकृच्छ्रत्रयं चरित्वा, देशकालौ स्मृत्वा अमुकस्य स्नातकस्योर्ध्वदेहिकाधिकारार्थमर्कविवाहं करिष्ये, इति सङ्कल्प्य । हिरण्येन नान्दीसमाराधनं कृत्वा, ब्रह्मचारिदाहोक्तप्रकारेणाऽर्कविवाहं कृत्वा विवाहहोमान्तेऽर्कशाखां स्नातकञ्च तुषाग्निना विधिवद्दहेत् ॥

सकेशादहनप्रयोगः ॥ कर्ता स्नात्वा देशकालौ सङ्कीर्त्य, अमुकगोत्राया अमुकनाम्न्याः प्रेताया भर्तृवियोगोत्तरमेतावन्तं कालं निषिद्धकेशकञ्चुक्यादिधारणजनितप्रत्यवायपरिहारार्थं प्रत्यब्दमेकैकं कृच्छ्रं, तथा केशकञ्चुक्यादिसहितायाः प्राणोत्क्रमणजनितदोषनिवृत्त्यर्थं कृच्छ्रत्रयं प्रायश्चित्तं हिरण्यदानेन चरित्वा कञ्चुक्यादि परित्यज्य वपनं कारयित्वा संस्नाप्य विधिना दहेत् ॥

# ॥ अथ जीवश्राद्धम् ॥

(बो. गृ. शे. सू. ३. १९) अथातो जीवश्राद्धं व्याख्यास्यामः–यस्त्वात्मनःश्रेय इच्छत्यपरपक्षे त्रयोदशीमुपोष्य तस्मिन्नेवाहनि सम्भारानुकल्पयते यान्यौर्ध्वदैहिकानि मृतानां वस्त्रषट्कं सौवर्णीं सूचीमङ्कुशं तान्तवं पाशं कन्थां पलाशवृन्तमौदुम्बरीमासन्दीं कृष्णाजिनं कलशानीत्यन्यान्यपि च ॥ श्वोभूते स्नात्वा मध्याह्ने जले स्थित्वोपोत्थाय 'पुण्याहं स्वस्ति ऋद्धिं' इति वाचयित्वा वस्त्राङ्गुलीयकं दक्षिणां दद्यात् सघृतपायसं दक्षिणाभिमुखोऽश्नीयात् ॥ अथ श्राद्धविधिनाऽग्निमुपसमाधाय सम्परिस्तीर्याऽऽ-ग्निमुखात्कृत्वा पक्वाज्जुहोति — 'चत्वारि शृङ्गा' इति पुरोनुवाक्यामनूच्य 'त्रिधा हितम्' इति याज्यया जुहोति 'तत्सवितुर्वरेण्यम्' इति पुरोनुवाक्यामनूच्य 'चोदयित्री सूनृतानाम्' इति याज्यया जुहोति 'ये चत्वारः' इति पुरोनुवाक्यामनूच्य 'द्वे स्रुती' इति याज्यया जुहोति 'अग्ने नय' इति पुरोनुवाक्यामनूच्य 'या तिरश्ची' इति याज्यया जुहोति ॥ अथाऽज्याहुतीरुपजुहोति–पुरुष-सूक्तेनाऽष्टादशर्चेन हुत्वा गायत्र्याऽष्टसहस्रमष्टशतमष्टविंशतिं वा जुहुयात् । स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ धार्य एवाग्निरा-समाप्तेः ॥ चतुष्पथं गत्वा सूचीमङ्कुशं कन्थां रज्जुमिति कृष्णतनवे ह्रस्वाय ब्राह्मणाय दत्वा 'प्रीयन्तां यमकिङ्कराः' इति वाचयित्वा व्रीहिषु कलशान् सादयेत् ॥ तन्तुना परिवेष्ट्य जलपूर्णान्पुरुषाकृतिं कृत्वा त्रीणि शीर्ष्णि मुखे त्रीणि ग्रीवायामेक-विंशतिं शरीरे चतुष्टयं बाह्वोर्द्वे लिङ्गस्यैकं पादयोः पञ्च पञ्चेति 'प्रीतोऽस्तु भगवान् यमः' इति ॥ तत आसन्दीं कृत्वा पञ्चगव्येन प्रक्षाल्य पलाशवृन्तैः कृष्णाजिने पुरुषाकृतिं कृत्वा कलशपुरुषे प्राणानभिनिवेश्य वृन्तशरीरे देहमभिनिवेश्य स्वपेत् ॥ उदिते सूर्ये कलशैर्देहं स्वयमेवाभिषेचयेत् पौरुषेण सूक्तेन पञ्चगव्येन शुद्धोदकेन सायाह्ने सतिलमन्नं सर्पिषाऽश्नीयात् ॥ ब्राह्मणानपि

यमकिङ्करतृप्तये भोजयेत् ॥ चतुर्थ्यां यन्त्रदाहः ॥ उदकं पिण्डं च 'अमुकगोत्राय मह्यं पिण्डमामुत्रिकं स्वधा' इति नमस्कारान्तं कृत्वा समापयेत् ॥ तत्राऽऽशौचं दशाहं स्यात्स्वस्य । ज्ञातेर्न विद्यते ॥ एकादश्यामेकोद्दिष्टं प्रतिपद्यते ॥ अथाप्युदाहरन्ति— "आपन्नस्त्री च शूद्रश्च यन्त्रैर्दग्ध्वा स्वकां तनुम् । तदह्नैव क्रियास्सर्वाः कुर्यादिति हि वै श्रुतिः" स्त्रीणां तूष्णीं समन्त्रकं वा ॥ मासिमास्येवं संवत्सरात्संवत्सरादूर्ध्वमाद्वादशाब्दात्ततो निवृत्तिः ॥ यदा स्वयं न शक्नुयात्तदा पुत्रादयः कुर्युः ॥ अथाप्युदाहरन्ति —जीवन्नेवाऽऽत्मनश्श्राद्धं कुर्यादन्येषु सत्स्वपि । यथाविधि प्रवर्त्याशु सपिण्डीकरणादृते ॥ इति ॥ तस्योक्तं कालं न विलम्बयेद्य-तोऽनित्यं जीवितमिति ह स्माह भगवान्बोधायनः ॥

आत्मश्राद्धम् ॥ ( बो. गृ. शे. सू. ३. २२ ) यस्त्वात्मनश्श्रेयांसमिच्छत्यौर्ध्वदैहिकं स्वस्य यदि भवति तदा दहनप्रभृति सपिण्डीकरणान्तं जीवन्नेवाधस्तथोक्तं सकलं कुर्यात् ॥ तथाऽह कण्वः — "जीवन्नेव च यः कुर्वन्नात्मनश्श्राद्धमिच्छति । यन्त्रेण कृत्वा संस्कारमुदकं बलिमेव च ॥ कृत्वाऽथ षोडशश्राद्धं दद्याद्यद्यत्प्रियं भवेत् ॥ आत्मनस्तत्स्वयं दत्वा ततश्श्राद्धं समापयेत् ॥ तत्राऽऽशौचं दशाहं स्यात्स्वस्य ज्ञातेर्न विद्यते" इति ॥ अत्रैव विष्णुः — 'आत्मार्थं पारलौक्यं यत्तत्सर्वं समवाप्नुयात् । न हि कर्म कदाचित्तु क्षयमेति कृतं नरैः' इति ॥ तस्माद्यस्य न सन्ति कर्तारो ज्ञातयः पुत्रोऽन्तेवासिनो वा स जीवन्नेव आमुष्मिकं सर्वमविकृतं कुर्वन् नामोच्चारणे तद्गोत्राय तच्छर्मणे करिष्यते ॥ अथवा प्रविदानकल्पेन वा दद्यादितीदमप्येकम् ॥

( जीवतः ) आत्मसंस्कारप्रयोगः ॥ यस्य न सन्ति कर्तारो ज्ञातयः पुत्रोऽन्तेवासिनो वा स जीवन्नेवौर्ध्वदैहिकं सपिण्डी-करणान्तं सर्वं कर्म कुर्यात् ॥ कर्ता कृष्णपक्षस्य त्रयोदश्यामुपोष्यौर्ध्वदैहिकसम्भारैः सह वस्त्रषट्कं, सौवर्णीं सूचीमङ्कुशं, कार्पास-

निर्मितं रज्जुं, कन्थां, षष्ट्युत्तरत्रिशतानि पर्णवृन्तान्यौदुम्बरीमासन्दीं, कृष्णाजिनं, षट्चत्वारिंशत्कलशानुपयुक्तानन्यानपि सम्भृत्य, श्वोभूते प्रातः कृतस्नानादिनित्यक्रियो मध्याह्ने स्नात्वा जले तिष्ठन्यथाशक्ति गायत्रीं जप्त्वोपोत्थाय, गणेशं सम्पूज्य ब्राह्मणानन्नेन परिविष्य, 'पुण्याहं स्वस्त्यृद्धिम्' इति वाचयित्वा वस्त्रमङ्गुलीयकं सहिरण्यमाचार्याय दत्वा दक्षिणामुखो भूत्वा सघृतं पायसं प्राश्नीयात् ॥ अपराह्ने-देवयजनोल्लेखनाद्यग्निं प्रतिष्ठाप्य "मम जीवत आत्मसंस्काराधिकारसिद्धिद्वारा श्रेयःप्राप्त्यर्थं प्रायश्चित्त-होमं करिष्ये, चित्तिर्नामाग्निः, अग्निः सरस्वती विश्वेदेवाः अग्निःपथिकृत् इति प्रधानदेवताः, अग्निः स्विष्टकृत्" इत्यादि सङ्कल्प्याऽन्वाधायाऽग्निमुखान्तं कृत्वा पक्वाज्जुहोति—'चत्वारि शृङ्गाः०, त्रिधा हितं० निष्टतक्षुः स्वाहा' अग्नय इदं० ॥ पुनर्दर्व्या-मुपस्तीर्येत्याद्यवदानधर्मेणावदाय द्वितीयपक्वं जुहोति—'तत्सवितुर्वरेण्यं०, चोदयित्री० सरस्वती स्वाहा' सरस्वत्या इदं० ॥ एवमेव तृतीयपक्वं जुहोति—'ये चत्वारः०, द्वे स्रुती०' इति द्वाभ्यां, विश्वेभ्यो देवेभ्य इदं० ॥ ततश्चतुर्थपक्वं जुहोति—'अग्ने नय०, या तिरश्ची०' इति द्वाभ्यां, अग्नये पथिकृत इदं० ॥ स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति – पुरुषसूक्तेन प्रत्यृचं हुत्वा, गायत्र्याऽष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिं वा जुहुयात् ॥ स्विष्टकृदादि होमशेषं समाप्य कर्मसमाप्तिपर्यन्तमग्निं गोपायेत् ॥

ततश्चतुष्पथं गत्वा सूचीं, अङ्कुशं, कन्थां, रज्जुञ्च यमकिङ्करप्रीत्यर्थं तत्स्वरूपिणे ब्राह्मणाय दत्वा 'यमकिङ्कराः प्रीयन्ताम्' इति प्रार्थयेत् । 'प्रीयन्तां यमकिङ्कराः' इति प्रतिवचनम् ॥ ततः सायङ्काले सन्ध्यादिनित्यकर्मान्तेऽग्रेणाऽग्निं व्रीहिभिर्यवैर्वा स्थण्डिलं कृत्वा पुरुषाकारेण षट्चत्वारिंशत्कलशान्संस्थापयेत्— जलपूर्णं तन्तुना परिवेष्टितं पूर्वभागे, शीर्षस्थाने कलशत्रयं, मुखस्थाने त्रीणि, ग्रीवायामेकविंशतिं, शरीरे चतुष्टयं, दक्षिणवामबाहौ द्वे द्वे, लिङ्गस्यैकं, दक्षिणवामपादयोः पञ्च पञ्च,

इति षट्चत्वारिंशत्कलशान्संस्थाप्य वरुणपूजान्तं कृत्वा, 'यमो दाधार' इति मन्त्रेण यममावाह्य षोडशोपचारैरभ्यर्चयेत् ॥ ततोऽग्नेर्दक्षिणत आसन्दीं निधाय पञ्चगव्येन प्रक्षाल्य तस्मिन्दर्भानास्तीर्य तदुपरि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तत्र षष्ट्युत्तरत्रिशतैः पलाशवृन्तैः पुरुषाकृतिं करोति — चत्वारिंशतः शिरः प्रकल्प्य, दशभिर्ग्रीवां, विंशत्योरः, त्रिंशद्भिरुदरं, पञ्चचत्वारिंशद्भिर्दक्षिणं बाहुं, पञ्चभिस्तस्याऽङ्गुलीः, पञ्चचत्वारिंशद्भिरुत्तरं बाहुं, पञ्चभिस्तस्याऽङ्गुलीः, पञ्चषष्टिभिर्दक्षिणं पादं, पञ्चभिस्तस्याङ्गुलीः, पञ्चषष्टिभिरुत्तरं पादं, पञ्चभिस्तस्याङ्गुलीः, अष्टाभिः शिश्नं, द्वादशभिर्वृषणश्चेति पुरुषाकृतिं कृत्वा, कलशेषु स्वस्य प्राणनिवेशनं चिन्तयित्वा, पलाशवृन्तमध्ये शयित्वा रात्रिं नयेत् ॥ अथोदिते सूर्ये, स्थापितकलशोदकैर्ब्राह्मणाः पुरुषसूक्तेन तस्यदेहमभिषिञ्चेयुः पञ्चगव्येन ततः शुद्धोदकेन च ॥ यमकिङ्करतृप्त्यर्थं यथाशक्ति ब्राह्मणान्भोजयेत् ॥ सायाह्ने स्वयं सर्पिर्मिश्रं सतिलमन्नं भुञ्जीत ॥ चतुर्थेऽहनि पैतृमेधिकविधिना तं पुरुषाकृतिं दहेत् । ततो नित्यश्राद्धनवश्राद्धनग्नप्रच्छादन-श्राद्धादीनि सर्वमविकृतं कुर्यात् । पिण्डदाने 'अमुकशर्मणेऽमुकगोत्राय मह्यं पिण्डमामुत्रिकं स्वधा नमः' इति वदेत् । एवमेव तिलोदकवासोदकादिष्वप्यूह्यम् ॥ अत्र स्वस्यैव दशाहमाशौचम् । ज्ञातीनां न विद्यते ॥ एकादश्यामेकोद्दिष्टं षोडशमासिकादि सर्वं कुर्यात् । दानकाले स्वस्य यद्यत्प्रियतमं तत्सर्वं देयम् ॥ ॥ स्त्रीणान्तु — तूष्णीं समन्त्रकं वा कार्यम् ॥ ॥ सपिण्डी-करणं, तत्तत्काले षोडशमासिकानि च कृत्वा दहनतिथौ द्वादशवर्षपर्यन्तं सांवत्सरिकश्राद्धं कृत्वा विरमेत् ॥ ॥ यस्य ज्ञातयः पुत्रोऽन्तेवासिनो वा सन्ति तस्य सपिण्डीकरणं विना एकोद्दिष्टान्तं सर्वं पैतृमेधिकं भवति । तत्तत्काले एकोद्दिष्टविधानेन मासिकानि भवन्ति । प्रत्याऽब्दिकानि चाऽऽद्वादशाब्दात् ॥

# कृतौर्ध्वदैहिकस्य पुनः संस्कारविधिः ॥

( बो. पि. सू. २·७ ) यद्येवं कृतेऽग्निभिर्यजमानः पुनरागच्छेत्कथं तत्र कुर्यादिति ॥ यज्ञियात्काष्ठादग्निं मथित्वाऽग्निमुपसमाधाय सम्परिस्तीर्याऽऽग्निमुखात्कृत्वा पक्वाज्जुहोति — 'हिरण्यगर्भः समवर्तताग्रे' इति द्वाभ्याम् ॥ अथाज्याहुतीरुपजुहोति— 'सहस्रशीर्षा' इत्येतेनानुवाकेन प्रत्यृचम् ॥ स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अपरेणाग्निं सौवर्णेन पात्रेण घटेन वा मृण्मयेन कृष्णाजिनेन वा द्रवीभूतेन घृतेनाद्भिः पूरयित्वा जीवपितुश्चेत्पिताऽभिमन्त्रयते — 'विष्णुर्योनिं कल्पयतु' इति ॥ अथैनं प्रवेशयति — 'त्वां पूर्षच्छिवतमामेरयस्व' इति ॥ स गर्भो भूत्वा कृष्णाजिनद्वतावेतां रात्रिं वसति ॥ व्युष्टायां पुंसवनप्रभृत्या जातकर्मणः कारयित्वा जघनार्धादात्मानमपकृष्य जायेत ॥ जातस्य जातकर्मप्रभृति संस्कारान्कारयित्वा द्वादशरात्रमेतद्व्रतं चरेत् ॥ ऊर्ध्वमीप्सितैर्यज्ञक्रतुभिर्यजेतेति विज्ञायते ॥ हिरण्यगर्भस्सम्भूतो ब्राह्मणश्चीर्णनिर्णयः । प्रत्युत्थानं न कस्यापि कुर्याद्देवसमस्तु सः ॥ इति विज्ञायते ॥ ( बो. पि. सू. ३·७ ) अथ यदि जीवन्पुनरागच्छेद्घृतकुण्डे निमज्योत्तीर्य स्नापयित्वा जातकर्मादिसंस्कारान् क्रियेरन् द्वादशरात्रान्तानि व्रतानि त्रिरात्रान्तानि वा ॥ अथ स्नानम् । ततस्तामेव जायां प्रतिपद्येत । तस्यामविद्यमानायामन्यां कुमारीं विन्देताऽथाग्नीनाधाय व्रात्यैनैन्द्राग्नेन पशुनेष्ट्वा गिरिं गत्वाऽग्नये कामायेष्टिं निर्वपेदत उर्ध्वमीप्सितैर्यज्ञक्रतुभिर्यजेतेति विज्ञायते ॥

अथ प्रयोगः ॥ यस्य मृतिवार्ताश्रवणेनौर्ध्वदेहिकं कृतं तस्य पुनरागमने — सङ्ग्राह्यापेक्षया वयोधिकः पित्रादिः, देशकालौ सङ्कीर्त्याऽमुकगोत्रस्याऽमुकशर्मणः पैतृमेधिकसंस्कारोत्तरं पुनरागतस्य सङ्ग्रहणार्थं श्रीपरमेश्वरप्रीत्यर्थं संस्कारविधिं

करिष्ये, इति सङ्कल्प्य। गणेशपूजनं हिरण्येन नान्दीसमाराधनं, हिरण्यगर्भः, प्रजापतिः, धाता, सवितारः प्रीयन्तामिति पुण्याहं वाचयित्वा स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य,० शर्मणः० गोत्रस्य कृतौर्ध्वदेहिकस्य पुनः सङ्ग्रहणार्थं पुनः संस्कारहोमं करिष्ये, पुनः संस्कारहोमः कर्म, चित्तिर्नामाग्निः, हिरण्यगर्भो देवता, चरुर्हविः, उपहोमे–पुरुषसूक्तेन प्रतिमन्त्रं एकैकयाज्याहुत्या यक्ष्ये, अग्निः स्विष्टकृत, इत्यादि सङ्कल्प्यान्वाधाय, हिरण्यगर्भाय चरुं निरुप्य प्रतिष्ठिताभिघारणादि कृत्वा, ' हिरण्यगर्भः समवर्तताग्रे०, यः प्राणतो०' इति द्वाभ्यां पक्वं हुत्वा ( हिरण्यगर्भायेदं० ) स्विष्टकृतमवदायान्तःपरिधौ निधायाज्याहुतीरुपजुहोति—पुरुषसूक्तेन प्रत्यृचं स्विष्टकृदादि होमशेषं समाप्याऽपरेणाग्निं सौवर्णं मृण्मयं वा पात्रं कृष्णाजिनकोशं वा घृतेनाऽद्भिश्च पूरयित्वा ' विष्णुर्योनिं० परीषु पुत्रान् ' इत्यादिभिरभिमन्त्र्याऽथैनं प्रवेशयति — ' तां पूषन्० शेषम् ' इति ॥ स गर्भो भूत्वा तां रात्रिं वसति। अथापरेद्युः पुंसवनादि विष्णुबल्यन्तान्संस्कारान्समाप्य जघनार्धादात्मानमपकृष्य स्वयं बहिरागच्छेत् । ततः स्नापयित्वा जातकर्मादि चौलान्तान्संस्कारान्करिष्ये, इति सङ्कल्प्य गणेशपूजनादि नान्दीश्राद्धान्ते पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा ( मृत्युः सविता सविता श्रोत्रं केशीमेधाकरेन्द्राः प्रीयंतामिति विशेषः ) जातकर्मादि चौलान्तसंस्कारान्कृत्वा, पुनरुपनयनं कुर्यात् । त्रिरात्रं व्रतचर्य्यां चरित्वा चतुर्थेहनि सुश्रवःपूजनमपि कुर्यात् ॥ संस्कार्यस्तु प्राजापत्यादिपञ्चकाण्डव्रतानि समावर्तनपूर्वकं पूर्वगृहीतया पत्न्या सह पुनर्विवाहविधिना विवाहं च कुर्यात् । तस्या अभावेऽन्यया कुमार्या सह द्वितीयं विवाहं कुर्यात् ॥ ॥ ( सुवासिन्याः स्त्रियः पुनः सङ्ग्रहणे जातकर्मादि कृत्वोपनयनादि समावर्तनान्तं कर्म वर्जयित्वा पूर्वपतिना सह विवाहविधिना विवाहः, इति विशेषः ) एवं कृते कर्माधिकारः ॥

# ॥ यतिसंस्कारविधिः ॥

( बौ. गृ. शे. सू. ४. १७ ) अथातस्सम्प्रवक्ष्यामि संस्कारविधिमुत्तमम् । समाहितानां युक्तानां यतीनां च महात्मनाम् ॥ १ ॥ शुचौ देशे तु सावित्र्या देहं प्रक्षाळ्य यत्नतः । अलङ्कृत्य च गायत्र्या गन्धैर्माल्यैः पृथक्पृथक् ॥ २ ॥ वहन्ति ब्राह्मणा ये वै शुचयस्सर्व एव ते । तेषान्तु वहतां सम्यक्सद्यश्शौचं विधीयते ॥ ३ ॥ प्रक्षाळनादि तत्कर्म ये कुर्वन्ति महीयसाम् । तेषामपि तथा सद्यश्शौचमेव विधीयते ॥ ४ ॥ पुत्रो वा सन्निकृष्टो वा शुचौ देशे निधाय तम् । उपावरोहमन्त्रेण तस्याग्नीनवरोप्यतु ॥ ५ ॥ तूष्णीं सम्मार्जनं कृत्वा व्याहृतीभिश्च सप्तभिः ॥ प्रोक्ष्य काष्ठञ्च तद्देहं निधाय तु समन्त्रकम् ॥६॥ विष्णो हव्यं रक्षस्वेति मुखे जलपवित्रकम् । पवित्रं तेति मन्त्रेण निदधाति तथा पुनः ॥७॥ त्रिदण्डं दक्षिणे हस्ते वैष्णव्यर्चा निधाय च । उदरे च तथा पात्रं सावित्र्या निदधाति वै ॥ ८ ॥ यदस्य पारे रजसस्सव्ये शिक्यं निधाय च । गुह्ये कमण्डलुं चैव भूमिर्भूमिमगादिति ॥ ९ ॥ पितृमेधप्रयोगेण दहेदग्निभिरेव हि । संस्कर्तुश्च तथा तस्य नाशौचं नोदकक्रिया ॥ १० ॥ एकोद्दिष्टं न कुर्वीत सन्यस्तानां कदाचन । अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ॥ ११ ॥ द्वादश्यामह्नि वा पुण्ये नारायणबलिर्भवेत् । सर्वं नारायणोद्देशमेकोद्दिष्टवदाचरेत् ॥ १२ ॥ अनाहिताग्निनां चैव संन्यस्तानां महात्मनाम् । अपि होतृविधानेन गायत्र्या प्रणवेन वा ॥ १३ ॥ अप्राकृतानां महतां ब्रह्मनिष्ठमनस्विनाम् । तेषान्तु खननं कार्यमिति प्राहुर्मनीषिणः ॥ १४ ॥ तिसृभिर्व्याहृतीभिस्तु खात्वा दण्डप्रमाणतः । त्रिदण्डादीन् यथास्थानममन्त्रैस्स्थापयेद्बुधः ॥ १५ ॥ प्रच्छादयेदसंस्पृष्टं सृगालश्वापदादिभिः । श्वादयो यदि खादन्ति महान्दोषो भविष्यति ॥ १६ ॥ तस्माद्भूमिं भृशं खात्वा सम्यक्प्रच्छादयेद्यतीन् । सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ॥ १७ ॥ न तस्य दहनं कुर्यान्नाशौचं

नोदकक्रिया । निषेकाद्यास्मशानान्तास्तत्क्रिया ब्राह्मणाश्रिताः ॥ १८ ॥ तस्माद्यत्नेन संस्कारः कर्तव्यो गृहमेधिभिः ॥ ये वहन्ति महात्मानं स्पृष्ट्वा दृष्ट्वा द्विजातयः ॥ १९ ॥ हयमेधफलं तेषामस्तीत्येव विदुर्बुधाः ॥ २० ॥

स्मृत्यन्तरे — " कुटीचकं तु प्रदहेत्पूरयेच्च बहूदकम् । हंसो जले च निक्षेप्यः परमहंसं प्रपूरयेत् " ॥ वाराहे — " सन्न्यासिनोप्याब्दिकादि पुत्रः कुर्याद्यथाविधि । महालयेपि यच्छ्राद्धं द्वादश्यां पार्वणेन तु " ॥ संग्रहे — " द्वादश्यां पार्वणे नैव श्राद्धं कुर्यान्महालये । सुतः संन्यासिनोप्यत्र यथाविधि समाचरेत् " ॥ एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् । न कुर्याद्वार्षिकादन्यद्ब्रह्मीभूताय भिक्षवे । कुटीचकातिरेकेण न दहेद्यतिनं क्वचित् ॥

( बौ. पि. सू. ३. ११ ) अथातः परिव्राजकस्य संस्कारविधिं व्याख्यास्यामः — पृथिव्यां ' अक्षीभ्यामोषधीभ्याम् ' इति शरीरं निधाय ' भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ' इति उदरे पात्रं निधायाथ होतारमधीत्य तस्य दक्षिणे हस्ते कमण्डलुं निदधाति व्याहृतिभिर्देवयजनं पूरयेत् ' अग्निनाऽग्निः समिध्यते ' — इत्यशेषसंस्कारोऽश्वमेधफलं तत्रोदाहरन्ति ॥ शृगालश्ववायसाः खादन्ति चेद्दोषमाहारयेत्कर्तुस्तस्मादविशङ्कां वेदिं प्रच्छादयेदिति बोधायनः ॥

अथ प्रयोगः ॥ ब्रह्मदण्डपूर्वकं वपनं ( शिष्यस्य वपनं कृताकृतम् ) कृत्वा स्नात्वाचम्य प्राणानायम्य ' अमुकं ब्रह्मीभूतं यतिसंस्कारविधिना संस्करिष्यामि ' इति सङ्कल्प्य अधिकारार्थं कृच्छ्रत्रयं कृत्वा कलशं शुद्धोदकेनापूर्य ' आपो हि ष्ठा ' इत्यभिमन्त्र्य ' इमम्मे गङ्गे यमुने०, गङ्गे च यमुने चैव० ' इति तीर्थानावाह्य सम्पूज्य तदुदकेन सावित्र्या, सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः, पावमानीभिः, पुरुषसूक्तविष्णुसूक्तरुद्रसूक्तादिना, प्रणवेन च पञ्चामृताभिषेकपूर्वकं यतिशरीरं संस्नाप्य गन्ध-

तुलसीमालादिभिरलङ्कृत्य शिक्यादावारोप्य वाद्यघोषमन्त्रघोषपुरस्सरं ग्रामात्प्राचीं वोदीचीं वा दिशं नीत्वा शुद्धदेशं नयेत्। तत्र जले स्थले वा समाहितं कुर्यात्॥

जलपक्षे— नद्यां पञ्चगव्यं प्रक्षिप्य कुशानास्तीर्य 'सावित्र्या' देहं प्रोक्ष्य शङ्खोदकेन 'पुरुषसूक्तेन, अष्टोत्तरशतावृत्तप्रणवेन' च संस्नाप्याऽष्टाक्षरेण षोडशोपचारैः सम्पूज्य तुलसीमालाद्यैरलङ्कृत्य 'विष्णो हव्य॑ं रक्षस्व' इति नद्यां क्षिपेत्। 'पवित्रन्ते०' इति जलपवित्रं मुखे, 'इदं विष्णुः०' इति दण्डं त्रेधा भग्नं दक्षिणहस्ते, 'सावित्र्या' उदरे भिक्षापात्रं, 'यदस्य पारे०' इति सव्यहस्ते शिक्यं, 'भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्' इत्युदरे कमण्डलुञ्च निधाय, 'ह॑ंसः शुचिषत्०' इत्यादि 'परामृतात्परिमुच्यन्ति सर्वे' इत्यन्तं हृदयं स्पृष्ट्वा जपेत्। 'तत्सवितुः' इत्युदरं, 'ब्रह्मजज्ञानं०' इति मूर्धानं, 'पुरुषसूक्तेन' भ्रुवोर्मध्यं, च॥ नाळिकेरफलेन शङ्खेनाऽश्मना परशुना वा 'व्याहृतिभिः' मूर्धानं भिन्द्यात्। शिरो भेत्तुमशक्तः शिरस्थापितं गुडपिण्डं भिन्द्यात्। शिरोभेदनोत्तरं दर्भैराच्छाद्य 'व्याहृतीभिः' अभिमन्त्र्य पाषाणं बध्वा नद्यादौ 'ॐ स्वाहा' इति समाहितं कुर्यात्॥

स्थले चेत् — समाधिदेशं व्याहृतीभिः प्रोक्ष्य तत्र तिसृभिर्व्याहृतीभिर्दण्डप्रमाणमवटं खात्वा पञ्चगव्येन सप्तव्याहृतीभिः प्रोक्ष्य तत्र लवणं प्रक्षिप्य प्रागग्रान्दर्भानास्तीर्य, पुनर्यतिशरीरं शङ्खोदकेन गायत्र्या, पुरुषसूक्तेन, अष्टोत्तरशतावृत्तप्रणवैश्च संस्नाप्याष्टाक्षरमन्त्रेण षोडशोपचारैः सम्पूज्य तुलसीमालाद्यैरलङ्कृत्य 'अक्षीभ्यामोषधीभ्याम्, विष्णो हव्य॑ं रक्षस्व' इति शरीरं (पद्मासनस्थं प्राङ्मुखं) अवटे स्थाप्य, 'भूमिर्भूमिमगान्माता० स भिद्यताम्' इत्युदरे भिक्षापात्रं निधाय, 'चित्तिः स्रुक्०, पृथिवी होता०, अग्निर्होता०, सूर्यन्ते चक्षुः०, महाहविर्होता०, वाग्घोता०' इत्येतान्होतृमन्त्रान्पठित्वा तस्य दक्षिणहस्ते कमण्डलुं

दद्यात् । अपि वा तत्तत्स्थाने तूष्णीं पात्राणि निदध्यात् । पूर्वोक्तक्रमेण मूर्धानं भित्वा व्याहृतीभिः अभिमन्त्र्य प्रागग्रैर्दर्भैः प्रतिच्छाद्य लवणैरवटं सप्तव्याहृतीभिः पूरयेत् । शृगालश्ववायसादयः खादन्ति चेन्महादोषः । तस्मादविशङ्कां वेदिं प्रच्छादयेत् । "अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ॥ त्व ँ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे ॥ तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् ॥ यज्ञेन यज्ञं० देवाः " इति चतसृभिरुपस्थाय "अतो देवा " इति षड्ऋचं, " सहस्रशीर्ष देवं० स्वराट् " इत्यनुवाकञ्च जपित्वाऽश्वमेधादिफलभागिनो वयामिति भावयन्तः सर्वेऽनुगामिनस्स्नात्वा गन्धादि धृत्वा गृहं गच्छेयुः । ब्रह्मनिष्ठपरिव्राजकबहूदकादीनामेवं क्रमः ॥

कुटीचकस्य यतेर्दहनम् ॥ कर्ता ब्रह्मदण्डपूर्वकं वपनं कृत्वा स्नात्वाऽऽचम्य देशकालौ सङ्कीर्त्य 'अमुकं ब्रह्मीभूतं कुटीचकसंस्कारविधिना संस्करिष्यामि ' इति सङ्कल्प्य कृच्छ्रं चरित्वा कलशार्चनान्ते स्थण्डिलोल्लिखनादि कृत्वा 'उपावरोह० दुरोणे ' इत्यग्निमवरोप्याऽग्निसिद्धिं कृत्वा सावित्र्यादिभिर्यतिशरीरं संस्नाप्यालङ्कृत्य वाद्यघोषादिपुरःसरमग्निना सह यतिशरीरं ग्रामाद् बहिर्नीत्वा शुचौ देशे तूष्णीं सम्मार्जनं कृत्वा सप्तव्याहृतिभिस्तं देशं देहञ्च प्रोक्ष्य चितां कल्पयित्वा तत्र " विष्णो हव्य ँ रक्षस्व " इति तद्देहं निधाय "पवित्रन्ते विततं० समाशत" इति मुखे जलपवित्रं, ( आचमनार्थोदकस्य पावनहेतुभूतं वस्त्रं ) 'इदं विष्णुः० सुरे' इति दक्षिणहस्ते दण्डं, सावित्र्या उदरे भिक्षापात्रं, 'यदस्यपारे रजसः० वैश्वानराय स्वाहा ' इति सव्यहस्ते शिक्यं, 'भूमिर्भूमिमगात्० ' इति गुह्ये कमण्डलुञ्च निधाय पैतृमेधिकविधिना होतृकल्पेन प्रणवकल्पेन गायत्र्या वा दहेत् ॥ आशौचोदकक्रियादि नास्ति ॥ तीर्थं गत्वा स्नानं कुर्यात् ॥

अथ कर्ता आचम्य० सिद्धिंगतस्य ब्रह्मीभूतस्य अमुकस्य तृप्त्यर्थं तर्पणपूजाघृतदीपपायसबल्यर्घ्यप्रदानानि करिष्ये, इति सङ्कल्प्य सव्येन देवतीर्थेन— " आत्मानं तर्पयामि, अन्तरात्मनं त०, परमात्मानं त० " इति प्रत्येकं चतुर्वारं शुद्धोदकेन तर्पयित्वा, शुक्लपक्षे क्षीरेण —केशवादि द्वादशनामभिः, कृष्णपक्षे-सङ्कर्षणादि द्वादशनामभिः, तर्पयित्वा। वेद्याः ( खननदेशात् ) उपरि मृण्मयलिङ्गं संस्थाप्य पुरुषसूक्तेनाऽष्टाक्षरेण च षोडशोपचारैः सम्पूज्य घृतदीपं घृतमिश्रपायसबलिञ्च समर्प्य बलिं जले विसृज्य शंखेन — " ब्रह्मणे नमः इदमर्घ्यम् " इत्यष्टवारमर्घ्यं दद्यात् ॥ एवमेवादशाहं प्रत्यहं तर्पणादि कुर्यात् ॥

यतीनां पार्वणश्राद्धप्रयोगः ॥ एकादश्यां मध्याह्ने श्राद्धाङ्गतिलतर्पणं कृत्वा, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ( पुत्रश्चेत् ) अमुक गोत्रस्य० ब्रह्मीभूतस्यास्मत्पितुरद्यैकादशेऽह्नि, करिष्यमाणदर्शादिसर्वश्राद्धेषु मम अधिकारसिध्यर्थं ( प्राचीनावीती ) अस्मत्पितृपितामहप्रपितामहानां अमुकशर्मणां अमुकगोत्राणां वसुरुद्रादित्यरूपाणां तृप्त्यर्थं ( उपवीती ) पुरूरवा-र्द्रवसंज्ञकानां विश्वेषां देवानां प्रीत्यर्थञ्च ( प्राचीनावीती ) ब्रह्मीभूतस्याऽस्मत्पितुः आद्यपार्वणश्राद्धं सदैवं साग्नौकरणमन्नेन हविषाऽहमद्य करिष्ये, इति सङ्कल्प्य सर्वं प्रत्याऽऽब्दिकश्राद्धवत्कुर्यात् ॥ ॥ पुत्रभिन्नः शिष्यादिः कर्ता चेत्-ब्रह्मीभूतगुरोः प्रत्याब्दिकश्राद्धाधिकारार्थं तत्पितृसम्बन्धिनामगोत्रोद्देश्यतासिध्यर्थञ्च ब्रह्मीभूतगुरुतात्पितृपितामहानां० वसुरु० पुरुर० प्रीत्यर्थं पार्वणश्राद्धं० करिष्ये, इति सङ्कल्प्य तथैव कुर्यात् ॥ ( केचित्तु शिष्यः कर्ता चेत्—आत्माऽन्तरात्मपरमात्मन उद्दिश्य साधुरुरु-संज्ञकविश्वेदेवयुतं देवधर्मकं सव्येन नान्दीश्राद्धवत्कुर्यात्, इत्याहुः ) द्वादशाहे यतिनारायणबलिं कुर्यात् ॥

यतिनारायणबलिप्रयोगः ॥ पूर्वेद्युर्द्वादशब्राह्मणान्निमन्त्र्याऽपरेद्युः ( द्वादशेऽह्नि ) स्नानादि नित्यकर्म निर्वर्त्य, विष्णोरा-लयपार्श्वे नदीतीरे गृहे वा कुर्यात्। देशकालौ सङ्कीर्त्य ' सिद्धिंगतस्य यतेर्विष्णुलोकाऽवाप्तिद्वारा श्रीनारायणप्रीत्यर्थं नारायण-

बलिं करिष्ये ' इति सङ्कल्प्य, कलशार्चनं कृत्वा ब्रह्मदण्डं निधाय पूर्वनिमन्त्रितान्ब्राह्मणानाहूय सदर्भक्लृप्तेष्वासनेषूपवेश्य 'केशवगुर्वर्थे भवता क्षणः कर्तव्यः, प्राप्नोतु भवान् ' एवमेव क्रमेण नारायणादिभ्यः क्षणं ग्राहयित्वा, अथ स्थण्डिलोल्लेखनादि लौकिकाऽग्निं प्रतिष्ठाप्य, हव्यवाहनो नामाऽग्निः, नारायणो देवता, चरुर्हविः, उपहोमे-केशवादि द्वादश नाममन्त्रैराज्येन प्रतिमन्त्र-मेकैकयाऽऽहुत्या यक्ष्ये, अग्निः स्विष्टकृत्, इत्यादि सङ्कल्प्यान्वाधाय प्रतिष्ठिताभिघारणान्तेऽग्रेणाऽग्निमष्टदलपद्मे विधिवत्कलशं प्रतिष्ठाप्य वरुणपूजान्ते सुवर्णादिनिर्मितां नारायणप्रतिमां विन्यस्य, तत्र " सहस्रशीर्षा० गुलम्, पुरुष एवे० तिरोहति ' इति द्वाभ्यां पुरुषं नारायणमावाह्याऽऽसनपाद्याचमनानि दद्यात् । पुरुषसूक्तेन स्नापयित्वा विष्णुगायत्र्याऽष्टाक्षरमन्त्रेण वा वस्त्रोत्तरी-याभरणादिभिरर्चयित्वा, केशवादिद्वादश नामभिस्तर्पयेत् ॥ ततो ' जुषस्व नः ' इत्यादि ' विष्णोर्नुकं०, परो मात्रया०' इति द्वाभ्यां विष्णवे पक्वं हुत्वा स्विष्टकृतमवदायान्तःपरिधि निधायाथाज्याहुतीर्जुहोति केशवादिद्वादशनामभिः । ( यथालिङ्गं त्यागः ) इति ॥ ततः स्विष्टकृदादि प्रागुत्तरपरिषेकात्कृत्वा, गुडाज्यफलसंयुतं पायसं गायत्र्या देवाय निवेद्य पानीयाचमनमुखवासादि दद्यात् । अथाऽग्नेर्दक्षिणतः प्रागग्रेषु दर्भेषु विश्वेभ्यो देवेभ्यो नमः इत्यादिभिः पायसेन बलिं दद्यात् । अथ विप्रपादप्रक्षाळनं कृत्वा तानाचमय्य स्वयञ्च पादौ प्रक्षाळ्याचम्य प्राङ्मुखानुदङ्मुखान्वोपवेश्य, क्रमेण केशवादिद्वादशभिरावाह्य द्वादशमूर्तिं ध्यायन्नर्घ्य-वस्त्रोत्तरीयाभरणगन्धपुष्पधूपदीपैरभ्यर्च्य चतुरश्रमण्डलेषु द्वादश पात्राण्यासाद्योपदंशघृतगुडदधिफलयुतं श्वेतमन्नं परिविष्य, गायत्र्या प्रोक्ष्य ' पृथिवी ते पात्रं ' इत्यादि ' केशवरूपिगुरवे नमः इदमन्नं ' एवं ' नारायणरूपिगुरवे नमः ' इत्यादि । अथ ' अतो देवा० ॐ तद्ब्रह्म० ॐतत्पुरोर्नमः' ब्रह्मार्पणं, अमृतोपस्तरणमसीत्यापोशनं दत्वा 'अन्तश्चरति भूतेषु० भूर्भुवः सुवरो३म्' इति पठेत् । 'श्रद्धायां प्राणे०' इति भुञ्जानान्समीक्ष्य उपनिषदादि श्रावयित्वा भोजनान्ते उत्तरापोशनादि यथाशक्ति सुवर्णं दत्वा पुरुषसूक्तादिभिः

स्तुत्वा द्वादशनामभिः प्रणमेत्। तान्प्रदक्षिणीकृत्य शेषमनुज्ञाप्योद्वास्योत्तरपरिषेकादि कुर्यात्॥ अथावाहितदेवताः पुनः सम्पूज्य कलशोदकेन प्रोक्ष्य कलशदानादि कुर्यात्॥ 'अभीष्टां परां गतिं स गत्वा विष्णोर्लोके महीयते' इति॥

यतेराराधनप्रयोगः॥ यतेराराधनं द्वादशाहे त्रयोदशाहे वा कार्यम्॥ देशकालौ सङ्कीर्त्य 'श्रीनारायणप्रीत्यर्थं ब्रह्मीभूतस्य गुरोराराधनं करिष्ये' इति सङ्कल्प्य, कलशार्चनं ब्रह्मदण्डञ्च कृत्वा पूर्वेद्युर्निमन्त्रितान्षोडश ब्राह्मणानाहूय 'गुर्वर्थे भवता क्षणः कर्तव्यः १, परमगुर्वर्थे० २, परमेष्ठिगुर्वर्थे० ३, परात्परगुर्वर्थे० ४, (शुक्लपक्षे) केशवगुर्वर्थे०, नारायणगुर्वर्थे०' इत्यादि द्वादश॥ (कृष्णपक्षे) 'संकर्षणादि द्वादश गुर्वर्थे०'॥ एवं षोडशेभ्यः क्षणं दत्वा ('ॐ तथा' इति प्रतिवचनम्) गन्धाक्षततुलसीदलकर्पूरजलेन वरणक्रमेण पादान्प्रक्षाल्य पादोदकं पात्रान्तरे सुरक्षितं संस्थाप्य स्वयञ्च हस्तपादं प्रक्षाल्य, स्वस्य तेषाञ्च आचमनान्ते तान्ब्राह्मणान्प्राङ्मुखानुदङ्मुखान्वाऽऽसनेषूपवेश्य, पुरुषसूक्तेन प्रत्यृचं 'ॐनमो नारायणाय' इति मन्त्रसहितेन आसनावाहनादि षोडशोपचारैर्यथाविभवमभ्यर्च्य, चतुरस्रमण्डलेषु सदर्भक्लृप्तेषु पात्रेषु प्रत्येकं सपरिकरमन्नं परिविष्य गायत्र्या प्रोक्ष्य 'गुरवे इदमन्नं परिविष्टं परिवेक्ष्यमाणञ्चाऽऽतृप्तेः स्वाहा हव्यं न मम' एवं परमगुर्वादिभ्यश्चाऽनूद्दिश्य, आपोशनं दत्वा 'ये देवा दिव्येकादशस्थ० जुषध्वम्' इत्युपस्थाय ब्रह्मार्पणं कृत्वा। ॐ तद्ब्रह्म॥ ॐ तद्वायुः॥ ॐ तदात्मा॥ ॐ तत्सत्यम्॥ ॐ तत्सर्वम्॥ ॐ तत्पुरोर्नमः॥ अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु॥त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्व ँ रुद्रस्त्वं विष्णुस्त्वं ब्रह्म त्वं प्रजापतिः॥ त्वं तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोऽम्' इति जपित्वा, तेषां प्राणाहुतीरनुमन्त्रयते — 'श्रद्धायां प्राणे० ब्रह्मणे स्वाहा' इति॥ उपनिषदादि श्रावयित्वा तृप्तेषु सत्सु उत्तरापोशनं दत्वा 'ॐ तद्ब्रह्म० सुवरोऽम्' इत्यन्तं पठित्वा, हस्तप्रक्षालनोत्तरमाचा-

न्तेषु, तेभ्यो ब्राह्मणेभ्यो गन्धतुलस्यक्षतताम्बूलदक्षिणादि दत्वोपोत्थाप्य उपविष्टेषु तेषु — 'गुर्वाराधनाङ्गभूतं तीर्थपूजनं करिष्ये ' इति सङ्कल्प्य ॥ चतुरस्रमण्डलं गोमयेनोपलिप्य तत्र रङ्गवल्यादिभिरलङ्कृत्य, तन्मण्डले धान्योपरि पादोदककलशं संस्थाप्य, तत्र गङ्गादितीर्थानि भावयित्वा, पुरुषसूक्तेन प्रत्यृचं 'तीर्थराजाय नमः ' इति मन्त्रेण षोडशोपचारैरभ्यर्च्य तत्पात्रं शिरसि धारयित्वा " भीषास्माद्वातः पवते ॥ भीषोदेति सूर्यः ॥ भीषास्मादग्निश्चेन्द्रश्च ॥ मृत्युर्धावति पञ्चम इति ॥ चरणं पवित्रं० दधातु " इत्यादि मन्त्राञ्जप्त्वा हरिकीर्तनपुरस्सरं सहर्षं नृत्यं कृत्वा तत्पात्रं पुनर्मण्डले संस्थाप्य चन्दनाक्षतपुष्पाणि पूजाविशिष्टानि बन्धुभिः सह धृत्वा, विप्रान्प्रदक्षिणीकृत्य ॥ " आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम् । योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥ १ ॥ गुरुर्ब्रह्मा गुरुर्विष्णुः० नमः " ॥ २ ॥ इति द्विजान्तीर्थराजञ्च नमस्कृत्य, गुर्वर्थविप्रहस्ते पादोदकपात्रं दत्वा तदाज्ञया तीर्थं मन्त्रेण पिबेत्—'अविद्या मूलशमनं सर्वपापप्रणाशनम् । गुरुपादोदकं तीर्थं संसारद्रुमनाशनम् ' इति ॥ ( पुत्रादिकामनायान्तु — ' शोषणं पापपङ्कस्य दीपनं ज्ञानतेजसः । गुरोः पादोदकं चित्रं पुत्रपौत्रप्रवर्धनम् ' इति पिबेत् ) तान्पुनः प्रणम्य तानन्यांश्च दक्षिणादिभिस्तोषयित्वा सन्मानपुरस्सरन्ताननुप्रव्रज्य कर्मेश्वरार्पणं कुर्यात् ॥ पश्चात्सुहृद्युतो भुञ्जीत ॥ ततः प्राप्तदर्शमहालयतीर्थप्रयुक्तानि श्राद्धानि कुर्यात् ॥ प्रतिमासं वाऽऽराधनं प्रत्यब्दं पार्वणोत्तरञ्चैवमेव ॥ ॥

## ॥ सांवत्सरिकश्राद्धविधिः ॥

(बो. पि. शे. सू. ३) " वर्षेवर्षे मृततिथौ श्राद्धं कुर्यात् । विभक्तस्तु पृथक् कुर्यात् प्रतिसांवत्सरादिकम् " इति ॥ ( बो. ध. सू. २. १४ ) पित्र्यमायुष्यं स्वर्ग्यं प्रशस्यं पुष्टिकर्म च ॥ त्रिमधुस्त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निष्षडङ्गविच्छीर्षको ज्येष्ठसामिकस्स्नातक

इति पङ्क्तिपावनाः ॥ तदभावे रहस्यवित् ॥ ऋचो यजूंषि सामानीति श्राद्धस्य महिमा । तस्मादेवंविदं सपिण्डमप्याशयेत् ॥
राक्षोघ्नानि च सामानि स्वधावन्ति यजूंषि च । मध्वृचोऽथ पवित्राणि श्रावयेदाशयञ्छनैः ॥ चरणवतोऽनूचानान्योनिगोत्रमन्त्रा-
सम्बन्धाञ्छुचीन्मन्त्रवतस्त्र्यवरानयुजः पूर्वेद्युः प्रातरेव वा निमन्त्र्य सदर्भोपक्लृप्तेष्वासनेषु प्राङ्मुखानुपवेशयत्युदङ्मुखान्वा ॥
अथैनांस्तिलमिश्रा आपः प्रतिग्राह्य गन्धैर्माल्यैश्चाऽलङ्कृत्याग्नौ करिष्यामीत्यनुज्ञातोऽग्निमुपसमाधाय सम्परिस्तीर्याऽऽग्निमुखात्
कृत्वाऽज्यस्यैव तिस्र आहुतीर्जुहोति — " सोमाय पितृपीताय स्वधा नमस्स्वाहा । यमायाऽङ्गिरस्वते पितृमते स्वधा नमस्स्वाहा ।
अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहा " इति ॥ तच्छेषेणाऽन्नमभिघार्याऽन्नस्यैता एव तिस्र आहुतीर्जुहुयात् ॥ वयसां
पिण्डं दद्यात् ॥ " वयसां हि पितरः प्रतिमया चरन्ति " इति विज्ञायते ॥ अथेतरत्साङ्गुष्ठेन पाणिनाऽभिमृशति ॥ पृथिवीसमं०
अमुष्मिन्लोक इति । अन्तरिक्षसमं० लोक इति ॥ द्यौःसमं० लोक इति ॥ ॥ ( बो. ध. सू. २. १५ ) अथ वै भवति ॥ अग्नौ
करणशेषेण तदन्नमभिघारयेत् । निरङ्गुष्ठन्तु यद्दत्तं न तत्प्रीणाति वै पितॄन् । उभयोश्शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् ।
तन्तरमुपासन्तेऽसुरा वै दुष्टचेतसः ॥ यातुधानाः पिशाचाश्च प्रतिलुम्पन्ति तद्धविः । तिलदाने ह्यदायादास्तथा क्रोधवशेऽसुराः ॥
काषायवासा यान्कुरुते जपहोमप्रतिग्रहान् । न तद्देवगमं भवति हव्यकव्येषु यद्धविः ॥ यच्च दत्तमनङ्गुष्ठं यच्चैव प्रतिगृह्यते । आचामति
च यस्तिष्ठन् न स तेन समृध्यत इति ॥ आद्यन्तयोरपां प्रदानं सर्वत्र ॥ जयप्रभृति यथाविधानम् ॥ शेषमुक्तमष्टकाहोमे ॥ द्वौ दैवे
पितृकार्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् । पञ्चै-
तान्विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ॥ उरस्तः पितरस्तस्य वामतश्च पितामहाः । दक्षिणतः प्रपितामहाः पृष्ठतः पिण्डतर्कका इति ॥
( बो. गृ. प. सू. २. ६. ७–८ ) सर्वत्र दैवेषु पुरस्तादुदग्वोपक्रमोऽपवर्गः प्रदक्षिणमुपचारो यज्ञोपवीतं प्रागग्रैर्दर्भैरग्नीनां परिस्तरणं

प्रागुदगग्रैर्वा पवित्राभ्यामुत्पवनम् ॥ एवमेव विपरीतोपक्रमोपवर्गः पित्र्येषु दक्षिणाग्रैर्दर्भैरग्नीनां सम्परिस्तरणं दक्षिणाप्रतीच्यग्रैर्वा पवित्रेणोत्पवनम् ॥ ॥ ( बो. गृ. शे. सू. ५. ६. १९ ) "सह देवमनुष्या अस्मिंल्लोके पुरा बभूवुरथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्यास्तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्त्यथैतन्मनुश्श्राद्धशब्दं कर्म प्रोवाच प्रजानिश्रेयसाय" इति ॥ ॥ ( बो. पि. सू. १·२१·१८ ) संवत्सरेसंवत्सर एतस्मिन्नहनि दद्यात् ॥

श्राद्धशब्दार्थः ॥ बृहस्पतिः—संस्कृतं व्यञ्जनाद्यञ्च पयोमधुघृतान्वितम् । श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ॥ मरीचिः—प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः । श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम् ॥ ब्रह्माण्डेऽपि- देशे काले च पात्रे च श्रद्धया विधिना च यत् । पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदीरितम् ॥ वसिष्ठः—पिता पितामहश्चैव तथैव प्रपितामहः । उपासते सुतं जातं शकुन्ता इव पिप्पलम् ॥ ब्रह्मपुराणे— पृथिवी पितृभिर्दुग्धा पात्रे रौप्यमये पुरा । स्वधामन्त्रञ्च तत्तस्मात्तेभ्यः प्रियतरं सदा ॥ रौप्यपात्रेण पाद्यादीन्तस्मात् सूक्ष्मेऽपि कारयेत् ॥ देवलः— यत्र तु क्रियते कर्म पैतृके ब्राह्मणान्प्रति । तत्सर्वं तत्र कर्तव्यं वैश्वदेवत्वपूर्वकम् ॥ यमः—'प्रतिपाद्य पितॄणान्तु न दद्याद्वैश्वदेविके' ॥ बृहस्पतिः— नैमित्तिके कामकालौ काम्ये च धुरिलोचनौ । पुरूरवश्चार्द्रवश्च पार्वणे समुदाहृतौ ॥

श्राद्धकालः ॥ गौतमः— आरभ्य कुतुपे श्राद्धं कुर्यादा रौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत् ॥ ऊर्ध्वं मुहूर्तात्कुतुपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥ अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा । तत्राऽष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः ॥ मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः । तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥ वृद्धगौतमः— अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ॥ माधवीये— सायन्तन्यपरत्र चेन्मृततिथिः सैवाब्दिके

मासिके ग्राह्या सा द्व्यपराह्णयोर्यदि तदा यत्राधिका सा मता । तुल्या चेदुभयाऽपराह्णसमये पूर्वा न चेत्तु द्वये पूर्वैव त्रिमुहूर्तगाऽस्त-समये नोचेत्परैवोचिता ॥

श्राद्धकर्तारः ॥ राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः । व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत् ॥ हेमाद्रिः — श्राद्धं शिष्येण पुत्रेण तदन्येनाऽपि कारयेत् ॥

श्राद्धपूर्वदिनकृत्यम् ॥ वस्त्रशौचादि कर्तव्यं श्वः कर्ताऽस्मीति जानता । स्थानोपलेपनं कृत्वा भूमिं विप्रान्निमन्त्रयेत् ॥ दन्तकाष्ठञ्च विसृजेद्ब्रह्मचारी शुचिर्भवेत् ॥ श्वः कर्तास्मीति निश्चित्य दाता विप्रान् निमन्त्रयेत् । निरामिषं सकृद्भुक्त्वा सर्व-भुक्तजने गृहे ॥ माधवीये – पूर्वरात्रौ तु विप्राग्र्यान्कृतसायन्तनाशनान् । गत्वा निमन्त्रयेद्देवपित्रुद्देशसमन्वितः ॥ मनुः— न ब्राह्मणं परीक्षेत दैवे कर्माणि धर्मवित् । पित्र्ये कर्माणि सम्प्राप्ते परीक्षेत प्रयत्नतः ॥ यमः— पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणी-पतिम् । सगोत्रप्रवरञ्चैव श्राद्धेषु परिवर्जयेत् ॥ कर्मदीपिकायाम् —श्राद्धे निमन्त्रयेद्विद्वान्पितॄणां न सगोत्रिणः । कर्तुस्तु गोत्रिण-श्चैव विशेषेण विवर्जयेत् ॥ सहोदराणां पुत्राणां पितुरेकदिने तथा । श्राद्धे निमन्त्रणं वर्ज्यं क्षुरकर्म तथैव च ॥ कारिकारत्ने— अनग्निं गर्भिणीनाथं पितरं पुत्रमेव च । श्राद्धे निमन्त्रयेन्नैकोभ्रातृनपि च सोदरान् ॥ याज्ञवल्क्यः— अग्र्यः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा । वेदान्तविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः । पितृमातृपराश्चैव ब्राह्मणः श्राद्धसम्पदः ॥ आपस्तम्बः— “ तुल्यगुणेषु वयोवृद्धः श्रेयान्द्रव्यकृशश्चेप्सन् ” ( तुल्यगुणेषु वयोवृद्धो दरिद्रः श्रेयान् ) कूर्मे— असमानप्रवरको ह्यसगोत्रस्तथैव च । असम्बन्धी च विज्ञेयो ब्राह्मणः श्राद्धसिद्धये ॥ यमः — “ अपत्नीकश्च वर्ज्यः स्यात्स-पत्नीको ह्यनग्निकः । न मित्रं भोजयेच्छ्राद्धे धनैः कार्योऽस्य सङ्ग्रहः ॥ नाऽरिं न मित्रं यं विद्यात्तन्तु श्राद्धे निमन्त्रयेत् ”॥ स्मृत्यन्तरे-

" नैकगोत्रे हविर्दद्याद्यथा कन्या तथा हविः। अभावेऽप्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत् ॥ षड्भ्यस्तु परतो भोज्या श्राद्धे स्वगोत्रजा अपि ॥ द्वौ दैवौ पितृकृत्ये त्रीनेकैकमुभयत्र वा। भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम्। पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् " ॥ वसिष्ठः— यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्। अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥ देवताऽऽयतने कृत्वा तत्र श्राद्धं प्रकल्पयेत् ॥ प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे ॥ विप्राभावे सर्वज्ञवसिष्ठः— निधाय दर्भकवटूनासनेषु समाहितः। प्रैषानुप्रैषसंयुक्तं विधानं परिकल्पयेत् ॥ आदित्यपुराणे— आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन। देवतानां पितृणाञ्च दातुरन्यस्य चैव हि ॥ चिरकारी भवेद्द्रोगी पच्यते नरकाऽग्निषु ॥

निमन्त्रणक्रमः ॥ स्मृत्यन्तरे–पितृकार्येषु सर्वेषु पूर्वेद्युस्स्यान्निमन्त्रणम्। प्रेतकार्येषु सर्वेषु सद्य एव निमन्त्रणम् ॥ माधवीये— पूर्वरात्रौ तु विप्राग्र्यान्कृतसायन्तनाऽशनान्। गत्वा निमन्त्रयेद्दैवपित्रुद्देशसमन्वितः ॥ उपवीती ततो भूत्वा देवतार्थं द्विजोत्तमान्। अपसव्येन पित्र्येऽथ स्वयं शिष्योऽथवा सुतः ॥ निरङ्गुष्ठं गृहीत्वा तु विश्वान्देवान्समाह्वयेत् ॥ मत्स्यः—एवं निमन्त्र्य नियमाच्छ्रावयेत्पैतृकान्बुधः। अक्रोधनैः शौचपरैस्सततं ब्रह्मचारिभिः। भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥ अत्रिः— "प्रथमेऽह्नि निवासस्थाञ्छ्रोत्रियादीन्निमन्त्रयेत्। कथयेत्तु तदैवैषां नियमं पितृदैविकम् ॥ सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः। भवितव्यं भवद्भिर्नः श्वो भूते श्राद्धकर्मणि " इति ॥ निमन्त्रितब्राह्मणपरित्यागे नारायणः — आमन्त्रितं द्विजं श्राद्धे यः कर्ता त्यजति क्वचित् ॥ ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥ केतनं कारयित्वा तु निवारयति दुर्मतिः। ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥ निवार्यामन्त्रितं कर्ता ब्राह्मणं नियतं शुचिम्। यतिचान्द्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते ॥ ॥ आमन्त्रितनियमः— आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति। नरकाणां शतं गत्वा चण्डालेष्वभिजायते ॥ यमः — पुनर्भोजन-

मध्वानं भाराध्ययनमैथुनम् । सन्ध्या प्रतिग्रहो होमः श्राद्धभोक्ताष्ट वर्जयेत् ॥ बृहस्पतिः— पुनर्भोजनमध्वानं भाराध्ययन-मैथुनम् । श्राद्धकृच्छ्राद्धभोक्ता वा सर्वमेतद्विवर्जयेत् ॥ देवलः—"आमश्राद्धं गृहीत्वा तु योऽन्यश्राद्धेऽतिमोहितः । पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ॥ पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यप्रतिग्रहम् । भुक्ताहारोऽथवा भुङ्क्ते सुकृतं तस्य नश्यति" ॥ स्मृत्यन्तरे— श्राद्धे निमन्त्रितो यस्तु यदि कुर्यात्प्रतिग्रहम् । भक्षयेत्किञ्चिदप्यन्यत्सुकृतं तस्य नश्यति ॥

कर्तृनियमः ॥ वसिष्ठः— दन्तधावनताम्बूलं क्षौराभ्यङ्गञ्च भोजनम् । रत्यौषधिपरान्नानि श्राद्धकर्ताऽष्ट वर्जयेत् ॥ यस्मिन्मासि मृताहस्स्यात्तन्मासं पक्षमेव वा । क्षुरकर्म न कुर्वीत परान्नञ्च रतिं त्यजेत् ॥ बृहस्पतिः—स्वाध्यायं कलहञ्चैव दिवास्वापञ्च वर्जयेत् । श्राद्धकर्ता च भोक्ता च पुनर्भुक्तिं विवर्जयेत् ॥ यमः—तस्मान्नियम्य वाचञ्च क्रोधञ्च श्राद्धमाचरेत् । न क्रोधं कस्यचित्कुर्यात्क-स्मिंश्चिदपि कारयेत् ॥ स्मृत्यन्तरे— घण्टानादञ्च लोहञ्च विभूतिञ्च विशेषकम् । रुद्राक्षमालामुद्राञ्च निराशाः पितरो गताः ॥ कर्ता भोक्ता च सर्वत्र नैकवस्त्रो द्विजो भवेत् । तस्माद्वस्त्रादिना श्राद्धे सोत्तरीयस्सदा भवेत् ॥ पितृशेषाशनात्पूर्वं श्राद्धकर्तुश्च कर्तृता ॥ व्यासः— तथैव यन्त्रितो दाता प्रातस्स्नात्वा नवाम्बरः । आरभेत नवैः पात्रैरन्नारम्भञ्च बान्धवैः । समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः । कृतोपकारिभिश्चैव पाककार्यं प्रशस्यते ॥ निष्पन्नेषु च पाकेषु पुनस्स्नानं समाचरेत् ॥ पराशरः— गृह्या-ग्निशिशुदेवानां ब्रह्मचारितपस्विनाम् । तावन्न दीयते किञ्चिद्यावत्पिण्डान्न निर्वपेत् ॥ आश्वलायनः— दानाध्ययनदेवार्चाव्रत-होमजपादिकान् । न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात् ॥ घण्टानिनादो हयसन्निधानं जम्बूकशङ्खौ कदलीदलञ्च । उन्मत्तजात्यर्कहयारिजानि श्राद्धस्य वैगुण्यकराण्यमूनि ॥ गोमयेनोपलेपञ्च सर्वश्राद्धे प्रकीर्तितम् । गृहालङ्करणं नास्ति इति शातातपोऽब्रवीत् ॥

श्राद्धदेशः ॥ शुचिदेशं विविक्तन्तु गोमयेनोपलेपयेत् । दक्षिणाप्रवणञ्चैव प्रयत्नेनोपलेपयेत् ॥ वायुपुराणे– नाऽप्रोक्षितं स्पृशेत्किञ्चिच्छ्राद्धे दैवे तथा पुनः । उत्तरेण हरेद्वेद्या दक्षिणेन विसर्जयेत् इति ॥ ॥ श्राद्धार्हपदार्थाः ॥ व्यासः– श्वेतनिष्पाव-पनसाः कदल्यामलकाः स्मृताः । उर्वारुर्बृहतीकन्दः कारवल्यथ तिन्त्रिणी ॥ पिण्डीतकश्च नारङ्गमेलापालेवतं मधु । खर्जूरञ्चव्यं मरिचं दाडिमेक्षू च नागरम् ॥ गुडमारण्यकं शाकं शर्करा जीरकाः शुभाः । सैन्धवश्चैव कर्पूरं शस्तानि श्राद्धकर्मणि ॥ नारिकेलं रामठश्च कपित्थं मध्यमं स्मृतम् ॥ मार्कण्डेयपुराणे— यवव्रीहिसगोधूमतिलमुद्गाः ससर्षपाः । प्रियङ्गवः कोविदारा निष्पावा-श्चातिशोभनाः ॥ मनुः—मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् । अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥ वायुपुराणे— सक्तून्लाजान्तथाऽपूपान्कुल्माषान्व्यञ्जनैः सह । सर्पिःसिद्धानि सर्वाणि दध्ना संस्कृत्य भोजयेत् ॥ श्राद्धे तु तानि यो दद्यात्पितरः प्रीणयन्ति तम् ॥ मत्स्यपुराणे— यत्किञ्चिन्मधुना मिश्रं गोक्षीरघृतपायसैः । दत्तमक्षय्यमित्याहुः पितरः पूर्वदेवताः ॥ व्यासः–– अगोधूमश्च यच्छ्राद्धं माषमुद्गविवर्जितम् । तैलपक्वेन रहितं कृतमप्यकृतं भवेत् ॥ कार्ष्णाजनिः––यदिष्टं जीवतो ह्यासीत् तद्दद्यात्तस्य यत्नतः । स तृप्तो दुस्तरं मार्गं ततो याति परां गतिम् ॥ ॥ श्राद्धे ब्राह्मणभोजनावश्यकता ॥ यमः— ब्राह्मणं तु मुखं कृत्वा देवताः पितृभिः सह । तदन्नं समुपाश्नन्ति तस्मात्तं न व्यतिक्रमेत् ॥ मनुः— निमन्त्रितान्हि पितर उपतिष्ठन्ति तान्द्विजान् । वायुभूतास्तु गच्छन्ति तथाऽऽसीनानुपासते ॥ गोत्राऽपरिज्ञाने पारस्करः– गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमिष्यते । नामानि चेन्न जानीयाद्यज्ञेत्यादि वदेत्क्रमात् ॥ ॥ दर्भसङ्ख्या ॥ धर्मप्रवृत्तौ— चतुर्भिः पौष्टिके चैव चतुर्भिर्यज्ञकर्मणि । पितृयज्ञे त्रिभिर्दर्भैर्द्वौ दर्भौ नित्यकर्माणि ॥ गोभिलः—“ स्तरणासनपिण्डेषु षट्कुशान्परिवर्जयेत् । मासिके सप्त दर्भं स्यादब्दश्राद्धे चतुर्दश ॥ महालयैक-विंशत्या द्वात्रिंशत्प्रेतकर्मणि । नित्यश्राद्धे त्रिदर्भाश्च मासि षोडश एव च । संवत्सरे चतुःषष्टिः काम्यके शतकं स्मृतम् ॥

द्वे द्वे शलाके देवानां पातो कृत्वा जलं क्षिपेत् । तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे ॥ ॥ पादप्रक्षालनक्रमः ॥ स्मृत्यन्तरे— सम्मार्जितोपलिप्तेषु द्वारि कुर्वीत मण्डलम् । प्राङ्गणे मण्डले कुर्याद्दैवे पित्र्ये च कर्माणि ॥ अन्तरेण प्रकर्तव्यं तयोर्मध्ये षडङ्गुलम् । पादोदकस्य संयोगात् पितृघाती प्रजायते ॥ मत्स्यः— गृहद्वारसमीपे तु भवनस्याग्रतो भुवि । गोमयेनोपलिप्तायां गोमूत्रेण तु मण्डले ॥ स्मृत्यर्थसारे— प्रादेशमात्रं देवानां मण्डलं चतुरश्रकम् । वितस्तिमात्रं पित्रर्थं मण्डलं वर्तुलं स्मृतम् ॥ देवानामुत्तरे कार्यं पित्रर्थं दक्षिणे तथा । अन्तरालं तु कर्तव्यं तयोर्मध्ये षडङ्गुलम् ॥ शम्भुः— उत्तरेऽक्षतसंयुक्तान्पूर्वाग्रान्विन्यसेत्कुशान् । दक्षिणे दक्षिणाग्रांस्तु सतिलान्विन्यसेद्बुधः ॥ स्वागते स्वस्तिवचने दक्षिणायां प्रदक्षिणे । गोत्रवादनमन्त्रौ च षडेतानुपवीतिना ॥ मण्डलात्पश्चिमे भागे ब्राह्मणे स्वागते कृते । तत्रैव विसृजेत्पाद्यं क्षाळयेन्मण्डलोपरि ॥ अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत् । विप्राणां क्षालयेत्पादानभिवन्द्य पुनः पुनः ॥ तिलैर्दर्भैस्तथा पुष्पैरद्भिर्गन्धादिमिश्रितैः । पितॄणां क्षालयेत्पादान्सदा प्रत्यङ्मुखः शुचिः ॥ तिष्ठन्न क्षालयेत्पादौ क्षाळयेत्तु तथा यदि । नरश्चण्डालयोनिः स्याद्यदि गङ्गां न पश्यति इति मत्स्यपुराणे ॥ ब्रह्मनिरुक्ते—पाद्यं चैव तथा चार्घ्यं दैवमादौ प्रयोजयेत् । शन्नो देवीति मन्त्रेण पाद्यञ्चैव प्रदापयेत् ॥ पारिजाते —" सर्वदा दर्भपाणिः स्याद्दैवे पित्र्ये च कर्मणि । पादशौचं गन्धलेपं न कुर्याद्दर्भपाणिना ॥ सपवित्रेण हस्तेन विप्रपादावनेजनात् । यथा वज्रहतो वृत्रस्तथैव पितृदेवताः ॥ पादप्रक्षालनं श्राद्धे परं गुल्फद्वयाद्यदि । कुर्वीत रोमसंस्पर्शात्तत्तोयं रुधिरं भवेत् " इति ॥ ॥ पादप्रक्षाळनान्तरमाचमनम् ॥ हेमाद्रौ — कर्तुराचमनं पूर्वं मण्डलस्यान्तरे भवेत् । अपि वैशानदिग्भागे कार्यमाचमनं तदा ॥ अमृतं स्याद्धि तत्तोयमन्यत्र रुधिरं भवेत् । कर्तुराचमनात्पूर्वं भोक्तुराचमनं यदि । शुनो मूत्रसमं तोयमित्येवं मनुरब्रवीत् ॥ मण्डलात्पूर्वतो देवाः पितृविप्रस्तु दक्षिणे । कर्ता चैशानभागे तु श्राद्धेष्वाचमनं क्रमात् ॥ गोभिलः — श्राद्धारम्भेऽवसाने च पादशौचार्चनान्तयोः । विकिरे पिण्डदानेषु

षट्स्वाचमनमिष्यते ॥ ॥ उपविष्टब्राह्मणनियमाः ॥ स्मृत्यन्तरे — पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः । उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम् ॥ ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितम् ॥

उपचारक्रमः ॥ चन्द्रिकायाम् — आसनेष्वासनं दद्यान्न तु हस्ते कदाचन । ददाति यदि मूढात्मा निराशाः पितरो गताः ॥ गोभिलः—"आपूर्विको विधिस्त्वत्र पात्राण्युक्तानि सादयेत् । गन्धद्वारेति वै गन्धमायनेतेति पुष्पकम् ॥ धूरसीत्यमुना धूपमुद्दीप्यस्वेति दीपकम् । युवं वस्त्राणि मन्त्रेण वस्त्रं दद्यात्प्रयत्नतः ॥ यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता" ॥ वायुपुराणे— "तथार्घ्यपिण्डभोज्यादौ पितॄणां रजतं वरम्" इति ॥ "निमन्त्रितो जपेद्दोग्ध्रीं नियुक्तस्तु निषङ्गिणे । विसृष्टो वामदेवाय श्राद्ध-भुग्दोषवर्जितः ॥ दशकृत्वः पिबेदापः सावित्र्या श्राद्धभुग्द्विजः । ततः सन्ध्यामुपासीत होमश्चाऽपि यथाविधि ॥ श्राद्धे निमन्त्रितो विप्रो मन्त्रमुच्चरते यदि । त्रयस्ते नरकं यान्ति दाता भोक्ता तथा पिता ॥ निमन्त्रितो यदा विप्रो नियतात्मा भवेत्तदा । न च छन्दां-स्यधीयीत यस्य श्राद्धञ्च तद्भवेत्" ॥ ब्रह्माण्डे-श्राद्धभूमौ गयां ध्यात्वा धात्वा देवं जनार्दनम् । वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं भवत्विति ॥ आदिमध्यावसानेषु त्रिरावृत्तिं जपेद्बुधः । पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति । आदौ मध्ये तथा चान्ते त्रिरावृत्तं भवेत्सदा ॥ "आवाहनेऽ-र्घ्यसङ्कल्पे पिण्डदानान्नदानयोः । पिण्डाऽभ्यञ्जनकालेषु तथैवाऽञ्जनकर्मणि ॥ अक्षय्यासनयोः पाद्ये गोत्रं नाम प्रकाशयेत् । क्षणे गन्धे तथा धूपे दीपदाने च कीर्तयेत् ॥ आदौ ब्रूयात्स्वपित्रादीन्नामगोत्रमतः परम् । रूपान्तानथ वस्वादीनेवं संयोजनं क्रमात् ॥ अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा । अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः" ॥ बृहन्नारदीये—दक्षिणं पातयेज्जानु पितॄन् परिचरन्सदा । प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणम् ॥ ॥ आवाहनक्रमः ॥ याज्ञवल्क्यः– "यवहस्तस्ततो देवान्विज्ञाप्यावाहनं

प्रति। आवाहयेत्यनुज्ञातो विश्वेदेवास इत्यृचा ॥ विश्वेदेवाः शृणुतेति मन्त्रं जप्त्वा ततोऽक्षतान्" ॥ हेमाद्रौ–देवार्चा दक्षिणादिस्स्यात्पादजान्वंसमूर्धसु। शिरोंसजानुपादेषु वामाङ्गादिषु पैतृके ॥ दिग्बन्धनम्— तिलानवकिरेत्तत्र सर्वतो बन्धयेच्च तान्। असुरोपहतं सर्वं तिलैः शुध्येज्जलेन च ॥ दत्वा हस्ते पवित्रं तु हस्तेष्वर्घ्यं विनिक्षिपेत्। या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥ शङ्खः— यथा विभवसारेण वस्त्रं दद्यात्तु पैतृके। उत्तरीयमभावे तु शोभनं दर्भनिर्मितम् ॥ यज्ञोपवीतं दातव्यं वस्त्राऽभावे विजानता। पितॄणां वस्त्रदानस्य फलं तेनाश्नुतेऽखिलम् ॥ ॥ प्रतिवचनक्रमः ॥ सङ्ग्रहे– आसने स्वासनं ब्रूयादर्घ्ये स्वर्घ्यं द्विजो वदेत्। सुगन्धश्च सुपुष्पाणि सुमाल्यानि सुधूपकः ॥ सुज्योतिश्च सुदीपश्च स्वाच्छादनमिति क्रमात् ॥ इति ॥ शातातपः — "उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः। प्रदद्यात्पार्वणे सर्वं दैवपूर्वं विधानतः" इति ॥

अन्ये विषयाः ॥ प्रचेताः — "अङ्गुष्ठमात्रो भगवान्विष्णुः पर्यटते महीम्। राक्षसानां वधार्थाय कोपवान्प्रहरिष्यति ॥ तस्माच्छ्राद्धेषु सर्वेषु ह्यङ्गुष्ठग्रहणं स्मृतम्। विष्णो हव्यञ्च कव्यञ्च ब्रूयाद्रक्षेति वै क्रमात्" ॥ विष्णुः — अदत्तमन्नं विप्रस्तु पाणिना स्पृशते यदि। त्रयस्ते नरकं यान्ति दाता भोक्ता तथा पिता ॥ अत्रिः —"दैवाद्यन्तं भवेच्छ्राद्धं पित्राद्यन्तं न तद्भवेत्" ॥ यल्लाजीये —"सुवासिन्यां मृतायान्तु ब्राह्मणैस्सह भोजने। सुवासिनीं ततः पश्चादमन्त्रकमथार्चयेत् ॥ माता मङ्गलसूत्रेण मृता यदि च तद्दिने। उद्दिश्य द्विजपङ्क्तौ तां भोजयेत्सधवां स्त्रियम्" ॥ प्राचेताः—आपोशनं प्रदायाथ सावित्रीं त्रिर्जपेदथ। मधुवाता इति तृचं मध्वित्येतत् त्रिकं तथा ॥ ब्रह्मपुराणे — "मण्डलानि च कार्याणि नीवारैश्चूर्णकैः शुभैः। गौरमृत्तिकया वाऽपि प्रणीतेनाऽथ भस्मना ॥ पाषाणचूर्णसङ्कीर्णमाहतं परिवर्जयेत्" ॥ भरद्वाजः —"पितॄणामन्नमादाय बलिं यस्तु प्रयच्छति। स्तेयेन ब्राह्मणस्तेन स सर्वस्तेयकृद्भवेत्" ॥ नारायणीये— "श्राद्धभोजनकाले तु कर्ता भ्राता सुतोऽपि वा। दौहित्रो वाऽथ पौत्रो वा

सपिण्डो वा विचक्षणः ॥ यत्राभिश्रावयेद्द्वोक्तृन् तच्छ्राद्धं पावनं भवेत् । अन्यं वाऽऽहूय तं वृत्वा श्रावयेत्तं निरीक्षयेत् ॥ श्राद्धक्रिया-समाप्तौ तु प्रदद्याज्जपदक्षिणाम् । अत्युच्चैरतिशीघ्रञ्च हित्वैव श्रावयेद्बुधः ॥ रक्षोघ्नं पैतृकञ्चैव दिवाकीर्त्ययुतं तथा । वैष्णवं त्रिसुपर्णञ्च नाचिकेतं तथा पठेत् । राक्षोघ्नादि जपेऽशक्तो जपेत्पुरुषसूक्तकम् ॥ तत्राप्यशक्तो गायत्रीमातृतेरसकृज्जपेत् ॥ उशनाः— भोजनं तु न निश्शेषं कुर्यात्प्राज्ञः कथञ्चन । अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च ॥ मनुः — असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् । उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरेच्च यत् ॥ मनुः — उच्छेषणं भूमिगतमजिह्मस्याऽशठस्य च । दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥ आश्वलायनः — शेषयेद्भाजने भुक्त्वा सर्वान्किञ्चित्ततस्ततः । यत्तु शिष्टं भाजनेषु तदश्नन्त्यतिहर्षिताः ॥ ॥ विकिरदानम् ॥ याज्ञवल्क्यः— " अन्नमादाय तृप्ताः स्थ शेषञ्चैवानुमान्य च । तदन्नं विकिरेद्भूमौ दद्याच्चापस्सकृत्सकृत् " ॥ पाद्मे—" अनन्तरं सुतृप्तेषु तेषु विप्रेषु भक्तितः । अन्नशेषं प्रविकिरेद्दर्भेषु विधिवन्नृप ॥ असोमपेति मन्त्रेण विकिरं वैश्वदेविकम् । असंस्कृतेति मन्त्रेण पैतृकं विकिरं क्षिपेत् ॥ असंशयो भवेद्विष्णुममुना वैष्णवं क्षिपेत् " ॥ स्मृत्यन्तरे— " असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः । दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥ एतेन विकिरेत्पित्र्ये मुख्यब्राह्मणसन्निधौ " ॥ ॥ उच्छिष्टपिण्डदानम् ॥ स्मृत्यन्तरे—पितृदैवतयोर्मध्ये भुवं प्रोक्ष्य तिलान् क्षिपेत् । ततो दर्भान्समास्तीर्य तूष्णीं दत्वा तिलोदकम् ॥ उच्छिष्टं तिलमिश्रेण पिण्डं दद्यात्समाहितः । ये अग्निदग्धा येऽनेति दद्यादुच्छिष्टसन्निधौ ॥ मरीचिः— श्राद्धेषु विकिरं दत्वा योऽनाचामेन्मतिभ्रमात् । पितरस्तस्य षण्मासं भवन्त्युच्छिष्टभोजिनः ॥ श्राद्धकारिकायाम् — यजमानस्य दासादीनुद्दिश्य द्विजसत्तमाः । तस्मादन्नं त्यजेद्भूमौ वामभागेषु पैतृके इति ॥ ॥ उत्तरापोशनप्रकारः ॥ आश्वलायनः— " अर्धं पिबति गण्डूषमर्धं त्यजति भूतले । प्रीणन्ति पितरः सर्वे ये चान्ये भूमिदेवताः " इति ॥ ॥ हस्तप्रक्षालने विशेषः ॥ शातातपः — विश्वेदेवनिविष्टानां

चरमं हस्तधावनम्। विसर्जनं च निर्दिष्टं तेषु रक्षा यतस्थिता ॥ दैवपूर्वं तु यो दद्याद्धस्तप्रक्षाळनोदकम्। निराशाः पितरो यान्ति देवरक्षा विवर्जिताः ॥ ॥ पात्रचालनम् ॥ जातुकर्णिः — पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः। न स्त्रीभिर्न च बालेन नासजात्या कथञ्चन ॥ अगस्त्यः — अथाऽचान्तेषु चाचम्य वारि दद्यात्सकृत्सकृत् ॥ मार्कण्डेयः — पितॄणां नामगोत्रेण जलं देयमनन्तरम्। ब्राह्मणानां द्विजैर्वाच्यमिदमक्षय्यमस्त्विति ॥ अक्षतांश्च तथा दत्वा गोत्रशेषञ्च कारयेत् ॥ ॥ पिण्डानां परिमाणम् ॥ कपित्थबिल्वमात्रान्वा पिण्डान्दद्याद्विधानतः। कुक्कुटाण्डप्रमाणान् वाऽऽमलकैर्वदरैः समान् ॥ एकोद्दिष्टे सपिण्डे च कपित्थन्तु विधीयते। नाळिकेरप्रमाणन्तु प्रत्यब्दे मासिके तथा। तीर्थे दर्शे च सम्प्राप्ते कुक्कुटाण्डप्रमाणकम् ॥ महालये गयाश्राद्धे कुर्यादामलकोपमम् ॥ याज्ञवल्क्यः —" गन्धपुष्पाणि धूपञ्च दीपञ्चैव निवेदयेत्। यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम् ॥ अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन "॥ नारदीये— "तुलसीगन्धमात्रेण पितरस्तुष्टिमाप्नुयुः। प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥ तुलसीं श्राद्धकाले तु दत्वा शिरसि धारिते। दाता भोक्ता पिता तस्य विष्णुलोके महीयते ॥ पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीदलैः। प्रणीताः पितरस्तेन यावच्चन्द्रार्कमेदिनी "॥ गृह्यसङ्ग्रहे- "संयोज्य पितृतीर्थानि निषण्णः पिण्डमग्रतः। ऋचेत्वेत्यादिमन्त्रान्ते तिष्ठन् सिञ्चेत् त्रिशः स्वधा "॥ देवलः — ततः सर्वाशनं पात्रे गृहीत्वा विविधं बुधः। तेषामुच्छेषणस्थाने विकिरं भुवि विक्षिपेत् ॥ ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत् ॥ विष्णुधर्मोत्तरे—तीर्थश्राद्धे सदा पिण्डान्क्षिपेत्तीर्थे समाहितः। दक्षिणाभिमुखो भूत्वा पित्र्यादिक्सा प्रकीर्तिता ॥ आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा। आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि ॥ मातापित्रोर्मृतदिने सङ्कल्पं कुरुते तु यः। सन्ततेस्तु विनाशः स्यात्सम्पदामपि सङ्क्षयः ॥ ॥ स्त्रीकर्तृकश्राद्धे ॥ स्मृत्यन्तरे–स्वभर्तृप्रभृतित्रिभ्यः स्वपित्रादिभ्य एव च। विधवा कारयेच्छ्राद्धं नित्यं नैमित्तिकं तथा ॥ ॥ वैश्वदेवकालः ॥ श्राद्धेह्नि श्राद्धशेषेण वैश्वदेवं समाचरेत् ॥

वृद्धावादौ क्षये चान्ते दर्शे मध्ये महालये॥ एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥ ॥ नित्यनैमित्तिककाम्यलक्षणम् ॥ कालनिर्णये- नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्। इत्युक्तोऽतिक्रमे दोषः श्रुतेरत्यागचोदनात् ॥ फलाऽश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम् ॥ ॥ मृताहेऽहरहर्दर्शे श्राद्धं यच्च महालये । तन्नित्यमुदितं सद्भिर्नित्यवत्तद्विधानतः ॥ प्रेतश्राद्धं सपिण्डत्वं सङ्क्रान्तिग्रहणेषु च। संवत्सरोदकुम्भश्च वृद्धिश्राद्धं निमित्ततः ॥ तिथ्यादिषु च यच्छ्राद्धं मन्वादिषु युगादिषु। अलभ्येषु च योगेषु तत्काम्यं समुदाहृतम् ॥ ॥ श्राद्धाङ्गतर्पणम् ॥ मरीचिः – उपरागे पितृश्राद्धे तीर्थेऽमायाञ्च सङ्क्रमे। निषिद्धेऽपि हि सर्वत्र साक्षतैस्तर्पयेत्तिलैः ॥ चन्द्रिकायाम् — सव्यं जानु ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः । तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान्पितृगणां-स्तथा ॥ योगयाज्ञवल्क्यः—गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्वशः ॥ गर्गः– यस्तर्पयति तान्विप्रः श्राद्धं कृत्वाऽपरेऽहनि। पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम् ॥ प्रत्यब्दाङ्गं तिलं दद्यान्निषिद्धेपि परेऽहनि। वर्गैकस्थवचो येषामन्येषां तु विवर्जयेत् ॥ अमाष्टकासु सङ्क्रान्तौ पातादौ ग्रहणेषु च। स्नात्वा तिलोदकं दत्वा ततः श्राद्धं समाचरेत् ॥ दर्शे तिलोदकं पूर्वं पश्चाद्द-द्यान्महालये । प्रत्यब्दं तु कृते श्राद्धे परेऽहनि तिलोदकम् ॥ पक्षे महालयश्राद्धे तर्पणन्तु दिने दिने। सकृन्महालयश्राद्धे तर्पणन्तु परेऽहनि ॥ सद्यस्तिलोदकं दद्यात्पक्षश्राद्धे पृथक्पृथक्। सकृन्महालये दद्यादपरेऽह्नि तिलोदकम् ॥ ज्येष्ठभ्रातृपितृव्याणां सपत्नीमातुरेव च ॥ सद्यस्तिलोदकं दद्यादन्येषान्तु परेऽहनि ॥ नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणम्। श्राद्धं कृत्वा परेह्नेयव तर्पणन्तु तिलैस्सह ॥ कालात्पूर्वं कृतं कर्म कालं प्राप्य पुनः क्रिया ॥ सपिण्डीकरणे चैव मासिके चानुमासिके। प्रत्यब्दात्प्रथमं चैव न कुर्यात्तिलतर्पणम् ॥ एकोद्दिष्टेषु सर्वेषु सपिण्डीकरणे तथा। मासिकेष्वाब्दिके चैव न कुर्यात्तिलतर्पणम् ॥ तीर्थश्राद्धे गयाश्राद्धे प्रेतश्राद्धेऽनुमासिके। सपिण्डीकरणे चैव न कुर्यात्तिलतर्पणम् ॥ वृद्धिश्राद्धे सपिण्ड्याञ्च मासिके चाऽनुमासिके।

आब्दिके प्रथमे चैव न कुर्यात्तिलतर्पणम् ॥ वसित्वा वसनं शुष्कं स्थल आस्तीर्णबर्हिषि । विधिज्ञस्तर्पणं कुर्यात्सर्वान्पितृगणांस्तथा ॥ दर्शे तिलोदकं दद्याच्छुष्कवासा जलाद्बहिः । तर्पयेदार्द्रवासाश्चेत् त्रिरात्रमशुचिर्भवेत् ॥ ॥ श्राद्धप्रशंसा ॥ मत्स्यः— नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः । नाममन्त्रास्तथाऽऽदेशा भवान्तरगतानपि ॥ प्राणिनः प्रीणयन्त्येते तदाकारत्वमागतान् । देवो यदि पिता जातः शुभकर्मानुयोगतः ॥ तस्यान्नममृतं भूत्वा दैवत्वेऽप्युपगच्छति । दैवत्वे भोग्यरूपेण पशुत्वे तु तृणं भवेत् ॥ श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपतिष्ठति । पानं भवति यक्षत्वे गृध्रत्वे च तथाऽऽमिषम् ॥ दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् । मानुषत्वेऽन्नपानादि नानाभोगकरं तथा ॥ रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तिता । दानशक्तिः सविभवा रूपमारोग्यमेव च ॥ श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः ॥ यमः — ये यजन्ति पितॄन्देवान्ब्राह्मणान्सहुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥ दत्वाऽनेन विधानेन लभते चतुरो वरान् । धनमन्नं सुतानायुर्ददते पितरो भुवि ॥ आयुर्धनं यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् । पशून्सुखञ्च धान्यञ्च प्राप्नुयात्पितृपूजनात् ॥ देवलः — अरोगः प्रकृतः स्वस्थश्चिरायुः पुत्रपौत्रवान् । अर्थवानर्थभोगी च श्राद्धकामो भवेदिह ॥ परतां परमां तुष्टिं लोकांश्च विपुलान्शुभान् । श्राद्धकृत्समवाप्नोति यशश्च विपुलं नरः ॥ ॥ बृहस्पतिः — दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव नः । श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्तु ॥ विप्रान्प्रदक्षिणीकृत्य विप्राणां प्रार्थयेद्वरान् ॥ ॥ श्राद्धाऽकरणे दोषः ॥ यमः — न तत्र वीरा जायन्ते नाऽरोगा न शतायुषः । न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्जितम् ॥ आदित्यपुराणे — न सन्ति पितरश्चेति कृत्वा मनसि यो नरः । श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥

प्रतिसांवत्सरिकश्राद्धप्रयोगः ॥ पूर्वेद्युः श्राद्धदेशपरिकल्पनैककालभोजनवस्त्रक्षालनादिसर्वं नियममनुष्ठाय सायमौपासनं हुत्वा कृतप्राणायामः प्राचीनावीती 'श्वः प्रतिसांवत्सरिकश्राद्धं कर्तास्मि' इति मनसा सङ्कल्प्य, कृतसायमाशान्योनिगोत्र-

श्रुतशीलवृत्तसम्पन्नानसम्बन्धानलाभे सम्बन्धान्वा तद्गृहं गत्वा यज्ञोपवीती द्वौ विप्रौ एकं वाऽभिवाद्य 'श्वः प्रतिसांवत्सरिकश्राद्धं भविता, तत्र भवद्भिर्विश्वेदेवार्थे प्रसादः करणीयः' इति विप्रस्य निरङ्गुष्ठं दक्षिणहस्तं गृहीत्वा प्रार्थयेत् ॥ ततोऽभिवाद्य प्राचीनावीती 'श्वः प्रतिसांवत्सरिकश्राद्धं भविता, तत्र भवद्भिः पितृपितामहप्रपितामहार्थे प्रसादः करणीयः' इति पूर्ववद्धस्तं गृहीत्वा त्रीन् विप्रानेकं वा प्रार्थयेत् ॥ उपवीती—विष्णवर्थे एकं ब्राह्मणमभिवाद्य 'श्वः प्रतिसांवत्सरिकश्राद्धं भविता, तत्र भवद्भिः श्राद्धसंरक्षकमहाविष्णवर्थे प्रसादः करणीयः' इति हस्तं गृहीत्वा प्रार्थयेत्। 'करिष्यामः' इति प्रतिवचनम् ॥ ॥ अथ श्राद्धदिने स्नानादिनित्यकर्म कृत्वा प्रातर्होमान्ते तान्विप्रान्गृहमानीयोदकं दत्वाऽऽसनेषूपवेश्य ततो द्वितीयमामन्त्रणम्। 'अद्य श्राद्धं भविष्यति, तत्र भवद्भिः प्रसादः करणीयः' इति विशेषः। ततः श्मश्रुकर्माऽभ्यञ्जनस्नानैस्तान्यथोपपादं सम्पूजयेत् ॥ ॥ अथ पञ्चदशधा विभक्तस्याऽह्नोऽष्टमे भागे नद्यादौ स्नात्वा मध्याह्नसन्ध्यानन्तरमाचम्य प्राणानायम्य सुमुखश्चेत्यादिदेशकालौ सङ्कीर्त्य 'मम पितुः (मातुः) प्रतिसांवत्सरिकश्राद्धांगत्वेन शरीरशुध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणशारीरसूक्तपठनानि करिष्ये' इति सङ्कल्प्य स्नानादिचतुष्टयं विधाय—"शारीरषट्कस्याऽऽत्मा ऋषिः। प्रकृतिपुरुषं छन्दः। महाविष्णुर्देवता। अन्तर्बहिः शरीरशुध्यर्थे जपे विनियोगः ॥ शारीरमन्तःकरणोपघातं पापं विभुर्वाचिकमप्यशेषम्। शमं नयत्वद्य ममाऽस्तु शर्म पापादनन्ताद्धृदि सन्निविष्टात् ॥ अन्तश्शुद्धिं बहिश्शुद्धिं शुद्धो धर्ममयोऽच्युतः। स करोत्वमलं शुद्धं यतः शुद्धो भवाम्यहम् ॥ बाह्योपघातानघो बौद्धांश्च भगवानजः। शमन्नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः ॥ शारीरं मे हृषीकेश पुण्डरीकाक्षमानसम्। पापं प्रशमयाऽद्य त्वं वाक्कृतं मम माधव ॥ यद्यप्युपहतः पापैर्यदि वाऽत्यन्तदुष्कृतैः। तथाऽपि विष्णुस्मरणाद्विपाप्मा शुचिरस्म्यहम् ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः" इति ॥

'शुची वो हव्या मरुतः शुचीनाम्। शुचिं हिनोम्यध्वरं शुचिभ्यः॥ ऋतेन सत्यमृतसाप आयन्। शुचिजन्मानः शुचयः पावकाः' सर्वाणि स्थलानि शुचीनि भवन्तु, इत्यनेन श्राद्धभूमिं सम्प्रोक्ष्य 'अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुची रोचत आहुतः॥ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव ज्योतींष्यर्चयः' इति द्वाभ्यां विप्रहस्ते जलं दत्वा 'सर्वे विप्राः शुचयो भवन्तु' इति प्रार्थयेत्॥ ततो जलशुद्धिं करिष्ये इति सङ्कल्प्य, शुद्धपुण्यजलपूरितं ताम्रं राजतमिति कलशद्वयमासाद्य 'आपो हि ष्ठा० चनः, इमम्मे गङ्गे० सुषोमया, गङ्गे च० कुरु' इत्यभिमन्त्र्य गन्धपुष्पाक्षतान्निक्षिप्य 'ब्रह्म जज्ञानं०' इति चतुर्दशदर्भमयं कूर्चं 'हिरण्यगर्भः समवर्तताग्रे०' इति हिरण्यं च तयोः प्रत्येकं विन्यस्य, ताम्रकलशे—'यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः। निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्' इति यवान्, राजतकलशे — प्राचीनावीती 'तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नवद्भिः प्रत्तः स्वधयेहि पितृनिमाँल्लोकान्प्रीणयाहि नः स्वधा नमः' इति तिलांश्च निक्षिप्य सर्वत्र देवार्चने ताम्रकलशोदकं पित्रर्चने राजतकलशोदकञ्चोपयुञ्ज्यात्॥ केचित्त्वेकस्मिन्नेव पात्रे यवोदकं तिलोदकञ्चोपकल्पयन्ति॥ अधिकारसिध्यर्थं ब्रह्मदण्डं करिष्ये, इति सङ्कल्प्य ब्रह्मदण्डार्थं कुशतिलहिरण्यान्युदपात्रञ्च गृहीत्वा कनिष्ठपूर्वं ब्राह्मणान् त्रिः प्रदक्षिणीकुर्यात्॥ 'समस्तसम्पत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः। अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः॥ आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः। समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षन्तु मां ब्राह्मणपादपांसवः' इति। प्राचीनावीती–ब्रह्मदण्डं विप्रसमीपे निधाय, उपवीती – अधिकारसम्पदस्त्विति भवन्तो ब्रुवन्तु, इति प्रार्थयेत्॥ (अधिकारसम्पदस्तु इति प्र०)॥ प्राचीनावीती – कालोऽयं मुख्यः कालोऽस्त्विति भवन्तो ब्रुवन्तु, (कालोऽयं मुख्यः कालोऽस्तु इति प्र०)॥ उपवीती – 'नमो देवेभ्यः' इति विश्वेभ्यो देवेभ्यः, प्राचीनावीती – 'स्वधा पितृभ्यः' इति पितृभ्यश्च नमस्कुर्यात्॥ उपवीती – 'देवताभ्यः

पितृभ्यश्च महायोगिभ्य एव च। नमः स्वधायै स्वाहायै नित्यमेव नमो नमः॥ श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं जनार्दनम्। वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तये' इति प्रार्थ्य ('प्रवर्तय' इति प्र०)॥ ॥ द्विराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मम पितुः (मातुः) प्रतिसांवत्सरिकश्राद्धे विश्वेषां देवानां तृप्त्यर्थं (प्राचीनावीती) पितृपितामहप्रपितामहानां अमुकशर्मणां अमुकगोत्राणां वसुरुद्रादित्यरूपाणामक्षय्यतृप्त्यर्थं (उपवीती) श्राद्धसंरक्षकमहाविष्णुप्रीत्यर्थं च देशकालाद्यनुसारतः सदैवं प्रतिसां० श्राद्धं (अग्नौकरणपक्षे – साग्नौकरणं) सपिण्डं पार्वणविधानेनाऽन्नेन हविषा करिष्ये (कुरुष्व इति प्र०)॥ उपवीती–तदङ्गक्षणादि करिष्ये इति सङ्कल्प्य (कुरुष्व इति प्र०)॥ कटिं बध्वा सङ्कल्पसिद्धिरस्त्विति भवन्तो ब्रुवन्तु, अस्तु सङ्कल्पसिद्धिः इति प्र०॥ विश्वेदेवहस्तेऽपो दत्वा पितुः प्रति० श्राद्धे पुरू० देवानां स्थाने भवद्भिः क्षणः क्रियताम् इति दर्भद्वयं दत्वा यवैरभ्यर्च्य, सङ्कल्पसिद्धिरस्त्विति भवन्तो ब्रुवन्तु इति पितृहस्तेऽपो दत्वा प्राचीनावीती–पितुः प्रति० श्राद्धे पितृ० रूपाणां स्थाने भवद्भिः क्षणः क्रियताम् इति द्विगुणदर्भान्दत्वा तिलैरभ्यर्चयेत् (ॐ तथा इति प्र०)॥ प्राप्नोतु भवान् इति कर्ता (प्राप्नवानि इति प्र०)॥ पूर्ववत्सङ्कल्पसिद्धिरस्त्विति भवन्तो ब्रुवन्तु इति श्राद्धसंरक्षकमहाविष्णवर्थं विप्रहस्तेऽपो दत्वा श्राद्धसंरक्षकमहाविष्णवर्थे भवद्भिः क्षणः क्रियताम् इति विश्वेदेववत्क्षणं दद्यात्॥ देवानां स्वागतम् इत्युक्त्वा प्राचीनावीती–पितृणाञ्च स्वागतम् इति वदेत् (सुस्वागतम् इति प्र०)। उपवीती—'अक्रोधनैः शौचपरैस्सततं ब्रह्मचारिभिः। भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि' इति प्रार्थयेत्॥ "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्" इति विप्रा जपेयुः॥ अथ पाद्यार्थं देवानामुत्तरतश्चतुरश्रं प्रादेशमात्रं

तद्दक्षिणतः षडङ्गुलं विहाय पितॄणां वर्तुलं वितस्तिमात्रमित्यवटद्वयं खात्वा, चतुरश्रे- विश्वेदेवाः पाद्यस्थानं कल्पयामि इति पाद्यस्थानं प्रकल्प्य पाद्यस्थाने इमे दर्भाः इति प्रागग्रान्दर्भानास्तीर्य दर्भाणामुपरि यवोदकं विसृज्य गन्धादिभिरभ्यर्च्य, प्राचीनावीती- वृत्तमण्डले पित्रर्थं पूर्ववत्पाद्यस्थानं प्रकल्प्य दक्षिणाग्रान्द्विगुणदर्भानास्तीर्य तिलोदकं दत्वा गन्धादिभिरभ्यर्च्य, उपवीती–पाद्यस्थाने गन्धादिसकलाराधनैः स्वर्चितम्, इत्युक्त्वा पुरूरवा० देवेभ्यः स्वाहा नमः स्वागतम् (सुस्वागतम् इति प्र०) इति देवविप्रं मण्डलस्य पश्चात्प्राङ्मुखमुपवेश्य स्वयं तत्पुरस्तात्प्रत्यङ्मुख उपविश्य चतुरश्रे तत्पादौ सङ्गृह्याऽभिवाद्य दर्भद्वयगन्धपुष्पयवसहितं जलमादाय "शन्नो देवी० स्रवन्तु नः ॥ चरणं पवित्रं विततं पुराणम् । येन पूतस्तरति दुष्कृतानि ॥ तेन पवित्रेण शुद्धेन पूताः । अति पाप्मानमरातिं तरेम ॥ लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्राजमानं महस्वत् ॥ अमृतस्य धारा बहुधा दोहमानम् । चरणन्नो लोके सुधितां दधातु ॥ पृथिव्यां यानि तीर्थानि यानि तीर्थानि सागरे । तानि सर्वाणि तीर्थानि पदे विप्रस्य दक्षिणे" पुरू० देवेभ्यः स्वाहा नमः इदं वः पाद्यम् ( सुपाद्यम् इति प्र० ) इति पाद्यं दत्वा पवित्रं विना शुद्धोदकेन गुल्फादधः प्रक्षालयेत् ॥ ततः 'मयि महो मयि भगो मयि भर्गो मयि यशः' इति देवविप्रः कर्तुः पाणी सम्मृशति । 'मयीन्द्रियं वीर्यम्' इत्युरः प्रत्यात्मानं प्रत्यभिमृशति ॥ एवमेव प्राचीनावीती — दर्भत्रयगन्धपुष्पतिलयुक्तं जलमादाय दक्षिणे वृत्ताकारमण्डले पितृ० रूपेभ्यः स्वधा नमः स्वागतम् ( सुस्वागतम् इति प्र० )। इति पितृविप्रपादौ सङ्गृह्य तिलोदकं दत्वा शुद्धोदकेन प्रक्षाळयेत् । उपवीती—देवमण्डले 'इदं विष्णुः० पाꣳसुरे' इति पूर्ववत् विश्वेदेववत् विष्णोः पादप्रक्षाळनम् ॥ यवोदकेन – 'भूस्तर्पयामि, भुवस्त०' इति तर्पयित्वा प्राचीनावीती तिलोदकेन 'भूर्भुवस्सुवस्त०' इति तर्पयेत् । उपवीती—बहिर्गत्वा स्वयं हस्तपादौ प्रक्षाल्य पवित्रं विसृज्य मण्डल-

स्येशानभागे उपविश्य पुनः पवित्रं धृत्वाऽऽचम्य विप्रांश्चाचमय्य ( मण्डलात्पुरतो देवाः मण्डलाद्दक्षिणतः पितृविप्रः ) तैः सहाऽन्तः प्रविश्य ' सालिग्रामे श्रीमहाविष्णुपूजां करिष्ये ' इति सङ्कल्प्यासनाद्युपचारैः पूजयेत् ॥ विश्वेदेवविप्रौ प्राङ्मुखौ पितृविप्रानुदङ्मुखान्सर्वान् प्राङ्मुखान् ( दक्षिणापवर्गान् ) उदङ्मुखान् ( प्रागपवर्गान् ) वा श्राद्धसंरक्षकविष्णुं यथावकाशं प्राङ्मुखमुदङ्मुखं वा सदर्भोपक्लृप्तेष्वासनेषूपवेश्य विप्रहस्तेऽपो दत्वा ' पुरू० देवानामिदमासनम् ' इति दर्भद्वयसहितान्यवाक्षतान्पीठोपरि दक्षिणार्धे निधाय ॥ प्राचीनावीती — ' पितृ० रूपाणामिदमासनम् ' इति द्विगुणदर्भतिलाक्षतान्पीठोपरि उत्तरार्धे निदध्यात् ॥ उपवीती – देवविप्रवद्विष्णोरासनं कल्पयेत् ॥ स्वासनम् इति प्र० ॥ विप्रहस्ते जलं दद्यात् ॥ ' प्राच्यादिदिग्बन्धनं करिष्ये ' इति सङ्कल्प्य " अग्निष्वात्ताश्च पितरः प्राची रक्षन्तु मे दिशम् । तथा बर्हिषदो याम्यां दिशं रक्षन्तु मे सदा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥ असुरा यातुधानाश्च पिशाचा यज्ञदूषकाः । ते सर्वेऽप्यपगच्छन्तु मया बद्धकुशैस्तिलैः " इति सर्वत्र सकुशतिलान्विकिरेत् ॥

अथोपवीती – स्थण्डिलोल्लेखनप्रभृत्यग्निं प्रतिष्ठाप्य पितुः प्रतिसां० श्राद्धे अग्नौकरणहोमं करिष्ये, प्रतिसांवत्सरिकश्राद्धीयाग्नौकरणहोमः कर्म, अग्नीषोमावाज्यभागौ, हव्यवाहनो नामाऽग्निः, पुरू० देवा देवता, चरुर्हविः, प्राचीनावीती– कव्यवाहनो नामाऽग्निः, पितृपितामहप्रपितामहा देवताः, चर्वाज्ये हविषी ( चर्वपूपाज्यानि वा हवींषि ), उपवीती–अग्निः कव्यवाहनः स्विष्टकृत्, इत्यादि सङ्कल्प्याऽन्वाधाय दक्षिणाग्रप्रागग्रैर्दर्भैः परिस्तीर्य पात्रासादने--आज्यस्थालीं, स्रुवं, औदुम्बरीं दर्वीं, प्रोक्षणीं, चरुस्थाल्यौ, मेक्षणे, यवागूपात्रं, अपूपपात्रमिति विशेषः । अग्नेर्दक्षिणतश्चतुरश्रमण्डले प्रागग्रेषु दर्भेषु यवोदकपात्रं वृत्तमण्डले दक्षिणाग्रेषु दर्भेषु स्वधापात्रं ( अर्घ्यार्थं दैवे–द्वे प्रागपवर्ग, पित्र्ये–त्रीणि दक्षिणापवर्ग, उभयत्रैकैकं वा ), कशिपूपबर्हणे,

अञ्जनाभ्यञ्जने, दशासूत्रं, सकृदाच्छिन्नं बर्हिर्मुष्टिमित्येकैकशः सादयित्वा पवित्रकरणादिप्रोक्षणीः संस्कृत्योत्तरतः सादितानि पात्राणि त्रिः प्रोक्ष्य दक्षिणतः सादितानि सकृत्प्रोक्ष्य चरुनिर्वापे—'देवस्य त्वा० पुरू० देवेभ्यो जुष्टं निर्वपामि' इति त्रिर्यजुषा तूष्णीं चतुर्थं निरुप्य, प्राचीनावीती— 'देवस्य त्वा० पितृभ्यो जुष्टं निर्वपामि' इति पात्रान्तरे चरुं यवागूं ( अपूपं ) च सकृन्निरुप्य, यज्ञोपवीती—प्रोक्ष्य आज्यनिर्वापादि प्रतिप्लुताभिघारणान्तं कुर्यात् ॥ अथाऽर्घ्यार्थं दक्षिणतः सादितं यवोदकपात्रद्वयमेकं वोत्तानं कृत्वा तूष्णीं संस्कृताभिरद्भिः प्रोक्ष्य प्रागग्रे पवित्रे निधाय 'शन्नो देवी० पुरू० देवेभ्यो गृह्णामि' इत्यप आनीय, अपोद्धृत्य पवित्रं 'यवोसि०' इति यवानावपति । तिरःपवित्रं 'शुक्रमसि०' इत्याज्यं, 'हिरण्यगर्भः०' इति हिरण्यं, 'गन्धद्वारां०' इति गन्धं, 'काण्डात्काण्डात्०' इति दूर्वाश्च निक्षिप्य प्रागग्रैर्दर्भैः प्रतिच्छाद्य 'अर्घ्यं कृतमाराधनं शास्त्रीयमस्तु' इति प्रार्थ्य 'अर्घ्यपात्रं सम्पन्नम्' ( अर्घ्यपात्रे सम्पन्ने इति यथायथं वदेत् ) सुसम्पन्नम्, ( सुसम्पन्ने ) इति प्र० ॥ अथ स्वधापात्रत्रयमेकं वोत्तानं कृत्वा पूर्ववत्प्रोक्ष्य, प्राचीनावीती–दर्भत्रयकृतं पवित्रं दक्षिणाग्रं पात्रत्रये पृथक्पृथङ्निधायाऽप आनयति–"आम आगच्छन्तु पितृ० प्रपितामहा देवयानान् समुद्रान्सलिलान्स्ववर्णान् । अस्मिन्यज्ञे सर्वकामान्लभन्तेऽक्षीयमाणमुपदुह्यन्तामिमाः पितृ० महेभ्यो वो गृह्णामि" इति ॥ पात्रत्रय-पक्षे—'पितृभ्यो वो गृह्णामि, पितामहेभ्यो वो गृह्णामि, प्रपितामहेभ्यो०' इति पृथक्पृथङ्मन्त्रेण गृह्णीयात् ॥ अपोद्धृत्य पवित्रं, 'तिलोऽसि० स्वधा नमः' इति तिलानावपति । 'मधुवाता० भवन्तु नः' इति तिरःपवित्रं मध्वानीय "सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाहि" इति सर्वाभिरङ्गुलिभिः समुदायुत्याऽभिमृशति । तस्मिन्यत्किञ्चिदापतितं स्यात्त-दङ्गुष्ठेन महानाम्न्या चोपसङ्गृह्य नैर्ऋत्यां दिशि निरस्यति —"अवेष्टा दन्दशूका निरस्तं नमुचेः शिरः" इति । अप उपस्पृश्य

पुनरेवाभिमृशति—' शन्नो देवी० स्रवन्तु नः ' इति। ' हिरण्यगर्भः०' इति हिरण्यप्रक्षेपणादि दक्षिणाग्रैर्दर्भैः प्रच्छादनान्तं देवपात्रवत् कुर्यात्। यज्ञोपवीती- शास्त्रीयमस्त्विति वाचयित्वा अर्घ्यपात्राणि सम्पन्नानि, अर्घ्यपात्रं सम्पन्नं इति वा वदेत् (सुसम्पन्नानि इति प्र०)॥ अथ प्राचीनावीती भोजनस्थानेष्वासनेषु च ससिकततिलान्विकिरति — " अपहता असुरा रक्षाꣳसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां गतं मनः " इति ( यत्रासां गतं मनः, इति स्त्रीणाम् ) । ' निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा ये । ये राक्षसा भूतपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ' इति भूतादीन्युत्सार्य अद्भिरवोक्षति — " उदीतामवर उत्परास उन्मध्यमाः पितरस्सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु " इति ॥ ( ' उदीरतामवरा उत्परा उन्मध्यमा मातरस्सोम्याः । असुं य ईयुरवृका ऋतज्ञास्ता नोऽवन्तु मातरो हवेषु ' इति स्त्रीणाम् ) उपवीती—गायत्र्या पाकादीन्प्रोक्ष्य ' पाकादीनां पवित्रताऽस्त्विति भवन्तो ब्रुवन्तु ' इत्युक्त्वा ' पाकादीनां पवित्रताऽस्तु' इति प्र० ॥ ' श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं० श्राद्धं प्रवर्तये ' इति विज्ञाप्य ' प्रवर्तय ' इत्यनुज्ञां गृह्णीयात् ॥ आवाहनाद्युपचारेषु सर्वत्र पुरस्तादुपरिष्टाच्च विप्रहस्तेऽपो दद्यात् । देवार्चने ( दक्षिणतः ) उत्तराभिमुखो दक्षिणं जानु निपात्य वाममुद्धृत्योपविशेत् । पित्रर्चने ( पुरतः ) दक्षिणाभिमुखो वामजानु निपात्य दक्षिणमुद्धृत्योपविशेत् ॥ ' पुरू० देवानावाहयिष्ये ' इत्युक्त्वा ' आवाहय ' इति प्र० । विप्रहस्तेऽपो दत्वा " आगच्छन्तु महाभागा विश्वेदेवा वरप्रदाः । ये ह्यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥ विश्वे देवास आगत शृणुताम इमꣳ हवम् । एदं बर्हिर्निषीदत ॥ विश्वेदेवाः शृणुतेमꣳ हवम्मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्याऽस्मिन्बर्हिषि मादयध्वम् ॥ पुरू० देवानावाहयामि " इति दक्षिणपादादिशिरोऽन्तं यवाक्षतैरावाह्य निरङ्गुष्ठं हस्तं गृहीत्वा ' पुरू० देवाः, पितुः प्रतिसा० श्राद्धे ॐ क्षणः क्रियताम् ' इति क्षणं ग्राहयति ' ॐ तथा ' इति प्र० । विश्वेदेवहस्ते उदगग्रं

पवित्रं निधायोद्धरण्याऽर्घ्यजलमादाय 'या दिव्या आपः पयसा सम्बभूवुः । या अन्तरिक्ष उत पार्थिवीर्याः । यासामषाढा अनु-यन्ति कामम् । ता न आपः शꣳस्योना भवन्तु ॥ पुरूर० देवेभ्यः स्वाहा नमः इदं वो अर्घ्यम्' इत्यर्घ्यं द्विर्दत्वा 'अस्त्वर्घ्यम्' इति प्र० । 'ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः । त इमं यज्ञमवन्तु त इदं क्षेत्रमाविशन्तु त इदं क्षेत्रमनु-विविशन्तु ॥ पुरू० देवेभ्यः स्वाहा नमः इदमर्चनम्' इति दक्षिणपादजान्वंसशिरः पूजयेत् 'अस्त्वर्चनम्' इति प्र० । 'युवा-सुवासाः० देवयन्तः ॥ पुरू० देवेभ्यः स्वाहा नमः आच्छादनार्थे इदं वो वस्त्रम्' 'अस्त्वाच्छादनम्' इति प्र० । 'यज्ञोपवीतं० तेजः ॥ पुरू० देवेभ्यः स्वाहा नमः धारणार्थमुपवीतम्' 'सूपवीतम्' इति प्र० ॥ 'हिरण्यगर्भस्सम० विधेम ॥ पुरू० देवेभ्यः स्वाहा नमः सर्वालङ्करणार्थे इदं वो हिरण्यम्' 'सुहिरण्यम्' इति प्र० । 'गन्धद्वारां० स्वाहा नमः अलङ्करणार्थे इमे वो गन्धाः' 'सुगन्धाः' इति प्र० । 'अर्चत प्रार्चत० । पुरू० देवेभ्यः स्वाहा नमः इमे वो यवाक्षताः' 'सन्तु यवाक्षताः' इति प्र० । 'आयने ते० ॥ पुरू० देवेभ्यः स्वाहा नमः इमानि वो दूर्वाङ्कुरकुशतुलसीश्वेतपत्रपुष्पाणि माल्यानि' 'सुपुष्पाणि' इति प्र० । 'धूरसि० धूर्वामः ॥ पुरू० देवेभ्यः स्वाहा नमः अयं वो धूपः' 'सुधूपः इति प्र० । उद्दीप्यस्व० दिशः ॥ पुरू० स्वाहा नमः अयं वो दीपः' 'सुदीपः' इति प्र० । 'या दिव्या०' इति पूर्ववत्पुनरर्घ्यं दद्यात् ॥ "आधिव्याधिहरं नृणां दुःखदारिद्र्यनाशनम् । श्रीःपुष्टिकीर्तिदं वन्दे विप्रश्रीपादपङ्कजम् ॥ विप्रौघदर्शनात्सद्यः क्षीयन्ते पापराशयः । वन्दनान्मङ्गलावाप्तिरर्चनादच्युतं पदम्" इति पादे गन्धपुष्पा-क्षतैरभ्यर्च्य गन्धपुष्पाक्षतजलकुशाग्रयवसर्षपदूर्वा गृहीत्वा 'इदं वोऽष्टार्घ्यम्' इत्यर्घ्यं दद्यात् । 'अस्त्वष्टार्घ्यम्' इति प्र० । 'विश्वेदेवाः आसनाद्यर्घ्यान्तं मया कृतमाराधनं शास्त्रीयमस्त्विति भवन्तो ब्रुवन्तु' 'शास्त्रीयमस्तु इति' प्र० ॥

अथ पितृ० महानामर्चनं करिष्ये इति सङ्कल्प्य 'कुरुष्व' इति प्र०। प्राचीनावीती – वामाङ्गुष्ठोपकानिष्ठिकाभ्यां भुवं स्पृष्ट्वा जपति — "ये पार्थिवासः पितरो येऽन्तरिक्षे ये दिवि ये वाऽमृता बभूवुस्तेऽस्मिन्यज्ञे समवयन्ताम्" इति। 'पितुः प्रति० श्राद्धे पितृ० महानावाहयिष्ये' इत्युक्त्वा 'आवाहय' इति प्र०। "आयात पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः। प्रजामस्मभ्यं ददतो रयिञ्च दीर्घायुत्वञ्च शतशारदञ्च॥ उदीराणा इह सन्तु नः सोम्याः पितरः पितामहाः प्रपितामहाश्चानुगैस्सह। असुङ्गमाः सत्ययुजो वृकास आनोहवं पितरोऽद्यागमन्तु॥ एह गच्छन्तु पितरो हविषे अत्तवे। अस्मिन्यज्ञे बर्हिष्यानिषद्य। मा वीरः प्र मायुनक्तु॥ पितृ० रूपानावाहयामि" इति शिरःप्रभृति वामपादान्तं तिलैरावाह्य, निरङ्गुष्ठं हस्तं गृहीत्वा 'पितृ० रूपाः प्रतिसां० श्राद्धे ॐ क्षणः क्रियताम्' इति क्षणं ग्राहयेत् 'ॐ तथा' इति प्र०। कर्ता 'प्राप्नोतु भवान्' इति 'प्राप्नवानि' इति प्र०। विप्रहस्ते दक्षिणाग्रं पवित्रं निधाय 'या दिव्या० स्योना भवन्तु॥ पितृ० रूपेभ्यः स्वधा नमः इदं वो अर्घ्यम्' 'अस्त्वर्घ्यम्' इति प्र०। "उशन्त-स्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशत आवह पितॄन्हविषे अत्तवे" इति वामभागे शिरोऽसजानुपादेषु तिलैरर्चनम्। आच्छादनादि पुनरर्घ्यान्तमेवमेव दद्यात्॥ पुष्पादिदाने इमानि वो दूर्वाङ्कुरभृङ्गराजकुशतुलसीश्वेतपत्रपुष्पाणि। उपवीतेन पाद-पूजनम्। प्राचीनावीती – उशीरचन्दनतिलदूर्वाकुशतुलसीभृङ्गराजजलसहितमष्टार्घ्यं दद्यात्॥ उपवीती — श्राद्धसंरक्षकमहा-विष्णोरर्चनं करिष्ये, इति सङ्कल्प्य 'इदं विष्णुः० सुरे' इति यवाक्षतैरावाह्य विश्वेदेववत्क्षणं ग्राहयित्वाऽर्चयेत्॥ ततो विप्रा नमः सहमानायेत्येतमनुवाकं पठेयुः॥

अथाऽग्नौ करिष्यामि, इत्युक्त्वा ('कुरुष्व' इति प्र०)। अग्नेः पश्चादुपविश्य 'जुषस्व नः' इत्यादि चरूत्सेक-प्रायश्चित्तान्ते उभयं चरुमाप्याय्य वैश्वदेवं चरुं मेक्षणेनोपहत्य 'पुरू० देवेभ्यः स्वाहा' इति द्विर्हुनेत्, (विश्वेभ्यो देवेभ्य इदं०)॥

प्राचीनावीती—आज्यस्य तिस्र आहुतीर्जुहोति—सोमाय पितृपीताय स्वधा नमः स्वाहा, यमायाऽङ्गिरस्वते पितृमते स्वधा नमः स्वाहा, अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा ( यथालिङ्गं त्यागः ) ततः पैतृकं चरुमभिघार्य औदुम्बर्या दर्व्या द्विरुपस्तीर्य सकृदवदाय द्विरभिघार्य प्रत्यज्य पुरस्तात्स्रुवाहुतिं हुत्वा जुहोति—'सोमाय पितृपीताय०' इत्यादि त्रिभिर्मन्त्रैः इत्येकः पक्षः ॥ अपि वा वैश्वदेवहोमान्ते—प्राचीनावीती—"याः प्राचीः सम्भवन्त्याप उत्तरतश्च याः । अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः स्वाहा, पित्र इदं० । अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः स्वाहा, पितामहायेदं० । अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः ससन्धिकैः । अर्धमासैश्च मासैश्चाऽन्तरन्यं प्रपितामहाद्दधे स्वधा नमः स्वाहा, प्रपितामहायेदं० । यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता वृङ्क्तां मा भूरन्योऽवपद्यतां स्वधा नमः, पित्र इदं० । यद्वः क्रव्यादङ्गमदहल्लोकाननयन्प्रणयञ्जातवेदाः । तद्वो अहं पुनराविशयाम्यरिष्टाः सर्वैरङ्गैः सम्भवत पितरः स्वधा०" पितृभ्य इदं० ॥ अथ पैतृकं चरुं पूर्ववदवदानधर्मेणावदाय जुहोति—"सोमाय पितृमते शुष्मिणे जुहुमो हविः । वाजिन्निदं जुषस्व नः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा, सोमाय पितृमत इदं० । अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे । वैवस्वतेदमद्धि नः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा०, यमायाऽङ्गिरस्वते पितृमत इदं० । यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः । प्र देवेभ्यो वह हव्यं पितृभ्यश्च स्वजा कव्यं देवेभ्यः पितृभ्यः०" अग्नये कव्यवाहनाय स्विष्टकृत इदं० ॥ अथाऽपूपमष्टधा विच्छिद्य त्रीण्यवदानानि एवमेव मन्त्रत्रयेण हुत्वा स्विष्टकृदर्थमुभयतः सकृत्सकृच्चरुमवदाय द्विरभिघार्य बर्हिषि सादयित्वा चरोरेकदेशमुद्धृत्य पात्रान्तरे निधाय शेषमोदनं यवागूं तिलाज्येन समुदायुत्य औदुम्बर्या दर्व्योपघातं ( अवदानधर्मेणावदाय ) दक्षिणार्धे जुहोति—"पितृभ्यः स्वधा नमः स्वाहा । पितामहेभ्यः स्वधा नमः स्वाहा । प्रपितामहेभ्यः स्वधा नमः स्वाहा ।

मातृभ्यः० नमः स्वाहा। पितामहीभ्यः०। प्रपितामहीभ्यः०। मातामहेभ्यः०। मातुःपितामहेभ्यः०। मातुःप्रपितामहेभ्यः०। मातामहीभ्यः०। मातुःपितामहीभ्यः० । मातुःप्रपितामहीभ्यः० । आचार्येभ्यः० । आचार्यपत्नीभ्यः० । गुरुभ्यः० । गुरुपत्नीभ्यः० । सखिभ्यः० । सखिपत्नीभ्यः० । ज्ञातिभ्यः० । ज्ञातिपत्नीभ्यः० । अमात्येभ्यः० । अमात्यपत्नीभ्यः० । सर्वेभ्यः० । सर्वाभ्यः० । " ( यथालिङ्गं त्यागः ) इति चतुर्विंशतिनाममन्त्रैर्हुत्वा 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा' इति दक्षिणार्धपूर्वार्धे स्विष्टकृतं हुत्वा ( यथालिङ्गं त्यागः ) उपवीती–मेक्षणमग्नौ प्रहृत्य संस्रावं हुत्वा अन्तःपरिधि बहिःपरिधि संक्षाळनं निनयेत् ॥

अथ सालिग्रामविष्णवे तत्पुरतश्चतुरस्रमण्डले सौवर्णं पात्रं प्रकल्प्य उपस्तरणपूर्वकं अन्नसूपघृतपायसभक्ष्यभोज्यादि परिविष्याऽभिघार्य प्रोक्ष्य प्रदक्षिणं परिषिच्य 'इदं वो अन्नं' इत्युक्त्वा। विश्वेदेवपुरतश्चतुरश्रमण्डले 'पुरू० देवानां भोजनार्थे सुवर्णमयपात्रं कल्पयामि' (सुपात्रं कल्पय इति प्र०) इति प्रागग्रेषु दर्भेषु पात्रं कल्पयित्वा। प्राचीनावीती—'पितृ० रूपाणां भोजनार्थे रजतमयपात्रं कल्पयामि' ( सुपात्रं कल्पय ) इति पितृपुरतो वृत्तमण्डले दक्षिणाग्रेषु दर्भेषु पात्रं प्रकल्प्य। उपवीती-विष्णोश्चापि विश्वे-देववत्पात्रमुपकल्पयेत्। भोजनपात्रेषु उपस्तरणपूर्वकं तत्तद्धुतशेषाऽपूपोदनसूपघृतपायसभक्ष्यभोज्यव्यञ्जनादिकं परिविष्याभिघार्य देवपात्रं प्रागग्रैर्दर्भैः पितृपात्रं दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्य दक्षिणं जान्वाच्य विश्वेदेवपात्रं गायत्र्या प्रोक्ष्य 'सत्यं त्वर्तेन परिषिञ्चामि' इति प्रदक्षिणं परिषिच्य विप्रहस्ते जलं दत्वा— "पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसिमा पुरू० देवानां क्षेष्ठा अमुत्रामुष्मिन्लोके, शन्नो देवी० स्रवन्तु नः ॥ पितुः प्रतिसांव० पुरू० देवेभ्यः स्वाहा नमः, इदं वो अन्नं, सपरिकरश्च" (अस्त्वन्नं इति प्र०) इति विप्रस्य दक्षिणाऽङ्गुष्ठेनाऽनखेनाऽ-नुदिशति, पात्रस्याधस्थादुत्तानं सव्यं हस्तमुपरिष्टान्न्यञ्चं दक्षिणं हस्तञ्च कृत्वा पात्रं स्पृशञ्जपति—"इदं हव्यममृत-

स्वरूपमातृमेदत्तं दास्यमानं, अन्नञ्च ब्रह्म, अहञ्च ब्रह्म, भोक्ता च ब्रह्म, गयेयं भूमिः, गदाधरो भोक्ता, स्वर्णमयं पात्रं, अश्वत्थवटच्छायायां गयायां, ईशानादिचतुर्दशपदेषु दत्तं" इति विभाव्य, यवोदकमादाय कर्ता आत्मनो दक्षिणपार्श्वे देवतीर्थेनाऽङ्गुलिमध्येन भूमौ दर्भेषु निनीय 'विश्वेभ्यो देवेभ्यः स्वाहा नमः, हव्यं न मम' इति वदेत्। गदाधरः प्रीयताम्। 'ये देवा दिव्येकादशस्थ पृथिव्या मध्येकादशस्थाऽप्सुषदो महिनैकादशस्थ ते देवा यज्ञमिमं जुषध्वम्' पुरू० देवाः इदमन्नं यथाभागं जुषध्वम् (अस्तु यथाभागं जुषामहे इति प्र०) इति वदेत्॥ पितृपुरतः सव्यं जान्वाच्य भोजनपात्रं गायत्र्या प्रोक्ष्य (प्राचीनावीती) 'सत्यं त्वर्तेन परिषिञ्चामि' इति तिलोदकेनाऽप्रदक्षिणं परिषिच्य विप्रहस्तेऽपो दत्वा—"पृथिवी समन्तस्य तेऽग्निरुपद्रष्टर्चस्ते महिमा दत्तस्याऽप्रमादाय, पृथिवी ते पात्रं० मसि मा पितॄणां० वसुरूपाणां क्षेप्ता, अमुत्राऽमुष्मिन्लोके, अन्तरिक्षसमन्तस्य ते वायुरुपश्रोता यजूꣳषि ते महिमा दत्तस्याऽप्रमादाय, पृथिवी ते० मसि मा पितामहानां० रुद्ररूपाणां० लोके, द्यौः समन्तस्य ते आदित्योऽनुख्याता सामानि ते० मादाय, पृथिवी० प्रपितामहानां० आदित्यरूपाणां० लोके, शन्नो देवी० स्रवन्तु नः, पितुः प्रतिसां० पितृपिता० रूपेभ्यः स्वधा नमः इदं वो अन्नं सपरिकरञ्च" (अस्तु अन्नं इति प्र०) इति विप्राङ्गुष्ठेनाऽनखेन दक्षिणेन पाणिना भोज्यद्रव्यमप्रदक्षिणमभिमृति। पात्रस्याऽधस्थादुत्तानं दक्षिणहस्तमुपरिष्टान्न्यञ्चं सव्यहस्तञ्च कृत्वा एवं पात्रं स्पृशञ्जपति —'इदं कव्यममृतस्वरूपं० दत्तं' इति भावयित्वा, वामपार्श्वे पितृतीर्थेन तिलोदकं भूमौ दक्षिणाग्रेषु दर्भेषु निनीय 'पितृपिता० रूपेभ्यः स्वधा नमः, कव्यं न मम' इति वदेत्। गदाधरः प्रीयताम्। 'ये चेह पितरो ये च नेह याꣳश्च विद्म याꣳउ च न प्रविद्म। त्वं वेत्थ यदि ते जातवेदः स्वधाभिर्यज्ञꣳसुकृतं जुषस्व॥ मधुवाता० भवन्तु नः मधुमधुमधु'॥ (उपवीती) श्राद्धरक्षकविष्णुपात्रं गायत्र्या प्रोक्ष्य 'सत्यं० परिषिञ्चामि' इति प्रदाक्षिणं परिषिच्य, 'पृथिवी ते पात्रं० विष्णवे स्वाहा नमः इदं वो अन्नं' इति देव-

पात्रवत् अङ्गुष्ठेनाऽनखेनाऽनुदिशति । ततः सालिग्रामविष्णवे परिविष्टं हविर्निवेद्य 'अमृतोपस्तरणमसि' इत्यपो दत्वा, 'प्राणाय स्वाहा, अपानाय०, व्यानाय०, उदानाय०, समानाय०, दत्तं दास्यमानञ्च' इति पठित्वा ब्राह्मणेभ्यो विश्वेदेवपूर्वं "श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । श्रद्धायामपाने निविष्टो०मि । श्रद्धायां व्याने० । श्रद्धायामुदाने० । श्रद्धायां समाने नि० । ब्रह्मणि म आत्माऽमृतत्वाय । अमृतोपस्तरणमसि" इत्यापोशनं दत्वा 'विश्वेषां देवानामक्षय्यमस्तु' इति विश्वेदेवसमीपे दर्भेषु पूर्ववद्यवोदकं दत्वा ( प्राचीनावीती ) 'पितृपिता० नामक्षय्यमस्तु' इति पितृसमीपे तिलोदकं दद्यात् । ( अस्तु अक्षय्यम् इति प्र० )। उपवीती— "एको विष्णुर्महद्भूतं पृथक्भूतान्यनेकशः । त्रीन्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥ अनेन ब्राह्मणभोजनेन पितृरूपी जनार्दनमहाविष्णुः प्रीयताम्, विश्वेदेवा अमृतमस्तु, विष्णो अमृतमस्तु ( प्राचीनावीती ) पितरः अमृतमस्तु ( उपवीती ) सर्वत्राऽमृतमस्तु" इत्युक्त्वा, विप्रा आपोशनपूर्वकं ( बलिदानवर्जं ) भुञ्जीरन् । भुञ्जानान्ब्राह्मणान्समीक्षते— 'श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । शिवो मा विशाऽप्रदाहाय । प्राणाय स्वाहा ॥ श्रद्धायामपाने निविष्टो० अपानाय० ॥ श्रद्धायां व्याने निवि० व्यानाय० ॥ श्रद्धायामुदाने नि० उदानाय० ॥ श्रद्धायां समाने० समानाय०" इति पञ्चभिः । 'ब्रह्मणि म आत्माऽमृतत्वाय' इत्यात्मानम् ॥ "अपेक्षितं याचितव्यं त्याज्यं चैवाऽनपेक्षितम् । उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः" इति प्रार्थ्याऽत ऊर्ध्वं कर्ता भोजनोद्यतान्विप्रान्स समीक्षते ॥ एतत्काले स्वधायुक्तान् राक्षोघ्नान्नैर्ऋतान्पित्र्यान्वैष्णवानन्यांश्च पवित्रमन्त्रान् श्रावयेत् ॥

भुक्तवत्सु विप्रेषु कर्ता सोदपात्रस्तिष्ठन् 'विश्वेदेवाः मद्गृहे कृताऽन्नशाकादिषु यदपेक्षितं तद्याचनीयम्' । ( प्राचीना-

वीती ) 'पितृपितामह० रूपा मद्गृहे कृत० नीयम्'। ( उपवीती ) 'श्राद्धसंरक्षकश्रीमहाविष्णो, मद्गृहे कृत० नीयं' ( निरपेक्षः इति प्र० )। 'तृप्ताः स्थ, पितुः प्रतिसां० श्राद्धं संपन्नम्' (प्राचीनावीती) 'तृप्ताः स्थ, प्रतिसां०द्धं संपन्नम्' ( तृप्ता स्मः, सुसम्पन्नम् इति प्र० )। ( उपवीती ) 'मधुवाता० भवन्तु नः, मधुमधुमधु' इति मधुमतीः श्रावयित्वा "अक्षन्नमी मदन्त ह्यवप्रिया अधूषत। अस्तोषत स्वभानवो विप्रा न विष्ठयामती। योजान्विन्द्र ते हरी" इति पठित्वा, "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" सालिग्रामविष्णवे निवेदितं हविर्विसर्जयामि, इति हविर्विसृज्य विश्वेदेवपुरतो भूमौ यवोदकं दत्वा 'विकिरवल्यर्थे इमे दर्भाः' इति प्रागग्रान्दर्भानास्तीर्य तेषामुपरि यवोदकं दत्वाऽन्नशेषान्विकिरति— "असोमपाश्च ये देवा यज्ञभागविवर्जिताः। तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम्" इति। तस्योपरि यवोदकं दद्यात् ॥ ( प्राचीनावीती ) पितृपुरतो भूमौ तिलोदकं दत्वा द्विगुणदर्भान्दक्षिणाग्रानास्तीर्य तदुपरि तिलोदकं दत्वाऽन्नशेषान्विकिरति—'येऽग्निदग्धा जाता जीवा ये ये त्वदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः। दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम्" इति। तस्योपरि तिलोदकं दत्वा, सङ्क्षाळनजलं निनयति— 'ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन्तृप्यत तृप्यत तृप्यत' इति ॥ ( उपवीती ) पवित्रं विसृज्य हस्तपादान्प्रक्षाळ्याचम्यान्यपवित्रं धृत्वा श्राद्धसंरक्षकविष्णोः पुरस्ताद्यवोदकं निनीय विश्वेदेववद्दर्भास्तरणादि कृत्वा— 'असंशयो भवेद्विष्णुर्मोक्षसाधनमव्ययम्। पितॄणाञ्च वरं श्रेष्ठं विकिरान्नञ्च वैष्णवम्' इत्यन्नशेषं विकीर्य यवोदकं दद्यात् ॥ 'उच्छिष्टभाग्भ्योऽन्नं दीयताम्' इति वदेत् ॥ "यजमानकुले जाता दासा दास्योऽन्नकाङ्क्षिणः। ते सर्वे तृप्तिमायान्तु भुक्तशेषेण भूतले" इति भोक्तारो भुक्तशेषं वामभागे भूमौ त्यजेयुः ॥ 'अमृताऽपिधानमसि' इति पितृपूर्वकमुत्तरापोशनं दद्यात्। 'रौरवे

पूयनिलये पद्मांबुदनिवासिनाम् । अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ' इति विप्रा आपोशनजलशेषं भूमौ निनयेयुः ॥ ॥ विप्राणां हस्तादिप्रक्षाळनान्ते तानाचमय्य ' पुरूरवार्द्रवसंज्ञका विश्वेदेवाः स्वदितम् ' इत्युक्त्वा (प्राचीनावीती) ' पितृपिता० रूपाः स्वदितम् ' इति वदेत् ( सुस्वादितं इति प्र० ) । ( उपवीती ) पुरूरवा० देवेभ्यः विष्णवे० । ( प्राचीनावीती ) पितृपिता०भ्यश्च 'या दिव्या आपः०' इति पूर्ववदर्घ्यं दद्यात् (अस्तु अर्घ्यं इति प्र०)। उपवीती– पुरू० देवाः, स्वस्तीति ब्रूत, दीर्घमायुरस्तु, इत्युक्त्वा शिवा आपः सन्तु, इत्यपो दद्यात् । ( ॐ स्वस्ति, अस्तु दीर्घमायुः, सन्तु शिवा आपः, इति क्रमेण प्र० ) । सुमनसः, इति पुष्पाणि ( अस्तु सौमनस्यं इति प्र० । ) इमे वो यवाः, इति यवान् । ताम्बूलानि पान्तु, इति ताम्बूलम् । दक्षिणाः पान्तु, इति सुवर्णञ्च दद्यात् ॥ प्राचीनावीती–पितुः प्रतिसां० रूपाः, स्वस्तीति ब्रूत, दीर्घमायुरस्तु, इत्युक्त्वा शिवा आपः सन्तु इत्यपो दद्यात् ( ॐ स्वस्ति, अस्तु दीर्घमायुः, सन्तु शिवा आपः इति प्र० ) । इमे वस्तिलाक्षताः इति तिलान् । ताम्बूलानि पान्तु इति ताम्बूलं, दक्षिणाः पान्तु, इति रजतञ्च दद्यात् ॥ उपवीती–श्राद्धरक्षकश्रीमहाविष्णो स्वस्तीति ब्रूत इत्यादि विश्वेदेववदुपचारान्कुर्यात् ॥ (अस्त्वक्षतमरिष्टं च, ऐश्वर्यमस्तु, स्वस्ति दक्षिणाः पान्तु, बहुदेयश्चास्तु इति क्रमेण प्र० ) विभवे सति–फलभूमिभाण्डदण्डोपानच्छत्रकमण्डल्वादि दद्यात् ॥ पुरू० देवाः दत्तं श्राद्धमक्षय्यमस्त्विति भवन्तो ब्रुवन्तु, ( प्राचीनावीती ) पितृपिता० रूपाः दत्तं श्राद्ध० ब्रुवन्तु ।(उपवीती) श्राद्धरक्षक० दत्तं श्राद्ध० ब्रुवन्तु ( अस्तु अक्षय्यम् इति प्र० ) विप्रानभिवाद्य ' अस्मद्गोत्रं वर्धताम् ' इति प्रार्थ्य ' स्वस्ति वर्धतां ते गोत्रम् ' इति प्र० ॥ भोजनपात्राण्युद्धृत्याऽप उपस्पृश्य, पुरू० देवाः स्वधोच्यताम् । (प्राचीनावीती) पितुः प्रतिसां० रूपाः स्वधोच्यताम् । ( उपवीती ) श्राद्धर०विष्णो स्वधोच्यताम्, इति वदेत् । ॐ स्वधा इति प्र० । ततो विप्रैः ' शोभनꣳ हविः ' इत्युक्ते—"दातारो नोऽभि वर्धन्तां वेदाः सन्ततिरेव नः । श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्तु ॥ अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा

च याचिष्म कञ्च न " इत्याशिषः प्रार्थयेत् ॥ ततो विप्राः—" दातारो वोऽभिवर्धन्तां वेदाः सन्ततिरेव वः । श्रद्धा च वो मा व्यगमद्बहुदेयञ्च वोऽस्तु ॥ अन्नञ्च वो बहु भवेदतिथींश्च लभध्वम् । याचितारश्च वः सन्तु मा च याचिढ्वं कञ्च न ॥ आमा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्व शंम्भू । आ मागन्तां पितरा मातरा चा मा सोमो अमृतत्वाय गम्यात् ॥ स्वादुष॑ꣳ सदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः । चित्रसेना इषुबला अमृध्राः सतो वीरा उरवो व्रातसाहाः ॥ ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा मा किर्नो अघश॑ꣳस ईशत ॥ वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्वादित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु । येन देवा ज्योतिषोर्ध्वा उदायन्येनाऽऽदित्या वसवो येन रुद्राः । येनाऽङ्गिरसो महिमानमानशुस्तेनैतु यजमानः स्वस्ति ॥ यो वै तां ब्राह्मणो वेद । अमृतेनाऽऽवृतां पुरीम् । तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां दंदुः ॥ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं पितायुष्मत्पितामहाः ॥ सत्या एता आशिषः सन्तु । श्राद्धं गयाश्राद्धसदृशमस्तु । आ चन्द्रार्कवंशाभिवृद्धिरस्तु । पितृप्रसादाद्धनकनसमृद्धिरस्तु" इत्याशिषो दद्युः ॥ प्राचीनावीती 'उत्तिष्ठत पितरः प्रेत शूराय यमस्य पन्थामनुयाता पुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान्देवतासु ' पितृपिता० रूपानुद्वासयामि, इति दर्भहस्तः पित्रादीनुद्वास्य, 'यन्तु पितरो यथालोकं मनसा जवेन । परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः ॥ अथा पितृन्सुविदत्रा॑ꣳ अपीत यमेन ये संधमादं मदन्ति' इति प्रसाद्य " मनोऽन्वाहुवामहे नाराश॑ꣳसेन स्तोमेन पितृणाञ्च मन्मभिः । आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्चसूर्यं दृशे । पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं

व्रातꣳ सचेमहि " इति मन आहूय, ( उपवीती ) " वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्यमध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः" विश्वान्देवान् ( विष्णुना सह ) उद्वासयामि, इति विश्वान्देवान्विष्णुश्चोद्वासयेत् ॥ ( 'अस्तु उद्वासय ' इति प्र० )। उद्वासनान्ते विप्राः— " वामदेवाय नमो ज्येष्ठाय० मनोन्मनाय नमः " इति पठेयुः। ब्राह्मणान्प्रदक्षिणीकृत्य 'श्राद्धशेषं किं क्रियताम् ' इति पृष्ट्वा ( इष्टैः सह भुज्यताम्, इति प्र० ) नमस्कृत्य प्रार्थयेत्— 'देवताभ्यः० नमो नमः ॥ अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात्। अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥ पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ॥ तत्क्लेशजातं चित्ते तु विस्मृत्य क्षन्तुमर्हथ ॥ वसिष्ठसदृशा विप्रा सूर्यपर्वसमातिथिः। गयाश्राद्धसमं चाऽस्तु भवतां कृपया मम ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः। श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम ॥ जपच्छिद्रं तपच्छिद्रं यच्छिद्रं श्राद्धकर्मणि। सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः ॥ ( श्राद्धं सम्पूर्णतां यातु, सर्वमाच्छिद्रमस्तु इति प्र० ) ॥ ॥ यज्ञोपवीती 'पश्चाद्धोमं करिष्ये ' इति सङ्कल्प्य " यन्मे माता०, यन्मे पितामही०, यन्मे प्रपितामही० इत्यन्नशेषेण तिस्र आहुतीर्जुहोति ॥

उपवीती-पितुः प्रति० श्राद्धे पितॄणामक्षय्यतृप्त्यर्थं पिण्डप्रदानं करिष्ये, इति सङ्कल्प्य 'ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् । क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादान्नमामि सततं पितृमुक्तिहेतून् ' ॥ इति पठित्वा ( प्राचीनावीती ) दक्षिणेनाग्निं दक्षिणामुखः पिण्डनिर्वापणस्थानमुद्धृत्यावोक्ष्य पूर्वसादितान्सकृदाच्छिन्नान्दर्भान्दक्षिणाग्रानास्तीर्य तेषामुपरि ' मार्जयन्तां पितरः, मार्जयन्तां पितामहाः, मार्जयन्तां प्रपितामहाः ' इति दक्षिणापवर्गं प्रत्येकं तिलोदकं दत्वा उपस्तीर्णाऽभिघारितान्त्रीन् पिण्डान्तथैव ( दक्षिणापवर्गं ) दद्यात्—' एतत्ते तत अमुकशर्मन्नमुकगोत्र वसुरूप ये च त्वामनु पितृभ्यः० रूपेभ्यः स्वधा नमः, एतत्ते पितामह अमुकशर्मन्नमुकगोत्र रुद्ररूप ये च त्वामनु पितामहेभ्यः० रूपेभ्यः स्वधा नमः, एतत्ते प्रपितामह अमुक-

शर्मन्नमुकगोत्र आदित्यरूप ये च त्वामनु प्रपितामहेभ्यः० रूपेभ्यः स्वधा नमः' इति ॥ अपि वा 'एतत्ते ततामुकशर्मन्नमुकगोत्र वसुरूप ये ते मातामहा ये त आचार्या ये ते गुरवो ये ते सखायो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेषां च पत्न्यस्तेभ्यस्ताभ्यश्च स्वधा नमः, एतत्ते पितामह अमुकशर्मन्नमुकगोत्र रुद्ररूप ये ते मातामहा० तेभ्यस्ताभ्यश्च स्वधा नमः' एतत्ते प्रपितामह अमुकशर्मन्न-मुकगोत्राऽऽदित्यरूप ये ते मातामहा० स्वधा नमः' इति त्रीन्पिण्डान्दद्यात् ॥ ॥ चतुर्विंशतिपिण्डदानपक्षे—"पितृभ्यः स्वधा नमः, पितामहेभ्यः स्वधा नमः, प्रपितामहेभ्यः०, मातृभ्यः०, पितामहीभ्यः०, प्रपितामहीभ्यः०, मातामहेभ्यः०, मातुःपितामहेभ्यः०, मातुः-प्रपितामहेभ्यः०, मातामहीभ्यः०, मातुःपितामहीभ्यः०, मातुःप्रपितामहीभ्यः०, आचार्येभ्यः०, आचार्यपत्नीभ्यः०, गुरुभ्यः०, गुरुपत्नीभ्यः०, सखिभ्यः०, सखिपत्नीभ्यः०, ज्ञातिभ्यः०, ज्ञातिपत्नीभ्यः०, अमात्येभ्यः०, अमात्यपत्नीभ्यः०, सर्वेभ्यः०, सर्वाभ्यः०" इति ॥ उत्तरतो लेपं निमार्ष्टि—"ये नः पतिता गर्भा असृग्भाज उपासते । तेभ्यः स्वजाः स्वधा नमस्तृप्णुवन्तु मदन्तु च । य आमा ये पक्वा ये च दुष्टाः पतन्ति नः । तेभ्यः स्वजाः० मदन्तु च ॥ ये कुमारा याः स्त्रियो ये विज्ञाताः पतन्ति नः । तेभ्यः स्वजाः० मदन्तु च" इति ॥ 'अत्र पितरो यथाभागं मन्दध्वम्' इत्युक्त्वाऽप्रदक्षिणमुदङ्पर्यावृत्योष्मणो व्यावृत उपास्ते । व्यावृत्त ऊष्मण्यभिपर्यावृत्य चरुशेषं किञ्चिदुद्धृत्याऽवजिघ्रति —ये समानाः समनसः पितरो यमराज्ये ॥ तेषां लोकः स्वधा नमः । यज्ञो देवेषु कल्पताम् ॥ ये संजाताः समनसः । जीवा जीवेषु मामकाः । तेषाꣳ श्रीर्मयि कल्पताम् । अस्मिन्लोके शतꣳ समाः" इति द्वाभ्याम् ॥ तथैव तिलोदकेन मार्जयति —"मार्जयन्तां पितरः" इत्यादित्रिभिः । (कशिपूपबर्हणे दत्वा) 'आञ्जतां पितरः, आञ्जतां पितामहाः, आञ्जतां प्रपितामहाः' इत्यञ्जनम्, 'अभ्यञ्जतां पितरः, अभ्यञ्जतां पितामहाः, अभ्यञ्जतां प्रपितामहाः' इत्यभ्यञ्जनम्, 'एतानि वः पितरो वासाꣳसि' इति वस्त्राणि च दद्यात् । उत्तर आयुषि लोम च्छित्वा पिण्डेषु दद्यात् । उपवीती—'कुलाभिवृद्ध्यर्थं पिण्ड-

पूजां करिष्ये ' इति सङ्कल्प्य गन्धादिभिरभ्यर्च्य, अपूपादिकं ताम्बूलञ्च निवेद्य षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते— ( प्राचीनावीती ) " नमो वः पितरो रसाय पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳ स्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम् ॥ नमो वः पितरः शुष्माय पितरो० भूयासम् ॥ नमो वः पितरो जीवाय पितरो० भूयासम् ॥ नमो वः पितरः स्वधायै पितरो० भूयासम् ॥ नमो वः पितरो मन्यवे पितरो० भूयासम् ॥ नमो वः पितरो घोराय पितरो० भूयासम् " इति षड्भिः ॥ अथ वीरं याचते-- " वीरं मे पितरो दत्त पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्त, वीरं मे पितामहा दत्त० भूयास्त, वीरं मे प्रपितामहा दत्त० भूयास्त " इति ॥ ( प्राचीनावीती— ' बलिस्थापनार्थे इमे दर्भाः ' इति पिण्डपूर्वभागे दक्षिणाग्रान् दर्भानास्तीर्य तेषामुपरि तिलोदकं दत्वा पितृपिता० रूपेभ्यः स्वधा नमः इति श्राद्धशेषेण बलिं दत्वा, उपवीती — गायत्र्या प्रोक्ष्य, प्राचीनावीती—'पितृभ्यः० रूपेभ्यः तिलोदकेन तृप्तिरस्तु, पितामहेभ्यः ० तृप्तिरस्तु, प्रपितामहेभ्यः० तृप्तिरस्तु ' इति त्रिस्त्रिस्तिलोदकं पिण्डबल्योरुपरि दद्यात् ) उपवीती– पुरुषसूक्तं पठित्वा, प्राचीनावीती— स्वधापात्रोदकं ' पितृभ्यः स्वधा, पितामहेभ्यः स्वधा, प्रपितामहेभ्यः स्वधा ' इति पिण्डानामुपरि त्रिस्त्रिर्दत्वा शेषं चरुस्थाल्यां निनीय स्थालीसङ्क्षाळनेन त्रिरपसलैः परिषिञ्चति—' ऊर्जं वहन्ती० तृप्यत ' इति। दक्षिणतः स्थालीं न्युब्ज्योत्तानीकृत्य प्रोक्ष्य, उपवीती– देवार्ध्यशेषेण—' शान्तिरस्तु, पुष्टि०, तुष्टि०, वृद्धि०, अविघ्न०, आयुष्य०, आरोग्यमस्तु, शिवं कर्माऽस्तु, शान्तिः पुष्टिस्तुष्टिश्चास्तु ' इत्यात्मानं प्रोक्षेत् ॥ पिण्डेषु समर्पितं नैवेद्यं विसृज्य नमस्कृत्य प्रसादं गृहीत्वा—' अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका। पुरी द्वारावती चैव पितृमोक्षप्रदायकाः ॥ अनादिनिधनो देव शङ्खचक्र गदाधर। अक्षय्यपुण्डरीकाक्ष पितृमोक्षप्रदो भव ' इति प्रार्थ्य पिण्डानुद्वास्य, ' तद्विष्णोः०, तद्विप्रासो०' इति विष्णुं स्मृत्वा

(बलिं काकेभ्यो दत्वा) पिण्डानप्सु प्रवाहयेत् ॥ ततः 'प्रजापते न त्व० रयीणाम्' इत्यग्निमभिप्रपद्य 'यदन्तरिक्षं पृथिवी० नेनसम्' इत्युपस्थाय, अत्रोपस्थाने गार्हपत्यशब्दवर्जं मन्त्रपाठः ॥ प्रायश्चित्तादि होमशेषं समाप्य सालिग्रामविष्णवे ताम्बूल-नीराजनाद्युपचारान्कृत्वा 'यस्य स्मृत्ये' त्युक्त्वा 'अनेन प्रतिसांवत्सरिकश्राद्धयज्ञेन श्रीमहाविष्णुः प्रीयताम्' इति समर्प्य वैश्वदेव-ब्रह्मयज्ञदेवर्षिपितृतर्पणानि कुर्यात् ॥

परेहनि—उदयात्पूर्वं स्नात्वाऽऽचम्य पवित्रपाणिः प्राणानायम्य देशकालौ सङ्कीर्त्य 'पूर्वेद्युः कृतपितुःप्रतिसांवत्सरिक-श्राद्धसम्पूर्णफलप्राप्त्यर्थं श्राद्धाङ्गतिलतर्पणं करिष्ये' इति सङ्कल्प्य जलशुद्धिं कृत्वा प्राचीनावीती सव्यं जानु निपात्य दक्षिण-मुद्धृत्य दक्षिणामुखः पितृतीर्थेन त्रिस्त्रिस्तिलोदकं दद्यात्— 'पितॄन्० रूपान्स्वधा नमस्तर्पयामि० तर्पयामि० तर्पयामि' एवमेव 'पितामहान्०तर्पयामि, प्रपितामहान्० स्वधा नमस्तर्पयामि' ॥ ततः "येषां न माता न पिता न बन्धुर्नान्यगोत्रिणः । ते सर्वे तृप्तिमा-यान्तु मयोत्सृष्टैः कुशोदकैः" इति कूर्चोदकं विसृज्य, अनेन पितृतर्पणकर्मणा श्रीमहाविष्णुः प्रीयताम् इति समर्पयेत् । पवित्रं विसृज्याचम्य सन्ध्योपासनादि नित्यकर्म कुर्यात् ॥ केचन इदं परेहनि क्रियमाणतर्पणमपकृष्य श्राद्धदिन एव कुर्वन्ति ॥

## ॥ श्राद्धे सम्भाव्यानि प्रायश्चित्तानि ॥

श्राद्धभोक्तॄणां परस्परस्पर्शे ॥ नारदीये—"श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् । तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् ॥ भुञ्जानेषु तु विप्रेषु मिथस्संस्पर्शनं भवेत् । स्मृत्वाऽब्लिङ्गमनुं जप्त्वा गायत्रीं मनसा शुचिः ॥ हेमाद्रौ स्मृतिसङ्ग्रहे— 'श्राद्धभुक्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् । गायत्र्याऽष्टशतं जप्त्वा जलेन प्रोक्षयेदुभौ ॥ तदन्नं भोजयेद्विप्रः श्राद्धशेषं समा-

चरेत् ॥ ॥ यज्ञोपवीतनाशे ॥ वृद्धमनुः — श्राद्धभोजनकाले तु विप्राणां कर्तुरेव वा । यज्ञोपवीतनाशश्चेद्गायत्र्याऽष्टशताहुतीः ॥ द्विजाङ्घ्रिक्षाळनादूर्ध्वं पितॄणामुद्वहादधः । उपवीतं यज्ञकर्तुच्छिद्यते यदि वाऽपरैः॥ राजाऽग्निचोरभीतिस्स्यात् त्रिमासाऽन्ते विनिश्चयः। द्विजाज्ञया बहिर्गत्वा धृत्वा चाऽन्योपवीतकम् ॥ अन्तः प्रविश्य तत्राऽग्नौ प्रायश्चित्ताऽऽहुतीर्हुनेत् । पञ्चप्राणादिभिर्मन्त्रैश्चत्वारिंशत्स-पञ्चकैः ॥ मिन्दात्रयञ्च हुत्वाऽथ श्राद्धशेषं समापयेत् । विप्रस्य श्राद्धभोक्तुश्चेदुपवीतश्च छिद्यते । न प्राश्नीयाद्द्विजः शेषमन्नं मद्य-समं स्थितम् । न श्राद्धशेषं कुर्वीत कृतं निष्फलमाप्नुयात् ॥ कर्तोपवासं कुर्वीत द्विजानाहूय पूर्ववत् । तद्दोषनाशनार्थाय दानं दत्वा द्विजाय च ॥ विप्रानुशासनाद्भक्त्या श्राद्धं कुर्यात् परेऽहनि ॥ पितृवाहनतः पश्चात्तत्पिण्डोद्वासनात्पुरा । यज्ञसूत्रं प्रनष्टश्चेत् तद्दिने चोपवासकम् ॥ पितुःश्राद्धञ्च सम्पूर्णं ततः कुर्यात्परेऽहनि इति ॥ ॥ उच्छिष्टस्पर्शे — उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टपात्रं विसृज्य च । सर्वान्नं पूर्ववद्दत्वा भोजयेन्तु द्विजोत्तमान् ॥ सङ्ग्रहे — "श्राद्धेषूच्छिष्टमृष्टे यदि पितृपदके देववर्गेऽपि विप्रौ त्यक्त्वा द्वौ पात्रमन्नं हुतवहवदने वेदमात्राऽशनञ्च । प्रायश्चित्तं प्रकुर्याद्गुरुबुधवचनाद्यैः पुरोवच्च कृत्वाऽश्नीयादन्यन्नवान्नं हुतघृतसहितं श्राद्धशेषञ्च कुर्यात् " इति ॥ ॥ अकृताऽग्नौकरणादौ — "प्रमादादकृतं चेत् स्यादग्नौकरणमेव च । अकृतं पिण्डदानञ्चेत् पुनः श्राद्धं समाचरेत् ॥ पितृपात्रं चलेत्स्थानात्पिता चेद्वमते यदि । स्पृशेत्पिण्डांश्च मार्जालः पिण्डो भिन्नः पुनर्यदि । अग्नौ कृतौ तु नाशोऽग्नेः श्राद्धमध्ये भवेद्यदि । उपोष्य तद्दिनं कर्ता पुनः श्राद्धं परेऽहनि " इति ॥ ॥ वमने कृते — " अकृते पिण्डदाने च पिता चेद्वमते यदि । कृत्वा पाकं पुनः कुर्याच्छ्राद्धं तत्र विधानतः ॥ मार्जारमूषकस्पर्शे पिण्डे भिन्ने पितुर्यदि । पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात् ॥ पितामहादिदेवानां ब्राह्मणो वमते यदि । सर्वमन्नं समादाय हुनेदग्नौ तु लौकिके ॥ प्रणवेनाऽहुतिं चादावन्ते स्याद्भूर्भुवस्सुवः। आहुतिं जुहुयात्त्रिंशन्मन्त्रैः प्राणादिपञ्चकैः ॥ द्वात्रिंशदाहुतीरेवं हुत्वा पिण्डान्प्रदापयेत् । मासिके च गयाश्राद्धे प्रत्यब्दे च महालये ॥

पिता चेद्वमनं कुर्यात्पुनः श्राद्धं समाचरेत् । सङ्क्रातिपक्षपातेषु युगमन्वष्टकासु च । पिता चेद्वमते दर्शे पुनः श्राद्धं न कारयेत "इति ॥ धर्मसिन्ध्वनुसारेण दैविकविप्रवमने होम एव न पुनः श्राद्धम् । पिण्डदानात्प्राक् विप्रवान्तौ तद्दिने उपोष्य परेद्युः पुनः श्राद्धं कुर्यात् ॥ पिण्डदानोत्तरं वान्तौ पूर्वोक्त होम एव । न पुनः करणम् ॥ ॥ हविर्भाण्डादिभेदेषु ॥ कात्यायनः—" हविर्भाण्डेऽतिविच्छिन्ने श्राद्धकर्तुर्मृतिर्भवेत् । कृणुष्वपाजेति मन्त्रेण समिदाज्यचरून्हुनेत् "॥ अत्र गोदानमप्याह माण्डव्यः—" हविर्भाण्डविनाशेऽपि श्राद्धे गोदानमाचरेत् । अन्यथा तस्य दोषस्य हानिर्नास्त्येव निश्चयः " इति ॥ ॥ पिण्डभेदने ॥ जातुकर्णिः–" पिण्डस्य भेदने जाते विष्णो-र्नुकमनुर्भवत् । प्रायश्चित्तविधानेऽस्मिन्नष्टोत्तरशताहुतीः " इति ॥ ॥ दीपनाशे—" यदि प्रदीपनाशस्स्याद्दैवे पित्र्ये च कर्मणि । तद्दशामनले क्षिप्त्वा उद्दीप्यस्वद्वयं हुनेत् ॥ उद्वयाद्यैस्त्रिभिर्मन्त्रैरुपतिष्ठेत भास्करम् । ( उद्वयन्तमसस्परि०, उदु त्यं०, चित्रम्० इति ) जप्त्वाऽभिन्नो घर्म इति मन्त्रतश्चाऽग्निना रयिम् ॥ पुनः प्रज्वाल्य दीपन्तु न्यसेत्पूर्वशरावके । विप्रान्सम्पूज्य तद्वाक्याच्छिष्टं कर्म समाचरेत् " इति ॥ ॥ विण्मूत्रोत्सर्जनं कुर्याच्छ्राद्धमध्ये यदि द्विजः । कर्ता वाऽप्यथवा भोक्ता तयोर्मृत्युं विनिर्दिशेत् ॥ विण्मूत्रकं विसृज्याऽथ स्नात्वाऽग्नौ होममाचरेत् । पवमानानुवाकस्य मन्त्रैरष्टौ घृताहुतीः ॥ तच्छ्राद्धे विहिते तस्मिन्नुपवासं चरेदथ । परेद्युः पूर्ववच्छ्राद्धं कुर्याद्विप्रानुशासनात् ॥ मानस्तोकेन मन्त्रेण परेद्युश्श्राद्धकर्मणि । शतमष्टोत्तरं हुत्वा गोदानन्तु समाचरेत् ॥ विण्मूत्रकर्तुर्विशेषविधिः ॥ वृद्धगार्ग्यः— " पुण्यक्षेत्रं समागत्य विण्मूत्रोत्सर्गकृन्नरः । हुनेत्तिलाऽयुतं सम्यङ्मृत्युर्येन प्रशाम्यति " माण्डव्यः– " अथवा त्रिंशत्साहस्रं गायत्रीजपतत्परः । मृत्युञ्जेष्यत्यसन्देहो विण्मूत्रोत्सर्गकृन्नरः " इति ॥ ॥ गुदस्रावे भारद्वाजः– " भुञ्जानेषु तु विप्रेषु प्रमादात्स्रवते गुदम् । पूर्वं कृत्वा तु शौचञ्च तत आपस्स्पृशेद्द्विजः ॥ ततः कृत्वोपवासञ्च पञ्चगव्येन शुध्यति ।

---

१. " उदीप्यस्व०, मा नो हि २ सीत्० " इति ॥

पादकृच्छ्रं ततः कृत्वा अन्यं विप्रं नियोजयेत्'' इति ॥ ॥ अधोवायुनिनदने ॥ पैठीनसः— ''मूर्धानमितिमन्त्रेण समिदाज्यचरून्हुनेत् । अष्टोत्तरशतं नूनमधोवायोर्निनादने '' ॥ वृद्धयाज्ञवल्क्यः—'' अधोवायुप्रशान्त्यर्थं शान्तिहोमं तदाऽऽचरेत् । गोदानं तत्र कर्तव्यं कर्तुर्मृत्युर्विनश्यति '' इति ॥ ॥ मार्जालाद्यन्तरागमने ॥ गौतमः— '' मध्यमेषु च देवानां देवानां कर्तृमध्यमे । पित्रादित्रयमध्ये तु मध्ये श्राद्धकृदन्तरे ॥ गच्छन्ति यदि मार्जारा मण्डूकाऽखुनरादयः । चतुष्पादजलव्यालवृश्चिकाऽऽरण्यपक्षिणः ॥ वत्सरार्धादधः कर्तुर्महारोगभयं भवेत् । ब्राह्मणाऽनुज्ञया चाऽग्नौ हुनेदाज्याहुतीः शतम् ॥ अष्टाक्षरेण मन्त्रेण गायत्र्याऽष्टशतं ततः । धेनुमेकां तिलान्वाऽपि कांस्यं वस्त्रमथाऽपि वा ॥ द्विजेभ्यो दक्षिणान्दद्यात्तद्दोषस्य प्रशान्तये । द्विजाऽनुशासनाच्छ्राद्धशेषं कुर्यादतन्द्रितः ''॥ शातातपः—'' मार्जारादिप्रवेशे तु समिदाज्यचरून्हुनेत् । शन्न इन्द्रेति मन्त्रेण कूष्माण्डं सतिलं दिशेत् '' इति ॥ ॥ मार्जालादिना श्राद्धाऽन्नादिभक्षणे ॥ वृद्धवसिष्ठः– '' श्राद्धपाकादिपिण्डांश्च प्राशयेद्यदि पक्षिणः । मार्जालवायसैर्वाऽपि भिद्यते भक्षितोऽपि वा ॥ तद्दोषशमनार्थाय प्रायश्चित्तं समाचरेत् । प्राजापत्यं चरित्वाऽथ गायत्र्याऽष्टोत्तरं शतम् ॥ विष्णोरष्टाक्षरीं तत्र घृतेन जुहुयात्ततः । पिण्डान्कृत्वा पूर्ववत्तान्निक्षिपेत्तत्कुशोपरि '' इति ॥ ॥ श्राद्धे भुञ्जाने मूर्च्छिते ॥ लौगाक्षिः— '' त्रियम्बकेन मन्त्रेण मूर्च्छिते सति होमयेत् । कर्तुर्मृत्युर्विनश्येत नाऽत्र कार्या विचारणा '' इति ॥ ॥ भुञ्जाने विप्रे मृते ॥ कात्यायनः— '' श्राद्धे भोजनकृद्विप्रः कयाऽपि विधया मृतः । श्राद्धं सर्वं विलुप्तं स्यात्परेऽह्नि श्राद्धमाचरेत्'' ॥ शाट्यायनिः–'' पञ्चगव्येन संशुद्धिः परेद्युः श्राद्धमाचरेत्'' इति ॥ ॥ आशौचादौ हेमाद्रिः — '' मासिके चाऽब्दिके त्वह्नि सम्प्राप्ते मृतसूतके । वदन्ति शुद्धौ तत्कार्यं दर्शे चाऽपि विपश्चिता'' इति ॥ ॥ श्राद्धे दुष्टे–'' द्रव्यपात्रादिदोषेण दुष्टं श्राद्धं यदा भवेत् । कर्ता तूपवसेत्तत्र कुर्याच्छ्राद्धं परेऽहनि ''॥ ॥ श्राद्धाऽतिक्रमणे– '' प्रतिसांवत्सरं श्राद्धं प्रमादादकृतं भवेत् । कर्ता चोपवसेत्तत्र श्वः कुर्यात्पैतृकं यथा '' इति ॥ ॥ मलकीटाद्युपहते — '' संस्पृष्टश्च

मलेनाऽन्नं कीटाद्युपहतं तथा । तद्देशमन्नमुत्सृज्य प्रोक्ष्य भस्माऽवकीर्य च ॥ पुनश्च प्रोक्षितं वाऽपि प्रशस्तं भोज्यमेव च " इति ॥ ॥ बालमार्जालादिना दूषिते — " बालैर्नकुलमार्जारैरन्नमुच्छिष्टं यदि । तिलदर्भोदकैः प्रोक्ष्य शुद्धं भवति तत्क्षणात् " इति ॥ ॥ श्राद्धं कर्तुं सर्वथाऽनुकूलाऽभावे — " श्राद्धेऽहनि च सम्प्राप्ते त्वभावे द्रव्यविप्रयोः । पिण्डमात्रं प्रदानं स्याद्भवेन्निरशनोऽपि वा ॥ आमं तदा तु कौन्तेय दद्यादामचतुर्गुणम् ॥ उद्धृत्य घृतपक्वन्तु तिलमिश्रं समाहितः ॥ पिण्डदानं प्रकुर्वीत आमश्राद्धे कृते यदि । एकस्मिन्ब्राह्मणे सर्वान्भोजयेच्छक्तितः पितॄन् ॥ विप्राऽभावे धनाऽभावे पिण्डनिर्वापणं भवेत् । अन्नाभावे द्विजाभावे यद्येको ब्राह्मणो भवेत् ॥ सर्वान्पितृगणान्सम्यक्सहैवोद्दिश्य भोजयेत् । अनेकमातरोऽप्येकं ब्राह्मणं भोजयेदिति ॥ तच्छ्राद्धममृतं भूत्वा मातॄणा-मुपतिष्ठते" इति ॥ ॥ हविषि केशोपहते ॥ गोभिलः—" भोजने केशमायाति गायत्रीं मनसा स्मरन् । क्षीरे वा गोघृते वाऽपि शोधयेत् कुशभस्मना " इति ॥ ॥ अग्निनाशे—अग्निनाशो यदा श्राद्धे ज्योतिर्यत्र विनश्यति । तद्दिने चोपवासं च पुनः श्राद्धं परेऽहनि ॥ पिण्डोपहतौ— मार्जारमूषकस्पर्शे पिण्डे च विदलीकृते । पुनः पिण्डः प्रदातव्यस्तेन पाकेन तत्क्षणात् ॥

## ॥ मासिश्राद्धविधिः ॥

( बो. गृ. सू. २. ११. ६८, ६९ ) मासिश्राद्धमपरपक्षस्यान्यतमेऽहनि क्रियेत ॥ एतावदेव नाना नात्राष्टकाहोमो भवति ॥ ( बो. गृ. सू. ३. १२. १ ) अष्टकानुकृतिर्मासिकम् । तत्पुरस्ताद्व्याख्यातम् ॥ ॥ मार्कण्डेयपुराणे — प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा । परार्थिनां तृतीया तु चतुर्थी शत्रुनाशिनी ॥ पञ्चम्यां श्रियमाप्नोति षष्ठ्यां पूज्यो भवेन्नरः । गणाधिपत्यं सप्तम्या-मष्टम्यामृद्धिमुत्तमाम् ॥ श्रियो नवम्यामाप्नोति दशम्यां पूर्णकामताम् । वेदांस्तथाऽऽप्नुयात्सर्वानेकादश्यां क्रियापरः ॥ द्वादश्यां

जयलाभञ्च प्राप्नोति पितृपूजकः। प्रजामिष्टां पशून्मेध्यान्स्वातन्त्र्यं बुद्धिमुत्तमाम्॥ दीर्घमायुस्तथैश्वर्यं कुर्वाणस्तु त्रयोदशीम्। अवाप्नोति न सन्देहः श्राद्धं श्राद्धपरो नरः॥ युवानः पितरो यस्य मृताः शस्त्रेण वा हताः। तेन कार्यं चतुर्दश्यान्तेषां सिद्धिमभीप्सता॥ श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषश्शुचिः। सर्वान्कामानवाप्नोति स्वर्गञ्चाऽनन्तमश्नुते॥ मासिश्राद्धस्याऽन्वारम्भो विवाहचतुर्थीहोमान्तेऽपरपक्षे शिष्टाचारात् बोधायनवचनाच्च॥ तदानीमनारम्भे उक्तकाले यदा कदा वाऽऽरभ्यमाणे तस्य नित्यत्वादुद्वाहप्रभृतिविच्छिन्नकालानुगुणं प्रायश्चित्तकृच्छ्रादीन्याचरित्वाऽऽरम्भः॥ विवाहानन्तरं प्रतिमासमपरपक्षे आत्मानुकूलानुसारेण यस्यां, कस्याञ्चित्तिथौ प्रारभ्य यावज्जीवं मासिश्राद्धं कुर्यात्। तस्य नित्यत्वात्। तस्य तिथिभेदेन फलभेदो मार्कण्डेयेनोक्तः॥

अथ प्रयोगः॥ कर्ता पूर्वेद्युः सायं होमान्ते (प्राचीनावीती) 'श्वः मासिश्राद्धं कर्ताऽस्मि' इति मनसा सङ्कल्प्य, 'श्वः मासिकश्राद्धं भविता तत्र भवद्भिः प्रसादः करणीयः' इति विश्वेदेवार्थं द्वौ विप्रौ पित्रर्थं त्रीन्विप्रांश्च निमन्त्र्याऽपरेद्युः प्रातर्नित्यकर्मनिर्वर्तनान्ते 'अद्य श्राद्धं भवति' इति पुनर्निमन्त्र्य श्राद्धकाले पुनः स्नात्वा। "मम समस्तपितॄणामक्षय्यतृप्त्यर्थं सदैवं साग्नौकरणं सपिण्डं मासिश्राद्धमन्नेन हविषा पार्वणविधानेनाऽहमद्य करिष्ये" इति सङ्कल्पः। अग्नौकरणे— विश्वेदेवहोमानन्तरं 'याः प्राचीः' इत्यादि पञ्च स्रुवाहुत्यन्ते 'सोमाय पितृमते शुष्मिणे जुहुमो हविः' इत्यादि त्रिभिर्मन्त्रैः पैतृकं चरुं हुत्वा, अपूपमष्टधा विभज्य त्रीण्यवदानानि तैरेव मन्त्रैर्हुनेत्॥ ततः 'पितृभ्यः स्वधा नमः' इत्यादि चतुर्विंशत्यन्नाहुतीर्हुत्वा स्विष्टकृद्धोमान्ते, भोजनपात्रकल्पनादि ब्राह्मणान्सम्भोज्य ताम्बूलदक्षिणादि दत्वा 'श्राद्धमक्षय्यमस्तु' इति वाचयित्वा शेषमनुज्ञाप्य पश्चाद्धोमान्ते "पितृभ्यः स्वधा नमः" इत्यादि चतुर्विंशति पिण्डान्दद्यात्॥ अनुक्तमन्यत्सर्वं सांवत्सरिकश्राद्धवत्॥

# पिण्डपितृयज्ञविधिः ॥

(बो. गृ. प. सू. १. १६. १२-१३) अथामावास्यायां प्रसिद्धः पिण्डपितृयज्ञः ॥ नात्र गार्हपत्यशब्दो विद्यते ॥ (बौधायनश्रौ० ३. १०-११; २०. २१; २४. ३२) पिण्डपितृयज्ञं करिष्यन्नुपकल्पयते[1] सकृदाच्छिन्नं बर्हिर्दर्भाꣳश्च परिस्तरणीयान् व्रीहीꣳश्च शूर्पं च प्रक्षालिते चोलूखलमुसले स्थालीꣳ सस्रुवाꣳ समेक्षणामेरकोपबर्हणे आञ्जनाभ्यञ्जने दशाꣳ स्फ्यमुदकुम्भं यज्ञायुधानीति । अथाऽन्वाहार्यपचनं परिस्तृणाति । तमुत्तरेणैकैकꣳ सꣳसादयति एरकोपबर्हणे आञ्जनाभ्यञ्जने दशाꣳ स्फ्यमुदकुम्भं यज्ञायुधानीति । अथ प्राचीनावीतं कृत्वा जघनेनाऽन्वाहार्यपचनमुपविश्य पवित्रवत्याꣳ स्थाल्यां व्रीहीन्निर्वपति-"पितृभ्यो वो जुष्टं निर्वपामि" इति वा तूष्णीं वा । [ पिण्डपितृयज्ञस्य करण इति ॥ सह स्माऽऽह बौधायन आदित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्याद् आ आहुतीनाꣳ होमात् । आहुतीर्होष्यन् यज्ञोपवीतं कुर्वीत । स यज्ञोपवीत्येव स्याद् आ सकृदाच्छिन्नस्य स्तरणात् । सकृदाच्छिन्नꣳ स्तरिष्यन् प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्याद् आ प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठेतेति । अत्रो ह स्माऽऽह शालीकिरादित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्याद् आ प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चोदङ्ङ्ग्यादिति ॥ ] उपर्यधाꣳ स्थालीं कृत्वैतस्मिन्नेव चर्मण्युलूखलमुसले निधायाऽवहन्ति सकृदेव दक्षिणामुखः । अथैनानविविच्य । अथैतस्यामेव स्थाल्यां तिरःपवित्रमप आनीयाऽधिश्रित्य तिरःपवित्रं तण्डुलानावपति । [ तूष्णीꣳ सकृदुत्पूय सकृत्प्रोक्ष्य सकृद्धाविष्कृद्रूपं कुर्यादिति बौधायनः ॥ सकृदेवैनान् सुफलीकृतान् कृत्वा

---

१. यजमानः

पवित्रवत्याꣳ स्थाल्यामोप्य स्थालीपाकꣳ श्रपयित्वाऽभिघार्योदञ्चमुद्वासयेदिति शालीकिः ॥ ] अथाऽऽज्यं निर्वपति । अथाऽऽज्यमधिश्रयति । उभयं पर्यग्निकृत्वा मेक्षणꣳ स्रुवं च संमार्ष्टि । अथैतं चरुꣳ श्रपयित्वाऽभिघार्योदञ्चमुद्वासयति । अथ यज्ञोपवीतं कृत्वाऽन्वाहार्यपचनमुपसमाधाय मेक्षणेनोपघातं तिस्र आहुतीर्जुहोति– " सोमाय पितृपीताय स्वधा नमः स्वाहा, यमायाऽङ्गिरस्वते पितृमते स्वधा नमः स्वाहा, अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा " इति दक्षिणार्धपूर्वार्धे । तूष्णीं मेक्षणमभ्याधाय । [ आहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ नाऽत्र मध्यमामाहुतिं जुहुयात् । मेक्षणमेव तृतीयꣳ स्यादिति शालीकिः ॥ ] प्राचीनावीतं कृत्वा, दक्षिणेनाऽन्वाहार्य पचनꣳ स्फ्येनोद्धत्याऽवोक्ष्य दक्षिणाग्रं बर्हिः स्तीर्त्वा । [ सकृदाच्छिन्नस्य स्तरण इति ॥ उपनिष्क्रम्याऽन्यागाराद्दक्षिणे पूर्वेऽवान्तरदेशे सकृदाच्छिन्नꣳ स्तृणीयाद्दक्षिणतश्चोल्मुकमुपनिदध्यादिति बौधायनः ॥ अन्तरेवैतां दिशामिति शालीकिर्न चाऽत्रोल्मुकमुपनिदध्यादिति ॥ ] अद्भिर्मार्जयति–– " मार्जयन्तां पितरः, मार्जयन्तां पितामहाः, मार्जयन्तां प्रपितामहाः " इति । अथ स्रुवेणोपस्तीर्णाभिघारिताꣳ स्त्रीन् पिण्डान् ददाति– " एतत्ते ताताऽसौ ये च त्वामनु, एतत्ते पितामहाऽसौ ये च त्वामनु, एतत्ते प्रपितामहाऽसौ ये च त्वामनु " इति । [ पिण्डानां दान इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माऽऽह बौधायनः परस्तादेवाऽमुतोऽर्वाचोऽपसलैः पिण्डान् दद्यादिति ॥ ] [ कथमु खलु जीवपितुः पिण्डदानं भवतीति । येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति । द्वाभ्यां जीवपिता ददाति । एकस्मै जीवपितामहो ददाति । न जीवन्तमतिदद्यादित्येके । पितृव्यस्य चेत्सगोत्रस्य दायमुपयच्छेत कथं तत्र पिण्डदानं भवतीति । यस्मिन् काले पित्रे पिण्डं ददाति तस्मिन् कालेऽस्य पिण्डं निपृणुयात् । अथ चेदसगोत्रस्य दायमुपयच्छेत कथं तत्र पिण्डदानं भवतीति । स्वेभ्यो दत्वा प्रतिवेशं बर्हिः स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्यात् । अपि वाऽगार एव स्थालीपाकꣳ श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्यात् । कथमु खलु पुत्रिका-

पुत्रस्य पिण्डदानं भवतीति । "एतत्तेऽमुष्यै तत मम पितामह ये च त्वामनु, एतत्तेऽमुष्यै पितामह मम प्रपितामह ये च त्वामनु, एतत्तेऽमुष्यै प्रपितामह मम प्रपितामह ये च त्वामनु" इति। प्रविदानकल्पेन वा दद्यात् – "स्वधा पितृभ्यः पृथिवीषद्भ्यः, स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः, स्वधा पितृभ्यो दिविषद्भ्यः" इति । पितुश्चेत्पितामहस्येति नामानि न जानीयात् कथं तत्र पिण्डदानं भवतीति । प्रविदानकल्पेन वा दद्यात् । अपि वा "एतत्ते तत ये च त्वामनु, एतत्ते पितामह ये च त्वामनु, एतत्ते प्रपितामह ये च त्वामनु" इति ] "अत्र पितरो यथाभागं मन्दध्वम्" इत्युक्त्वा उदङ् पर्यावृत्य आ ऊष्मणो व्यावृत उपास्ते । "व्यावृत्त ऊष्मा" इति प्राहुः । अथाऽभिपर्यावृत्यैतं चरुमवजिघ्रति–"ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ ये सजाताः समनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः" इति । अथ तथैवाऽद्भिर्मार्जयति —"मार्जयन्तां पितरः, मार्जयन्तां पितामहाः, मार्जयन्तां प्रपितामहाः" इति। अथाऽऽञ्जनं ददाति–"आञ्जतां पितरः, आञ्जतां पितामहाः, आञ्जतां प्रपितामहाः" इति। अथाऽभ्यञ्जनं ददाति- "अभ्यञ्जतां पितरः, अभ्यञ्जतां पितामहाः, अभ्यञ्जतां प्रपितामहाः" इति। अथ वासांसि ददाति- "एतानि वः पितरो वासांसि, एतानि वः पितामहा वासांसि, एतानि वः प्रपितामहा वासांसि" इति। 'उत्तर आयुषि लोम छिन्दीत' इति ब्राह्मणम्। [ उत्तर आयुषि लोम छिन्दीतेति। कस्मिन्नु खल्वेतत्काले छेत्तव्यं भवतीति । ऊर्ध्वं षट्षष्टिभ्यश्च वर्षेभ्योऽष्टाभ्यश्च मासेभ्य इत्येतस्मिन्नेवैतत् काले छेत्तव्यं भवतीति । ] अथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते– "नमो वः पितरो रसाय, नमो वः पितरः शुष्माय, नमो वः पितरो जीवाय, नमो वः पितरः स्वधायै, नमो वः पितरो मन्यवे, नमो वः पितरो घोराय, पितरो नमो वो य एतस्मिन् लोके स्थ युष्मांस्तेऽनु येऽस्मिन् लोके मां तेऽनु य एतस्मिन् लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिन्

लोकेऽहं तेषां वसिष्ठो भूयासम् " इति । अथ वीरं याचते–" वीरं मे पितरो दत्त, वीरं मे पितामहा दत्त, वीरं मे प्रपितामहा दत्त, पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्त " इति । अथैनानुत्थापयति– " उत्तिष्ठत पितरः प्रेत शूरा यमस्य पन्थामनुयाता पुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु " इति । अथैनान् सꣳ साधयति– " यन्तु पितरो यथा लोकं मनसा जवेन, परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथा पितॄन्त्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्ति " इति । अथ तिसृभिर्मन आह्वयते–" मनो न्वा हुवामहे, आ न एतु मनः पुनः, पुनर्नः पितरो मनः" इति । [ आञ्जनाभ्यञ्जने मनसो निह्नव इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ ] अत्रैतान् पिण्डान् सह बर्हिषाऽग्नावनुप्रहरति । [ पिण्डानामनुप्रहरण इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माऽऽह बौधायनोऽत्रैवैते पिण्डाः परिशयीरन् । उच्छिष्टा ह्येते भवन्ति पितृभिर्भक्षंकृता इति ॥ ] अथैतेषाꣳ शस्त्राणां द्वे द्वे उदाहरन्ति ॥ अथ यज्ञोपवीतं कृत्वा प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठते– " प्रजापते न त्वदेतान्यन्यः " इति । अत्रैतां द्वितीयां जपति — " यदन्तरिक्षं पृथिवीमुतद्यां " इति । [ अतिशिष्टस्य प्राशन इति ॥ स्वयं यजमानः प्राश्नीयादिति बौधायनः ॥ पुत्राय वाऽन्तेवासिने वा दद्यादिति शालीकिः ॥ पत्नीं प्राशयेत् । प्रजाऽस्यैषा भवतीत्यौपमन्यवः ॥ अङ्गुल्या यावन्मात्रमवघ्रायाऽथेतरदग्नावनु प्रहरेदित्यौपमन्यवीपुत्रः ॥ भस्मोत्कर उद्वास्य संप्रच्छादयेदित्याग्नीगाविः ॥ अपोऽभ्यवहरेदिति मौद्गल्यः ॥ ] [ कथमु खल्वनाहिताग्नेः पिण्डपितृयज्ञो भवतीति । अनिरुप्तꣳ स्थालीपाकꣳ श्रपयित्वाऽग्निमुपसमाधाय संपरिस्तीर्याऽऽहुतीर्हुत्वा दक्षिणेनाऽग्निं दक्षिणाग्रं बर्हिः स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्यात् । अपि वाऽगार एव स्थालीपाकꣳ श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्यात् । यज्ञोपवीत्येव प्राजापत्ययर्चैतमग्निमुपतिष्ठेतेति । ] संतिष्ठते पिण्डपितृयज्ञः ॥ ॥ पिण्डपितृयज्ञप्रायश्चित्तम् ॥ ( बौ. श्रौ. २९·१२ ) पितृयज्ञलोपे सप्तहोतारमिति जुहुयात् ॥

९२

अथ प्रयोग :॥ कर्ता अमावास्यायामपराह्ण आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं पिण्डपितृयज्ञं करिष्ये, इति संकल्प्य। गृह्याग्निमुपसमाधाय, परिसमूह्य, पर्युक्ष्य, परिस्तीर्य, पात्रासादनकाले–उत्तरेणाग्निं— आज्यस्थालीं स्रुवं प्रोक्षणीं चरुस्थालीं मेक्षणमिध्माबर्हिः सकृदाच्छिन्नं बर्हिश्चासाद्य, एरकोपबर्हणे आञ्जनाभ्यञ्जने दशां स्फ्यमुदकुंभं चाऽऽसादयति । प्रोक्षणीः संस्कृत्य, पात्राणि प्रोक्ष्य, चरुस्थाल्यां तिरःपवित्रमप आनीय, अधिश्रित्य तिरःपवित्रं तण्डुलानावपति। (प्राचीनावीती) पवित्रवत्यां स्थाल्यां "देवस्य त्वा० पितृभ्यो जुष्टं निर्वपामि" इति सकृत्तण्डुलान् निर्वपति। "देवस्य त्वा० पितृभ्यो वो जुष्टं प्रोक्षामि" इति सकृत्प्रोक्ष्य, चरुस्थाल्यां तिरःपवित्रमप आनीय, अधिश्रित्य, तिरःपवित्रं तण्डुलानावपति। अथाज्यं निरुप्य, अधिश्रित्य, उभयं पर्यग्निकृत्वा, स्रुवं मेक्षणं च संमृज्य, चरुं श्रपयित्वाऽभिघार्य उदंचमुद्वास्य, दक्षिणतो बर्हिष्यासाद्य, प्रतिष्ठितमभिघारयति। यज्ञोपवीती, जुषस्व न इत्याद्यग्निं परिषिच्य, अलंकृत्य, व्याहृतीर्हुत्वा मेक्षणेनोपघातं अन्नस्य तिस्र आहुतीर्जुहोति—"सोमाय पितृपीताय स्वधा नमः स्वाहा" सोमाय पितृपीतायेदं०। "यमायाऽङ्गिरस्वते पितृमते स्वधा नमः स्वाहा।" यमायाऽङ्गिरस्वते पितृमत इदं०। दक्षिणार्धपूर्वार्धे "अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा" अग्नये कव्यवाहनाय स्विष्टकृत इदं०। तूष्णीं मेक्षणमग्नौ प्रहृत्य, व्याहृतीर्हुत्वा, प्राचीनावीती दक्षिणेनाग्निं स्फ्येनोद्धृत्याऽवोक्ष्य दक्षिणाग्रं सकृदाच्छिन्नं[1] बर्हिः स्तीर्त्वा, अद्भिर्मार्जयति —"मार्जयन्तां पितरः, मार्जयन्तां पितामहाः, मार्जयन्तां प्रपितामहाः" इति । होमावशिष्टचरुणा त्रीन् पिण्डान् कृत्वा, स्रुवेणोपस्तीर्याऽभिघार्य, सव्यं जान्वाच्य

१. सकृत्प्रयत्नेन मूलैः सह आच्छिन्नं बर्हिः।

सकृदाच्छिन्ने बर्हिषि ददाति–" एतत्ते तत अमुकशर्मन्० गोत्र वसुरूप ये च त्वामनु " इति पित्रे प्रथमम् । " एतत्ते पितामह अमुकशर्मन्० गोत्र रुद्ररूप ये च त्वामनु " इति पितामहाय द्वितीयम् । " एतत्ते प्रपितामह अमुकशर्मन्० गोत्र आदित्यरूप ये च त्वामनु " इति प्रपितामहाय तृतीयम् । " अत्र पितरो यथाभागं मन्दध्वं " इत्युक्त्वा उदङ् पर्यावृत्य ओष्मणो व्यावृत उपास्ते। व्यावृत्त उष्माणि अभिपर्यावृत्य, " ये समानाः समनसः०, ये सजाताः समनसः० " इति द्वाभ्यां चरुशेषमवघ्रेण भक्षयेत्। " मार्जयन्तां पितरः, मार्जयन्तां पितामहाः, मार्जयन्तां प्रपितामहाः " इति पिण्डानामुपरि तथैवाद्भिर्मार्जयित्वा, " आञ्जतां पितरः, आञ्जतां पितामहाः, आञ्जतां प्रपितामहाः " इति कज्जलम् , " अभ्यञ्जतां पितरः, अभ्यञ्जतां पितामहाः, अभ्यञ्जतां प्रपितामहाः " इत्यभ्यञ्जनं च दत्वा, " एतानि वः पितरो वासाꣳसि, एतानि वः पितामहा वासाꣳसि, एतानि वः प्रपितामहा वासाꣳसि " इति वासाꣳसि च दद्यात्। षट्षष्टिवर्षेभ्यः अष्टाभ्यश्च मासेभ्य ऊर्ध्वं लोम च्छित्वा पिण्डेषु दद्यात् । ततः " नमो वः पितरो रसाय० " इत्यादि षड्भिर्नमस्कारैर्विपर्यासमुपस्थाय, " वीरं मे पितरो दत्त०" इति त्रिभिः वीरं याचित्वा, " उत्तिष्ठत पितरः० " इत्यथैनान् उत्थाप्य, " यन्तु पितरो० परेत पितरः" इति संसाध्य, " मनो न्वाहुवामहे०, आ न एतु मनः पुनः०, पुनर्नः पितरो मनः०" इति त्रिभिः मन आहूय पात्राणि द्वे द्वे उद्वास्य, यज्ञोपवीती– " प्रजापते न त्वत्०, यदन्तरिक्षं० तस्मादेनसः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेसम् " इति द्वाभ्यामाग्निमुपतिष्ठते ॥ उत्तरपरिषेकादि होमशेषं समाप्य, हविःशेषं यजमानः प्राश्नीयात्। अपि वा पुत्रायान्तेवासिने वा दद्यात् । अप्सु वा प्रक्षिपेत् । प्रजाकामः पत्नीं प्राशयेत् । पिण्डानप्सु प्रक्षिपेत् । यस्य स्मृत्येति कर्मसमर्पणं, अनाज्ञातादिमंत्रत्रयजपं, विष्णुस्मरणं च कुर्यात् ॥ ॥

## ॥ दर्शश्राद्धविधिः ॥

मत्स्यपुराणे— "पितृयज्ञन्तु निर्वर्त्य तर्पणाख्यन्तु योऽग्निमान्। पिण्डान्वा पूर्वकं कुर्याच्छ्राद्धमिन्दुक्षये सति" ॥ लौगाक्षिः— श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृको द्विजः। इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च ॥ स्मृत्यन्तरे– प्रमीतपितृकः कुर्याद्दर्शाब्दिकमहालयान्। जनन्यामपि जीवन्त्यामेष धर्मः सनातनः ॥ व्याघ्रः—न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः। इन्दुक्षये मासि मासि प्रायश्चितीयतो नरः ॥ स्मृत्यन्तरे– दर्शे तिलोदकं पूर्वं पश्चाद्दद्यान्महालये। प्रत्यब्दे तु कृते श्राद्धे परेऽहनि तिलोदकम् ॥ कात्यायनः—दर्शे स्नात्वा पितृभ्यस्तु दद्यात्कृष्णतिलोदकम्। अन्नं च विधिवद्दद्यात्सन्ततिस्तेन वर्धते ॥ दर्शश्राद्धन्तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम्। त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः ॥ हारीतः— अपराह्णः पितृणान्तु याऽपराह्णानु-यायिनी ॥ सा ग्राह्या पितृकृत्ये तु न पूर्वाह्णाऽनुयायिनी ॥ नारदः— अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत्। क्षये पूर्वा तु कर्तव्या वृद्धौ साम्ये तथोत्तरा ॥ पितामहः— अमाष्टकासु सङ्क्रांतौ पातादौ ग्रहणेषु च। स्नात्वा तिलोदकं दत्वा ततः श्राद्धं समाचरेत् ॥ आश्वलायनधर्मे— दर्शे पार्वणकृद्विप्रो विधिना कर्मवांस्तु यः। षड्भिः पिण्डैः पितॄनर्चेद्द्विषड्भिर्वा त्रिभिश्च वा ॥ स्मृत्यन्तरे— आब्दिकं प्रथमं कुर्यान्मासिकन्तु ततः परम्। दर्शश्राद्धं तृतीयं स्याच्चतुर्थश्च महालयः ॥ आमश्राद्धं गयाश्राद्धं श्राद्धश्चापरपक्षकम्। न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् इति ॥ व्यतीपातलक्षणं माधवीये— श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः। यद्यमा रविवारेण व्यतीपातस्स उच्यते इति ॥ नागदैवतं = आश्लेषानक्षत्रम्। मस्तकं = मृगशिरा। यद्यमावास्या श्रवणादीनामन्यतमेन नक्षत्रेण रविवारेण च युक्ता सः व्यतीपातः इत्यर्थः ॥

अथ प्रयोगः ॥ पूर्वेद्युः सायमौपासनान्ते "श्वो दर्शश्राद्धं कर्ताऽस्मि" इति मनसा सङ्कल्प्य । ततः पुरूरवार्द्रवसंज्ञकविश्वेदेवार्थं पितृपितामहप्रपितामहार्थं मातृपितामहीप्रपितामह्यर्थं मातामहमातुःपितामहमातुःप्रपितामहार्थं मातामहीमातुःपितामहीमातुःप्रपितामह्यर्थं श्राद्धसंरक्षकमहाविष्णवर्थञ्च ब्राह्मणनिमन्त्रणम् ॥ परेद्युः प्रातर्नित्यकर्म कृत्वा मध्याह्नसन्ध्यानन्तरं स्नानादिचतुष्टयं शारीरसूक्तपठनं जलशुद्धिं ब्रह्मदण्डञ्च कृत्वा श्राद्धाङ्गतिलतर्पणं कुर्यात् ॥ ततो द्विराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, "पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानां तृप्त्यर्थं (प्राचीनावीती) अस्मत्पितृपितामहप्रपितामहानां० गोत्राणां० रूपाणां, मातृपितामहीप्रपितामहीनां० दानां० गोत्राणां० रूपाणां, मातामहमातुःपितामहमातुःप्रपितामहानां० गोत्राणां० रूपाणां, मातामहीमातुःपितामहीमातुःप्रपितामहीनां० दानां० गोत्राणां० रूपाणां, अक्षय्यतृप्त्यर्थं, (उपवीती) श्राद्धसंरक्षकमहाविष्णुप्रीत्यर्थं सदैवं सपिण्डं (साग्नौकरणं) दर्शश्राद्धं पार्वणविधानेनान्नेन हविषाऽहमद्य करिष्ये" इति सङ्कल्प्य क्षणादि दिग्बन्धनान्तं कृत्वा स्थण्डिलोल्लेखनादि प्रतिष्ठिताभिघारणान्तेऽर्घ्यग्रहणे—विश्वेदेवानन्तरं पितृवर्गार्थं मातृवर्गार्थं मातामहवर्गार्थं मातामहीवर्गार्थञ्च पृथक्पृथक्पात्रेष्वर्घ्यं गृहीत्वा, श्राद्धसंरक्षकविष्णवर्चनान्तं कुर्यात् ॥ 'अग्नौ करिष्यामि' इत्यादि विश्वेदेवहोमानन्तरं (प्राचीनावीती) 'सोमाय पितृपीताय०' इत्याद्याज्यस्य तिस्र आहुतीर्हुत्वा तैरेव मन्त्रैरन्नाहुतीश्च जुहुयात् ॥ भोजनकल्पनादि ब्राह्मणभोजनान्ते विकिरं दत्वा, 'स्वधोच्यताम्' इत्यादि ताम्बूलदक्षिणाद्युपचारैरभ्यर्च्य 'श्राद्धमक्षय्यमस्तु' इति वाचयित्वोद्वास्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य पश्चाद्धोमान्ते द्वादशपितॄनुद्दिश्य पिण्डदानं कुर्यात्, इति विशेषः ॥ अन्यत्सर्वं सांवत्सरिकश्राद्धवत् ॥ श्राद्धशेषं समाप्य वैश्वदेवं हुत्वा ब्रह्मयज्ञं नित्यतर्पणञ्च कुर्यात् ॥ ॥

## ॥ महालयश्राद्धविधिः ॥

बृहस्पतिः– नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः। स महालयसंज्ञः स्याद्गजच्छायाह्वयस्तथा॥ शाट्यायनः — पुण्यः कन्यागतः सूर्यः पुण्यः पक्षश्च पञ्चमः। कन्यास्थाऽर्कान्वितः पक्षः सोऽत्यन्तं पुण्य उच्यते॥ कार्ष्णाजिनिः– कन्यागते सवितरि पितरो यान्ति वै सुतम्। तावत्तिष्ठन्ति कव्याशा यावद्वृश्चिकदर्शनम्॥ हेमाद्रिः– आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे। यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे॥ तस्य संवत्सरं यावत्सन्तृप्ताः पितरो ध्रुवम्॥ नागरखण्डे– आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे। मृतेऽहनि पितुर्यो वै श्राद्धं दास्यति मानवः॥ तस्य संवत्सरं यावत्सन्तृप्ताः पितरो ध्रुवम्। या तिथिर्यस्य मासस्य मृताऽहे तु प्रवर्तते। सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः॥ तिथिच्छेदो न कर्तव्यो विनाऽऽशौचं यदृच्छया। पिण्डं श्राद्धञ्च कर्तव्यं विच्छित्तिं नैव कारयेत्॥ गार्ग्यः– नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु। एषु श्राद्धं न कुर्वीत पुत्रमित्रधनक्षयात्॥ वृद्धगार्ग्यः— प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा। महालयं न कुर्वीत ज्येष्ठपुत्रो विनश्यति॥ मरीचिः— समत्वमागतस्याऽपि पितुः शस्त्रहतस्य तु। एकोद्दिष्टं सुतः कुर्याच्चतुर्दश्यां महालये॥ स्मृतिसङ्ग्रहे– शस्त्रेण निधनं याता ये च विद्युज्जलादिभिः। तेषामपि चतुर्दश्यामेकोद्दिष्टं महालयम्॥ वाराहे — संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि। महालये तु तच्छ्राद्धं द्वादश्यां पार्वणेन तु॥ एकस्मिन्दिनेऽनेकश्राद्धसम्पाते स्मृत्यन्तरे— आब्दिकं प्रथमं कुर्यान्मासिकन्तु ततः परम्। दर्शश्राद्धं तृतीयं स्याच्चतुर्थस्तु महालयः॥ ॥ पितृक्रमः॥ सङ्ग्रहे – ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं सस्त्री स्त्री तनयादितातजननी स्वभ्रातरः सस्त्रियः। ताताम्बाऽऽत्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे॥

स्मृत्यन्तरे — दैवः पिता ततो माता सपत्नीजननी तथा। मातामहः सपत्नीकः पितृव्या भ्रातरः सुताः॥ पितृष्वसा मातुलाश्च तद्भगिन्यश्च जामयः। भगिनी दुहिता भार्या श्वशुरो भावुकः स्नुषा॥ श्यालको गुरुराचार्यः स्वामी सख्यादयः क्रमात्। भोज्या महालये श्राद्धे एते कारुणिकाह्वयाः॥ नागरखण्डे – नभो वाऽथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः॥ आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्। महालयः स विज्ञेयः कन्यास्थोऽर्को न वा भवेत्॥ ॥ पुत्रानायुस्तथा-रोग्यमैश्वर्यमतुलं तथा। प्राप्नोति पञ्चमे दत्वा श्राद्धं कामांस्तथा परान्॥ इति जाबालिस्मरणेन काम्यत्वाऽवगमात्, नित्यस्य तु सकृत्करणेनैव चरितार्थत्वात्, तावता प्रत्यवायनिवृत्तेश्च कस्मिंश्चिद्दिने महालयश्राद्धं कार्यमित्यर्थः। तथा कात्यायनः– अपरपक्षे श्राद्धं कुर्वीत, ऊर्ध्वं चतुर्थ्या यदहः सम्पद्यते ऋते चतुर्दशीमेकेनाऽप्यपरपक्षं नाऽतिक्रामेदिति एकेन दिनेनाऽपि श्राद्धं नातिक्रामेत्। चतुर्थ्या ऊर्ध्वमेकस्मिन्नपि दिने नित्यमहालयश्राद्धं कुर्यादित्यर्थः॥

अथ प्रयोगः॥ पूर्वेद्युः सायं नित्यकर्म कृत्वा 'श्वः सकृन्महालयश्राद्धं कर्तास्मि' इति मनसा सङ्कल्प्य 'श्वः सकृन्महा-लयश्राद्धं भविता, तत्र भवद्भिर्विश्वेदेवार्थे प्रसादः करणीयः' इति द्वौ एकं वा विप्रं निमन्त्र्य 'श्वः सकृ० तत्र भवद्भिः सपत्नीक-पितृपितामहप्रपितामहार्थे प्रसादः करणीयः' इत्येकं, 'सपत्नीकमातामहमातुःपितामहमातुःप्रपितामहार्थे०' एकं, 'आत्मभार्याद्यर्थे०' एकं, 'श्राद्धरक्षकविष्णवर्थे०' एकञ्च विप्रं निमन्त्रयेत्। परेद्युर्निमन्त्रितविप्रानाहूय क्षौराभ्यञ्जनादिभिर्यथोपपादमभ्यर्च्य मध्याह्नसन्ध्यो-पासनान्ते स्नानादि चतुष्टयं विधाय शारीरसूक्तं पठित्वा जलशुद्धिं ब्रह्मदण्डञ्च कृत्वा, द्विराचम्य प्राणानायम्य देशकालसङ्कीर्तनान्ते-"अस्मत्पित्रादिसमस्तपितॄणामक्षय्यतृप्त्यर्थं आषाढ्यादिपञ्चमेऽपरपक्षे कन्यागते सवितरि धुरिलोचनसंज्ञकानां विश्वेषां देवानां

प्रीत्यर्थं ( प्राचीनावीती ) पितृपितामहप्रपितामहानां० रूपाणां, मातृपितामहीप्रपितामहीनां० दानां० रूपाणां, सापत्नमातुः रूपायाः०, मातामहमातुःपितामहमातुःप्रपितामहानां० रूपाणां०, मातामहीमातुःपितामहीमातुःप्रपितामहीनां०, पितृव्यस्य०, तत्पत्न्याः०, तत्पुत्रस्य०, भ्रातुः०, तत्पत्न्याः०, तत्पुत्रस्य०, पुत्रस्य०, तत्पत्न्याः०, तत्पुत्रस्य०, पितृभगिन्या०, तद्भर्तुः०, तत्पुत्रस्य०, मातुलस्य०, तत्पत्न्याः०, मातृभगिन्याः०, तद्भर्तुः०, आत्मभगिन्याः०, तद्भर्तुः०, दुहितुः०, आत्मभार्यायाः०, श्वशुरस्य०, तत्पत्न्याः०, भावुकस्य०, स्नुषायाः०, श्यालकस्य०, आचार्यादि द्वादश पितृणामक्षय्यतृप्त्यर्थं श्राद्धसंरक्षकविष्णुप्रीत्यर्थं सदैवं साग्नौकरणं सपिण्डं सकृन्महालयश्राद्धमन्नेन हविषाऽहमद्य करिष्ये " इति सङ्कल्पः ॥ ततः क्षणादि दिग्बन्धनान्तेऽग्निं प्रतिष्ठाप्य प्रतिष्ठिताभिघारणान्तं सर्वं कुर्यात् ॥ अर्घ्यग्रहणे-विश्वेदेवार्घ्यग्रहणान्ते, पितृवर्गार्थं मातृवर्गार्थं मातामहवर्गार्थं मातामहीवर्गार्थं अवशिष्टपितृणामर्थञ्च पृथक्पृथक् पात्रेष्वर्घ्यग्रहणम् । ततो विश्वेदेवादि श्राद्धसंरक्षकविष्ण्वर्चनान्तं कुर्यात् ॥ 'अग्नौ करिष्यामि' इत्यादि वैश्वदेवहोमान्ते, (प्राचीनावीती) 'याः प्राचीः' इत्यादि पञ्च स्रुवाहुतीर्हुत्वा, पैतृकं चरुमवदानधर्मेणावदाय 'सोमाय पितृमते०' इत्यादि त्रिभिर्हुत्वाऽपूपस्य त्रीण्यवदानानि एवमेव मन्त्रत्रयेण हुत्वा स्विष्टकृतमवदायान्तःपरिधि सादयित्वा " पितृभ्यः स्वधा नमः स्वाहा " इत्यादि चतुर्विंशतिमन्त्रैर्होमः । स्विष्टकृद्धोमश्च ॥ ततो भोजनपात्रकल्पनादि ब्राह्मणभोजनान्ते, विकिरदानं विप्रेभ्यस्ताम्बूलदक्षिणादिदानं च कृत्वा, श्राद्धमक्षय्यमस्त्विति वाचयित्वा शेषमनुज्ञाप्य पश्चाद्धोमं पिण्डदानञ्च कुर्यात् ॥ पिण्डदाने — पितृभ्यः० पितामहेभ्यः० प्रपितामहेभ्यः० मातृभ्यः० पितामहीभ्यः० प्रपितामहीभ्यः० सापत्नमातृभ्यः० इत्यादि सङ्कल्पोक्तक्रमेण पिण्डदानान्ते धर्मपिण्डान्दद्यात् – अस्मत्कुले मृता ये च गतिर्येषां न विद्यते । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १ ॥ अस्मत्कुले मृतायाश्च

गतिर्यासां न विद्यते । तासामुद्धरणार्थाय० ॥ २ ॥ मातामहकुले ये च गतिर्येषां० तेषामु० ॥ ३ ॥ मातामहकुले याश्च० यासां० । तासामु० ॥ ४ ॥ बन्धुवर्गकुले ये च० येषां० । तेषामु० ॥ ५ ॥ बन्धुव० याश्च० यासां० । तासामु० ॥ ६ ॥ अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः । तेषा० ॥ ७ ॥ अजातदन्ता याः काश्चिद्याश्च गर्भे० । तासामु० ॥ ८ ॥ अग्निदग्धाश्च ये केचिन्नाऽग्निदग्धास्तथापरे । विद्युच्चोरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ९ ॥ अग्निदग्धाश्च याः काश्चिन्नाऽग्निदग्धास्तथा पराः । विद्यु० हता याश्च ताभ्यः पि० ॥ १० ॥ दावदाहे मृता ये च सिंहव्याघ्रहताश्च ये । दंष्ट्रिभिः शृङ्गिभिर्वाऽपि तेभ्यः पिण्डं० ॥ ११ ॥ दावदाहे मृता याश्च सिंह० याः । दंष्ट्रिभिः० ताभ्यः० ॥ १२ ॥ उद्बन्धनान्मृता ये च विषशस्त्रहताश्च ये । आत्मनो घातिनो ये च तेभ्यः पि० ॥ १३ ॥ उद्बन्ध० ता याश्च विष० श्च याः । आत्मनो० याश्च ताभ्यः पि० ॥ १४ ॥ अरण्ये वर्त्मनि वने क्षुधया तृषया हताः । भूतप्रेतपिशाचेभ्यस्तेभ्यः पि० ॥ १५ ॥ अरण्ये० पिशाचाभ्यस्ताभ्यः पि० ॥ १६ ॥ रौरवे चाऽन्धतामिस्रे कालसूत्रे च ये गताः । तेषामुद्धरणार्थाय इमं पि० ॥ १७ ॥ रौरवे० या गताः । तासामु० ॥ १८ ॥ असिपत्रवने घोरे कुम्भीपाके च ये गताः । तेषामु० ॥ १९ ॥ असिपत्र० या गताः । तासामु० ॥ २० ॥ पशुयोनिगता ये च पक्षिकीटसरीसृपाः । अथवा वृक्षयोनिस्थास्तेभ्यः पि० ॥ २१ ॥ पशुयोनि० याश्च पक्षि० वृक्षयोनिस्थास्ताभ्यः० ॥ २२ ॥ अनेकयातनासंस्थाः प्रेतलोकश्च ये गताः । तेषामुद्धर० ॥ २३ ॥ अनेक० या गताः । तासामु० ॥ २४ ॥ असङ्ख्ययातना-संस्था ये नीता यमशासनैः । तेषामुद्ध० ॥ २५ ॥ असङ्ख्य० या नीता० तासामु० ॥ २६ ॥ नरकेषु समस्तेषु यातनासु च ये स्थिताः । तेषामुद्ध० ॥ २७ ॥ नरकेषु० या स्थिताः । तासामु० ॥ २८ ॥ जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्मणा । मानुषं दुर्लभं येषां तेभ्यः पि० ॥ २९ ॥ जात्यन्तर० भ्रमन्त्यः स्वेन० यासां ताभ्यः० ॥ ३० ॥ दिव्यन्तरिक्षभूमिष्ठाः पितरो बान्धवादयः । मृता असंस्कृता ये च

तेभ्यः पि० ॥ ३१ ॥ दिव्यन्त० असंस्कृता याश्च ताभ्यः पिण्डं० ॥ ३२ ॥ ये केचित्प्रेतरूपेण वर्तन्ते पितरो मम । ते सर्वे तृप्तिमायान्तु पिण्डेनानेन शाश्वतीम् ॥ ३३ ॥ याः काश्चित्प्रेत० । ताः सर्वास्तृप्ति० ॥ ३४ ॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥ ३५ ॥ याऽबान्धवा बान्धवा वा याऽन्य जन्मनि बान्धवाः । तासां पिण्डो० ॥ ३६ ॥ पितृवंशसमुत्पन्ना मातृवंश्यास्तथैव च । गुरुश्वशुरबन्धूनां ये चान्ये मानवा द्विजाः ॥ ३७ ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । विरूपा आमगर्भाश्च ज्ञाताऽज्ञातास्तथैव च ॥ ३८ ॥ क्रियालोपगता ये च ये चान्ये गर्भसंस्थिताः । तेभ्यो दत्तो मया पिण्डो ह्यक्षय्यमुपतिष्ठताम् ॥ ३९ ॥ आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वये ये मम दासभूता भृत्यास्तथैवाऽऽश्रितसेवकाश्च ॥ ४० ॥ आब्रह्मणो याः पितृ० । वंशद्वये या मम दासिभूता० काश्च ॥ ४१ ॥ मित्राणि सख्युः पशवश्च वृक्षा दृष्टाश्च स्पृष्टाश्च कृतोपकाराः । जन्मान्तरे ये मम सङ्गताश्च तेभ्यः स्वधा पिण्डमहं ददामि ॥ ४२ ॥ मित्राणि० । जन्मान्तरे या मम० ताभ्यः स्वधा० ॥ ४३ ॥ इति, त्रिचत्वारिंशन्मन्त्रैः ॥ उत्तरतो लेपनिमार्जनादि सर्वं सांवत्सरिकश्राद्धवत् ॥ सर्वत्र — सांवत्सरिकपदस्थाने 'सकृन्महालय' पदं योज्यम् ॥ ॥ परेहन्युदयात्पूर्वं स्नात्वा महालयश्राद्धोक्तक्रमेण श्राद्धाङ्गतिलतर्पणं कुर्यात् ॥

## ॥ तीर्थश्राद्धविधिः ॥

हारितः-तीर्थद्रव्योपपत्तौ तु न कालमवधारयेत् । पात्रञ्च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ॥ वृद्धवासिष्ठः- गच्छन् देशान्तरं यद्वि श्राद्धं कुर्यात्तु सर्पिषा । तद्यात्रार्थमिति प्रोक्तं प्रवेशे च न संशयः ॥ मत्स्यपुराणे—स्नात्वा नदीषु सर्वासु पितॄन्देवांश्च तर्पयेत् । तत्र तत्र यथावित्तं कुर्याच्छ्राद्धादिकं तथा ॥ अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः । प्राप्तैरेव सदा कार्यं कर्तव्यं

पितृतर्पणम् ॥ तीर्थे तु ब्राह्मणान्नैव परीक्षेत कथञ्चन । अन्नार्थिनमनुप्राप्तं भोजयेन्मनुशासनात् ॥ सक्तुभिः पिण्डदानं स्यात्संयावैः पायसेन वा । कर्तव्यमृषिभिर्दृष्टं पिण्याकेनैङ्गुदेन वा ॥ पिण्याकेन तिलानां वा तत्र सद्भिर्नरैः सह । श्राद्धञ्च तत्र कर्तव्यमर्घ्यावाहन-वर्जितम् ॥ श्वध्वाङ्क्षगृध्रकङ्काद्या घ्नन्ति दृष्ट्वा न ते क्रियाः । अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेदनम् । तृप्तिप्रश्नञ्च विकिरं तीर्थे पञ्च विवर्जयेत् ॥ सपितुः पितृकृत्येषु ह्यधिकारो न विद्यते । न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥ अस्यापवादः— पित्र्येष्ट्यां पितृयज्ञे च वृद्धौ मातुर्मृतेऽहनि । विप्रसम्पादि तीर्थेषु सोऽपि श्राद्धं समाचरेत् ॥ पितुर्या देवताः प्रोक्तास्ता एवाऽत्र च देवताः । मृताहे मातरः शेषे सर्वा एव प्रकीर्तिताः ॥ उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥ महानदीषु सर्वासु तीर्थेषु च गयामृते । जीवत्पिताऽपि कुर्वीत श्राद्धं पर्वाणि धर्मवित् ॥

अथ प्रयोगः ॥ पूर्वेद्युः सायं नित्यकर्मान्ते गङ्गा ( अमुक ) प्राप्तिनिमित्तं 'श्वस्तीर्थश्राद्धं कर्तास्मि' इति सङ्कल्प्य 'श्वः तीर्थश्राद्धं भविता तत्र भवद्भिर्विश्वेदेवार्थे प्रसादः करणीयः, श्वः तीर्थश्रा० भवद्भिः पित्राद्यर्थे प्रसा०, श्वः तीर्थ० भवद्भिः श्राद्धसंरक्षकविष्ण्वर्थे०' इति क्रमेण विश्वेदेव-पितृ-विष्ण्वर्थं विप्राणां निमन्त्रणम् ॥ अपरेद्युः प्रातर्नित्यकर्मान्ते विप्रानाहूय यथा सम्भवमभ्यर्च्य मध्याह्नसन्ध्योपासनान्ते स्नानादिचतुष्टयं विधाय शारीरसूक्तपठनादि द्विराचम्य प्राणानायम्य देशकालसङ्कीर्ति-नान्ते 'धुरिलोचनसंज्ञकानां विश्वेषां देवानां तृप्त्यर्थं पितृपितामहप्रपितामहानां० रूपाणां प्रीत्यर्थं' इत्यादि महालयोक्तक्रमेण सर्वान्कारुणिकपितॄनुच्चार्य तेषां अक्षय्यतृप्त्यर्थं, श्राद्धसंरक्षकमहाविष्णुप्रीत्यर्थञ्च गङ्गातीर्थयात्राङ्गभूतं तीर्थश्राद्धं सदैवं सपिण्डं ( साग्नौकरणं ) अन्नेन हविषाऽहमद्य करिष्ये, इति सङ्कल्पः । ततः क्षणादि दिग्बन्धनान्ते ( अग्निं प्रतिष्ठाप्यान्वाधाय प्रतिष्ठिताभि-घारणान्तं कुर्यात् ) अत्रार्घ्यग्रहणाऽभावः । आवाहनार्घ्यवर्जं विश्वेदेवादिश्राद्धसंरक्षकविष्ण्वर्चनान्तं सर्वं कृत्वा ('अग्नौ करि-

ष्यामि' इत्यादि वैश्वदेवहोमं 'याः प्राचीः' इत्यादि पञ्च स्रुवाहुतीश्च हुत्वा, पैतृकचरोरवदानधर्मेणावदाय 'सोमाय पितृमते शुष्मिणे०' इति त्रिभिर्हुत्वाऽपूपमष्टधा विच्छिद्य त्रीण्यवदानानि एतेनैव कल्पेन हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय 'पितृभ्यः स्वधा नमः स्वाहा' इत्यादि चतुर्विंशतिमन्त्रैर्होमं कुर्यात्। ततः स्विष्टकृद्धोमान्ते) भोजनपात्रकल्पनादि सर्वं महालयश्राद्धवत्कुर्यात् ॥ ॥ श्राद्धाङ्गतिलतर्पणं वर्जम् ॥ ॥

## ॥ आमश्राद्धविधिः ॥

सुमन्तुः—पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप। अपत्नीनां महाबाहो विदेशगमनादिभिः ॥ सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः। आत्मनो देशकालाभ्यां विप्लवे समुपागते। आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ॥ चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः ॥ उशनाः—अपत्नीकः प्रवासी च यस्य भार्या रजस्वला। सिद्धान्नेन न कुर्वीत ह्यामं तस्य विधीयते ॥ जमदग्निः—न भवेद्यस्य सामग्री दारा वा गृहमेव च। आमश्राद्धं प्रकुर्वीत वृद्धो बालश्च यो भवेत् ॥ आमं ददतु कौन्तेय दद्यादन्नाच्चतुर्गुणम्। सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ॥ आवाहनादि सर्वं स्यात्पिण्डदानञ्च भारत। दद्याद्यच्च द्विजातिभ्यः शृतं वाऽशृतमेव वा ॥ तेनाग्नौ करणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्। आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदः सदा ॥ हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः ॥ षट्त्रिंशन्मते—आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत्। गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥ धर्मप्रदीपे—आमं चतुर्गुणं दद्यादथवा द्विगुणं तथा। आवाहनाग्नौकरणं विकिरं पात्रपूरणम्। तृप्तिप्रश्नं न कुर्वीत आमे हैमे कदाचन ॥

अथ प्रयोगः ॥ पूर्वाह्णे स्नात्वाऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, अमुकसंज्ञकाविश्वेषां देवानां ( प्राचीनावीती ) मम पितृपितामहप्रपितामहानां० गोत्राणां० रूपाणां ( पित्रादितत्तच्छ्राद्धोक्तपितॄणां नामगोत्राद्युच्चार्य ) अमुकश्राद्धं सदैवं ( साग्नौकरणं ) सपिण्डमामेन हविषाऽहमद्य करिष्ये, इति सङ्कल्प्य, विश्वेदेवार्थं पित्राद्यर्थञ्च ब्राह्मणान्निमन्त्र्य स्वागतमुक्त्वा विश्वेदेवविप्रान्पाद्याचमनासनावाहनक्षणवस्त्रगन्धाक्षतादिभिरभ्यर्च्य ( प्राचीनावीती ) एवमेव पितृविप्रानप्यभ्यर्च्य (यज्ञोपवीती) पात्रद्वय श्राद्धचतुर्गुणं द्विगुणं वा आमं सदक्षिणं निधाय गायत्र्या प्रोक्ष्य 'इदमामं सहिरण्यममुकसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो दत्तं न मम' इति विश्वेदेवविप्रेभ्यो दत्वा ( प्राचीनावीती ) एवमेव चतुर्गुणमामं सदक्षिणं पितृविप्रेभ्यो दद्यात् ॥ ( तण्डुलाद्याम-द्रव्येणाऽग्नौकरणं ) गृहसिद्धान्नसक्तुपायसानामन्यतमेन पिण्डदानम् ॥ अत्राऽऽपोशन-प्राणाहुति-तृप्तिप्रश्न-अन्नशेषप्रश्नानां लोपः । अन्यत्सर्वं समानम् ॥ ॥

## ॥ हिरण्यश्राद्धम् ॥

व्यासः—"द्रव्याऽभावे द्विजाऽभावे प्रवासे पुत्रजन्मनि । हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला" ॥ आचम्य प्राणानायम्य देशकालकीर्तनादि कृत्वा 'अमुकश्राद्धं हिरण्येन करिष्ये' इति विशेषः । आमस्थानेऽष्टगुणं चतुर्गुणं द्विगुणं समं वा हिरण्यं गायत्र्या प्रोक्ष्य, सदक्षिणं हिरण्यं दद्यात् । अत्र पिण्डदानं वैकल्पिकमिति केचित् । तृप्तिप्रश्नवर्जनादि शेषं सर्वमामश्राद्धवत् ॥ ॥

## ॥ अनुपनीत-स्त्रीकर्तृकश्राद्धविधिः ॥

सुमन्तुः—श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृको हि सः । व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि ॥ वृद्धमनुः—

कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः। पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः॥ व्याघ्रः—कृतचौलस्तु कुर्वीत उदकं पिण्डमेव च। स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्॥ स्मृत्यन्तरे–कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्। उदाहरेत् स्वधाकारं न तु वेदाक्षराण्यसौ॥ न ह्यस्मिन्युज्यते कर्म किञ्चिदा मौञ्जिबन्धनात्। नाऽभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते॥

अथ प्रयोगः॥ पूर्वेद्युः सायं० 'श्वः प्रतिसांवत्सरिकश्राद्धं कर्तास्मि' इति मनसा सङ्कल्प्य ब्राह्मणान्निमन्त्र्य, परेद्युः प्रातः पुनर्निमन्त्र्य, ब्राह्मणानाहूय मध्याह्ने स्नात्वा "पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानां अस्मात्पितृ० महानां० गोत्राणां० रूपाणामक्षय्यतृप्त्यर्थं श्राद्धसंरक्षकमहाविष्णुप्रीत्यर्थञ्च सदैवं सपिण्डं सांवत्सरिकश्राद्धं पार्वणविधानेनाऽऽमेन द्रव्येणाहमद्य करिष्ये' इति सङ्कल्प्य। श्राद्धं कर्तुं कञ्चिद्ब्राह्मणमृत्विक्त्वेन वृणुयात्। ब्राह्मणः 'ॐ' इत्यङ्गीकृत्य। अनुपनीतस्य यजमानस्यानुज्ञया 'तत्पितृपितामहप्रपितामहानामक्षय्यतृप्त्यर्थं प्रतिसांवत्सरिकश्राद्धं करिष्ये' इति सङ्कल्प्य सर्वमाविकृतं कुर्यात्। सर्वत्र–पितृपदात्पूर्वं 'अनुपनीतस्य यजमानस्य' इति पदद्वयं योज्यम्। श्राद्धकर्तृनियमास्तु–ऋत्विग्यजमानयोरपि समानाः। उत्तरीयवस्त्रेण प्राचीनावीतादि ऋत्विजो यजमानस्य च॥ ऋत्विगलाभे सर्वान्वेदमन्त्रान् वर्जयित्वा केवलं 'स्वाहा, स्वधा' शब्दमात्रमुच्चार्य तूष्णीं सर्वं कुर्यात्॥ ॥ स्त्रीकर्तृकश्राद्धे—भर्तृतत्पितृपितामहानां, महालये तीर्थश्राद्धे च—अस्मद्भर्तृतत्पितृपितामहानां, भर्तुर्मातृपितामहीप्रपितामहीनां, (स्वस्य) पितृपितामहप्रपितामहानां, मातृपितामहीप्रपितामहीनां, मातामहमातुःपितामहमातुःप्रपितामहानां, मातामहीमातुःपितामहीमातुःप्रपितामहीनाञ्च (शक्तौ—स्वपितृव्यादीनां) सङ्कीर्तनपूर्वकं अधिकारानुसारं ब्राह्मणद्वारा स्वयं वा कुर्यात्॥ ॥

## ॥ साङ्कल्पिकश्राद्धम् ॥

( बो. गृ. प. सू. १. ९. १०–११ ) अपि वा सङ्कल्पेन ब्राह्मणान्भोजयेत् — 'सङ्कल्पसिद्धिरस्तु' इति वाचयित्वा ॥ एवमापत्सु कुर्वीत न च नित्यन्तु कारयेत् । ये नित्या उपासते श्राद्धानि च हवीꣳषि च ॥

अथ प्रयोगः ॥ कर्ता पूर्वेद्युः सद्यो वा ब्राह्मणान्निमन्त्र्य श्राद्धदिने कृतनित्यक्रियो मध्याह्ने पूर्वमेव तिलतर्पणं विधाय देशकालकीर्तनान्ते पितृपितामहप्रपितामहानां० रूपाणां (श्राद्धविहितसमस्तपितॄणां नामगोत्राद्युच्चार्य) अक्षय्यतृप्त्यर्थं अमुकश्राद्धं साङ्कल्पिकविधिनाऽहमद्य करिष्ये, इति सङ्कल्प्य विप्रानाहूय, आवाहनार्घ्यवर्जं ( तूष्णीं वाऽवाहनं ) आसनगन्धाच्छादनाद्युपचारैः पूजयेत् । अग्नौकरणवर्जं ब्राह्मणान्भोजयित्वा, तृप्तिप्रश्नान्तेऽक्षय्यं वाचयित्वा, शेषमनुज्ञाप्य 'सङ्कल्पसिद्धिरस्तु' इति विप्रान् प्रार्थयेत् । 'अस्तु सङ्कल्पसिद्धिः' इति प्रतिवचनम् । अन्यत्सर्वं समानम् । ततो बन्धुभिः सह श्राद्धशेषं भुञ्जीत ॥ ॥ अत्यन्ताशक्तः — आचम्य प्राणानायम्य पूर्ववत्सङ्कल्प्य, देवपितृविप्रान्यथोपपादमभ्यर्च्य भोजयित्वा, उत्तरापोशनान्ते भुक्तवद्भ्यस्ताम्बूलदक्षिणादि दत्वा, 'सङ्कल्प्य सिद्धिरस्तु' इति वाचयित्वा ('अस्तु सङ्कल्पसिद्धिः' इति प्र० ) कर्म समर्प्य श्राद्धशेषं भुञ्जीत ॥

## ॥ नित्यश्राद्धविधिः ॥

पारस्करः—"अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् । वैश्वदेवविहीनन्तु ह्यशक्तावुदकेन तु" ॥ अस्य पार्वणत्वेन प्राप्तं वैश्वदेवं निरस्यति वैश्वदेवविहीनमिति । अहन्यहनीत्येतदत्यन्तश्रद्धालुविषयं सुसमृद्धविषयं वा ॥ देवलः—एतेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत् । त्रिश्चतुर्वा यथाश्रद्धं मासे मासे दिने दिने ॥ इति ॥ एतेन विधिना, पार्वणविधिना प्रतिवत्सरमेक-

वारं विशिष्टेऽह्नि, प्रतिसंवत्सरं त्रिवारं वा चतुर्षु चतुर्षु मासेषु विशिष्टेऽह्नि, प्रतिसंवत्सरं चतुर्वारं वा त्रिषु त्रिषु मासेषु विशिष्टेऽह्नि, मासे मासे वा विशिष्टेऽह्नि, दिने दिने वा यथाश्रद्धं श्रद्धानुसारेण शक्त्यनुसारेण च नित्यश्राद्धं कुर्यादित्यर्थः ।

अथ प्रयोगः ॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, अस्मत्पितृपितामहप्रपितामहानां० रूपाणां, मातृपितामहीप्रपितामहीनां० रूपाणां, मातामहमातुःपितामहमातुःप्रपितामहानां० रूपाणां, मातामहीमातुःपितामहीमातुःप्रपितामहीनां० रूपाणामक्षय्यतृप्त्यर्थं नित्यश्राद्धं पार्वणविधानेनान्नेन हविषाहमद्य करिष्ये, इति सङ्कल्प्य । ब्राह्मणानाहूयासनेषूपवेश्य गन्धादिभिरभ्यर्च्य भोजनपात्रकल्पनादि ब्राह्मणान्सम्भोज्य तृप्तिप्रश्नान्ते यथासम्भवं दक्षिणादि दत्वा तान्प्रदक्षिणीकृत्य विसर्जयेत् । नात्र ब्रह्मचर्याऽपुनर्भोजननियमः । विश्वेदेवविप्राग्नौकरणपिण्डदानतर्पणादिवर्जं सर्वमन्यत्सांवत्सरिकश्राद्धवत् ॥ ॥ विप्राऽलाभे — किञ्चिदन्नमुध्दृत्य " पितृभ्यः स्वधा नमः " इति पित्रुद्देशेन गवे दद्यात्, अग्नौ वा क्षिपेत् ॥ ॥ दर्शश्राद्धनान्दीश्राद्धमहालयादिश्राद्धदिनेषु नित्यश्राद्धस्य लोप एव ॥

## ॥ पुत्रकामस्य पञ्चमीश्राद्धविधिः ॥

( बो. गृ. शे. सू. २-१ ) अथातः पञ्चमीश्राद्धं व्याख्यास्यामः– शैशिरे मास्यारभ्य शुक्लपक्षस्य पञ्चम्यां कृष्णपक्षस्य सप्तम्याञ्च पुत्रकामी संवत्सरं दीक्षां कृत्वा तस्मात्पूर्वेद्युस्सायमौपासनहोमे हुते प्राचीनावीती सङ्कल्पयेत् 'प्रथमसंवत्सरं कर्ताऽस्मि' इति मनसा सङ्कल्पे कृते सायमनशनः त्र्यवरान्ब्राह्मणान्निमन्त्रयते ॥ पादप्रक्षाळनं कृत्वा गन्धादिभिरलङ्कृत्य 'पुत्रानिच्छे श्वः पञ्चमीश्राद्धं भविता तत्र भवद्भिः प्रसादः करणीयः' इति ॥ अपरेद्युरामन्त्र्य पादप्रक्षाळनं कृत्वा 'अद्य श्राद्धं भवति' इति ॥ मध्याह्ने

तृतीयमामन्त्रणम् ॥ अवटखननादि मासिश्राद्धवत् ॥ पितॄणां श्राद्धं मातामहानाञ्च श्राद्धं कुर्यादिति ॥ अथाऽग्निमुखात्कृत्वा मासिश्राद्धवद्धोमं कृत्वा पृथक्पृथग्घोमं पिण्डञ्च कुर्यात् ॥ वस्त्राभरणकुण्डलाद्यैरलङ्कृत्य 'सिद्धं भवतु' इति वाचयित्वा तान्भोजयेत् ॥ भोजनवेळायां दिवाकीर्त्यपठनं पुण्यकथनं स्मृतिपठनञ्च ॥ स्वाचान्तान्प्रणम्य भुक्तदक्षिणां यथाशक्ति दत्वा पुनस्सिद्धं वाचयित्वा तान्विसृज्य द्वारान्तमनुव्रज्य पिण्डदानानि मासिश्राद्धवत्कृत्वा ततश्शेषं दम्पती प्राश्नीयाताम् ॥ मध्यमपिण्डं पत्नीं प्राशयति ॥ पूर्वेद्यू रात्रावपरेद्यू रात्रौ च भोजनं मैथुनादि न कुर्याद्ये श्राद्धभोजिनश्च ॥ एवङ्कुर्वन्पुत्रस्सगणोपेतो भवति पुत्रो न शीर्यते तस्मात्पञ्चमीश्राद्धं कुर्यात् ॥ पुत्र इति निर्वचनम्—पुदिति नरकस्तस्मात् त्रायते इति पुत्रोऽपुत्रस्य गतिर्नास्तीत्याह भगवान्बोधायनः ॥

वायुपुराणे–पत्न्यै प्रजार्थं दद्यात्तु मध्यमं मन्त्रपूर्वकम् । आधत्त पितरो गर्भमत्र सन्तानवर्धनम् ॥ मनुः—पतिव्रता धर्मपत्नी पितृपूजनतत्परा । मध्यमन्तु ततः पिण्डमद्यात्सम्यक्सुतार्थिनी ॥ आयुष्मन्तं सुतं विन्देद्यशोमेधासमन्वितम् । धनवन्तं प्रजावन्तन्धार्मिकं सात्त्विकं तथा ॥ यमः— यत्तथा मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता । पुत्रकामा सपुत्रान्तां कुर्वन्ति प्रपितामहाः ॥ शङ्खलिखितौ—"पत्नी मध्यमं पिण्डमश्नीयादार्तवस्नाता"॥ आर्तवस्नाता=अगृहीतगर्भेत्युच्यते । ततश्च गृहीतगर्भा पत्नी नाश्नीयात् ॥ पत्न्यै द्वितीयपिण्डदानम् । पत्नीबहुत्वे विभज्य सर्वाभ्यः प्रयच्छति, दानमन्त्रश्चावर्तते । पुमांसं ह जानुका भवतीति विज्ञायते ॥ जानुका=जननशीला इत्यर्थः ॥ न तं भ्रातृपत्न्यादिभ्यो दद्यान्निषेधात् । मध्यमपिण्डं पत्न्यै प्रयच्छेदिति वचनं सर्वश्राद्धसमानमिति भावः ॥ 'प्रदद्यान्मध्यमं पिण्डं पत्न्यै भर्त्रा विशेषतः । न दद्याद्भ्रातृपत्नीनामेष धर्मः सनातनः ॥ पुत्रे जाते तु षण्मासे नार्या वाथ ऋतुत्रये । न देयं रजसः पूर्वं तद्देयं रजसः परम् ॥ अक्षता गर्भिणी वन्ध्या गतरक्ता रजस्वला ।

नाश्नीयान्मध्यमं पिण्डं स्वैरिणी च विशेषतः' इति ॥ पत्नीबहुत्वे सति पिण्डमेकं विभज्य दद्यात्प्रजननार्थमिष्टम्। मन्त्रस्य चाऽवृत्तिरिह प्रसिद्धा तथैव योक्त्रं बहुपत्निकस्य ॥

अथ प्रयोगः ॥ पुत्रकामः माघमासप्रभृत्याऽऽसंवत्सरं प्रतिमासि शुक्लपक्षस्य पञ्चम्यां कृष्णपक्षस्य सप्तम्यात्र श्राद्धं कुर्यात् ॥ पूर्वेद्युः सायमौपासनं हुत्वाऽऽचम्य प्राणानायम्य पुत्रकामः 'प्रथमसंवत्सरं पञ्चमीश्राद्धं कर्ताऽस्मि' इति मनसा सङ्कल्प्य 'पुत्रानिच्छे, श्वः पञ्चमीश्राद्धं भविता, तत्र भवद्भिः प्रसादः करणीयः' इति धुरिलोचनविश्वेदेवार्थं द्वौ विप्रौ पित्रर्थं त्रीन्विप्रांश्च निमन्त्र्य। परेद्युः प्रातर्नित्यकर्मनिर्वर्तनान्ते, 'अद्य श्राद्धं भवति' इति पुनर्निमन्त्र्य श्राद्धकाले स्नात्वा, "पितृपितामहप्रपितामहानां० रूपाणां, मातृपितामहीप्रपितामहीनां० दानां० रूपाणां, मातामहमातुःपितामहमातुःप्रपितामहानां० रूपाणां, मातामहीमातुःपितामहीमातुःप्रपितामहीनां० दानां० रूपाणामक्षय्यतृप्त्यर्थं पुत्रकामः सदैवं साग्नौकरणं सपिण्डं पञ्चमीश्राद्धं पार्वणविधानेनाऽन्नेन हविषाऽहमद्य करिष्ये" इति सङ्कल्पः। अग्नौकरणे पञ्च स्रुवाहुत्यन्ते 'सोमाय पितृमते शुष्मिणे जुहुमो हविः०' इत्यादि त्रिभिर्मन्त्रैः पैतृकं चरुं हुत्वा तैरेव मन्त्रैरपूपस्य त्रीण्यवदानानि च हुनेत्। ततः 'पितृभ्यः स्वधा नमः स्वाहा' इत्यादि चतुर्विंशत्यन्नाहुतीः स्विष्टकृतञ्च हुत्वा, ब्राह्मणान्वस्त्राभरणकुण्डलाद्यैरभ्यर्च्य "सिद्धं भवतु" इति वाचयित्वा तान्भोजयेत्। भोजनकाले-दिवाकीर्त्यपठनं पुण्यकथनं स्मृतिपठनञ्च कुर्यात् ॥ भोजनान्ते तान्प्रणम्य यथाशक्ति दक्षिणां दत्वा "सिद्धं भवतु" इति वाचयित्वा तान्विसृज्य प्रदक्षिणीकृत्य द्वारान्तमनुव्रज्य शेषमनुज्ञाप्य 'पितृभ्यः स्वधा नमः' इत्यादिभिः चतुर्विंशतिपिण्डान्दद्यात्। पिण्डोद्वासनान्ते 'वीरम्मे दत्त पितरः' इति मध्यमपिण्डं पत्न्यै प्रयच्छति। 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषो हसत्' इति पत्नी वाग्यता प्राश्नाति ॥ ततः श्राद्धशेषं दम्पती अश्नीयाताम् ॥ अन्यत्सर्वं सांवत्सरिकश्राद्धवत् ॥

पुत्रकामस्य प्रकारान्तरेण पञ्चमीश्राद्धविधिः ॥ ( बो. गृ. शे. सू ५. ६ ) अथातः पञ्चमीश्राद्धं व्याख्यास्यामः–मार्गशीर्ष्यां माघ्यां प्रोष्ठपद्यां वोपरिष्टात्पञ्चम्यामारभ्य संवत्सरं वा कुर्यात् ॥ पूर्वदिने व्रती भूयात् 'इदं करिष्याम्येवं करिष्यामि' इति ॥ ब्राह्मणान्निमन्त्रयते योनिगोत्रश्रुतवृत्तसम्पन्नान् ॥ असम्बन्धानपि श्रुतवृत्तसम्पन्नान्निमन्त्रयते ॥ तस्य मासिश्राद्ध उक्त एतावदेव नाना ॥ पुरस्तात्स्विष्टकृत एता आहुतीर्जुहोति—'आयुष्टे, आयुर्दा अग्ने, जातो यदग्ने, अन्नपतेऽन्नस्य नो देहि' इति चतस्रः ॥ विष्णुसूक्तेन चान्नस्य जुहोति ॥ अथ लाजैर्जुहोति – पुरुष सूक्तेन प्रत्यृचम् ॥ अथ तिलैर्जुहोति—'शन्नो देवीः, प्रजापते, इमं यम प्रस्तरम्' व्याहृतीभिश्च ॥ अथाज्यस्य जुहोति—'अग्न आयूंषि पवसे, अग्ने पवस्व, यस्त्वा हृदा कीरिणा, यस्मै त्वम्' इति चतस्रः 'धाता ददातु नो रयिमीशानः' इत्यान्तादनुवाकस्य प्रत्यृचं 'अव ते हेडः, उदुत्तमम्, इमं मे वरुण, तत्त्वा यामि, त्वन्नो अग्ने, सत्वन्नो अग्ने, त्वमग्ने अयाऽसि, उद्वयं तमसस्परि, उदु त्यं, चित्रं, वैश्वानरो न ऊत्या, पृष्टो दिवि, सोमो धेनुं' इति । दशहोत्रा-द्यैष्षड्भिः 'ब्राह्मण एकहोता' इति दशभिः । स्विष्टकृत्प्रभृति सिद्धमापिण्डदानात् ॥ दक्षिणेनाग्निं दक्षिणाग्रान्दर्भान्संस्तीर्य तेष्वन्नशे-षैस्त्रीन्पिण्डान्ददाति ॥ दशमेऽहनि वैवाहिकश्राद्धवद्भूमौ लेपमन्त्रत्रयान्तं कृत्वाऽथैनान्त्संक्षाळनेन त्रिरपसलैः परिषिञ्चति –'ऊर्जं वहन्तीः' इति ॥ अथ मध्यमपिण्डं पत्न्यै प्रयच्छति–'वीरम्मे दत्त पितरः' इति ॥ तं पत्नी प्राश्नाति–'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषो हसत्' इति 'पुमांस एव मे पुत्रा जायेरन्' इति ब्राह्मणम् ॥ जयप्रभृति सिद्धमाधेनुवरप्रदानात् ॥ यदि जीवपिता पिण्डं न दद्यात् 'पितृभ्यस्स्वधा' इति मन्त्रान्सन्नमय्य प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य चतुष्पथे दर्भस्तम्बेषु बलि-मुपहरति—'नमस्स्त्रियै नमः पुंसे नमस्सवयसे नमः । शुक्राय कृष्णदन्ताय पापिनां पतये नमः ॥ ये मे प्रजामुपलोपयन्ति ग्रामे वसन्त उत वाऽरण्ये । तेभ्यो नमो अस्तु बलिमेतेभ्यो हरामि स्वास्ति मेऽस्तु प्रजां मे दधे' इति ॥ 'पञ्चम्यां श्राद्धेन बह्वपत्यो

भवति । न चानपत्यः प्रमीयते । श्राद्धेन वार्षयो दिवमागच्छन् ' इति ॥ विज्ञायते च–' प्रजामनु प्रजायसे । तदुते मर्त्यामृतम् ' इति ॥ तस्मिन्प्रजापतौ यत्नः कार्यः । अत्रोदाहरन्ति – परानपहरेद्यस्तु बालवृक्षाञ्छिनत्ति यः । भक्षयन्नण्डशिशुकान्गुरूंन्वा सर्वदा द्विषन् ॥ परपुत्रांश्च यो द्वेष्टि क्रीडन्बद्धमृगादिभिः । निर्दयः सर्वभूतेषु पितृपूजां विलोपयन् ॥ स वंध्यो मृतपुत्रो वा भवेत्तेषान्तु निष्कृतिः । मौनी वृत्ती हविष्याशी ह्रूयते नियतेन्द्रियः ॥ जुहा घृतेन कूष्माण्डैर्गणानष्टौ घृतौदनैः । जपन्वा पौरुषं सूक्तं हेमगोभूतिलान्ददत् ॥ कृच्छ्रातिकृच्छ्रैर्जपकृन्मुच्यते सोंऽहसः क्षणात् ॥ इत्याह भगवान्बोधायनः ॥

सुमन्तुः — न जीवपितृकः कुर्यात्श्राद्धमग्निमृते द्विज । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥ पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे ॥ भविष्यपुराणे–जीवमाने न देयं स्याद्यस्माद्भरतसत्तम । तस्माज्जीवपिता कुर्याद्वाभ्यामेव न संशयः ॥ मनुः — ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् । विप्रवद्वावितं श्राद्धे स्वकं पितरमाशयेत् ॥ पिता यस्य तु वृत्तस्स्याज्जीवेद्वाऽपि पितामहः । पितुस्तु नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम् ॥ पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः ॥ याज्ञवल्क्यः — होमतः पितृयज्ञस्य जीवेत्पितरि जीवतः । पितरं भोजयित्वा वा पिण्डौ निर्वृणुयात्पिता ॥ उभौ यस्य व्यतीतौ तु जीवेच्चेत्प्रपितामहः । पिण्डौ निर्वृणुयात्पूर्वौ भोजयेत्प्रपितामहम् ॥ यमः — पित्र्यं जीवपितुर्नोक्तमग्नौ होमोऽपि पाक्षिकः । येभ्यो वापि पिता तेभ्यो दद्याद्वैतानकर्मणि ॥ दद्यात्तेभ्यः परेभ्यस्तु जीवेच्चेत् त्रितयं यदि ॥ आपस्तम्बः — यदि जीवति पिता न दद्यात् । आहोमात् त्यक्त्वा विरमेत् । अत्र यथा स्वशाखं व्यवस्था ॥

पञ्चमीश्राद्धात्पूर्वं कस्मिंश्चिच्छुभदिने स्नानादि नित्यकर्म कृत्वा देशकालौ सङ्कीर्त्य, " मम बालताडन-तर्जन-हनन-पितृमातृ-गुरुद्वेष-परहिंसा-परद्वेषण-परहृत्क्लेशकरण-परदारहरण- विप्रवृत्ति- रत्नानिक्षेपाऽपहरणाऽन्यपुत्रविद्वेषण-मृगशावहनन-प्राण्यण्डभक्षण-

मातृवत्सवियोजन-गुर्वधिक्षेप – बालवृक्षच्छेदन – सुहृद्वधाऽष्टकापर्वसङ्क्रान्त्यादिषु विहितनित्यनैमित्तिकादिकर्मराहित्येत्यादिना जनित-अपुत्रत्व-मृतपुत्रत्वादिसमस्तदोषनिवृत्तिद्वारा शरीरशुद्ध्यर्थं करिष्यमाणपञ्चमीश्राद्धाऽधिकारार्थं परिषदुपदिष्टं प्राजापत्यादिकृच्छ्रं कूष्माण्डहवनं गणहोमञ्च कृत्वा । तदुक्तफलावाप्त्यर्थं — गो-भू-तिल-हिरण्यानि ब्राह्मणेभ्यो दत्वा कर्म समाप्योक्तकाले सुपुत्रावाप्त्यर्थं पञ्चमीश्राद्धं कुर्यात् ॥ बह्वपत्यो भवति । नचाऽनपत्यः प्रमीयते ॥

अथ प्रयोगः ॥ पुत्रकामो मार्गशीर्षस्य माघस्य भाद्रपदस्य वाऽपरपक्षस्य पञ्चमीमारभ्य यावत्संवत्सरमपरपक्षपञ्चम्यां पञ्चमीश्राद्धं कुर्यात् ॥ पूर्वेद्युर्व्रती भूत्वा सायमौपासनाऽन्ते, आचम्य प्राणानायम्य (प्राचीनावीती) 'पुत्रकामः संवत्सरं पञ्चमीश्राद्धं कर्तास्मि' इति मनसा सङ्कल्प्य 'पुत्रानिच्छे, श्वः पञ्चमीश्राद्धं भविता' इत्यादिभिः पूर्वोक्तपञ्चमीश्राद्धवद्ब्राह्मणनिमन्त्रणम् ॥ परेद्युः प्रातर्नित्यकर्मान्ते — 'पुत्रानिच्छे, अद्य पञ्चमीश्राद्धं भवति' इत्यादि पुनर्निमन्त्रणम् ॥ मध्याह्ने आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "पितृपितामहप्रपितामहानां० रूपाणामक्षय्यतृप्त्यर्थं सदैवं साग्नौकरणं सपिण्डं पञ्चमीश्राद्धं पार्वणविधानेनाऽन्नेन हविषाऽहमद्य करिष्ये" इति सङ्कल्पः ॥ अग्नौकरणे विश्वेदेवहोमानन्तरं 'याः प्राचीः' इत्यादि पञ्च स्रुवाहुतीर्हुत्वा 'सोमाय पितृमते शुष्मिणे जुहोमि हविः०' इत्यादिभिस्त्रिभिः पैतृकचरुहोमान्तेऽपूपमष्टधा विभज्य तैरेव मन्त्रैर्हुनेत् ॥ ततः 'पितृभ्यः स्वधा नमः स्वाहा' इत्यादि चतुर्विंशत्यन्नाहुतीर्हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधायाऽवशिष्टचरुं मेक्षणेनोपहत्य जुहोति — आयुष्टे० सुवामिते स्वाहा (आयुर्देऽग्नय इदं०) आयुर्दा अग्ने० (आयुर्देऽग्नय इदं०) जातो यदग्ने० (अग्नये वैश्वानरायेदं०) अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे स्वाहा (अग्नयेऽन्नपतय इदं०) विष्णोर्नुकं०, तदस्य प्रियं०, प्र तद्विष्णुः०, परो मात्रया०, विचक्रमे०, त्रिर्देवः०, इति षड्भिः (सर्वत्र, विष्णव इदं०)॥ अथ लाजैर्जुहोति —

पुरुषसूक्तमन्त्रैः प्रत्यृचं ( सर्वत्र, पुरुषाय नारायणायेदं० ) ॥ अथ तिलैर्जुहोति — शन्नो देवीः० ( अद्भ्य इदं० ) प्रजापते न त्वत० ( प्रजापतय इदं० ) इमं यम प्रस्तरं० ( यमायेदं० ) भूः० ( अग्नय इदं० ) भुवः० ( वायव इदं० ) सुवः० ( सूर्यायेदं० ) भूर्भुवस्सुवः० ( प्रजापतय इदं० ) ॥ अथाज्याहुतीरुपजुहोति — अग्न आयूꣳषि पवसे०, अग्ने पवस्व०, ( द्वयोः — अग्नय इदं० ) यस्त्वा हृदा०, यस्मै त्वं० ( द्वयोः — अग्नये पुत्रवत इदं० ) धाता ददातु नो रयिं०, धाता प्रजाया०, धाता ददातु नो रयिं प्राचीं०, धाता ददातु दाशुषे०, ( इति चतसृणां — धात्र इदं० ) अनु नोऽद्यानुमतिः०, अन्विदनुमते त्वं०, अनु मन्यतामनु मन्यमाना०, यस्यामिदं०, ( इति चतसृणां — अनुमत्या इदं० ) राकामहं०, यास्ते राके०, ( इति द्वयोः — राकाया इदं० ) सिनीवालि०, या सुपाणिः० ( द्वयोः-सिनीवाल्या इदं० ) कुहूमहं०, कुहूर्देवानां०, ( द्वयोः — कुह्वा इदं० ) अव ते हेडः०, उदुत्तमं०, इमम्मे वरुण०, तत्वा यामि०, ( इति चतसृणां — वरुणायेदं० ) त्वन्नो अग्ने०, स त्वन्नो अग्ने० ( इति द्वयोः — अग्नीवरुणाभ्यामिदं० ) त्वमग्ने अयासि० ( अग्नयेऽयस इदं० ) उद्वयं तमसस्परि०, उदु त्यं०, चित्रं० ( इति तिसृणां — सूर्यायेदं० ) वैश्वानरो न ऊत्या०, पृष्टो दिवि०, ( इति द्वयोः — अग्नये वैश्वानरायेदं० ) सोमो धेनुं० ( सोमायेदं० ) चित्तिः स्रुक्० नृम्णं धात्स्वाहा ॥ पृथिवी होता०, अग्नि र्होता०, सूर्यन्ते चक्षुः०, महाहविर्होता०, वाग्घोता० ( एतेषां — वाचस्पतये ब्रह्मण इदं० ) ब्राह्मण एकहोता० भूयात्स्वाहा, ( ब्रह्मण इदं० ) अग्निर्द्विहोता० ( अग्नय इदं० ) पृथिवी त्रिहोता० ( पृथिव्या इदं० ) अन्तरिक्षं चतुर्होता० ( अन्तरिक्षायेदं० ) वायुः पञ्चहोता० ( वायव इदं० ) चन्द्रमाष्षड्ढोता० ( चन्द्रमस इदं० ) अन्नꣳ सप्तहोता० ( अन्नायेदं० ) द्यौरष्टहोता० ( दिव इदं० ) आदित्यो नवहोता० ( आदित्यायेदं० ) प्रजापतिर्दशहोता० ( प्रजापतय इदं० ) इति ॥ ततः स्विष्टकृद्धोमान्ते — मण्डलकरणादि ब्राह्मणान्सम्भोज्य ताम्बूलदक्षिणादि यथाविभवं दत्वा अक्षय्यं वाचयित्वा शेषमनुज्ञाप्याऽनुव्रज्य पश्चाद्धोमान्ते 'एतत्ते ततासौ ये ते मातामहाः ये ते आचार्याः'

इत्यादिभिस्त्रीन्पिण्डान्दद्यात् ॥ 'ये नः पतिता' इत्याद्युत्तरलेपनिमार्जनादि पिण्डोद्वासनान्ते, 'वीरम्मे दत्त पितरः' इति मध्यमपिण्डं पत्न्यै प्रयच्छति । 'आधत्त पितरो गर्भं कुमारं पुष्करस्त्रजम् । यथेह पुरुषो हसत्' इति तं पत्नी प्राश्नाति ॥ ॥ जीवत्पितृकस्तु अग्नौकरणहोमान्तं कृत्वा पिण्डप्रदानस्थाने वक्ष्यमाणप्रकारेण बलिमुपहरेत् -- प्राचीमुदीचीं वा दिशं गत्वा चतुष्पथे गोमयेनोपलिप्य दक्षिणाग्रेषु दर्भेषु श्राद्धशेषेण "पितृभ्यः स्वधा, पितामहेभ्यः स्वधा, प्रपितामहेभ्यः स्वधा । नमस्स्त्रियै नमः पुंसे नमस्सवयसे नमः । शुक्लाय कृष्णदन्ताय पापिनां पतये नमः ॥ ये मे प्रजामुपलोपयन्ति ग्रामे वसन्त उत वाऽरण्ये । तेभ्यो नमो अस्तु बलिमेतेभ्यो हरामि स्वस्ति मेऽस्तु प्रजाम्मे दधे" इति ॥ अन्यत्सर्वं सांवत्सरिकश्राद्धवत् ॥

## ॥ मन्वादिश्राद्धानि ॥

अमामनुयुगक्रान्तधृतिपातमहालयाः । अन्वष्टक्यश्च तिथयः षण्णवत्यः प्रकीर्तिताः ॥ स्मृत्यन्तरे — अमापातश्च सङ्क्रान्तिस्तथा वैधृतिरेव च ॥ अष्टकाश्चैव मन्वादिर्युगादिश्च महालयः ॥ चन्द्रसूर्योपरागश्च गजच्छाया तथैव च । द्रव्यब्राह्मणसम्पत्तिः श्राद्धकालाः प्रकीर्तिताः ॥ अमाऽष्टकाव्यतीपातमन्वादिषु युगादिषु । विद्वाञ्छ्राद्धमकुर्वाणः प्रायश्चित्तीयते द्विजः ॥ गालवः — "तिथ्यादिषु च यच्छ्राद्धं मन्वादिषु युगादिषु । अलभ्येषु च योगेषु तत्काम्यं समुदाहृतम्" इति ॥ गालववचनन्तु न नित्यत्वाऽपाकरणार्थम् । वचनद्वयेनाऽग्निहोत्रादिवन्नित्यत्वकाम्यत्वयोरविरोधादित्याहुः ॥ ॥ युगादयः ॥ विष्णुपुराणे — वैशाखमासस्य च या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे । नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥ पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः । श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदन्ति ॥ ॥ मन्वादयः ॥ मत्स्यपुराणे — आश्वयुक्शुक्ल-

नवमी कार्तिकीद्वादशी सिता । तृतीया चैत्रमासस्य सिता भाद्रपदस्य च ॥ फाल्गुनस्याऽप्यमावास्या पुष्यस्यैकादशी सिता । आषाढस्याऽपि दशमी माघमासस्य सप्तमी ॥ श्रावणस्याऽष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा । कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥ मन्वन्तरादयश्चैते दत्तस्याक्षयकारकाः । कृतं श्राद्धविधानेन मन्वादिषु युगादिषु ॥ हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत् ॥ पुलस्त्यः — अयनद्वितये श्राद्धं विषुवद्वितये तथा । युगादिषु च सर्वासु पिण्डनिर्वपणादृते ॥

उक्तदिने प्रातर्नित्यकर्म कृत्वा मध्याह्नसन्ध्योपासनान्ते स्नात्वा वैश्वदेवं तिलतर्पणञ्च कृत्वा देशकालौ सङ्कीर्त्य, पिण्डाऽग्नौकरणवर्ज्यं अयनद्वय-विषुवद्वय-युगादिश्राद्धानि कुर्यात् ॥ इतराणि पिण्डप्रदानादिपूर्वकं मुख्यकल्पेन ॥ अशक्तौ - अनुकल्पेन वा कुर्यात् ॥ ॥ अन्ये श्राद्धानुकल्पाः ॥ हेमाऽभावे स्मृत्यन्तरे — तृणानि वा गवे दद्यात्पिण्डान्वाऽथाऽपि निर्वपेत् । तिलोदकैः पितॄन्वाऽपि तर्पयेत्स्नानपूर्वकम् ॥ अग्निना वा दहेत्कक्षं श्राद्धकाले समागते । तस्मिंश्चोपवसेदाह्नि जपेद्वा श्राद्धसंहिताम् ॥ अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् । स तदा वाचयेद्विप्रान्सकला सिद्धिरस्त्विति ॥ श्राध्दानुकल्पं यः कुर्याज्जात्यवस्थाद्यपेक्षया । श्राध्दाङ्गांशेऽप्यवाप्नोति मुख्यश्राध्दफलं नरः ॥ इति ॥ ॥

## ॥ इति पितृमेधकाण्डं समाप्तम् ॥

* * *

इदं पुस्तकं गोकर्ण-श्री-मेधा-दक्षिणामूर्ति-संस्कृत-विद्यापीठस्थ-प्राच्यसंशोधनाविभागद्वारा संपादितम् ॥
आह्निककाण्डं सिरासि ( डि. उत्तरकन्नड ) सहकारीमुद्रणालये संस्कारकाण्ड-सङ्कीर्ण-
काण्ड-पितृमेधकाण्डत्रयस्य पुण्यपत्तनस्थे "आर्यभूषण" मुद्रणालये मुद्रयित्वा
प्रकाशितम् ॥ शाके १८९२, ईसवीय सन १९७०

॥ इति बोधायनीयब्रह्मकर्मसमुच्चयः ॥